श्रीगणेशाय नमः ।।

नारायणं नमस्कृत्य नरञ्चैव नरोत्तमम्।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत्।।

जयति पराशरसूनुः सत्यवतीहृदयनन्दनो व्यासः।
यस्यास्यकमलगलितं वाङ्मयममृतं जगत् पिबति।।

प्रपद्ये देवमीशानं शाश्वतं ध्रुवमव्ययम्।
महादेवं महात्मानं सर्वस्य जगतः पतिम् ।।१।।

ब्रह्माणं लोककर्त्तारं सर्वज्ञमपराजितम्।
प्रभुं भूतभविष्यस्य साम्प्रतस्य च सत्पतिम् ।।२।।

ज्ञानमप्रतिमं यस्य वैराग्यं च जगत्पतेः।
ऐश्वर्यञ्चैव धर्मश्च सहसिद्धिचतुष्टयः ।।३।।

य इमान् पश्यते भावान्नित्यं सदसदात्मकान्।
आविशन्ति पुनस्तं वै क्रियाभावार्थमीश्वरम् ।।४।।

लोककृल्लोकतत्त्वज्ञो योगमास्थाय तत्त्ववित्।
असृजत् सर्वभूतानि स्थावराणि चराणि च ।।५।।

तमजं विश्वकर्माणं चित्पतिं लोकसाक्षिणम्।
पुराणाख्यानजिज्ञासुर्व्रजामि शरणं प्रभुम् ।।६।।

ब्रह्मवायुमहेन्द्रेभ्यो नमस्कृत्य समाहितः।
ऋषीणाञ्च वरिष्ठाय वसिष्ठाय महात्मने ।।७।।

तन्नप्त्रे चातियशसे जातूकर्णाय चर्षये।
वसिष्ठाय च शुचये कृष्णद्वैपायनाय च ।।८।।

पुराणं सम्प्रवक्ष्यामि ब्रह्मोक्तं वेदसम्मितम्।
धर्मार्थन्यायसंयुक्तैरागमैः सुविभूषितम् ।।९।।

असीमकृष्णे विक्रान्ते राजन्येऽनुपमत्विषि।
प्रशासतीमां धर्मेण भूमिं भूमिपसत्तमे ।।१०।।

ऋषयः संशितात्मानः सत्यव्रतपरायणाः।
ऋजवो नष्टरजसः शान्ता दान्ता जितेन्द्रियाः ।।११।।

धर्मक्षेत्रे कुरुक्षेत्रे दीर्घसत्रन्तु ईजिरे।

नद्यास्तीरे दृषद्वत्याः पुण्यायाः शुचिरोधसः।
दीक्षितास्ते यथाशास्त्रं नैमिषारण्यगोचराः ।।१२।।

द्रष्टुं तान् स महाबुद्धिः सूतः पौराणिकोत्तमः।
लोमानि हर्षयाञ्चक्रे श्रोतॄणां यत् सुभाषितैः।
कर्मणा प्रथितस्तेन लोकेऽस्मिँल्लोमहर्षणः ।।१३।।

तपःश्रुताचारनिधेर्वेदव्यासस्य धीमतः।
शिष्यो बभूव मेधावी त्रिषु लोकेषु विश्रुतः ।।१४।।

पुराण वेदो ह्यखिलो यस्मिन् सम्यक् प्रतिष्ठितः।
भारती चैव विपुला महाभारतवर्द्धिनी ।।१५।।

धर्मार्थकाममोक्षार्थाः कथा यस्मिन् प्रतिष्ठिताः।
सूक्ताः सुपरिभाषाश्च भूमावोषधयो यथा ।।१६।।

स तान् न्यायेन सुधियो न्यायविन्मुनिपुङ्गवान्।
अभिगम्योपसंसृत्य नमस्कृत्य कृताञ्जलिः।
तोषयामास मेधावी प्रणिपातेन तानृषीन् ।।१७।।

ते चापि सत्रिणः प्रीताः ससदस्या महौजसः।
तस्मै साम च पूजाञ्च यथावत् प्रतिपेदिरे ।।१८।।

अथ तेषां पुराणस्य शुश्रूषा समपद्यत।
दृष्ट्वा तमातिविश्वस्तं विद्वांसं लोमहर्षणम् ।।१९।।

तस्मिन् सत्रे गृहपतिः सर्वशास्त्रविशारदः।
इङ्गितैर्भावमालक्ष्य तेषां सूतमनोदयत् ।।२०।।

त्वया सूत महाबुद्धिर्भगवान् ब्रह्मवित्तमः।
इतिहासपुराणार्थं व्यासः सम्यगुपासितः।
दुदोह वै मतिं तस्य त्वं पुराणाश्रयां कथाम् ।।२१।।

एषाञ्च ऋषिमुख्यानां पुराणं प्रति धीमताम्।
शुश्रूषास्ति महाबुद्धे तच्छ्रावयितुमर्हसि ।।२२।।

सर्वे हीमे महात्मानो नाना गोत्राः समागताः।
स्वान् स्वान् वंशान् पुराणैस्तु श्रृणुयुर्ब्रह्मवादिनः ।।२३।।

सपुत्रान् दीर्घसत्रेऽस्मिञ्छ्रवयेथा मुनीनथ।
दीक्षिष्यमाणैरस्माभि स्तेन प्रागसि संस्मृतः ।।२४।।

इति सन्नोदितः सूतस्तैरेव मुनिभिः पुरा।
पुराणार्थं पुराणज्ञैः सत्यव्रतपरायणैः ।।२५।।

स्वधर्म एष सूतस्य सद्भिर्दृष्टः पुरातनैः।
देवतानामृषीणाञ्च राज्ञाञ्चामिततेजसाम् ।।२६।।

वंशानां धारणं कार्यं श्रुतानाञ्च महात्मनाम्।
इतिहासपुराणेषु दिष्टा ये ब्रह्मवादिभिः ।।२७।।

न हि वेदेष्वधिकारः कश्चित् सूतस्य दृश्यते।
वैन्यस्य हि पृथोर्यज्ञे वर्त्तमाने महात्मनः।
सुत्यायामभवत् सूतः प्रथमं वर्णवैकृतः ।।२८।।

ऐन्द्रेण हविषा तत्र हविः पृक्तं बृहस्पतेः।
जुहावेन्द्राय देवाय ततः सूतो व्यजायत।
प्रमादात्तत्र सञ्जज्ञे प्रायश्चित्तञ्च कर्मसु ।।२९।।

शिष्यहव्येन यत् पृक्तमभिभूतं गुरोर्हविः।
अधरोत्तरचारेण जज्ञे तद्वर्णवैकृतः ।।३०।।

यच्च क्षत्रात् समभवद्ब्राह्मणाऽवरयोनितः।
ततः पूर्वेण साधर्म्यात्तुल्यधर्मा प्रकीर्त्तितः ।।३१।।

मध्यमो ह्येष सूतस्य धर्मः क्षत्रोपजीवनम्।
रथनागाश्वचरितं जघन्यञ्च चिकित्सितम् ।।३२।।

तत् स्वधर्ममहं पृष्टो भवद्भिर्ब्रह्मवादिभिः।
कस्मात् सम्यङ्न विब्रूयां पुराणमृषिपूजितम् ।।३३।।

पितृणां मानसी कन्या वासवी समपद्यत।
अपध्याता च पितृभिर्मत्स्ययोनौ बभूव सा ।।३४।।

अरणीव हुताशस्य निमित्तं यस्य जन्मनः।
तस्यां जातो महायोगी व्यासो वेदविदां वरः ।।३५।।

तस्मै भगवते कृत्वा नमो व्यासाय वेधसे।।

पुरुषाय पुराणाय भृगुवाक्यप्रवर्त्तिने।
मानुषच्छद्मरूपाय विष्णवे प्रभविष्णवे ।।३६।।

जातमात्रञ्च यं वेद उपतस्थे ससङ्ग्रहः।
धर्ममेव पुरस्कृत्य जातूकर्णादवाप तम् ।।३७।।

मतिं मन्थानमाविध्य येनासौ श्रुतिसागरात्।
प्रकाशं जनितो लोके महाभारतचन्द्रमाः ।।३८।।

वेदद्रुमश्च यं प्राप्य सशाखः समपद्यत।
भूमिकालगुणान् प्राप्य बहुशाखो यथा द्रुमः ।।३९।।

तस्मादहमुपश्रुत्य पुराणं ब्रह्मवादिनः।
सर्वज्ञात्सर्ववेदेषु पूजिताद्दीप्ततेजसः ।।४०।।

पुराणं सम्प्रवक्ष्यामि यदुक्तं मातरिश्वना।
पृष्टेन मुनिभिः पूर्वं नैमिषीयैर्महात्मभिः ।।४१।।

महेश्वरः परोऽव्यक्तश्चतुर्बाहुश्चतुर्मुखः।
अचिन्त्यश्चाप्रमेयश्च स्वयम्भूर्हेतुरीश्वरः ।।४२।।

अव्यक्तं कारणं यद्यन्नित्यं सदसदात्मकम्।
महदादिविशेषान्तं सृजतीति विनिश्चयः ।।४३।।

अण्डं हिरण्मयञ्चैव बभूवाप्रतिमं ततः।
अण्डस्यावरणञ्चाद्भिरपामपि च तेजसा ।।४४।।

वायुना तस्य नभसा नभो भूतादिना वृतम्।
भूतादिर्महता चैव अव्यक्तेनावृतो महान् ।।४५।।

अतोऽत्र विश्वदेवानामृषीणाञ्चोपवर्णितम्।
नदीनां पर्वतानाञ्च प्रादुर्भावोऽत्र शस्यते ।।४६।।

मन्वन्तराणां सर्वेषां कल्पानाञ्चोपवर्णनम्।
कीर्त्तनं ब्रह्मक्षत्रस्य ब्रह्म जन्म च कीर्त्त्यते ।।४७।।

अतो ब्रह्मणि स्रष्टृत्वं प्रजासर्गोपवर्णनम्।
अवस्थाश्चात्र कीर्त्त्यन्ते ब्रह्मणोऽव्यक्तजन्मनः ।।४८।।

कल्पानां वत्सराश्चैव जगतः स्थापनन्तथा।
शयनञ्च हरेरत्र पृथिव्युद्धरणन्तथा ।।४९।।

सन्निवेशः पुरादीनां वर्णाश्रमविभागशः।
वृक्षाणां गृहसंस्थानां सिद्धानाञ्चविनाशनम् ।।५०।।

योजनानां पथाञ्चैव सञ्चरो बहुविस्तरः।
स्वर्गे स्थानविभागश्च मर्त्त्यानां भुविचारिणाम् ।।५१।।

वृक्षाणामोषधीनाञ्च वीरुधाञ्च प्रकीर्त्तनम्।
वृक्षनारकिकीटत्वं मर्त्त्यानां परिकीर्त्तितम् ।।५२।।

देवतानामृषीणाञ्च द्वे सृती परिकीर्त्तिते।
अन्नादीनां तनूनाञ्च सर्जनन्त्यजनन्तथा ।।५३।।

प्रथमं सर्वशास्त्राणां पुराणं ब्रह्मणा स्मृतम्।
अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः ।।५४।।

अङ्गानि धर्मशास्त्रञ्च व्रतानि नियमास्तथा।
पशूनां पुरुषाणाञ्च सम्भवः परिकीर्त्तितः ।।५५।।

तथा निर्वचनं प्रोक्तं कल्पस्य च परिग्रहः।
नव सर्गाः पुनः प्रोक्ता ब्रह्मणो बुद्धिपूर्वकाः ।।५६।।

त्रयोऽन्ये बुद्धिपूर्वास्तु ततो लोकानकल्पयत्।
ब्रह्मणोऽवयवेभ्यश्च धर्मादीनां समुद्भवः ।।५७।।

ये द्वादश प्रसूयन्ते प्रजाः कल्पे पुनः पुनः।
कल्पयोरन्तरं प्रोक्तं प्रतिसन्धिश्च यस्तयोः ।।५८।।

तमोमात्रावृतत्वाच्च ब्रह्मणोऽधर्मसम्भवः।
तथैव शतरूपायाः सम्भवश्च ततः परम् ।।५९।।

प्रियव्रतोत्तानपादौ प्रसूत्याकूतयश्च ताः।
कीर्त्त्यन्ते धूतपाप्मानो येषु लोकाः प्रतिष्ठिताः ।।६०।।

रुचेः प्रजापतेश्चोर्द्वमाकूत्यां मितुनोद्भवः।
प्रसूत्यामपि दक्षस्य कन्यानां प्रभवस्ततः ।।६१।।

दाक्षायणीषु चाप्यूर्द्ध्वं श्रद्धाद्यासु महात्मनाम्।
धर्मस्य कीर्त्त्यते सर्गः सात्त्विकस्य सुखोदयः ।।६२।।

तथाऽधर्म्मस्य हिंसायां तामसोऽशुभलक्षणः।
महेश्वरस्य सत्याञ्च प्रजासर्गः प्रकीर्त्तितः ।।६३।।

निरामयञ्च ब्रह्माणं तादृशं कीर्त्तितं पुनः।
योगं योगनिधिः प्राह द्विजानां मुक्तिकांक्षिणाम् ।।६४।।

अवतारश्च रुद्रस्य महाभाग्यं तथैव च।
त्रैवेदिकां कथाञ्चापि संवादः परमो महान् ।।६५।।

ब्रह्मनारायणाभ्याञ्च यत्र स्तोत्रं प्रकीर्त्तितम्।
स्तुतस्ताभ्यां स देवेशस्तुतोष भगवान् शिवः ।।६६।।

प्रादुर्भावोऽथ रुद्रस्य ब्रह्मणोऽङ्गे महात्मनः।
कीर्त्त्यते नाम हेतुश्च यथाऽरोदीन्महामनाः ।।६७।।

रुद्रादीनि यथा ह्यष्टौ नामान्याप्नोत् स्वयम्भुवः।
यथा च तैर्व्याप्तमिदं त्रैलोक्यं सचराचरम् ।।६८।।

भृग्वादीनामृषीणाञ्च प्रजासर्गोपवर्णनम्।
वसिष्ठस्य च ब्रह्मर्षेर्यत्र गोत्रानुकीर्त्तनम् ।।६९।।

अग्नेः प्रजायाः सम्भूतिः स्वाहायां यत्र कीर्त्तिता।
पितृणां द्विप्रकाराणां स्वधायास्तदनन्तरम् ।।७०।।

पितृवंशप्रसङ्गेन कीर्त्यते च महेश्वरात्।
दक्षस्य शापः सत्यर्थे भृग्वादीनाञ्च धीमताम् ।।७१।।

प्रतिशापश्च रुद्रस्य दक्षादद्भुतकर्मणः।
प्रतिषेधश्च वैरस्य कीर्त्यते यत्र विस्तरात् ।।७२।।

तेषां नियोगो द्वीपेषु देशेषु च पृथक् पृथक्।
स्वायम्भुवस्य सर्गस्य ततश्चाप्यनुकीर्त्तनम् ।।७३।।

उक्तो नाभेर्निसर्गश्च रजसश्च महात्मनः।
द्वीपानां ससमुद्राणां पर्वतानाञ्च कीर्त्तनम् ।।७४।।

वर्षाणाञ्च नदीनाञ्च तद्भेदानाञ्च सर्वशः।
द्वीपभेदसहस्राणामन्तर्भेदश्च सप्तसु ।।७५।।

विस्तरान् मण्डलाच्चैव जम्बूद्वीपसमुद्रयोः।
प्रमाणं योजनाग्रेण कीर्त्त्यते पर्वतैः सह ।।७६।।

हिमवान् हेमकूटस्तु निषधो मेरुरेव च।
नीलः श्वेतः शृङ्गवांश्च कीर्त्त्यन्ते वर्षपर्वताः ।।७७।।

तेषामन्तरविष्कम्भा उच्छ्रायायामविस्तराः।
कीर्त्त्यन्ते योजनाग्रेण ये च तत्र निवासिनः ।।७८।।

भारतादीनि वर्षाणि नदीभिः पर्वतैस्तथा।
भूतैश्चोपनिविष्टानि गतिमद्भिर्ध्रुवैस्तथा ।।७९।।

जम्बूद्वीपादयो द्वीपाः समुद्रैः सप्तभिर्वृताः।
ततश्चाप्यम्मयी भूमिर्लोकालोकश्च कीर्त्त्यते ।।८०।।

अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी।
भूरादयश्च कीर्त्त्यन्ते वरणैः प्राकृतैः सह ।।८१।।

सर्वञ्च तत्प्रधानस्य परिमाणैकदेशिकम्।
सव्यासपरिमाणञ्च संक्षेपेणैव कीर्त्त्यते ।।८२।।

सूर्याचन्द्रमसोश्चैव पृथिव्याश्चाप्यशेषतः।
प्रमाणं योजनाग्रेण साम्प्रतैरभिमानिभिः।
महेन्द्राद्याः सभाः पुण्या मानसोत्तरमूर्द्धनि ।।८३।।

अत ऊर्द्ध्वं गतिश्चोक्ता स्वर्गस्यालातचक्रवत्।
नागवीथ्यजवीथ्योश्च लक्षणं परिकीर्त्त्यते ।।८४।।

काष्ठयोर्लेखयोश्चैव मण्डलानाञ्च योजनैः।
लोकालोकस्य सन्ध्याया अह्नो विषुवतस्तथा ।।८५।।

लोकपालाः स्थिताश्चोर्द्ध्वं कीर्त्त्यन्ते ये चतुर्दिशम्।
पित्रूणां देवतानां च पन्थानौ दक्षिणोत्तरौ ।।८६।।

गृहिणां न्यासिनाञ्चोक्तौ रजःसत्त्वसमाश्रयात्।
कीर्त्त्यते च पदं विष्णोर्धर्माद्या यत्र धिष्ठिताः ।।८७।।

सूर्याचन्द्रमसोश्चारो ग्रहाणां ज्योतिषां तथा।
कीर्त्त्यते ध्रुवसामर्थ्यात् प्रजानां च शुभाशुभम् ।।८८।।

ब्रह्मणा निर्मितः सौरः स्यन्दनोऽर्थवशात् स्वयम्।
कीर्त्त्यते भगवान् येन प्रसर्पति दिवि स्वयम् ।।८९।।

स रथोऽधिष्ठितो देवैरादित्यैः ऋषिभिस्तथा।
गन्धर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः ।।९०।।

अपां सारमयस्येन्दोः कीर्त्यते च रथस्तथा।
वृद्धिक्षयौ च सौमस्य कीर्त्त्येते सूर्यकारितौ ।।९१।।

सूर्यादीनां स्यन्दनानां ध्रुवादेव प्रकीर्त्तनम्।
कीर्त्त्यते शिशुमारश्च यस्य पुच्छे ध्रुवः स्थितः ।।९२।।

तारारूपाणि सर्वाणि नक्षत्राणि ग्रहैः सह।
निवासा यत्र कीर्त्त्यन्ते देवानां पुण्यकारिणाम् ।।९३।।

सूर्यरश्मिसहस्रे च वर्षशीतोष्णनिःस्रवः।
प्रविभागश्च रश्मीनां नामतः कर्मतोऽर्थतः ।।९४।।

परिमाणगती चोक्ते ग्रहाणां सूर्यसंश्रयात्।
यथा चाशु विषात् प्राप्ता शम्भोः कण्ठस्य नीलता ।।९५।।

ब्रह्मप्रसादितस्याशु विषादः शूलपाणिनः।
स्तूयमानः सुरैर्विष्णुः स्तौति देवं महेश्वरम् ।।९६।।

लिङ्गोद्भवकथा पुण्या सर्वपापप्रणाशिनी।
विश्वरूपात् प्रधानस्य परिणामोऽयमद्भुतः ।।९७।।

पुरूरवस ऐलस्य माहात्म्यानुप्रकीर्त्तनम्।
पितॄणां द्विप्रकाराणां तर्पणं चामृतस्य वै ।।९८।।

ततः पर्वाणि कीर्त्त्यन्ते पर्वणाञ्चैव सन्धयः।
स्वर्ग लोकगतानां च प्राप्तानाञ्चाप्यधोगतिम्।
पितॄणां द्विप्रकाराणां श्राद्धेनानुग्रहो महान् ।।९९।।

युगसंख्याप्रमाणं च कीर्त्यते च कृते युगे।
त्रेतायुगे चापकर्षाद्वार्तायाः संप्रवर्त्तनम् ।।१००।।

वर्णानामाश्रमाणाञ्च संख्यानञ्च प्रवर्त्तनम्।
वर्णानामाश्रमाणाञ्च संस्थितिर्धर्मतस्तथा ।।१०१।।

यज्ञप्रवर्त्तनञ्चैव संवादो यत्र कीर्त्यते।
ऋषीणां वसुना सार्द्धं वसोश्चाधः पुनर्गतिः ।।१०२।।

प्रश्नानां दुर्वचत्वं च स्वायम्भुवमृते मनुम्।
प्रशंसा तपसश्चोक्ता युगावस्थाश्च कृत्स्नशः।
द्वापरस्य कलेश्चात्र सङ्क्षेपेण प्रकीर्तनम् ।।१०३।।

देवतिर्यङ्मनुष्याणां प्रमाणानि युगेयुगे।
कीर्त्यन्ते युगसामर्थ्यात् परिणाहोच्छ्रयायुषः ।।१०४।।

शिष्टादीनां च निर्देशः प्रादुर्भावश्च कीर्त्यते।
वेदस्य तद्विजातानां मंत्राणां च प्रकीर्तनम् ।।१०५।।

शाखानां परिमाणं च वेदव्यासादिशब्दनम्।
मन्वन्तराणां संहारः संहारान्ते च सम्भवः ।।१०६।।

देवतानामृषीणां च मनोः पितृगणस्य च।
न शक्यं विस्तराद्वक्तुमित्युक्तं च समासतः ।।१०७।।

मन्वन्तरस्य संख्या च मानुषेण प्रकीर्तिता।
मन्वन्तराणां सर्वेषामेतदेव च लक्षणम् ।।१०८।।

अतीतानागतानां च वर्त्तमानेन कीर्त्त्यते।
तथा मन्वन्तराणां च प्रतिसन्धानलक्षणम् ।।१०९।।

अतीतानागतानां च प्रोक्तं स्वायम्भुवेऽन्तरे।
मन्वन्तरत्रयं चैव कालज्ञानं च कीर्त्त्यते ।।११०।।

मन्वन्तरेषु देवानां प्रजेशानां च कीर्त्तनम्।
दक्षस्य चापि दौहित्राः प्रियाया दुहितुः सुताः ।।

ब्रह्मादिभिस्ते जनिता दक्षेणैव च धीमता ।।१११।।

सावर्णाद्याश्च कीर्त्त्यन्ते मनवो मेरुमाश्रिताः।
ध्रुवस्योत्तानपादस्य प्रजासर्गोपवर्णनम् ।।११२।।

पृथुनापि च वैन्येन भूमेर्द्दोहप्रवर्त्तनम्।
पात्राणां पयसां चैव वंशानां च विशेषणम्।
ब्रह्मादिभिः पूर्वमेव दुग्धा चेयं वसुन्धरा ।।११३।।

दशभ्यस्तु प्रचेतेभ्यो मारिषायां प्रजापतेः।
दक्षस्य कीर्त्त्यते जन्म सोमस्यांशेन धीमतः ।।११४।।

भूतभव्यभवेशत्वं महेन्द्राणां च कीर्त्त्यते।
मन्वादिका भविष्यन्ति आख्यानैर्बहुभिर्वृताः ।।११५।।

वैवस्वतस्य च मनोः कीर्त्त्यते सर्गविस्तरः।
देवस्य महतो यज्ञे वारुणीं बिभ्रतस्तनुम्।
ब्रह्मशुक्रात् समुत्पत्तिर्भृग्वादीनां च कीर्त्यते ।।११६।।

विनिवृत्ते प्रजासर्गे चाक्षुषस्य मनोः शुभे।
दक्षस्य कीर्त्त्यते सर्गो ध्यानाद्वैवस्वतैऽन्तरे ।।११७।।

नारदः प्रियसंवादी दक्षपुत्रान्महाबलान् ।।११७।।

नाशयामास शापाय आत्मनो ब्रह्मणः सुतः ।।११८।।

ततो दक्षोऽसृजत् कन्या वीरिण्यामेव विश्रुताः।

कीर्त्त्यते धर्मसर्गश्च काश्यपस्य च धीमतः ।।११९।।

अत ऊर्ध्वं ब्रह्मणश्च विष्णोश्चैव भवस्य च।
एकत्वं च पृथक्त्वं च विशेषत्वं च कीर्त्यते ।।१२०।।

ईशत्वाच्च यथा शप्ता जाता देवाः स्वयम्भुवा।
मरुत्प्रसादो मरुतां दित्या देवांशसम्भवाः ।।१२१।।

कीर्त्त्यन्ते मरुताञ्चाथ गणास्ते सप्तसप्तकाः।
देवत्वं पितृवाक्येन वायुस्कन्धेन चाश्रयः ।।१२२।।

दैत्यानां दानवानाञ्च गन्धर्वोरगरक्षसाम्।
सर्वभूतपिशाचानां पशूनां पक्षिवीरुधाम्।
उत्पत्तयश्चाप्सरसां कीर्त्त्यन्ते बहुविस्तरात् ।।१२३।।

समुद्रसंयोगकृतं जन्मैरावतहस्तिनः।
वैनतेयसमुत्पत्तिस्तथा चास्याभिषेचनम् ।।१२४।।

भृगूणां विस्तरश्चोक्तस्तथा चाङ्गिरसामपि।
कश्यपस्य पुलस्त्यस्य तथैवात्रेर्म्महात्मनः ।।१२५।।

पराशरस्य च मुनेः प्रजानां यत्र विस्तरः।
देवतानामृषीणाञ्च प्रजोत्पत्तिस्ततः परम् ।।१२६।।

तिस्रः कन्याः प्रकीर्त्त्यन्ते यासु लोकाः प्रतिष्ठिताः।
पितृदौहित्रनिर्द्देशो देवानां जन्म चोच्यते ।।१२७।।

विस्तरस्ते भगवतः पञ्चानां सुमहात्मनाम्।
इलाया विस्तरश्चोक्त आदित्यस्य ततः परम् ।।१२८।।

विकुक्षिचरितञ्चोक्तं धुन्धोश्चैव निबर्हणम्।
बृहद्बलान्तसंक्षेपादिक्ष्वाक्वाद्याः प्रकीर्त्तिताः ।।१२९।।

निम्यादीनां क्षितीशानां यावज्जहुगणादिति।
कीर्त्त्यते विस्तरो यश्च ययातेरपि भूपतेः ।।१३०।।

यदुवंशसमुद्देशो हैहयस्य च विस्तरः।
क्रोष्टोरनन्तरं चोक्तस्तथा वंशस्य विस्तरः ।।१३१।।

ज्यामघस्य च माहात्म्यं प्रजासर्गश्च कीर्त्त्यते।
देवावृधस्य त्वर्कस्य वृष्टेश्चैव महात्मनः ।।१३२।।

अत्रिमित्रान्वयश्चैव विष्णोर्द्दिव्याभिशंसनम्।
विवस्वतोऽथ संप्राप्तिर्मणिरत्नस्य धीमतः ।।१३३।।

युधा जितः प्रजासर्गः कीर्त्त्यते च महात्मनः।
कीर्त्त्यते चान्वयः श्रीमान् राजर्षेर्देवमीढुषः ।।१३४।।

पुनश्च जन्म चाप्युक्तं चरितञ्च महात्मनः।
कंसस्यचापि दौरात्म्यमेकान्तेन समुद्भवः ।।१३५।।

वासुदेवस्य देवक्यां विष्णोर्ज्जन्म प्रजापतेः।
विष्णोरनन्तरञ्चापि प्रजासर्गोपवर्णनम् ।।१३६।।

दैवासुरे समुत्पन्ने विष्णुना स्त्रीवधे कृते।
संरक्षता शक्रवधं शापः प्राप्तः पुरा भृगोः।
भृगुश्चोत्थापयामास दिव्यां शुक्रस्य मातरम् ।।१३७।।

देवानामसुराणां च संग्रामा द्वादशायुताः।
नारसिंहप्रभृतयः कीर्त्त्यन्ते प्राणनाशनाः ।।१३८।।

शुक्रेणाराधनं स्थाणोर्धीरेण तपसा कृतम्।
वरदानप्रलुब्धेन यत्र शर्वस्तवः कृतः।
अनन्तरं विनिर्दिष्टं देवासुरविचेष्टितम् ।।१३९।।

जयन्त्या सह सक्ते तु यत्र शुक्रे महात्मनि।
असुरान्मोहयामास शुक्ररूपेण बुद्धिमान्।
बृहस्पतिस्तु तान् शुक्रः शशाप सुमहाद्युतिः ।।१४०।।

उक्तं च विष्णुमाहात्म्यं विष्णोर्जन्मादिशब्दनम्।
तुर्वसुः शुक्रदौहित्रो देवयान्यां यदोरभूत्।
अनुर्द्रुह्युस्तथा पूरुर्ययातितनया नृपाः ।।१४१।।

अत्र वंश्या महात्मानस्तेषां पार्थिवसत्तमाः।
कीर्त्यन्ते दीर्घयशसो भूरिद्रविणतेजसः ।।१४२।।

कुशिकस्य च विप्रर्षेः सम्यग्यो धर्मसंश्रयः।
बार्हस्पत्यन्तु सुरभिर्यत्र शापमिहानुदत् ।।१४३।।

कीर्त्तनं जह्नुवंशस्य शन्तनोर्वीर्यशब्दनम्।
भविष्यतां तथा राज्ञामुपसंहारशब्दनम् ।।१४४।।

अनागतानां सप्तानां मनूनां चोपवर्णनम्।
भौमस्यान्ते कलियुगे क्षीणे संहारवर्णनम् ।।१४५।।

परार्द्धपरयोश्चैव लक्षणं परिकीर्त्त्यते।
ब्रह्मणो योजनाग्रेण परिमाणविनिर्णयः ।।१४६।।

नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिकः स्मृतः।
त्रिविधः सर्व भूतानां कीर्त्त्यते प्रतिसञ्चरः ।।१४७।।

अनावृष्टिर्भास्कराच्च घोरः संवर्त्तकोऽनलः।
मेघो ह्येकार्णवं वायुस्तथा रात्रिर्महात्मनः ।।१४८।।

संख्यालक्षणमुद्दिष्टं ततो ब्राह्मं विशेषतः।
भूरादीनां च लोकानां सप्तानामुपवर्णनम्।
कीर्त्त्यन्ते चात्र निरयाः पापानां रौरवादयः ।।१४९।।

ब्रह्मलोकोपरिष्टात्तु शिवस्य स्थानमुत्तमम्।
यत्र संहारमायान्ति सर्वभूतानि संक्षये ।।१५०।।

सर्वेषां चैव सत्त्वानां परिणामविनिर्णयः।
ब्रह्मणः प्रतिसंसर्गे सर्वसंहारवर्णनम् ।।१५१।।

अष्टरूप्यमतः प्रोक्तं प्राणस्याष्टकमेव च।
गतिश्चोर्ध्वमधश्चोक्ता धर्माधर्मसमाश्रयात् ।।१५२।।

कल्पे कल्पे च भूतानां महतामपि संक्षयः।
प्रसंख्याय च दुःखानि ब्रह्मणश्चाप्यनित्यता ।।१५३।।

दौरात्म्यं चैव भोगानां परिणामविनिर्णयः।
दुर्लभत्वं च मोक्षस्य वैराग्याद्दोषदर्शनम् ।।१५४।।

व्यक्ताव्यक्तं परित्यज्य सत्त्वं ब्रह्मणि संस्थितम्।
नानात्वदर्शनाच्छुद्धं ततस्तदभिवर्त्तते ।।१५५।।

ततस्तापत्रयातीतो नीरूपाख्यो निरञ्जनः।
आनन्दो ब्रह्मणः प्रोक्तो न बिभेति कुतश्चन ।।१५६।।

कीर्त्त्यते च पुनः सर्गो ब्रह्मणोऽन्यस्य पूर्ववत्।
कीर्त्त्यते ऋषिवंशश्च सर्वपापप्रणाशनः ।।१५७।।

इति कृत्यसमुद्देशः पुराणस्योपवर्णितः।
कीर्त्त्यन्ते जगतो ह्यत्र सर्वप्रलयविक्रियाः।
प्रवृत्तयश्च भूतानां निवृत्तीनां फलानि च ।।१५८।।

प्रादुर्भावो वसिष्ठस्य शक्तेर्जन्म तथैव च।
सौदासान्निग्रहस्तस्य विश्वामित्रकृतेन च ।।१५९।।

पराशरस्य चोत्पत्तिरदृश्यत्वं यथा विभोः।
जज्ञे पितॄणां कन्यायां व्यासश्चापि यथा मुनिः ।।१६०।।

शुकस्य च तथा जन्म सह पुत्रस्य धीमतः।
पराशरस्य प्रद्वेषो विश्वामित्रकृतो यथा ।।१६१।।

वसिष्ठसम्भृतश्चाग्निर्विश्वामित्रजिघांसया।
सन्तानहेतोर्विभुना चीर्णः स्कन्देन धीमता।
दैवेन विधिना विप्र विश्वामित्रहितैषिणा ।।१६२।।

एकं वेदञ्चतुष्पादञ्चतुर्द्धा पुनरीश्वरः।
यथा बिभेद भगवान् व्यासः सर्वान् स्वबुद्धितः।
तस्य शिष्यैः प्रशिष्यैश्च शाखा भेदाः पुनः कृताः ।।१६३।।

प्रयोगैः षड्गुणीयैश्च यथा पृष्टः स्वयम्भुवा।
पृष्टेन चानुपृष्टास्ते मुनयो धर्मकाङ्क्षिणः।।
देशं पुण्यमभीप्सन्तौ विभुना तद्धितैषिणा ।।१६४।।

सुनाभं दिव्यरूपाख्यं सत्याङ्गं शुभविक्रमम्।
अनौपम्यमिदञ्चक्रं वर्त्तमानमतन्द्रिताः।
पृष्ठतो यात नियतास्ततः प्राप्स्यथ यद्धितम् ।।१६५।।

गच्छतो धर्मचक्रस्य यत्र नेमिर्विशीर्यते।
पुण्यः स देशो मन्तव्य इत्युवाच तदा प्रभुः।
उक्त्वा चैवमृषीन् ब्रह्मा ह्यदृश्यत्वमगात्पुनः ।।१६६।।

गङ्गागर्भसमाहारं नैमिषेयत्वमेव च।
ईजिरे चैव सत्रेण मुनयो नैमिषे तदा।
मृते शरद्वति तथा तस्य चोत्थापनं कृतम् ।।१६७।।

ऋषयो नैमिषेयास्तु श्रद्धया परया पुनः।
निःसीमां गामिमां कृत्स्नां कृत्वा राजानमाहरन्।
यथाविधि यथाशास्त्रं तमातिथ्यैरपूजयन् ।।१६८।।

प्रीतं तथा कृतातिथ्यं राजानं विधिवत्तदा।
अन्तर्द्धानगतः क्रूरः स्वर्भानुरसुरोऽहरत् ।।१६९।।

अनुसस्रुर्हतं चापि नृपमैडं यथा पुरा।
गन्धर्व सहितं दृष्ट्वा कलापग्रामवासिनम् ।।१७०।।

सन्निपातः पुनस्तस्य यथा यज्ञे महर्षिभिः।
दृष्ट्वा हिरण्मयं सर्वं यज्ञे वस्तु महात्मनाम् ।।१७१।।

तदा वै नैमिषेयाणां सत्रे द्वादशवार्षिके।
यथा विवदमानस्तु ऐडः संस्थापितस्तु तैः ।।१७२।।

जनयित्वा त्वरण्यान्ते ऐडपुत्रं यथायुषम्।
समापयित्वा तत्सत्रमायुषं पर्युपासते ।।१७३।।

एतत्सर्वं यथावृत्तं व्याख्यातं द्विजसत्तमाः।
ऋषीणां परमं चात्र लोकतन्त्रमनुत्तमम् ।।१७४।।

ब्रह्मणा यत्पुरा प्रोक्तं पुराणं ज्ञानमुत्तमम्।
अवतारश्च रुद्रस्य द्विजानुग्रहकारणात् ।।१७५।।

तथा पाशुपता योगाः स्थानानाञ्चैव कीर्त्तनम्।
लिङ्गोद्भवस्य देवस्य नीलकण्ठत्वमेव च ।।१७६।।

कथ्यते यत्र विप्राणां वायुना ब्रह्मवादिना।
धन्यं यशस्यमायुष्यं पुण्यं पापप्रणाशनम्।
कीर्त्तनं श्रवणं चास्य धारणञ्च विशेषतः ।।१७७।।

अनेन हि क्रमेणेदं पुराणं संप्रचक्ष्यते।
सुखमर्थः समासेन महानप्युपलभ्यते।
तस्मात् किञ्चित्सुमुद्दिश्य पश्चाद्वक्ष्यामि विस्तरम् ।।१७८।।

पादमाद्यमिदं सम्यक् योऽधीयीत जितेन्द्रियः।
तेनाधीतं पुराणं तत् सर्वं नास्त्यत्र संशयः ।।१७९।।

यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः।
न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः ।।१८०।।

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ।।१८१।।

अभ्यसन्निममध्यायं साक्षात् प्रोक्तं स्वयम्भुवा।
आपदं प्राप्य मुच्येत यथेष्टां प्राप्नुयाद्घतिम् ।।१८२।।

यस्मात् पुरा ह्यनतीदं पुराणं तेन तत् स्मृतम्।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ।।१८३।।

नारायणः सर्वमिदं विश्वं व्याप्य प्रवर्त्तते।
तस्यापि जगतः स्रष्टुः स्रष्टा देवो महेश्वरः ।।१८४।।

अतश्च संक्षेपमिमं शृणुध्वं महेश्वरः सर्वमिदं पुराणम्।
स सर्गकाले च करोति सर्गान् संहारकाले पुनराददीत ।।१८५।।

इति श्रीमहापुराणे वायुप्रोक्ते अनुक्रमणिका नाम प्रथमोऽध्यायः ।। १ ।।

**शुक उवाच।।**

प्रत्यब्रुवन् पुनः सूतमृषयस्ते तपोधनाः।

कुत्र सत्रं समभवत् तेषामद्भुतकर्मणाम् ।।१।।

कियन्तं चैव तत्कालं कथं च समवर्त्तत।

आचचक्ष पुराणं च कथं तेभ्यः प्रभञ्चनः ।।२।।

आचक्ष्व विस्तरेणेदं परं कौतूहलं हि नः।

इति सन्नोदितः सूतः प्रत्युवाच शुभं वचः ।।३।।

श्रृणुध्वं यत्र ते धीरा ईजिरे सत्रमुत्तमम्।

यावन्तं चाभवत् कालं यथा च समवर्तत ।।४।।

सिसृक्षमाणा विश्वं हि यत्र विश्वसृजः पुरा।

सत्रं हि ईजिरे पुण्यं सहस्रं परिवत्सरान् ।।५।।

तपो गृहपतिर्यत्र ब्रह्मा ब्रह्माऽभवत् स्वयम्।

इलाया यत्र पत्नीत्वं शामित्रं यत्र बुद्धिमान्।

मृत्युश्चक्रे महातेजास्तस्मिन् सत्रे महात्मनाम् ।।६।।

विबुधा ईजिरे तत्र सहस्रं प्रतिवत्सरान्।

भ्रमतो धर्मचक्रस्य यत्र नेमिरशीर्यत।

कर्मणा तेन विख्यात नैमिषं मुनिपूजितम् ।।७।।

यत्र सा गोमती पुण्या सिद्धचारण सेविता।

रोहिणी सुषुवे तत्र ततः सौम्योऽभवत् सुतः ।।८।।

शक्तिर्ज्येष्ठः समभवद्वसिष्ठस्य महात्मनः।

अरुन्धत्याः सुता यत्र शतमुत्तमतेजसः ।।९।।

कल्माषपादो नृपतिर्यत्र शप्तश्च शक्तिना।

यत्र वैरं समभवद्विश्वामित्रवसिष्ठयोः ।।१०।।

अदृश्यन्त्यां समभवन्मुनिर्यत्र पराशरः।

पराभवो वसिष्ठस्य यस्मिन् जातेऽप्यवर्त्तत ।।११।।

तत्र ते ईजिरे सत्रं नैमिषे ब्रह्मवादिनः।

नैमिषे ईजिरे यत्र नैमिषेयास्ततः स्मृताः ।।१२।।

तत्सत्रमभवत्तेषां समा द्वादश धीमताम्।

पुरूरवसि विक्रान्ते प्रशासति वसुन्धराम् ।।१३।।

अष्टादश समुद्रस्य द्वीपानश्नन् पुरूरवाः।

तुतोष नैव रत्नानां लोभादिति हि नः श्रुतम् ।।१४।।

उर्वशी चकमे यं च देवहूतिप्रणोदिता।

आजहार च तत्सत्रं स्वर्वेश्यासहसङ्गतः ।।१५।।

तस्मिन्नरपतौ सत्रं नैमिषेयाः प्रचक्रिरे।
यं गर्भे सुषुवे गङ्गा पावकाद्दीप्ततेजसम्।
तदुल्बं पर्वते न्यस्तं हिरण्यं प्रत्यपद्यत ।।१६।।
हिरण्मयं ततश्चक्रे यज्ञवाटं महात्मनाम्।
विश्वकर्मा स्वयं देवो भावयन् लोकभावनम् ।।१७।।
बृहस्पतिस्ततस्तत्र तेषाममिततेजसाम्।
ऐलः पुरूरवा भेजे तं देशं मृगयां चरन् ।।१८।।
तं दृष्ट्वा महदाश्चार्यं यज्ञवाटं हिरण्मयम्।
लोभेन हतविज्ञानस्तदादातुं प्रचक्रमे ।।१९।।
नैमिषेयास्ततस्तस्य चुक्रुधुर्नृपतेर्भृशम्।
निजघ्नुश्चापि संक्रुद्धाः कुशवज्रैर्मनीषिणः।
ततो निशान्ते राजानं मुनयो दैवनोदिताः ।।२०।।
कुशवज्रैर्विनिष्पिष्टः स राजा व्यजहात्तनुम् ।
और्वशेयं ततस्तस्य पुत्रञ्चक्रुर्नृपं भुवि ।।२१।।
नहुषस्य महात्मानं पितरं यं प्रचक्षते।
स तेषु वर्त्तते सम्यग् धर्मशीलो महीपतिः।
आयुरारोग्यमत्युग्रं तस्मिन् स नरसत्तमः ।।२२।।
सान्त्वयित्वा च राजानं ततो ब्रह्मविदां वराः।
सत्रमारेभिरे कर्त्तुं यथावद्धर्मभूतये ।।२३।।
बभूव सत्रं तत्तेषां बह्वाश्चर्यं महात्मनाम्।
विश्वं सिसृक्षमाणानां पुरा विश्वसृजामिव ।।२४।।
वैखानसैः प्रियसखैर्वालखिल्यैर्मरीचिकैः।
अन्यैश्च मुनिभिर्जुष्टं सूर्यवैश्वानरप्रभैः ।।२५।।
पितृदेवाप्सरःसिद्धैर्गन्धर्वोरगचारणैः।
सम्भारैस्तु शुभैर्जुष्टं तैरेवेन्द्रसदो यथा ।।२६।।
स्तोत्रसत्रग्रहैर्देवान् पितृन् पित्र्यैश्च कर्मभिः।
आनर्चुश्च यथाजाति गन्धर्वादीन् यथाविधि ।।२७।।
आराधयितुमिच्छन्तस्ततः कर्मान्तरेष्वथ।
जगुः सामानि गन्धर्वा ननृतुश्चाप्सरोगणाः ।।२८।।
व्याजहुर्मुनयो वाचं चित्राक्षरपदां शुभाम्।
मन्त्रादितत्त्वविद्वांसो जगदुश्च परस्परम् ।।२९।।
वितण्डावचनाश्चैके निजघ्नुः प्रतिवादिनः।
ऋषयस्तत्र विद्वांसः साङ्ख्यार्थन्यायकोविदाः ।।३०।।

न तत्र दुरितं किंचिद्विदधुर्ब्रह्मराक्षसाः।
न च यज्ञहनो दैत्या न च यज्ञमुषोऽसुराः ।।३१।।
प्रायश्चित्तं दुरिष्टं वा न तत्र समजायत।
शक्तिप्रज्ञा क्रियायोगैर्विधिरासीत् स्वनुष्ठितः ।।३२।।
एवं वितेनिरे सत्रं द्वादशाब्दं मनीषिणः।
भृग्वाद्या ऋषयो धीरा ज्योतिष्टोमान् पृथक् पृथक्।
चक्रिरे पृष्ठगमनान् सर्वानयुतदक्षिणान् ।।३३।।
समाप्तयज्ञास्ते सर्वे वायुमेव महाधिपम्।
पप्रच्छुरमितात्मानं भवद्भिर्यदहं द्विजाः।
प्रणोदितश्च वंशार्थं स च तानब्रवीत्प्रभुः ।।३४।।
शिष्यः स्वयम्भुवो देवः सर्वप्रत्यक्षदृग्वशी।
अणिमादिभिरष्टाभिरैश्वर्यैर्यः समन्वितः ।।३५।।
तिर्यग्योन्यादिभिर्धर्मैः सर्वलोकान्बिभर्त्ति यः।
सप्तस्कन्धादिकं शश्वत् प्लवते योजनाद्वरः ।।३६।।
विषये नियता यस्य संस्थिताः सप्तका गणाः।
व्यूहांस्त्रयाणां भूतानां कुर्वन् यश्च महाबलः।
तेजसश्चात्त्युपध्यानन्दधातीमं शरीरिणम् ।।३७।।
प्राणाद्या वृत्तयः पञ्च करणानां च वृत्तिभिः।
प्रेर्यमाणाः शरीराणां कुर्वते यास्तु धारणम् ।।३८।।
आकाशयोनिर्हि गुणः शब्दस्पर्शसमन्वितः।
तैजसप्रकृतिश्चोक्तोऽप्ययं भावो मनीषिभिः ।।३९।।
तत्राभि मानी भगवान् वायुश्चातिक्रियात्मकः।
वातारणिः समाख्यातः शब्दशास्त्रविशारदः ।।४०।।
भारत्या श्लक्ष्णया सर्वान् मुनीन् प्रह्लादयन्निव।
पुराणज्ञः सुमनसः पुराणाश्रययुक्तया ।।४१।।
इति श्रीवायुमहापुराणे वायुप्रोक्ते द्वादशवार्षिकसत्रनिरूपणं नाम द्वितीयोऽध्यायः ।। २ ।।*

**सूत उवाच।।**

महेश्वरायोत्तमवीर्यकर्मणे सुरर्षभायामितबुद्धितेजसे।
सहस्रसूर्यानलवर्च्चसे नमस्त्रिलोकसंहारविसृष्टये नमः ।।१।।

प्रजापतीन् लोकनमस्कृतां स्तथा स्वयम्भुरुद्रप्रभृतीन् महेश्वरान्।
भृगुं मरीचिं परमेष्ठिनं मनुं रजस्तमोधर्ममथापि कश्यपम् ।।२।।

वसिष्ठदक्षात्रिपुलस्त्यकर्द्दमान् रुचिं विवस्वन्तमथापि च क्रतुम्।
मुनिं तथैवाङ्गिरसं प्रजापतिं प्रणम्य मूर्ध्ना पुलहं च भावतः ।।३।।

तथैव चुक्रोधनमेकविंशतिं प्रजा विवृद्ध्यार्पितकार्यशासनम्।
पुरातनानप्यपरांश्च शाश्वतांस्तथैव चान्यान् सगणानवस्थितान् ।।४।।

तथैव चान्यानपि धैर्यशोभिनो मुनीन् बृहस्पत्युशनःपुरोगमान्।
तपःशुभाचारऋषीन् दयान्वितान् प्रणम्य वक्ष्ये कलिपापनाशिनीम् ।।५।।

प्रजापतेः सृष्टिमिमामनुत्तमां सुरेश देवर्षिगणैरलंकृताम्।
शुबामतुल्यामनघामृषिप्रियां प्रजापतीनामपि चोल्बणाच्चिर्षाम् ।।६।।

तपोभृतां ब्रह्मदिनादिकालिकीं प्रभूतमाविष्कृतपौरुषश्रियम्।
श्रुतौ स्मृतौ च प्रसृतामुदाहृतां परां पराणामनिलप्रकीर्त्तिताम् ।।७।।

समासबन्धैर्नियतैर्यथातथं विशब्दनेनापि मनःप्रहर्षिणीम्।
यस्याञ्च बद्धा प्रथमा प्रवृत्तिः प्राधानिकी चेश्वरकारिता च ।।८।।

यत्तत्स्मृतं कारणमप्रमेयं ब्रह्म प्रधानं प्रकृतिप्रसूतिः।
आत्मा गुहा योनिरथापि चक्षुः क्षेत्रं ततैवामृतमक्षरञ्च ।।९।।

शुक्रं तपः सत्त्वमतिप्रकाशं तद्व्यष्टि नित्यं पुरुषं द्वितीयम्।
तमप्रमेयं पुरुषेण युक्तं स्वयम्भुवा लोकपितामहेन ।।१०।।

उत्पादकत्वाद्रजसोतिरेकात् कालस्य योगान्निगमावधेश्च।
क्षेत्रज्ञयुक्तान् नियतान्विकारान् लोकस्य सन्तानाविवृद्धिहेतून्।
प्रकृत्यवस्था सुषुवे तथाष्टौ सङ्कल्पमात्रेण महेश्वरस्य ।।११।।

देवासुराद्रिद्रुमसागराणां मनुप्रजेशर्षिपितृद्विजानाम्।
पिशाचयक्षोरगराक्षसानां ताराग्र हार्क्कर्क्षनिशाचराणाम् ।।१२।।

मासर्त्तु संवत्सररात्र्यहानां दिक्कालयोगादियुगायनानाम्।
वनौषधीनामपि वीरुधाञ्च जलौकसामप्सरसां पशूनाम् ।।१३।।

विद्युत्सरिन्मेघविहङ्गमानां यत्सूक्ष्मगं यद्भुवि यद्वियत्स्थम्।

यत्स्थावरं यत्र यदस्ति किञ्चित् सर्वस्य तस्यास्ति गतिर्विभक्तिः ।।१४।।

छन्दांसि वेदाः सऋचो यजूंषि सामानि सोमस्व तथैव यज्ञः।
आजीव्यमेषां यदभीप्सितञ्च देवस्य तस्यैव च वै प्रजापतेः ।।१५।।

वैवस्वतस्यास्य मनोः पुरस्तात् सम्भू तिरुक्ता प्रसवश्च तेषाम्।
येषामिदं पुण्यकृतां प्रसूत्या लोकत्रयं लोकनमस्कृतानाम्।
सुरेशदेवर्षिमनुप्रधीनामापूरितञ्चोपरिभूषितञ्च ।।१६।।

रुद्रस्य शापात् पुनरुद्भवश्च दक्षस्य चाप्यत्र मनुष्यलोके।
वासः क्षितौ वा नियमाद्भवस्य दक्षस्य चात्र प्रतिशापलाभः ।।१७।।

मन्वन्तराणां परिवर्त्तनानि युगेषु सम्भूतिविकल्पनञ्च।
ऋषित्वमार्षस्य च संप्रवृद्धिर्यथा युगादिष्वपि चेत्तदत्र ।।१८।।

ये द्वापरेषु प्रथयन्ति वेदान् व्यासाश्च तेऽज्ञ क्रमशो निबद्धाः।
कल्पस्य संख्या भुवनस्य संख्या ब्राह्मस्य चाप्यत्र दिनस्य संख्या ।।१९।।

अण्डोद्भिजस्वेदजरायुजानां धर्मात्मनां स्वर्गनिवासिनां वा।
ये यातनास्थानगताश्च जीवास्तर्केण तेषामपि च प्रमाणम् ।।२०।।

आत्यन्तिकः प्राकृतिकश्च योऽयं नैमित्तिकश्च प्रतिसर्गहेतुः।
बन्धश्च मोक्षश्च विशिष्य तत्र प्रोक्ता च संसारगतिः परा च ।।२१।।

प्रकृत्यवस्थैषु च कारणेषु याच स्थितिर्या च पुनः प्रवृत्तिः।
तच्छास्त्रयुक्त्या स्वमतिप्रयत्नात् समस्तमाविष्कृतधीधृतिभ्यः।
विप्रा ऋषिभ्यः समुदाहृतं यद्यथातथं तच्छृणुतोच्यमानम् ।।२२।।

इति श्रीमहापुराणे वायुप्रोक्ते सृष्टिप्रकरणं नाम तृतीयोऽध्यायः ।। ३ ।।

# वायुपुराणम्/पूर्वार्धम्/अध्यायः ४





ऋषयस्तु ततः श्रुत्वा नैमिषारण्यवासिनः।

प्रत्यूचुस्ते ततः सर्वे सूतं पर्याकुलेक्षणाः ।।१।।

भवान् वै वंशकुशलो व्यासात् प्रत्यक्षदर्शवान्।

तस्मात्त्वं भवनं कृत्स्नं लोकस्यामुष्य वर्णय ।।२।।

यस्य यस्यान्वया ये ये तांस्तानिच्छाम वेदितुम्।

तेषां पूर्वर्षिसृष्टिं च विचित्रां तां प्रजापतेः ।।३।।

असकृत्परिपृष्टस्तैर्महात्मा लोमहर्षणः।

विस्तरेणानुपूर्व्या च कथयामास सत्तमः ।।४।।

**।।लोमहर्षण उवाच।।**

पृष्टां चैतां कथां दिव्यां श्लक्ष्णां पापप्रणाशिनीम्।

कथ्यमानां मया चित्रां बह्वर्थां श्रुतिसम्मताम् ।।५।।

यश्चेमांधारयेन्नित्यं श्रृणुयाद्वाप्यभीक्ष्णशः।

श्रावयेच्चापि विप्रेभ्यो यतिभ्यश्च विशेषतः ।।६।।

शुचिः पर्वसु युक्तात्मा तीर्थेष्वायतनेषु च।

दीर्घमायुरवाप्नोति स पुराणानुकीर्त्तनात्।

स्ववंशधारणं कृत्वा स्वर्गलोके महीयते ।।७।।

विस्तारावयवं तेषां यथाशब्दं यथाश्रुतम्।

कीर्त्यमानं निबोधध्वं सर्वेषां कीर्त्तिवर्द्धनम् ।।८।।

धन्यं यशस्यं शत्रुघ्नं स्वर्ग्यमायुर्विवर्धनम्।

कीर्तनं स्थिरकीर्त्तीनां सर्वेषां पुण्यकारिणाम् ।।९।।

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।

वंशानुचरितञ्चेति पुराणं पंचलक्षणम् ।।१०।।

कल्पेभ्योऽपि हि यः कल्पः शुचिभ्यो नियतः शुचिः।
पुराणं सम्प्रवक्ष्यामि मारुतं वेदसम्मितम् ।।११।।
प्रबोधः प्रलयश्चैव स्थितिरुत्पत्तिरेव च।
प्रक्रिया प्रथमः पादः कथ्यवस्तुपरिग्रहः ।।१२।।
उपोद्वातोऽनुषङ्गश्च उपसंहार एव च।
धर्म्यं यशस्यमायुष्यं सर्वपापप्रणाशनम् ।।१३।।
एवं हि पादाश्चत्वारः समासात् कीर्त्तिता मया।
वक्ष्याम्येतान् पुनस्तांस्तु विस्तरेण यथाक्रमम् ।।१४।।
तस्मै हिरण्यगर्भाय पुरुषायेश्वराय च।
अन्ताय प्रथमायैव विशिष्टाय प्रजात्मने।
ब्रह्मणे लोकतन्त्राय नमस्कृत्य स्वयम्भुवे ।।१५।।
महदाद्यं विशेषान्तं सवैरुप्यं सलक्षणम्।
पञ्चप्रमाणं षट्श्येतं पुरुषाधिष्ठितं नुतम्।
असंशयात् प्रवक्ष्यामि भूतसर्गमनुत्तमम् ।।१६।।
अव्यक्तं कारणं यत्तु नित्यं सदसदात्मकम्।
प्रधानं प्रकृतिं चैव यमाहुस्तत्त्व चिन्तकाः ।।१७।।
गन्धवर्णरसैर्हीनं शब्दस्पर्शविवर्ज्जितम्।
अजातं ध्रुवमक्षय्यं नित्यं स्वात्मन्यवस्थितम् ।।१८।।
जगद्योनिं महद्भूतं परं ब्रह्म सनातनम्।
विग्रहं सर्वभूतानामव्यक्तमभवत् किल ।।१९।।
अनाद्यन्तमजं सूक्ष्मन्त्रिगुणं प्रभवाव्ययम्।
असाम्प्रतमविज्ञेयं ब्रह्माग्रे समवर्त्तत ।।२०।।
तस्यात्मना सर्वमिदं व्याप्तमासीत्तमोमयम्।
गुणसाम्ये तदा तस्मिन् गुणभावे तमोमये ।।२१।।
गर्गकाले प्रधानस्य क्षेत्रज्ञाधिष्ठितस्य वै।
गुणभावाद्वाच्यमानो महान् प्रादुर्बभूव ह ।।२२।।
सूक्ष्मेण महता सोऽथ अव्यक्तेन समावृतः।
सत्वोद्रिक्तो महानग्रे सत्त्वमात्रप्रकाशकम्।

मनो महांश्च विज्ञेयो मनस्तत्कारणं स्मृतम् ।।२३।।

लिङ्गमात्रसमुत्पन्नः) क्षेत्रज्ञाधिष्ठितस्तु सः।

धर्मादीनान्तु रूपाणि लोकतत्त्वार्थहेतवः।

महांस्तु सृष्टिं कुरुते नोद्यमानः सिसृक्षया ।।२४।।

मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः।

प्रज्ञा चितिः स्मृतिः संवित् विपुरं चोच्यते बुधैः ।।२५।।

मनुते सर्वभूतानां यस्माच्चेष्टाफलं विभुः।

सौक्ष्मत्वेन विवृद्धानां तेन तन्मन उच्यते ।।२६।।

तत्त्वानामग्रजो यस्मान्महांश्च परिमाणतः।

शेषेभ्योऽपि गुणेभ्योऽसौ महानिति ततः स्मृतः ।।२७।।

बिभर्ति मानं मनुते विभागं मन्यतेऽपि च।

पुरुषो भोगसम्बन्धात् तेन चासौ मतिः स्मृतः ।।२८।।

बृहत्त्वाद्बृंहणत्वाच्च भावानां सलिलाश्रयात्।

यस्माद्बृंहयते भावान् ब्रह्मा तेन निरुच्यते ।।२९।।

आपूरयित्वा यस्माच्च कृत्स्नान् देहाननुग्रहैः।

तत्त्वभावांश्च नियतां स्तेन पूरिति चोच्यते ।।३०।।

बुध्यते पुरुषश्चात्र सर्वभावान् हिताहितान् ।

यस्माद्बोधयते चैव तेन बुद्धिर्निरुच्यते ।।३१।।

ख्यातिः प्रत्युपभोगश्च यस्मात् संवर्त्तते ततः।

भोगश्च ज्ञाननिष्ठत्वात्तेन ख्यातिरिति स्मृतः ।।३२।।

ख्यायते तद्गुणैर्वापि नामादिभिरनेकशः।

तस्माच्च महतः संज्ञा ख्यातिरित्यभिधीयते ।।३३।।

साक्षात् सर्वं विजानाति महात्मा तेन चेश्वरः।

तस्माज्जाता ग्रहाश्चैव प्रज्ञा तेन स उच्यते ।।३४।।

ज्ञानादीनि च रूपाणि क्रतुकर्मफलानि च।

चिनोति यस्माद्भोगार्थान्तेनासौ चितिरुच्यते ।।३५।।

वर्त्तमानान्यतीतानि तथा चानागतान्यपि।

स्मरते सर्वकार्याणि तेनासौ स्मृतिरुच्यते ।।३६।।

कृत्स्नं च विन्दते ज्ञानं तस्मान्माहात्म्यमुच्यते।
तस्माद्विदेर्विदेश्चैव संविदित्यभिधीयते ।।३७।।
विद्यते स च सर्वस्मिन् सर्वं तस्मिंश्च विद्यते।
तस्मात्संविदिदिति प्रोक्तो महान्वै बुद्धिमत्तरैः ।।३८।।
ज्ञानात्तु ज्ञानमित्याह भगवान् ज्ञानसन्निधिः।
द्वन्द्वानां विपुरीभावाद्विपुरं प्रोच्यते बुधैः ।।३९।।
सर्वेशत्वाच्च लोकानामवश्यं च तथेश्वरः।
बृहत्वाच्च स्मृतो ब्रह्मा भूतत्वाद्भव उच्यते ।।४०।।
क्षेत्रक्षेत्रज्ञविज्ञानादेकत्वाच्च स कः स्मृतः।
यस्मात् पुर्यनुशेते च तस्मात् पुरुष उच्यते।
नोत्पादितत्वात् पूर्वत्वात् स्वयम्भूरिति चोच्यते ।।४१।।
पर्यायवाचकैः शब्दैस्तत्त्वमाद्यमनुत्तमम्।
व्याख्यातं तत्त्वभावज्ञैरेवं सद्भावचिन्तकैः ।।४२।।
महान् सृष्टिं विकुरुते चोद्यमानः सिसृक्षया।
सङ्कल्पोऽध्यवसायश्च तस्य वृत्तिद्वयं स्मृतम् ।।४३।।
धर्मादीनि च रूपाणि लोकतत्त्वार्थहेतवः।
त्रिगुणस्तु स विज्ञेयः सत्त्वराजसतामसः ।।४४।।
त्रिगुणाद्रजसोद्रिक्तादहङ्कारस्ततोऽभवत्।
महता चावृतः सर्गो भूतादिविकृतस्तु सः ।।४५।।
तस्माच्च तमसोद्रिक्तादहङ्कारादजायत।
भूततन्मात्रसर्गस्तु भूतादिस्तामसस्तु सः ।।४६।।
आकाशं शुषिरं तस्मादुद्रिक्तं शब्दलक्षणम्।
आकाशं शब्दमात्रन्तु भूतादिश्चावृणोत् पुनः ।।४७।।
शब्दमात्रन्तदाकाशं स्पर्शमात्रं ससर्ज ह।
भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज्ज ह ।।४८।।
बलवान् जायते वायुः स वै स्पर्शगुणो मतः।
आकाशं शब्दमात्रन्तु स्पर्शमात्रं समावृणोत् ।।४९।।
रसमात्रास्तु ता ह्यापो रूपमात्राभिरावृणोत्।

महाभूताः

आपो रसान् विकुर्वन्त्यो गन्धमात्रं ससज्जिरे ।।५०।।

सङ्घातो जायते तस्मात्तस्य गन्धो गुणः स्मृतः।

रसमात्रन्तु तत्तोयं गन्धमात्रं समावृणोत् ।।५१।।

तस्मिंस्तस्मिंस्तु तन्मात्रा तेन तन्मात्रता स्मृता।

अविशेषवाचकत्वादविशेषास्ततः स्मृताः।

अशान्तघोरमूढत्वादविशेषास्ततः पुनः ।।५२।।

भूततन्मात्रसर्गोऽयं विज्ञेयस्तु परस्परात्।

वैकारिकादहङ्कारात्सत्वोद्रिक्तात्तु सात्विकात्।

वैकारिकः स सर्गस्तु युगपत्सम्प्रवर्त्तते ।।५३।।

बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाण्यपि।

साधकानीन्द्रियाणि स्युर्द्देवा वैकारिका दश।

एकादशं मनस्तत्र देवा वैकारिकाः स्मृता ।।५४।।

श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी।

शब्दादीनामवाप्त्यर्थं बुद्धियुक्तानि वक्ष्यते ।।५५।।

पादौ पायुरुपस्थञ्च हस्तौ वाग्दशमी भवेत्।

गतिर्विसर्गो ह्यानन्दः शिल्पं वास्यञ्च कर्म च ।।५६।।

आकाशं शब्दमात्रञ्च स्पर्शमात्रं समाविशेत्।

द्विगुणस्तु ततो वायुः शब्द स्पर्शात्मकोऽभवत् ।।५७।।

रूपन्तथैव विशतः शब्दस्पर्शगुणावुभौ।

त्रिगुणस्तु ततश्चाग्निः स शब्दस्पर्शरूपवान् ।।५८।।

सशब्दस्पर्शरूपञ्च रसमात्रं समाविशत्।

तस्माच्चतुर्गुणा ह्यापो विज्ञेयास्ता रसात्मिकाः ।।५९।।

सशब्दस्पर्शरूपेषु गन्धस्तेषु समाविशत्।

संयुक्ता गन्धमात्रेण आचिन्वन्ति महीमिमाम्।

तस्मात्पञ्चगुणा भूमिः स्थूलभूतेषु दृश्यते ।।६०।।

शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः।

परस्परानुप्रवेशाद्धारयन्ति परस्परम् ।।६१।।

भूमेरन्तस्त्विवदं सर्वं लोकालोकघनावृतम्।

विशेषा इन्द्रियग्राह्या नियतत्वाच्च ते स्मृताः ।।६२।।

गुणं पूर्वस्य पूर्वस्य प्राप्नुवन्त्युत्तरोत्तरम्।

तेषां यावच्च यद्यच्च तत्तत्तावद्गुणं स्मृतम् ।।६३।।

उपलभ्य शुचेर्गन्धं केचिद्वायोरनैपुणात्।

पृथिव्यामेव तद्विद्यादेषां वायोश्च संश्रयात् ।।६४।।

एते सप्त महावीर्या नानाभूताः पृथक् पृथक्।

नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः।

ते समेत्य महात्मानो ह्ययोन्यस्यैव संश्रयात् ।।६५।।

पुरुषाधिष्ठितत्वाच्च अव्यक्तानुग्रहेण च।

महदाद्या विशेषान्ता अण्डमुत्पादयन्ति ते ।।६६।।

एककालं समुत्पन्नं जलबुद्बुदवच्च तत्।

विशेषेभ्योऽण्डमभवद् बृहत्तदुदकं च यत्।

तत्तस्मिन् कार्यकरणं संसिद्धं ब्रह्मणस्तदा ।।६७।।

प्राकृतेऽण्डे विबुद्धे सन् क्षेत्रज्ञो ब्रह्मसंज्ञितः।

स वै शरीरी प्रथमः स वै पुरुष उच्यते ।।६८।।

आदिकर्त्ता च भूतानां ब्रह्माऽग्रे समवर्त्तत।

हिरण्यगर्भः सोऽग्रोऽस्मिन् प्रादुर्भूतश्चतुर्मुखः।

सर्गे च प्रति सर्गे च क्षेत्रज्ञो ब्रह्मसंज्ञितः ।।६९।।

करणैः सह सृज्यन्ते प्रत्याहारे त्यजन्ति च।

भजन्ते च पुनर्देहानसमाहारसन्धिषु ।।७०।।

हिरण्मयस्तु यो मेरुस्तस्योल्बं तन्महात्मनः।

गर्भोदकं समुद्राश्च जराय्वस्थीनि पर्वताः ।।७१।।

तस्मिन्नण्डे त्विमे लोका अन्तर्भूतास्तु सप्त वै।

सप्तद्वीपा च पृथ्वीयं समुद्रैः सह सप्तभिः ।।७२।।

पर्वतैः सुमहद्भिश्च नदीभिश्च सहस्रशः।

अन्तस्तस्मिंस्त्विमे लोका अन्तर्विश्वमिदं जगत् ।।७३।।

चन्द्रादित्यौ सनक्षत्रौ सग्रहौ सह वायुना।

लोकालोकं च यत् किंचिच्चाण्डे तस्मिन् समर्पितम् ।।७४।।

अद्भिर्दशगुणाभिस्तु बाह्यतोऽण्डं समावृतम्।

आपो दशगुणा ह्येवन्तेजसा बाह्यतो वृताः ।।७५।।

तेजौदशगुणेनैव बाह्यतो वायुना वृतम्।

वायोर्द्दशगुणेनैव बाह्यतो नभसा वृतम् ।।७६।।

आकाशेन वृतो वायुः खं च भूतादिना वृतम्।

भूतादिर्महता चापि अव्यक्तेन वृतो महान्।

एतैरावरणैरण्डं सप्तभिः प्राकृतैर्वृतम् ।।७७।।

एतास्वावृत्य चान्योन्यमष्टौ प्रकृतयः स्थिताः।

प्रसर्गकाले स्थित्वा च ग्रसन्त्येताः परस्परम् ।।७८।।

एवं परस्परोत्पन्ना धारयन्ति परस्परम्।

आधाराधेयभावेन विकारस्य विकारिषु ।।७९।।

अव्यक्तं क्षेत्रमुद्दिष्टं ब्रह्मा क्षेत्रज्ञ उच्यते।

इत्येष प्राकृतः सर्गः क्षेत्रज्ञाधिष्ठितस्तु सः।

अबुद्धिपूर्वं प्रागासीत् प्रादुर्भूता तडिद्यथा ।।८०।।

एतद्धिरण्यगर्भस्य जन्म यो वेद तत्त्वतः।

आयुष्मान् कीर्तिमान् धन्यः प्रजावांश्च भवत्युत ।।८१।।

निवृत्तिकामोऽपि नरः शुद्धात्मा लभते गतिम्।

पुराणश्रवणान्नित्यं सुखं च क्षेममाप्नुयात् ।।८२।।

इति महापुराणे वायुप्रोक्ते सृष्टिप्रकरणं नाम चतुर्थोऽध्यायः ।। ४ ।।

---

ऋषयस्तु ततः श्रुत्वा नैमिषारण्यवासिनः।
प्रत्यूचुस्ते ततः सर्वे सूतं पर्याकुलेक्षणाः ।।१।।
भवान् वै वंशकुशलो व्यासात् प्रत्यक्षदर्शवान्।
तस्मात्त्वं भवनं कृत्स्नं लोकस्यामुष्य वर्णय ।।२।।
यस्य यस्यान्वया ये ये तांस्तानिच्छाम वेदितुम्।
तेषां पूर्वर्षिसृष्टिं च विचित्रां तां प्रजापतेः ।।३।।
असकृत्परिपृष्टस्तैर्महात्मा लोमहर्षणः।
विस्तरेणानुपूर्व्या च कथयामास सत्तमः ।।४।।
**।।लोमहर्षण उवाच।।**
पृष्टां चैतां कथां दिव्यां श्लक्ष्णां पापप्रणाशिनीम्।
कथ्यमानां मया चित्रां बह्वर्थां श्रुतिसम्मताम् ।।५।।
यश्चेमांधारयेन्नित्यं श्रृणुयाद्वाप्यभीक्ष्णशः।
श्रावयेच्चापि विप्रेभ्यो यतिभ्यश्च विशेषतः ।।६।।
शुचिः पर्वसु युक्तात्मा तीर्थेष्वायतनेषु च।
दीर्घमायुरवाप्नोति स पुराणानुकीर्त्तनात्।
स्ववंशधारणं कृत्वा स्वर्गलोके महीयते ।।७।।
विस्तारावयवं तेषां यथाशब्दं यथाश्रुतम्।
कीर्त्यमानं निबोधध्वं सर्वेषां कीर्त्तिवर्द्धनम् ।।८।।
धन्यं यशस्यं शत्रुघ्नं स्वर्ग्यमायुर्विवर्धनम्।
कीर्त्तनं स्थिरकीर्त्तीनां सर्वेषां पुण्यकारिणाम् ।।९।।
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितञ्चेति पुराणं पंचलक्षणम् ।।१०।।
कल्पेभ्योऽपि हि यः कल्पः शुचिभ्यो नियतः शुचिः।
पुराणं सम्प्रवक्ष्यामि मारुतं वेदसम्मितम् ।।११।।
प्रबोधः प्रलयश्चैव स्थितिरुत्पत्तिरेव च।
प्रक्रिया प्रथमः पादः कथ्यवस्तुपरिग्रहः ।।१२।।
उपोद्वातोऽनुषङ्गश्च उपसंहार एव च।
धर्म्यं यशस्यमायुष्यं सर्वपापप्रणाशनम् ।।१३।।
एवं हि पादाश्चत्वारः समासात् कीर्त्तिता मया।
वक्ष्याम्येतान् पुनस्तांस्तु विस्तरेण यथाक्रमम् ।।१४।।
तस्मै हिरण्यगर्भाय पुरुषायेश्वराय च।
अन्ताय प्रथमायैव विशिष्टाय प्रजात्मने।
ब्रह्मणे लोकतन्त्राय नमस्कृत्य स्वयम्भुवे ।।१५।।

महदाद्यं विशेषान्तं सवैरुप्यं सलक्षणम्।
पञ्चप्रमाणं षट्श्येतं पुरुषाधिष्ठितं नुतम्।
असंशयात् प्रवक्ष्यामि भूतसर्गमनुत्तमम् ।।१६।।
अव्यक्तं कारणं यत्तु नित्यं सदसदात्मकम्।
प्रधानं प्रकृतिं चैव यमाहुस्तत्त्व चिन्तकाः ।।१७।।
गन्धवर्णरसैर्हीनं शब्दस्पर्शविवर्जितम्।
अजातं ध्रुवमक्षय्यं नित्यं स्वात्मन्यवस्थितम् ।।१८।।
जगद्योनिं महद्भूतं परं ब्रह्म सनातनम्।
विग्रहं सर्वभूतानामव्यक्तमभवत् किल ।।१९।।
अनाद्यन्तमजं सूक्ष्मन्त्रिगुणं प्रभवाव्ययम्।
असाम्प्रतमविज्ञेयं ब्रह्माग्रे समवर्त्तत ।।२०।।
तस्यात्मना सर्वमिदं व्याप्तमासीत्तमोमयम्।
गुणसाम्ये तदा तस्मिन् गुणभावे तमोमये ।।२१।।
गर्गकाले प्रधानस्य क्षेत्रज्ञाधिष्ठितस्य वै।
गुणभावाद्वाच्यमानो महान् प्रादुर्बभूव ह ।।२२।।
सूक्ष्मेण महता सोऽथ अव्यक्तेन समावृतः।
सत्वोद्रिक्तो महानग्रे सत्त्वमात्रप्रकाशकम्।
मनो महांश्च विज्ञेयो मनस्तत्कारणं स्मृतम् ।।२३।।
लिङ्गमात्रसमुत्पन्नः) क्षेत्रज्ञाधिष्ठितस्तु सः।
धर्मादीनान्तु रूपाणि लोकतत्त्वार्थहेतवः।
महांस्तु सृष्टिं कुरुते नोद्यमानः सिसृक्षया ।।२४।।
मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः।
प्रज्ञा चितिः स्मृतिः संवित् विपुरं चोच्यते बुधैः ।।२५।।
मनुते सर्वभूतानां यस्माच्चेष्टाफलं विभुः।
सौक्ष्मत्वेन विवृद्धानां तेन तन्मन उच्यते ।।२६।।
तत्त्वानामग्रजो यस्मान्महांश्च परिमाणतः।
शेषेभ्योऽपि गुणेभ्योऽसौ महानिति ततः स्मृतः ।।२७।।
बिभर्ति मानं मनुते विभागं मन्यतेऽपि च।
पुरुषो भोगसम्बन्धात् तेन चासौ मतिः स्मृतः ।।२८।।
बृहत्त्वाद्बृंहणत्वाच्च भावानां सलिलाश्रयात्।
यस्माद्बृंहयते भावान् ब्रह्मा तेन निरुच्यते ।।२९।।
आपूरयित्वा यस्माच्च कृत्स्नान् देहाननुग्रहैः।
तत्त्वभावांश्च नियतां स्तेन पूरिति चोच्यते ।।३०।।

बुध्यते पुरुषश्चात्र सर्वभावान् हिताहितान् ।
यस्माद्बोधयते चैव तेन बुद्धिर्निरुच्यते ।।३१।।
ख्यातिः प्रत्युपभोगश्च यस्मात् संवर्त्तते ततः।
भोगश्च ज्ञाननिष्ठत्वात्तेन ख्यातिरिति स्मृतः ।।३२।।
ख्यायते तद्गुणैर्वापि नामादिभिरनेकशः।
तस्माच्च महतः संज्ञा ख्यातिरित्यभिधीयते ।।३३।।
साक्षात् सर्वं विजानाति महात्मा तेन चेश्वरः।
तस्माज्जाता ग्रहाश्चैव प्रज्ञा तेन स उच्यते ।।३४।।
ज्ञानादीनि च रूपाणि क्रतुकर्मफलानि च।
चिनोति यस्माद्भोगार्थान्तेनासौ चितिरुच्यते ।।३५।।
वर्त्तमानान्यतीतानि तथा चानागतान्यपि।
स्मरते सर्वकार्याणि तेनासौ स्मृतिरुच्यते ।।३६।।
कृत्स्नं च विन्दते ज्ञानं तस्मान्माहात्म्यमुच्यते।
तस्माद्विदेर्विदेश्चैव संविदित्यभिधीयते ।।३७।।
विद्यते स च सर्वस्मिन् सर्वं तस्मिश्च विद्यते।
तस्मात्संविदिति प्रोक्तो महान्वै बुद्धिमत्तरैः ।।३८।।
ज्ञानात्तु ज्ञानमित्याह भगवान् ज्ञानसन्निधिः।
द्वन्द्वानां विपुरीभावाद्विपुरं प्रोच्यते बुधैः ।।३९।।
सर्वेशत्वाच्च लोकानामवश्यं च तथेश्वरः।
बृहत्वाच्च स्मृतो ब्रह्मा भूतत्वाद्भव उच्यते ।।४०।।
क्षेत्रक्षेत्रज्ञविज्ञानादेकत्वाच्च स कः स्मृतः।
यस्मात् पुर्यनुशेते च तस्मात् पुरुष उच्यते।
नोत्पादितत्वात् पूर्वत्वात् स्वयम्भूरिति चोच्यते ।।४१।।
पर्यायवाचकैः शब्दैस्तत्त्वमाद्यमनुत्तमम्।
व्याख्यातं तत्त्वभावज्ञैरेवं सद्भावचिन्तकैः ।।४२।।
महान् सृष्टिं विकुरुते चोद्यमानः सिसृक्षया।
सङ्कल्पोऽध्यवसायश्च तस्य वृत्तिद्वयं स्मृतम् ।।४३।।
धर्मादीनि च रूपाणि लोकतत्त्वार्थहेतवः।
त्रिगुणस्तु स विज्ञेयः सत्त्वराजसतामसः ।।४४।।
त्रिगुणाद्रजसोद्रिक्तादहङ्कारस्ततोऽभवत्।
महता चावृतः सर्गो भूतादिविकृतस्तु सः ।।४५।।
तस्माच्च तमसोद्रिक्तादहङ्कारादजायत।
भूततन्मात्रसर्गस्तु भूतादिस्तामसस्तु सः ।।४६।।

आकाशं शुषिरं तस्मादुद्रिक्तं शब्दलक्षणम्।
आकाशं शब्दमात्रन्तु भूतादिश्चावृणोत् पुनः ।।४७।।
शब्दमात्रन्तदाकाशं स्पर्शमात्रं ससर्ज ह।
भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज्ज ह ।।४८।।
बलवान् जायते वायुः स वै स्पर्शगुणो मतः।
आकाशं शब्दमात्रन्तु स्पर्शमात्रं समावृणोत् ।।४९।।
रसमात्रास्तु ता ह्यापो रूपमात्राभिरावृणोत्।
आपो रसान् विकुर्वन्त्यो गन्धमात्रं ससर्ज्जिरे ।।५०।।
सङ्घातो जायते तस्मात्तस्य गन्धो गुणः स्मृतः।
रसमात्रन्तु तत्तोयं गन्धमात्रं समावृणोत् ।।५१।।
तस्मिंस्तस्मिंस्तु तन्मात्रा तेन तन्मात्रता स्मृता।
अविशेषवाचकत्वादविशेषास्ततः स्मृताः।
अशान्तघोरमूढत्वादविशेषास्ततः पुनः ।।५२।।
भूततन्मात्रसर्गोऽयं विज्ञेयस्तु परस्परात्।
वैकारिकादहङ्कारात्सत्वोद्रिक्तात्तु सात्विकात्।
वैकारिकः स सर्गस्तु युगपत्सम्प्रवर्त्तते ।।५३।।
बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाण्यपि।
साधकानीन्द्रियाणि स्युर्द्देवा वैकारिका दश।
एकादशं मनस्तत्र देवा वैकारिकाः स्मृता ।।५४।।
श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी।
शब्दादीनामवाप्त्यर्थं बुद्धियुक्तानि वक्ष्यते ।।५५।।
पादौ पायुरुपस्थञ्च हस्तौ वाग्दशमी भवेत्।
गतिर्विसर्गो ह्यानन्दः शिल्पं वास्यञ्च कर्म च ।।५६।।
आकाशं शब्दमात्रञ्च स्पर्शमात्रं समाविशेत्।
द्विगुणस्तु ततो वायुः शब्द स्पर्शात्मकोऽभवत् ।।५७।।
रूपन्तथैव विशतः शब्दस्पर्शगुणावुभौ।
त्रिगुणस्तु ततश्चाग्निः स शब्दस्पर्शरूपवान् ।।५८।।
सशब्दस्पर्शरूपञ्च रसमात्रं समाविशत्।
तस्माच्चतुर्गुणा ह्यापो विज्ञेयास्ता रसात्मिकाः ।।५९।।
सशब्दस्पर्शरूपेषु गन्धस्तेषु समाविशत्।
संयुक्ता गन्धमात्रेण आचिन्वन्ति महीमिमाम्।
तस्मात्पञ्चगुणा भूमिः स्थूलभूतेषु दृश्यते ।।६०।।
शान्ता घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः।

परस्परानुप्रवेशाद्धारयन्ति परस्परम् ।।६१।।
भूमेरन्तस्त्विवदं सर्वं लोकालोकघनावृतम्।
विशेषा इन्द्रियग्राह्या नियतत्वाच्च ते स्मृताः ।।६२।।
गुणं पूर्वस्य पूर्वस्य प्राप्नुवन्त्युत्तरोत्तरम्।
तेषां यावच्च यद्यच्च तत्तत्तावद्गुणं स्मृतम् ।।६३।।
उपलभ्य शुचेर्गन्धं केचिद्वायोरनैपुणात्।
पृथिव्यामेव तद्विद्यादेषां वायोश्च संश्रयात् ।।६४।।
एते सप्त महावीर्या नानाभूताः पृथक् पृथक्।
नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः।
ते समेत्य महात्मानो ह्ययोन्यस्यैव संश्रयात् ।।६५।।
पुरुषाधिष्ठितत्वाच्च अव्यक्तानुग्रहेण च।
महदाद्या विशेषान्ता अण्डमुत्पादयन्ति ते ।।६६।।
एककालं समुत्पन्नं जलबुद्बुदवच्च तत्।
विशेषेभ्योऽण्डमभवद् बृहत्तदुदकं च यत्।
तत्तस्मिन् कार्यकरणं संसिद्धं ब्रह्मणस्तदा ।।६७।।
प्राकृतेऽण्डे विबुद्धे सन् क्षेत्रज्ञो ब्रह्मसंज्ञितः।
स वै शरीरी प्रथमः स वै पुरुष उच्यते ।।६८।।
आदिकर्त्ता च भूतानां ब्रह्माऽग्रे समवर्त्तत।
हिरण्यगर्भः सोऽग्रोऽस्मिन् प्रादुर्भूतश्चतुर्मुखः।
सर्गे च प्रति सर्गे च क्षेत्रज्ञो ब्रह्मसंज्ञितः ।।६९।।
करणैः सह सृज्यन्ते प्रत्याहारे त्यजन्ति च।
भजन्ते च पुनर्देहानसमाहारसन्धिषु ।।७०।।
हिरण्मयस्तु यो मेरुस्तस्योल्बं तन्महात्मनः।
गर्भोदकं समुद्राश्च जराद्यस्थीनि पर्वताः ।।७१।।
तस्मिन्नण्डे त्विमे लोका अन्तर्भूतास्तु सप्त वै।
सप्तद्वीपा च पृथ्वीयं समुद्रैः सह सप्तभिः ।।७२।।
पर्वतैः सुमहद्भिश्च नदीभिश्च सहस्रशः।
अन्तस्तस्मिंस्त्विमे लोका अन्तर्विश्वमिदं जगत् ।।७३।।
चन्द्रादित्यौ सनक्षत्रौ सग्रहौ सह वायुना।
लोकालोकं च यत् किंचिच्चाण्डे तस्मिन् समर्पितम् ।।७४।।
अद्भिर्दशगुणाभिस्तु बाह्यतोऽण्डं समावृतम्।
आपो दशगुणा ह्येवन्तेजसा बाह्यतो वृताः ।।७५।।
तेजौदशगुणेनैव बाह्यतो वायुना वृतम्।

वायोर्द्दशगुणेनैव बाह्यतो नभसा वृतम् ।।७६।।
आकाशेन वृतो वायुः खं च भूतादिना वृतम्।
भूतादिर्महता चापि अव्यक्तेन वृतो महान्।
एतैरावरणैरण्डं सप्तभिः प्राकृतैर्वृतम् ।।७७।।
एतास्वावृत्य चान्योन्यमष्टौ प्रकृतयः स्थिताः।
प्रसर्गकाले स्थित्वा च ग्रसन्त्येताः परस्परम् ।।७८।।
एवं परस्परोत्पन्ना धारयन्ति परस्परम्।
आधाराधेयभावेन विकारस्य विकारिषु ।।७९।।
अव्यक्तं क्षेत्रमुद्दिष्टं ब्रह्मा क्षेत्रज्ञ उच्यते।
इत्येष प्राकृतः सर्गः क्षेत्रज्ञाधिष्ठितस्तु सः।
अबुद्धिपूर्वं प्रागासीत् प्रादुर्भूता तडिद्यथा ।।८०।।
एतद्धिरण्यगर्भस्य जन्म यो वेद तत्त्वतः।
आयुष्मान् कीर्तिमान् धन्यः प्रजावांश्च भवत्युत ।।८१।।
निवृत्तिकामोऽपि नरः शुद्धात्मा लभते गतिम्।
पुराणश्रवणान्नित्यं सुखं च क्षेममाप्नुयात् ।।८२।।
इति महापुराणे वायुप्रोक्ते सृष्टिप्रकरणं नाम चतुर्थोऽध्यायः ।। ४ ।।

**।।लोमहर्षण उवाच।।**

यद्धि सृष्टेस्तु संख्यातं मया कालान्तरन्द्विजाः।
एतत् कालान्तरं ज्ञेयमहर्वै पारमेश्वरम् ।।१।।

रात्रिस्त्वेतावती ज्ञेया परमेशस्य कृत्स्नशः।
अहस्तस्य तु या सृष्टिः प्रलयो रात्रिरुच्यते ।।२।।

अहश्च विद्यते तस्य न रात्रिरिति धारणा।
उपचारः प्रक्रियते लोकानां हितकाम्यया ।।३।।

प्रजाः प्रजानाम्पतय ऋषयो मुनिभिः सह।
ऋषीन् सनत्कुमाराख्यान् ब्रह्मसायुज्यगैः सह ।।४।।

इन्द्रियाणीन्द्रियार्थाश्च महाभूतानि पञ्च च।
तन्मात्रा इन्द्रियगणो बुद्धिश्च मनसा सह ।।५।।

अहस्तिष्ठन्ति ते सर्वे परमेशस्य धीमतः।
अहरन्ते प्रलीयन्ते रात्र्यन्ते विश्वसंभवः ।।६।।

स्वात्मन्यवस्थिते सत्वे विकारे प्रतिसंहते।
साधर्म्येणावतिष्ठेते प्रधानपुरुषावुभौ ।।७।।

तमः सत्त्वगुणावेतौ समत्वेन व्यवस्तितौ।
अत्रोद्रिक्तौ प्रसूतौ च तौ तथा च परस्परम्।
गुणसाम्ये लयो ज्ञेयो वैषम्ये सृष्टिरुच्यते ।।८।।

तिलेषु वा यथा तैवं घृतं पयसि वा स्थितम्।
तथा तमसि सत्त्वे च रजोऽव्यक्ताश्रितं स्थितम् ।।९।।

उपास्य रजनीं कृत्स्नां परां माहेश्वरीं तदा।
अहर्मुखे प्रवृत्ते च पुरः प्रकृतिसम्भवः ।।१०।।

क्षोभयामास योगेन परेण परमेश्वरः।
प्रधानं पुरुषञ्चैव प्रविश्याण्डं महेश्वरः ।।११।।
प्रधानात् क्षोभ्यमाणात्तु रजो वै समवर्त्तत।
रजः प्रवर्त्तकं तत्र बीजेष्वपि यथा जलम् ।।१२।।

गुणवैषम्यमासाद्य प्रसूयन्ते ह्यधिष्ठिताः।
गुणेभ्यः क्षोभ्य माणेभ्यस्त्रयो देवा विजज्ञिरे।
आश्रिताः परमा गुह्याः सर्वात्मानः शरीरिणः ।।१३।।

रजो ब्रह्मा तमो ह्यग्निः सत्त्वं विष्णुरजायत।

रजःप्रकाशको ब्रह्मा स्रष्टृत्वेन व्यवस्थितः ।।१४।।

तमःप्रकाशकोऽग्निस्तु कालत्वेन व्यवस्थितः।
सत्त्वप्रकाशको विष्णुरौदासीन्ये व्यवस्थितः ।।१५।।

एत एव त्रयो देवा एत एव त्रयोऽग्नयः।
परस्पराश्रिता ह्येते परस्परमनुव्रताः ।।१६।।

परस्परेण वर्त्तन्ते धारयन्ति परस्परम्।
अन्योन्यमिथुनाह्येते ह्यन्योन्यमुपजीविनः।
क्षणं वियोगो न ह्येषान्न त्यजन्ति परस्परम् ।।१७।।

ईश्वरो हि परो देवो विष्णुस्तु महतः परः ।
ब्रह्मा तु रजसोद्रिक्तः सर्गायेह प्रवर्त्तते।
परश्च पुरुषो ज्ञेयः प्रकृतिश्च परा स्मृता ।।१८।।

अधिष्ठितोऽसौ हि महेश्वरेण प्रवर्त्तते चोद्यमानः समन्तात्।
अनुप्रवर्त्तन्ति महान्त एव चिरस्थिताः स्वे विष्ये प्रियत्वात् ।।१९।।

प्रधानं गुणवैषम्यात्सर्गकाले प्रवर्त्तते।
ईश्वराधिष्ठितात् पूर्वन्तस्मात्सदसदात्मकात्।
ब्रह्मा बुद्धिश्च मिथुनं युगपत्सम्बभूवतुः ।।२०।।

तस्मात्तमोऽव्यक्तमयः क्षेत्रज्ञो ब्रह्मसंज्ञितः।
संसिद्धः कार्यकरणैर्ब्रह्माऽग्रे समवर्त्तत ।।२१।।

तेजसा प्रथमनो धीमानव्यक्तः संप्रकाशते।
स वै शरीरी प्रथमः कारणत्वे व्यवस्थितः ।।२२।।

अप्रतीघेन ज्ञानेन ऐश्वर्येण च सोऽन्वितः।
धर्मेण चाप्रतीघेन वैराग्येण समन्वितः ।।२३।।

तस्येश्वरस्याप्रतिघं ज्ञानं वैराग्यलक्षणम्।
धर्मैश्वर्यकृता बुद्धिर्ब्राह्मी जज्ञेऽभिमानिनः ।।२४।।

अव्यक्ताज्जायते चास्य मनसा च यदिच्छति।
वशीकृतत्वाद्वैगुण्यात् सुरेशत्वात्स्वभावतः ।।२५।।

चतुर्मुखस्तु ब्रह्मत्वे कालत्वे चान्तकोऽभवत्।
सहस्रमूर्द्धा पुरुषस्तिस्रोऽवस्थाः स्वयम्भुवः ।।२६।।

सत्त्वं रजश्च ब्रह्मत्वे कालत्वे च रजस्तमः.

सात्विकं पुरुषत्वे च गुणवृत्तिः स्वयम्भुवः ।।२७।।

लोकान् सृजति ब्रह्मत्वे कालत्वे संक्षिपत्यपि।
पुरुषत्वे ह्युदासीन स्तिस्रोऽवस्थाः प्रजापते ।।२८।।

ब्रह्मा कमलगर्भाभः कालो जात्याञ्जनप्रभः।
पुरुषः पुण्डरीकाक्षो रूपं तत्परमात्मनः ।।२९।।

योगेश्वरः शरीराणि करोति विकरोति च।
नानाकृतिक्रियारूपनामवृत्तिः स्वलीलया ।।३०।।

त्रिधा यद्वर्त्तते लोके तस्मात्त्रिगुण उच्यते।
चतुर्द्धा प्रविभक्तत्वाच्चतुर्व्यूहः प्रकीर्तितः ।।३१।।

यदाप्नोति यदादत्ते यच्चास्ति विषयं प्रति।
तच्चास्य सततं भावस्तस्मादात्मा निरुच्यते ।।३२।।

ऋषिः सर्वगतत्वाच्च शरीराद्यत्स्वयं प्रभुः।
स्वामित्वमस्य तत्सर्वं विष्णुः सर्वप्रवेशनात् ।।३३।।

भगवान् भगसद्भावाद्रागो रागस्य शासनात्।
परश्च तु प्रकृतत्वादवनादोमितिः स्मृतः ।।३४।।

सर्वज्ञः सर्वविज्ञानात् सर्वः सर्वं यतस्ततः।
नराणामयनं यस्मात्तेन नारायणः स्मृतः ।।३५।।

त्रिधा विभज्य स्वात्मानं त्रैलोक्यं सम्प्रवर्त्तते।
सृजते ग्रसते चैव वीक्षते च त्रिभिस्तु यत्।
अग्रे हिरण्यगर्भः स प्रादुर्भूतश्चतुर्मुखः ।।३६।।

आदित्वाच्चादितेवोऽसावजातत्वादजः स्मृतः।
पाति यस्मात्प्रजाः सर्वाःप्रजापतिरतः स्मृतः ।।३७।।

देवेषु च महान् देवो महादेवस्ततः स्मृतः।
सर्वेशत्वाच्च लोकानामवश्यत्वात्तथेश्वरः ।।३८।।

बृहत्त्वाच्च स्मृतो ब्रह्मा भूतत्वाद्भूत उच्यते।
क्षेत्रज्ञः क्षेत्रविज्ञानाद्विभुः सर्वगतो यतः ।।३९।।

यस्मात् पुर्यनुशेते च तस्मात् पुरुष उच्यते।
नोत्पादितत्वात् पूर्वत्वात् स्वयम्भूरिति स स्मृतः ।।४०।।

इज्यत्वादुच्यते यज्ञः कविर्विक्रान्तदर्शनात्।
क्रमणः क्रमणीयत्वाद्वर्णकस्याभिपालनात् ।।४१।।

आदित्यसंज्ञः कपिलस्त्वग्रजोऽग्निरिति स्मृतः।
हिरण्यमस्य गर्भोऽभूद्धिरण्यस्यापि गर्भजः।
तस्माद्धिरण्यगर्भः स पुराणेऽस्मिन्निरुच्यते ।।४२।।

स्वयम्भुवो निवृत्तस्य कालो वर्षाग्रजस्तु यः।
न शक्यः परिसंख्यातुमपि वर्षशतैरपि ।।४३।।

कल्पसंख्यानिवृत्तेस्तु पराख्यो ब्रह्मणः स्मृतः।
तावच्छेषोऽस्य कालोऽन्यस्तस्यान्ते प्रतिसृज्यते ।।४४।।

कोटिकोटिसहस्राणि अन्तर्भूतानि यानि वै।
समतीतानि कल्पानान्तावच्छेषाः परास्तु ये ।।४५।।

यस्त्वयं वर्त्तते कल्पो वाराहन्तं निबोधत।
प्रथमः साम्प्रतस्तेषां कल्पोऽयं वर्त्तते द्विजाः ।।४६।।

तस्मिन् स्वायम्भुवाद्यास्तु मनवः स्युश्चतुर्द्दश।
अतीता वर्त्तमानाश्च भविष्या ये च वै पुनः ।।४७।।

तैरियं पृथिवी सर्वा सप्तद्वीपा समन्ततः।
पूर्णं युगसहस्रं वै परिपाल्या नरेश्वरैः।
प्रजाभिस्तपसा चैव तेषां श्रृणुत विस्तरम् ।।४८।।

मन्वन्तरेण चैकेन सर्वाण्येवान्तराणि वै।
भविष्याणि भविष्यैश्च कल्पः कल्पेन चैव ह ।।४९।।

अतीतानि च कल्पानि सोदकानि सहान्वयैः।
अनागतेषु तद्वच्च तर्क्कः कार्यो विजानता ।।५०।।

इति श्रीमहापुराणे वायुप्रोक्ते सृष्टिप्रकरणं नाम पञ्चमोऽध्यायः ।। ५ ।।*

**।।सूत उवाच।।**

आपो ह्यग्नेः समभवन्नष्टेऽग्नौ पृथिवीतले।
सान्तरालैकलीनेऽस्मान्नष्टे स्थावरजङ्गमे ।।१।।

एकार्णवे तदा तस्मिन् न प्राज्ञायत किञ्चन।
तदा स भगवान् ब्रह्मा सहस्राक्षः सहस्रपात् ।।२।।

सहस्रशीर्षा पुरुषो रुक्मवर्णोऽह्यतीन्द्रियः।
ब्रह्मा नारायणाख्यः स सुष्वाप सलिले तदा ।।३।।

सत्त्वोद्रेकात् प्रबुद्धस्तु शून्यं लोकमुदीक्ष्य सः।
इमं चोदाहरन्त्यत्र श्लोकं नारायणं प्रति ।।४।।

आपो नारा वै तनव इत्यपां नाम शुश्रुमः।
अप्सु शेते च यत्तस्मात्तेन नारायणः स्मृतः ।।५।।

तुल्यं युगसहस्रस्य नैशं कालमुपास्य सः।
शर्वर्यन्ते प्रकुरुते ब्रह्मत्वं सर्गकारणात् ।।६।।

ब्रह्मा तु सलिले तस्मिन् वायुर्भूत्वा तदाचरत्।
निशायामिव खद्योतः प्रावृट्काले ततस्ततः ।।७।।

ततस्तु सलिले तस्मिन् विज्ञायान्तर्गतां महीम्।
अनुमानादसंमूढो भूमेरुद्धरणं प्रति ।।८।।

अकरोत् स तनुं त्वन्यां कल्पादिषु यथा पुरा।
ततो महात्मा मनसा दिव्यं रूपमचिन्तयत् ।।९।।

सलिलेनाप्लुतां भूमिं दृष्ट्वा स तु समन्ततः।
किन्नु रूपं महत् कृत्वा उद्धरेयमहं महीम् ।।१०।।

जलक्रीडासु रुचिरं वाराहं रूपमस्मरत्।
अधृष्यं सर्व्वभूतानां वाङ्मयं धर्मसंज्ञितम् ।।११।।

दशयोजनविस्तीर्णं शतयोजनमुच्छ्रितम्।
नीलमेघप्रतीकाशं मेघस्तनितनिःस्वनम् ।।१२।।

महापर्व्वतवर्ष्माणं श्वेतं तीक्ष्णोग्रदंष्ट्रिणम्।
विद्युदग्निप्रकाशाक्षमादित्यसमतेजसम् ।।१३।।

पीनवृत्तायतस्कन्धं सिंहविक्रान्तगामिनम्।
पीनोन्नतकटीदेशं सुश्लक्ष्णं शुभलक्षणम् ।।१४।।

आसीनान् धावतश्चैव जृम्भिनश्चैव धिष्ठितान् ।। १०.४८ ।।
अध्या पिनोऽथ जपतो युञ्जतोऽध्यायतस्तथा।
ज्वलतो वर्षतश्चैव द्योतमानान् प्रधूपितान् ।। १०.४९ ।।
बुद्धान् बुद्धतमांश्चैव ब्रह्मिष्ठान् शुभदर्शनान् ।
नीलग्री वान् सहस्राक्षान् संर्वाश्चाथ क्षपाचरान् ।। १०.५० ।।
अदृश्यान् सर्वभूतानां महायोगान् महौजसः।
रूदतोद्रवतश्चैव एवंयुक्तान् सहस्रशः।
अपातयामानसृजत् रुद्ररूपान् सुरोत्तमान् ।। १०.५१ ।।
ब्रह्मा दृष्ट्वाऽब्रवीदेतान्मास्राक्षीरीदृशीः प्रजाः।
स्रष्टव्या नात्मनस्तुल्याः प्रजा नैवाधिकास्त्वया।
अन्याः सृजत्वं भद्रन्ते स्थितोहन्त्वं सृज प्रजाः ।। १०.५२ ।।
एते ये वै मया मृष्टा विरूपा नीललेहिताः ।
सहस्राणां सहस्रन्तु आत्मनोपमनिश्चिताः ।। १०.५३ ।।
एते देवा भविष्यन्ति रूद्रा नाम महाबलाः।
पृथिव्यामन्तारीक्षे च रुद्रनाम्ना प्रतिश्रुताः ।। १०.५४ ।।
शतरुद्रसमाम्नाता भविष्यन्तीह यज्ञियाः।
यज्ञभाजो भविष्यन्ति सर्वे देवयुगैः सह ।। १०.५५ ।।
मन्वन्तरेषु ये देवा भविष्यन्तीह च्छन्दजाः।
तैः सार्द्धमीज्यमानास्ते स्थास्यन्तीह युगक्षयात् ।। १०.५६ ।।
एवमुक्तस्तदा ब्रह्मा महादेवेन धीमता।
प्रत्युवाच तदा भीमं हृष्यमाणः प्रजापतिः ।। १०. ५७ ।।
एवं भवतु भद्रं ते यथा ते व्याहृतं प्रभो।
ब्रह्मणा समनुज्ञा ते सदा सर्वमभूत् किल ।। १०.५८ ।।
ततःप्रभृति देवेशो न प्रासूयत वै प्रजाः।
ऊर्द्ध्वरेताः स्थितः स्थाणुर्यावदाभूतसंप्लवम्।
यस्माच्चोक्तं स्थितोऽस्मीति ततः स्थाणुरिति स्मृतः ।। १०.५९ ।।
ज्ञानं वैराग्यमैश्वर्यं तपः सचत्यं क्षमा धृतिः।
स्रष्टृत्वमात्मसम्बोधस्त्वधिष्ठातृत्वमेव च।
अथ यानि दशैतानि नित्यन्तिष्ठन्ति शङ्करे ।। १०.६० ।।
सर्वान् देवान् ऋषींश्चैव समेतानसुरैः सह।
अत्येति तेजसा देवो महादेवस्ततः स्मृतः ।। १०.६१ ।।
अत्येति देवानैश्चर्याद्बलेन च महासुरान्।
ज्ञानेन च मुनीन् सर्वान् योगाद्भूतानि सर्वशः ।। १०.६२ ।।

**।।ऋषय ऊचुः ।।**

योगं तपश्च सत्यञ्च धर्मञ्चापि महामुने।
माहेश्वरस्य ज्ञानस्य साधनञ्च प्रजक्ष्व नः ।। १०.६३ ।।
येन येन च धर्मेण गतिं प्राप्स्यन्ति वै द्विजाः।
तत्सर्वं श्रोतुमिच्छामि योगं माहेश्वरं प्रभो ।। १०.६४ ।।

**।। वायुरुवाच।।**

पञ्च धर्माः पुराणे तु रुद्रेण समुदाहृताः।
माहेश्वर्यं यथा प्रोक्तं रुद्रैरक्लिष्टकर्मभिः ।। १०.६५ ।।
आदित्यैर्वसुभिः साध्यैरश्विभ्याञ्चैव सर्वशः।
मरुद्भिर्भृगुभिश्चैव ये चान्ये विबुधालयाः ।। १०.६६ ।।
यमशुक्रपुरोगैश्च पितृकालान्तकैस्तथा।
एतैश्वान्यैशचव बहुभिस्ते धर्माः पर्युपासिताः ।। १०.६७ ।।
ते वै प्रक्षीणकर्माणः शारदाम्बरनिर्मलाः।
उपासते मुनिगणाः सन्धायात्मानमात्मनि ।। १०.६८ ।।
गुरुप्रियहिते युक्ता गुरूणां वै प्रियेप्सवः।
विमुच्य मानुषं जन्म विहरन्ति च देववत् ।। १०.६९ ।।
महेश्वरेण ये प्रोक्ताः पञ्च धर्माः सनातनाः।
तान् सर्वान् क्रमयोगेन उच्यमानान्निबोधत ।। १०.७० ।।
प्राणायामस्तथा ध्यानं प्रत्याहारोऽथ धारणा।
स्मरणञ्चैव योगेऽस्मिन् पञ्च धर्माः प्रकीर्त्तिताः ।। १०.७१ ।।
तेषां क्रमविशेषेण लक्षणं कारणं तथा।
प्रवक्ष्यामि तथा तत्त्वं यथा रुद्रेण भाषितम् ।। १०.७२ ।।
प्राणायामगतिश्वापि प्राणस्यायाम उच्यते ।
स चापि त्रिविधः प्रोक्तो मन्दो मध्योत्तमस्तथा ।। १०.७३ ।।
प्राणानाञ्च निरोधस्तु स प्राणायामसंज्ञितः ।
प्राणायामप्रमाणन्तु मात्रा वै द्वादश स्मृताः ।। १०.७४ ।।
मन्दो द्वादशमात्रस्तु उद्वाता द्वादश स्मृताः ।
मध्यमश्च द्विरुद्वातश्चतुर्विंशतिमात्रिकः ।। १०.७५ ।।
उत्तमस्तत्त्रिरुद्वातो मात्राः षट्त्रिंशदुच्यते।
स्वेदकम्पविषादानां जननो ह्युत्तमः स्मृतः ।। १०.७६ ।।
इत्येतत् त्रिविधं प्रोक्तं प्राणायामस्य लक्षणम्।
प्रमाणञ्च समासेन लक्षणञ्च निबोधत ।। १०.७७ ।।
सिंहो वा कुञ्जरो वापि तथाऽन्यो वा मृगो वने।

गृहीतः सेव्यमानस्तु मृदुः समुपजायते ।। १०.७८ ।।
तथा प्राणो दुराधर्षः सर्वेषामकृतात्मनाम् ।
योगतः सेव्यमानस्तु स एवाभ्यासतो व्रजेत् ।। १०.७९ ।।
स चैव हि यथा सिंहः कुञ्जरो वापि दुर्बलः।
कालान्तरवशाद्योगाद्गम्यते परिमर्द्दनात् ।। १०.८० ।।
परिधाय मनो मन्दं वश्यत्वं चाधिगच्छति ।
परिधाय मनोदेवं तथा जीवति मारुतः ।। १०.८१ ।।
वश्यत्वं हि यथा वायुर्गच्छते योगमास्थितः।
तदा स्वच्छन्दतः प्राणं नयते यत्र चेच्छति ।। १०.८२ ।।
यथा सिंहो गजो वापि वश्यत्वादवतिष्ठते।
अभयाय मनुष्याणां मृगेभ्यः संप्रवर्त्तते ।। १०.८३ ।।
यथा परिचितश्चायं वायुर्वै विश्वतोमुखः।
परिध्यायमानः संरुद्धः शरीरे किल्बिषं दहत् ।। १०.८४ ।।
प्राणायामेन युक्तस्य विप्रस्य नियतात्मनः।
सर्वे दोषाः प्रणश्यन्ति सत्त्वस्थश्चैव जायते ।। १०.८५ ।।
तपांसि यानि तप्यन्ते व्रतानि नियमाश्च ये।
सर्वयज्ञफलञ्चैव प्राणायामश्च तत्समः ।। १०.८६ ।।
अब्बिन्दुं यः कुशाग्रेण मासि मासि समश्नुते।
संवत्सरशतं साग्रं प्राणायामञ्च तत्समम् ।। १०.८७ ।।
प्राणायामैर्दहेर्दोषान् धारणाभिश्च किल्बिषम्।
प्रत्याहारेण विषयान् ध्यानेनानाश्वरान् गुणान् ।। १०.८८ ।।
तस्माद्युक्तः सदा योगी प्राणायामपरो भवेत् ।
सर्वपापविशुद्धात्मा परं ब्रह्माधिगच्छति ।। १०.८९ ।।
इति श्रीम हापुराणे वायुप्रोक्ते मन्वन्तरादिवर्णनं नाम दशमोऽध्याः ।। १० ।।

**।। वायुरुवाच ।।**

एकं महान्तं दिवसमहोरात्रमथापि वा।
अर्द्धमासं तथा मासमयनाब्दयुगानि च ।। ११.१ ।।
महायुगसहस्राणि ऋषयस्तपसि स्थिताः।
उपासते महात्मानः प्राणं दिव्येन चक्षुषा ।। ११.२ ।।
अतऊर्द्ध्वं प्रवक्ष्यामि प्राणायामप्रयोजनम्।
फलञ्चैव विशेषेण यथाह भगवान् प्रभुः ।। ११.३ ।।
प्रयोजनानि चत्वारि प्राणायामस्य विद्धिवै।
शान्तिः प्रशान्तिर्दीप्तिश्च प्रसादश्च चतुष्टयम् ।। ११.४ ।।
घोराकारशिवानान्तु कर्मणां फलसम्भवम्।
स्वयंकृतानि कालेन इहामुत्र च देहिनाम् ।। ११.५ ।।
पितृमातृ प्रदुष्टानां ज्ञातिसम्बन्धिसङ्करैः।
क्षपणं हि कषायाणां पापानां शान्तिरुच्यते ।। ११.६ ।।
लोभमानात्मकानां हि पापानामपि संयमः ।
इहामुत्र हितार्थाय प्रशान्तिस्तप उच्यते ।। ११.७ ।।
सूर्येन्दुग्रहताराणां तुल्यस्तु विषयो भवेत्।
ऋषीणाञ्च प्रसिद्धानां ज्ञानविज्ञानसम्पदाम् ।। ११.८ ।।
अतीतानागतानाञ्च दर्शनं साम्प्रतस्य च ।
बुद्धस्य समतां यान्ति दीप्तिः स्यात्तप उच्यते ।। ११.९ ।।
इन्द्रियाणीन्द्रियार्थांश्च मनः पञ्च च मारुतान् ।
प्रसादयति येनासौ प्रसाद इति संज्ञितः ।। ११.१० ।।
इत्येष धर्मः प्रथमः प्राणायामश्चतुर्विधः।
सन्निकृष्टफलो ज्ञेयः सद्यःकालप्रसादजः ।। ११.११ ।।
अत ऊर्द्ध्वं प्रवक्ष्यामि प्राणायामस्य लक्षणम्।
आसनं च यथातत्त्वं युञ्जतो योगमेव च ।। ११.१२ ।।
ओङ्कारं प्रथमं कृत्वा चन्द्रसूर्यौ प्रणम्य च।
आसनं स्वस्तिकं कृत्वा पद्ममर्द्धासनन्तथा ।। ११.१३ ।।
समजानुरेकजानुरुत्तानः सुस्थितोऽपि च।
समो दृढासनो भूत्वा संहृत्य चरणावुभौ ।। ११.१४ ।।
संवृतास्योऽवबद्धाक्ष उरो विष्टभ्य चाग्रतः।
पार्ष्णिभ्यां वृषणे छाद्य तथा प्रजननं ततः ।। ११.१५ ।।
किञ्चिदुन्नामितशिराः शिरो ग्रीवां तथैव च।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ।। ११.१६ ।।

तमः प्रच्छाद्य रजसा रजः सत्त्वेन च्छादयेत् ।
ततः सत्त्वस्थितो भूत्वा योगं युञ्जन् समाहितः ।। ११.१७ ।।
इन्द्रियाणीन्द्रियार्थांश्च मनः पञ्च स मारुतान्।
विगृह्य समवायेव प्रत्याहारमुपक्रमेत् ।। ११.१८ ।।
यस्तु प्रत्याहरेत् कामान् कूर्मोऽङ्गानीव सर्वतः।
तथात्मरतिरेकस्थः पश्यत्यात्मानमात्मनि ।। ११.१९ ।।
पूरयित्वा शरीरन्तु स बाह्याभ्यन्तरं शुचिः।
आकण्ठनाभियोगेन प्रत्याहारमुपक्रमेत् ।। ११.२० ।।
कलामात्रस्तु विज्ञेयो निमेषोन्मेष एव च।
तथा द्वादशमात्रस्तु प्राणायामो विधीयते ।। ११.२१ ।।
धारणा द्वादशायामो योगो वै धारणाद्वयम्।
तथा वै योगयुक्तश्च ऐश्वर्यं प्रतिपद्यते ।
वीक्षते परमात्मानं दीप्यमानं स्वतेजसा ।। ११.२२ ।।
प्राणायामेन युक्तस्य विप्रस्य नियतात्मनः।
सर्वे दोषाः प्रणश्यन्ति सत्त्वस्थश्चैव जायते ।। ११.२३ ।।
एवं वै नियताहारः प्राणायामपरायणः।
जित्वा जित्वा सदा भूमिमारोहेत्तु सदा मुनिः ।। ११.२४ ।।
अजिता हि महाभूमिर्दोषानुत्पादयेद्बहून् ।
विवर्द्धयति सम्मोहं न रोहेदजितां ततः ।। ११.२५ ।।
नालेन तु यथा तोयं यन्त्रेणैव बलान्वितः।
आपिबेत प्रयत्नेन तथा वायुञ्जितश्रमः ।। ११.२६ ।।
नाभ्यां च हृदये चैव कण्ठे उरसि चानने।
नासाग्रे तु तथा नेत्रे भ्रुवोर्मध्येऽथ मूर्द्धनि ।। ११.२७ ।।
किञ्चिदूर्द्ध्वं परस्मिंश्च धारणा परमा स्मृता।
प्राणापानसमारोधात् प्राणायामः स कथ्यते ।। ११.२८ ।।
मनसो धारणा चैव धारणेति प्रकीर्तिता।
निवृत्ति र्विषयाणान्तु प्रत्याहारस्तु संज्ञितः ।। ११.२९ ।।
सर्वेषां समवाये तु सिद्धिः स्याद्योगलक्षणा।
तयोत्पन्नस्य योगस्य ध्यानं वै सिद्धिलक्षणम्।
ध्यानयुक्तः सदा पश्येदात्मानं सूर्यचन्द्रवत् ।। ११.३० ।।
सत्त्वस्यानुपपत्तौ तु दर्शनन्तु नव विद्यते।
अदेशकालयोगस्य दर्शनन्तु न विद्यते ।। ११.३१ ।।
अग्न्यभ्याशे वने वापि शुष्कपर्णचये तथा।

जन्तुव्याप्ते श्मशाने वा जीर्णगोष्ठे चतुष्पथे ।। ११.३२ ।।
सशब्दे सभये वापि चैत्यवल्मीकसंचये।
उदपाने तथा नद्यान्न बाधातः कदाचन ।। ११.३३ ।।
क्षुधाविष्स्तथाऽप्रितो न च व्याकुलचेतनः।
युञ्जीत परमं ध्यानं योगी ध्यानपरः सदा ।। ११.३४ ।।
एतान् दोषान् विनिश्चित्य प्रमादाद्यो युनक्ति वै।
तस्य दोषाः प्रकुप्यन्ति शरीरे विघ्नकारकाः ।। ११.३५ ।।
जडत्वं बधिरत्वं च मूकत्वं चाधिगच्छति।
अन्धत्वं स्मृतिलोपश्च जरा रोगस्तथैव च ।। ११.३६ ।।
तस्य दोषाः प्रकुप्यन्ति अज्ञानाद्यो युनक्ति वै।
तस्माज्ज्ञानेन शुद्धेन योगी युञ्जेत्समाहितः ।। ११.३७ ।।
अप्रमत्तः सदा चैव न दोषान् प्राप्नुयात् क्वचित् ।
तेषां चिकित्सां वक्ष्यामि दोषाणां च यथाक्रमम्।
यथा गच्छन्ति ते दोषाः प्राणायामसमुत्थिताः ।। ११.३८ ।।
स्निग्धां यवागूमत्युष्णां भुक्त्वां तत्रावधारयेत् ।
एतेन क्रमयोगेन वातगुल्मं प्रशाम्यति ।। ११.३९ ।।
गुदावर्त्तप्रतीकारमिदं कुर्य्याच्चिकित्सितम्।
भुक्त्वा दधि यवागूर्वा वायुरूर्द्ध्वं ततो व्रजेत ।। ११.४० ।।
वायुग्रंथिं ततो भित्त्वा वायुदेशे प्रयोजयेत् ।
तथापि न विशेषः स्याद्धारणां मूर्ध्नि धारयेत् ।। ११.४१ ।।
युञ्जानस्य तनुं तस्य सत्तवस्थस्यैव देहिनः।
गुदावर्त्तप्रतीघाते एतत् कुर्य्याच्चिकित्सितम् ।। ११.४२ ।।
सर्वगात्रप्रकम्पेन समारब्धस्य योगिनः ।
इमां चिकित्सां कुर्व्वीत तया संपद्यते सुखी ।। ११.४३ ।।
मनसा यद्व्रतं किञ्चिद्विष्टम्भीकृत्य धारयेत्।
उरोद्घाते उरःस्थानं कण्ठदेशे च धारयेत् ।। ११.४४ ।।
त्वचोऽवधाते तां वाचि बाधिर्ये श्रोत्रयोस्तथा।
जिह्वास्थाने तृषार्त्तस्तु अग्रे स्नेहांश्च तन्तुभिः।
फलं वै चिन्तयेद्योगी ततः संपद्यते सुखी ।। ११.४५ ।।
क्षये कुष्ठे सकीलासे धारयेत्सर्वसात्विकीम्।
यस्मिन् यस्मिन् रजोदेशे तस्मिन् युक्तो विनिर्द्दिशेत् ।। ११.४६ ।।
योगोत्पन्नस्य विप्रस्य इदं कुर्याच्चिकित्सितम्।
वंशकीलेन मूर्द्धानं धारयाणस्य ताडयेत्।

मूर्ध्नि कीलं प्रतिष्ठाप्य काष्ठं काष्ठेन ताडयेत् ।। ११.४७ ।।
भयभीतस्य सा संज्ञा ततः प्रत्यागमिष्यति।
अथ वा लुप्तसंज्ञस्य हस्ताभ्यां तत्र धारयेत् ।। ११.४८ ।।
प्रतिलभ्य ततः संज्ञां धारणां मूर्ध्नि धारयेत्।
स्निग्धमल्पं च भुञ्जीत ततः संपद्यते सुखी ।। ११.४९ ।।
अमानुषेण सत्त्वेन यदा बुध्यति योगवित् ।
दिवं च पृथिवीञ्चैव वायुमग्निं च धारयेत् ।। ११.५० ।।
प्राणायामेन तत्सर्वं दह्यमानं वशीभवेत्।
अथापि प्रविशेद्देहं ततस्तं प्रतिषेधयेत् ।। ११.५१ ।।
ततः संस्तभ्य योगेन धारयानस्य मूर्द्धानि।
प्राणायामाग्निना दग्धं तत्सर्वं विलयं व्रजेत् ।। ११.५२ ।।
कृष्णसर्पापराधं तु धारयेद्धृदयोदरे ।
महर्जनस्तपः सत्यं हृदि कृत्वा तु धारयेत् ।। ११.५३ ।।
विषस्य तु फलं पीत्वा विशल्यां धारयेत्ततः ।
सर्वतः सनगां पृथ्वीं कृत्वा मनसि धारयेत् ।। ११.५४ ।।
हृदि कृत्वा समुद्रांश्च तथा सर्वांश्च देवताः ।
सहस्रेण घटानाञ्च युक्तः स्नायीत योगवित् ।। ११.५५ ।।
उदके कण्ठमात्रे तु धारणां मूर्ध्नि धारयेत्।
प्रतिस्रोतोविषाविष्टो धारयेत् सर्वगात्रिकीम् ।। ११.५६ ।।
शीर्णोऽर्कपत्रपुटकैः पिबेद्वल्मीकमृत्तिकाम् ।
चिकित्सितविधिर्ह्येष विश्रुतो योगनिर्मितः ।। ११.५७ ।।
व्याख्यातस्तु समासेन योगदृष्टेन हेतुना।
ब्रुवतो लक्षणं विद्धि विप्रस्य कथयेत् क्वचित् ।। ११.५८ ।।
अथापि कथयेन्मोहात्तद्विज्ञानं प्रलीयते।
तस्मात् प्रवृत्तिर्य्योगस्य न वक्तव्या कथञ्चन ।। ११.५९ ।।
सत्त्वं तथारोग्यमलोलुपत्वं वर्णप्रभा सुस्वरसौम्यता च।
गन्धः शुभो मूत्रपुरीष मल्पं योगप्रवृत्तिः प्रथमा शरीरे ।। ११.६० ।।
आत्मानं पृथिवीञ्चैव ज्वलन्तीं यदि पश्यति।
कृत्वान्यं विशते चैव विद्यात् सिद्धिमुपस्थिताम् । ११.६१ ।।
इति श्रीमहापुराणे वायुप्रोक्ते पाशुपतयोगो नामैकादशोऽध्यायः ।। ११ ।।

**।। सूत उवाच ।।**

अत ऊर्द्ध्वं प्रवक्ष्यामि उपसर्गा यथा तथा ।
प्रादुर्भवन्ति ये दोषा दृष्टतत्त्वस्य देहिनः ।। १२.१ ।।

मानुष्यान् विविधान् कामान् कामयेत ऋतुं स्त्रियः।
विद्यादानफलञ्चैव उपसृष्टस्तु योगवित् ।। १२.२ ।।

अग्निहोत्रं हविर्यज्ञमेतत् प्रायतनं तथा।
मायाकर्म धनं स्वर्गमुपसृष्टस्तु कांक्षति ।। १२.३ ।।

एष कर्मसु युक्तस्तु सोऽविद्यावशमागतः।
उपसृष्टन्तु जानीयाद्वुद्ध्या चैव विसर्ज्जयेत्।
नित्यं ब्रह्मपरो युक्त उपसर्गात् प्रमुच्यते ।। १२.४ ।।

जितप्रत्युपसर्गस्य जितश्वासस्य देहिनः।
उपसर्गाः प्रवर्त्तन्ते सात्त्वराजसतामसाः ।। १२.५ ।।

प्रतिभाश्रवणे चैव न देवानाञ्चैव दर्शनम्।
भ्रमावर्तश्च इत्येते सिद्धिलक्षणसंज्ञिताः ।। १२.६ ।।

विद्या काव्यं तथा शिल्पं सर्वं वाचावृतानि तु।
विद्यार्थाश्चोपतिष्ठन्ति प्रभावस्यैव लक्षणम् ।। १२.७ ।।

श्रृणोति शब्दान् श्रोतव्यान् योजनानां शतादपि।
सर्वज्ञश्च विधिज्ञश्च योगी चोन्मत्तवद्भवेत् ।। १२.८ ।।

यक्षराक्षसगन्धर्व्वान् वीक्षते दिव्यमानुषान्।
वेत्ति तांश्च महायोगी उपसर्गस्य लक्षणम् ।। १२.९ ।।

देवदानवगन्धर्वान् ऋषींश्चापि तथा पितॄन्।
प्रेक्षते सर्वतश्चैव उन्मत्तं तं विनिर्द्दिशेत् ।। १२.१० ।।

भ्रमेण भ्राम्यते योगी चोद्यमानोऽन्तरात्मना।
भ्रमेण भ्रान्तबुद्धेस्तु ज्ञानं सर्वं प्रणश्यति ।। १२.११ ।।

वार्त्ता नाशयते चित्तं चोद्यमानोऽन्तरात्मना।
वर्त्तनाक्रान्तबुद्धेस्तु सर्वं ज्ञानं प्रणश्यति ।। १२.१२ ।।

आवृत्य मनसा शुक्लं पटं वा कम्बलं तथा।
ततस्तु परमं ब्रह्म क्षिप्रमेवानुचिन्तयेत् ।। १२.१३ ।।

तस्माच्चैवात्मनो दोषांस्तूपसर्गानुपस्थितान् ।

परित त्यजेत मेधावी यदीच्छेत् सिद्धिमात्मनः ।। १२.१४ ।।

ऋषयो देवगन्धर्वा यक्षोरगमहासुराः।
उपसर्गेषु संयुक्ता आवर्त्तन्ते पुनः पुनः ।। १२.१५ ।।

तस्माद्युक्तः सदा योगी लघ्वाहारी जितेन्द्रियः।
तथा सुप्तः सुसूक्ष्मेषु धारणां मूर्ध्नि धारयेत् ।। १२.१६ ।।

ततस्तु योगयुक्तस्य जितनिद्रस्य योगिनः।
उपसर्गाः पुनश्चान्ते जायन्ते प्राणसंज्ञकाः ।। १२.१७ ।।

पृथिवीं धारयेत्सर्वां ततश्चापो ह्यनन्तरम्।
ततोऽग्निञ्चैव सर्वेषामाकाशं मन एव च ।। १२.१८ ।।

ततः परां पुनर्बुद्धिं धारयेद्यत्नतो यती।
किद्धीनाञ्चैव लिङ्गानि दृष्ट्वा दृष्ट्वा परित्यजेत् ।। १२.१९ ।।

पृथ्वीं धारयमाणस्य मही सूक्ष्मा प्रवर्तते।
अपो धारयमाणस्य आपः सूक्ष्मा भवन्ति हि।
शीता रसाः प्रवर्त्तन्ते सूक्ष्मा ह्यमृतसन्निभाः ।। १२.२० ।।

तेजो धारयमाणस्य तेजः सूक्ष्मा प्रवर्त्तते।
आत्मानं मन्यते तेजस्तद्भावमनुपश्यति ।। १२.२१ ।।

आत्मानं मन्यते वायुं वायुवन्मण्डलं प्रभो ।
आकाशं धारयाणस्य व्योम सूक्ष्मं प्रवर्त्तते ।। १२.२२ ।।

पश्यते मण्डलं सूक्ष्मं घोषश्चास्य प्रवर्त्तते ।
आत्मानं मन्यते नित्यं वायुः सूक्ष्मः प्रवर्त्तते ।। १२.२३ ।।

तथा मनो धारयतो मनः सूक्ष्मं प्रवर्त्तते ।
मनसा सर्वभूतानां मनस्तु विशते हि सः।
बुद्ध्या बुद्धिं यदा युञ्जेत्तदा विज्ञाय बुद्ध्यते ।। १२.२४ ।।

एतानि सप्त सूक्ष्माणि विदित्वा यस्तु योगवित्।
परित्यजति मेधावी स बुद्ध्या परमं व्रजेत् ।। १२.२५ ।।

यस्मिन् यस्मिंश्च संयुक्तो भूत ऐश्वर्यलक्षणे।
तत्रैव सङ्गं भजते तेनैव प्रविनश्यति ।। १२.२६ ।।

तस्माद्विदित्वा सूक्ष्माणि संसक्तानि परस्परम्।
परित्यजति योबुद्ध्या स परं प्रप्नुयाद्द्विजः ।। १२.२७ ।।

दृश्यन्ते हि महात्मान ऋषयो दिव्यचक्षुषः।
संसक्ताः सूक्ष्मभावेषु ते दोषास्तेषु संज्ञिताः।।१२.२८
तस्मान्न निश्चयः कार्यः सूक्ष्मेष्विह कदाचन।
ऐश्वर्याज्जायते रागो विरागं ब्रह्म चोच्यते ।। १२.२९ ।।

विदित्वा सप्त सूक्ष्माणि षडङ्गञ्च महेश्वरम्।
प्रधानं विनियोगज्ञः परं ब्रह्माधिगच्छति ।। १२.३० ।।

सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।
अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ।। १२.३१ ।।

नित्यं ब्रह्मधनो युक्त उपसर्गैः प्रमुच्यते।
जितश्वासोपसर्गस्य जितरामस्य योगिनः।
एका बहिःशरीरेऽस्मिन् धारणा सर्वकामिकी ।। १२.३२ ।।

विशेद्यदा द्विजो युक्तो यत्र यत्रार्प्पयेन्मनः ।
भूतान्याविशते वापि त्रैलोक्यञ्चापि कम्पयेत् ।। १२.३३ ।।

एतया प्रविशेद्देहं हित्वा देहं पुनस्त्विह।
मनोद्वारं हि योगानामादित्यञ्च विनिर्द्दिशेत् ।। १२.३४ ।।

आदानादिक्रियाणान्तु आदित्य इति चोच्यते।
एतेन विधिना योगी विरक्तः सूक्ष्मवर्ज्जितः।
प्रकृतिं समतिक्रम्य रुद्रलोके महीयते ।। १२.३५ ।।

ऐश्वर्यगुणसम्प्राप्तं ब्रह्मभूतन्तु तं प्रभुम्।
देवस्थानेषु सर्वेषु सर्वतस्तु निवर्त्तते ।। १२.३६ ।।

पैशाचांशचव पिशाचांश्च राक्षसेन च राक्षसान् ।
गान्धर्वेण च गन्धर्वान् कौबेरेण कुबेरजान् ।। १२.३७ ।।

इन्द्रमैन्द्रेण स्थानेन सौम्यं सौम्येन चैव हि।
प्रजापतिं तथा चैव प्राजापत्येन साधयेत् ।। १२.३८ ।।

ब्राह्मं ब्राह्येन चाप्येवमुपामन्त्रयते प्रभुम्।
तत्र सक्तस्तु उन्मत्तस्तस्मात्सर्वं प्रवर्त्तते ।। १२.३९ ।।

नित्यं ब्रह्मपरो युक्तः स्थानान्येतानि वै त्यजेत् ।
असज्यमानः स्थानेषु द्विजः सर्वगतो भवेत् ।। १२.४० ।।

इति श्रीमहापुराणे वायुप्रोक्ते योगोपसर्गनिरूपणं नाम द्वादशोऽध्यायः ।। १२ ।।

**।। वायुरुवाच ।।**

अत ऊर्द्ध्वं प्रवक्ष्यामि ऐश्वर्यगुण विस्तरम्।
येन योगविशेषेण सर्वलोकानतिक्रमेत् ।। १३.१ ।।

तत्राष्टगुणमैश्वर्यं योगिनां समुदाहृतम्।
तत्सर्वं क्रमयोगेन उच्यमानं निबोधत ।। १३.२ ।।

अणिमा लघिमा चैव महिमा प्राप्तिरेव च।
प्राकाम्यञ्चैव सर्वत्र ईशित्वञ्चैव सर्वतः ।। १३.३ ।।

वशित्वमथ सर्वत्र यत्र कामावसायिता।
तच्चापि विविधं ज्ञेयमैश्वर्यं सर्वकामिकम् ।। १३.४ ।।

सावद्यं निरवद्यं च सूक्ष्मञ्चैव प्रवर्त्तते।
सावद्यं नाम तत्तत्त्वं पञ्चभूतात्मकं स्मृतम् ।। १३.५ ।।

निरवद्यं तथा नाम पञ्चभूतात्मकं स्मृतम्।
इन्द्रियाणि मनश्चैव अहह्कारश्च वै स्मृतम् ।। १३.६ ।।

तत्र सूक्ष्मप्रवृत्तन्तु पञ्चभूतात्मकं पुनः।
इन्द्रियाणि मनश्चैव बुद्ध्यहङ्कार संज्ञितम् ।। १३.७ ।।

तथा सर्वमयञ्चैव आत्मस्था ख्यातिरेव च।
संयोग एवं त्रिपिधः सूक्ष्मेष्वेव प्रवर्त्तते ।। १३.८ ।।

पुनरष्टगुणस्यापि तेष्वेवाथ प्रवर्त्तते।
तस्य रूपं प्रवक्ष्यामि यथाह भगवान् प्रभुः ।। १३.९ ।।

त्रैलोक्ये सर्वबूतेषु जीवस्यानियतः स्मृतः।
अणिमा च यथाव्यक्तं सर्वं यत्र प्रतिष्ठितम् ।। १३.१० ।।

त्रैलोक्ये सर्वभूतानां दुष्प्राप्यं समुदाहृतम्।
तच्चापि भवति प्राप्यं प्रथमं योगिनां बलात् ।। १३.११ ।।

लम्बनं प्लवनं योगे रूपमस्य सदा भवेत् ।
शीघ्रगं सर्वभूतेषु द्वितीयं तत्पदं स्मृतम् ।। १३.१२ ।।

त्रैलोक्ये सर्वभूतानां प्राप्तिः प्राकाम्यमेव च।
महिमा चापि यो यस्मिंस्तृतीयो योग उच्यते ।। १३.१३ ।।

त्रैलोक्ये सर्वभूतेषु त्रैलोक्यमगमं स्मृतम्।
प्रकामान् विषयान् भुङ्क्ते न च प्रतिहतः व्कचित् ।

त्रैलोक्ये सर्वबूतानां सुखदुःखं प्रकर्त्तते ।। १३.१४ ।।

ईशो भवति सर्वत्र प्रविभागेन योगवित्।
वश्यानि चैव भूतानि त्रैलोक्ये सचराचरे।
भवन्ति सर्वकार्येषु इच्छतो न भवन्ति च ।। १३.१५ ।।

यत्र कामावसायित्वं त्रैलोक्ये सचराचरे।
इच्छया चेन्द्रियाणि स्युः भवन्ति न भवन्ति च ।। १३.१६ ।।

शब्दः स्पर्शो रसो गन्धो रूपं चैव मन स्तथा।
प्रवर्त्तन्तेऽस्य चेच्छातो न भवन्ति तथेच्छया ।। १३.१७ ।।

न जायते न म्रियते भिद्यते न च छिद्यते।
न दह्यते न मुह्यते हीयते न च लिप्यते ।। १३.१८ ।।

न क्षीयते न क्षरति न खिद्यति कदाचन।
क्रियते चैव सर्वत्र तथा विक्रियते न च ।। १३.१९ ।।

अगन्धरसरूपस्तु स्पर्शशब्दविवर्जितः।
अवर्णो ह्यवरश्चैव तथा वर्णस्य कर्हिचित् ।। १३.२० ।।

भुङ्क्तेऽथ विषयांश्चैव विषयैर्न्न च युज्यते।
ज्ञात्वा तु परमं सूक्ष्मं सूक्ष्मत्वाच्चापवर्गकः ।। १३.२१ ।।

व्यापकस्त्वपवर्गाच्च व्यापित्वात्पुरुषः स्मृतः।
पुरुषः सूक्ष्मभावात्तु ऐश्वर्ये परतः स्थितः ।। १३.२२ ।।

गुणान्तरन्तु ऐश्वर्ये सर्वतः सूक्ष्म उच्यते।
ऐश्वर्य्यमप्रतीघाति प्राप्य योगमनुत्तमम्।
अपवर्गं ततो गच्छेत् सुसूक्ष्मं परमं पदम् ।। १३.२३ ।।

इति श्रीमहापुराणे वायुप्राक्ते योगैश्वर्याणि नाम त्रयोदशोध्यायः ।। १३ ।।।

**।। वायुरुवाच ।।**

न चैवमागतो ज्ञानाद्रागात् कर्म्म समाचरेत्।
राजसं तामसं वापि भुक्त्वा तत्रैव युज्यते ।। १४.१ ।।

तथा सुकृतकर्म्मा तु फलं स्वर्गे समश्नुते।
तस्मात् स्थानात् पुनर्भ्रष्टो मानुष्यमनुपद्यते ।। १४.२ ।।

तस्माद्ब्रह्म परं सूक्ष्मं ब्रह्म शाश्वतमुच्यते।
ब्रह्म एव हि सेवेत ब्रह्मैव परमं सुखम् ।। १४.३ ।।

परिश्रमस्तु यज्ञानां महतार्थेन वर्त्तते।
भूयो मृत्युवशं याति तस्मान्मोक्षः परं सुखम् ।। १४.४ ।।

अथ वै ध्यानसंयुक्तो ब्रह्मयज्ञपरायणः ।
न स स्याद् व्यापितुं शक्यो मन्वन्तरशतैरपि ।। १४.५ ।।

दृष्ट्वा तु पुरुषं दिव्यं विश्वाख्यं विश्वरूपिणम्।
विश्वपाद शिरोग्रीवं विश्वेशं विश्वभावनम्।
विश्वगन्धं विश्वमाल्यं विश्वाम्बरधरं प्रभुम् ।। १४.६ ।।

गोभिर्मही संयतते पतत्रिणं महात्मानं परममतिं वरेण्यम्।
कविं पुराणमनुशासितारं सूक्ष्माच्च सूक्ष्मं महतो महान्तम्।
योगेन पश्यन्ति न चक्षुषा तं निरिन्द्रियं पुरुषं रुक्मवर्णम् ।। १४.७ ।।

अलिङ्गिनं पुरुषं रुक्मवर्णं सलिङ्गिनं निर्गुणं चेतनं च।
नित्यं सदा सर्वगतन्तु शौचं पश्यन्ति युक्त्या ह्यचलं प्रकाशम् ।। १४.८ ।।

तद्भावितस्तेजसा दीप्यमानः अपाणिपादोदरपार्श्वजिह्वः।
अतीन्द्रियोऽद्यापि सुसूक्ष्म एकः पश्यत्यचक्षुः स श्रृणोत्यकर्णः ।। १४.९ ।।

नास्यास्त्यबुद्धं न च बुद्धिरस्ति स वेद सर्वं न च वेदवेद्यः।
तमाहुरग्र्यं पुरुषं महान्तं सचेतनं सर्व्वगतं सुसूक्ष्मम् ।। १४.१० ।।

तामाहुर्मुनयः सर्व्वे लोके प्रसवधर्मिणीम्।
प्रकृतिं सर्व्वभूतानां युक्ताः पश्यन्ति चेतसा ।। १४.११ ।।

सर्व्वतः पाणिपादान्तं सर्व्वतोऽक्षिशिरोमुखम्।
सर्व्वतः श्रुति (म) माँल्लोके सर्व्वमावृत्य तिष्ठति ।। १४.१२ ।।

युक्ता योगेन चेशानं सर्व्वतश्च सनातनम्।
पुरुषं सर्व्वभूतानां तस्माद्ध्याता न मुह्यते ।। १४.१३ ।।

भूतात्मानं महात्मानं परमात्मानमव्ययम्।
सर्व्वात्मानं परं ब्रह्म तद्वै ध्यात्वा न मुह्यति ।। १४.१४ ।।

पवनो हि यथा ग्राह्यो विचरन् सर्व्वमूर्तिषु।
पुरि शेते तथाभ्रे च तस्मात् पुरुष उच्यते।
अथ चेल्लुप्तधर्म्मात्तु सविशेषैश्च कर्म्माभिः ।। १४.१५ ।।

ततस्तु ब्रह्म योन्यां वै शुक्रशोणितसंयुतम्।
स्त्रीपुमांसप्रयोगेण जायते हि पुनः पुनः ।। १४.१६ ।।

ततस्तु गर्भकाले तु कलनं नाम जायते।
कालेन कलनञ्चापि बुद्बुदश्च प्रजायते ।। १४.१७ ।।

मृत्पिण्डस्तु यथा चक्रे चक्रवातेन पीडितः।
हस्ताभ्यां क्रियमाणस्तु विश्वत्वमुपगच्छति ।। १४.१८ ।।

एवमात्मास्थिसंयुक्तो वायुना समुदीरितः।
जायते मानुषस्तत्र यथा रूपं तथा मनः ।। १४.१९ ।।

वायुः सम्भवते तेषां वातात् सञ्जायते जलम्।
जलात्संभवति प्राणः प्राणाच्छुक्रं विवर्द्धते ।। १४.२० ।।

रक्तभागास्त्रयस्त्रिंशच्छुक्र भागाश्चतुर्द्दश।
भागतोऽर्द्धपलं कृत्वा ततो गर्भे निषेवते ।। १४.२१ ।।

ततस्तु गर्भसंयुक्तः पञ्चभिर्वायुभिर्वृतः।
पितुः शरीरात् प्रत्यङ्गरूपमस्योपजायते ।। १४.२२ ।।

ततोऽस्य मातुराहारात् पीतलीढप्रवेशितम्।
नाभि स्रोतःप्रवेशेन प्राणाधारो हि देहिनाम् ।। १४.२३ ।।

नवमासान् परिक्लिष्टः संवेष्टितशिरोधरः ।
वेष्टितः सर्व्वगात्रैश्च अपर्य्यायक्रमागतः।
नवमासोषितश्चैव योनिच्छिद्रादवाङ्मुखः ।। १४.२४ ।।

ततस्तु कर्म्मभिः पापैर्निरयं प्रतिपद्यते।
असिपत्रवनञ्चैव शाल्मलीच्छेदभेदयोः ।। १४.२५ ।।

तत्र निर्भर्त्सनञ्चैव तथा शोणितभोजनम् ।
एतास्तु यातन् घोराः कुम्भीपाकसुदुःसहाः ।। १४.२६ ।।

यथा ह्यापस्तु विच्छिन्नाः स्वरूपमुपयान्ति वै ।

तस्माच्छिन्नाश्च भिन्नाश्च यातनास्थानमागतः ।। १४.२७ ।।

एवं जीवस्तु तैः पापैस्तप्यमानः स्वयं कृतैः ।
प्राप्नुयात् कर्म्मभिर्दुःखं शेषं वा यादि चेतरम् ।। १४.२८ ।।

एकेनैव तु गन्तव्यं सर्व्वमृत्युनिवेशनम्।
एकनैव च भोक्तव्यं तस्मात् सुकृतमाचरेत् ।। १४.२९ ।।

न ह्येनं प्रस्थितं कश्चिद्गच्छन्तमनुगच्छति।
यदनेन कृतं कर्म्म तदेनमनुगच्छति ।। १४.३० ।।

ते नित्यं यमविषये विभिन्नदेहाः क्रोशन्तः सततमनिष्टसंप्रयोगैः।
शुष्यन्ते परिगतवेदनाशरीराः बह्वीभिः सुभृशमधर्म्मयातनाभिः ।। १४.३१ ।।

कर्मणाः मनसा वाचा यदभीष्टं निषेव्यते।
तत् प्रसद्य हरेत् पापं तस्मात् सुकृतमाचरेत् ।। १४.३२ ।।

यादृग् जातानि पापानि पूर्व्वं कर्म्माणि देहिनः।
संसारं तामसं तादृक् षड्विधं प्रतिपद्यते ।। १४.३३ ।।

मानुष्यं पशुभावञ्च पशुभावान्मृगो भवेत्।
मृगत्वात् पक्षिभावन्तु तस्माच्चैव सरीसृपः ।। १४.३४ ।।

सरीसृपत्वाद्गच्छोद्धि।
स्थावरत्वन्न संशयः।
स्थावरत्वं पुनः प्राप्तो
यावदुन्मिषते नरः।
कुलालचकवद्भ्रान्तस्तत्रैवपरिकीर्तितः ।। १४.३५ ।।

इत्येवं हि मनुष्यादिः संसारे स्थावरान्तके।
विज्ञेयस्तामसो नाम तत्रैव परिवर्त्तते ।। १४.३६ ।।

सात्त्विकश्चापि संसारो ब्रह्मादिः परिकीर्त्तितः।
पिशाचान्तः सविज्ञेयः स्वर्गस्थानेषु देहिनाम् ।। १४.३७ ।।

ब्राह्मे तु केवलं सत्त्वं स्थावरे केवलं तमः।
चतुर्द्दशानां स्थानानां मध्ये विष्टम्भकं रजः।
मर्मसु च्छिद्यमानेषु वेदनार्त्तस्य देहिनः ।। १४.३८ ।।

ततस्तु परमं ब्रह्म कथं विप्रः स्मरिष्यति ।
संस्कारात् पूर्वधर्मस्य भावनायां प्रणोदितः।
मानुष्यं भजते नित्यं तस्मान्नित्यं समादधेत् ।। १४.३९ ।।

इति श्रीमहापुराणे वायुप्रोक्ते पाशुपतयोगो नाम चतुर्द्दशोऽध्यायः ।। १४ ।।

**।। वायुरुवाच ।।**

चतुर्द्दशविधं ह्येतद्बुद्ध्वा संसारमण्डलम्।
तथा समारभेत् कर्म्म संसारभयपीडितः ।। १५.१ ।।

ततः स्मरति संसारचक्रेण परिवर्त्तितः।
तस्मात्तु सततं युक्तो ध्यानतत्परयुञ्जकः।
तथा समारभेद्योगं यथात्मानं स पश्यति ।। १५.२ ।।

एष आद्यः परं ज्योतिरेष सेतुरनुत्तमः।
विवृद्धो ह्येष भूतानां न सम्भेदश्च शाश्वतः ।। १५.३ ।।

तदेनं सेतुमात्मानं अग्निं वै विश्वतोमुखम्।
हृदिस्थं सर्वभूतानामुपासीत विधानवित् ।। १५.४ ।।

हुत्वाष्टावाहुतीः सम्यक् शुचिस्तद्गतमानसः।
वैश्वानरं हृदिस्थन्तु यथावदनुपूर्वशः।
अपः पूर्व सकृत् प्राश्य तुष्णीं भूत्वा उपासते ।। १५.५ ।।

प्राणायेति ततस्तस्य प्रथमा ह्याहुतिः स्मृता।
अपानाय द्वितीया तु समानायेति चापरा ।। १५.६ ।।

उदानाय चतुर्थीति व्यानायेति च पञ्चमी।
स्वाहा कारैः परं हुत्वा शेषं भुञ्जीत कामतः।
अपः पुनः सकृत् प्राश्य त्र्याचम्य हृदयं स्पृशेत् ।। १५.७ ।।

ॐप्राणानां ग्रन्थिरस्यात्मा रुद्रो ह्यात्मा विशान्तकः।
स रुद्रो ह्यात्मनः प्राणा एवमाप्याययेत् स्वयम् ।। १५.८ ।।

त्वं देवानामपि ज्येष्ठ उग्रस्त्वं चतुरो वृषा ।
मृत्युघ्नोऽसि त्वमस्मभ्यं भद्रमेतद्धुतं हविः ।। १५.९ ।।

एवं हृदयमालभ्य पादाङ्गुष्ठे तु दक्षिणे।
विश्राव्य दक्षिणं पाणिं नाभिं वै पाणिना स्पृशेत् ।
ततः पुनरुपस्पृश्य चात्मानमभिसंस्पृशेत् ।। १५.१० ।।

अक्षिणी नासिका श्रोत्रे हृदयं शिर एव च।
द्वावात्मानावुभावेतौ प्राणापानावुदाहृतौ ।। १५.११ ।।

तयोः प्राणोऽन्तरात्मास्य बाह्योऽपानोऽत उच्यते।
अन्नं प्राणस्तथापानं मृत्युर्ज्जीवितमेव च ।। १५.१२ ।।

अन्नं ब्रह्म च विज्ञेयं प्रजानां प्रसवस्तथा।

अन्नाद्भूतानि जायन्ते स्थितिरन्नेन चेष्यते।
वर्द्धन्ते तेन भूतानि तस्मादन्नन्तदुच्यते ।। १५.१३ ।।

तदेवाग्नौ हुतं ह्यन्नं भुञ्जते देवदानवाः।
गन्धर्वयक्षरक्षांसि पिशाचाश्चान्नमेव हि ।। १५.१४ ।।

इति श्रीमहापुराणे वायु प्रोक्ते पाशुपतयोगो नाम पञ्चदशोऽध्यायः ।। १५ ।।

**।। वायुरुवाच ।।**

अत ऊद्ध्वं प्रवक्ष्यामि शौचाचारस्य लक्षणम्।
यदनुष्ठाय शुद्धात्मा प्रेत्य स्वर्गं हि चाप्नुयात् ।। १६.१ ।।

उदकार्थी तु शौचानां मुनीनामुत्तमं पदम् ।
यस्तु तेष्वप्रमत्तः स्यात् स मुनिर्न्नावसीदति ।। १६.२ ।।

मानावमानौ द्वोवेतौ तावेवाहुर्विषामृते ।
अवमानं विषं तत्र मानन्त्वमृतमुच्यते ।। १६.३ ।।

यस्तु तेष्वप्रमत्तः स्यात् स मुनिर्न्नावसीदति ।
गुरोः प्रियहिते युक्तः स तु संवत्सरं वसेत् ।। १६.४ ।।

नियमेष्वप्रमत्तस्तु यमेषु च सदा भवेत् ।
प्राप्यानुज्ञान्ततश्चैव ज्ञानागमनमुत्तमम्।
अविरोधेन धर्मस्य विचरेत् पृथिवीमिमाम् ।। १६.५ ।।

चक्षुः पूतं व्रजेन्मार्गं वस्त्रपूतं जलं पिबेत्।
सत्यपूतां वदेद्वाणीमिति धर्मानुशासनम् ।। १६.६ ।।

आतिथ्यं श्राद्धयज्ञेषु न गच्छेद्योगवित् क्वचित्।
एवं ह्यहिंसको योगी भवेदिति विचारणा ।। १६.७ ।।

वह्नौ विधूमे व्यङ्गारे सर्वृस्मिन् भुक्तवज्जने।
विचरेन्मतिमान् योगी न तु तेष्वेव नित्यशः ।। १६.८ ।।

यथैवमवमन्यन्ते यथा परिभवन्ति च।
युक्तस्तथा चरेद्भैक्षं सतां धर्ममदूषयन् ।। १६.९ ।।

भैक्षं चरेद्गृहस्थेषु यथाचारगृहेषु च।
श्रेष्ठा तु परमा चेयं वृत्तिरस्योपदिश्यते ।। १६.१० ।।

अत ऊर्द्ध्वं गृहस्थेषु शालीनेषु चरेद्द्विजः।
श्रद्दधानेषु दान्तेषु श्रोत्रियेषु महात्मसु ।। १६.११ ।।

अत ऊर्द्ध्वं पुनश्चापि अदुष्टपतितेषु च।
भैक्षचर्या विवर्णेषु जघन्या वृत्तिरुच्यते ।। १६.१२ ।।

भैक्षं यवागूं तक्रं वा पयो यावकमेव च।
फळमूलं विपक्वं वा पिण्याकं शक्तितोपि वा ।। १६.१३ ।।

इत्येते वै मया प्रोक्ता योगिनां सिद्धिवर्द्धनाः।

आहारास्तेषु सिद्धेषु श्रेष्ठं भैक्षमिति स्मृतम् ।। १६.१४ ।।

अब्बिन्दुं यः कुशाग्रेण मासे मासे समश्नुते।
न्यायतो यस्तु भिक्षेत स पूर्वोक्ताद्विशिष्यते ।। १६.१५ ।।

योगिनां चैव सर्वेषां श्रेष्ठं चान्द्रायणं स्मृतम् ।
एकं द्वे त्रीणि चत्वारि शक्तितो वा समाचरेत् ।। १६.१६ ।।

अस्तेयं ब्रह्मचर्यञ्च अलोभस्त्याग एव च।
व्रतानि चैव भिक्षूणामहिंसा परमार्थिता ।। १६.१७ ।।

अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम्।
नित्यंस्वाध्याय इत्येते नियमाः परिकीर्तिताः ।। १६.१८ ।।

बीचयोनिर्गुणवपुर्बद्धः कर्मभिरेव च।
यथा द्विप इवारण्ये मनुष्याणां विधीयते ।। १६.१९ ।।

प्राप्यते वाचिरादेवाङ्कुशेनेव निवारितः।
एवं ज्ञानेन शुद्धेन दग्धबीचो ह्यकल्मषः।
विमुक्तबन्धः शान्तोऽसौ मुक्त इत्यभिधीयते ।। १६.२० ।।

वेदैस्तुत्या सर्वयज्ञक्रियास्तु यज्ञे जप्यं ज्ञानिनामाहुरग्रयम्।
ज्ञानाद्ध्यानं सङ्गरागव्यपेतं तस्मिन् प्राप्ते शाश्वतस्योपलब्धिः ।। १६.२१ ।।

दमः शमः सत्यमकल्मषत्वं मौनं च भूतेष्वखिलेष्वथाज्र्जवम्।
अतीन्द्रियज्ञानमिदं तथाज्र्जवं प्राहुस्तथा ज्ञानविशुद्धसत्त्वाः ।। १६.२२ ।।

समाहितो ब्रह्मपरोऽप्रमादी शुचिस्तथैवात्मरतिर्जीतेन्द्रियः।
समाप्नुयुर्योगमिमं महाधियो महर्षयश्चैवमनिन्दितामलाः ।। १६.२३ ।।

इति श्रीमहापुराणे वायु प्रोक्ते शौचाचारलक्षणं नाम षोडशोऽध्यायः ।। १६ ।।

**।। वायुरुवाच ।।**

आश्रमत्रयमुत्सृज्य प्राप्तस्तु परमाश्रमम्।
अतः संवत्सरस्यान्ते प्राप्य ज्ञानमनुत्तमम् ।। १७.१ ।।

अनुज्ञाप्य गुरूंचैव विचरेत् पृथिवीमिमाम्।
सारभूतमुपासीत ज्ञानं यज्ज्ञेय साधकम् ।। १७.२ ।।

इदं ज्ञानमिदं ज्ञेयमिति यस्तुषितश्चरेत् ।
अपि कल्पसहस्रायुर्न्नैव ज्ञेयमवाप्नुयात् ।। १७.३ ।।

त्यक्तसङ्गो जितकोधो लघ्वाहारो जितेन्द्रियः।
पिधाय बुद्ध्या द्वाराणि ध्याने ह्येवं मनो दधेत् ।। १७.४ ।।

शून्येष्वेवावकाशेषु गुहासु चवने तथा।
नदीनां पुलिने चैव नित्यं युक्तः सदा भवेत् ।। १७.५ ।।

वाग्दण्डः कर्मदण्डश्च मनोदण्डश्च ते त्रयः।
यस्यैते नियता दण्डाः स त्रिदण्डी व्यवस्थितः ।। १७.६ ।।

अवस्थितो ध्यानरतिर्जितेन्द्रियः शुभाशुभे हित्य च कर्मणी उभे ।
इदं शरीरं प्रविमुच्य शास्त्रतो न जायते म्रियते वा कदाचित् ।। १७.७ ।।

इति श्रीमहापुराणे वायुप्रोक्ते परमाश्रमप्राप्तिकथनं नाम सप्तदशोऽध्यायः ।। १७ ।।

**।। वायुरुवाच ।।**

अत ऊर्द्ध्वं प्रवक्ष्यामि यतीनामिह निश्चयम्।

प्रायश्चित्तानि तत्त्वेन यान्यकामकृतानि तु।

अथ कामकृतेप्याहुः सूक्ष्मधर्मविदो जनाः ।। १८.१ ।।

पापञ्च त्रिविधं प्रोक्तं वाङ्मनःकायसम्भवम्।

सततं हिदिवा रात्रौ येनेदं बध्यते जगत् ।। १८.२ ।।

न कर्माणि न चाप्येष तिष्ठ तीतिपरा श्रुतिः।

क्षणमेव प्रयोज्यन्तु आयुषस्तु विधारणात् ।। १८.३ ।।

भवेद्धीरोऽप्रमत्तस्तु योगो हि परमं बलम्।

न हि योगात्परं किञ्चिन्नराणामिह दृश्यते।

तस्माद्योगं प्रशंसन्ति धर्मयुक्ता मनीषिणः ।। १८.४ ।।

अविद्यां विद्यया तीर्त्वा प्राप्यैश्वयर्मनुत्तमम्।

दृष्ट्वा परापरं धीराः परं गच्छन्ति तत्पदम् ।। १८.५ ।।

व्रतानि यानि भिक्षूणां तथैवोपव्रतानि च।

एकैकापक्रमे तेषां प्रायश्चित्तं विधीयते ।। १८.६ ।।

उपेत्य तु स्त्रियं कामात् प्रायश्चित्तं विनिर्दिशेत् ।

प्राणायामसमायुक्तं कुर्यात्सान्तपनं तथा ।। १८.७ ।।

तत श्चरति निर्द्देशं कृच्छ्रस्यान्ते समाहितः।

पुनराश्रममागम्य चरेद्भिक्षुरतन्द्रितः ।

न मर्मयुक्तं वचनं हिनस्तीति मनीषिणः ।। १८.८ ।।

तथापि च न कर्त्तव्यः प्रसङ्गो ह्येष दारुणः।

अहोरात्राधिकः कश्चिन्नास्त्यधर्म इति श्रुतिः ।। १८.९ ।।

हिंसा ह्येषा परा सृष्टा दैवतैर्मुनिभिस्तथा।

यदेतद्द्रविणं नाम प्राणा ह्येते बहिश्चराः।

स तस्य हरति प्राणान् यो यस्य हरते धनम् ।। १८.१० ।।

एवं कृत्वा स दुष्टात्मा भिन्नवृत्तो व्रताच्च्युतः।

भूयो निर्वेदमापन्नश्चरेच्चान्द्रायणं व्रतम् ।। १८.११ ।।

विधिना शास्त्रदृष्टेन संवत्सरमिति श्रुतिः।

ततः संवत्सरस्यान्ते भूयः प्रक्षीणकल्मषः।

भूयो निर्वेदमापन्नश्चरेच्चान्द्रायणं व्रतम् ।। १८.१२ ।।

अहिंसा सर्वभूतानां कर्मणा मनसा गिरा ।

अकामादपि हिंसेत यदि भिक्षुः पशून् मृगान्।

कृच्छ्रातिकृच्छ्रं कुर्वीत चान्द्रायणमथीपि वा ।। १८.१३ ।।

स्कन्देदिन्द्रियदौर्बल्यात् स्त्रियं दृष्ट्वा यतिर्यदि।
तेन धारयितव्या वै प्राणायामास्तु षोडश ।। १८.१४ ।।
दिवा स्कन्नस्य विप्रस्य प्रायश्चित्तं विधीयते।
त्रिरात्रमुपवासश्च प्राणायामशतं तथा ।। १८.१५ ।।
रात्रौ स्कन्नः शुचिः स्नातोद्वादशैव तु धारणाः।
प्राणायामेन शुद्धात्मा विरजा जायते द्विजः ।। १८.१६ ।।
एकान्नं मधु मांसं वा ह्यामश्राद्धं तथैव च।
अभोज्यानि यतीनाञ्च प्रत्यक्षलवणानि च ।। १८.१७ ।।
एकैकातिक्रमे तेषां प्रायश्चित्तं विधीयते।
प्राजापत्येन कृच्छ्रेण ततः पापात् प्रमुच्यते ।। १८.१८ ।।
व्यतिक्रमाच्च ये केचिद्वाङ्मनःकायसम्भवम्।
सद्भिः सह विनिश्चित्य यद्ब्रूयुस्तत्समाचरेत् ।। १८.१९ ।।
विशुद्धबुद्धिः समलोष्टकाञ्चनः समस्तभूतेषु चरन् स माहितः ।
स्थानं ध्रुवं शाश्वतमव्ययं सतां परं स गत्वा न पुनर्हि जायते ।। १८.२० ।।
इति श्रीमहापुराणे वायुप्रोक्ते यतिप्रायश्वित्तविधिर्नामाष्टादशोऽध्यायः ।। १८ ।।

**।। वायुरुवाच ।।**

अत ऊर्द्ध्वं प्रवक्ष्यामि अरिष्टानि निबोधत।
येन ज्ञानविशेषेण मृत्युं पश्यति चात्मनः ।। १९.१ ।।

अरुन्धतीं ध्रुवञ्चैव सोमच्छायां महापथम्।
यो न पश्येत्स नो जीवेन्नरः संवत्सरात्परम् ।। १९.२ ।।

अरश्मिवन्तमादित्यं रश्मिवन्तञ्च पावकम्।
यः पश्येन्न च जीवेत मासादेकादशात्परम् ।। १९.३ ।।

वमेन्मूत्रं करीषं वा सुवर्णं रजतं तथा।
प्रत्यक्षमथ वा स्वप्ने दशमासान् स जीवति ।। १९.४ ।।

अग्रतः पृष्ठतो वापि खण्टं यस्य पदम्भवेत्।
पांसुले कर्दमे वापि सप्तमासान् स जीवति ।। १९.५ ।।

काकः कपोतो गृध्रो वा निलीयेद्यस्य मूर्द्धनि।
क्रव्यादो वा खगः कश्चित् षण्मासान्नातिवर्त्तते ।। १९.६ ।।

बध्ये द्वायसपङ्क्तीभिः पांशुवर्षेण वा पुनः।
छायां वा विकृतां पश्येच्चतुःपञ्च स जीवति ।। १९.७ ।।

अनभ्रे विद्युतं पश्येद्दक्षिणां दिशमाश्रिताम्।
उदकेन्द्रध नुर्वापि त्रयो द्वौवा स जीवति ।। १९.८ ।।

अप्सु वा यदि वाऽऽदर्शे आत्मानं यो न पश्यति।
अशिरस्कं तथात्मानं मासादूर्द्ध्वं न जीवति ।। १९.९ ।।

शवगन्धि भवेद्गात्रं वसागन्धि ह्यथापि वा।
मृत्युर्ह्युपस्थितस्तस्य अर्द्धमासं स जीवति ।। १९.१० ।।

सम्भिन्नो मारुतो यस्य मर्मस्थानानि कृन्तति ।
अद्भिः स्पृष्टो न दृष्येच्च तस्य मृत्युरुपस्थितः ।। १९.११ ।।

ऋक्षवानरयुक्तेन रथेनाशान्तु दक्षिणाम् ।
गायन्नथ व्रजेत् स्वप्ने विद्यान्मृत्युरुपस्थितः ।। १९.१२ ।।

कृष्णाम्ब रधरा श्यामा गायन्ती वाथ चाङ्गना।
यन्नयेद्दक्षिणामाशां स्वप्ने सोऽपि न जीवति ।। १९.१३ ।।

छिद्रं वासशचव कृष्णञ्च स्वप्रे यो विधृयान्नरः ।
भग्नं वा श्रवणं दृष्ट्वा विद्यान्मृत्युरुपस्थितः ।। १९.१४ ।।

आमस्तकतलाद्यस्तु निमज्जेत्पङ्कसागरे।
दृष्ट्वा तु तादृशं स्वप्नं सद्य एव न जीवति ।। १९.१५ ।।

भस्माङ्गाराश्च केशांश्च नदीं शुष्कां भुजङ्गमान्।
पश्येद्यो दशरात्रन्तु न स जीवेत तादृशः ।। १९.१६ ।।

कृष्णैश्च विकटैश्चैव पुरुषैरुद्यतायुधैः।
पाषाणैस्ताड्यते स्वप्ने यः सद्यो न स जीवति ।। १९.१७ ।।

सूर्योदये प्रत्युषसि प्रत्यक्षं यस्य वै शिवा।
क्रोशन्ती सम्मुखाभ्येति म गतायुर्भवेन्नरः ।। १९.१८ ।।

यस्य वै स्नातमात्रस्य हृदयं पीड्यते भृशम्।
जायते दन्तहर्षश्च तं गतायुषमादिशेत् ।। १९.१९ ।।

भूयो भूयः श्वसेद्यस्तु रात्रौ वा यदि वा दिवा।
दीपगन्धञ्च नो वेत्ति विद्यान्मृत्युमुपस्थितम् ।। १९.२० ।।

रात्रौ चेन्द्रायुधं पश्येद्दिवा नक्षत्रमण्डलम्।
परनेत्रेषु चात्मानं न पश्येन्न स जीवति ।। १९.२१ ।।

नेत्रमेकं स्रवेद्यस्य कर्णौ स्थानाच्च भ्रश्यतः।
नासा च वक्रा भवति स ज्ञेयो गतजीवितः ।। १९.२२ ।।

यस्य कृष्णा खरा जिह्वा पङ्कभासञ्च वै मुखम्।
गण्डे चिपिटके रक्ते तस्य मृत्युरुपस्थितः ।। १९.२३ ।।

मुक्तकेशो हसंश्चैव गायन् नृत्यंश्च यो नरः।
याम्याशाभिमुखो गच्छेत्तदन्तं तस्य जीवितम् ।। १९.२४ ।।

यस्य स्वेदसमुद्भूताः श्वेतसर्षपसन्निभाः।
स्वेदा भवन्ति ह्यसकृत्तस्य मृत्युरुपश्थितः ।। १९.२५ ।।

उष्ट्रा वा रासभा वापि युक्ताः स्वपरे रथेऽशुभाः।
यस्य सोपि न जीवेत दक्षिणाभिमुखो गतः ।। १९.२६ ।।

द्वे चात्र परमेऽरिष्टे एतद्रूपं परं भवेत्।
घोषं न श्रृणुयात् कर्णे ज्योतिर्न्नेत्रे न पश्यति ।। १९.२७ ।।

श्वभ्रेयो निपतेत् स्वप्ने द्वारञ्चास्य न विद्यते।
न चोतिष्ठति यः श्वभ्रात्तदन्तं तस्य जीवितम् ।। १९.२८ ।।

ऊर्द्ध्वा च दृष्टिर्न च सम्प्रतिष्ठा रक्ता पुनः सम्परिवर्त्तमाना।
मुखस्य चोष्मा मुषिरा च नाभिरत्युष्णमूत्रो विषमस्थ एव ।। १९.२९ ।।

दिवा वा यति वा रात्रौ प्रत्यक्षं योऽभिहन्यते।
तं पश्येदथ हन्तारं स हतस्तु न जीवति ।। १९.३० ।।

अग्निप्रवेशं कुरुते स्वप्नान्ते यस्तु मानवः।
स्मृतिं नोपलभेच्चापि तदन्तं तस्य जीवितम् ।। १९.३१ ।।

यस्तु प्रावरणं शुक्लं स्वकं पश्यति मानवः।
रक्तं कृष्णमपि स्वप्ने तस्य मृत्युरुपस्थितः ।। १९.३२ ।।

अरिष्टसूचिते देहे तस्मिन् काल उपागते।
त्यक्त्वा भयविषादञ्च उद्गच्छेदूभुद्धिमान्नरः ।। १९.३३ ।।

प्राचीं वा यदि वोदीचीं दिशं निष्क्रम्य वै शुचिः।
समेऽतिस्थावरे देशे विविक्ते जनवर्ज्जिते ।। १९.३४ ।।

उदङ्मुखः प्राङ्मुखो वा स्वस्थः स्वाचान्त एव च।
स्वस्तिकोपनिविष्टश्च नमस्कृत्य महेश्वरम्।
समकायशिरोग्रीवं धार्येन्नावलोकयेत् ।। १९.३५ ।।

यथा दीपो निवातस्यो नेङ्गते सोपमा स्मृता।
प्रागुदक्प्रवणे देशे तस्माद्युञ्जीत योगवित् ।। १९.३६ ।।

प्राणे च रमते नित्यं चक्षुषोः स्पर्शने तथा।
श्रोत्रे मनसि बुद्धौ च तथा वक्षसि धारयेत्।
न तस्य धारणायोगाद्वायुः सर्वं प्रवर्त्तते ।। १९.३७ ।।

कालघर्मञ्च विज्ञाय समूहञ्चैव सर्वशः।
द्वादशाध्यात्ममित्येवं योगधारणमुच्यते ।। १९.३८ ।।

शतमष्ट शतं वापि धारणां मूर्ध्नि धारयेत्।
न तस्य धारणायोगाद्वायुः सर्वं प्रवर्तते ।। १९.३९ ।।

ततस्त्वापूरयेद्देहमोङ्कारेण समाहितः।
अथोङ्कारमयो योगी न क्षरेत्त्वक्षरी भवेत् । १९.४० ।।

इति श्रीमहापुराणे वायुप्रोक्ते अरिष्टानि नामैकोनविंशोऽध्यायः ।। १९ ।।

**।। वायुरुवाच ।।**

अत ऊर्द्ध्वं प्रवक्ष्यामि ओङ्कारप्राप्तिलक्षणम्।
एष त्रिमात्रो विज्ञेयो व्यञ्जनञ्चात्र सस्वरम् ।। २०.१ ।।

प्रथमा वैद्युती मात्रा द्वितीया तामसी स्मृता।
तृतीया निर्गुणी विद्यान्मात्रामक्षरगामिनीम् ।। २०.२ ।।

गन्धर्वीति च विज्ञेयो गान्धारस्वरसम्भवा।
पिपीलिकासमस्पर्शा प्रयुक्ता मूर्द्नि लक्ष्यते ।। २०.३ ।।

तथा प्रयुक्तमोङ्कारं प्रतिनिर्वाति मूर्द्धनि ।
तथोङ्कारमयो योगी ह्यक्षरे त्वक्षरी भवेत् ।। २०.४ ।।

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते।
अप्रमत्तेन चेद्वध्यं शरवत्तन्मयो भवेत् ।। २०.५ ।।

ओमित्येकाक्षरं ब्रह्म गुहायां निहितं पदम्।
ओमित्येतत्त्रयो वेदास्त्रयो लोकास्त्रयोऽग्नयः।
विष्णुक्रमास्त्रयस्त्वेते ऋक्सामानि यजूंषि च ।। २०.६ ।।

मात्राश्चात्र चतस्रस्तु विज्ञेयाः परमार्थतः।
तत्र युक्तश्च यो योगी तस्य सालोक्यतां व्रजेत् ।। २०.७ ।।

अकारस्त्वक्षरो ज्ञेय उकारः स्वरितः स्मृतः।
मकारस्तु प्लुतो ज्ञेयस्त्रिमात्र इति संज्ञितः ।। २०.८ ।।

अकारस्त्वथ भूर्लोक उकारो भुवरुच्यते।
सव्यञ्जनो मकारश्च स्वर्ल्लोकश्च विधीयते ।। २०.९ ।।

ओङ्कारस्तु त्रयो लोकाः शिरस्तस्य त्रिविष्टपम्।
भुवनान्तञ्च तत्सर्वं ब्राह्मं तत्पदमुच्यते ।। २०.१० ।।

मात्रापदं रुद्रलोको ह्यमात्रस्तु शिवं पदम्।
एवन्ध्यानविशेषेण तत्पदं समुपासते ।। २०.११ ।।

तस्माद्ध्यानरतिर्नित्यममात्रं हि तदक्षरम्।
उपास्यं हि प्रयत्नेन शाश्वतं पदमिच्छता ।। २०.१२ ।।

ह्रस्वा तु प्रथमा मात्रा ततो दीर्घा त्वनन्तरम्।
ततः प्लुतवती चैव तृतीया उपदिश्यते ।। २०.१३ ।।

एतास्तु मात्रा विज्ञेया यथावदनुपूर्वशः ।

यावच्चैव तु शक्यन्ते धार्यन्ते तावदेव हि ।। २०.१४ ।।

इन्द्रियाणि मनो बुद्धिं ध्यायन्नात्मनि यः सदा ।
अत्राष्टमात्रमपिचेच्छृणुयात्फलमाप्नुयात् ।। २०.१५ ।।

मासे मासेऽश्वमेधेन यो यजेत शतं समाः ।
न स तत् प्राप्नुयात् पुण्यं मात्रया यदवाप्नुयात् ।। २०.१६ ।।

अब्बिन्दुं यः कुशाग्रेण मासे मासे पिबेन्नरः।
संवत्सरशतं पूर्णं मात्रया तदवाप्नुयात् ।। २०.१७ ।।

इष्टापूर्तस्य यज्ञस्य सत्यवाक्ये च यत् फलम्।
अभक्षणे च मांसस्य मात्रया तदवाप्नुयात् ।। २०.१८ ।।

स्वाम्यर्थे युध्यमानानां शूराणामनिवर्त्तिनाम्।
यद्भवेत्तत् फलं दृष्टं मात्रया तदवाप्नुयात् ।। २०.१९ ।।

न तथा तपसोग्रेण न यज्ञैर्भूरिदक्षिणैः।
यत् फलं प्राप्नुयात् सम्यग् मात्रया तदवाप्नुयात् ।। २०.२० ।।

तत्र वै योऽर्द्धमात्रो यः प्लुतो नामोपदिश्यते।
एषा एव भवेत् कार्या गृहस्थानान्तु योगिनाम् ।। २०.२१ ।।

एषा चैव विशेषेण ऐश्वर्यसमलक्षणा।
योगिनान्तु विशेषेण ऐश्वर्ये ह्यष्टलक्षणे।
अणिमाद्येति विज्ञेया तस्माद्युञ्जीत तां द्विजः ।। २०.२२ ।।

एवं हि योगी संयुक्तः शुचिर्द्दान्तो जितेन्द्रियः।
आत्मानं विन्दते यस्तु स सर्वं विन्दते द्विजः ।। २०.२३ ।।

ऋचो यजूंषि सामानि वेदोपनिषदस्तथा।
योगज्ञानादवाप्नोति ब्राह्मणो ध्यानचिन्तकः ।। २०.२४ ।।

सर्वभूतलयो भूत्वा अभूतः स तु जायते।
योगी सङ्क्रमणं कृत्वा याति वै शाश्वतं पदम् ।। २०.२५ ।।

अपि चात्र चतुर्हस्तां ध्यायमानश्चतुर्मुखीम्।
प्रकृतिं विश्वरूपाख्यां दृष्ट्वा दिव्येन चक्षुषा ।। २०.२६ ।।

अजामेतां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां स्वरूपाम्।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामाजोऽन्यः।
अष्टाक्षरां षोडशपाणिपादां चतुर्मुखीं त्रिशिखामेकशृङ्गाम्।

आद्यामजां विश्वसृजां स्वरूपां ज्ञात्वा बुधास्त्वमृतत्वं व्रजन्ति।
ये ब्राह्मणाः प्रणवं वेदयन्ति न ते पुनः संसरन्तीह भूयः ।। २०.२७ ।।

इत्येतदक्षरं ब्रह्म परमोङ्कारसंज्ञितम्।
यस्तु वेदयते सम्यक् तथा ध्यायति वा पुनः ।। २०.२८ ।।

संसारचक्रमुत्सृज्य मुक्तबन्धनबन्धनः।
अचलं निर्गुणं स्थानं शिवं प्राप्नोत्यसंशयः।
इत्येतद्वै मया प्रोक्तमोङ्कारप्राप्तिलक्षणम् ।। २०.२९ ।।

नमो लोकेश्वराय सङ्कल्पकल्पग्रहणाय महान्तमुपतिष्ठते तद्वो हितं यद्ब्रह्मणे नमः।
सर्वत्र स्थानिने निर्गुणाय सम्भक्तयोगीश्वराय च ।।

पुष्करपर्णमिवाद्भिर्विशुद्धमिव ब्रह्ममुपतिष्ठेत्पवित्रं पवित्राणां पवित्रं पवित्रेण परिपूरितेन पवित्रेण ह्रस्वन्दीर्घप्लुतमिति तदेतमोङ्कारमशब्दमस्पर्शमरूपमरसमगन्धं पर्युपासीत अविद्येशानाय विश्वरूपो न तस्य अविद्येशानाय नमो योगीश्वरायेति च येन द्यौरुग्रा पृथिवी च दृढा येन स्वस्तनितं येन नाकस्तयोरन्तरिक्षमिमे वरीयसो देवानां हृदयं विश्वरूपो न तस्य प्राणापानौपम्यं चास्ति ओङ्कारोविश्वविश्वा वै यज्ञः यज्ञो वै वेदः वेदो वै नमस्कारः नमस्कारो रुद्रः नमो रुद्राय योगेश्वराधिपतये नमः।
इति सिद्धिप्रत्युपस्थानं सायंप्रातर्मध्याह्ने नमः इति।।

सर्वकामफलोरुद्रः।
यथा वृन्तात् फलं पक्वं पवनेन समीरितम्।
नमस्कारेण रुद्रस्य तथा पापं प्रणश्यति ।। २०.३० ।।

यथा रुद्रनमस्कारः सर्वधर्मफलो ध्रुवः।
अन्यदेवनमस्कारो न तत् फलमवाप्नुयात् ।। २०.३१ ।।

तस्मात् त्रिषवणं योगी उपासीत महेश्वरम्।
दशाविस्तारकं ब्रह्म तथा च ब्रह्म विस्तरम् ।। २०.३२ ।।

ओङ्कारं सर्वतः काले सर्वं विहितवान् प्रभुः।
तेन तेन तु विष्णुत्वं नमस्कारं महायशाः ।। २०.३३ ।।

नमस्कारस्तथा चैव प्रणवस्तुवते प्रभुम् ।
प्रणवं स्तुवते यज्ञो यज्ञं संस्तुवते नमः।
नमस्तुवति वै रुद्रस्तस्माद्रुद्रपदं शिवम् ।। २०.३४ ।।

इत्येतानि रहस्यानि यतीनां वै यथाक्रमम्।
यस्तु वेदयते ध्यानं स परं प्राप्नुयात्पदम् ।। २०.३५ ।।

इति श्रीमहापुराणे वायुप्रोक्ते ओङ्कारप्राप्तिलक्षणं नाम विंशोऽध्यायः ।। २० ।।

**।। सूत उवाच ।।**

ऋषीणामग्निकल्पानां नैमिषारण्यवासिनाम् ।

ऋषिः श्रुतिधरः प्राज्ञः सावर्णिर्न्नाम नामतः ।। २१.१ ।।

तेषां सोप्यग्रतो भूत्वा वायुं वाक्यविशारदः।

सातत्यं तत्र कुर्वन्तं प्रियार्थं सत्रयाजिनाम्।

विनयेनोपसंगम्य पप्रच्छ स महाद्युतिम् ।। २१.२ ।।

**।।सावर्णिरुवाच ।।**

विभो पुराणसं बद्धां कथां वै वेदसंमिताम्।

श्रोतुमिच्छामहे सम्यक् प्रसादात्सर्वदर्शिनः ।। २१.३ ।।

हिरण्यगर्भो भगवान् ललाटान्नीललोहितम्।

कथं तत्तेजसं देवं लब्धवान् पुत्रमात्मनः ।। २१.४ ।।

कथं च भगवान् जज्ञे ब्रह्मा कमलसंभवः।

रुद्रत्वं चैव सर्वस्य स्वात्मजस्य कथं पुनः ।। २१.५ ।।

कथं च विष्णो रुद्रेण सार्द्धं प्रीतिरनुत्तमा।

सर्वे विष्णुमया देवा सर्वे विष्णुमया गणाः ।। २१.६ ।।

न च विष्णुसमा काचिद्गतिरन्या विधीयते।

इत्येवं सततं देवा गायन्ते नात्र संशयः।

भवस्य सकथं नित्यं प्रणामं कुरुते हरिः ।। २१.७ ।।

**।।सूत उवाच ।।**

एवमुक्ते तु भगवान् वायुः सावर्णिमब्रवीत्।

अहो साधु त्वया साधो पृष्टः प्रश्नो ह्यनुत्तमः ।। २१.८ ।।

भवस्य पुत्रजन्मत्वं ब्रह्मणः सोऽभवद्यथा।

ब्रह्मणः पद्म योनित्वं रुद्रत्वं शंकरस्य च ।। २१.९ ।।

द्वाभ्यामपि च सम्प्रीतिर्

विष्णोश्चैव भवस्य च ।

यच्चापि कुरुते नित्यं प्रणामं शंकरस्य च।

विस्तरेणानुपूर्व्याच्च श्रृणुत ब्रुवतो मम ।। २१.१० ।।

मन्वन्तरस्य संहारे पश्चिमस्य महात्मनः।

आसीत्तु सप्तमः कल्पः पद्मो नाम द्विजोत्तम।

वाराहः साम्प्रतस्तेषां तस्य वक्ष्यामि विस्तरम् ।। २१.११ ।।

**।।सावर्णिरुवाच।।**

कियता चैव कालेन कल्पः सम्भवते कथम्।

किं च प्रमाणं कल्पस्य तत्र प्रब्रूहि पृच्छताम् ।। २१.१२ ।।

**||वायुरुवाच||**

मन्वन्तराणां सप्तानां कालसंख्या यथाक्रमम्|

प्रवक्ष्यामि समासेन ब्रुवतो मे निबोधत || २१.१३ ||

कोटीनां द्वे सहस्रे वै अष्टौ कोटिशतानि च |

द्विषष्टिश्च तथा कोट्यो नियुतानि च सप्ततिः|

कल्पार्द्धस्य तु संख्यायामेतत् सर्वमुदाहृतम् || २१.१४ ||

पूर्वोक्तौ च गुणच्छेदौ वर्षाग्रं लब्दमादिशेत् |

शतं चैव तु कोटीनां कोटीनामष्टसप्ततिः|

द्वे च शतसहस्रे तु नवतिर्नियुतानि च || २१.१५ ||

मानुषेण प्रमाणेन यावद्वैवस्वतान्तरम्|

एष कल्पस्तु विज्ञेयः कल्पार्द्धद्विगुणीकृतः || २१.१६ ||

अनागतानां सप्तानामेतदेव यथाक्रमम्|

प्रमाणं कालसंख्याया विज्ञेयं मतमैश्वरम् || २१.१७ ||

नियुतान्यष्टपञ्चाशत्तथाऽशीतिशतानि च|

चतुरशीतिश्चवान्यानि प्रयुतानि प्रमाणतः || २१.१८ ||

सप्तर्षयो मनुश्चैव देवाश्चेन्द्रपुरोगमाः|

एतत् कालस्य विज्ञेयं वर्षाग्रन्तु प्रमाणतः || २१.१९ ||

एवं मन्वन्तरं तेषां मानुषान्तः प्रकीर्त्तितः|

प्रणवान्ताशचव ये देवाः साध्या देवगणाश्च ये|

विश्वेदेवाशचव ये नित्याः कल्पं जीवन्ति ते गणाः || २१.२० ||

अयं यो वर्त्तते कल्पो वाराहः स तु कीर्त्त्यते|

यस्मिन् स्वायम्भुवाद्याश्च मनवश्च चतुर्द्दश || २१.२१ ||

**||ऋषय ऊचुः||**

कस्माद्वाराहकल्पोयं नामतः परिकीर्तितः|

कस्माच्च कारणाद्देवो वराह इति कीर्त्त्यते || २१.२२ ||

को वा वराहो भगवान् कस्य योनिः किमात्मकः|

वराहः कथमुत्पन्न एतदिच्छाम वेदितुम् || २१.२३ ||

**||वायुरुवाच||**

वराहस्तु यथोत्पन्नो यस्मिन्नर्थे च कल्पितः|

वाराहश्च यथा कल्पः कल्पत्वं कल्पना च या || २१.२४ ||

कल्पयोरन्तरं यच्च तस्य चास्य च कल्पितम्|

तत्सर्वं सम्प्रवक्ष्यामि यथादृष्टं यथाश्रुतम् || २१.२५ ||

भवस्तु प्रथमः कल्पो लोकादौ प्रथितः पुरा|

ज्ञातव्यो भगवानत्र ह्यानन्दः साम्प्रतः स्वयम् ।। २१.२६ ।।
ब्रह्मस्थानमिदं दिव्यं प्राप्तं वा दिव्यसम्भवम्।
द्वितीयस्तु भुवः कल्पस्तृतीयस्तप उच्यते ।। २१.२७ ।।
भवश्चतुर्थो विज्ञेयः पंचमो रम्भ एव च।
ऋतुकल्पस्तथा षष्ठः सप्तमस्तु क्रतुः स्मृतः ।। २१.२८ ।।
अष्टमस्तु भवेद्वह्निर्नवमो हव्यवहनः।
सावित्रो दशमः कल्पो भुवस्त्वेकादशः स्मृतः ।। २१.२९ ।।
उशिको द्वादशस्तत्र कुशिकस्तु त्रयोदशः।
चतुर्द्दशस्तु गन्धर्वो गन्धर्वो यत्र वै स्वरः।
उत्पन्नस्तु यथा नादो गन्धर्वा यत्र चोत्थिताः ।। २१.३० ।।
ऋषभस्तु ततः कल्पो ज्ञेयः पंचदशो द्विजाः।
ऋषयो यत्र सम्भूताः स्वरो लोकमनोहरः ।। २१.३१ ।।
षड्जस्तु षोडशः कल्पः षड्जना यत्र चर्षयः।
शिशिरश्च वसन्तश्च निदाघो वर्ष एव च ।। २१.३२ ।।
शरद्धेमन्त इत्येते मानसा ब्रह्मणः सुताः।
उत्पन्नाः षड्ज संसिद्धाः पुत्राः कल्पे तु षोडशे ।। २१.३३ ।।
यस्माज्जातैश्च तैः षडभिः सद्यो जातो महेश्वरः।
तस्मात् समुत्थितः षड्जः स्वरस्तूदधिसन्निभः ।। २१.३४ ।।
ततः सप्तदशः कल्पो मार्जालीय इति स्मृतः।
माज्र्जालीयं तु तत् कर्म यस्माद्ब्राह्मामकल्पयत् ।। २१.३५ ।।
ततस्तु मध्यमो नाम कल्पोऽष्टादश उच्यते।
यस्मिस्तु मध्यमो नाम स्वरो धैवतपूजितः ।
उत्पन्नः सर्वभूतेषु मध्यमो वै स्वयंभुवः ।। २१.३६ ।।
ततस्त्वेकोनविंशस्तु कल्पो वैराजकः स्मृतः।
वैराजो यत्र भगवान् मुनुर्वै ब्रह्मणः सुतः ।। २१.३७ ।।
तस्य पुत्रस्तु धर्मात्मा ददीचिर्न्नाम धार्मिकः।
प्रजापतिर्महातेजा बभूव त्रिदशेश्वरः ।। २१.३८ ।।
अकामयत गायत्री यजमानं प्रजापतिम्।
तस्माज्जज्ञे स्वरः स्निग्धः पुत्रस्तस्य दधीचिनः ।। २१.३९ ।।
ततो विंशतिमः कल्पो निषादः परिकीर्त्तितः।
प्रजापतिस्तु तं दृष्ट्वा स्वयम्भूप्रभवं तदा।
विरराम प्रजाः स्रष्टुं निषादस्तु तपोऽतपत् ।। २१.४० ।।
दिव्यं वर्षसहस्रन्तु निराहारो जीतेन्द्रियः।

तमुवाच महांतेजा ब्रह्मा लोकपितामहः ।। २१.४१ ।।
ऊर्द्ध्वबाहुं तपोग्लानं दुःखितं क्षुत्पिपासितम्।
निषीदेत्यब्रवीदेनं पुत्रं शान्तं पितामहः।
तस्मान्निषादः सम्भूतः स्वरस्तु स निषादवान् ।। २१.४२ ।।
एकविंशतिमः कल्पो विज्ञेयः पञ्चमो द्विजाः।
प्राणोऽपानः समानश्च उदानो व्यान एव च ।। २१.४३ ।।
ब्रह्मणो मानसाः पुत्राः पञ्चैते ब्रह्मणः समाः।
तैस्त्वर्थवादिभिर्युक्तैर्वाग्भिरिष्टो महेश्वरः ।। २१.४४ ।।
यस्मात्परिगतैर्गीतः पञ्चभिस्तैर्महात्मभिः।
स्वरस्तु पञ्चमः स्निग्धः तस्मात्कल्पस्तु पञ्चमः ।। २१.४५ ।।
द्वाविंशस्तु तथा कल्पो विज्ञेयो मेघवाहनः।
यत्र विष्णुर्महाबाहुर्मेघो भूत्वा महेश्वरम्।
दिव्यं वर्षसहस्रन्तु अवहत् कृत्तिवाससम् ।। २१.४६ ।।
तस्य निःश्वसमानस्य भाराकान्तस्य वै मुखात्।
निर्जगाम महाकायः कालो लोकप्रकाशनः।
यस्त्वयं पठ्यते विप्रैर्विष्णुर्वै कश्यपात्मजः ।। २१.४७ ।।
त्रयोविंशतिमः कल्पो विज्ञेयश्चिन्तकस्तथा।
प्रजापतिसुतः श्रीमान् चितिश्च मिथुनञ्च तौ ।। २१.४८ ।।
ध्यायतो ब्रह्मणश्चैव यस्माच्चिन्ता समुत्थिता।
तस्मात्तु चिन्तकः सो वै कल्पः प्रोक्तः स्वयम्भुवा ।। २१.४९ ।।
चतुर्विंशतिमश्चापि ह्याकूतिः कल्प उच्यते।
आकूतिश्च तथा देवी मिथुनं सम्बभूव ह ।। २१.५० ।।
प्रजाः स्रष्टुं तथाकूतिं यस्मादाह प्रजापतिः।
तस्मात् स पुरुषो ज्ञेय आकूतिः कल्पसंज्ञितः ।। २१.५१ ।।
पञ्चविंशतिमः कल्पो विज्ञातिः परिकीर्त्तितः।
विज्ञातिशचव तथा देवी मिथुनं सम्प्रसूयते ।। २१.५२ ।।
ध्यायतः पुत्रकामस्य मनस्यध्यात्मसंज्ञितम्।
विज्ञातं वै समासेन विज्ञातिस्तु ततः स्मृतः ।। २१.५३ ।।
षड्विंशस्तु ततः कल्पो मन इत्यभिधीयते।
देवी च शाङ्करी नाम मिथुनं सम्प्रसूयते ।। २१.५४ ।।
प्रजा वै चिन्तमा नस्य स्रष्टुकामस्य वै तदा।
यस्मात् प्रजासम्भवनादुत्पन्नस्तु स्वयम्भुवा ।
तस्मात् प्रजासम्भवनाद्भावनासम्भवः स्मृतः ।। २१.५५ ।।

सप्तविंशतिमः कल्पो भावो वै कल्पसंज्ञितः।
पौर्णमासी तथा देवी मिथुनं समपद्यत ।। २१.५६ ।।
प्रजा वै स्रष्टुकामस्य ब्रह्मणः परमेष्ठिनः।
ध्यायतस्तु परं ध्यानं परमात्मानमीश्वरम् ।। २१.५७ ।।
अग्निस्तु मण्डलीभूत्वा रश्मिजालसमावृतः ।
भुवन्दिवञ्चविष्टभ्य दीप्यते स महावपुः ।। २१.५८ ।।
ततो वर्षसहस्रान्ते सम्पूर्णे ज्योतिमण्डले।
अविष्टया सहोत्पन्नमपस्यत् सूर्यमण्डलम् ।। २१.५९ ।।
यस्मादद्दश्यो भूतानां ब्रह्मणा परमेष्ठिना।
दृष्टस्तु भगवान् देवः सूर्य्यः सम्पूर्णमण्डलः ।। २१.६० ।।
सर्व्वे योगाश्च मन्त्राश्च मण्डलेन सहोत्थिताः।
यस्मात् कल्पो ह्ययं दृष्टस्तस्मात्तं दर्श मुच्यते ।। २१.६१ ।।
यस्मान्मनसि सम्पूर्णो ब्रह्मणः परमेष्ठिनः।
पुरा वै भगवान् सोमः पौर्णमासी ततः स्मृता ।। २१.६२ ।।
तस्मात्तु पर्वदर्शे वै पौर्णमासञ्च योगिभिः।
उभयोः पक्षयोर्ज्येष्ठमात्मनो हितकाम्यया ।। २१.६३ ।।
दर्शञ्च पौर्णमासञ्च ये यजन्ति द्विजातयः।
न तेषां पुनरावृत्तिर्ब्रह्मलोकात् कदाचन ।। २१.६४ ।।
योऽनाहिताग्निः प्रयतो वीराध्वानं गतोपि वा ।
समाधाय मनस्तीव्रं मन्त्रमुच्चारयेच्छनैः ।। २१.६५ ।।
त्वमग्ने रुद्रो असुरो मही दिवस्त्वं शर्व्वो मारुतं पृष्ट ईशिषे।
त्वं पाशगन्धर्व्वशिषं पूषा विधत्तपासिना।
इत्येव मन्त्रं मनसा सम्यगुच्चारयेद्द्विजः।
अग्निं प्रविशते यस्तु रुद्रलोकं स गच्छति ।। २१.६६ ।।
सोमश्चाग्निस्तु भगवान् कालो रुद्र इति श्रुतिः।
तस्माद्यः प्रविशेदग्निं स रुद्रान्न निवर्त्तते ।। २१.६७ ।।
अष्टाविंशतिमः कल्पो बृहदित्यभिसंज्ञितः।
ब्रह्मणः पुत्रकामस्य स्रष्ठुकामस्य वै प्रजाः।
ध्यायमानस्य मनसा बृहत्साम रथन्तरम् ।। २१.६८ ।।
यस्मात्तत्र समुत्पन्नो बृहतः सर्व्वतोमुखः।
तस्मात्तु बृहतः कल्पो विज्ञेयस्तत्त्वचिन्तकैः ।। २१.६९ ।।
अष्टाशीतिसहस्राणां योजनानां प्रमाणतः ।
रथन्तरन्तुविज्ञेयं परमं सूर्य्यमण्डलम्।

तस्मादण्डन्तु विज्ञेयमभेद्यं सूर्यमण्डलम् ।। २१.७० ।।
युत्सूर्य्यमण्डलञ्चापि बृहत्साम तु भिद्यते।
भित्वा चैवं द्विजा यान्ति योगात्मानो दृढव्रताः।
सङ्घातमुपनीताश्च अन्ये कल्पा रथन्तरे ।। २१.७१ ।।
इत्येतत्तु मया प्रोक्तं चित्रमध्यात्मदर्शनम्।
अतः परं प्रवक्ष्यामि कल्पानां विस्तरं शुभम् ।। २१.७२ ।।
इति श्रीमहापुराणे वायुप्रोक्ते कल्पनिरूपणं नामैकविंशोध्यायः ।। २१ ।।

**।। ऋषय ऊचुः ।।**

अत्यद्भुतमिदं सर्व्वं कल्पानान्ते महामुने।
रहस्यं वै समाख्यातं मन्त्राणाञ्च प्रकल्पनम् ।। २२. १ ।।

न तवाविदितं किञ्चित् त्रिषु लोकेषु विद्यते।
तस्माद्विस्तरतः सर्व्वाः कल्पसंख्या ब्रवीहि नः ।। २२.२ ।।

**।।वायुरुवाच ।।**

अत्र वः कथयिष्यामि कल्पसंख्यां यथा तथा।
युगाग्रं च वर्षाग्रन्तु ब्रह्मणः परमेष्ठिनः ।। २२.३ ।।

एकं कल्पसहस्रन्तु ब्रह्मणोऽब्दः प्रकीर्त्तितः।
एतदष्टसहस्रन्तु ब्रह्मणस्तद्युगं स्मृतम् ।। २२.४ ।।

एकं युगसहस्रन्तु सवनं तत् प्रजापतेः।
सवनानां सहस्रन्तु द्विगुणं त्रिवृतं तथा ।। २२.५ ।।

ब्रह्मणः स्थितिकालस्य चैतत् सर्वं प्रकीर्तितम्।
तस्य संख्यां प्रवक्ष्यामि पुरस्ताद्वै यथाक्रमम् ।। २२.६ ।।

अष्टाविंशतिर्ये कल्पा नामतः परिकीर्तिताः।
तैषां पुरस्ताद्वक्ष्यामि कल्पसंज्ञां, यथाक्रमम् ।। २२.७ ।।

रथन्तरस्य साम्नस्तु उपरिष्टान्निबोधत।
कल्पान्ते नाम धेयानि मन्त्रोत्पत्तिश्च यस्य या ।। २२.८ ।।

एकोनविंशकः कल्पो विज्ञेयः श्वृतलोहितः।
यस्मिंस्तत् परमध्यानं ध्यायतो ब्रह्मणस्तथा ।। २२.९ ।।

श्वेतोष्णीषः श्वेतमाल्यः श्वेताम्बरधरः शिखी।
उत्पन्नस्तु महातेजाः कुमारः पावकोपमः ।। २२.१० ।।

भीमं मुखं महारौद्रं सुघोरं श्वेतलोहितम्।
दीप्तं दीप्तेन वपुषा महास्यं श्वेतवर्च्चसम् ।। २२.११ ।।

तं दृष्ट्वा पुरुषः श्रीमान् ब्रह्मा वै विश्वतोमुखः।
कुमारं लोकधातारं विश्वरूपं महेश्वरम् ।। २२.१२ ।।

पुराणपुरुषं देवं विश्वात्मा योगिनां चिरम्।
ववन्दे देवदेवेशं ब्रह्मा लोकपितामहः ।। २२.१३ ।।

हृदि कृत्वा महादेवं परमात्मानमीश्वरम्।

सद्योजातं ततो ब्रह्म ब्रह्मा वै सम चिन्तयत्।
ज्ञात्वा मुमोच देवेशो हृष्टो हासं जगत्पतिः ।। २२.१४ ।।

ततोऽस्य पार्श्वतः श्वेता ऋषयो ब्रह्मवर्च्चसः।
प्रादुर्भूता महात्मानः श्वेतमाल्यानुलेपनाः ।। २२.१५ ।।

सुनन्दो नन्दकशचवैव विश्वनन्दोऽथ नन्दनः।
शिष्यास्ते वै महात्मानो यैस्तु ब्रह्म ततो वृतम् ।। २२.१६ ।।

तस्याग्रे श्वेत वर्णाभः श्वेतनामा महामुनिः।
विजज्ञेऽथ महातेजा यस्माज्जज्ञे नरस्त्वसौ ।। २२.१७ ।।

तत्र ते ऋषयः सर्व्वे सद्योजातं महेश्वरम्।
तस्माद्विश्वेश्वरं देवं ये प्रपश्यन्ति वै द्विजाः।
प्राणायामपरा युक्ता ब्रह्मणि व्यवसायिनः ।। २२.१८ ।।

ते सर्वे पापनिर्म्मुक्ता विमला ब्रह्मवर्च्चसः।
ब्रह्मलो कमतिक्रम्य ब्रह्मलोकं व्रजन्ति च ।। २२.१९ ।।

**।।वायुरुवाच।।**
ततस्त्रिंशत्तमः कल्पो रक्तो नाम प्रकीर्त्तितः।
रक्तो यत्र महातेजा रक्तवर्ण मधारयत् ।। २२.२० ।।

ध्यायतः पुत्रकामस्य ब्रह्मणः परमेष्ठिनः।
प्रादुर्भूतो महातेजाः कुमारो रक्तविग्रहः।
रक्तमाल्याम्बरधरो रक्तनेत्रः प्रतापवान् ।। २२.२१ ।।

स तं दृष्ट्वा महादेवं कुमारं रक्तवाससम्।
ध्यानयोगं परङ्गत्वा बुबुधे विश्वमीश्वरम् ।। २२.२२ ।।

स तं प्रणम्य भगवान् ब्रह्मा परमयन्त्रितः।
वामदेवं ततो ब्रह्मा ब्रह्मात्मकं व्यचिन्तयत् ।। २२.२३ ।।

एवं ध्यातो महादेवो ब्रह्मणा परमेष्ठिना।
मनसा प्रीतियुक्तेन पितामहमथाब्रवीत् ।। २२.२४ ।।

ध्यायता पुत्रकामेन यस्मात्तेहं पितामहः।
दृष्टः परमया भक्त्या ध्यानयोगेन सत्तम ।। २२.२५ ।।

तस्माद्धयानं परं प्राप्य कल्पे कल्पे महातपाः।
वेत्स्यसे मां महासत्त्व लोकधातारमीश्वरम्।
एवमुक्त्वा ततः शर्वः अट्टहासं मुमोच ह ।। २२.२६ ।।

ततस्तस्य महात्मानश्चत्वारश्च कुमारकाः।
सम्बभूवुर्ममाहात्मानो विरेजुः शुद्धबुद्धयः ।। २२.२७ ।।

विरजस्व विवाहश्च विशोको विश्वभावनः।
ब्रह्मण्या ब्रह्मणस्तुल्या वीरा अध्यवसायिनः ।। २२.२८ ।।

रक्ताम्बरधराः सर्वे रक्तमाल्यानुलेपनाः।
रक्तभस्मानुलिप्ताङ्गा रक्तास्या रक्तलोचनाः ।। २२.२९ ।।

ततो वर्षसहस्रान्ते ब्रह्मण्या व्यवसायिनः।
गृणन्तशचव महात्मानो ब्रह्म तद्वामदैवकम् ।। २२.३० ।।

अनुग्रहार्थं लोकानां शिष्याणां हितकाम्यया।
धर्मोपदेशमखिलं कृत्वा ते ब्राह्मणाः स्वयम् ।
पुनरेव महामदेवं प्रविष्टा रुद्रमव्ययम् ।। २२.३१ ।।

येऽपि चान्ये द्विजश्रेष्ठा युञ्जाना वाममीश्वरम्।
प्रपद्यन्ति महादें तद्भक्तास्तत्परायणाः ।। २२.३२ ।।

ते सर्वे पापनिर्मुक्ता विमला ब्रह्मवर्च्चसः।
रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ।। २२.३३ ।।

इति श्रीमहापुराणे वायुप्रोक्ते कल्पसंख्यानिरूपणं नाम द्वाविंशोऽध्यायः ।। २२ ।।

**।। वायुरुवाच ।।**

एकत्रिंशत्तमः कल्पः पीतवासा इति स्मृतः।

ब्रह्म यत्र महातेजाः पीतवर्णत्वमागतः ।। २३.१ ।।

ध्यायतः पुत्रकामस्य ब्रह्मणः परमेष्ठिनः।

प्रादुर्भूतो महातेजाः कुमारः पीतवस्त्रवान् ।। २३.२ ।।

पीतगन्धानुलिप्ताङ्गः पीतमाल्यधरो युवा।

पीतयज्ञोपवीतश्च पीतोष्णीषो महाभुजः ।। २३.३ ।।

तं दृष्ट्वा ध्यानसंयुक्तं ब्रह्मा लोकेश्वरं प्रभुम्।

मनसा लोकधातारं ववन्दे परमेश्वरम् ।। २३.४ ।।

ततो ध्यानगतस्तत्र ब्रह्म माहेश्वरीं पराम्।

अपश्यद् गां विरुपां च महेश्वरमुखच्युताम् ।। २३.५ ।।

चतुष्पदां चतुर्वक्रां चतुर्हस्तां चतुःस्तनीम्।

चतुर्न्नेत्रां चतुःश्रृङ्गीं चतुर्द्दंष्ट्रां चतुर्मुखीम्।

द्वात्रिंशल्लोकसंयुक्तामीश्वरीं सर्वतोमुखीम् ।। २३.६ ।।

स तां दृष्ट्वा महातेजाः महादेवीं महेश्वरीम्।

पुनराह महादेवः सर्वदेवनमस्कृतः ।। २३.७ ।।

मतिः स्मृतिर्बुद्धिरिति गायमानः पुनः पुनः।

एह्येहीति महादेवी सोत्तिष्ठत् प्राञ्जलिर्भृशम् ।। २३.८ ।।

विश्वमावृत्य योगेन जगत्सर्वं वशीकुरु।

अथ वा महादेवेन रुद्राणी त्वं भविष्यसि।

ब्राह्मणानां हितार्थाय परमार्थं भविष्यसि ।। २३.९ ।।

अथैनां पुत्रकामस्य ध्यायतः परमेष्ठिनः।

प्रददौ देवदेवेशश्चतुष्पादां महेश्वरीम्।

ततस्तां ध्यानयोगेन विदित्वा परमेश्वरीम् ।। २३.१० ।।

ब्रह्मा लोकनमस्कार्यः प्रपद्य तां महेश्वरीम्।

गायत्रीन्तु ततो रौद्रीं ध्यात्वा ब्रह्मा सुयन्त्रितः ।। २३.११ ।।

इत्येतां वैदिकीं विद्यां रौद्रीं गायत्रीमर्पिताम्।

जपित्वा तु महादेवीं रुद्रलोकनमस्कृताम्।

प्रपन्नस्तु महादेवं ध्यानयुक्तेन चेतसा ।। २३.१२ ।।

ततस्तस्य महादेवो दिव्यं योगं पुनः स्मृतः।

ऐश्वर्यं ज्ञानसम्पत्तिं वैराग्यं च ददौ पुनः ।। २३.१३ ।।

अथाट्टहासं मुमुचे भीषणं दीप्तमीश्वरः।

ततोऽस्य सर्वतो दीप्ताः प्रादुर्भूताः कुमारकाः ।। २३.१४ ।।

पीतमाल्याम्बरधराः पीतगन्धविलेपनाः ।
पीतोष्णीषशिरस्काश्च पीतास्याः पीतमूर्द्धजाः ।। २३.१५ ।।
ततो वर्षसहस्रान्ते उषित्वा विमलौजसः।
योगात्मानस्ततः स्नाता ब्राह्मणानां हितैषिणः ।। २३.१६ ।।
धर्मयोगबलोपेता ऋषीणां दीर्घसत्रिणाम्।
उपदिश्य तु ते योगं प्रविष्टा रुद्रमीश्वरम् ।। २३.१७ ।।
एवमेतेन विधिना प्रपन्ना ये महेश्वरम्।
अन्येऽपि नियतात्मानो ध्यानयुक्ता जितोन्द्रियाः ।। २३.१८ ।।
ते सर्वे पापमुत्सृज्य विरजा ब्रह्मवर्च्चसः।
प्रविशन्ति महादेवं रुद्रन्ते त्वपुनर्भवाः ।। २३.१९ ।।
ततस्तस्मिन् गते कल्पे पीतवर्णे स्वयम्भुवः।
पुनरन्यः प्रवृत्तस्तु सितकल्पो हि नामतः ।। २३.२० ।।
एकार्णवे तदावृत्ते दिव्ये वर्षसहस्रके ।
स्रष्टुकामः प्रजा ब्रह्मा चिन्तयामास दुःखितः ।। २३.२१ ।।
तस्य चिन्तयमानस्य पुत्रकामस्य वै प्रभोः ।
कृष्णः समभवद्वर्णो ध्यायतः परमेष्ठिनः ।। २३.२२ ।।
अथापश्यन्महातेजाः प्रादुर्भूतं कुमारकम्।
कृष्णवर्णं महावीर्यं दीप्यमानं स्वतेजसा ।। २३.२३ ।।
कृष्णाम्बरवरोष्णीषं कृष्णयज्ञोपवीतिनम्।
कृष्णेन मौलिना युक्तं कृष्णस्रगनुलेपनम् ।। २३.२४ ।।
स तं दृष्ट्वा महात्मानममरं घोर मन्त्रिणम्।
ववन्दे देवदेवेशं विश्वेशं कृष्णपिङ्गलम् ।। २३.२५ ।।
प्राणायामपरः श्रीमान् हृदि कृत्वा महेश्वरम्।
मनसा ध्यानसंयुक्तं प्रपन्नस्तु यतीश्वरम् ।
अघोरेति ततो ब्रह्मा ब्रह्म एवानुचिन्तयन् ।। २३.२६ ।।
एवं वै ध्यायतस्तस्य ब्रह्मणः परमेष्ठिनः।
मुमोच भगवान् रुद्रः अट्टहासं महास्वनम् ।। २३.२७ ।।
अथास्य पार्श्वतः कृष्णाः कृष्णस्रगनुलेपनाः ।
चत्वारस्तु महात्मानः सम्बभूवुः कुमारकाः ।। २३.२८ ।।
कृष्णाः कृष्णाम्बरोष्णीषाः कृष्णास्याः कृष्णवाससः।
तैश्चाट्टहासः सुमहान् हूङ्कारश्चैव पुष्कलः।
नमस्कारश्च सुमहान् पुनः पुनरुदीरितः ।। २३.२९ ।।
ततो वर्षसहस्रान्ते योगात्तत् पारमेश्वरम्।

उपासित्वा महाभागाः शिष्येब्यः प्रददुस्ततः ।। २३.३० ।।
योगेन योगसम्पन्नाः प्रविश्य मनसा शिवम्।
अमलं निर्गुणं स्थानं प्रविष्टा विश्वमीश्वरम् ।। २३.३१ ।।
एवमेतेन योगेन ये चाप्यन्ये द्विजातयः।
स्मरिष्यन्ति विधानज्ञा गन्तारो रुद्रमव्ययम् ।। २३.३२ ।।
ततस्तस्मिन् गते कल्पे कृष्णरुपे भयानके।
अन्यः प्रवर्त्तितः कल्पो विश्वरुपस्तु नामतः ।। २३.३३ ।।
विनिवृत्ते तु संहारे पुनः सृष्टे चराचरे।
ब्रह्मणः पुत्रकामस्य ध्यायतः परमेष्ठिनः।
प्रादुर्भूता महानादा विश्वरूपा सरस्वती ।। २३.३४ ।।
विश्वमाल्याम्बरधरं विश्वयज्ञोपवीतिनम्।
विश्वोष्णीषं विश्वगन्धं विश्वस्थानं महाभुजम् ।। २३.३५ ।।
अथ तं मनसा ध्यात्वा युक्तात्मा वै पितामहः।
ववन्दे देवमीशानं सर्वेशं सर्वगं प्रभुम् ।। २३.३६ ।।
ओमीशानं नमस्तेऽस्तु महादेव नमोऽस्तु ते।
एवं ध्यानगतं तत्र प्रणमन्तं पितामहम्।
उवाच भगवानीशः प्रीतोऽहं ते किमिच्छसि ।। २३.३७ ।।
ततस्तु प्रणतो भूत्वा वाग्भिः स्तुत्वा महेश्वरम्।
उवाच भगवान् ब्रह्मा प्रीतः प्रीतेन चेतसा ।। २३.३८ ।।
यदिदं विश्वरूपन्ते विश्वगं विश्वमीश्वरम्।
एतद्वेदितुमिच्छामि कश्चायं परमेश्वरः ।। २३.३९ ।।
कैषा भगवती देवी चतुष्पादा चतुर्मुखी।
चतुःश्रृङ्गी चतुर्वक्रा चतुर्द्दन्ता चतुःस्तनी ।। २३.४० ।।
चतुर्हस्ता चतुर्नेत्रा विश्वरुपा कथं स्मृता।
किन्नामधेया कोऽस्यात्मा किंवीर्या वापि कर्मतः ।। २३.४१ ।।
**।।महेश्वर उवाच ।।**
रहस्यं सर्वमन्त्राणां पावनं पुष्ठिवर्द्धनम्।
श्रृणुष्वैतत्परं गुह्यमादिसर्गे यथा तथम् ।। २३.४२ ।।
अयं यो वर्त्तते कल्पो विश्वरूपस्त्वसौ स्मृतः।
यस्मिन् भवादयो देवाः षड्विंशन्मनवः स्मृताः ।। २३.४३ ।।
ब्रह्मस्थानमिदं चापि यदा प्राप्तं त्वया विभो।
तदाप्रभृति कल्पश्च त्रयस्त्रिंशत्तमो ह्ययम् ।। २३.४४ ।।
शतं शतसहस्राणामतीता ये स्वयम्भुवः ।

पुरस्तात्तव देवेश तान् श्रृणुष्व महामुने ।। २३.४५ ।।
आनन्दस्तु स विज्ञेय आनन्दस्ते महालयः।
गालव्यगोत्रतपसा मम पुत्रस्त्वमागतः ।। २३.४६ ।।
त्वयि योगश्च साङ्ख्यश्च तपो विद्याविधिः क्रिया।
ऋतं स्त्यञ्च यद्ब्रह्म अहिंसा सन्ततिक्रमाः ।। २३.४७ ।।
ध्यानं ध्यानवपुः शान्तिर्विद्याऽपिद्यामतिर्धृतिः।
कान्तिः शान्तिः स्मृतिर्मेधा लज्जा शुद्धिः सरस्वती।
तुष्टिः पुष्टिः क्रिया चैव लज्जा क्षान्तिः प्रतिष्ठिता ।। २३.४८ ।।
षड्विंशत्तद्गुणा ह्येषा द्वात्रिंशाक्षरसंज्ञिता ।
प्रकृतिं विद्धितां ब्रह्मंस्त्वत्प्रसूतिं महेश्वरीम् ।। २३.४९ ।।
सैषा भगवती देवी तत्प्रसूतिः स्वयम्भुवः।
चतुर्मुखी जगद्योनिः प्रकृति गौः प्रकीर्त्तिता ।
प्रधानं प्रकृतिं चैव यदाहुस्तत्त्वचिन्तकाः ।। २३.५० ।।
अजामेतां लोहितां शुक्लकृष्णां विश्वं संप्रसृजमानां सुरूपाम्।
अजोऽहं वै बुद्धिमान्विश्वरूपां गायत्रीं गां विश्वरूपां हि बुद्ध्वा ।। २३.५१
एवमुक्तवा महादेवः अट्टहासमथाकरोत् ।
वलितास्फोटितरवं कहाकहनदन्तथा ।। २३.५२ ।।
ततोऽस्य पार्श्वतो दिव्याः सर्वरूपाः कुमारकाः।
जटी मुण्डी शिखण्डी च अर्द्धमुण्डश्च जज्ञिरे ।। २३.५३ ।।
ततस्ते तु यथोक्तेन योगेन सुमहौजसः।
दिव्यं वर्षसहस्रन्तु उपासित्वा महेश्वरम् ।। २३.५४ ।।
धर्मोपदेशं नियतं कृत्वा योगमयं दृढम्।
शिष्टानां नियतात्मानः प्रविष्टा रुद्रमीश्वरम् ।। २३.५५ ।।
**।।वायुरुवाच।।**
ततो विस्मयमापन्नो ब्रह्मा लोकपितामहः।
प्रपन्नस्तु महादेवं भक्तियुक्तेन चेतसा।
उवाच वचनं सर्वं श्वेतत्वन्ते कथं विभो ।। २३.५६ ।।
**।।भगवानुवाच।।**
श्वेतकल्पो यदा ह्यासीदहं श्वेतस्ततोऽभवम्।
श्वेतोष्णीषः श्वेतमाल्यः श्वेताम्बरधरः शिवः ।। २३.५७ ।।
श्वेतास्थिमांसरोमा च श्वेतत्वक् श्वेतलोहितः।
तेन नाम्ना च विख्यातः श्वेतकल्पस्तदा ह्यसौ ।। २३.५८ ।।
मत्प्रसादाच्च देवेशः श्वेताङ्गः श्वेतलोहितः।

श्वेतवर्णा तदा ह्यासीद्गायत्री ब्रह्मसंज्ञिता ।। २३.५९ ।।
यस्मादहं च देवेश त्वया गुह्ये पदे स्थितः।
विज्ञातः स्वेन तपसा सद्यो जातः सनातनः।
सद्यो जातेति ब्रह्मैतद् गुह्यं चैव प्रकीर्तितम् ।। २३.६० ।।
तस्माद् गुह्यत्वमापन्नं ये वेत्स्यन्ति द्विजातयः।
तत्समीपङ्गमिष्यन्ति पुनरावृत्तिदुर्लभम् ।। २३.६१ ।।
यदाऽहं च पुनस्त्वासं लोहितो नाम नामतः।
ममकृतेन वर्णेन कल्पो वै लोहितः स्मृतः ।। २३.६२ ।।
तदा लोहितमासास्थिलोहितक्षीरसन्निभा ।
लोहिताक्षस्तनवती गायत्री गौः प्रकीर्तिता ।। २३.६३ ।।
ततोऽस्य लोहितत्वेन वर्णस्य च विपर्य्ययये।
वामत्वाच्चैव योगस्य वामदेवत्क्मागतः ।। २३.६४ ।।
तथापि हि महासत्त्व त्वयाऽहं नियतात्मना।
विज्ञातः श्वेत वर्णेन तस्माद्वर्णोत्तमः स्मृतः ।
ततोऽहं वामदेवेति ख्यातिं यातो महीतले ।। २३.६५ ।।
ये चापि वामदेवत्वं ज्ञास्यन्तीह द्विजातयः।
विज्ञाय चेमां रुद्राणीं गायत्रीं मातरं विभो ।। २३.६६ ।।
सर्वपापविनिर्मुक्ता विरजा ब्रह्मवर्चसः।
रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ।। २३.६७ ।।
यदा तु पुनरेवायं कृष्णवर्णो भयानकः।
मत्कृतेन च वर्णेन मत्कल्पः कृष्ण उच्यते ।। २३.६८ ।।
तत्राऽहं कालसंकाशः कालो लोकप्रकाशनः ।
विज्ञातोऽहं त्वया ब्रहमन् घोरो घोरपराक्रमः ।। २३.६९ ।।
तस्माद्घोरत्वमापन्नं ये मां वेत्स्यन्ति भूतले।
तेषामघोरः शान्तश्च भविष्याम्यहमव्ययः ।। २३.७० ।।
तस्माद्विश्वत्वमान्नं ये मां पश्यन्ति बूतले ।
तेषां शिवश्च सौम्यश्च भविष्यामि सदैव तु ।। २३.७१ ।।
तस्माच्च विश्वरूपो वै कल्पोऽयं समुदाहृतः।
विश्वरूपा तथा चेयं सावित्री समुदाहृता ।। २३.७२ ।।
सर्वरूपास्तथा चेमे संवृत्ता मम पुत्रकाः।
चत्वारस्ते समाख्याताः पादा वै लोकसंमताः ।। २३.७३ ।।
तस्माच्च सर्व वर्णत्वं प्रजात्वं मे भविष्यति।
सर्वभक्ष्या च मेध्या च वर्णतश्च भविष्यति ।। २३.७४ ।।

मोक्षो धर्मस्तथार्थश्च कामश्चेति चतुष्टयम्।
तस्माद्वेत्ता च वेद्यं च चतुर्द्धा वै भविष्यति ।। २३.७५ ।।
भूतग्रामाश्च चत्वारः आश्रमाश्चतुरस्तथा।
धर्मस्य पादाश्चत्वार श्चत्वारो मम पुत्रकाः ।। २३.७६ ।।
तस्माच्चतुर्युगावस्थं जगद्वै सचराचरम्।
चतुर्द्धाऽवस्थितं चैव चतुष्पादं भविष्यति ।। २३.७७ ।।
भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महस्तथा।
जनस्तपश्च शांतश्च रुद्रलोकस्ततः परम् ।। २३.७८ ।।
स्वर्लोको हि तृतीयस्तु चतुर्थस्तु महः स्मृतः।
तत्र लोकः परं स्थानं परन्तद्योगिनां स्मृतम् ।। २३.७९ ।।
निर्ममा निरहंकाराः कामक्रोधविवर्ज्जिताः।
द्रक्ष्यन्ते तद्विदो युक्ता ध्यानतत्परयुञ्जकाः ।। २३.८० ।।
यस्माच्चतुष्पदा ह्येषा त्वया दृष्टा सरस्वती।
तस्माच्च पशवः सर्वे भविष्यन्ति चतुष्पदाः।
तस्माच्चैषां भविष्यन्ति चत्वारो वै पयोधराः ।। २३.८१ ।।
सोमश्च मन्त्रसंयुक्तो यस्मान्मम मुखाच्च्युतः।
जीवः प्राणभृतां ब्रह्मन् सर्वः पीत्वा स्तनैर्घृतम् ।। २३.८२ ।।
तस्मात् सोममयं चैतदमृतं चैव संज्ञितम्।
चतुष्पादा भविष्यन्ति श्वेतत्वं चास्य तेन तत् ।। २३.८३ ।।
यस्माच्चैवं क्रियाभूत्वा द्विपादा वै महेश्वरी।
दृष्टा पुनस्त्वया चैषा सावित्री लोकभाविनी।
तस्माद्वै द्विपदाः सर्वे द्विस्तनाशचव नराः स्मृताः ।। २३.८४ ।।
यस्माच्चैवमजा भूत्वा सर्ववर्णा महेश्वरी।
दृष्टा त्वया महासत्त्वा सर्वभूतधरा परा।
तस्मात्तु विश्वरूपत्वमजानां वै भविष्यति ।। २३.८५ ।।
अजश्चैव महातेजा विश्वरूपो भविष्यति।
अमोघरेताः सर्वत्र मुखे चास्य हुताशनः।
तस्मात् सर्वगतो मेध्यः पशुरूपी हुताशनः ।। २३.८६ ।।
तपसा भावितात्मानो ये वै द्रक्ष्यन्ति वै द्विजाः।
ईशित्वे च शिवत्वे च सर्वगं सर्वतः स्थिरम् ।। २३.८७ ।।
रजस्तमोविनिर्मुक्तास्त्यक्त्वा मानुष्यकम्बुवि।
मत्समीपं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ।। २३.८८ ।।
इत्येवमुक्तो भगवान् ब्रह्मा रुद्रेण वै द्विजाः।

प्रणम्य प्रयतो भूत्वा पुनराह पितामहः ।। २३.८९ ।।

**।।ब्रह्मोवाच।।**

भगवन्देवदेवेश विश्वरूपी महेश्वरः।

इमास्तव महादेव तनवो लोकवन्दिताः ।। २३.९० ।।

विश्वरूप महासत्त्व कस्मिन् काले महाभुज।

कस्यां वा युगसम्भूत्यां द्रक्ष्यन्ति त्वां द्विजातयः ।। २३.९१ ।।

केन वा तत्त्वयोगेन ध्यानयोगेन केन वा ।

तनवस्ते महादेव शक्या द्रष्टुं द्विजातिभिः ।। २३.९२ ।।

**।।भगवानुवाच।।**

तपसा नैव योगेन दानधर्मफलेन वा।

न तीर्थफलयोगेन क्रतुभिर्वा सदक्षिणैः ।। २३.९३ ।।

न वेदाध्यापनैर्वापि न चित्तेन विवेदनैः ।

शक्योऽहं मानुषैर्द्रष्टुमृते ध्यानात्परं न हि ।। २३.९४ ।।

साध्यो नारायणश्चैव विष्णुस्त्रिभुवनेश्वरः ।

भविष्यतीह नाम्ना तु वाराहो नाम विश्रुतः ।। २३.९५ ।।

चतुर्वाहुश्चतुष्पादशचवतुर्नेत्रश्चतुर्मुखः।

तदा संवत्सरो भूत्वा यज्ञरूपी भविष्यति।

षडङ्गश्च त्रिशीर्षश्च त्रिस्थाने त्रिशरीरवान् ।। २३.९६ ।।

कृतं त्रेता द्वापरं च कलिश्चैव चतुर्युगम्।

एतस्य पादाश्चत्वारः अङ्गानि क्रतवस्तथा ।। २३.९७ ।।

भुजाशचव वेदाश्चत्वारो ऋतुः सन्धिमुखानि च।

द्वे मुखे द्वे च अयने नेत्राश्च चतुरस्तथा ।। २३.९८ ।।

शिरांसि त्रीणि पर्वाणि फाल्गुन्याषाढकृत्तिकाः।

दिव्यान्तरिक्षभौमानि त्रीणि स्थानानि यानि तु।

सम्भवः प्रलयश्चैव आश्रमौ द्वौ प्रकीर्त्तितौ ।। २३.९९ ।।

स यदा कालरूपाभो वराहत्वे व्यवस्थितः।

भविष्यति यदा साध्यो विष्णुर्नारायणः प्रभुः ।। २३.१०० ।।

तदा त्वमपि देवेश चतुर्व्वक्रो भविष्यसि।

ब्रह्मलोकनमस्कार्यो विष्णुर्नारायणः प्रभुः ।। २३.१०१ ।।

एकार्णवे प्लवे चैव शयानं पुरुषं हरिम्।

यदा द्रक्ष्यसि देवेशं ध्यानयुक्तं महामुनिम् ।। २३.१०२ ।।

तदावां मम योगेन मोहितौ नष्टचेतसौ।

अन्योन्यस्पर्द्धिनौ रात्रावविज्ञाय परस्परम् ।। २३.१०३ ।।

एकैकस्योदरस्थांस्तु दृष्ट्वा लोकांश्चराचरान्।
विस्मयं परमं गत्वा ध्यानाद्बुद्ध्वा तु मानुषौ ।। २३.१०४ ।।
ततस्त्वं पद्मसंभूतः पद्मनाभः सनातनः।
पद्माङ्कितस्तदा कल्पे ख्यातिं यास्यसि पुष्कलाम् ।। २३.१०५ ।।
ततस्तस्मिंस्तदा कल्पे वाराहे सप्तमे प्रभोः।
पुनर्विष्णुर्महातेजाः कालो लोकप्रकालनः।
मनुर्वैवस्वतो नाम तव पुत्रो भविष्यति ।। २३.१०६ ।।
तदा चतुर्युगावस्थे कल्पे तस्मिन् युगान्तके।
भविष्यामि शिखायुक्तः श्वेतो नाम महामुनिः ।। २३.१०७ ।।
हिमवच्छिखरे रम्ये छागले पर्वतोत्तमे।
चतुःशिष्याः शिवे युक्ता भविष्यन्ति तदा मम ।। २३.१०८ ।।
श्वेतश्चैव शिखश्चैव श्वेताश्वः श्वेतलोहितः।
चत्वारस्ते महात्मानो ब्राह्मणा वेदपारगाः ।। २३.१०९ ।।
ततस्ते ब्रह्मभूयिष्ठा दृष्ट्वा ब्रह्मगतिं पराम् ।
तत्समीपं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ।। २३.११० ।।
पुनस्तु मम देवेशो द्वितीयद्वापरे प्रभुः।
प्रजापतिर्यदा व्यासः सत्यो नाम भविष्यति ।। २३.१११ ।।
तदा लोकहितार्थाय सुतारे नाम नामतः।
भविष्यामि कलौ तस्मिन् लोकानुग्रहकारणात् ।। २३.११२ ।।
तत्रापि मम ते पुत्रा भविष्या नाम नामतः।
दुन्दुभिः शतरूपश्च ऋचीकः क्रतुमांस्तथा ।। २३.११३ ।।
प्राप्य योगं तथा ज्ञानं ब्रह्म चैव सनातनम्।
रुद्रलोकं गमिष्यन्ति पुनरावृत्ति दुर्लभम् ।। २३.११४ ।।
तृतीये द्वापरे चैव यदा व्यासस्तु भार्गवः।
तदा ह्यहं भविष्यामि दमनस्तु युगन्तिके ।। २३.११५ ।।
तत्रापि च भविष्यन्ति चत्वारो मम पुत्रकाः।
विशोकश्च विकेशश्च विशापः शापनाशनः ।। २३.११६ ।।
तेऽपि तेनैव मार्गेण योगोक्तेन महौजसः।
रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ।। २३.११७ ।।
चतुर्थे द्वापरे चैव यदा व्यासोऽङ्गिराः स्मृतः।
तदाऽप्यहं भविष्यामि सुहोत्रो नाम नामतः ।। २३.११८ ।।
तत्रापि मम सत्पुत्राश्चत्वारश्च तपोधनाः।
भविष्यन्ति द्विजश्रेष्ठा योगात्मानो दृढव्रताः ।। २३.११९ ।।

सुमुखो दुर्मुखश्चैव दुर्दमो दुरतिक्रमः।
प्राप्य योगगतिं सूक्ष्मां विमला दग्धकिल्बिषाः।
तेऽपि तेनैव मार्गेण गमिष्यन्ति न संशयः ।। २३.१२० ।।
पञ्चमे द्वापरे चैव व्यासस्तु सविता यदा।
तदा चापि भविष्यामि कङ्गो नाम महातपाः।
अनुग्रहार्थं लोकानां योगात्मा नैककर्मकृत् ।। २३.१२१ ।।
चत्वारस्तु महाभागा विरजाः शुद्धयोनयः ।
पुत्रा मम भविष्यन्ति योगात्मानो दृढव्रताः ।। २३.१२२ ।।
सनः सनन्दनश्चैव प्रभुर्यश्च सनातनः।
ऋतुः सनत्कुमारश्च निर्ममा निरहंकृताः।
मत्समीपं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ।। २३.१२३ ।।
परिवृत्ते पुनः षष्ठे मृत्युर्व्यासो यदा विभुः।
तदाप्यहं भविष्यामि लोकाक्षिर्नाम नामतः ।। २३.१२४ ।।
शिष्याश्च मम ते दिव्या योगात्मानो दृढव्रताः।
भविष्यन्ति महाभागाश्चत्वारो लोकसम्मताः ।। २३.१२५ ।।
सुधामा विरजश्चैव शङ्खपाद्रव एव च।
योगात्मानो महात्मानस्ते सर्वे दग्धकिल्बिषाः।
तेऽपि तेनैव मार्गेण गमिष्यन्ति न संशयः ।। २३.१२६ ।।
सप्तमे परिवर्त्ते तु यदा व्यासः शतक्रतुः।
विभुर्नाम महातेजा- पूर्वमासीच्छतक्रतुः ।। २३.१२७ ।।
तदाऽप्यहं भविष्यामि कलौ तस्मिन् युगान्तिके।
जैगीषव्येति विखयातः सर्वेषां योगिनां वरः ।। २३.१२८ ।।
तत्रापि मम ते पुत्रा भविष्यन्ति युगे तदा।
सारस्वतः सुमेधाश्च वसुवाहः सुवाहनः ।। २३.१२९ ।।
तेऽपि तेनैव मार्गेण ध्यानयुक्तिं समाश्रिताः ।
भविष्यन्ति महात्मानो रुद्रलोकपरायणाः ।। २३.१३० ।।
वसिष्ठश्चाष्टमे व्यासः परिवर्त्ते भविष्यति।
कपिलश्चासुरिश्चैव तथा पञ्चशिखो मुनिः।
वाग्बलिश्च महायोगी सर्व एव महौजसः ।। २३.१३१ ।।
प्राप्य माहेश्वरं योगं ध्यानिनो दग्धकल्मषाः।
मत्समीपं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ।। २३.१३२ ।।
परिवर्त्तेऽथ नवमे व्यासः सारस्वतो यदा।
तदा चाहं भविष्यामि ऋषभो नाम नामतः ।

तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः ।। २३.१३३ ।।
पराशरश्च गार्ग्यश्च भार्गवो ह्यङ्गिरास्तथा।
भविष्यन्ति महात्मानो ब्राह्मणा वेदपारगाः ।। २३.१३४ ।।
सर्वे तपोबलोत्कृष्टाः शापानुग्रहकोविदाः।
तेपि तेनैव मार्गेण योगोक्तेन तपस्विनः।
ध्यानमार्गं समासाद्य गमिष्यन्ति तथैव ते ।। २३.१३५ ।।
दशमे द्वापरे व्यासस्त्रिधामानाम नामतः।
यदा भविष्यति विप्रास्तदाऽहं भविता पुनः ।। २३.१३६ ।।
हिमवच्छिखरे रम्ये भृगुतुङ्गे नगोत्तमे।
नाम्ना भृगोस्तु शिखरन्तस्मात्तच्छिखरम्भृगुः ।। २३.१३७ ।।
तत्रैव मम ते पुत्रा भविष्यन्ति दृढव्रताः।
बलबन्धुर्निरामित्रः केतुश्रृङ्गस्तपोधनः ।। २३.१३८ ।।
योगात्मानो महात्मानो ध्यानयोगसमन्विताः।
रुद्रलोकं गमिष्यन्ति तपसा दग्धकल्मषाः ।। २३.१३९ ।।
एकादशे द्वापरे तु त्रिवृद्व्यासो भविष्यति।
तदाऽप्यहं भविष्यामि गङ्गाद्वारे कलेर्धुरि ।। २३.१४० ।।
उग्रा नाम महानादास्तत्रैव मम पुत्रकाः।
भविष्यन्ति महौजस्काः सुवृत्ता लोकविश्रुताः ।। २३.१४१ ।।
लम्बोदरश्च लम्बश्च लम्बाक्षो लम्बकेशकः।
प्राप्य माहेश्वरं योगं रुद्रलोकाय संस्थिताः।
तेऽपि तेनैव मार्गेण गमिष्यन्ति परां गतिम् ।। २३.१४२ ।।
द्वादशे पिरवर्त्ते तु शततेजा महामुनिः।
भविष्यति महासत्त्वो व्यासः कविवरोत्तमः ।। २३.१४३ ।।
ततोऽप्यहं भविष्यामि अत्रिर्नाम युगान्तिके।
हैमकं वनमासाद्य योगमास्थाय भूतले ।। २३.१४४ ।।
अत्रापि मा ते पुत्रा भस्मस्नानानुलेपनाः।
भविष्यन्ति महायोग रुद्रलोकपरायणाः ।। २३.१४५ ।।
सर्वज्ञः समबुद्धिश्च साध्यः सर्वस्तथैव च।
रुद्रलोकं गमिष्यन्ति ध्यानयोगपरायणाः ।। २३.१४६ ।।
त्रयोदशे पुनः प्राप्ते परिवर्त्ते क्रमेण तु।
धर्मो नरायणो नाम व्यासस्तु भविता यदा ।। २३.१४७ ।।
तदाप्यहं भविष्यामि वालिर्नाम महामुनिः।
वालखिल्याश्रमे पुण्ये पर्वते गन्धमादने ।। २३.१४८ ।।

तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः।
सुधामा काश्यपश्चैव वसिष्ठो विरजास्तथा ।। २३.१४९ ।।
महायोगबलोपेता विमला ऊर्द्ध्वरेतसः।
तेनैव योगमार्गेण गमिष्यन्ति न संशयः ।। २३.१५० ।।
सुरक्षणो यदा व्यासः पर्याये तु चतुर्द्दशे।
तत्रापि पुनरेवाहं भविष्यामि युगान्तिके ।। २३.१५१ ।।
वंशे त्वङ्गिरसः श्रेष्ठो गौतमो नाम योगवित्।
तस्माद्भविष्यते पुण्यं गौतमं नाम तद्वनम् ।। २३.१५२ ।।
तत्रापि मम ते पुत्रा भविष्यन्ति कलौ तथा।
अत्रिरुग्रतपाश्चैव श्रावणोऽथ स्रविष्टकः ।। २३.१५३ ।।
योगात्मानो महात्मानो ध्यानयोगपरायणाः।
तेऽपि तेनैव मार्गेण रुद्रलोकनिवासिनः ।। २३.१५४ ।।
ततः प्राप्ते पञ्चदशे परिवर्त्ते क्रमागते।
आरुणिस्तु यदा व्यासो द्वापरे भविता प्रभुः ।। २३.१५५ ।।
तदाप्यहं भविष्यामि नाम्ना वेदशिरा द्विजाः।
तत्र वेदशिरा नाम अस्त्रं तत्पारमेश्वरम् ।। २३.१५६ ।।
भविष्यति महावीर्यं वेदशीर्षा च पर्वतः।
हिमवत्पृष्ठमाश्रित्य सरस्वत्या नगोत्तमे ।। २३.१५७ ।।
तदापि मम ते पुत्रा भविष्यन्ति तपोधनाः।
कुणिश्च कुणिबाहुश्च कुशरीरः कुनेत्रकः ।। २३.१५८ ।।
योगात्मानो महात्मानो ब्रह्मिष्ठाश्चोर्द्ध्वरेतसः।
तेऽपि तेनैव मार्गेण रुद्रलोकं गतास्तु ते ।। २३.१५९ ।।
ततः षोडशमे चापि परिवर्त्ते क्रमागते।
व्यासस्तु सञ्जयो नाम भविष्यति तदा प्रभुः ।। २३.१६० ।।
तदाप्यहं भविष्यामि गोकर्णो नाम नामतः।
तस्माद्भविष्यते पुण्यं गोकर्णं नाम तद्वनम् ।। २३.१६१ ।।
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः।
कश्यपो ह्युशनाश्चैव च्यवनोऽथ बृहस्पतिः।
तेऽपि तेनैव मार्गेण गमिष्यन्ति परं पदम् ।। २३.१६२ ।।
ततः सप्तदशे चैव परिवर्त्ते क्रमागते।
तदा भविष्यति व्यासो नाम्ना देवकृतञ्जयः ।। २३.१६३ ।।
तदाप्यहं भविष्यामि गुहावासीति नामतः।
हिमवच्छिखरे चैव महातुङ्गे महालये।

सिद्धिक्षेत्रं महापुण्यं भविष्यति महालयम् ।। २३.१६४ ।।
तत्रापि मम ते पुत्रा ब्रह्मण्या योगवेदिनः ।
भविष्यन्ति महात्मानः सर्वज्ञा निरहङ्कृताः ।। २३.१६५ ।।
उतथ्यो वामदेवश्च महाकालो महालयः।
तेषां शतसहस्रन्तु शिष्याणां ध्यानसाधनम् ।। २३.१६६ ।।
भविष्यन्ति तदा कल्पे सर्वे ते ध्यानयुञ्जकाः।
ते तु सन्निहिता योगे हृदि कृत्वा महेश्वरम् ।
महालये पदं क्षिप्त्वा प्रविष्टाः शिवमव्ययम् ।। २३.१६७ ।।
ये चान्येऽपि महात्मानः काले तस्मिन् युगान्तिके।
ध्यानयुक्तेन मनसा विमलाः शुद्धबुद्धयः ।। २३.१६८ ।।
गत्वा महाल्यं पुण्यं दृष्ट्वा माहेश्वरं पदम् ।
तूर्णं तारयते जन्तून् दशपूर्वान् दशापरान् ।। २३.१६९ ।।
आत्मानमेकविशंञ्च तारयित्वा महार्णवम्।
मम प्रसादाद्यास्यन्ति रुद्रलोकं गतज्वराः ।। २३.१७० ।।
ततोऽष्टादशमे चैव परिवर्त्ते यदा भवेत् ।
तदा ऋतञ्जयो नाम व्यासस्तु भविता मुनिः।
तदाऽप्यहं भविष्यामि शिखण्डी नाम नामतः ।। २३.१७१ ।।
सिद्धक्षेत्रे महापुण्ये देवदानवपूजिते।
हिमवाच्छिखरे पुण्ये शिखण्डी यत्र पर्वतः।
शिखण्डिनो वनञ्चापि ऋषिसिद्धनिषेवितम् ।। २३.१७२ ।।
तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः।
वाचःशवा ऋतीकश्च शावासश्च दृढव्रतः ।। २३.१७३ ।।
योगात्मानो महाशक्ताः सर्वे ते वेदपारगाः।
प्राप्य माहेश्वरं योगं रुद्रलोकं व्रजन्ति ते ।। २३.१७४ ।।
ततस्त्वेकोनविंशे तु परिवर्त्ते क्रमागते।
व्यासस्तु भविता नाम्ना भरद्वाजो महामुनिः ।। २३.१७५ ।।
तत्राप्यहं भविष्यामि जटामालीति नामतः।
हिमवच्छिखरे रम्येजटायुर्यत्र पर्वतः ।। २३.१७६ ।।
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः।
हिरण्यनामा कौशिल्यः काक्षीवः कुथुमिस्तथा ।। २३.१७७ ।।
ईश्वरा योगधर्माणः सर्वे ते ह्यूर्द्ध्वरेतसः।
प्राप्य माहेश्वरं योगं गमिष्यन्ति न संशयः ।। २३.१७८ ।।
ततो विंशतिमे सर्गे परिवर्त्ते क्रमेण तु।

वाचःश्रवाः स्मृतो व्यासो भविष्यति महामतिः ।। २३.१७९ ।।
तदाप्यहं भविष्यामि ह्यट्टहासीति नामतः।
अट्टहासप्रियाश्चापि भविष्यन्ति तदा नराः ।। २३.१८० ।।
तत्रैव हिमवत्पृष्ठे सिद्धचारणसेविते।
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः।
युक्तात्मानो महासत्त्वा ध्यानिनो नियतव्रताः ।। २३.१८१ ।।
सुमन्तुर्ब्बर्बरिर्विद्वान् सुबन्धुः कुशिकन्धरः।
प्राप्य माहेश्वरं योगं रुद्रलोकाय ते गताः ।। २३.१८२ ।।
एकविंशे पुनः प्राप्ते परिवर्त्ते क्रमेण तु।
वाचस्पतिः स्मृतो व्यासो यदा स ऋषिसत्तमः ।। २३.१८३ ।।
तदाऽप्यहं भविष्यामि दारुको नाम नामतः।
तस्माद्भविष्यते पुण्यं देवदारुवनं महत् ।। २३.१८४ ।।
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः।
प्लक्षो दाक्षायणिश्चैव केतुमाली बकस्तथा ।। २३.१८५ ।।
योगात्मानो महात्मानो नियता ह्यूर्द्ध्वरेतसः।
परमं योगमास्थाय रुद्रं प्राप्तास्तथानघाः ।। २३.१८६ ।।
द्वाविंशे परिवर्त्ते तु व्यासः शुक्लायनो यदा।
तदाऽप्यहं भविष्यामि वाराणस्यां महामुनिः ।। २३.१८७ ।।
नाम्ना वै लाङ्गली भीमो यत्र देवाः सवासवाः।
द्रक्ष्यन्ति मां कलौ तस्मिन्नवतीर्णं हलायुधम् ।। २३.१८८ ।।
तत्रापि मम ते पुत्रा भविष्यन्ति सुधार्मिकाः।
तुल्यार्चिर्मधुपिङ्गाक्षः श्वेतकेतुस्तथैव च ।। २३.१८९ ।।
तेऽपि माहेश्वरं योगं प्राप्य ध्यानपरायणाः।
विरजा ब्रह्मभूयिष्ठा रुद्रलोकाय संस्थिताः ।। २३.१९० ।।
परिवर्त्ते त्रयोविंशे तृणबिन्दुर्यदा मुनिः।
व्यासो भविष्यति ब्रह्म तदाऽहं भविता पुनः।
श्वेतो नाम महाकायो मुनिपुत्रः सुधार्मिकः ।। २३.१९१ ।।
तत्र कालञ्जरिष्यामि तदा गिरिवरोत्तमे।
तेन कालञ्जरो नाम भविष्यति स पर्वतः ।। २३.१९२ ।।
तत्रापि मम ते पुत्रा भविष्यन्ति महौजसः।
उषिजो बृहदुक्थश्च देवलः कविरेव च।
प्राप्य माहेश्वरं योगं रुद्रलोकं गता हि ते ।। २३.१९३ ।।
परिवर्त्ते चतुर्विंशे ऋक्षो व्यासो भविष्यति।

तत्राऽहं भविता ब्रह्मन् कलौ तस्मिन् युगान्तिके।
शूली नाम महायोगी नैमिषे योगि वन्दिते ।। २३.१९४ ।।
तत्रापि मम ते पुत्रा भविष्यन्ति तपस्विनः।
शलिहोत्रोऽग्निवेश्यश्च युवनाश्चः शरद्वसुः ।
तेऽपि योगबलोपेता रुद्रं यास्यन्ति सुव्रताः ।। २३.१९५ ।।
पञ्चविंशे पुनः प्राप्ते परिवर्त्ते यथाक्रमम्।
वसिष्ठस्तु यदा व्यासः शक्तिर्नाम भविष्यति ।। २३.१९६ ।।
तदाऽप्यहं भविष्यामि दण्डी मुण्डीशरः प्रभुः।
कोटिवर्षं समासाद्य नगरं देवपूजितम् ।। २३.१९७ ।।
तत्रापि मम ते पुत्रा भविष्यन्ति क्रमागताः।
योगात्मानो महात्मानः सर्वे ते ह्यूर्द्ध्वरेतसः ।। २३.१९८ ।।
छगलः कुम्भकर्षाश्यः कुम्भश्चैव प्रबाहुकः।
प्राप्य माहेश्वरं योगं गमिष्यन्ति तथैव ते ।। २३.१९९ ।।
षड्विंशे परिवर्त्ते तु यदा व्यासः पराशरः।
तदाऽप्यहं भविष्यामि सहिष्णुर्नाम नामतः।
पुण्यं रुद्रवनं प्राप्य कलौ तस्मिन् युगान्तिके ।। २३.२०० ।।
तत्रापि मम ते पुत्रा भविष्यन्ति सुधार्मिकाः।
उलूको वैद्युतश्चैव सर्वको ह्याश्वलायनः।
प्राप्य माहेश्वरं योगं गन्तारस्ते तथैव हि ।। २३.२०१ ।।
सप्तविंशतिमे प्राप्ते परिवर्त्ते क्रमागते।
जातूकर्ण्यो यदा व्यासो भविष्यति तपोधनः ।। २३.२०२ ।।
तदाऽप्यहं भविष्यामि सोमशर्म्मा द्विजोत्तमः।
प्रभासतीर्थमासाद्य योगात्मा लोकविश्रुतः ।। २३.२०३ ।।
तत्रापि मम ते पुत्रा भविष्यन्ति तपोधनाः।
अक्षपादः कणादश्च उलूको वत्स एव च ।। २३.२०४ ।।
योगात्मानो महात्मानो विमलाः शुद्धबुद्धयः।
प्राप्य माहेश्वरं योगं रुद्रलोकं ततो गताः ।। २३.२०५ ।।
अष्टाविंशे पुनः प्राप्ते परिवर्त्ते क्रमागते।
पराशरसुतः श्रीमान् विष्णुर्लोकपितामहः ।। २३.२०६ ।।
यदा भविष्यति व्यासो नाम्ना द्वैपायनः प्रभुः।
तदा षष्ठेन चांशेन कृष्णः पुरुषसत्तमः।
वसुदेवाद्यदुश्रेष्ठो वासुदेवो भविष्यति ।। २३.२०७ ।।
तदा चाहं भविष्यामि योगात्मा योगमायया।

लोकविस्मयनार्थाय ब्रह्मचारिशरीरकः ।। २३.२०८ ।।
श्मशावे मृतमुत्सृष्टं दृष्ट्वा लोकमनाथकम्।
ब्राह्मणानां हितार्थाय प्रविष्टो योगमायया ।। २३.२०९ ।।
दिव्यां मेरुगुहां पुण्यां त्वया सार्द्धञ्च विष्णुना।
भविष्यामि तदा ब्रह्मन् नकुली नाम नामतः ।। २३.२१० ।।
कायारोहणमित्येवं सिद्धक्षेत्रञ्च वैतदा।
भविष्यति तु विख्यातं यावद्भूमिर्द्धरिष्यति ।। २३.२११ ।।
तत्रापि मम ते पुत्रा भविष्यन्ति तपस्विनः ।
कुशइकश्चैव गार्ग्यश्च मित्रको रुष्ट एव च ।। २३.२१२ ।।
योगयुक्ता महात्मानो ब्राह्मणा वेदपारगाः।
प्राप्य माहेश्वरं योगं विमला ह्यूर्द्ध्वरेतसः।
रुद्रलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम् ।। २३. २१३ ।।
इत्येतद्वै मया प्रोक्तमवतारेषु लक्षणम्।
मन्वादिकृष्णपर्यन्तमष्टाविंशयुगक्रमात्।
तत्र स्मृतिसमूहानां विभागो धर्मलक्षणम् ।। २३.२१४ ।।
इति श्रीमहापुराणे वायु प्रोक्ते माहेश्वरावतारयोगो नाम त्रयोविंशोऽध्यायः ।। २३ ।।।

**।। वायुरुवाच ।।**

चत्वारि भारते वर्षे युगानि मुनयो विदुः ।

कृतं त्रेता द्वापरं च तिष्यं चेति चतुर्युगम् ।। २४.१ ।।

एतत्सहस्रपर्यन्तमहर्यद्ब्रह्मणः स्मृतम्।

यामाद्यास्तु गणाः सप्त रोमवन्तश्चतुर्द्दश ।। २४.२ ।।

सशरीराः श्रयन्ते स्म जनलोकं सहानुगाः।

एवं देवेष्वतीतेषु महर्ल्लोकाज्जनं तपः ।। २४.३ ।।

मन्वन्तरेष्वतीतेषु देवाः सर्वे महौजसः।

ततस्तेषु गतेषूर्द्ध्वं सायुज्यं कल्पवासिनाम् ।। २४.४ ।।

समेत्य देवैस्ते देवाः प्राप्ते सङ्कालने तदा।

महर्लोकं परित्यज्य गणास्ते वै चतुर्द्दश ।। २४.५ ।।

भूतदिष्ववशिष्टेषु स्थावरान्तेषु वै तदा ।

शून्येषु तेषु लोकेषु महान्तेषु भुवादिषु।

देवेष्वथ गतेषूर्द्ध्वं कल्पवासिषु वै जनम् ।। २४.६ ।।

तत्संहत्या ततो ब्रह्मा देवर्षिगणदानवान्।

संस्थापयति वै सर्व्वान् दाहवृष्ट्या युगक्षये ।। २४.७ ।।

योऽतीतः सप्तमः कल्पो मया वः परिकीर्तितः।

समुद्रैः सप्तभिर्गाढमेकीभूतैर्महार्णवैः ।

आसीदेकार्णवं घोरमविभागं तमोमयम् ।। २४.८

माययैकार्णवे तस्मिन् शङ्खचक्रगदाधरः।

जीमूताभोऽम्बुजाक्षश्च किरीटी श्रीपतिर्हरिः ।। २४.९ ।।

नारायणमुखोद्गीर्णः सोऽष्टमः पुरुषोत्तमः।

अष्टबाहुर्महोरस्को लोकानां योनिरुच्यते।

किमप्यचिन्त्यं युक्तात्मा योगमास्थाय योगवित् ।। २४.१० ।।

फणासहस्रकलितं तमप्रतिमवर्चसम्।

महाभोगपतेर्भोगमन्वास्तीर्य महोच्छ्रयम्।

तस्मिन्महति पर्यङ्के शेते वै कनकप्रभे ।। २४.११ ।।

एवं तत्र शयानेन विष्णुना प्रभविष्णुना।

आत्मारामेण क्रीडार्थं सृष्टं नाभ्यां तु पङ्कजम् ।। २४.१२ ।।

शतयोजनविस्तीर्णं तरुणादित्यवर्च्चसम्।

बज्रदण्डं महोत्सेधं लीलया प्रभविष्णुना ।। २४.१३ ।।

तस्यैवं क्रीडमानस्य समीपं देवमीढुषः।

हेमब्रह्माण्डजो ब्रह्मा रुक्मवर्णोह्यतीन्द्रियः।

चतुर्मुखो विशालाक्षः समागम्य यदृच्छया ।। २४.१४ ।।
श्रिया युक्तेन नव्येन सुप्रभेण सुगन्धिना।
तं क्रीडमानं पद्मेन दृष्ट्वा ब्रह्मा तु भेजिवान् ।। २४.१५ ।।
स विस्मयमथागम्य शस्य संपूर्णया गिरा।
प्रोवाच को भवान् शेते आश्रितो म्ध्यमम्भसाम् ।। २४.१६ ।।
अथ तस्याच्युतः श्रुत्वा ब्रह्मणस्तु शुभं वचः।
उदतिष्ठत पर्य्यङ्काद्विस्मयोत्फुल्ललोचनः ।। २४.१७ ।।
प्रत्युवाचोत्तरं चैव क्रियते यच्च किञ्चन।
द्यौरन्तरिक्षं भूतञ्च परं पदमहं प्रभुः ।। २४.१८ ।।
तमेवमुक्त्वा भगवान् विष्णुः पुनरथाब्रवीत् ।
कस्त्वं खलु समायातः समीपं भगवान् कुतः ।
कुतस्व भूयो गन्तव्यं कुत्र वा ते प्रतिश्रयः ।। २४.१९ ।।
को भवान् विश्वमूर्तिस्त्वं कर्त्तव्यं किञ्च ते मया।
एवं ब्रुवाण वैकुण्ठं प्रत्युवाच पितामहः ।। २४.२० ।।
यथा भवांस्तथा चाहमादिकर्त्त प्रजापतिः।
नारायणसमाख्यातः सर्व्वं वै मयि तिष्ठति ।। २४.२१ ।।
सविस्मयं परं श्रुत्वा ब्रह्मणा लोककर्तृणा।
सोऽनुज्ञातो भगवता वैकुण्ठो विश्वसम्भवः ।। २४.२२ ।।
कौतूहलान्महायोगी प्रविष्टो ब्रह्मणो मुखम्।
इमानष्टादशद्वीपान् ससमुद्रान् सपर्व्वतान्।
प्रविश्य स महातेजाश्चातुर्वर्ण्यसमाकुलान्।
ब्रह्मादिस्तम्बपर्य्यन्तान् सप्तलोकान् सनातनान् ।। २४.२३ ।।
ब्रह्मणस्तूदरे दृष्ट्वा सर्व्वान् विष्णुर्महायशाः।
अहोऽस्य तपसो वीर्य्यं पुनः पुनरभाषत ।। २४.२४ ।।
पर्य्यटन् विविधान् लोकान् विष्णुर्नानाविधाश्रमान्।
ततो वर्षसहस्रान्ते नान्तं हि ददृशे तदा ।। २४.२५ ।।
तदाऽस्य वक्रान्निष्क्रम्य पन्नगेन्द्रारिकेतनः।
अजातशत्रुर्भगवान् पितामहमथाब्रवीत् ।। २४.२६ ।।
भगवन् आदि मध्यञ्च अन्तं कालदिशोर्न च।
नाहमन्तं प्रपश्यामि ह्युदरस्य तवानघ ।। २४.२७ ।।
एवमुक्त्वाब्रवीद्भूयः पितामहमिदं हरिः।
भवानप्येवमेवाद्य ह्युदरं मम शाश्वतम्।
प्रविश्य लोकान् पश्यैतानानौपम्यान् द्विजोत्तम ।। २४.२८ ।।

मनःप्रह्लादनीं वाणीं श्रुत्वा तस्याभिनन्द्य च।
श्रीपतेरुदरं भूयः प्रविवेश पितामहः ।। २४.२९ ।।
तानेव लोकान् गर्भस्थः पश्यन् सोऽचिन्त्यविक्रमः।
पर्यटित्वादिदेवस्य ददर्शान्तं न वै हरेः ।। २४.३० ।।
ज्ञात्वागमन्तस्य पितामहस्य द्वाराणि सर्वाणि पिधाय विष्णुः।
विभुर्मनः कर्त्तुमियेष चाशु सुखं प्रसुप्तोऽस्मि महाजलौघे ।। २४.३१ ।।
ततो द्वाराणि सर्वाणि पिहितान्युपलक्ष्यते।
सूक्ष्मं कृत्वात्मनो रूपं नाभ्यां द्वारमविन्दत ।। २४.३२ ।।
पद्मसूत्रानुमार्गेण ह्यनुगम्य पितामहः।
उज्जहारात्मनो रूपं पुष्कराच्चतुराननः।
विरराजारविन्दस्थः पद्मगर्भसमद्युतिः ।। २४.३३ ।।
एतस्मिन्नन्तरे ताभ्यामेकैकस्य तु कात्स्न्र्यतः।
प्रवर्त्तमाने संहर्षे मध्ये तस्यार्णवस्य तु ।। २४.३४ ।।
**।।सूत उवाच।।**
ततो ह्यपरिमेयात्मा भूतानां प्रभुरीश्वरः।
शूलपाणिर्महादेवो हैमचीराम्बरच्छदः।
आगच्छद् यत्र सोऽनन्तो नागभोगपतिर्हरिः ।। २४.३५ ।।
शीघ्रं विक्रमतस्तस्य पद्भ्यामत्यन्तपीडिताः।
उद्धूतास्तूर्णमाकाशे पृथुलास्तोयबिन्दवः।
अत्युष्णाश्चातिशीताश्च वायुस्तत्र ववौ भृशम् ।। २४.३६ ।।
तद्दृष्ट्वा महदाश्चर्यं ब्रह्मा विष्णुमभाषत।
अब्बिन्दवो हि स्थूलोष्णाः कम्पते चाम्बुजं भृशम्।
एतं मे संशयं ब्रूहि किञ्चान्यत् त्वञ्चिकीर्षसि ।। २४.३७ ।।
एतदेवंविधं वाक्यं पितामहमुखोद्भवम्।
श्रुत्वाप्रतिमकर्माह भगवानसुरान्तकृत् ।। २४.३८ ।।
किन्नु खल्वत्र मे नाभ्यां भूतमन्यत्कृतालयम् ।
वदन्ति प्रियमत्यर्थं विप्रियेपि च ते मया ।। २४.३९ ।।
इत्येवं मनसा ध्यात्वा प्रत्युवाचेदमुत्तरम्।
किन्न्वत्र भगवांस्तस्मिन् पुष्करे जातसम्भ्रमः ।। २४.४० ।।
किं मया यत् कृतं देव यन्मां प्रियमनुत्तमम्।
भाषसे पुरुषश्रेष्ठ किमर्थं ब्रूहि तत्त्वतः ।। २४.४१ ।।
एवं ब्रुवाणं देवेशं लोकया त्रान्तु तत्त्वगाम्।
प्रत्युवाचाम्बुजाभास्को ब्रह्म वेदनिधिः प्रभुः ।। २४.४२ ।।

योऽसौ तवोदरं पूर्वं प्रविष्टोऽहं त्वदिच्छया।
यथा ममोदरे लोकाः सर्वे दृष्टास्त्वया प्रभो।
तथैव दृष्टाः कात्स्न्र्येन मया लोकास्तवोदरे ।। २४.४३ ।।
ततो वर्षसहस्रान्ते उपावृत्तस्य मेऽनघ।
नूनं मत्सरभावेन मां वशीकर्तुमिच्छता।
आशु द्वाराणि सर्वाणि घटितानि त्वया पुनः ।। २४.४४ ।।
ततो मया महाभाग सञ्चिन्त्य स्वेन चेतसा।
लब्धो नाभ्यां प्रवेशतु पद्मसूत्राद्विनिर्गमः ।। २४.४५ ।।
माभूत्ते मनसोऽल्पोऽपि व्याघातोऽयं कथञ्चन।
इत्येषानुगतिर्विष्णोः कार्याणामौपसर्गिकी ।। २४.४६ ।।
यन्म यानन्तरं कार्यं मयाध्यवसितं त्वयि।
त्वाञ्चाबाधितुकामेन क्रीडापूर्वं यदृच्छया।
आशु द्वाराणि सर्वाणि घटितानि मया पुनः ।। २४.४७ ।।
न तेऽन्यथावमन्तव्यो मान्यः पूज्यश्च मे भवान्।
सर्वं मर्षय कल्याण यन्मयाऽपकृतन्तव।
तस्मान्मयोच्यमानस्त्वं पझादवतर प्रभो ।। २४.४८ ।।
नाहं भवन्तं शक्नोमि सोदुन्तेजोमयं गुरुम्।
स चोवाच वरं ब्रूहि पझादवतराम्ययम् ।। २४.४९ ।।
**।।विष्णुरुवाच ।।**
पुत्रो भव ममारिघ्न मुदं प्राप्स्यसि शोभनम्।
सत्यधनो महायोगी त्वमीड्यः प्रणवात्मकः ।। २४.५० ।।
अद्यप्रभृति सर्वेश श्वेतोष्णीषविभूषणः।
पझयोनिरितीत्येवं ख्यातो नाम्ना भविष्यसि।
पुत्रो मे त्वं भव ब्रह्मन् सर्वलोकाधिप प्रभो ।। २४.५१ ।।
ततः स भगवान् ब्रह्म वरं गृह्य किरीटिनः ।
एवं भवतु चेत्युक्त्वां प्रीतात्मा गतमत्सरः ।। २४.५२ ।।
प्रत्यासन्नमथायातं बालार्काभं महाननम्।
भूतमत्यद्भुतं दृष्ट्वा नारायणमथाब्रवीत् ।। २४.५३ ।।
अप्रमेयो महावक्रो दंष्ट्री व्यस्तशिरो रुहः।
दशबाहुस्त्रिशूलाङ्को नयनैर्विश्वतोमुखः ।। २४.५४ ।।
लोकप्रभुः स्वयं साक्षाद्विकृतो मुञ्जमेखली ।
मेढ्रेणोर्ध्वेन महता नदमानोऽतिभैरवम् ।। २४.५५ ।।
कः खल्वेष पुमान् विष्णो तेजोराशिर्महाद्युतिः।

व्याप्य सर्वा दिशो द्याञ्च इत एवाभिवर्त्तते ।। २४.५६ ।।
तेनैवमुक्तो भगवान् विष्णुर्ब्रह्माणमब्रवीत्।
पद्भ्यान्तलनिपातेन यस्य विक्रमतोऽर्णवे।
वेगेन महताकाशे व्यथिताश्च जलाशयाः ।। २४.५७ ।।
छटाभिर्विष्णुतोऽत्यर्थं सिच्यते पङ्कसम्भवः।
घ्राणजेन च वातेन कम्पमानं त्वया सह।
दोधूयते महापङ्कं स्वच्छन्दं मम नाभिजम् ।। २४.५८ ।।
स एष भगवानीशो ह्यनादिश्चान्तकृद्विभुः।
भवानहञ्च स्तोत्रेण ह्युपतिष्ठाव गोध्वजम् ।। २४.५९ ।।
ततः क्रुद्धोऽम्बुजाभास्कं ब्रह्मा प्रोवाच केशवम्।
न भवान् न्यूनमात्मानं लोकानां योनिमुत्तमम् ।। २४.६० ।।
ब्रह्माणं लोककर्त्तारं माञ्च वेत्ति सनातनम्।
कोऽयं भोः शङ्करो नाम ह्यावयोर्व्यतिरिच्यते ।। २४.६१ ।।
तस्य तत् क्रोधजं वाक्यं श्रुत्वा विष्णुरभाषत।
मा मैवं वद कल्याण परिवादं महात्मनः ।। २४.६२ ।।
मायायोगेश्वरो धर्मो दुराधर्षो वरप्रदः।
हेतुरस्यात्र जगतः पुराणः पुरुषोऽव्ययः ।। २४.६३ ।।
जीवः खल्वेष जीवानां ज्योतिरेकं प्रकाशते।
बालक्रीडनकैर्द्देवः क्रीडतो शङ्करः स्वयम् ।। २४.६४ ।।
प्रधानमव्ययं ज्योतिरव्यक्तं प्रकृतिस्तमः।
अस्य चैतानि नामानि नित्यं प्रसवधर्मिणः।
यः कः स इति दुःखार्त्तैर्मृग्यते यतिभिः शिवः ।। २४.६५ ।।
एष बीजी भवान् बीजमहं योनिः सनातनः।
एवमुक्रोऽथ विश्वात्मा ब्रह्मा विष्णुमभाषत ।। २४.६६ ।।
भवान्योनिरहं बीजं कथं बीजी महेश्वरः ।
एतन्मे सूक्ष्ममव्यक्तं संशयं छेत्तुमर्हसि ।। २४.६७ ।।
ज्ञात्वा चैवं समुत्पत्तिं ब्रह्मणा लोकतन्त्रिणा।
इदं परमसादृश्यं प्रश्नमभ्यवदद्धरिः ।। २४.६८ ।।
अस्मान्महत्तरं गुह्यं भूतमव्यन्न विद्यते।
महतः परमं धाम शिवमध्यात्मिनां पदम् ।। २४.६९ ।।
द्वैधीभावेन चात्मानं प्रविष्टस्तु व्यवस्थितः।
निष्कलः सूक्ष्ममव्यक्तः सकलश्च महेश्वरः ।। २४.७० ।।
अस्य मायाविधिज्ञस्य अगम्यगहनस्य च।

पुरा लिङ्गं भवद्बीजं प्रथमं त्वादिसर्गिकम् ।। २४.७१ ।।
मयि योनौ समायुक्तं तद्बीजं कालपर्ययात्।
हिरण्मयमपारन्तद्योन्यामण्डमजायत ।। २४.७२ ।।
शतानि दशवर्षाणामण्डञ्चाप्सु प्रतिष्ठितम्।
अन्ते वर्षसहस्रस्य वायुना तद्द्विधा कृतम् ।। २४.७३ ।।
कपालमेकं द्यौर्जज्ञे कपालमपरं क्षितिः।
उल्वन्तस्य महोत्सेधं योऽसौ कनकपर्वतः ।। २४.७४ ।।
ततस्तस्मात् प्रबुद्धात्मा देवो देववरः प्रभुः ।
हिरण्यगर्भो भगवानहं जज्ञे चतुर्भुजः ।। २४.७५ ।।
ततो वर्षसहस्रान्ते वायुना तद्द्विधाकृतम्।
अतारार्केन्दुनक्षत्रं शून्यं लोकमवेक्ष्य च।
कोऽयमत्रे त्यभिध्याते कुमारास्तेऽभवंस्तदा ।। २४.७६ ।।
प्रियदर्शनास्सुतनवो येऽतीताः पूर्वजास्तव।
भूयो वर्षसहस्रान्ते तत एवात्मजास्तव।
भुवनानलसङ्काशाः पद्मपत्रायतेक्षणाः ।। २४.७७ ।।
श्रीमान् सनत्कुमारस्तु ऋभुश्चैवोर्द्ध्वरेतसौ ।
सनातनश्च सनकस्तथैव च सनन्दनः।
उत्पन्नाः समकालं ते बुद्ध्याऽतीन्द्रियदर्शनाः ।। २४.७८ ।।
उत्पन्नाः प्रतिघात्मानो जगदुश्च तदैव हि।
नारप्स्यन्ते च कर्माणि तापत्रयविवर्जिताः ।। २४.७९ ।।
अस्य सौम्यं बहुक्लेशं जराशोकसमन्वितम्।
जीवितं मरणं चैव संभवञ्च पुनः पुनः ।। २४.८० ।।
स्वप्रभूतं पुनः स्वर्गे दुःखानि नरकांस्तथा।
विदित्वा चागमं सर्वमवश्यं भवितव्यताम् ।। २४.८१ ।।
ऋभुं सनत्कुमारञ्च दृष्ट्वा तव वशे स्थितौ।
त्रयस्तु त्रीन् गुणान् हित्वा आत्मजाः सनकादयः।
वैवर्त्तेन तु ज्ञानेन निवृत्तास्ते महौजसः ।। २४.८२ ।।
ततस्तेष्वपवृत्तेषु सनकादिषु वै त्रिषु।
भविष्यसि विमूढस्तु मायया शङ्करस्य तु ।। २४.८३ ।।
एवं कल्पे तु वैकल्पे संज्ञा नस्यति तेऽनघ।
कल्पशेषाणि भूतानि सूक्ष्माणि पार्थिवानि च ।। २४.८४ ।।
सा चैषा ह्यैश्वरी माया जगतः समुदाहृता।
स एष पर्वतो मेरु र्देवलोक उदाहृतः ।। २४.८५ ।।

तवैवेदं हि माहात्म्यं दृष्ट्वा चात्मानमात्मना ।
ज्ञात्वा चेश्वरसद्भावं ज्ञात्वा मामम्बुजेक्षणम् ।। २४.८६ ।।
महादेवं महायोगं भूतानां वरदं प्रभुम्।
प्रणवात्मानमासाद्य नमस्कृत्या जगद्गुरुम्।
त्वाञ्च माञ्चैव संक्रुद्धो निःश्वासान्निर्द्दहेदयम् ।। २४.८७ ।।
एवं ज्ञात्वा महायोगं अभ्युत्तिष्ठन् महाबलः।
अहं त्वामग्रतः कृत्वा स्तोष्येऽहमनलप्रभम् ।। २४.८८ ।।
**।।सूत उवाच।।**
ब्रह्माणमग्रतः कृत्वा ततः स गरुडध्वजः।
अतीतैश्च भविष्यैश्च वर्त्तमानैस्तथैव च।
नामभिश्छान्दसैश्चैव इदं स्तोत्रमुदीरयत् ।। २४.८९ ।।
नमस्तुभ्यं भगवते सुव्रतेऽनन्ततेजसे।
नमः क्षेत्राधिपतये बीजिने शूलिने नमः ।। २४.९० ।।
अमेढ्रायोर्द्ध्वमेढ्राय नमो वैकुण्ठरेतसे ।
नमो ज्येष्ठाय श्रेष्ठाय अपूर्वप्रथमाय च ।। २४.९१ ।।
नमो हव्याय पूज्याय सद्यो जाताय वै नमः ।
गह्वराय धनेशाय हैमचीराम्बराय च ।। २४.९२ ।।
नमस्ते ह्यस्मदादीनां भूतानां प्रभवाय च।
वेदकर्म्मावदानानां द्रव्याणां प्रभवे नमः ।। २४.९३ ।।
नमो योग्स्य प्रभवे सांख्यस्य प्रभवे नमः ।
नमो ध्रुवनिशीथानामृषीणां पतये नमः ।। २४.९४ ।।
विद्युदशनिमेघानां गर्ज्जितप्रभवे नमः।
उदधीनाञ्च प्रभवे द्वीपानां प्रभवे नमः ।। २४.९५ ।।
अद्रीणां प्रभवे चैव वर्षाणां प्रभवे नमः।
नमो नदानां प्रभवे नदीनां प्रभवे नमः ।। २४.९६ ।।
नमश्चौषधिप्रभवे वृक्षाणां प्रभवे नमः।
धर्म्माध्यक्षाय धर्म्माय स्थितीनां प्रभवे नमः ।। २४.९७ ।।
नमो रसानां प्रभवे रत्नानां प्रभवे नमः ।
नमः क्षणानां प्रभवे कलानां प्रभवे नमः ।। २४.९८ ।।
निमेषप्रभवे चैव काष्ठानां प्रभवे नमः ।
अहोरात्रार्द्धमासानां मासानां प्रभवे नमः ।। २४.९९ ।।
नम ऋतुनां प्रभवे संख्यायाः प्रभवे नमः।
प्रभवे च परार्द्धस्य परस्य प्रभवे नमः ।। २४.१०० ।।

नमः पुराणप्रभवे युगस्य प्रभवे नमः।
चतुर्विधस्य सर्गस्य प्रभवेऽनन्तचक्षुषे ।। २४.१०१ ।।
कल्पोदये निबद्धानां वार्त्तानां प्रभवे नमः।
नमो विश्वस्य प्रभवे ब्रह्मदिप्रभवे नमः ।। २४.१०२ ।।
विद्यानां प्रभवे चैव विद्यानां पतये नमः।
नमो व्रतानां पतये मन्त्राणां पतये नमः ।। २४.१०३ ।।
पितॄणां पतये चैव पशूनां पतये नमः।
वाग्वृषाय नमस्तुभ्यं पुराणवृषभाय च ।। २४.१०४ ।।
सुचारुचारुकेशाय ऊर्द्ध्वचक्षुःशिराय च।
नमः पशूनां पतये गोवृषेन्द्रध्वजाय च ।। २४.१०५ ।।
प्रजापतीनां पतये सिद्धानां पतये नमः।
गरुडोरगसर्पाणां पक्षिणां पतये नमः ।। २४.१०६ ।।
गोकर्णाय च गोष्ठाय शङ्कुकर्णाय वै नमः।
वाराहायाप्रमेयाय रक्षोधिपतये नमः ।। २४.१०७ ।।
नमो ह्यप्सरसांपतये गणानां (पतये) ह्रीमये नमः।
अम्भसां पतये चैव तेजसां पतये नमः ।। २४.१०८ ।।
नमोऽस्तु लक्ष्मीपतये श्रीमते ह्रीमते नमः।
बलाबलसमूहाय ह्यक्षोभ्यक्षोभणाय च ।। २४.१०९ ।।
दीर्घश्रृङ्गैकश्रृङ्गाय वृषभाय ककुद्मिने।
नमः स्थैर्याय वपुषे तेजसे सुप्रभाय च ।। २४.११० ।।
भूताय च भविष्याय वर्त्तमानाय वै नमः।
सुवर्च्चसेऽथ वीराय शूराय ह्यतिगाय च ।। २४.१११ ।।
वरदाय वरेण्याय नमः सर्वगताय च।
नमो भूताय भव्याय भवाय महते तथा ।। २४.११२ ।।
जनाय च नमस्तुभ्यं तपसे वरदाय च।
नमो वन्द्याय मोक्षाय जनाय नरकाय च ।। २४.११३ ।।
भवाय भजमानाय इष्टाय याजकाय च।
अभ्युदीर्णाय दीप्ताय तत्त्वाय निर्गुणाय च ।। २४.११४ ।।
नमः पाशाय हस्ताय नमः स्वाभरणाय च।
हुताय चापहुताय प्रहुतप्रशिताय च ।। २४.११५ ।।
नमोऽस्त्विष्टाय मूर्त्ताय ह्यग्निष्टोमर्त्विजाय च।
नम ऋताय सत्याय भूताधिपतये नमः ।। २४.११६ ।।
सदस्याय नमश्चैव दक्षिणावभृथाय च।

अहिंसायाथ लोकानां पशुमन्त्रौषधाय च ।। २४.११७ ।।
नमस्तुष्टिप्रदानाय त्र्यम्बकाय सुगन्धिने।
नमोऽस्त्विन्द्रियपतये परिहाराय स्रग्विणे ।। २४.११८ ।।
विश्वाय विश्वरूपाय विश्वतोऽक्षिमुखाय च।
सर्वतः पाणिपादाय रुद्रायाप्रमिताय च ।। २४.११९ ।।
नमो हव्याय कव्याय हव्यकव्याय वै नमः।
नमः सिद्धाय मेध्याय चेष्टाय त्वव्ययाय च ।। २४.१२० ।।
सुवीराय सुघोराय ह्यक्षोभ्यक्षोभणाय च।
सुमेधसे सुप्रजाय दीप्ताय भास्कराय च ।। २४.१२१ ।।
मनो नमः सुपर्णाय तपनीयनिभाय च।
विरूपाक्षाय त्र्यक्षाय पिङ्गलाय महौजसे ।। २४.१२२ ।।
दृष्टिघ्नाय नमश्चैव नमः सौम्येक्षणाय च।
नमो धूम्राय श्वेताय कृष्णाय लोहिताय च ।। २४.१२३ ।।
पिशिताय पिशङ्गाय पीताय च निषङ्गिणे।
नमस्ते सविशेषाय निर्विशेषाय वै नमः ।। २४.१२४ ।।
नमो वै पझवर्णाय मृत्युघ्नाय च मृत्यवे ।
नमः श्यामाय गौराय कद्रवे रोहिताय च ।। २४.१२५ ।।
नमः कान्ताय सन्ध्याभ्रवर्णाय बहुरूपिणे।
नमः कपालहस्ताय दिग्वस्त्राय कपर्द्दिने ।। २४.१२६ ।।
अप्रमेयाय शर्वाय ह्यवध्याय वराय च।
पुरस्तात् पृष्ठतश्चैव बिभ्राणाय कृशानवे ।। २४.१२७ ।।
दुर्गाय महते चैव रोधाय कपिलाय च।
अर्कप्रभशरीराय बलिने रंहसाय च ।। २४.१२८ ।।
पिनाकिने प्रसिद्धाय स्फीताय प्रसृताय च।
सुमेधसेऽक्षमालाय दिग्वासाय शिखण्डिने ।। २४.१२९ ।।
चित्राय चित्रवर्णाय विचित्राय धराय च।
चेकितानाय तुष्टाय नमस्त्वनिहिताय च ।। २४.१३० ।।
नमः क्षान्ताय शान्ताय वज्रसंहननाय च।
रक्षोघ्नाय मखघ्नाय शितिकण्ठोर्द्ध्वरेतसे ।। २४.१३१ ।।
अरिहाय कृतान्ताय तिग्मायुधधराय च।
समोदाय प्रमोदाय इरिणायैव ते नमः ।। २४.१३२ ।।
प्रणवप्रणवेशाय भक्तानां शर्मदाय च।
मृगव्याधाय दक्षाय दक्षयज्ञहराय च ।। २४.१३३ ।।

सर्वभूताय भूताय सर्वेशातिशयाय च।
पुरभेत्रे च शान्ताय सुगन्धाय वरेशवे ।। २४.१३४ ।।
पुष्पवन्तस्वरुपाय भगनेत्रान्तकाय च ।
कणादाय वरिष्ठाय कामाङ्गदहनाय च ।। २४.१३५ ।।
रवेः करालचक्राय नागेन्द्रदमनाय च।
दैत्यानामन्तकायाथो दिव्याक्रन्दकराय च ।। २४.१३६ ।।
श्मशानरतिनित्याय नमस्त्र्यम्बकधारिणे।
नमस्ते प्राणपालाय धवमालाधराय च ।। २४.१३७ ।।
प्रहीणशोकैर्विविधैर्भूतैः परिष्टुताय च।
नरनारीशरीराय देव्याः प्रियकराय च ।। २४.१३८ ।।
जटिने दण्डिने तुभ्यं व्यालयज्ञोपवीतिने ।
नमोऽस्तु नृत्यशीलाय वाद्यनृत्यप्रियाय च ।। २४.१३९ ।।
मन्यवे शीतशीलाय सुगीतिगायते नमः।
कटककराय भीमाय चोग्ररूपधराय च ।। २४.१४० ।।
विभीषणाय भीमाय भगप्रमथनाय च।
सिद्धसङ्घातगीताय महाभागाय वै नमः ।। २४.१४१ ।।
नमो मुक्ताट्टहासाय क्ष्वेडितास्फोटिताय च।
नदते कूर्दते चैव नमः प्रमुदिताय च ।। २४.१४२ ।।
नमोऽद्भुताय स्वपते धावते प्रस्थिताय च।
ध्यायते जृम्भते चैव तुदते द्रवते नमः ।। २४.१४३ ।।
चलते क्रीडते चैव लम्बोदरशरीरिणे।
नमः कृताय कम्पाय मुण्डाय विकराय च ।। २४.१४४ ।।
नम उन्मत्तवेषाय किङ्किणीकाय वै नमः।
नमो विकृतवेषाय क्रूरोग्रामर्षणाय च ।। २४.१४५ ।।
अप्रमेयाय दीप्ताय दीप्तये निर्गुणाय च।
नमः प्रियाय वादाय मुद्रामणिधराय च ।। २४.१४६ ।।
नमस्तोकाय तनवे गुणैरप्रतिमाय च।
नमो गणाय गुह्याय अगम्यागमनाय च ।। २४.१४७ ।।
लोक धात्री त्वियं भूमिः पादौ सज्जनसेवितौ।
सर्व्वेषां सिद्धयोगानामधिष्ठानन्तवोदरम् ।। २४.१४८ ।।
मध्येऽन्तरिक्षं विस्तीर्णन्तारागणविभूषितम्।
तारापथ इवा भाति श्रीमान् हारस्तवोरसि ।। २४.१४९ ।।
दिशो दश भुजास्ते वै केयूराङ्गदभूषिताः।

विस्तीर्णपरिणाहश्च नीलाम्बुदचयोपमः ।। २४.१५० ।।
कण्ठस्ते शोभते श्रीमान् हेमसूत्रविभूषितः ।
दंष्ट्राकरालदुर्द्धर्षमनौपम्यं मुखं तव ।। २४.१५१ ।।
पझमालाकृतोष्णीषं शीर्षण्यं शोभते कथम्।
दीप्तिः सूर्ये वपुश्चन्द्रे स्थैर्ये भूर्ह्यनिलो बले ।। २४.१५२ ।।
तैक्ष्ण्यमग्नौ प्रभा चन्द्रे खे शब्दः शैत्यमप्सु च।
अक्षरोत्तमनिष्पन्दान् गुणानेतान्विदुर्बुधाः ।। २४.१५३ ।।
जपो जप्यो महायोगी महादेवो महेश्वरः।
पुरेशयो गुहावासी खेचरो रजनीचरः ।। २४.१५४ ।।
तपोनिधिर्गुहगुरुर्नन्दनो नन्दिवर्द्धनः।
हयशीर्षो धराधाता विधाता भूतिवाहनः ।। २४.१५५ ।।
बोद्धव्यो बोधनो नेता धूर्वहो दुष्प्रकम्पकः।
बृहद्रथो भीमकर्मा बृहत्कीर्तिर्धनञ्जयः ।। २४.१५६ ।।
घण्टाप्रियो ध्वजीछत्री पताकाध्वजिनीपतिः।
कवची पट्टिशी शङ्खी पाशहस्तः परश्वभृत् ।। २४.१५७ ।।
अगमस्त्वनघः शूरो देवराजारिमर्दनः।
त्वां प्रसाद्य पुराऽस्माभिर्द्विषन्तो निहता युधि ।। २४.१५८ ।।
अग्निस्त्वं चार्णवान् सर्वान् पिभन्नैव न तृप्यसे।
क्रोधागारः प्रसन्नात्मा कामहा कामदः प्रियः ।। २४.१५९ ।।
ब्रह्मण्यो ब्रह्मचारी च गोघ्नस्त्वं शिष्टपूजितः।
वेदानामव्ययः कोशस्त्वया यज्ञः प्रकल्पितः ।। २४.१६० ।।
हव्यञ्च वेदं वहति वेदोक्तं हव्यवाहनः।
प्रीते त्वयि महादेव वयं प्रीता भवामहे ।। २४.१६१ ।।
भवानीशो नादिमान् धामराशिर्ब्रह्मम लोकानान्त्वं कर्त्ता त्वादिसर्गः।
साङ्ख्याः प्रकृतिभ्यः परमं त्वां विदित्वा क्षीणध्यानास्ते न मृत्युं विशन्ति ।। २४.१६२ ।।
योगेन त्वान्ध्यानिनो नित्ययुक्ताः ज्ञात्वा भोगान् सन्त्यजन्ते पुनस्तान् ।
येऽन्ये मर्त्त्यास्त्वां प्रपन्ना विशुद्धास्ते कर्मभिर्दिव्यभोगान् भजन्ते ।। २४.१६३ ।।
अप्रमेयस्य तत्त्वस्य यथा विझः स्वशक्तितः।
कीर्तितं तव माहात्म्यमपारं परमात्मनः।
शिवो नो भव सर्वत्र योऽसि सोऽसि नमोऽस्तु ते ।। २४.१६४ ।।
इति श्रीमहापुराणे वायुप्रोक्ते शार्वस्तवं नाम चतुर्विंशोऽध्यायः ।। २४ ।।

**।।सूत उवाच।।**

संपिबन्निव तौ दृष्ट्वा मधुपिङ्गायतेक्षणः ।
प्रहृष्टवदनोऽत्यर्थमभवच्च स्वकीर्त्तनात् ।। २५.१ ।।

उमापतिर्विरूपाक्षो दक्षयज्ञविनाशनः।
पिनाकी खण्डपरशुर्भूतप्रान्तस्त्रिलोचनः ।। २५.२ ।।

ततः स भगवान् देवः श्रुत्वा वाक्यामृतं तयोः।
जानन्नपि महाभागः प्रीतपूर्वमथाब्रवीत् ।। २५.३ ।।

कौ भवन्तौ महात्मानौ परस्परहितैषिणौ।
समेतावम्बुजाभाक्षौ तस्मिन् घोरे जलप्लवे ।। २५.४ ।।

तावूचतुर्महात्मानौ सन्निरीक्ष्य परस्परम्।
भगवन् किञ्च तथ्येन विज्ञातेन त्वया विभो।
कुत्र वा सुखमानन्त्यमिच्छाचारमृते त्वया ।। २५.५ ।।

उवाच भगवान् देवो मधुरश्लक्ष्णया गिरा।
भो भो हिरण्यगर्भ त्वां त्वां च कृष्ण वदाम्यहम् ।। २५.६ ।।

प्रीतोऽहमनया भक्त्या शाश्वताक्षरयुक्तया।
भवन्तौ माननीयौ वै मम ह्यर्हतरावुभौ।
युवाभ्यां किं ददाम्यद्य वराणां वरमुत्तमम् ।। २५.७ ।।

तेनैवमुक्ते वचने ब्रह्माणं विष्णुरब्रवीत् ।
ब्रूहि ब्रूहि महाभाग वरो यस्ते विवक्षितः ।। २५.८ ।।

प्रजाकामोऽस्म्यहं विष्णो पुत्रमिच्छामि धूर्वहम्।
ततः स भगवान् ब्रह्मा वेरप्सुः पुत्रलिप्सया ।। २५.९ ।।

अथ विष्णुरुवाचेदं प्रजाकामं प्रजापतिम्।
वीरमप्रतिमं पुत्रं यत्त्वमिच्छसि धूर्वहम् ।। २५.१० ।।

पुत्रत्वेनाभियुङ्क्ष्व त्वं देवदेवं महेश्वरम्।
सतस्य वाक्यं संपूज्य केशवस्य पितामहः ।। २५.११ ।।

ईशानं वरदं रुद्रमभिवाद्य कृताञ्जलिः ।
उवाच पुत्रकामस्तु वाक्यानि सह विष्णुना ।। २५.१२ ।।

यदि मे भगवान् प्रीतः पुत्रकामस्य नित्यशः।
पुत्रो मे भव विश्वात्मन् स्वतुल्यो वापि धूर्व्वहः।
नान्यं वरमहं वव्रे प्रीते त्वयि महेश्वर ।। २५.१३ ।।

तस्य तां प्रार्थनां श्रुत्वा भगवान् भगनेत्रहा।
निष्कल्मषममायञ्च बाढमित्यब्रवीद्वचः ।। २५.१४ ।।

यदा कार्यसमारम्भे कस्मिंश्चित्तव सुव्रत।
अनिष्णत्तौ च कार्यस्य क्रोधस्त्वां समुपेष्यति।
आत्मैकादश ये रुद्रा विहिताः प्राण हेतवः ।। २५.१५ ।।

सोऽहमेकादशात्मा वै शूलहस्तः सहानुगः।
ऋषिर्म्मित्रो महात्मा वै ललाटाद्भविता तदा ।। २५.१६ ।।

प्रसादमतुलं कृत्वा ब्रह्मणस्तादृशं पुरा।
विष्णुं पुनरुवाचेदं ददामि च वरन्तव ।। २५.१७ ।।

स होवाच महाभागो विष्णुर्भवमिदं वचः।
सर्व्वमेतत् कृतं देव परितुष्टोऽसि मे यदि।
त्वयि मे सुप्रतिष्ठाऽस्तु भक्तिरम्बुदवाहन ।। २५.१८ ।।

एवमुक्तस्ततो देवस्तमभाषत केशवम्।
विष्णो श्रृणु यथा देव प्रीतोऽहन्तव शाश्वत ।। २५.१९ ।।

प्रकाशञ्चाप्रकाशञ्च जङ्गमं स्थावरञ्च यत् ।
विश्वरूपमिदं सर्व्वं रुद्रनारायणात्मकम् ।। २५.२० ।।

अहमग्निर्भवान् सोमो भवान् रात्रिरहं दिनम्।
भवानृतमहं सत्यं भवान् क्रतुरहं फलम् ।। २५.२१ ।।

भवान् ज्ञानमहं ज्ञेयं यज्जपित्वा सदा जनाः ।
मां विशन्ति त्वयि प्रीते जनाः सुकृतकारिणः।
आवाभ्यां सहिता चैव गतिर्नान्या युगक्षये ।। २५.२२ ।।

आत्मानं प्रकृतिं विद्धि मां विद्धि पुरुषं शिवम्।
भवानर्द्धशरीरं मे त्वहन्तव यथैव च ।। २५.२३ ।।

वामपार्श्वमहम्मह्यं श्यामं श्रीवत्सलक्षणम् ।
त्वञ्च वामेतरं पार्श्वं त्वहं वै नीललोहितः ।। २५.२४ ।।

त्वञ्च मे ह्वदयं विष्णो तव चाहं हृदि स्थितः।
भवान् सर्व्वस्य कार्यस्य कर्त्ताहमधिदैवतम् ।। २५.२५ ।।

तदेहि स्वस्ति ते वत्स गमिष्याम्यम्बुदप्रभ।
एवमुक्त्वा गतो विष्णोर्देवोऽन्तर्द्धानमीश्वरः ।। २५.२६ ।।

ततः सोऽन्तर्हिते देवे संप्रहृष्टस्तदा पुनः।
अशेत शयने भूप प्रविश्यान्तर्जले हरिः ।। २५.२७ ।।

तं पझं पझगर्भाभं पझाक्षः पझसम्भवः।
सम्प्रहृष्टमना ब्रह्मा भेजे ब्राह्मं तदासनम् ।। २५.२८ ।।

अथ दीर्घण कालेन तत्राप्यप्रतिमावुभौ।
महाबलौ महासत्त्वौ भ्रातरौ मधुकैटभौ ।। २५.२९ ।।

ऊचतुश्चैव वचनं भक्ष्यो वै नौ भविष्यसि ।
एवमुक्त्वा तु तौ तस्मिन्नन्तर्द्धानं गतावुभौ ।। २५.३० ।।

दारुणन्तु तयोर्भावं ज्ञात्वा पुष्करसम्भवः ।
माहात्म्यं चात्मनो बुद्ध्वा विज्ञातुमुपचक्रमे ।। २५.३१ ।।

कर्णिकाघटनं भूयो नाभ्यजानाद्यदा गतिम्।
ततः स पझनालेन अवतीर्य्य रसातलम्।
कृष्णा जिनोत्तरासङ्गन्ददृशोऽन्तर्जले हरिम् ।। २५.३२ ।।

स च तं बोधयामास विबुद्धं चेदमब्रवीत् ।
भूतेभ्यो मे भयं देव त्रायस्वौ त्तिष्ठ शङ्कुरु ।। २५.३३ ।।

ततः स भगवान् विष्णुः सप्रहासमरिन्दमः।
न भेतव्यं न भेतव्यमित्युवाच मुनिः स्वयम् ।। २५.३४ ।।

तस्मात्पूर्वं त्वया चोक्तं भूतेभ्यो मे महद्भयम्।
तस्माद्भूतादिवा क्यैस्तौ दैत्यौ त्वं नाशयिष्यसि ।। २५.३५ ।।

भूर्भूवःस्वस्ततो देवं विविशुस्तमयोनिजम् ।
ततः प्रदक्षिणं कृत्वा तमेवासीनमागतम् ।। २५.३६ ।।

गते तस्मिंततोऽनन्त उद्गीर्य भ्रातरौ मुखात्।
विष्णुं जिष्णुञ्च प्रोवाच ब्रह्माणमभिरक्षराम्।
मधुकैटभयोर्ज्ञात्वा तयोरागमनं पुनः ।। २५.३७ ।।

चक्राते रूप सादृश्यं विष्णोर्जिष्णोश्च सत्तमौ।
कृतसादृश्यरूपौ तौ तावेवाभिमुखौ स्थितौ ।। २५.३८ ।।

ततस्तौ प्रोचतुर्दैत्यौ ब्रह्माणं दारुणं वचः।
अस्माकं युध्यमानानां मध्ये वै प्राश्निको भव ।। २५.३९ ।।

ततस्तौ जलमाविश्य संस्तम्भ्यापः स्वमायया ।
चक्रतुस्तुमुलं युद्धं यस्य येनेप्सितं तदा ।। २५.४० ।।

तेषान्तु युध्य मानानां दिव्यं वर्षशतङ्गतम्।
न च युद्धमदोत्सेको ह्यन्योन्यं संन्यवर्त्तत ।। २५.४१ ।।

लक्षणद्वयसंस्थानाद्रूपवन्तौ स्थितेङ्गितौ।
सादृश्याद्व्याकुलमना ब्रह्मा ध्यानमुपागमत् ।। २५.४२ ।।

स तयोरन्तरं बुद्ध्वा ब्रह्म दिव्येन चक्षुषा।
पद्मकेसरजं सूक्ष्मं बबन्ध कवचन्तयोः।
आमेखलञ्च गात्रञ्च ततो मन्त्रमुदाहरत् ।। २५.४३ ।।

जपतस्त्वभवत्कन्या विश्वरूपसमुत्थिता।
पद्मेन्दुवदनप्रख्या पद्महस्ता शुभा सती।
तां दृष्ट्वा व्यथितौ दैत्यौ भयाद्वर्णविवर्ज्जितौ ।। २५.४४ ।।

ततः प्रोवाच तां कन्यां ब्रह्मा मधुरया गिरा।
काऽत्र त्वमवगन्तव्या ब्रूहि सत्यमनिन्दिते ।। २५.४५ ।।

साम्ना संपूज्य सा कन्या ब्रह्माणं प्राञ्जलिस्तदा ।
मोहिनीं विद्धि मां मायां विष्णोः सन्देशकारिणीम् ।। २५.४६ ।।

त्वया सङ्कीर्त्त्यमानाऽहं ब्रह्मन् प्राप्ता त्वरायुता।
अस्याः प्रीतमना ब्रह्मा गौणं नाम चकार ह ।। २५.४७ ।।

मया च व्याहृता यस्मात्तवञ्चैव समुपस्थिता।
महाव्याहृतिरित्येव नाम ते विचरिष्यति ।। २५.४८ ।।

इत्थिता च शिरो भित्त्वा सावित्री तेन चोच्यते।
एकानंशात्तु यस्मात्तवमनेकांशा भविष्यसि ।। २५.४९ ।।

गौणानि तावदेतानि कर्मजान्यपराणि च।
नामानि ते भविष्यन्ति मत्प्रसादात् शुभानने ।। २५.५० ।।

ततस्तौ पीड्यमानौ तु वरमेनमयाचताम्।
अनावृतं नौ मरणं पुत्रत्वञ्च भवेत्तव ।। २५.५१ ।।

तथेत्युक्त्वा ततस्तूर्णमनयत् यमसादनम्।
अनयत् कैटभं विष्णुर्जिष्णुश्चाप्यनयन्मधुम् ।। २५.५२ ।।

एवन्तौ निहतौ दैत्यौ विष्णुना जिष्णुना सह।

प्रीतेन ब्रह्मणा चाथ लोकानां हितकाम्यया ।। २५.५३ ।।

पुत्रत्वमीशेन यथा ह्यात्मा दत्तो निबोधत।
विष्णुना जिष्णुना सार्द्धं मधुकैटभयोस्तथा।
सम्पराये व्यतिकान्ते ब्रह्मा विष्णुमभाषत ।। २५.५४ ।।

अद्य वर्षशतं पूर्णं समयः प्रत्युपस्थितः।
संक्षेपसंप्लवङ्घोरं स्वस्थानं यामि चाप्यहम् ।। २५.५५ ।।

स तस्य वचसा देवः संहारमकरोत्तदा।
महीं निस्थावरां कृत्वा प्रकृतिस्थांश्च जङ्गमान् ।। २५.५६ ।।

यदि गोविन्द भद्रन्ते क्षिप्तस्ते यादसां पतिः।
ब्रूहि यत् करणीयं स्यान्मया ते लक्ष्मि वर्द्धन ।। २५.५७ ।।

बाढं श्रृणु हेमाभ पद्मयोने वचो मम ।
प्रसादो यस्त्वया लब्ध ईश्वरात् पुत्रलिप्सया ।। २५.५८ ।।

तन्तथा सफलं कृत्वा मत्तोऽभूदनृणो भवान्।
चतुर्विधानि भूतानि सृज त्वं विसृजस्व वा ।। २५.५९ ।।

अवाप्य संज्ञाङ्गोविन्दात् पद्मयोनिः पितामहः।
प्रजाः स्रष्टुमनास्तेपे तप उग्रं ततो महत् ।। २५.६० ।।

तस्यैवन्तप्यमानस्य न किञ्चित्समवर्त्तत।
ततो दीर्घेण कालेन दुःखात् क्रोधो व्यवर्द्धत ।। २५.६१ ।।

सक्रोधाविष्टनेत्रभ्यामपतन्नश्रुबिन्दवः ।
ततस्तेभ्योऽश्रुबिन्दुभ्यो वातपित्तकफात्मकाः ।। २५.६२ ।।

महाभागा महासत्त्वाः स्वस्तिकैरभ्यलङ्कृताः।
प्रकीर्णकेशाः सर्पास्ते प्रादुर्भूता महाविषाः ।। २५.६३ ।।

सर्पांस्तथाग्रजान् दृष्ट्वा ब्रह्मात्मानमनिन्दत।
अहो धिक् तपसा मह्यं फलमीदृशकं यदि।
लोकवैनाशिकी जज्ञे आदावेव प्रजा मम ।। २५.६४ ।।

तस्य तीव्राभवन्मूर्च्छा क्रोधामर्षसमुद्भवा।
मूर्च्छाभितापेन तदा जहौ प्राणान् प्रजापतिः ।। २५.६५ ।।

तस्याप्रतिमवीर्यस्य देहात् कारुण्यपूर्वकम्।
आत्मैकादश ते रुद्राः प्रोद्भूता रुदतस्तथा।

रोदनात् खलु रुद्रास्ते रुद्रत्वं तेन तेषु तत् ।। २५.६६ ।।

ये रुद्राः खलु ते प्राणा ये प्राणास्ते तदात्मकाः।
प्राणाः प्राणभृतां ज्ञेयाः सर्वभूतेष्ववस्थिताः ।। २५.६७ ।।

अत्युग्रस्य महत्त्वस्य साधुना चरितस्य च।
तस्य प्राणान् ददौ भूयस्त्रिशूली नीललोहितः।
ललाटात् पद्मयोनेस्तु प्रभुरेकादशात्मकः ।। २५.६८ ।।

ब्रह्मणः सोऽददात् प्राणानात्मजः स तदा प्रभुः।
प्रहृष्टवदनो रुद्रः किंचित् प्रत्यागतासवम्।
अभ्यभाषत्तदा देवो ब्रह्माणं परमं वचः ।। २५.६९ ।।

उपयाचस्व मां ब्रह्मन् स्मर्त्तुमर्हसि चात्मनः।
मां च वेत्थात्मजं रुद्रं प्रसादं कुरु मे प्रभो ।। २५.७० ।।

श्रत्वा त्विदं वचस्तस्य प्रभूतञ्च मनोगतम्।
पितामहः प्रसन्नात्मा नेत्रे फुल्लाम्बुजप्रभैः ।। २५.७१ ।।

ततः प्रत्यागतप्राणः स्निग्धगम्भीरया गिरा।
उवाच भगवान् ब्रह्मा शुद्धजाम्बूनदप्रभः ।। २५.७२ ।।

भो भो वद महाभाग आनन्दयसि मे मनः।
को भवान् विश्वभूतिस्त्वं स्थित एकादशात्मकः ।। २५.७३ ।।

एवमुक्तो भगवता ब्रह्मणाऽनन्ततेजसा।
ततः प्रत्यवदद्रुद्रो ह्यभिवाद्यात्मजैः सह ।। २५.७४ ।।

यत्ते वरमहं ब्रह्मन् याचितो विष्णुना सह।
पुत्रो मे भव देवेति त्वत्तुल्यो वापि धूर्वहः ।। २५.७५ ।।

लोकेषु विश्रुतैः कार्यं सर्वैर्विश्वात्मसम्भवैः।
विषादन्त्यज देवेश लोकांस्त्वं स्रष्टुमर्हसि ।। २५.७६ ।।

एवं स भगवानुक्तो ब्रह्मा प्रीतमनाभवत् ।
रुद्रं प्रत्यवदद्भूयो लोकान्ते नीललोहितम् ।। २५.७७ ।।

साहाय्यं मम कार्यार्थं प्रजाः सृज मया सह।
बीजी त्वं सर्वभूतानां तत्प्रपन्नस्तथा भव।
बाढमित्येव तां वाणीं प्रतिजग्राह शङ्करः ।। २५.७८ ।।

ततः स भगवान् ब्रह्मा कृष्णाजिनविभूषितः।

मनोऽग्रे सोऽसृजद्देवो भूतानां धारणां ततः।
जिह्वां सरस्वतीञ्चैव ततस्तां विश्वरूपिणीम् ।। २५.७९ ।।

भृगुमङ्गिरसं दक्षं पुलस्त्यं पुलहं क्रतुम्।
वसिष्ठञ्च महातेजाः ससृजे सप्त मानसान् ।। २५.८० ।।

पुत्रानात्मसमानन्यान् सोऽसृजद्विश्वसम्भवान् ।
तेषां भूयोऽनुमार्गेण गावो वक्राद्विजज्ञिरे ।। २५.८१ ।।

ओङ्कारप्रमुखान् वेदानभिमान्याश्च देवताः।
एवमेतान् यताप्रोक्तान् ब्रह्मा लोकपितामहः ।। २५.८२ ।।

दक्षाद्यान् मानसान् पुत्रान् प्रोवाच भगवान् प्रभुः।
प्रजाः सृजत भद्रं वो रुद्रेण सह धीमता ।। २५.८३ ।।

अनुगम्य महात्मानं प्रजानां पतयस्तदा।
वयमिच्छामहे देव प्रजाः स्रष्टुं त्वया सह।
ब्रह्मणस्त्वेष सन्देशस्तव चैव महेश्वर ।। २५.८४ ।।

तैरेवमुक्तो भगवान् रुद्रः प्रोवाच तान् प्रभुः।
ब्रह्मणश्चात्मजा मह्यं प्राणान् गृह्य च वै सुराः ।। २५.८५ ।।

कृत्वाग्रजाग्रजानेतान् ब्राह्मणानात्मजान्मम।
ब्रह्मादिस्तम्बपर्यन्तान् सप्तलोकान्ममात्मकान्।
भवन्तः स्रष्टुमर्हन्ति वचनान्मम स्वस्ति वः ।। २५.८६ ।।

तेनैवमुक्ताः प्रत्यूचुः रुद्रमाद्यन्त्रिशूलिनम्।
यथाज्ञापयसे देव तथा तद्वै भविष्यति ।। २५.८७ ।।

अनुमान्य महादेवं प्रजानां पतयस्तदा।
ऊचुर्दक्षं महात्मानं भवान् श्रेष्ठः प्रजापतिः।
त्वां पुरस्कृत्य भद्रन्ते प्रजाः स्रक्ष्यामहे वयम् ।। २५.८८ ।।

एवमस्त्विति वै दक्षः प्रत्यपद्यत भाषितम्।
तैः सह स्रष्टुमारेभे प्रजाकामः प्रजापतिः।
सर्गस्थिते ततः स्थाणौ ब्रह्मा सर्गमथासृजत् ।। २५.८९ ।।

अथास्य सप्तमेऽतीते कल्पे वै सम्बभूवतुः।
ऋभुः सनत्कुमारश्च तपो लोकनिवासिनौ।
ततौ महर्षीनन्यान् स मानसानसृजत् प्रभुः ।। २५.९० ।।

इति श्रीमहापुराणे वायुप्रोक्ते मधुकैटभोत्पत्तिविनाशवर्णनं नाम पञ्चविंशोऽ ध्यायः ।। २५ ।।

**।।सूत उवाच।।**

अहो विस्मयनीयानि रहस्यानि महामते।
त्वयोक्तानि यथातत्त्वं लोकानुग्रहकारणात् ।। २६.१ ।।

तत्र वै संशयो मह्यमवता (वा) रेषु शूलिनः।
किं कारणं महादेवः कलिं प्राप्य सुदारुणम्।
हित्वा युगानि पूर्वाणि अवतारं करोति वै ।। २६.२ ।।

अस्मिन्मन्वन्तरे चैव प्राप्ते वैवस्वते प्रभो।
अवतारं कथञ्चक्रे एतदिच्छामि वेदितुम् ।। २६.३ ।।

न तेऽस्त्यविदितं किञ्चिदिह लोके परत्र च।
भक्तानामुपदेशार्थं विनयात् पृच्छतो मम।
कथयस्व महाप्राज्ञ यदि श्राव्यं महामतम् ।। २६.४ ।।

**।।लोमश उवाच।।**

एवं पृष्टोऽथ भगवान् वायुर्लोकहिते रतः।
इदमाह महातेजा वायुर्लोकनमस्कृतः ।। २६.५ ।।

एतद्घुप्ततमं लोके यन्मान्त्वं परिपृच्छसि।
तत्सर्वं श्रृणु गाधेय उच्यमानं यथाक्रमम् ।। २६.६ ।।

पुरा ह्येकार्णवे वृत्ते दिव्ये वर्षसहस्रके।
स्रष्टुकामः प्रजा ब्रह्मा चिन्तयामास दुःशितः ।। २६.७ ।।

तस्य चिन्तयमानस्य प्रादुर्भूतः कुमारकः।
दिव्यगन्धः सुधापेक्षी दिव्यां श्रुतिमुदीरयन् ।। २६.८ ।।

अशब्दस्पर्शरूपान्तामगन्धां रसवर्ज्जिताम्।
श्रुतिं ह्युदीरयन् देवो यामविन्दच्चतुर्म्मुखः ।। २६.९ ।।

ततस्तु ध्यानसंयुक्तस्तप आस्थाय भैरवम्।
चिन्तयामास मनसा त्रितयं कोऽन्वयन्त्विति ।। २६.१० ।।

तस्य चिन्तयमानस्य प्रादुर्भूतं तदक्षरम्।
अशब्दस्पर्शरूपञ्च रसगन्धविवर्ज्जितम् ।। २६.११ ।।

अथोत्तमं स लोकेषु स्वमूर्त्तिञ्चापि पश्यति।
ध्यायन्वै स तदा देवमथैनं पश्यते पुनः ।। २६.१२ ।।

तं श्वेतमथ रक्तञ्च पीतं कृष्णं तदा पुनः।
वर्णस्थं तत्र पश्येत न स्त्री न च नपुंसकम् ।। २६.१३ ।।

तत्सर्वं सुचिरं ज्ञात्वा चिन्तयन् हि तदक्षरम् ।
तस्य चिन्तयमानस्य कण्ठादुत्तिष्ठतेऽक्षरः ।। २६.१४ ।।

एकमात्रो महाघोषः श्वेतवर्णः सुनिर्मलः।
स ओङ्कारो भवेद्वेदः अक्षरं वै महेश्वरः ।। २६.१५ ।।

ततश्चिन्तयमानस्य त्वक्षरं वै स्वयम्भुवः।
प्रादुर्भूतन्तु रक्तन्तु स देवः प्रथमः स्मृतः ।। २६.१६ ।।

ऋग्वेदं प्रथमं तस्य त्वग्निमीळे पुरोहितम्।
एतां दृष्ट्वा ऋचं ब्रह्मा चिन्तयामास वै पुनः।
तदक्षरं महातेजाः किमेतदिति लोककृत् ।। २६.१७ ।।

तस्य चिन्तयमानस्य तस्मिन्नथ महेश्वरः ।
द्विमात्रमक्षरं जज्ञे ईशित्वेन द्विमात्रिकम् ।। २६.१८ ।।

ततः पुनर्द्विमात्रं तु चिन्तयामास चाक्षरम्।
प्रादुर्भूतं च रक्तं तच्छेदने गृह्य सा यजुः ।। २६.१९ ।।

इषे त्वोर्ज्जेत्वा वायवस्थ देवो वः सविता पुनः।
ऋग्वेद एकमात्रस्तु द्विमात्रन्तु यजुः स्मृतम् ।। २६.२० ।।

ततो वेदं द्विमात्रं तु दृष्ट्वा चैव तदक्षरम्।
द्विमात्रं चिन्तयन् ब्रह्म त्वक्षरं पुनरीश्वरः ।। २६.२१ ।।

तस्य चिन्तयमानस्य चोङ्कारः सम्बभूव ह।
ततस्तदक्षरं ब्रह्मा ओङ्कारं समचिन्तयत् ।। २६.२२ ।।

अथापश्यत्ततः पीतामृचं चैव समुत्थिताम्।
अग्न आयाहि वीतये गृणानो हव्यदातये ।। २६.२३ ।।

ततस्तु स महातेजा दृष्ट्वा वेदानुपस्थितान्।
चिन्तयित्वा च भगवांस्त्रिसन्ध्यं यत्त्रिरक्षरम्।
त्रिवर्णं यत् त्रिषवणमोङ्कारं ब्रह्मसंज्ञितम् ।। २६.२४ ।।

ततश्चैव त्रिसंयोगात् त्रिवर्णं तु तदक्षरम्।
लक्ष्यालक्ष्यप्रदृश्यं च सहितं त्रिदिवं त्रिकम् ।। २६.२५ ।।

त्रिमात्रं त्रिपदं चैव त्रियोगं चैव शाश्वतम्।
तस्मात्तदक्षरं ब्रह्मा चिन्तयामास वै प्रभुः ।। २६.२६ ।।

तस्मात्तदक्षरं सोऽथ ब्रह्मरूपं स्वयम्भुवः।
चतुर्द्दशमुखं देवं पश्यते दीप्ततेजसम्।
तमोङ्कारं स कृत्वादौ विज्ञेयः स स्वयम्भुवः ।। २६.२७ ।।

चतुर्मुखमुखात्तस्मादजायन्त चतुर्द्दश।
नानावर्णाः स्वरा दिव्यमाद्यं तच्च तदक्षरम्।
तस्मात् त्रिषष्टिवर्णा वै अकारप्रभवाः स्मृताः ।। २६.२८ ।।

ततः साधारणार्थाय वर्णानान्तु स्वयम्भुवः।
अकाररूप आदौ तु स्थितः स प्रथमः स्वरः ।। २६.२९ ।।

ततस्तेभ्यः स्वरेभ्यस्तु चतुर्द्दश महामुखाः।
मनवः सम्प्रसूयन्ते दिव्या मन्वन्तरे स्वराः ।। २६.३० ।।

चतुर्द्दशमुखो यश्च अकारो ब्रह्मसंज्ञितः।
ब्रह्मकल्पः समाख्यातः सर्ववर्णः प्रजापतिः ।। २६.३१ ।।

मुखात्तु प्रथमात्तस्य मनुः स्वायम्भुवः स्मृतः।
अकारस्तु स विज्ञेयः श्वेतवर्णः स्वयम्भुवः ।। २६.३२ ।।

द्वितीयात्तु मुखात्तस्य आकारो वै मुखः स्मृतः।
नाम्ना स्वारोचिषो नाम वर्णः पाण्डुर उच्यते ।। २६.३३ ।।

तृतीयात्तु मुखात्तस्य इकारो यजुषां वरः।
यजुर्मयः स चादित्यो यजुर्वेदो यतः स्मृतः ।। २६.३४ ।।

ईकारः स मनुर्ज्ञेयो रक्तवर्णः प्रतापवान्।
ततः क्षत्रं प्रवर्त्तन्त तस्माद्रक्तस्तु क्षत्रियः ।। २६.३५ ।।

चतुर्थात्तु मुखात्तस्य उकारः स्वर उच्यते।
वर्णतस्तु स्मृतस्ताम्रः स मनुस्तामसः स्मृतः ।। २६.३६ ।।

पञ्चमात्तु मुखात्तस्य ऊकारो नाम जायते।
पीतको वर्णतश्चैव मनुश्चापि चरिष्णवः ।। २६.३७ ।।

ततः षष्ठान्मुखात्तस्य ओङ्कारः कपिलः स्मृतः।
वरिष्ठश्च ततः षष्ठो विजयः स महातपाः ।। २६.३८ ।।

सप्तमात्तु मुखात्तस्य ततो वैवस्वतो मनुः।
ऋकारश्च स्वरस्तत्र वर्णतः कृष्ण उच्यते ।। २६.३९ ।।

अष्टमात्तु मुखात्तस्य ॠकारः श्यामवर्णतः।

श्यामाक्षरसवर्णश्च ततः सावर्णिरुच्यते ।। २६.४० ।।

मुखात्तु नवमात्तस्य लृकारो नवमः स्मृतः।
धूम्रो वै वर्णतश्चापि धूम्रस्व मनुरुच्यते ।। २६.४१ ।।

दशमात्तु मुखात्तस्य लृकारः प्रभुरुच्यते।
समश्चैव सवर्णश्च बभौ सावर्णिको मनुः ।। २६.४२ ।।

मुखादेकादशात्तस्य एकारो मनुरुच्यते।
पिशङ्गो वर्णतश्चैव पिशङ्गो वर्ण उच्यते ।। २६.४३ ।।

द्वादशात्तु मुखात्तस्य ऐकारो नाम उच्यते।
पिशङ्गो भस्मवर्णाभः पिशङ्गो मनुरुच्यते ।। २६.४४ ।।

त्रयोदशान्मुखात्तस्य ओकारो वर्ण उच्यते।
पञ्चवर्णसमायुक्त ओकारो वर्ण उत्तमः ।। २६.४५ ।।

चतुर्द्दशमुखात्तस्य औकारो वर्ण उच्यते।
कर्बूरो वर्णतश्चैव मनुः सावर्णिरुच्यते ।। २६.४६ ।।

इत्येते मनवश्चैव स्वरा वर्णाश्च कल्पतः।
विज्ञेया हि यथातत्त्वं स्वरतो वर्णतस्तथा ।। २६.४७ ।।

परस्परसवर्णाश्च स्वरा यस्माद् वृता हि वै ।
तस्मात्तेषां सवर्णत्वादन्वयस्तु प्रकीर्तितः ।। २६.४८ ।।

सवर्णाः सदृशाश्चैव यस्माज्जातास्तु कल्पजाः।
तस्मात् प्रजानां लोकेऽस्मिन् सवर्णाः सर्वसन्धयः ।। २६.४९ ।।

भविष्यन्ति यथाशैलं वर्णाश्च न्यायतोऽर्थतः।
अभ्यासात्सन्धयश्चैव तस्माज्ज्ञेयाः स्वरा इति ।। २६.५० ।।

इति श्रीमहापुराणे वायुप्रोक्ते स्वरोत्पत्तिर्नाम षड्विंशोऽध्यायः ।। २६ ।।

**।।ऋषयः ऊचुः।।**

अस्मिन् कल्पे त्वया चोक्तः प्रादुर्भावो महात्मनः।
महादेवस्य रुद्रस्य साधकैर्मुनिभिः सह ।। २७.१ ।।

**।।सूत उवाच।।**

उत्पत्तिरादिसर्गस्य मया प्रोक्त समासतः।
विस्तरेणास्य वक्ष्यामि नामानि तनुभिः सह ।। २७.२ ।।
पत्नीषु जनयामास महादेवः सुतान् बहून्।
कल्पेऽष्टमे व्यतीते तु यस्मिन् कल्पे तु तच्छृणु ।। २७.३ ।।
कल्पादौ चात्मानस्तुल्यं सुतं प्रध्यायतः प्रभोः।
प्रादुरासीत्ततोङ्केऽस्य कुमारो नीललोहितः।
तं दधे सुस्वरं घोरं निर्दहन्निव तेजसा ।। २७.४ ।।
दृष्ट्वा रुदन्तं सहसा कुमारं नीललोहितम्।
व्क रोदिषि कुमारेति ब्रह्मा तं प्रत्यभाषत ।। २७.५ ।।
सोऽब्रवीद्देहि मे नाम प्रथमं वै पितामह।
रुद्रस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः ।। २७.६ ।।
कि रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत् ।
नाम देहि द्वितीयं मे इत्युवाच स्वयम्भुवम् ।। २७.७ ।।
भवस्त्वं देव नाम्नासि ङ्त्युक्तः सोऽरुदत्पुनः।
किं रोदिषीति तं ब्रह्मा प्रत्युवाचाथ शङ्करम् ।। २७.८ ।।
तृतीयं देहि मे नाम इत्युक्तः प्रत्युवाच तम्।
शिवस्त्वं देव नाम्नासि इत्युक्तः प्रत्युवाच तम्।
शिवस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः ।। २७.९ ।।
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत्।
चतुर्थं देहि मे नाम इत्युवाच स्वयम्भुवम् ।। २७.१० ।।
पशूनां त्वं पतिर्देव इत्युक्तः सोऽरुदत्पुनः।
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत् ।। २७.११ ।।
पञ्चमं देहि मे नाम इत्युक्तः प्रत्युवाच तम्।
ईशस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः ।। २७.१२ ।।
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत्।
षष्ठं मे नाम देहीति इत्युवाचाथ तं प्रभुम् ।। २७.१३ ।।
भीमस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः ।
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत् ।। २७.१४ ।।
सप्तमं देहि मे नाम इत्युक्तः प्रत्युवाच तम्।

उग्रस्त्वं देव नाम्नासि इत्युक्तः सोऽरुदत्पुनः ।। २७.१५ ।।
किं रोदिषीति तं ब्रह्मा रुदन्तं पुनरब्रवीत्।
अष्ठमं देहि मे नाम त्वं विभो पुनरब्रवीत्।
महादेवस्तु नाम्नासि इत्युक्तो विरराम ह ।। २७.१६ ।।
लब्ध्वा नामानि चैतानि ब्रह्मणो नीललोहितः।
प्रोवाच नाम्नामेतेषां भूतानि प्रदिशेति ह ।। २७.१७ ।।
ततोऽभिशृष्टास्तनव एषां नाम्नां स्वयम्भुवा।
सूर्यो मही जलं वह्निर्वायुराकाशमेव च ।। २७.१८ ।।
दीक्षितो ब्रह्मणश्चन्द्र इत्येते ब्रह्मधातवः।
तेषु पूज्यश्च वन्द्यः स्याद्रुद्रस्तान् हिनस्ति वै ।। २७.१९ ।।
ततोऽब्रवीत् पुनर्ब्रह्मा तं देवं नीललोहितम् ।
द्वितीयं नामधेयन्ते मया प्रोक्तं भवेति यत्।
एतस्यापो द्वितीया ते तनुर्नाम्ना भविष्यति ।। २७.२० ।।
इत्युक्ते यत् स्थिरं तस्य शरीरस्थं रसात्मकम्।
तद्विवेश ततस्तोयं तस्मादापो भवः स्मृतः ।। २७.२१ ।।
यस्माद्भवन्ति भूतानि ताभ्यस्ता भावयन्ति च।
भवनाद्भावनाच्चैव भूतानां सम्भवः स्मृतः ।। २७.२२ ।।
तस्मान्मूत्रं पुरीषञ्च नाप्सु कुर्वीत सर्वदा।
न स्नायेदप्सु नग्नश्च न निष्ठीवेत् कदाचन ।। २७.२३ ।।
मैथुनं नैव सेवेत शिरःस्नानञ्च वर्जयेत्।
न प्रीतः परिचक्षीत वहन्न संस्थितोऽपि वा ।। २७.२४ ।।
मेध्यामेध्यशरीरत्वान्नैव दुष्यन्त्यपः क्वचित् ।
विवर्णरसगन्धाश्च अल्पाश्च परिवर्जयेत् ।। २७.२५ ।।
अपां योनिः समुद्रश्च तस्मात्तं कामयन्ति ताः।
मेध्याश्चैवामृताश्चैव भवन्ति प्राप्य सागरम् ।। २७.२६ ।।
तस्मादपो न रुन्धीत समुद्रं कामयन्ति ताः।
न हिनस्ति भवो देवः सदैवं योऽप्सु वर्त्तते ।। २७.२७ ।।
ततोऽब्रवीत् पुनर्ब्रह्मा तं देवं कृष्णलोहितम्।
शर्वस्त्वमिति यन्नाम तृतीयं समुदाहृतम्।
तस्य भूमिस्तृतीया तु तनुर्नाम्ना भवत्वियम् ।। २७.२८ ।।
इत्युक्ते यत् स्थिरं तस्य शरीरस्यास्थिसंज्ञितम्।
तद्विवेश ततो भूमिस्तस्माद्भूः शर्व उच्यते ।। २७.२९ ।।
तस्मात् कुर्वीत नो विद्वान् पुरीषम्मूत्रमेव वा।

न च्छायायां न सोपाने स्वच्छायां नापि मेहयेत् ।। २७.३० ।।
शिरः प्रापृत्य कुर्वीत अन्तर्द्धाय तृणैर्महीम्।
य एवं वर्त्तते भूमौ तं शर्वो न हिनस्ति वै ।। २७.३१ ।।
ततोऽब्रवीत्पुनर्ब्रह्मा तं देवं नीललोहितम्।
ईशान इति यत्प्रोक्तं चतुर्थं नाम ते मया ।। २७.३२ ।।
चतुर्थस्य चतुर्थी स्याद्वायुर्नाम्ना तनुस्तव।
इत्युक्ते यच्छरीरस्थं पञ्चधा प्राणसंज्ञितम् ।। २७.३३ ।।
विवेश तं तदा वायुरीशानो वायुरुच्यते।
तस्मादेनं परिवदेदायतं वायुमीश्वरम्।
एवं युक्तमथेशानो नैव देवो हिनस्ति तम् ।। २७.३४ ।।
ततोऽब्रवीत् पुनर्ब्रह्मा तं देवं धूम्रलोहितम्।
यत्ते पशुपतीत्युक्तं मया नामेह पञ्चमम्।
पञ्चमी पञ्चमस्यैव तनुर्नाम्नाऽग्निरस्तु ते ।। २७.३५ ।।
इत्युक्ते यच्छरीरस्थं तेजस्तस्योपसंज्ञितम्।
विवेश तत्तदा ह्यग्निस्तस्मात्पशुपतिः पतिः ।। २७.३६ ।।
चन्द्रमास्तु स्मृतः सोमस्तस्यात्मा ह्योषधीगणः।
एवं यो वर्त्तते विद्वान् सदा पर्वणि पर्वणि।
न हन्ति तं महादेव एवं वन्देत तं प्रभुम् ।। २७.३७ ।।
गोपायति दिवादित्यः प्रजा नक्तन्तु चन्द्रमाः।
एकरात्रे समेयातां सूर्य्याचन्द्रमसावुभौ।
अमावास्यानिशायान्तु तस्यां युक्तः सदा वसेत् ।। २७.३८ ।।
तत्राविष्टं सर्वमिदन्तनुभिर्नामभिः सह।
एकाकी यश्चरत्येषः सूर्य्योऽसौ चन्द्र उच्यते ।। २७.३९ ।।
सूर्य्यस्य यत् प्रकाशेन वीक्ष्यन्ते चक्षुषा प्रजाः।
शुक्लात्मा संस्थितो रुद्रः पिबत्यम्भो गभस्तिभिः ।। २७.४० ।।
अद्यते पीयते चैवाप्यन्नपानात्मकानिया।
तनुरात्मभवा सा वै देहेष्वेवोपचीयते ।। २७.४१ ।।
यया धत्ते प्रजाः सर्वाः स्थिरीभूतेन चेतसा।
पार्थिवी सा तनुस्तस्य शार्वी धारयति प्रजाः ।। २७.४२ ।।
यावत् स्थिता शरीरेषु भूतानां प्राणवृत्तिभिः।
वाय्वात्मिका तु ऐशानी सा प्राणाः प्राणिना सह ।। २७.४३ ।।
पीताशितानि पचति भूतानां जठरेषु या।
ततः पाशुपती तस्य पाचिका शक्तिरुच्यते ।। २७.४४ ।।

यानीह सुषिराणि स्युर्देहेष्वन्तर्गतानि वै।
वायोः सञ्चरणार्थाय सा भीमा चोच्यते तनुः ।। २७.४५ ।।
वैतानदीक्षितानां तु या स्थितिर्ब्रह्मवादिनाम्।
तनुरुग्रात्मिका सा तु तेनोग्रो दीक्षितः स्मृतः ।। २७.४६ ।।
यत्तु सङ्कल्पकं तस्य प्रजास्विह समं स्थितम्।
सा तनुर्म्मानसी तस्य चन्द्रमाः प्राणिषु स्थितः ।। २७.४७ ।।
नवो नवो भवति हि जायमानः पुनः पुनः।
नीयते यो यथाकामं विभुधैः पितृभिः सह।
महादेवोऽमृतात्माऽसौ ह्यम्मयश्चन्द्रमाः स्मृतः ।। २७.४८ ।।
तस्य या प्रथमा नाम्ना तनू रौद्री प्रकीर्तिता।
पत्नी सुवर्चला तस्य पुत्रस्तस्याः शनैश्वरः ।। २७.४९ ।।
भवस्य या द्वितीया तु तनुरापः स्मृता तु वै ।
तस्यो षाऽत्र स्मृता पत्नी पुत्रश्चाप्युशना स्मृतः ।। २७.५० ।।
शर्वस्य या तृतीया तु नाम भूमिस्तनुः स्मृता।
पत्नी तस्य विकेशीति पुत्रश्चाङ्गारकः स्मृतः ।। २७.५१ ।।
ईशानस्य चतुर्थस्य स्वर्गतस्य च या तनुः।
तस्य पत्नी शिवा नाम पुत्रश्चास्य मनोजवः ।। २७.५२ ।।
नाम्ना पशुपतेर्या तु तनुरग्निर्द्विजैः स्मृता।
तस्य पत्नी स्मृता स्वाहा स्कन्दश्चापि सुतः स्मृतः ।। २७.५३ ।।
नाम्ना षष्ठस्य या भीमा तनुराकाश उच्यते।
दिशः पत्न्यः स्मृतास्तस्य स्वर्गश्चास्य सुतः स्मृतः ।। २७.५४ ।।
उग्रा तनुः सप्तमी या दीक्षितैर्ब्राह्मणैः स्मृता।
दीक्षा पत्नी स्मृता तस्य सन्तानः पुत्र उच्यते ।। २७.५५ ।।
नाम्नाऽष्टमस्य महतस्तनुर्या चन्द्रमाः स्मृतः।
पत्नी तु रोहिणी तस्य पुत्रश्चास्य बुधः स्मृतः ।। २७.५६ ।।
इत्येतास्तनवस्तस्य नामभिः परिकीर्तिताः।
तास्तु वन्द्य नमस्याश्च प्रतिनाम तनूषु वै ।। २७.५७ ।।
भक्तेः सूर्येऽप्सु पृथिव्यां वाय्वग्निव्योमदीक्षिते।
तथा च वै चन्द्रमसि तनुभिर्नामभिः सह।
प्रजावानेति सायुज्यमीश्वरस्य नरो हि सः ।। २७.५८ ।।
इत्येतद्वो मयाख्यातं गुह्यं भीमस्य तद्यशः।
शन्नोऽस्तु द्विपदे नित्यं शन्नोऽस्तु च चतुष्पदे ।। २७.५९ ।।
एतत् प्रोक्तं निदानं वस्तनूनां नामभिः सह।

महादेवस्य देवस्य भृगोस्तु श्रृणुत प्रजाः ।। २७.६० ।।
इति श्रीमहापुराणे वायुप्रोक्ते महादेवतनुवर्णनं नाम सप्तविशोऽध्यायः ।। २७ ।।

**।।सूत उवाच।।**

भृगोः ख्यातिर्विजज्ञेऽथ ईश्वरौ सुखदुःखयोः।

शुभाशुभप्रदातारौ सर्वप्राणभृतामिह।

देवौ धाताविधातारौ मन्वन्तरविचारिणौ ।। २८.१ ।।

तयोर्ज्येष्ठा तु भगिनी देवी श्रीर्लोकभाविनी।

सा तु नारायणं देवं पतिमासाद्य शोभनम्।

नारायणात्मजौ साध्वी बलोत्साहौ व्यजायत ।। २८.२ ।।

तस्यास्तु मानसाः पुत्रा ये चान्ये दिव्यचारिणः।

ये वहन्ति विमानानि देवानां पुण्यकर्मणाम् ।। २८.३ ।।

द्वे तु कन्ये स्मृते भार्य्ये विधातुर्धातुरेव च।

आयतिर्नियतिश्चैव तयोः पुत्रौ दृढव्रतौ ।। २८.४ ।।

पाण्डुश्चैव मृकण्डुश्च ब्रह्मकोशौ सनातनौ।

मनस्विन्यां मृकण्जोश्च मार्क्कण्डेयो बभूव ह ।। २८.५ ।।

सुतो वे दशिरास्तस्य मूर्द्धन्यायामजायत।

पीवर्य्यां वेदशिरसः पुत्रा वंशकराः स्मृताः।

मार्क्कण्डेया इति ख्याता ऋषयो वेदपारगाः ।। २८.६ ।।

पाण्डोश्च पुण्डरीकायां द्युतिमानात्मजोऽभवत्।

उत्पन्नौ द्युतिमन्तश्च सृजवानश्च तावुभौ।

तयोः पुत्राश्च पौत्राश्च भार्गवाणां परस्परम्।

स्वायम्भुवेऽन्तरेऽतीते मरीचेः श्रृणुत प्रजाः ।। २८.७ ।।

पत्नी मरीचेः सम्भूतिर्विजज्ञे सात्मसम्भवम्।

प्रजायते पूर्णमासं कन्याश्वेमा विबोधत।

कुष्टिः पृष्टिस्त्विषा चैव तथा चापचितिः शुभा ।। २८.८ ।।

पूर्णमासः सरस्वत्यां द्वौ पुत्रावुदपादयत्।

विरजञ्चैव धर्मिष्ठं पर्व्वसञ्चैव तावुभौ ।। २८.९ ।।

विरजस्यात्मजो विद्वान् सुधामा नाम विश्रुतः।

सुधामसुतवैराजः प्राच्यान्दिशि सममाश्रितः ।। २८.१० ।।

लोकपालः सुधर्म्मात्मा गौरीपुत्रः प्रतापवान् ।

पर्वसः सर्वगणानां प्रविष्टः स महायशाः ।। २८.११ ।।

पर्वसः पर्वसायान्तु जनयामास वै सुतौ।

यज्ञवामञ्च श्रीमन्तं सुतं काश्यपमेव च।

तयोर्गोत्रकरौ पुत्रौ तौ जातौ धर्मनिश्वितौ ।। २८.१२ ।।

स्मृतिश्वाङ्गिरसः पत्नी जज्ञे तावात्मसम्भवौ।

पुत्रौ कन्याश्वतस्रश्च पुण्यास्ता लोकविश्रुताः ।। २८.१३ ।।
सिनीवाली कुहूश्चैव राका चानुमतिस्तथा।
तथैव भरताग्निञ्च कीर्त्तिमन्तञ्च तावुभौ ।। २८.१४ ।।
अग्नेः पुत्रन्तु पर्जन्यं संहूती सुषुवे प्रभुम्।
हिरण्यरोमा पर्जन्यो मारीच्यामुदपादयत्।
आभूतसंप्लवस्थायी लोकपालः सवै स्मृतः ।। २८.१५ ।।
जज्ञे कीर्तिमतश्चापि धेनुका तावकल्मषौ।
वरिष्ठं धृतिमन्तञ्चाप्युभावङ्गिरसां वरौ ।। २८.१६ ।।
तयोः पुत्राश्च पौत्राश्च येऽतीता वै सहस्रशः।
अनसूयापि जज्ञे तान् पुलहस्य प्रजापतेः ।। २८.१७ ।।
कन्याञ्चैव श्रुतिं नाम माता शङ्खपदस्य या।
कर्दमस्य तु या पत्नी पुलहस्य प्रजापतेः ।। २८.१८ ।।
सत्यनेत्रश्च हव्यश्च आपोमूर्तिः शनीवरः।
सोमश्च पञ्चमस्तेषामासीत् स्वायम्भुवेऽन्तरे।
यामेऽतीते सहातीताः पञ्चात्रेयाः प्रकीर्तिताः ।। २८.१९ ।।
तेषां पुत्राश्च पौत्राश्च ह्यत्रिणा वै महात्मना।
स्वायम्भुवेऽन्तरे यामे शतशोऽथ सहस्रशः ।। २८.२० ।।
प्रीत्यां पुलस्त्यभार्यायां दत्तालिस्तत्सूतोऽभवत्।
पूर्वजन्मनि सोऽगस्त्यः स्मृतः स्वायम्भुवेऽन्तरे।
मध्यमो देवबाहुश्च विनीतो नाम ते त्रयः ।। २८.२१ ।।
स्वसा यवीयसी तेषां सद्वती नाम विश्रुता।
पर्जन्यजननी शुभ्रा पत्नी त्वग्नेः स्मृता शुभा
पौलस्त्यस्य ऋषेश्चापि प्रीतिपुत्रस्य धीमतः।
दत्तालेः सुषुवे पत्नी सुजङ्घादीन् बहून् सुतान्।
पौलस्त्या इति विख्याताः स्मृताः स्वायम्भुवेऽन्तरे ।। २८.२३ ।।
क्षमा तु सुषुवे पुत्रान् पुलहस्य प्रजापतेः।
ते नाग्निवर्चसः सर्वे येषां कीर्तिः प्रतिष्ठिता ।। २८.२४ ।।
कर्दमश्चाम्बरीषश्च सहिष्णुश्चेति ते त्रयः ।
ऋषिर्धनकपीवांश्च शुभा कन्या च पीवरी ।। २८.२५ ।।
कर्दमस्य श्रुतिः पत्नी आत्रेय्य जनयत्सुतान्।
पुत्रं शङ्खपदञ्चैव कन्यां काम्यां तथैव च ।। २८.२६ ।।
स वै शह्खपदः श्रीमान् लोकपालः प्रजापतिः।
दक्षिणस्यां दिशि रतः साम्यां दत्त्वा प्रियव्रते ।। २८.२७ ।।

काम्या प्रियव्रताल्लेभे स्वायम्भुवसमान् सुतान्।
दशकन्याद्वयञ्चैव यैः क्षत्रं सम्प्रवर्तितम् ।। २८.२८ ।।
पुत्रो धनकपीवांश्च सहिष्णुर्नाम विश्रुतः।
यशोधारी विजज्ञे वै कामदेवः सुमध्यमः ।। २८.२९ ।।
ऋतोः क्रतुसमः पुत्रो विजज्ञे सन्ततिः शुभा।
नैषां भार्यस्ति पुत्रो वा सर्वे ते ह्यूर्द्ध्व रेतसः।
षष्ट्येतानि सहस्राणि वालखिल्या इति श्रुताः ।। २८.३० ।।
अरुणस्याग्रतो यान्ति परिवार्य दिवाकरम्।
आभूतसंप्लवात्सर्वे पतङ्गसहचारिणः ।। २८.३१ ।।
स्वसारौ तु यवीयस्यौ पुण्यात्मसुमती च ते।
पर्वसस्य स्नुषे ते वै पूर्णमाससुतस्य वै ।। २८.३२ ।।
ऊर्जायान्तु वसिष्ठस्य पुत्रा वै सप्त जज्ञिरे।
ज्यायसी च स्वसा तेषां पुण्डरीका सुमध्यमा ।। २८.३३ ।।
जननी सा द्युतिमतः पाण्डोस्तु महिषी प्रिया ।
अस्यां त्विमे यवीयांसो वासिष्ठाः सप्त विश्रुताः ।। २८.३४ ।।
रजः पुत्रोऽर्द्धबाहुश्च सवनश्चाधनश्च यः।
सुतपाः शुक्ल इत्येते सर्वे सप्तर्षयः स्मृताः ।। २८.३५ ।।
रजसो वाप्यजनयन्मार्कण्डेयी यशस्विनी।
प्रतीच्यां दिशि राजन्यं केतुमन्तं प्रजापतिम् ।। २८.३६ ।।
गोत्राणि नामभिस्तेषां वासिष्ठानां महात्मनाम्।
स्वायम्भुवेन्तरेऽतीतास्त्वग्नेस्तु श्रृणुत प्रजाः ।। २८.३७ ।।
इत्येष ऋषिसर्गस्तु सानुबन्धः प्रकीर्त्तितः।
विस्तरेणानुपूर्व्या चाप्यग्नेस्तु श्रृणुत प्रजाः ।। २८.३८ ।।
इति श्रीमहापुराणे वायुप्रोक्ते ऋषिवंशानुकीर्त्तनं नामाष्टाविंशोऽध्यायः ।। २८ ।।

योऽसावग्निरभिमानी ह्यासीत् स्वायम्भुवेऽन्तरे।
ब्रह्मणो मानसः पुत्रस्तस्मात्स्वाहा व्यजायत ।। २९.१ ।।
पावकः पवमानश्च पावमानश्च यः स्मृतः।
शुचिः शौरस्तु विज्ञेयः स्वाहापुत्रास्त्रयस्तु ते ।। २९.२ ।।
निर्म्मथ्य पवमानस्तु शुचिः शौरस्तु यः स्मृतः.
पावका वैद्युताश्चैव तेषां स्थानानि यानि वै ।। २९.३ ।।
पवमानात्मजश्चैव कव्यवाहन उच्यते।
पावकात् सहरक्षस्तु हव्यवाहः शुचेः सुतः ।। २९.४ ।।
देवानां हव्यवाहोऽग्निः पितॄणां कव्यवाहनः।
सहरक्षोऽसुराणान्तु त्रयाणान्तु त्रयोऽग्नयः ।। २९.५ ।।
एतेषां पुत्रपौत्रास्तु चत्वारिंशन्नवैव तु।
वक्ष्यामि नामतस्तेषां प्रविभागं पृथक् पृथक् ।। २९.६ ।।
वैद्युतो लौकिकाग्निस्तु प्रथमो ब्रह्मणः सुतः।
ब्रह्मौदनाग्निस्तत्पुत्रो भरतो नाम विश्रुतः ।। २९.७ ।।
अथर्वा तु भृगुर्ज्ञेयोऽप्यङ्गिराऽथर्वणः सुतः।
तस्मात् स लौकिकाग्निस्तु दध्यङ्चाथर्वणः सुतः ।। २९.९ ।।
अथ यः पवमानोऽग्निर्निर्मन्थाः कविभिः स्मृतः।
स ज्ञेयो गार्हपत्योऽग्निस्ततः पुत्रद्वयं स्मृतम् ।। २९.१० ।।
शंस्यस्त्वाहवनीयोऽग्निर्यः स्मृतो हव्यवाहनः।
द्वितीयस्तु सुतः प्रोक्तः शुक्रोऽग्निर्यः प्रणीयते ।। २९.११ ।।
तथा सभ्यावसथ्यौ वै शंस्यस्याग्नेः सुतावुभौ।
शंस्यास्तु षोडश नदीश्वकमे हव्यवाहनः।
योऽसावाहवनीयोऽग्निरभिमानी द्विजैः स्मृतः ।। २९.१२ ।।
कावेरीं कृष्णवेणीञ्च नर्मदां यमुनान्तथा।
गोदावरीं वितस्ताञ्च चन्द्रभागामिरावतीम् ।। २९.१३ ।।
विपाशां कौशिकीञ्चैव शतद्रुं सरयून्तथा।
सीतां सरस्वतीञ्चैव ह्लादिनीं पावनीं तथा ।। २९.१४ ।।
तासु षोडशधात्मानं प्रविभज्य पृथक् पृथक् ।
आत्मानं व्यदधात्तासु धिष्णीष्वथ बभूव सः ।। २९.१५ ।।
धिष्णयो दिव्यभिचारिण्यस्तासूत्पन्नास्तु धिष्णयः।
धिष्णीषु जज्ञिरे यस्माद्धिष्णयस्तेन कीर्त्तिताः ।। २९.१६ ।।
इत्येते वै नदीपुत्रा धिष्णीष्वेव विजज्ञिरे।
तेषां विहरणीया ये उपस्थेयाश्च येऽग्नयः।

तान् श्रृणुध्वं समासेन कीर्त्यमानान् यथा तथा ।। २९.१७ ।।
ऋतुः प्रवाहणोऽग्नीध्रः पुरस्ताद्धिष्णयोऽपरो। तु. शुक्लयजुर्वेदः ५.३१,ब्रह्माण्डपुराणम् १.२.१२.२७
विधीयन्ते यथास्थानं सौत्येऽह्नि सवनक्रमात् ।। २९.१८ ।।
अनिर्द्देश्यान्यवाच्यानामग्नीनां श्रृणुत क्रमम्।
सम्राडग्निः कृशानुर्यो द्वितीयोत्तरवेदिकः ।। २९.१९ ।।
सम्राडग्निः स्मृता ह्यष्टौ उपतिष्ठन्ति तान् द्विजाः.
अधस्तात्पर्षदन्यस्तु द्वितीयः सोऽत्र दृश्यते ।। २९.२० ।।
प्रतद्वोचे नभो नाम चत्वारि स विभाव्यते।
ब्रह्मज्योतिर्वसुर्नाम ब्रह्मस्थाने स उच्यते ।। २९.२१ ।।
हव्यसूर्य्याद्यसंसृष्टः शामित्रे स विभाव्यते।
विश्वस्याथ समुद्रोग्निर्ब्रह्मस्थाने स कीर्त्त्यते ।। २९.२२ ।।
ऋतुधामा च सुज्योतिरौदुम्बर्य्यां स कीर्त्त्यते।
ब्रह्मज्योतिर्वसुर्नाम ब्रह्मस्थाने स उच्यते ।। २९.२३ ।।
अजैकपादुपस्थेयः स वै शालामुखीयकः।
अनुद्देश्योप्यहिर्बुध्न्यः सोऽग्निर्गृहपतिः स्मृतः ।। २९.२४ ।।
शस्यस्यैव सुताः सर्व्वे उपस्थेया द्विजैः स्मृताः।
ततो विहरणीयांश्च वक्ष्याम्यष्टौ तु तत्सुतान् ।। २९.२५ ।।
क्रतुप्रवाहणोऽग्नीध्रस्तत्रस्था धिष्णयोऽपरे।
विह्रियन्ते यथास्थानं सौत्योह्नि सवनक्रमात् ।। २९.२६ ।। तु. ब्रह्माण्डपुराणम् १.२.१२.२७, वाजसनेयि संहिता ५.३१
पौत्रेयस्तु ततो ह्यग्निः स्मृतो यो हव्यवाहनः।
शान्तिस्वाग्निः प्रचेतास्तु द्वितीयः सत्य उच्यते ।। २९.२७ ।।
तथाग्निर्विश्वदेवस्तु ब्रह्मस्थाने स उच्यते।
अवक्षुरच्छावाकस्तु बुवः स्थाने विभाव्यते ।। २९.२८ ।।
उशीराग्निः सवीर्यस्तु नैष्ठीयः संविभाव्यते।
अष्टमस्तु व्यरत्तिस्तु मार्जालीयः प्रकीर्त्तितः ।। २९.२९ ।।
धिष्ण्या विहरणीया ये सौम्येनान्येन चैव हि।
तयोर्यः पावको नाम स चापां गर्भ उच्यते ।। २९.३० ।।
अग्निः सोऽवभृथो ज्ञेयः सम्यक् प्राप्याप्सु हूयते।
हृच्छयस्तत्सुतो ह्यग्निर्जठरे यो नृणां स्थितः ।। २९.३१ ।।
मन्युमान् जाठरस्याग्नेर्विद्वानग्निः सुतः स्मृतः।
परस्परोच्छ्रितः सोऽग्निर्भूतानां ह विभुर्महान् ।। २९.३२ ।।
पुत्रः सोऽग्नेर्मन्युमतो घोरः संवर्त्तकः स्मृतः ।

पिबन्नपः स वसति समुद्रे वढवामुखः ।। २९.३३ ।।
समुद्र वासिनः पुत्रः सहरक्षो विभाव्यते।
सहरक्षसुतः क्षामो गृहाणि स दहेन्नृणाम् ।। २९.३४ ।।
क्रव्यादोऽग्निः सुतस्तस्य पुरुषानत्ति यो मृतान् ।
इत्येते पावकस्याग्नेः पुत्रा ह्येवं प्रकीर्तिताः ।। २९.३५ ।।
ततः शुचेस्तु यैः सौरेर्गन्धर्वैरसुरावृतैः।
मथितो यस्त्वरण्यां वै सोऽग्निरग्निः समिध्यते ।। २९.३६ ।।
आयुर्नामाथ भगवान् पशौ यस्तु प्रणीयते।
आयुषो महिमान् पुत्रः स शावान्नामतः सुतः ।। २९.३७ ।।
पाकयज्ञेष्वभिमानी सोऽग्निस्तु सवनः स्मृतः।
पुत्रश्च सवनस्याग्नेरद्भुतः स महायशाः ।। २९.३८ ।।
विविचिस्त्वद्भुतस्यापि पुत्रोऽग्नेः स महान् स्मृतः।
प्रायश्चित्तेऽथ भीमानां हुतं भुङ्क्ते हविः सदा ।। २९.३९ ।।
विविचेस्तु सुतो ह्यर्को योऽग्निस्तस्य सुतास्त्विमे।
अनीकवान् वासृजवांश्च रक्षोहा पितृकृत्तथा।
सुरभिर्वसुरत्नादौ प्रविष्टो यश्च रुक्मवान् ।। २९.४० ।।
शुचेरग्नेः प्रजा वह्नयस्तु चतुर्द्दश।
इत्येते वह्नयः प्रोक्ताः प्रणीयन्तेऽध्वरेषु ये ।। २९.४१ ।।
आदिसर्गे ह्यतीता वै यामैः सह सुरोत्तमैः।
स्वायम्भु वेऽन्तरे पूर्वमग्नयस्तेऽभिमानिनः ।। २९.४२ ।।
एते विहरणीयास्तु चेतनाचेतनेष्विह।
स्थानाभिमानिनो लोके प्रागासन् हव्यवाहनाः ।। २९.४३ ।।
काम्यनैमित्तिकाजस्रेष्वेते कर्मस्ववस्थिताः।
पूर्वमन्वन्तरेऽतीते शुक्लैर्यामैः सुतैः सह।
देवैर्महात्मभिः पुण्यैः प्रथमस्यान्तरे मनोः ।। २९.४४ ।।
इत्येतानि मयोक्तानि स्थानानि स्थानिनश्च ह ।
तैरेव तु प्रसङ्ख्यातमतीतानागतेष्वपि ।। २९.४५ ।।
मन्वन्तरेषु सर्वेषु लक्षणं जातवेदसाम्।
सर्वे तपस्विनो ह्येते सर्वे ह्यवभृथा स्तथा।
प्रजानां पतयः सर्वे ज्योतिष्मन्तश्च ते स्मृताः ।। २९.४६ ।।
स्वारोचिषादिषु ज्ञेयाः सावर्ण्यन्तेषु सप्तसु।
मन्वन्तरेषु सर्वेषु नानारूपप्रयोजनैः ।। २९.४७ ।।
वर्त्तन्ते वर्त्तमानैश्च देवैरिह सहाग्नयः।

अनागतैः सुरैः सार्द्धं वर्त्तन्तेऽनागताग्नयः ।। २९.४८ ।।
इत्येष निनयोऽग्नीनां मया प्रोक्तो यथातथम्।
विस्तरेणानुपूर्व्या च पितॄणां वक्ष्यते ततः ।। २९.४९ ।।
इति श्रीमहापुराणे वायुप्रोक्ते अग्निवंशवर्णनं नामोनत्रिंशोऽध्यायः ।। २९ ।।

**।।सूत उवाच।।**

ब्रह्मणः सृजतः पुत्रान् पूर्वे स्वायम्भुवेऽन्तरे।
अम्भांसि जज्ञिरे तानि मनुष्यासुरदेवताः ।। ३०.१ ।।
पितृवन्मन्यमानस्य जज्ञिरे पितरोऽस्य वै।
तेषान्निसर्गः प्रागुक्तो विस्तरस्तस्य वक्ष्यते ।। ३०.२ ।।
देवासुरमनुष्याणां दृष्ट्वा देवोऽभ्यभाषत।
पितृवन्मन्यमानस्य जज्ञिरे वोपयक्षिताः ।। ३०.३ ।।
मध्वादयः षड़ृतवस्तान् पितॄन् परिचक्षते।
ऋतवः पितरो देवा इत्येषा वैदिकी श्रुतिः ।। ३०.४ ।।
मन्वन्तरेषु सर्वेषु ह्यतीतानागतेष्वपि।
एते स्वायम्भुवे पूर्वमुत्पन्ना ह्यन्तरे शुभे ।। ३०.५ ।।
अग्निष्वात्ताः स्मृता नाम्ना तथा बर्हिषदश्च वै।
अयज्वानस्तथा तेषामासन् वै गृहमेधिनः।
अग्निष्वात्ताः स्मृतास्ते वै पितरोऽनाहिताग्नयः ।। ३०.६ ।।
यज्वानस्तेषु ये ह्यासन् पितरः सोमपीथिनः।
स्मृता बर्हिषदस्ते वै पितरस्त्वग्निहोत्रिणः।
ऋतवः पितरो देवाः शास्त्रेऽस्मिन्निश्चयो मतः ।। ३०.७ ।।
मधुमाधवौ रसौ ज्ञेयौ शुचिशुक्रौ तु शुष्मिणौ।
नभश्चैव नभस्तश्च जीवावेतावुदाहृतौ ।। ३०.८ ।।
इषश्चैव तथोर्जश्च सुधावन्तावुदाहृतौ।
सहश्चैव सहस्यश्च मन्युमन्तौ तु तौ स्मृतौ।
तपश्चैव तपस्यश्च घोरावेतौ तु शैशिरौ ।। ३०.९ ।।
कालावस्थास्तु षट् तेषाम्मासाख्या वै व्यवस्थिताः।
त इमे ऋतवः प्रोक्ताश्चेतनाचेतनास्तु वै ।। ३०.१० ।।
ऋतवो ब्रह्मणः पुत्रा विज्ञेयास्तेऽभिमानिनः।
मासार्द्धमासस्थानेषु स्थानञ्च ऋतवोर्त्तवाः ।। ३०.११ ।।
स्थानानां व्यतिरेकेण ज्ञेयाः स्थानाभिमानिनः।
अहोरात्रञ्च मासाश्च ऋतवश्चायनानि च ।। ३०.१२ ।।
संवत्सराश्च स्थानानि कालावस्थाभिमानिनः।
निमेषाश्च कलाः काष्ठा मुहूर्त्ता वै दिनक्षपाः ।। ३०.१३ ।।
एतेषु स्थानिनो ये तु कालावस्थास्ववस्थिताः।
तन्मयत्वात्तदात्मानस्तान् वक्ष्यामि निबोधत ।। ३०.१४ ।।
पर्व्वण्यास्तिथयः सन्ध्याः पक्षा मासार्द्धसंज्ञिताः।

द्वावर्द्धमासौ मासस्तु द्वौ मासावृतुरुच्यते ।। ३०.१५ ।।
ऋतुत्रयं चायनं द्वे अयने दक्षिणोत्तरे ।
संवत्सरः सुमेकस्तु स्थानान्येतानि स्थानिनाम् ।। ३०.१६ ।।
ऋतवः सुमेकपुत्रा विज्ञेया ह्यष्टधा तु षट्।
ऋतुपुत्राः स्मृताः पञ्च प्रजास्त्वार्त्तवलक्षणाः ।। ३०.१७ ।।
यस्माच्चैवार्त्तवेयास्तु जायन्ते स्थाणुजङ्गमाः।
आर्त्तवाः पितरश्चैव ऋतवश्च पितामहाः ।। ३०.१८ ।।
सुमेकात्तु प्रसूयन्ते म्रियन्ते च प्रजातयः।
तस्मात् स्मृतः प्रजानां वै सुमेकः प्रपितामहः ।। ३०.१९ ।।
स्थानेषु स्थानिनो ह्येते स्थानात्मानः प्रकीर्तिताः।
तदाख्यास्तन्मयत्वाच्च तदात्मनश्च ते स्मृताः ।। ३०.२० ।।
प्रजापतिः स्मृतो यस्तु स तु संवत्सरो मतः।
संवत्सरः स्मृतो ह्यग्निः ऋतमित्युच्यते द्वजैः ।। ३०.२१ ।।
ऋतात्तु ऋतवो यस्माज्जज्ञिरे ऋतवस्ततः।
मासाः षड़तवो ज्ञेयास्तेषां पञ्चार्त्तवाः सुताः ।। ३०.२२ ।।
द्विपदाञ्चतुष्पदाञ्चैव पक्षिसंसर्पतामपि।
स्थावराणां च पञ्चानां पुष्पं कालार्त्तवं स्मृतम् ।। ३०.२३ ।।
ऋतुत्वमार्त्तवत्वञ्च पितृत्वञ्च प्रकीर्तितम्।
इत्येते पितरो ज्ञेया ऋतवश्चार्त्तवाश्च ये ।। ३०.२४ ।।
सर्वभूतानि तेभ्योऽथ ऋतुकालाद्विजज्ञिरे।
तस्मादेतेऽपि पितर आर्त्तवा इति नः श्रुतम् ।। ३०.२५ ।।
मन्वन्तरेषु सर्वेषु स्थिताः कालाभिमानिनः।
स्थानाभिमानिनो ह्येते तिष्ठन्तीह प्रसंयमात् ।। ३०.२६ ।।
अग्निष्वात्ता बर्हिषदः पितरो द्विविधाः स्मृताः।
जज्ञाते च पितृभ्यस्तु द्वे कन्ये लोकविश्रुते ।। ३०.२७ ।।
मेना च धारिणी चैव याभ्यां विश्वमिदं धृतम्।
पितरस्ते निजे कन्ये धर्मार्थं प्रददुः शुभे।
त उभे व्रह्मवादिन्यौ योगिन्यौ चैव ते उभे ।। ३०.२८ ।।
अग्निष्वात्तास्तु ये प्रोक्तास्तेषां मेना तु मानसी।
धारणी मानसी चैव कन्या बर्हिषदां स्मृता ।। ३०.२९ ।।
मेरोस्तु धारणीं नाम पत्न्यर्थं व्यसृजन् शुभाम्।
पितरस्ते बर्हिषदः स्मृता ये सोमपीथिनः ।। ३०.३० ।।
अग्निष्वात्तास्तु तां मेनां पत्नीं हिमवते ददुः।

स्मृतास्ते वै तु दौहित्रास्तद्दौहित्रान् निबोधत ।। ३०.३१ ।।
मेना हिमवतः पत्नी मैनाकं सान्वसूयत।
गङ्गा सरिद्वरा चैव पत्नी या लवणो दधेः।
मैनाकस्यानुजः क्रौञ्चः क्रौञ्चद्वीपो यतः स्मृतः ।। ३०.३२ ।।
मेरोस्तु धारणी पत्नी दिव्यौषधिसमन्वितम्।
मन्दरं सुषुवे पुत्रं तिस्रः कन्याश्च विश्रुताः ।। ३०.३३ ।।
वेला च नियतिश्चैव तृतीया चायतिः पुनः।
धातुश्चैवायतिः पत्नी विधातुर्नियतिः स्मृता ।। ३०.३४ ।।
स्वायम्भुवेऽन्तरे पूर्वन्तयोर्वै कीर्तिताः प्रजाः।
सुषुवे सागराद्वेला कन्यामेकामनिन्दिताम् ।। ३०.३५ ।।
सावर्णिना च सामुद्री पत्नी प्राचीनबर्हिषः।
सवर्णा साथ सामुद्री दशप्राचीनबर्हिषः।
सर्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः ।। ३०.३६ ।।
तेषां स्वायम्भुवौ दक्षः पुत्रत्वे जज्ञिवान् प्रभुः।
त्र्यम्बकस्याभिशापेन चाक्षुषस्यान्तरे मनोः ।। ३०.३७ ।।
एतच्छ्रुत्वा ततः सूतमपृच्छच्छांशपायनः।
उत्पन्नः स कथं दक्षो ह्यभिशापाद्भवस्य तु।
चाक्षुषस्यान्वये पूर्वं तन्नः प्रब्रूहि पृच्छताम् ।। ३०.३८ ।।
इत्युक्तः कथयामास सूतो दक्षाश्रितां कथाम्।
शांशपायनमामन्त्र्य त्र्यम्बकाच्छापकारणम् ।। ३०.३९ ।।
दक्षस्यासन् सुता ह्यष्टौ कन्या याः कीर्तिता मया।
स्वेब्यो गृहेभ्यो ह्यानाय्य ताः पिताभ्यचर्चयद्गृहे।
ततस्त्वभ्यर्चिताः सर्वा न्यवसंस्ताः पितुर्गृहे ।। ३०.४० ।।
तासां ज्येष्ठा सती नाम पत्नी या त्र्यम्बकस्य वै।
नाजुहावात्मजां तां वै दक्षो रुद्रमभिद्विषन् ।। ३०.४१ ।।
अकरोत्स नतिं दक्षे न कदाचिन्महेश्वरः।
जामाता श्वशुरे तस्मिन् स्वभावात् तेजसि स्थितः ।। ३०.४२ ।।
ततो ज्ञात्वा सती सर्वाः स्वस्रः प्राप्ताः पितृर्गृहम्।
जगाम साप्यनाहूता सती तत् स्वं पितुर्गृहम् ।। ३०.४३ ।।
ततोऽब्रवीत् सा पितरं देवी क्रोधादमर्षिता।
यवीयसीब्यो ज्यायसीं किन्तु पूजामिमां प्रभो।
असम्मतामवज्ञाय कृतवानसि गर्हिताम् ।। ३०.४४ ।।
अहं ज्येष्ठा वरिष्ठा हि न त्वसत् कर्त्तुमर्हसि।

एवमुक्तोऽब्रवीदेनां दक्षः संरक्तलोचनः ।। ३०.४५ ।।
त्वन्तु श्रेष्ठ वरिष्ठा च पूज्या बाला सदा मम।
तासां ये चैव भर्त्तारस्ते मे बहुमताः सदा ।। ३०.४६ ।।
ब्रह्नमष्ठाश्च तपिष्ठाश्च महायोगाः सुधार्मिकाः।
गुणैश्चैवाधिकाः श्लाघ्याः सर्वे ते त्र्यम्बकात्सति ।। ३०.४७ ।।
वसिष्ठोऽत्रिः पुलस्त्यश्च अङ्गिराः पुलहः क्रतुः।
भृगुर्मरीचिश्च तथा श्रेष्ठा जामातरो मम ।। ३०.४८ ।।
तस्यात्मा स च ते शर्वो भक्ता चासि हि तं सदा।
तेन त्वां न बुभूषामि प्रतिकूलो हि मे भवः ।। ३०.४९ ।।
इत्युवाच तदा दक्षः संप्रमूढेन चेतसा।
शापार्थमात्मनश्चैव ये चोक्ताः परमर्षयः ।। ३०.५० ।।
तथोक्ता पितरं सा वै क्रुद्धा देवीदमब्रवीत् ।
वाङ्मनःकर्मभिर्यस्माददुष्ठां मां विगर्हसे।
तस्मात्त्यजाम्यहन्देहमिदन्तात तवात्मजम् ।। ३०.५१ ।।
ततस्तेनावमानेन सती दुःखादमर्षिता।
अब्रवीद्वचनं तेवी नमस्कृत्य महेश्वरम् ।। ३०.५२ ।।
यत्राहमुपपत्स्येहं पुनर्देहेन भास्वता।
तत्राप्यहमसंमूढा सम्भूता धार्मिकी पुनः।
गच्छेयं धर्मपत्नीत्वं त्र्यम्बकस्यैव धर्मतः ।। ३०.५३ ।।
तत्रैवाथ समासीना युक्तात्मानं समादधे।
धारयामास चाग्नेयीं धारणां मनसात्मनः ।। ३०.५४ ।।
तत आग्नेयीसमुत्थेन वायुना समुदीरितः।
सर्वाङ्गेभ्यो विनिः सृत्य वह्निर्भस्म चकार ताम् ।। ३०.५५ ।।
तदुपश्रुत्य निधनं सत्या देवोऽथ शूलधृक्।
संवादञ्च तयोर्बुद्ध्वा याथातथ्येन शङ्करः।
दक्षस्याथ ऋषीणाञ्च चुकोप भगवान् प्रभुः ।। ३०.५६ ।।
यस्मादवमता दक्ष मत्कृते मान सा सती।
प्रशस्ताश्चेतराः सर्वाः स्वसुता भर्तृभिः सह ।। ३०.५७ ।।
तस्माद्वैवस्वतं प्राप्य पुनरेव महर्षयः।
उत्पत्स्यन्ते द्वितीये वै मम यज्ञे हययोनिजाः ।। ३०.५८ ।।
हुते वै ब्रह्मणा शुक्ते चाक्षुषस्यान्तरे मनोः।
अभिव्याहृत्य च ऋषीन् दक्षमभ्यगमत् पुनः ।। ३०.५९ ।।
भविता चाक्षुषो राजा चाश्रुषस्य समन्वये।

प्राचीनबर्हिषः पौत्रः पुत्रश्चैव प्रचेतसः ।। ३०.६० ।।
दक्ष इत्येव नाम्ना त्वं मार्षायां जनयिष्यसि।
कन्यायां शाखिनाञ्चैव प्राप्ते वै चाक्षुषेऽन्तरे ।। ३०.६१ ।।
**।।दक्ष उवाच।।**
अहं तत्रापि ते विघ्नमाचरिष्यामि दुर्मते।
धर्मार्थकामयुक्तेषु कर्मस्विह पुनः पुनः ।। ३०.६२ ।।
यस्मात् त्वं मत्कृते क्रूरमृषीन् व्याहृतवानसि।
तस्मात्सार्द्धं सुरैर्यज्ञे न त्वां यक्ष्यन्ति वै द्विजाः ।। ३०.६३ ।।
हुत्वाहुतिं ततः क्रूरः अपस्त्यक्ष्यन्ति कर्मसु।
इहैव वत्स्यसि तथा दिवं हित्वा युगक्षयात् ।। ३०.६४ ।।
**।।रुद्र उवाच।।**
सर्वेषामेव लोकानां भूर्लोकस्त्वादिरुच्यते।
तमहं धारयिष्यामि निदेशात् परमेष्ठिनः ।। ३०.६५ ।।
अस्यां क्षितौ वृता लोकाः सर्वे तिष्ठन्ति भास्कराः।
तानहं धारयामीह सततं न तवाज्ञया ।। ३०.६६ ।।
चातुर्वर्ण्यं हि देवानां ते चाप्येकत्र भुञ्जते।
नाहं तैः सह भोक्ष्यामि ततो दास्यन्ति ते पृथक्।
ततो देवैः स तैः सार्द्धं नेज्यते पृथगिज्यते ।। ३०.६७ ।।
ततोऽभिव्याहृतो दक्षो रुद्रेणामिततेजसा।
स्वायम्भुवेऽन्तरे त्यक्त्वा उत्पन्नो मानुषेष्विह ।। ३०.६८ ।।
ज्ञात्वा गृहपतिं दक्षं ज्ञानानामीश्वरं प्रभुम्।
दक्षो नाम महायज्ञैः सोऽयजद्दैवतैः सह ।। ३०.६९ ।।
अथ देवी सती या तु प्राप्ते वैवस्वतेऽन्तरे।
मैनायां तामुमां देवीं जनयामास शैलराट् ।। ३०.७० ।।
सा तु देवी सती पूर्वं ततः पश्चादुमाऽभवत्।
सह व्रता भवस्यैषा न तया मुच्यते भवः।
यावदिच्छति संस्थातुं प्रभुर्मन्वन्तरेष्विह ।। ३०.७१ ।।
मारीचं कश्यपं देवी यथाहितिरनुव्रता।
साध्यं नारायणं श्रीस्तु मघवन्तं शची यथा ।। ३०.७२ ।।
विष्णुं कीर्ती रुचिः सूर्यं वसिष्ठञ्चाप्यरून्धती।
नैतास्तु विजहत्येतान् भर्तॄन् देव्यः कथंचन।
आवर्त्तमानकल्पेषु पुनर्जायन्ति तैः सह ।। ३०.७३ ।।
एवं प्राचेतसो दक्षो जज्ञे वै चाक्षुषेऽन्तरे।

प्राचीनबर्हिषः पौत्रः पुत्रश्चैव प्रचेतसः ।। ३०.७४ ।।
दशभ्यस्तु प्रचेतोभ्यो मार्षायाञ्च पुनर्नृपः।
जज्ञे रुद्राभिशापेन द्वितीयेऽस्मिन्निति श्रुतिः ।। ३०.७५ ।।
भृग्वादयस्तु ते सर्वे जज्ञिरे वै महर्षयः।
आद्ये त्रेतायुगे पूर्वं मनोर्वैवस्वतस्य ह।
देवस्य महतो यज्ञे रुद्राभिशापेन द्वितीयेऽस्मिन्निति श्रुतिः ।। ३०.७६ ।।
इति सानुशयोऽह्यासीत्तयोर्जात्यन्तरागतः।
प्रजापतेस्तु दक्षस्य त्र्यम्बकस्य च धीमतः ।। ३०.७७ ।।
तस्मान्नानुशयः कार्यो वैरिष्विह कदाचन।
जात्यन्तरगतस्यापि भावितस्य शुभाशुभैः।
जन्तुं न मुञ्चति ख्यातिस्तत्र कार्यं विजानता ।। ३०.७८ ।।
**।।ऋषय ऊचुः।।**
प्राचेतसस्य दक्षस्य कथं वैवस्वतेऽन्तरे।
विनाशामगमत् सूत हयमेधः प्रजापतेः ।। ३०.७९ ।।
देव्या मृत्युं कृतं मत्वा क्रुद्धं सर्वात्मकं प्रभुम्।
कथं प्रसादयद्दक्षः स यज्ञः साधितः कथम्।
एतद्वेदितुमिच्छामस्तन्नो ब्रूहि यथातथम् ।। ३०.८० ।।
**।।सूत उवाच।।**
पूरा मेरोर्द्विजश्रेष्ठाः श्रृङ्गं त्रैलोक्यविश्रुतम्।
ज्योतिष्कं नाम सावित्रं सर्वरत्नविभूषितम् ।। ३०.८१ ।।
अप्रमेयमनाधृष्यं सर्वलोकनमस्कृतम्।
तस्मिन् देवो गिरिश्रेष्ठे सर्वधातु विभूषिते।
पर्यङ्क इव विभ्राजन्नुपविष्टो बभूव ह ।। ३०.८२ ।।
शैलराजसुता चास्य नित्यं पार्श्वस्थिताऽभवत्।
आधित्याश्च महात्मानो वसवश्चामितौजसः ।। ३०.८३ ।।
तथैव च महात्मानावश्विनौ भिषजां वरौ।
तथा वैश्रवणो राजा गुह्यकैः परिवारितः ।। ३०.८४ ।।
यक्षाणामीश्वरः श्रीमान् कैलासनिलयः प्रभुः।
उपासते महात्मानं उशना च महामुनिः.
सनत्कुमारप्रमुखास्ते चैव परमर्षयः ।। ३०.८५ ।।
अङ्गिरःप्रमुखाश्चैव तथा देवर्षयोऽपरे।
विश्वावसुश्च गन्धर्वस्तथा नारदपर्वतौ ।। ३०.८६ ।।
अप्सरोगणसङ्घाश्च समाजग्मुरनेकशः।

ववौ शिवः सुखो वायुर्नानागन्धवहः शुचिः ।। ३०.८७ ।।
सर्वर्तुकुसुमोपेताः पुष्पवन्तो द्रुमा स्तथा।
तथा विद्याधराश्चैव सिद्धाश्चैव तपोधनाः ।। ३०.८८ ।।
महादेवं पशुपतिं पर्युपासन्ति तत्र वै।
भूतानि च तथान्यानि नानारूपधराण्यथ ।। ३०.८९ ।।
राक्षसाश्च महारौद्राः पिशाचाश्च महाबलाः।
बहुरूपधरा हृष्टा नानाप्रहरणोद्यताः ।। ३०.९० ।।
देवस्यानुचरास्तत्र तस्थुर्वैश्वानरोपमाः।
नन्दीश्वरश्च भगवान् देवस्यानुम ते स्थितः ।। ३०.९१ ।।
प्रगृह्य ज्वलितं शूलं दीप्यमानं स्वतेजसा।
गङ्गा च सरितां श्वेष्ठा सर्वतीर्थजलोद्भवा।
पर्युपासत तन्देवरूपिणी द्विजसत्तमाः ।। ३०.९२ ।।
एवं स भगवांस्तत्र दीप्यमानः सुरर्षिभिः।
देवैश्च सुमहाबागैर्महादेवो व्यवस्थितः ।। ३०.९३ ।।
पुरा हिमवतः पृष्ठे दक्षो वै यज्ञमारभत्।
गङ्गाद्वारे शुभे देशे ऋषिसिद्धनिषेविते ।। ३०.९४ ।।
ततस्तस्य मखे देवाः शतक्रतुपुरोगमाः।
गमनाय समागम्य बुद्धिमापेदिरे तदा ।। ३०.९५ ।।
स्वैर्विमानैर्महात्मानो ज्वलद्भिर्ज्वलनप्रभाः।
देवस्यानुमनेऽगच्छन् गङ्गाद्वार इति श्रुतिः ।। ३०.९६ ।।
गन्धर्वाप्सरसाकीर्णं नानाद्रुमलतावृतम्।
ऋषिसङ्घैः परिवृतं दक्षं धर्मभृतां वरम् ।। ३०.९७ ।।
पृथिव्यामन्तरिक्षे वा ये च स्वर्लोकवासिनः।
सर्वे प्राञ्जलयो भूत्वा उपतस्थुः प्रजापतिम् ।। ३०.९८ ।।
आदित्या वसवो रुद्राः साध्याः सह मरुद्गणैः।
जिष्णुना सहिताः सर्वे आगता यज्ञभागिनः ।। ३०.९९ ।।
ऊष्मपाः सोमपाश्चैव आज्यपा धूमपास्तथा।
अश्विनौ पितरश्चैव आगता ब्रह्मणा सह ।। ३०.१०० ।।
एते चान्ये च बहवो भूतग्रामास्तथैव च।
जरायुजाण्डजाश्चैव स्वेदजोद्भिज्जकास्तथा ।। ३०.१०१ ।।
आहूता मन्त्रतः सर्वे देवाश्च सह पत्निभिः।
विराजन्ते विमानस्था दीप्यमाना इवाग्नयः ।। ३०.१०२ ।।
तान् दष्ट्वा मन्युमाविष्टो दधीचो वाक्यमब्रवीत्।

अपूज्यपूजने चैव पूज्यानां चाप्यपूजने।
नरः पापमवाप्नोति महद्वै नात्र संशयः ।। ३०.१०३ ।।
एवमुक्त्वा तु विप्रर्षिः पुनर्दक्षमभाषत।
पूज्यन्तु पशुभर्त्तारं कस्मान्नाह्वयसे प्रभुम् ।। ३०.१०४ ।।
**।।दक्ष उवाच।।**
सन्ति मे बहवो रुद्राः शूलहस्ताः कपर्द्दिनः।
एकादशावस्थगता नान्यं वेझि महेश्वरम् ।। ३०.१०५ ।।
**।।दधीच उवाच।।**
सर्वे निमन्त्रिता देवा येन ईशो निमन्त्रितः।
यथाहं शङ्करादूर्द्ध्वं नान्यं पश्यामि दैवतम्।
तथा दक्षस्य विपुलो यज्ञोऽयं न भविष्यति ।। ३०.१०६ ।।
**।।दक्ष उवाच।।**
एतन्मखे शूर सुवर्णपात्रे हविः समस्तं विधिमन्त्रपूतम्।
विष्णोर्नयाम्यप्रतिमस्य सर्वं प्रभोर्विभो ह्याहवनीयनित्यम् ।। ३०.१०७ ।।
गतास्तु देवता ज्ञात्वा शैलराजसुता तदा।
उवाच वचनं साध्वी देवं पशुपतिं तदा ।। ३०.१०८ ।।
**।।उमोवाच।।**
भगवन् क्व गता ह्येते देवा- शक्रपुरोगमाः ।
ब्रूहि तत्त्वेन तत्त्वज्ञ संशयो मे महानयम् ।। ३०.१०९ ।।
**।।महेश्वर उवाच।।**
दक्षो नाम महाभागो प्रजानां पतिरूत्तमः।
हयमेधेन यजते तत्र यान्ति दिवौकसः ।। ३०.११० ।।
**।।देव्युवाच।।**
यज्ञमेतं महाभाग किमर्थं न गतोऽसि वै।
केन वा प्रतिषेधेन गमनं प्रतिषिध्यते ।। ३०.१११ ।।
**।।महेश्वर उवाच ।।**
सुरैरेव महाभागे सर्वमेतदनुष्ठितम्।
यज्ञेषु मम सर्वेषु न भाग उपकल्पितः ।। ३०.११२ ।।
पूर्वोपायोपपन्नेन मार्गेण वरवर्णिनि।
न मे सुराः प्रयच्छन्ति भागं यज्ञस्य धीमतः ।। ३०.११३ ।।
**।।देव्युवाच।।**
भगवन् सर्वदेवेषु प्रभावानधिको गुणैः ।
अजेयश्चाप्यधृष्यश्च तेजसा यशसा श्रिया ।। ३०.११४ ।।

अनेन तु महाभाग प्रतिषेधेन नामतः ।
अतीव दुःखमापन्ना वेपथुश्च ममानघ ।। ३०.११५ ।।
किं नाम दानं नियमन्तपो वा कुर्य्यामहं येन पतिर्ममाद्य।
लभेत भागं भगवानचिन्त्यो यज्ञस्य चार्द्धं त्वथ वा तृतीयम् ।। ३०.११६ ।।
एवं ब्रुवाणां भगवानचिन्त्यः पत्नीं प्रहृष्टः क्षुभितामुवाच।
न वेत्सि देवेशि कृशोदराङ्गि किं नाम युक्तं वचनन्तवेदम् ।। ३०.११७ ।।
अहं हि जानामि विशालनेत्रे ध्यानेन सर्वं हि वदन्ति सन्तः।
न वाद्य मोहेन महेन्द्रदेवो लोकत्रयं सर्वथा संप्रमूढम् ।। ३०.११८ ।।
मामध्वरे शंसितारः स्तुवन्ति रथन्तरे साम गायन्ति गेयम्।
मां ब्राह्मणा ब्रह्मसत्रे यजन्ते माध्वर्य्यवः कल्पयन्ते च भागम् ।। ३०.११९ ।।
**।।देव्युवाच।।**
अप्राकृतोऽपि भगवान् सर्वस्त्रीजनसंसदि।
स्तौति गोपा यते वापि स्वमात्मानं न संशयः ।। ३०.१२० ।।
**।।भगवानुवाच।।**
नात्मानं स्तौमि देवेशि पश्य त्वमुपगच्छ च।
यं स्रक्ष्यामि वरारोहे भागार्थं वरवर्णिनि ।। ३०.१२१ ।।
एवमुक्त्वा तु भगवान् पत्नीं प्राणैरपि प्रियाम्।
सोऽसृजद्भगवान्वक्त्राद्भूतं क्रोधाग्निसन्निभम् ।। ३०.१२२ ।।
सहस्रशीर्षं देवञ्च सहस्रचरणे क्षणम्।
सहस्रमुद्गरधरं सहस्रशरपाणिनम् ।। ३०.१२३ ।।
शङ्खचक्रगदापाणिं दीप्तकार्मुकधारिणम्।
परश्वसिधरं देवं महारौद्रं भयावहम् ।। ३०.१२४ ।।
घोर रूपेण दीप्यन्तं चन्द्रार्धकृतभूषणम्।
वसानं चर्म वैयाघ्रं महारुधिरनिःस्रवम् ।। ३०.१२५ ।।
दंष्ट्राकरालं विभ्रान्तं महावक्त्रं महोदरम्।
विद्युज्जिह्वं प्रलम्बोष्ठं लम्बकर्णं दुरासदम् ।। ३०.१२६ ।।
कुलिशोद्योतितकरम्भाभिर्ज्वलितमूर्द्धजम्।
ज्वालामालापरिक्षिप्तं मुक्तादामविभूषितम् ।। ३०.१२७ ।।
तेजसा चैव दीप्यन्तं युगान्तमिव पावकम्।
आकर्णदारितास्यान्तञ्चतुर्दिक्षु भयानकम् ।। ३०.१२८ ।।
महाबलं महातेजं महापुरुषमीश्वरम्।
विश्वहर्तृमहा कायं महान्यग्रोधमण्डलम्।
युगपच्चन्द्रशतवद्दीप्यन्तं मन्मथाग्निवत् ।। ३०.१२९ ।।

चतुर्महास्यं सिततीक्ष्णदंष्ट्रं महोग्रतेजोबलकौतुकाढयम्।
युगान्तसूर्य्याग्निसहस्रभासं सहस्रचन्द्रामलकान्तिकान्तम्।
प्रदीप्तसर्वौषधिमन्दराभं सुमेरुकैलासहिमाद्रितुल्यम् ।। ३०.१३० ।।
युगार्काभं महावीर्य्यं चारुनासं महाननम्।
प्रचण्डगण्डं दीप्ताक्षमग्निज्वालाविलाननम् ।। ३०.१३१ ।।
मृगेन्द्रकृत्तिवसनं महाभुजगवेष्टितम्।
उष्णीषिणं चन्द्रधरं क्वचिदुग्रं क्वचित्समम् ।। ३०.१३२ ।।
नानाकुसुममूर्द्धानं नानागन्दानुलेपनम् ।
नानारत्नविचित्राङ्गं नानाभरणभूषितम् ।। ३०.१३३ ।।
कर्णिकारस्रजं दीप्तं क्रोधादुद्भ्रान्तलोचनम्।
क्वचिन्नृत्यति चित्राङ्गं क्वचिद्वदति सुस्वरम् ।। ३०.१३४ ।।
क्वचिद्ध्यायति युक्तात्मा क्वचित्स्तूलं प्रमार्जति।
क्वचिद्गायति विश्वात्मा क्वचिद्रौति मुहुर्मुहुः ।। ३०.१३५ ।।
ज्ञानं वैराग्यमैश्वर्य्यं तपः सत्यं क्षमा धृतिः।
प्रभुत्वमात्मसंबोधो ह्यधिष्ठानगुणैर्युतः ।। ३०.१३६ ।।
जानुभ्यामवनिं गत्वा प्रणतः प्राञ्जलिः स्थितः।
आज्ञापय त्वं देवेश किं कार्य्यं करवाणि ते ।। ३०.१३७ ।।
तमुवाचाक्षिप मखं दक्षस्येह महेश्वरः।
देवस्यानुमतिं श्रुत्वा वीरभद्रो महाबलः।
प्रणम्य शिरसा पादौ देवेशस्य उमापतेः ।। ३०.१३८ ।।
ततो बन्धात् प्रमुक्तेन सिंहेनेवेह लीलया।
देव्या मन्युकृतं मत्वा हतो दक्षस्य स क्रतुः ।। ३०.१३९ ।।
मन्युना च महाभीमा भद्रकाली महेश्वरी।
आत्मनः सर्वसाक्षित्वे तेन सार्द्ध सहानुगा ।। ३०.१४० ।।
स एष भगवान् क्रुद्धः प्रेतावासकृतालयः।
वीरभद्र इति ख्यातो देव्या मन्युप्रमार्जकः ।। ३०.१४१ ।।
सोऽसृजद्रोमकूपेभ्यो रौद्रान्नाम गणेश्वरान्।
रुद्रानुगा महावीर्य्या रुद्रवीर्यपराक्रमाः ।। ३०.१४२ ।।
रुद्रस्यानुचराः सर्वे सर्वे रुद्रसमप्रभाः।
ते निपेतुस्ततस्तूर्णं शतशोऽथ सहस्रशः ।। ३०.१४३ ।।
ततः किलकिलाशब्द आकाशं पूरयन्निव।
तेन शब्देन महता त्रस्ताः सर्वे दिवौकसः।। ३०.१४४ ।।
पर्वताश्च व्यशीर्यन्त कम्पते च वसुन्धरा।

मेरुश्च धूर्णते विप्राः क्षुभ्यन्ते वरूणालयाः ।। ३०.१४५ ।।
अग्नयो नैव दीप्यन्ते न च दीप्यन्ति भस्कराः।
ग्रहा नैव प्रकाशन्ते नक्षत्राणि न तारकाः ।। ३०.१४६ ।।
ऋषयो नाभ्यभाषन्त न देवा न च दानवाः।
एवं हि तिमिरीभूतं निर्द्दहन्ति विमानिताः ।। ३०.१४७ ।।
सिंहनादं प्रमुञ्चन्ते घोररूपा महाबलाः।
प्रभञ्जन्ते परे घोरा यूपानुत्पाटयन्ति च ।। ३०.१४८ ।।
प्रमर्द्दन्ति तथा चान्ये विनृत्यन्ति तताऽपरे।
आधावन्ति प्रधावन्ति वायुवेगा मनोजवाः ।। ३०.१४९ ।।
चूर्णन्ते यज्ञपात्राणि यागस्यायतनानि च।
शीर्यमाणानि दृश्यन्ते तारा इव नभस्तलात् ।। ३०.१५० ।।
दिव्यान्नपानभक्षाणां राशयः पर्वतोपमाः।
क्षीर नद्यस्तथा चान्या घृतपायसकर्दमाः.
मधुमण्डोदका दिव्याः खण्डशर्करवालुकाः ।। ३०.१५१ ।।
षड्रसान्निवहन्त्यन्या गुडकुल्या मनोरमाः।
उच्चावचानि मांसानि भक्ष्याणि विविधानि च ।। ३०.१५२ ।।
यानि कानि च दिव्यानि लेह्यञ्चोष्यं तथापरे।
भुञ्जते विविधैर्वक्त्रैर्विलुण्ठन्ति च सर्वसः।
क्रीडन्ति विविधाकाराश्चिक्षिपुः सुरयोषितः ।। ३०.१५३ ।।
रुद्रकोपप्रयुक्तास्तु सर्वदेवैः सुरक्षितम्।
तं यज्ञमहनन् शीघ्रं रुद्रकल्पाः समीपतः ।। ३०.१५४ ।।
चक्रुरन्ये तथा नादान् सर्वभूतभयंकरान्।
छित्त्वा शिरोऽन्ये यज्ञस्य विनदन्ति भयङ्कराः ।। ३०.१५५ ।।
दक्षो दक्षपतिश्चैव देवो यज्ञपतिस्तथा।
मृगरूपेण चाकाशे प्रपलायितुमारभत् ।। ३०.१५६ ।।
वीरभद्रोऽप्रमेयात्मा ज्ञात्वा तस्य बलन्तदा।
अन्तरिक्षगतस्याशु चिच्छेदास्य शिरो महान् ।। ३०.१५७ ।।
दक्षः प्रजापतिश्चैव विनष्ट भ्रान्तचेतनः।
क्रुद्धेन वीरभद्रेण शिरः पादेन पीडितः।
जराभिभूततीव्रात्मा निपपात महीतले ।। ३०.१५८ ।।
त्रयस्त्रिंशद्देवतानां ताः कोटयो विमलात्मकाः।
पाशेनाग्निबलेनाशु बद्धाः सिंहबलेन च ।। ३०.१५९ ।।
ततो जग्मुर्महात्मानं सर्वे देवा महाबलम्।

प्रसीद भगवन् रुद्र बृत्यानां मा कुधः प्रभो ।। ३०.१६० ।।
ततो ब्रह्मादयो देवा दक्षश्चैव प्रजापतिः।
ऊचुः प्राञ्जलयो भूत्वा कथ्यतां को भवानिति ।। ३०.१६१ ।।
**।।वीरभद्र उवाच।।**
न च देवो न चादित्यो न च भोक्तुमिहागतः।
नैवद्रष्टुं हि देवेन्द्रान्न च कौतूहलान्वितः ।। ३०.१६२ ।।
दक्षयज्ञविनाशार्थं सम्प्राप्तं विद्धि मामिह।
वीरभद्र इति ख्यातं रुद्रकोपाद्विनिर्गतम् ।। ३०.१६३ ।।
भद्रकाली च विज्ञेया देव्याः क्रोधाद्विनिर्गता।
प्रेषिता देवदेवेन यज्ञान्तिकमिहागता ।। ३०.१६४ ।।
शारणं गच्छ राजेन्द्र देवं ते त्वमुमापतिम्।
वरं क्रोधोऽपि रुद्रस्य वरदानं न देवतः ।। ३०.१६५ ।।
वीरभद्रवचः श्रुत्वा दक्षो धर्म्मभृतां वरः।
तोषयामास देवेशं शूलपाणिं महेश्वरम् ।। ३०.१६६ ।।
प्रदुष्टे यज्ञवादे तु विद्रुतेषु द्विजातिषु।
तारामृगमये दीप्ते रौद्रे भीममहानले ।। ३०.१६७ ।।
शूलनिर्भिन्नवदनैः कूजद्भिः परिचारकैः।
निखातोत्पाटितैर्यूपैरपविद्धै र्य्यतस्ततः ।। ३०.१६८ ।।
उत्पतद्भिः पतद्भिश्च गृध्रैरामिषगृध्नुभिः।
पक्षपातविनिर्धूतैः शिवाशतनिनादितैः ।। ३०.१६९ ।।
प्राणापानौ सन्निरुध्य ततः स्थानेन यत्नतः।
विचार्य सर्वतो दृष्टिं बहुदृष्टिरमित्रजित् ।। ३०.१७० ।।
सहसा देवदेवेशः अग्निकुण्डादुपागतः।
चन्द्रसूर्य्यसहस्रस्य तेजः संवर्त्तकोपमम् ।। ३०.१७१ ।।
प्रहस्य चैनं भगवानिदं वचनमब्रवीत्।
नष्टस्ते ज्ञानतो दक्ष प्रीतिस्ते मयि सांप्रतम् ।। ३०.१७२ ।।
स्मितं कृत्वाब्रवीद्वाक्यं ब्रूहि किं करवाणि ते।
श्रावितञ्च समाख्याय देवानां गुरुभिः सह ।। ३०.१७३ ।।
तमुवाचाञ्जलिं कृत्वा दक्षो देवं प्रजापतिः।
भीतशङ्कितवित्रस्तः सबाष्पवदनेक्षणः ।। ३०.१७४ ।।
यदि प्रसन्नो भगवान् यदि वाहं तव प्रियः।
यदि वाहमनुग्राह्यो यदि देयो वरो मम ।। ३०.१७५ ।।
यज्जग्धं भक्षितं पीतमशितं यच्च नाशितम्।

चूर्णीकृतञ्जापविद्धं यज्ञसम्भारमीदृशम् ।। ३०.१७६ ।।
दीर्घकालेन महता प्रयत्नेन च सञ्चितम्।
तन्न मिथ्या भवेन्मह्यं वरमेतं वृणोम्यहम् ।। ३०.१७७ ।।
तथास्त्वित्याह भगवान् भगनेत्रहयो हरः।
धर्माध्यक्षं महादेवं त्र्यक्षन्तं वै प्रजापतिः ।। ३०.१७८ ।।
जानुभ्यामवनिं गत्वा दक्षो लब्ध्वा भवाद्वरम्।
नाम्नामष्टसहस्रेण स्तुतवान् वृषभध्वजम् ।। ३०.१७९ ।।
**।।दक्ष उवाच।।**
नमस्ते देवदेवेश देवारिबलसूदन।
देवेन्द्र ह्यमरश्रेष्ठ देवदानवपूजित ।। ३०.१८० ।।
सहस्राक्ष विरूपाक्ष त्र्यक्ष यक्षाधिपप्रिय।
सर्वतः पाणिपादस्त्वं सर्वतोऽक्षिशिरोमुखः।
सर्वतः श्रुतिमान् लोके सर्वानावृत्य तिष्ठसि ।। ३०.१८१ ।।
शङ्कुकर्ण महाकर्ण कुम्भकर्णार्णवालय।
गजेन्द्रकर्ण गोकर्ण पाणिकर्ण नमोऽस्तु ते ।। ३०.१८२ ।।
शतोदर शतावर्त्त शतजिह्व शतानन।
गायन्ति त्वां गायत्रिणो ह्यर्च्चयन्ति तथार्च्चिनः ।। ३०.१८३ ।।
देवदानवगोप्ता च ब्रह्मा च त्वं शतक्रतुः।
मूर्त्तीशस्त्वं महामूर्ते समुद्राम्बु धराय च ।। ३०.१८४ ।।
सर्वा ह्यस्मिन् देवतास्ते गावो गोष्ठ इवासते।
शरीरन्ते प्रपश्यामि सोममग्निं जलेश्वरम् ।। ३०.१८५ ।।
आदित्यमथ विष्णुञ्च ब्रह्माणं सबृहस्पतिम्।
क्रिया कार्य्यं कारणञ्च कर्त्ता करणमेव च ।। ३०.१८६ ।।
असच्च सदसच्चैव तथैव प्रभवाव्ययम्।
नमो भवाय शर्वाय रुद्राय वरदाय च ।। ३०.१८७ ।।
पशूनां पतये चैव नमस्त्वन्धकघातिने।
त्रिजटाय त्रिशीर्षाय त्रिशूलवरधारिणे ।। ३०.१८८ ।।
त्र्यम्बकाय त्रिनेत्राय त्रिपुरघ्नाय वै नमः।
नमश्चण्डाय मुण्डाय प्रचण्डाय धराय च ।। ३०.१८९ ।।
दण्डि(?) मासक्तकर्णाय दण्डिमुण्डाय वै नमः।
नमोऽर्द्धदण्डकेशाय निष्काय विकृताय च ।। ३०.१९० ।।
विलोहिताय धूम्राय नालग्रीवाय ते नमः।
नमस्त्वप्रतिरूपाय शिवाय च नमोऽस्तु ते ।। ३०.१९१ ।।

सूर्य्याय सूर्य्यपतये सूर्य्यध्वजपताकिने।
नमः प्रमथनाथाय वृषस्कन्धाय धन्विने ।। ३०.१९२ ।।
नमो हिरण्यगर्भाय हिरण्यकवचाय च।
हिरण्यकृतचूडाय हिरण्यपतये नमः ।। ३०.१९३ ।।
सत्रघाताय दण्डाय वर्णपानपुटाय च।
नमः स्तुताय स्तुत्याय स्तूयमानाय वै नमः ।। ३०.१९४ ।।
सर्वायाभक्ष्यभक्ष्याय सर्वभूतान्त्तरात्मने।
नमो होत्राय मन्त्राय शुक्लध्वजपताकिने ।। ३०.१९५ ।।
नमो नमाय नम्याय नमः किलिकिलाय च।
नमस्ते शयमानाय शयितायोत्थिताय च ।। ३०.१९६ ।।
स्थिताय चलमानाय मुद्राय कुटिलाय च।
नप्नो नर्त्तनशीलाय मुखवादित्रकारिणे ।। ३०.१९७ ।।
नाट्योपहारलुब्धाय गीतवाद्यरताय च।
नमो ज्येष्ठाय श्रेष्ठाय बलप्रमथनाय च ।। ३०.१९८ ।।
कलनाय च कल्पाय क्षयायोपक्षयाय च।
भीमदुन्दुभिहासाय भीमसेनप्रियाय च ।। ३०.१९९ ।।
उग्राय च नमो नित्यं नमस्ते दशबाहवे।
नमः कपालहस्ताय चिताभस्मप्रियाय च ।। ३०.२०० ।।
विभीषणाय भीष्माय भीष्मव्रतधराय च।
नमो विकृतवक्षाय खड्गजिह्वाग्रदंष्ट्रिणे ।। ३०.२०१ ।।
पक्वाममांसलुब्धाय तुम्बवीणाप्रियाय च।
नमो वृषाय वृष्याय वृष्णये वृषणाय च ।। ३०.२०२ ।।
कटङ्कटाय चण्डाय नमः सावयवाय च।
नमस्ते वरकृष्णाय वराय वरदाय च ।। ३०.२०३ ।।
वरगन्धमाल्यवस्त्राय वरातिवरये नमः ।
नमो वर्षाय वाताय छायायै आतपाय च ।। ३०.२०४ ।।
नमो रक्तविरक्ताय शोभनायाक्षमालिने।
सम्भिन्नाय विभान्नाय विविक्तविकटाय च ।। ३०.२०५ ।।
अघोररूपरूपाय घोरघोरतराय च ।
नमः शिवाय शान्ताय नमः शान्ततराय च ।। ३०.२०६ ।।
एकपाद्बहुनेत्राय एकशीर्षन्नमोऽस्तु ते।
नमो वृद्धाय लुब्धाय संविभागप्रियाय च ।। ३०.२०७ ।।
पञ्चमालार्चिताङ्गाय नमः पाशुपताय च।

नमश्चण्डाय घण्टाय घण्टया जग्धरन्ध्रिणे ।। ३०.२०८ ।।
सहसशतघण्टाय घण्टामालाप्रियाय च।
प्राणदण्डाय त्यागाय नमो हिलिहिलाय च ।। ३०.२०९ ।।
हूंहूङ्काराय पाराय हूंहूङ्कारप्रियाय च।
नमश्च शम्भवे नित्यं गिरि वृक्षकलाय च ।। ३०.२१० ।।
गर्भमांसश्रृगालाय तारकाय तराय च ।
नमो यज्ञाधिपतये द्रुतायोपद्रुताय च ।। ३०.२११ ।।
यज्ञवाहाय दानाय तप्याय तपनाय च।
नमस्तटाय भव्याय तडितां पतये नमः ।। ३०.२१२ ।।
अन्नदायान्नपतये नमोऽस्त्वन्नभवाय च।
नमः सहस्रशीर्ष्णे च सहस्रचरणाय च ।। ३०.२१३ ।।
सहस्रोद्यतशूलाय सहस्रनयनाय च।
नमोऽस्तु बालरूपाय बालरूपधराय च ।। ३०.२१४ ।।
बालानाञ्चैव गोप्त्रे च बालक्रीडनकाय च।
नमः शुद्धाय बुद्धाय क्षोभणायाक्षताय च ।। ३०.२१५ ।।
तरङ्गाङ्कितकेशाय मुक्तकेशाय वै नमः।
नमः षट्कर्मनिष्ठाय त्रिकर्मनिरताय च ।। ३०.२१६ ।।
वर्णाश्रमाणां विधिवत् पृथक्कर्मप्रवर्तिने।
मनो घोषाय घोष्याय नमः कलकलाय च ।। ३०.२१७ ।।
श्वेतपिङ्गलनेत्राय कृष्णरक्तक्षणाय च ।
धर्मार्थ काममोक्षाय क्रथाय कथनाय च ।। ३०.२१८ ।।
साङ्ख्याय साङ्ख्यमुख्याय योगाधिपतये नमः।
नमोरथ्यविरथ्याय चतुष्पथरताय च ।। ३०.२१९ ।।
कृष्णा जिनोत्तरीयाय व्यालयज्ञोपवीतिने।
ईशानवज्रसंहाय हरिकेश नमोऽस्तु ते।
अविवेकैकनाथाय व्यक्ताव्यक्त नमोऽस्तु ते ।। ३०.२२० ।।
काम कामद कामध्न धृष्टोदृप्तनिषूदन।
सर्व सर्वद सर्वज्ञ सन्ध्याराग नमोऽस्तु ते ।। ३०.२२१ ।।
महाबाल महाबाहो महासत्त्व महाद्युते।
महामेघवरप्रेक्ष महाकाल नमोऽस्तु ते ।। ३०.२२२ ।।
स्थूलजीर्णणाङ्गजटिने वल्कलाजिनधारिणे।
दीप्तशूर्याग्निजटिने वल्कलाजिनवाससे।
सहस्रसूर्यप्रतिम तपोनित्य नमोऽस्तु ते ।। ३०.२२३ ।।

उन्मादनशतावर्त्त गङ्गातोयार्द्धमूर्द्धज।
चन्द्रावर्त्त युगावर्त्त मेघावर्त्त नमोऽस्तु ते ।। ३०.२२४ ।।
त्वमन्नमन्नकर्त्ता च अन्नदश्च त्वमेव हि।
अन्नस्रष्टा च पक्ता च पक्वभुक्तपचे नमः ।। ३०.२२५ ।।
जरायुजोऽण्डजश्चैव स्वेदजोद्भिज्ज एव च।
त्वमेव देवदेवशो भूतग्रामश्चतुर्विधः ।। ३०.२२६ .
चराचरस्य ब्रह्मा त्वं प्रतिहर्त्ता त्वमेव च।
त्वमेव ब्रह्मविदुषामपि ब्रह्मविदां वरः ।। ३०.२२७ ।।
सत्त्वस्य परमा योनिरब्वायुज्योतिषां निधिः।
ऋक्सामनि तथोङ्कारमाहुस्त्वां ब्रह्मवादिनः ।। ३०.२२८ ।।
हविर्हावी हवो हावी हुवां वाचाहुतिः सदा।
गायन्ति त्वां सुरश्रेष्ठ सामगा ब्रह्मवादिनः ।। ३०.२२९ ।।
यजुर्मयो ऋङ्मयस्त्व सामाथर्वमयस्तथा।
पठ्यसे ब्रह्मविद्भिस्त्वं कल्पोपनिषदां गणैः ।। ३०.२३० ।।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णावराश्च ये।
त्वामेव मेघसङ्घाश्च विश्वस्त नितगर्ज्जितम् ।। ३०.२३१ ।।
संवत्सरस्त्वमृतवो मासा मासार्द्धमेव च।
कला काष्ठा निमेषाश्च नक्षत्राणि युगा ग्रहाः ।। ३०.२३२ ।।
वृषाणां ककुदं त्वं हिगिरीणां शिखराणि च।
सिंहो मृगाणां पततां ताक्ष्योऽनन्तश्च भोगिनाम् ।। ३०.२३३ ।।
क्षीरोदो ह्युदधीनाञ्च यन्त्राणां धनुरेव च।
वज्रम्प्रहरणानाञ्च व्रतानां सत्यमेव च ।। ३०.२३४ ।।
इच्छा द्वेषश्च रागश्च मोहः क्षामो दमः शमः।
व्यवसायो धृतिर्लोभः कामक्रोधौ जयाजयौ ।। ३०.२३५ ।।
त्वं गदी त्वं शरी चापि खट्वाङ्गी झर्झरी तथा ।
छेत्ता भेत्ता प्रहर्त्ता च त्वं नेताप्यन्तको मतः ।। ३०.२३६ ।।
दशलक्षणसंयुक्तो धर्मोऽर्थः काम एव ।
इन्द्रः समुद्राः सरितः पल्वलानि सरांसि च ।। ३०.२३७ ।।
लतावल्ली तृणौषध्यः पशवो मृगपक्षिणः।
द्रव्यकर्मगुणारम्भः कालपुष्पफलप्रदः ।। ३०.२३८ ।।
आदिश्वान्तश्च मध्यश्च गायत्र्योङ्कार एव च।
हरितो लोहितः कृष्णो नीलः पीतस्तथारुणः ।। ३०.२३९ ।।
कद्रुश्च कपिलश्चैव कपोतो मेचकस्तथा।

सुवर्णरेता विख्यातः सुवर्ण श्चाप्यतो मतः ।। ३०.२४० ।।
सुवर्णनामा च तथा सुवर्णप्रिय एव च।
त्वमिन्द्रोऽथ यमश्चैव वरुणो धनदोऽनलः ।। ३०.२४१ ।।
उत्फुल्लश्चित्रभानुश्च स्वर्भानुर्भानुरेव च।
होत्रं होता च होमस्त्वं हुतञ्च प्रहुतं प्रभुः ।। ३०.२४२ ।।
सुपर्णञ्च तथा ब्रह्म यजुषां शतरुद्रियम्।
पवित्राणां पवित्रं च मङ्गलानाञ्च मङ्गलम् ।। ३०.२४३ ।।
गिरिः स्तोकस्तथा वृक्षो जीवः पुद्गल एव च।
सत्त्वं त्वञ्च रजस्त्वञ्च तमश्च प्रजनं तथा ।। ३०.२४४ ।।
प्राणोऽपानः सामानश्च उदानो व्यान एव च।
उन्मेषश्चैव मेषश्च तथा जृम्भितमेव च ।। ३०.२४५ ।।
लोहिताङ्गो गदी दंष्ट्री महावक्त्रो महोदरः।
सुचिरोमा हरिच्छमश्रुरूर्द्ध्वकेशस्त्रिलोचनः ।। ३०.२४६ ।।
गीतवादित्रनृत्याङ्गो गीतवादनकप्रियः।
मत्स्यो जली जलो जल्य जवः कालः कली कलः ।। ३०.२४७ ।।
विकालश्च सुकालश्च दुष्कालः कलनाशनः।
मृत्युश्चैव क्षयोऽन्तश्च क्षमापायकरो हरः ।। ३०.२४८ ।।
संवर्त्तकोऽन्तकश्चैव संवर्त्तकबलाहकौ।
घटो घटीको घण्टीको चूडालोलबलो बलम् ।। ३०.२४९ ।।
ब्रह्मकालोऽग्निवक्त्रश्च दण्डी मुण्डी च दण्डधृक्।
चतुर्युगश्चतुर्वेदश्चतुर्होत्रश्चतुष्पथः ।। ३०.२५० ।।
चतुरा श्रमवेत्ता च चातुर्वर्ण्यकरश्च ह।
क्षराक्षरप्रियो धूर्त्तोऽगण्योऽगण्यगणाधिपः ।। ३०.२५१ ।।
रुद्राक्षमाल्याम्बरधरो गिरिको गिरिकप्रियः।
शिल्पीशः शिल्पिनां श्रेष्ठः सर्वशिल्पप्रवर्त्तकः ।। ३०.२५२ ।।
भगनेत्रान्तकश्चन्द्रः पूष्णो दन्तविनाशनः।
गूढावर्त्तश्च गूढश्च गूढप्रतिनिषेविता ।। ३०.२५३ ।।
तरणस्ता रकश्चैव सर्वभूतसुतारणः।
धाता विधाता सत्वानां निधाता धारणो धरः ।। ३०.२५४ ।।
तपो ब्रह्म च सत्यञ्च ब्रह्मचर्यमथार्जवम् ।
भूतात्मा भूतकृद्भूतो भूतभव्यभवोद्भवः ।। ३०.२५५ ।।
भूर्भुवःस्वरितश्चैव तथोत्पत्तिर्महेश्वरः।
ईशानो वीक्षणः शान्तो दुर्दान्तो दन्तनाशनः ।। ३०.२५६ ।।

ब्रह्मावर्त्त सुरावर्त्त कामावर्त्त नमोऽस्तु ते।
कामबिम्बनिहर्त्ता च कर्णिकाररजःप्रियः ।। ३०.२५७ ।।
मुखचन्द्रो भीममुखः सुमुखो दुर्मुखो मुखः।
चतुर्मुखो बहुमुखो रणे ह्यभिमुखः सदा ।। ३०.२५८ ।।
हिरण्यगर्भः शकुनिर्महोदधिः परो विराट् ।
अधर्महा महादण्डो दण्डधारो रणप्रियः ।। ३०.२५९ ।।
गोतमोगोप्रतारश्च गोवृषेश्चरवाहनः।
धर्मकृद्धर्मस्रष्टा च धर्मो धर्मविदुत्तमः ।। ३०.२६० ।।
त्रैलोक्यगोप्ता गोविन्दो मानदो मान एव च।
तिष्ठन् स्थिरश्च स्थाणुश्च निष्कम्पः कम्प एव च ।। ३०.२६१ ।।
दुर्वारणो दुर्विषदो दुःसहो दुरतिक्रमः।
दुर्द्धरो दुष्प्रकम्पश्च दुर्विदो दुर्ज्जयो जयः ।। ३०.२६२ ।।
शशः शशाङ्कः शमनः शीतोष्णं दुर्जराऽथ तृट्।
आधयो व्याधयश्चैव व्याधिहा व्याधिगश्च ह ।। ३०.२६३ ।।
सह्यो यज्ञो मृगा व्याधा व्याधीनामाकरोऽकरः ।
शिखण्डी पुण्डरीकाक्षः पुण्डरीकावलोकनः ।। ३०.२६४ ।।
दण्डधरः सदण्डश्च दण्डमुण्डविभूषितः।
विषपोऽमृतपश्चैव सुरापः क्षीरसोमपः ।। ३०.२६५ ।।
मधुपश्चाज्यपश्चैव सर्वपश्च महाबलः।
वृषाश्ववाह्यो वृषभस्तथा वृषभलोचनः ।। ३०.२६६ ।।
वृषभश्चैव विख्यातो लोकानां लोकसत्कृतः।
चन्द्रादित्यौ चक्षुषी ते हृदयञ्च पितामहः।
अग्निरापस्तथा देवो धर्मकर्मप्रसाधितः ।। ३०.२६७ ।।
न ब्रह्मा न च गोविन्दः पुराणऋषयो न च।
माहात्म्यं वेदितुं शक्ता याथातथ्येन ते शिव ।। ३०.२६८ ।।
या मूर्त्तयः सुसूक्ष्मास्ते न मह्यं यान्ति दर्शनम्।
ताभिर्णां सततं रक्ष पिता पुत्रमिवौरसम् ।। ३०.२६९ ।।
रक्ष मां रक्षणीयोऽहं तवानघ नमोऽस्तु ते ।।
भक्तानुकम्पी भगवान् भक्तश्चाहं सदा त्वयि ।। ३०.२७० ।।
यः सहस्राण्यनेकानि पुंसामाहृत्य दुर्द्दशः।
तिष्ठत्येकः समुद्रान्ते स मे गोप्तास्तु नित्यशः ।। ३०.२७१ ।।
यं विनिद्रा जितश्वासाः सत्त्वस्थाः समदर्शिनः।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ।। ३०.२७२ ।।

सम्भक्ष्य सर्व भूतानि युगान्ते समुपस्थिते।
यः शेते जलमध्यस्थस्तं प्रपद्येऽप्सुशायिनम् ।। ३०.२७३ ।।
प्रविश्य वदने राहोर्यः सोमं ग्रसते निशि ।
ग्रसत्यर्कञ्च स्वर्भानुर्भुत्वा सोमाग्निरेव च ।। ३०.२७४ ।।
येऽङ्गुष्ठमात्राः पुरुषा देहस्थाः सर्वदेहिनाम्।
रक्षन्तु ते हि मां नित्यं नित्यमाप्याययन्तु माम् ।। ३०.२७५ ।।
ये चाप्युत्पतिता गर्भादधोभागगताश्च ये।
तेषां स्वाहाः स्वधाश्चैव आप्नुवन्तु स्वदन्तु च ।। ३०.२७६ ।।
ये न रोदन्ति देहस्थाः प्राणिनो रोदयन्ति च।
हर्षयन्ति च हृष्यन्ति नमस्तेभ्योऽस्तु नित्यशः ।। ३०.२७७ ।।
ये समुद्रे नदीदुर्गे पर्वतेषु गुहासु च।
वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु न ।। ३०.२७८ ।।
चतुष्पथेषु रथ्यासु चत्वरेषु सभासु च।
चन्द्रार्कयोर्मध्यगता ये च चन्द्रार्करश्मिषु ।। ३०.२७९ ।।
रसातलगता ये च ये च तस्मात्परङ्गताः।
नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्यश्च नित्यशः।
सूक्ष्माः स्थूलाः कृशा ह्रस्वा नमस्तेभ्यस्तु नित्यशः ।। ३०.२८० ।।
सर्वस्त्वं सर्वगो देव सर्वभूतपतिर्भवान्।
सर्वभूतान्तरात्मा च तेन त्वं न निमन्त्रितः ।। ३०.२८१ ।।
त्वमेव चेज्यसे यस्माद्यज्ञैर्विविधदक्षिणैः।
त्वमेव कर्त्ता सर्वस्य तेन त्वं न निमन्त्रितः ।। ३०.२८२ ।।
अथ वा मायया देव मोहितः सूक्ष्मया त्वया।
एतस्मात् कारणाद्वापि तेन त्वं न निमन्त्रितः ।। ३०.२८३ ।।
प्रसीद मम देवेश त्वमेव शरणं मम।
त्वं गतिस्त्वं प्रतिष्ठा च न चान्यास्ति न मे गतिः ।। ३०.२८४ ।।
स्तुत्वैवं स महादेवं विरराम प्रजापातिः।
भगवानपि सुप्रीतः पुनर्दक्षमभाषत ।। ३०.२८५ ।।
परितुष्टोऽस्मि ते दक्ष स्तवेनानेन सुव्रत।
बहुनात्र किमुक्तेन मत्समीपं गमिष्यसि ।। ३०.२८६ ।।
अथैनमब्रवीद्वाक्यं त्रैलोक्याधिपतिर्भवः।
कृत्वाश्वासकरं वाक्यं वाक्यज्ञो वाक्यमाहतम् ।। ३०.२८७ ।।
दक्ष दक्ष न कर्त्तव्यो मन्युर्विघ्नमिमं प्रति।
अहं यज्ञहा न त्वन्यो दृश्यते तत्पुरा त्वया ।। ३०.२८८ ।।

भूयश्च तं वरमिमं मत्तो गृहणीष्व सुव्रत।
प्रसन्नवदनो भूत्वा त्वमेकाग्रमनाः श्रृणु ।। ३०.२८९ ।।
अश्वमेधसहस्रस्य वाजपेयशतस्य च।
प्रजापते मत्प्रसादात् फलभागी भविष्यसि ।। ३०.२९० ।।
वेदान् षडङ्गानुद्धृत्य साङ्ख्यान्योगांश्च कृत्स्नशः।
तपश्च विपुलं तप्त्वा दुश्चरं देवदानवैः ।। ३०.२९१ ।।
अर्थैर्द्दशार्द्धसंयुक्तैर्गूढमप्राज्ञनिर्म्मितम्।
वर्णाश्रमकृतैर्धर्मैर्विपरीतं क्वचित्समम् ।। ३०.२९२ ।।
श्रुत्यर्थैरध्यवसितं पशुपाशविमोक्षणम्।
सर्वेषामाश्रमाणान्तु मया पाशुपतं व्रतम्।
उत्पादितं शुभं दक्ष सर्वपापविमोक्षणम् ।। ३०.२९३ ।।
अस्य चीर्णस्य यत्सम्यक् फलं भवति पुष्कलम्।
तदस्तु ते महाभाग मानसस्त्यज्यतां ज्वरः ।। ३०.२९४ ।।
एवमुक्त्वा महादेवः सपत्नीकः सहानुगः।
अदर्शनमनुप्राप्तो दक्षस्यामितविक्रमः ।। ३०.२९५ ।।
अवाप्य च तदा भागं यथोक्तं ब्रहमणा भवः।
ज्वरञ्च सर्वधर्मज्ञो बहुधा व्यभजत्तदा।
शान्त्यर्थं सर्वभूतानां श्रृणुध्वं तत्र वै द्विजाः ।। ३०.२९६ ।।
शीर्षाभितापो नागानां पर्वतानां शिलारुजः।
अपान्तु नालिकां विद्यान्निर्मोकम्भुजगेष्वपि ।। ३०.२९७ ।।
शौरकः सौरभेयाणामूषरः पृथिवीतले ।
इभा नामपि धर्मज्ञ दृष्टिप्रत्यवरोधनम् ।। ३०.२९८ ।।
रन्ध्रोद्भूतं तथाश्वानां शिखोद्भेदश्च बर्हिणाम्।
नेत्ररोगः कोकिलानां ज्वरः प्रोक्तो महात्मभिः ।। ३०.२९९ ।।
अजानां पित्तभेदश्च सर्वेषामिति नः श्रुतम्।
शुकानामपि सर्वेषां हिमिका प्रोच्यते ज्वरः।
शार्दूलेष्वपि वै विप्राः श्रमो ज्वर इहोच्यते ।। ३०.३०० ।।
मानुषेषु तु सर्वज्ञ ज्वरो नामैष कीर्तितः।
मरणे जन्मनि तथा मध्ये च विशते सदा ।। ३०.३०१ ।।
एतन्माहेश्वरं तेजौ ज्वरो नाम सुदारुणः।
नमस्यश्चैव मान्यश्च सर्वप्राणिभिरीश्वरः ।। ३०.३०२ ।।
इमां ज्वरोत्पत्तिमदीनमानसः पठेत्सदा यः सुसमाहितो नरः ।
विमुक्तरोगः स नरो मुदा युतो लभेत कामान् स यथामनीषितान् ।। ३०.३०३ ।।

दक्षप्रोक्तं स्तवञ्चापि कीर्त्तयेद्यः श्रृणोति वा।
नाशुभं प्राप्नुयात् किञ्चिद्दीर्घञ्चायुरवाप्नुयात् ।। ३०.३०४ ।।
यथा सर्वेषु देवेषु वरिष्ठो योगवान् हरः।
तथा स्तवो वरिष्ठोऽयं स्तवानां ब्रह्मनिर्मितः ।। ३०.३०५ ।।
यशोराज्यसुखैश्वर्यवित्तायुर्धनकाङ्क्षिभिः।
स्तोतव्यो भक्तिमास्थाय विद्याकामैश्च यत्नतः ।। ३०.३०६ ।।
व्याधितो दुःखितो दीनश्चौरत्रस्तो भयार्दितः।
राजकार्यनियुक्तो वा मुच्यते महतो भयात् ।। ३०.३०७ ।।
अनेन चैव देहेन गणानां स गणाधिपः।
इह लोके सुखं प्राप्य गण एवोपपद्यते ।। ३०.३०८ ।।
न च यक्षाः पिशाचा वा न नागा न विनायकाः।
कुर्युर्विघ्नं गृहे तस्य यत्र संस्तूयते भवः ।। ३०.३०९ ।।
श्रृणुयाद्वा इदं नारी सुभक्त्या ब्रह्मचारिणी।
पितृभिर्भर्तृपक्षाभ्यां पूज्या भवति देववत् ।। ३०.३१० ।।
श्रृणुयाद्वा इदं सर्व कीर्त्तयेद्वाप्यभीक्ष्णशः।
तस्य सर्वाणि कार्याणि सिद्धिं गच्छन्त्यविघ्नतः ।। ३०.३११ ।।
मनसा चिन्तितं यच्च यच्च वाचाप्युदाहृतम्।
सर्वं सम्पद्यते तस्य स्तवनस्यानुकीर्त्तनात् ।। ३०.३१२ ।।
देवस्य सगुहस्याथ देव्या नन्दीश्वरस्य तु।
बलिं विभवतः कृत्वा दमेन नियमेन च ।। ३०.३१३ ।।
ततः स युक्तो गृहणीयान्नामान्याशु यथाक्रमम्।
ईप्सितान् लभतेऽत्यर्थं कामान् भोगांश्च मानवः।
मृतश्च स्वर्गमाप्नोति स्त्रीसहस्रपरिवृतः ।। ३०.३१४ ।।
सर्व कर्मसु युक्तो वा युक्तो वा सर्वपातकैः।
पठन् दक्षकृतं स्तोत्रं सर्वपापैः प्रमुच्यते।
मृतश्च गणसालोक्यं पूज्यमानः सुरासुरैः ।। ३०.३१५ ।।
वृषेव विधियुक्तेन विमानेन विराजते।
आभूतसंप्लवस्थायी रुद्रस्यानुचरो भवेत् ।। ३०.३१६ ।।
इत्याह भगवान् व्यासः पराशरसुतः प्रभुः ।
नैतद्वेदयते कश्चिन्नेदं श्राव्यन्तु कस्यचित् ।। ३०.३१७ ।।
श्रुत्वैतत्परमं गुह्यं येऽपि स्युः पापकारिणः।
वैश्याः स्त्रियश्च शूद्राश्च रुद्रलोकमवाप्नुयुः ।। ३०.३१८ ।।
श्रावयेद्यस्तु विप्रेभ्यः सदा पर्वसु पर्वसु।

रुद्रलोकमवाप्नोति द्विजो वै नात्र संशयः ।। ३०.३१९ ।।

इति श्रीमहापुराणे वायुप्रोक्ते दक्षशापवर्णनं नाम त्रिंशोऽध्यायः ।। ३० ।।

**।।सूत उवाच ।।**

इत्येषा समनुज्ञाता कथा पापप्रणाशिनी।
या दक्षमधिकृत्येह कथा शर्वादुपागता ।। ३१.१ ।।
पितृवंशप्रसङ्गेन कथा ह्येषा प्रकीर्तिता।
पितॄणामानुपूर्व्येण देवान् वक्ष्याम्यतः परम् ।। ३१.२ ।।
त्रेतायुगमुखे पूर्वमासन् स्वायम्भुवेऽन्तरे ।
देवा यामा इति ख्याताः पूर्वं ये यज्ञसूनवः ।। ३१.३ ।।
अजिता ब्रह्मणः पुत्रा जिता जिदजिताश्च ये।
पुत्राः स्वायम्भुवस्यैते शुक्रनाम्ना मानसाः ।। ३१.४ ।।
तृप्तिमन्तो गणा ह्येते देवानान्तु त्रयः स्मृताः ।
छन्दोगास्तु त्रयस्त्रिंशत्सर्वे स्वायम्भुवस्य ह ।। ३१.५ ।।
यदुर्ययातिर्द्वौ देवौ दीधयः स्रवसो मतिः।
विभासश्च क्रतुश्चैव प्रजातिर्विशतो द्युतिः ।। ३१.६ ।।
वायसो मङ्गलश्चैव यामा द्वादश कीर्तिताः।
अभिमन्युरुग्रदृष्टिः समयोऽथ शुचिश्रवाः।
केवलो विश्वरूपश्च सुपक्षो मधुपस्तथा ।। ३१.७ ।।
तुरीयो निर्हपुश्चैव युक्तो ग्रावाजिनस्तु ते।
यमिनो विश्वदेवाद्यं यविष्ठोऽमृतवानपि ।। ३१.८ ।।
अजिरो विभुर्विभावश्च मृलिकोऽथ दिदेहकः।
श्रुतिश्रृणो बृहच्छुक्रो देवा द्वादश कीर्तिताः ।। ३१.९ ।।
आसन् स्वायम्भुवस्यैते अन्तरे सोमपायिनः।
त्विषिमन्तो गणा ह्येते वीर्यवन्तो महाबलाः ।। ३१.१० ।।
तेषामिन्द्रः सदा ह्यासीद्विश्वभुक् प्रथमो विभुः।
असुरा येतदा तेषामासन् दायादबान्धवाः ।। ३१.११ ।।
सुपर्णयक्षगन्धर्वाः पिशाचोरगराक्षसाः।
अष्टौ ते पितृभिः सार्द्धं नासत्या देवयोनयः ।। ३१.१२ ।।
स्वायम्भुवेऽन्तरेऽतीताः प्रजास्त्वासां सहस्रशः।
प्रभावरूपसम्पन्ना आयुषा च बलेन च ।। ३१.१३ ।।
विस्तरादिह नोच्यन्ते मा प्रसङ्गो भवत्विह।
स्वायम्भुवो निसर्गश्च विज्ञेयः साम्प्रतं मनुः ।। ३१.१४ ।।
अतीते वर्त्तमानेन दृष्टो वैवस्वतेन सः।
प्रजाभिर्देवताभिश्च ऋषिभिः पितृभिः सह ।। ३१.१५ ।।
तेषां सप्तर्षयः पूर्वमासन्ये तान् निबोधत।

भृग्वङ्गिरा मरीचिश्च पुलस्त्यः पुलहः क्रतुः ।। ३१.१६ ।।
अत्रिश्चैव वसिष्ठश्च सप्त स्वायम्भुवेऽन्तरे।
अग्नीध्रश्चातिबाहुश्च मेधा मेधातिथिर्वसुः ।। ३१.१७ ।।
ज्योतिष्मान् द्युतिमान् हव्यः सवनः पुत्र एव च ।।
मनोः स्वायम्भुवस्यैते दश पुत्रा महौजसः ।। ३१.१८ ।।
वायुप्रोक्ता महासत्त्वा राजानः प्रथमेऽन्तरे।
सासुरन्तत्सगन्धर्वं सयक्षोरगराक्षसम्।
सपिशाचमनुष्यञ्च सुपर्णाप्सरसाङ्गणम् ।। ३१.१९ ।।
नो शक्यमानुपूर्व्येण वक्तुं वर्षशतैरपि।
बहुत्वान्नामधेयानां सङ्ख्या तेषां कुले तथा ।। ३१.२० ।।
या वै व्रजकुलाख्यास्तु आसन् स्वायम्बुवेऽन्तरे।
कालेन बहुनातीता अयनाब्दयुगक्रमैः ।। ३१.२१ ।।
**।।ऋषय ऊचुः।।**
क एष भगवान् कालः सर्वभूतापहारकः।
कस्य योनिः किमादिश्च किन्तत्त्वं स किमात्मजः ।। ३१.२२ ।।
किमस्य चक्षुः का मूर्तिः के चास्यावयवाः स्मृताः।
किंनामधेयः कोऽस्यात्मा एतत् प्रब्रूहि पृच्छताम् ।। ३१.२३ ।।
**।।सूत उवाच।।**
श्रूयतां कालसद्भावः श्रुत्वा चैवावधार्यताम्।
सूर्ययोनिर्निमेषादिः सङ्ख्याचक्षुः स उच्यते ।। ३१.२४ ।।
मूर्त्तिरस्य त्वहोरात्रे निमेषावयवश्च सः।
संवत्सरशतं त्वस्य नाम चास्य कलात्मकम्।
साम्प्रतानागतातीतकालात्मा स प्रजापतिः ।। ३१.२५ ।।
पञ्चानां प्रविभक्तानां कालावस्थां निभोधत।
दिनार्द्धमासमासैस्तु ऋतुभिस्त्वयनैस्तथा ।। ३१.२६ ।।
संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः।
इद्वत्सरस्तृतीयस्तु चतुर्थश्चानुवत्सरः ।। ३१.२७ ।।
वत्सरः पञ्चमस्तेषां कालः स युगसंज्ञितः।
तेषान्तु तत्त्वं वक्ष्यामि कीर्त्त्यमानं निबोधत ।। ३१.२८ ।।
ऋतुरग्निस्तु यः प्रोक्तः स तु संवत्सरो मतः।
आदित्ये यस्त्वसौ सारः कालाग्निः परिवत्सरः ।। ३१.२९ ।।
शुक्लकृष्णा गतिश्चापि अपां सारमयः खगः।
स इडावत्सरः सोमः पुराणे निश्चयो मतः ।। ३१.३० ।।

यश्चायं तपते लोकांस्तनुभिः सप्तसप्तभिः।
आशुकर्त्ता च लोकस्य सवायुरिति वत्सरः ।। ३१.३१ ।।
अहङ्कारात् रुदन् रुद्रः सद्भूतो ब्रह्मणस्त्रयः।
स रुद्रो वत्सरस्तेषां विजज्ञे नीललोहितः।
तेषां हि तत्त्वं वक्ष्यामि कीर्त्यमानं निबोधत ।। ३१.३२ ।।
अङ्गप्रत्यङ्गसंयोगात् कालात्मा प्रपितामहः।
ऋक्साम यजुषां योनिः पञ्चानां पतिरीश्वरः ।। ३१.३३ ।।
सोऽग्निर्यजुश्च सोमश्च स भूतः स प्रजापतिः।
प्रोक्तः संवत्सरश्चेति सूर्यो योऽग्निर्मनीषिभिः ।। ३१.३४ ।।
यस्मात् कालविभागानां मासर्त्वयनयोरपि।
ग्रहनक्षत्रशीतोष्णवर्षायुःकर्मणां तथा।
योजितः प्रविभागानां दिवसानाञ्च भास्करः ।। ३१.३५ ।।
वैकारिकः प्रसन्नात्मा ब्रह्मपुत्रः प्रजापतिः।
एकेनैकोऽथ दिवसो मासोऽथर्तुः पितामहः ।। ३१.३६ ।।
आदित्यः सविता भानुर्जीवनो ब्रह्मसत्कृतः।
प्रभवश्चात्य यश्चैव भूतानां तेन भास्करः ।। ३१.३७ ।।
ताराभिमानी विज्ञेयस्तृतीयः परिवत्सरः।
सोमः सर्वौषधिपतिर्यस्मात्स प्रपितामहः ।। ३१.३८ ।।
आजीवः सर्वभूतानां योगक्षेमकृदीश्वरः।
अवेक्षणाणः सततं बिभर्ति जगदंशुभिः ।। ३१.३९ ।।
तिथीनां पर्वसन्धीनां पूर्णिमादर्शयोरपि।
योनिर्निशाकरो यश्च योऽमृतात्मा प्रजापतिः ।। ३१.४० ।।
तस्मात् स पितृमान् सोम ऋग्यजुश्छन्दआत्मकः।
प्राणापानसमानाद्यैर्व्यानोदानात्मकैरपि ।। ३१.४१ ।।
कर्मभिः प्राणिनां लोके सर्वचेष्टाप्रवर्त्तकः।
प्राणापानसमानानां वायूनाञ्च प्रवर्त्तकः ।। ३१.४२ ।।
पञ्चानाञ्चेन्द्रियमनोबुद्धिस्मृति जलात्मनाम्।
समानकालकरणः क्रियाः सम्पादयन्निव ।। ३१.४३ ।।
सर्वात्मा सर्वलोकानामावहः प्रवहादिभिः।
विधाता सर्वभूतानां क्षमी नित्यं प्रभञ्जनः ।। ३१.४४ ।।
योनिरग्नेरपां भूमे रवेश्चन्द्रमसश्चयः।
वायुः प्रजापिर्भूतं लोकात्मा प्रपितामहः ।। ३१.४५ ।।
प्रजापति मुखैर्देवैः सम्यगिष्टफलार्थिभिः।

त्रिभिरेव कपालैस्तु अम्बकैरोषधिक्षये।
इज्यते भगवान् यस्मात्तस्मात्र्यम्बक उच्यते ।। ३१.४६ ।।
गायत्री चैव त्रिष्टुप् च जगती चैव या स्मृता।
त्र्यम्बका नामतः प्रोक्ता योनयः सवनस्य ताः ।। ३१.४७ ।।
ताभिरेकत्वभूताभिस्त्रिविधाभिः स्ववीर्यतः।
त्रिसाधनपुरोडाशस्त्रि कपालः स वै स्मृतः ।। ३१.४८ ।।
इत्येतत्पञ्चवर्षं हि युगं प्रोक्तं मनीषिभिः।
यच्चैव पञ्चधात्मा वै प्रोक्तः संवत्सरो द्विजैः।
सैकं षट्कं विजज्ञेऽथ मध्वादीनृतवःकिल ।। ३१.४९ ।।
ऋतुपुत्रार्त्तवः पञ्च इति सर्गः समासतः।
इत्येष पवमानो वै प्राणिनां जीवितानि तु ।। ३१.५० ।।
नदी वेगसमायुक्तं कालो धावति संहरन्।
अहोरात्रकरस्तस्मात् स वायुरभवत्पुनः ।। ३१.५१ ।।
एते प्रजानां पतयः प्रधानाः सर्वदेहिनाम् ।
पितरः सर्व लोकानां लोकात्मानः प्रकीर्तिताः ।। ३१.५२ ।।
ध्यायतो ब्रह्मणो वक्रादुद्यन् समभवद्भवः।
ऋषिर्विप्रो महादेवो भूतात्मा प्रपितामहः ।। ३१.५३ ।।
ईश्वरः सर्वभूतानां प्रणवायोपपद्यते।
आत्मवेशेन भूतानामङ्गप्रत्यङ्गसम्भवः ।। ३१.५४ ।।
अग्निः संवत्सरः सूर्यश्चन्द्रमा वायुरेव च।
युगाभिमानी कालात्मा नित्यं संक्षेपकृद्विभुः।
उन्मादकोऽनुग्रहकृत्स इद्वत्सर उच्यते ।। ३१.५५ ।।
रुद्राविष्टो भगवता जगत्यस्मिन् स्वतेजसा।
आश्रयाश्रयसंयोगात्तनुभिर्नामभिस्तथा ।। ३१.५६ ।।
ततस्तस्य तु वीर्येण लोकानुग्रहकारकम्।
द्वितीयं भद्रसंयोगं सन्ततस्यैककारकम् ।। ३१.५७ ।।
देवत्वञ्च पितृत्वञ्च कालत्वञ्चास्य यत्परम्।
तस्माद्वै सर्वथा भद्रस्तद्वद्भिरभिपूज्यते ।। ३१.५८ ।।
पतिः पतीनां भगवान् प्रजेशानां प्रजापतिः।
भवनः सर्वभूतानां सर्वेषां नीललोहितः।
ओषधीः प्रतिसन्धत्ते रुद्रः क्षीणाः पुनः पुनः ।। ३१.५९ ।।
इत्येषां यदपत्यं वै न तच्छक्यं प्रमाणतः।
बहुत्वात् परिसङ्ख्यातुं पुत्रपौत्रमनन्तकम् ।। ३१..६० ।।

इमं वंशं प्रजेशानां महतां पुण्यकर्मणाम्।
कीर्त्तयन् स्थिरकीर्त्तीनां महतीं सिद्धिमाप्नुयात् ।। ३१.६१ ।।
इति श्रीमहापुराणे वायुप्रोक्ते देववंशवर्णनं नामै कत्रिंशोऽध्यायः ।। ३१ ।।

**।।वायु रुवाच।।**

अत ऊर्द्ध्वं प्रवक्ष्यामि प्रणवस्य विनिश्वयम्।
ओङ्कारमक्षरं ब्रह्म त्रिवर्णञ्चादितः स्मृतम् ।। ३२.१ ।।

यो यो यस्य यथा वर्णो विहितो देवतास्तथा।
ऋचो यजूंषि सामानि वायुरग्निस्तथा जलम् ।। ३२.२ ।।

तस्मात्तु अक्षरादेव पुनरन्ये प्रजज्ञिरे।
चतुर्द्दश महात्मानो देवानां ये तु दैवताः ।। ३२.३ ।।

तेषु सर्वगतश्चैव सर्वगः सर्वयोगवित् ।
अनुग्रहाय लोकानामादिमध्यान्त उच्यते ।। ३२.४ ।।

सप्तर्षयस्तथेन्द्रा ये देवाश्च पितृभिः सह।
अक्षरान्निः सृताः सर्वे देवदेवान्महेश्वरात् ।। ३२.५ ।।

इहामुत्र हितार्थाय वदन्ति परमं पदम्।
पूर्वमेव मयोक्तस्ते कालस्तु युगसंज्ञितः ।। ३२.६ ।।

कृतं त्रेता द्वापरञ्च युगादिः कलिना सह।
परिवर्त्तमानैस्तैरेव भ्रममाणेषु चक्रवत् ।। ३२.७ ।।

देवतास्तु तदोद्विग्नाः कालस्य वशमागताः.
न शक्नुवन्ति तन्मानं संस्स्थापयितुमात्मना ।। ३२.८ ।।

तदा ते वाग्यता भूत्वा आदौ मन्वन्तरस्य वै।
ऋषयश्चैव देवाश्च इन्द्रश्चैव महातपाः ।। ३२.९ ।।

समाधाय मनस्तीव्रं सहस्रं परिवत्सरान्।
प्रपन्नास्ते महादेवं भीताः कालस्य वै तदा ।। ३२.१० ।।

अयं हि कालो देवेशश्चतुर्मूर्तिश्चतुर्मुखः ।
कोऽस्य विद्यान्महादेव अगाधस्य महेश्वर ।। ३२.११ ।।

अथ दृष्ट्वा महादेवस्तं तु कालञ्चतुर्मुखम्।
न भेतव्यमिति प्राह को वः कामः प्रदीयताम् ।। ३२.१२ ।।

तत्करिष्याम्यहं सर्वं न वृथायं परिश्रमः ।

उवाच देवो भगवान् स्वयङ्कालः सुदुर्जयः ।। ३२.१३ ।।

यदेतस्य मुखं श्वेतं चतुर्जिह्वं हि लक्ष्यते।
एतत् कृतयुगं नाम तस्य कालस्य वै मुखम्।
असौ देवः सुरश्रेष्ठो ब्रह्मा वैवस्वतो मुखः ।। ३२.१४ ।।

यदेतद्रक्तवर्णाभं तृतीयं वः स्मृतं मया ।
त्रिजिह्वं लेलिहानं तु एतत् त्रेतायुगं द्विजाः ।। ३२.१५ ।।

अत्र यज्ञप्रवृत्तिस्तु जायते हि महेश्वरात्।
ततोऽत्र इज्यते यज्ञस्तिस्रो जिह्वास्त्रयोऽग्नयः ।
इष्ट्वा चैवाग्नयो विप्राः कालजिह्वा प्रवर्त्तते ।। ३२.१६ ।।

यदेतद्वै मुखं भीमं द्विजिह्वं रक्तपिङ्गलम्।
द्विपादोऽत्र भविष्यामि द्वापरं नाम तद्युगम् ।। ३२.१७ ।।

यदेतत् कृष्णवर्णाभं तुरीयं रक्तलोचनम्।
एकजिह्वं पृथुश्यामं लेलिहानं पुनः पुनः ।। ३२.१८ ।।

ततः कलियुगं घोरं सर्वलोकभयङ्करम्।
कल्पस्य तु मुखं ह्येतच्चतुर्थं नाम भीषणम् ।। ३२.१९ ।।

न मुखं नापि निर्वाणं तस्मिन् भवति वै युगे।
कालग्रस्ता प्रजा चापि युगे तस्मिन् भविष्यति ।। ३२.२० ।।

ब्रह्मा कृतयुगे पूज्यस्त्रेतायां यज्ञ इच्यते।
द्वापरे पूज्यते विष्णुरहम्पूज्यश्चतुर्ष्वपि ।। ३२.२१ ।।

ब्रह्मा विष्णुश्च यज्ञश्च कालस्यैव कलास्त्रयः।
सर्वेष्वेव हि कालेषु चतुर्मूर्तिर्महेश्वरः ।। ३२.२२ ।।

अहं जनो जनयिता (वः) कालः कालप्रवर्त्तकः।
युगकर्ता तथा चैव परं परपरायणः ।। ३२.२३ ।।

तस्मात् कलियुगं प्राप्य लोकानां हितकारणात्।
अभयार्थञ्च देवानामुभयोर्लोकयोरपि ।। ३२.२४ ।।

तदा भव्यश्च पूज्यश्च भविष्यामि सुरोत्तमाः।

तस्माद्भयं न कार्यं च कलिं प्राप्य महौजसः ।। ३२.२५ ।।

एवमुक्ता स्ततः सर्वा देवता ऋषिभिः सह।
प्रणम्य शिरसा देवं पुनरूचुर्जगत्पतिम् ।। ३२.२६ ।।

**।।देवर्षय ऊचुः।।**
महातेजा महाकायो महावीर्यो महाद्युतिः।
भीषणः सर्वभूतानां कथं कालश्चतुर्मुखः ।। ३२.२७ ।।

**।।महादेव उवाच।।**
एष कालश्चतुर्मूर्तिश्चतुर्दंष्ट्रश्चतुर्मुखः।
लोकसंरक्षणार्थाय अतिक्रामति सर्वशः ।। ३२.२८ ।।

नासाध्यं विद्यते चास्य सर्वस्मिन् सचराचरे।
कालः सृजति भूतानि पुनःसंहरति क्रमात् ।। ३२.२९ ।।

सर्वे कालस्य वशगा न कालः कस्यचिद्वशे।
तस्मात्तु सर्वभूतानि कालः कलयते सदा ।। ३२.३० ।।

विक्रमस्य पदान्यस्य पूर्वोक्तान्येकसप्ततिः।
तानि मन्वन्तराणीह परिवृत्तयुगक्रमात् ।। ३२.३१ ।।

एकं पदं परिक्रम्य पदानामेकसप्ततिः।
यदा कालः प्रक्रमते तदा मन्वन्तरक्षयः ।। ३२.३२ ।।

एवमुक्त्वा तु भगवान् देवर्षिपितृदानवान्।
नमस्कृतश्च तैः सर्वैस्तत्रैवान्तरधीयत ।। ३२.३३ ।।

एवं स काले भगवान् देवर्षिपितृदानवान्।
पुनः पुनः संहरते सृजते च पुनः पुनः ।। ३२.३४ ।।

अतो मन्वन्तरे चैव देवर्षिपितृदानवैः।
पूज्यते भगवानीशो भयात् कालस्य तस्य वै ।। ३२.३५ ।।

तस्मात् सर्वप्रयत्नेन कलौ कुर्यात्तपो द्विजः।
प्रपन्नस्य महादेवं तस्य पुण्यफलं महत्।
तस्माद्देवा दिवं गत्वा अवतीर्य च भूतले ।। ३२.३६ ।।

ऋषयश्चैव देवाश्च कलिम्प्राप्य सुदारुणम्।
तप इच्छन्ति भूयिष्ठं कर्त्तुं धर्मपरायणाः।
अवतारान् कलिं प्राप्य करोति च पुनः पुनः ।। ३२.३७ ।।

एवं कालान्तरे सर्वे येऽतीता वै सहस्रशः।
वैवस्वतेऽन्तरे तस्मिन् देवराजर्षयस्तथा ।। ३२.३८ ।।

देवापिः पोरवो राजा मनुश्वेक्ष्वाकुवंशजाः।
महायोगबलोपेताः कालान्तरमुपासते ।।३२.३९ ।।

क्षीणे कलियुगे तस्मिस्तिष्ये त्रेतायुगे कृते।
सप्तर्षिभिश्चैव सार्द्धं भाव्ये त्रेतायुगे पुनः
गोत्राणां क्षत्रियाणाञ्च भविष्यास्ते प्रकीर्तिताः ।। ३२.४०।
द्वापरान्ते प्रतिष्ठन्ते क्षत्रिया ऋषिभिः सह।
कृते त्रेतायुगे चैव तथा क्षीणे च द्वापरे।
नराः पातकिनो ये वै वर्त्तन्ते ते कलौ स्मृताः ।। ३२.४१ ।।

मन्वन्तराणां सप्तानां सान्तानार्था श्रुतिः स्मृतिः।
एवमेतेषु सर्वेषु युगक्षयक्रमस्तथा ।। ३२.४२ ।।

परस्परं युगानाञ्च ब्रह्मक्षत्रस्य चोद्भवः।
यथा वै प्रकृतिस्तेभ्यः प्रवृत्तानां यथा क्षयम् ।। ३२.४३ ।।

जामदग्न्येन रामेण क्षत्रे निरवशोषिते।
क्रियन्ते कुलटाः सर्वाः क्षत्रियैर्वसुधाधिपैः।
दिवं गतानहं तुभ्यं कीर्त्तयिष्ये निबोधत ।। ३२.४४ ।।

ऐडमिक्ष्वाकुवंशस्य प्रकृतिं परिचक्षते।
राजानः श्रेणिबन्धास्तु तक्षान्ये क्षत्रिया भुवि ।। ३२.४५ ।।

ऐडवंशेऽथ सम्भूता यथा चेक्ष्वाकवो नृपाः।
तेभ्य एव शतं पूर्णं कुलानामभिषेचितम् ।। ३२.४६ ।।

तावदेव तु भोजानां विस्तरो द्विगुणः स्मृतः ।
भोजन्तु त्रिशतं क्षत्रं चतुर्द्धा तद्यथादिशम् ।। ३२.४७ ।।

तेष्वतीतास्तु राजानो ब्रुवतस्तान्निबोधत।

शतं वै प्रतिविन्ध्यानां हैहयानां तथा शतम् ।। ३२.४८ ।।

धार्त्तराष्ट्रास्त्वेकशतं अशीतिर्जनमेजयाः।
शतं वै ब्रह्मदत्तानां कुलानां वीर्यिणां शतम् ।। ३२.४९ ।।

ततः शतन्तु पौलानां शतं काशिकुशादयः ।
तथापरं सहस्रन्तु येऽतीताः शशबिन्दवः।
इजानास्तेऽश्वमेधैस्तु सर्वे नियुतदक्षिणैः ।। ३२.५०।
एवं संक्षेपतः प्रोक्ता न शक्या विस्तरेण तु।
वक्तुं राजर्षयः कृत्स्ना येऽतीतास्तैर्युकैःसह ।। ३२.५१ ।।

एते ययातिवंशस्य बभूवुर्वंशवर्द्धनाः।
कीर्तिता द्युतिमन्तस्ते ये लोकान् धारयन्ति वै ।। ३२.५२ ।।

लभन्ते च वरान् पञ्च दुर्लभान् ब्रह्मलौकिकान् ।
आयुः पुत्रा धनं कीर्तिरैश्वर्यं भूतिरेव च ।। ३२.५३ ।।

धारणाच्छ्रवणाच्चैव पञ्चवर्गस्य धीमताम्।
तथोक्ता लौकिकाश्चैव ब्रह्मलोकं व्रजन्ति वै ।। ३२.५४ ।।

चत्वार्याहुः सहस्राणि वर्षाणां च कृतं युगम् ।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ।। ३२.५५ ।।

कृते वै प्रक्रियापादश्चतुःसाहस्र उच्यते।
तस्माच्चतुःशतं सन्ध्या सन्ध्यांशश्च यथाविधः ।। ३२.५६ ।।

त्रेतादीनि सहस्राणि संख्यया मुनिभिः सह।
तस्यापि त्रिशती सन्ध्या सन्ध्यांशस्त्रिशतः स्मृतः ।। ३२.५७ ।।

अनुषङ्गपादस्त्रेतायास्त्रिसाहस्रस्तु सङ्ख्यया।
द्वापरे द्वे सहस्रे तु वर्षाणां सम्प्रकीर्तितम् ।। ३२.५८ ।।

तस्यापि द्विशती सन्ध्या सन्ध्यांशो द्विशतस्तथा।
उपोद्वातस्तृतीयस्तु द्वापरे पाद उच्यते ।। ३२.५९ ।।

कलिं वर्षसहस्रन्तु प्राहुः सङ्ख्याविदो जनाः।
तस्यापि शतिका सन्ध्या सन्ध्यांशः शतमेव च ।। ३२.६० ।।

संहारपादः संख्यातश्चतुर्थो वै कलौ युगे।
ससन्ध्यानि सहांशानि चत्वारि तु युगानि वै ।। ३२.६१ ।।

एतद् द्वादशसाहस्रं चतुर्युगमिति स्मृतम्।
एवं पादैः सहस्राणि श्लोकानां पञ्च पञ्च च ।। ३२.६२ ।।

सन्ध्यासन्ध्यांशकैरेव द्वे सहस्रे तथाऽपरे।
एवं द्वादशसाहस्रं पुराणं कवयो विदुः ।। ३२.६३ ।।

यथा वेदश्चतुष्पादश्चतुष्पादं तथा युगम्।
यथा युगं चतुष्पादं विधात्रा विहितं स्वयम्।
छचतुष्पादं सुराणान्तु ब्रह्मणा विहितं पुरा ।। ३२.६४ ।।

इति श्रीमहापुराणे वायुप्रोक्ते युगधर्मनिरूपणं नाम द्वात्रिंशो ऽध्यायः ।। ३२ ।।

**।।सूत उवाच।।**

मन्वन्तरेषु सर्वेषु अतीतानागतेष्विह।
तुल्याभिमानिनः सर्वे जायन्ते नामरूपतः ।। ३३.१ ।।

देवाश्च विविधा ये च तस्मिन् मन्वन्तरेऽधिपाः।
ऋषयो मानवाश्चैव सर्वे तुल्याभिमानिनः ।। ३३.२ ।।

महर्षिसर्गः प्रोक्तो वै वंशं स्वायम्भुवस्य तु।
विस्तरेणानुपूर्व्या च कीर्त्त्यमानं निबोधत ।। ३३.३ ।।

मनोः स्वायम्भुवस्यासन् दश पौत्रास्तु तत्समाः.
यैरियं पृथिवी सर्वा सप्तद्वीपसमन्विता ।। ३३.४ ।।

ससमुद्राकरवती प्रतिवर्षन्निवेशिता।
स्वायम्भुवेऽन्तरे पूर्वमाद्ये त्रेतायुगे तदा ।। ३३.५ ।।

प्रियव्रतस्य पुत्रैस्तैः पौत्रैः स्वायम्भुवस्य तु।
प्रजासर्गतपोयोगैस्तैरियं विनिवेशिता ।। ३३.६ ।।

प्रियव्रतात् प्रजावन्तः वीरात् कन्या व्यजायत।
कन्या सा तु महाभागा कर्द्दमस्य प्रजापतेः ।। ३३.७ ।।

कन्ये द्वे शतपुत्रांश्च सम्राट् कुक्षिश्च ते उभे।
तयोर्वै भ्रातरः शूराः प्रजापतिसमा दश ।। ३३.८ ।।

अग्नीध्रश्चवपुष्मांश्च मेधा मेधातिथिर्विभुः।
ज्योतिष्मान् द्युतिमान् हव्यः सवनः सर्व एव च ।। ३३.९ ।।

प्रियव्रतोऽभिषिच्यैतान् सप्त सप्तसु पार्थिवान्।
द्वीपेषु तेषु धर्मेण द्वीपांस्तांश्च निबोधत ।। ३३.१० ।।

जम्बूद्वीपेश्वरं चक्रे अग्नीध्रन्तु महाबलम्।
प्लक्षद्वीपेश्वरश्चापि तेन मेधातिथिः कृतः ।। ३३.११ ।।

शाल्मलौ तु वपुष्मन्तं राजानमभिषिक्तवान्।
ज्योतिष्मन्तं कुशद्वीपे राजानं कृतवान् प्रभुः ।। ३३.१२ ।।

द्युतिमन्तञ्च राजानं क्रौञ्चद्वीपे समादिशत्।
शाकद्वीपेश्वरञ्चापि हव्यञ्चक्रे प्रियव्रतः ।। ३३.१३ ।।

पुष्कराधिपतिञ्चापि सवनं कृतवान् प्रभुः।
पुष्करे सवनस्यापि महावीतः सुतोऽभवत्।

धातकिश्चैव द्वावेतौ पुत्रौ पुत्रवतां वरो ।। ३३.१४ ।।

महावीतं स्मृतं वर्षं तस्य नाम्ना महात्मनः।
नाम्ना तु धातकेश्चापि धातकीखण्ड उच्यते ।। ३३.१५ ।।

हव्यो व्यजनयत् पुत्रान् शाकद्वीपेश्वरान् प्रभुः।
जलदञ्च कुमारञ्च सुकुमारं मणीचकम्।
वसुमोदं सुमोदाकं सप्तमञ्च महाद्रुमम् ।। ३३.१६ ।।

जलदं जलदस्याथ वर्षं प्रथममुच्यते।
कुमारस्य च कौमारं द्वितीयं परिकीर्त्तितम् ।। ३३.१७ ।।

सुकुमारं तृतीयन्तु सुकुमारस्य कीर्त्तितम्।
मणीचकस्य चतुर्थं मणीचकमिहोच्यते ।। ३३.१८ ।।

वसुमोदस्य वै वर्षं पञ्चमं वसुमोदकम्।
मोदाकस्य तु मोदाकं वर्षं षष्ठं प्रकीर्त्तितम् ।। ३३.१९ ।।

महाद्रुमस्य नाम्ना तु सप्तमन्तु महाद्रुमम्।
एषान्तु मानभिस्तानि सप्तवर्षाणि तत्र वै ।। ३३.२० ।।

क्रौञ्चद्वीपेश्वरस्यापि पुत्रा द्युतिमतस्तु वै।
कुशलो मनुगश्चोष्णः पीवरश्चान्धकारकः।
मुनिश्च दुन्दुभिश्चैव सुता द्युतिमतस्तु वै ।। ३३.२१ ।।

तेषां स्वनामभिर्द्देशाः क्रौञ्चद्वीपाश्रयाः शुभाः।
उष्णस्योष्णः स्मृतो देशः पीवरस्यापि पीवरः ।। ३३.२२ ।।

अन्धकारकदेशस्तु अन्धकारश्च कीर्त्त्यते।
मुनेस्तु मुनिदेशो वै दुन्दुभेर्दुन्दुभिः स्मृतः।
एते जनपदाः सप्त क्रौञ्चद्वीपे तु भास्वराः ।। ३३.२३ ।।

ज्योतिष्मतः कुशद्वीपे सप्तैते सुमहौजसः।
उद्भिदो वेणुमांश्चैव स्वैरथो लवणो धृतिः।
षष्ठः प्रभाकरश्चैव सप्तमः कपिलः स्मृतः ।। ३३.२४ ।।

उद्भिदं प्रथमं वर्षं द्वितीयं वेणुमण्डलम्।
तृतीयं स्वैरथाकारं चतुर्थं लवणं स्मृतम् ।। ३३.२५ ।।

पञ्चमं धृतिमद्वर्षं षष्ठं वर्षं प्रभाकरम्।
सप्तमं कपिलं नाम कपिलस्य प्रकीर्त्तितम् ।। ३३.२६ ।।

तेषां द्वीपाः कुशद्वीपे तत्सनामान एव तु।
आश्रमाचारयुक्ताभिः प्रजाभिः समलंकृताः ।। ३३.२७ ।।

शाल्मलस्येश्वराः सप्त पुत्रास्ते तु वपुष्मतः।
श्वेतश्च हरितश्चैव जीमूतो रोहितस्तथा।
वैद्युतो मानसश्चैव सुप्रभः सप्तमस्तथा ।। ३३.२८ ।।

श्वेतस्य श्वेतदेशस्तु रोहितस्य च रोहितः।
जीमूतस्य च जीमूतो हरितस्य च हारितः ।। ३३.२९ ।।

वैद्युतो वैद्युतस्यापि मानसस्यापि मानसः।
सुप्रभः सुप्रभस्यापि सप्तैते देशपालकाः ।। ३३.३० ।।

सप्तद्वीपे तु वक्ष्यामि जम्बूद्वीपादनन्तरम्।
सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरा नृपाः ।। ३३.३१ ।।

ज्येष्ठः शान्तभयस्तेषां सप्तवर्षाणि तानि वै।
तस्माच्छान्तभयाच्चैव शिशिरस्तु सुखोदयः।
आनन्दश्च ध्रुवश्चैव क्षेमकश्च शिवस्तथा ।। ३३.३२ ।।

तानि तेषां सनामानि सप्तवर्षाणि भागशः।
निवेशितानि तैस्तानि पूर्वे स्वायम्भुवेऽन्तरे ।। ३३.३३ ।।

मेधातिथेस्तु पुत्रैस्तैः सप्तद्वीपनिवासिभिः।
वर्णाश्रमाचारयुक्ताः प्लक्षद्वीपे प्रजाः कृताः ।। ३३.३४ ।।

प्लक्षद्वीपादिकेष्वेव शाकद्वीपान्तरेषु वै।
ज्ञेयः पञ्चसु धर्मो वै वर्णाश्रमविभागशः ।। ३३.३५ ।।

सुखमायुश्च रूपञ्च बलं धर्मश्च नित्यशः।
पञ्चस्वेतेषु द्वीपेषु सर्वं साधारणं स्मृतम् ।। ३३.३६ ।।

सप्तद्वीपपरिक्रान्तं जम्बूद्वीपं निबोधत।
आग्नीध्रं ज्येष्ठदायादं कन्यापुत्रं महाबलम्।
प्रियव्रतोऽभ्यषिञ्चत्तं जम्बूद्वीपेश्वरं नृपम् ।। ३३.३७ ।।

तस्य पुत्रा बभूवुर्हि प्रजापतिसमौजसः।
ज्येष्ठो नाभि रिति ख्यातस्तस्य किम्पुरुषोऽनुजः ।। ३३.३८ ।।

हरिवर्षस्तृतीयस्तु चतुर्थोऽभूदिलावृतः।
रम्यः स्यात्पञ्चमः पुत्रो हरिन्मान् षष्ठ उच्यते ।। ३३.३९ ।।

कुरुस्तु सप्तमस्तेषां भद्राश्वो ह्यष्टमः स्मृतः।
नवमः केतुमालस्तु तेषां देशान्निबोधत ।। ३३.४० ।।

नाभेस्तु दक्षिणं वर्षं हिमाद्वन्तु पिता ददौ ।
हेम कूटं तु यद्वर्षं ददौ किम्पुरुषाय तत् ।। ३३.४१ ।।

नैषधं यत् स्मृतं वर्षं हरिवर्षाय तद्ददौ।
मध्यमं यत्सुमेरोस्तु स ददौ तदिलावृते ।। ३३.४२ ।।

नीलन्तु यत् स्मृतं वर्षं रम्यायैतत् पिता ददौ ।
श्वेतं यदुत्तरं तस्मात् पित्रा दत्तं हरिन्मते ।। ३३.४३ ।।

यदुत्तरं श्रृङ्गवतो वर्ष तत् कुरवे ददौ ।
वर्षं माल्यवत श्चापि भद्राश्वाय न्यवेदयत् ।। ३३.४४ ।।

गन्धमादनवर्षन्तु केतुमाले न्यवेदयत्।
इत्येतानि महान्तीह नववर्षाणि भागशः ।। ३३.४५ ।।

आग्नीध्रस्तेषु सर्वेषु पुत्रांस्तानभ्यषिञ्चत।
यथाक्रमं स धर्मात्मा ततस्तु तपसि स्थितः ।। ३३.४६ ।।

इत्येतैः सप्भिः कृत्स्नाः सप्तद्वीपा निवेशिताः ।
प्रियव्रतस्य पुत्रैस्तैः पौत्रैः स्वायम्भुवस्य तु ।। ३३.४७ ।।

यानि किम्पुरुषाद्यानि वर्षाण्यष्टौ शुभानि तु।
तेषां स्वभावतः सिद्धिः सुखप्राया ह्ययत्नतः ।। ३३.४८ ।।

विपर्ययो न तेष्वस्ति जरामृत्युभयं न च ।
धर्माधर्मौ न तेष्वास्तां नोत्तमाधममध्यमाः ।
न तेष्वस्ति युगावस्था क्षेत्रेष्वेव तु सर्वशः ।। ३३.४९ ।।

नाभेर्हि सर्गं वक्ष्यामि हिमाह्वे तन्निबोधत।
नाभिस्त्वजनयत् पुत्रं मेरुदेव्यां महाद्युतिः।
ऋषभं पार्थिवश्रेष्ठं सर्वक्षत्रस्य पूर्वजम् ।। ३३.५० ।।

ऋषभाद्भरतो जज्ञे वीरः पुत्रशताग्रजः।
सोऽभिषिच्याथ भरतः पुत्रं प्राव्राज्यमास्थितः ।। ३३.५१ ।।

हिमाह्वं दक्षिणं वर्षं भरताय न्यवेदयत्।
तस्मात्तद्भारतं वर्षं तस्य नाम्ना विदुर्बुधाः ।। ३३.५२ ।।

भरतस्यात्मजो विद्वान् सुमतिर्नाम धार्मिकः।

बभूव तस्मिंस्तद्राज्यं भरतः संन्ययोजयत्।
पुत्र संक्रामितश्रीको वनं राजा विवेश सः ।। ३३.५३ ।।

तेजसस्तु सुतश्चापि प्रजापतिरमित्रजित्।
तैजसस्यात्मजो विद्वानिन्द्रद्युम्न इति श्रुतः ।। ३३.५४ ।।

परमेष्ठी सुतश्चाथ निधने तस्य शोभनः ।
प्रतीहारकुले तस्य नाम्ना जज्ञे तदन्वयात्।
प्रतिहर्त्तेति विख्यातो जज्ञे तस्यापि धीमतः ।। ३३.५५ ।।

उन्नेता प्रतिहर्त्तुस्तु भुवस्तस्य सुतः स्मृतः ।
उद्गीथस्तस्य पुत्रोऽभूत्प्रताविश्चापि तत्सुतः ।। ३३.५६ ।।

प्रतावेस्तु विभुः पुत्रः पृथुस्तस्य सुतो मतः ।
पृथोश्चापि सुतो नक्तो नक्तस्यापि गयः स्मृतः ।। ३३.५७ ।।

गयस्य तु नरः पुत्रो नरस्यापि सुतो विराट्।
विराट्सुतो महावीर्यो दीमांस्तस्य सुतोऽभवत् ।। ३३.५८ ।।

धीमतश्च महान् पुत्रो महतश्चापि भौवनः।
भौवनस्य सुतस्त्वष्टा अरिजस्तस्य चात्मजः ।। ३३.५९ ।।

अरिजस्य रजः पुत्रः शतजिद्रजसो मतः।
तस्य पुत्रशतं त्वासीद्राजानः सर्व एव ते ।। ३३.६० ।।

विश्वज्योतिः प्रधानायैस्तैरिमा वर्द्धिताः प्रजाः।
तैरिदं भारतं वर्षं सप्तखण्डं कृतं पुरा ।। ३३.६१ ।।

तेषां वंशप्रकूतैस्तु भुक्तेयं भारती धरा।
कृतत्रेतादियुक्तानि युगाख्यान्येकसप्ततिः ।। ३३.६२ ।।

येऽतीतास्तैर्युगैः सार्द्धं राजानस्ते तदन्वयाः।
स्वायम्भुवेऽन्तरे पूर्वं शतशोऽथ सहस्रशः ।। ३३.६३ ।।

एष स्वायम्भुवः सर्गो येनेदं पूरितं जगत्।
ऋषिभिर्दैवतैश्चापि पितृगन्धर्वराक्षसैः ।। ३३.६४ ।।

यक्षभूतपिशाचैश्च मनुष्यमृगपक्षिभिः ।
तैषां सृष्टिरियं लोके युगैः सह विवर्त्तते ।। ३३.६५ ।।

इति श्रीमहापुराणे वायुप्रोक्ते स्वायम्भुव वंशानुकीर्त्तनं नाम त्रयस्त्रिशोऽध्यायः ।। ३३ ।।।

**।।ऋषय ऊचुः ।।**

एवं प्रजासन्निवेशं श्रुत्वा च ऋषिपुङ्गवः।
पप्रच्छ निपुणः सूतं पृथिव्यायाम विस्तरौ ।। ३४.१ ।।

कति द्वीपाः समुद्रा वा पर्वताश्च कति प्रभोः।
कियन्ति चैव वर्षाणि तेषु नद्यश्च काः स्मृताः ।। ३४.२ ।।

महाभूतप्रमाणञ्च लोका लोकौ तथैव च।
पर्यायपारिमाण्यञ्च गतिश्चन्द्रार्कयोस्तथा।
एतत् प्रब्रूहि नः सर्वं विस्तरेण यथा तथा ।। ३४.३ ।।

**।।सूत उवाच।।**

अत ऊर्द्ध्वं प्रवक्ष्यामि पृथिव्यायामविस्तरम्।
सङ्ख्याश्चैव समुद्राणां द्वीपानाञ्चैव विस्तरम् ।। ३४.४ ।।

यावन्ति चैव वर्षाणि तेषु नद्यश्च याः स्मृताः।
महाभूतप्रमाणञ्च लोकालोकौ तथैव च।
पर्यायपारिमाण्यञ्च गतिश्चन्द्रार्कयोस्तथा ।। ३४.५ ।।

द्वीपभेदसहस्राणि सप्तस्वन्तर्गतानि वै।
न शक्यन्ते प्रमाणेन वक्तुं वर्षशतैरपि ।। ३४.६ ।।

सप्तद्वीपन्तु वक्ष्यामि चन्द्रादित्यग्रहैः सह।
येषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते ।। ३४.७ ।।

अचिन्त्याः खलु ये भावा न तांस्तर्केण भावयेत्।
प्रकृतिभ्यः परं यच्च तन्नित्यञ्च प्रजक्ष्यते ।। ३४.८ ।।

नववर्षं प्रवक्ष्यामि जम्बूद्वीपं यथा तथा ।
विस्तरान्मण्डलाच्चैव योजनैस्तन्निबोधत ।। ३४.९ ।।

शतमेकं सहस्राणां योजनानां प्रमाणतः।
नानाजनपदाकीर्णैः पुरैश्च विविधैः शुभैः ।। ३४.१० ।।

सिद्धचारणगन्धर्वपर्वतैरुपशोभितम्।
सर्वधातुनिबद्धैश्च शिलाजालसमुद्भवैः ।
पर्वतप्रभवाभिश्च नदीभिः पर्वतैस्तथा ।। ३४.११ ।।

जम्बूद्वीपः पृथुः श्रीमान् सर्व्वतः परिवारितः।
नवभिश्चावृतः सर्व्वैर्भुवनैर्भूतभावनैः।
लावणेन समुद्रेण सर्व्वतः परिवारितः ।। ३४.१२ ।।

जम्बूद्वीपस्य विस्तारात् समेन तु समन्ततः।
जम्बूद्वीपस्य विस्तारात् समेन तु समन्ततः।
प्रागायताः सुपर्वाणः षडिमे वर्षपर्व्वताः।
अवगाढा उभयतः समुद्रौ पूर्वपश्चिमौ ।। ३४.१३ ।।

हिमप्रायश्च हिमवान् हेमकूटश्च हेमवान्।
तरुणादित्यवर्णाभो हैरण्यो निषधः स्मृतः ।। ३४.१४ ।।

चातुर्वर्णस्तु सौवर्णो मेरुश्चोच्यतमः स्मृतः।
प्लुताकृतिप्रमाणश्च चतुरस्रः समुच्छ्रितः ।। ३४.१५ ।।

नानावर्णस्तु पार्श्वेषु प्रजापतिगुणान्वितः।
नाभिवन्धनसम्भूतो ब्रह्मणोऽव्यक्तजन्मनः ।। ३४.१६ ।।

पूर्व्वतः श्वेतवर्णोऽसौ ब्रह्मण्यस्तस्य तेन तत्।
पीतश्च दक्षिणेनासौ तेन वैश्यत्वमिष्यते ।। ३४.१७ ।।

भृङ्गपत्रनिभश्वासौ पश्चिमेन महाबलः।
तेनास्य शूद्रता दृष्टा मेरोर्नानार्थकारणात् ।। ३४.१८ ।।

पार्श्वमुत्तरतस्तस्य रक्तवर्णं स्वभावतः।
तेनास्य क्षत्रता चस्यादिति वर्णाः प्रकीर्तिताः।
व्यक्तः स्वभावतः प्रोक्तो वर्णतः परिमाणतः ।। ३४.१९ ।।

नीलश्च वैढूर्य्यमयः श्वेतश्रृङ्गो हिरण्मयः।
मयूरबर्हवर्णस्तु शातकौम्भस्तु श्रृङ्गवान् ।। ३४.२० ।।

एते पर्व्वतराजानः सिद्धचारणसेविताः।
तेषामन्तरविष्कम्भो नवसाहस्र उच्यते ।। ३४.२१ ।।

मध्ये त्विलावृतं यस्तु महामेरोः समन्ततः।
नवैव तु सहस्राणि विस्तीर्णः पर्व्वतस्तु सः।
मध्ये तस्य महामेरोर्निर्धूम इव पावकः ।। ३४.२२ ।।

वेद्यर्द्धं दक्षिणं मेरोरुत्तरार्द्धं तथोत्तरम्।
वर्षाणि यानि सप्तात्र तेषां ये वर्षपर्व्वताः।
द्वे द्वे सहस्रे विस्तीर्णा योजनानि समुच्छ्रयात् ।। ३४.२३ ।।

जम्बूद्वीपस्य विस्तारात्तेषामायाम उच्यते।
योजनानां सहस्राणि शते द्वे मध्यमौ गिरी ।। ३४.२४ ।।

नीलश्च निषधश्चैव ताभ्यां हीनास्तु येऽपरे।

श्वेतश्च हेमकूटश्च हिमवान् श्रृङ्गवांश्च यः ।। ३४.२५ ।।

नवतिर्द्वीवशीतिर्द्वौ सहस्राण्यायतास्तु ये ।
तेषां मध्ये जनपदास्तानि वर्षाणि सप्त वै ।। ३४.२६ ।।

सम्पातविषमैस्तैस्तु पर्व्वतैरावृतानि च।
सन्ततानि नदीभेदैरगम्यानि परस्परम्।
वसन्ति तेषु सत्वानि नाना जातीनि भागशः ।। ३४.२७ ।।

इदं हैमवतं वर्षं भारतं नाम विश्रुतम्।
हेमकूटं परं तस्मान्नाम्ना किम्पुरुषं स्मृतम् ।। ३४.२८ ।।

नैषधं हेमकूटन्तु हरिवर्षं तदुच्यते।
हरिवर्षात्परञ्चैव मेरोश्च तदिलावृतम् ।। ३४.२९ ।।

इलावृतपरं नीलं रम्यकं नाम विश्रुतम्।
रम्यात्परतरं श्वेतं विश्रुतन्तद्धिरण्मयम्।
हिरण्मयात्परञ्चापि श्रृङ्गवांस्तु कुरुस्मृतम् ।। ३४.३० ।।

धनुःसंस्थे च विज्ञेये द्वे वर्षे दक्षिणोत्तरे।
दीर्घाणि तत्र चत्वारि मध्यमन्तदिलावृतम् ।। ३४.३१ ।।

अर्वाक् च निषधस्याथ वेद्यर्द्धं दक्षिणं स्मृतम्।
परं नीलवतो यच्च वेद्यर्द्धन्तु तदुत्तरम्।
वेद्यर्द्धं दक्षिणे त्रीणि वर्षाणि त्रीणि चोत्तरे ।। ३४.३२ ।।

तयोर्मध्ये तु विज्ञेयं मेरुमध्यमिलावृतम्।
दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ।। ३४.३३ ।।

उदगायतो महाशैलो माल्यवान् नाम पर्व्वतः।
योजनानां सहस्रोरुरानीलनिषधायतः।
आयामतश्वतुस्त्रिंशत्सहस्राणि प्रकीर्तितः ।। ३४.३४ ।।

तस्य प्रतीच्यां विज्ञेयः पर्वतो गन्धमादनः।
आयामादथ विस्तारान् माल्यवानिति विश्रुतः ।। ३४.३५ ।।

परिमण्डलयोर्मध्ये मेरुरुत्तमपर्वतः ।
चतुर्वर्णः सुसौवर्णश्चतुरस्रः समुच्छ्रितः।
अव्यक्ता धातवः सर्व्वे समुत्पन्ना जलादयः ।। ३४.३६ ।।

अव्यक्तात् पृथिवी पद्मं मेरुपर्वतकर्णिकम्।
चतुष्पथं समुत्पन्नं व्यक्तं पञ्चगुणं महत् ।। ३४.३७ ।।

ततः सर्व्वाः समुत्पन्ना वृत्तयो द्विजसत्तमाः।
नैककल्पार्जितैः पुण्यौर्वे विधैः प्रागुपार्जितैः ।। ३४.३८ ।।

कृतात्मभिर्विनीतात्मा महात्मा पुरुषोत्तमः।
महादेवो महायोगी जगज्ज्येष्ठो महेश्वरः ।
सर्वलोकगतोऽनन्तो ह्यमूर्तित्वादजायत ।। ३४.३९ ।।

न तस्य प्राकृती मूर्त्तिर्मांसमेदोऽस्थिसम्भवा ।
योगाच्चैवेश्वरत्वाच्च सर्व्वात्मागत एव सः ।। ३४.४० ।।

तन्निमित्तं समुत्पन्नं लोकपद्मं सनातनम्।
कल्पशेषस्य तस्यादौ कालस्य गतिरीदृशी ।। ३४.४१ ।।

तस्मिन् पद्मे समुत्पन्नो देवदेवश्चतुर्मुखः।
प्रजापतिपतिर्ब्रह्मा ईशानो जगतः प्रभुः ।। ३४.४२ ।।

तस्य बीजानि सर्गो हि पुष्करस्य यथार्थवत्।
कृत्स्नः प्रजानिसर्गेण विस्तरेणेह कथ्यते ।। ३४.४३ ।।

यदब्जं वैष्णवं कार्य्यं ततस्तन्नाभितोऽभवत्।
पद्माकारा समुत्पन्ना पृथिवी सवनद्रुमा ।। ३४.४४ ।।

तदस्य लोकपद्मस्य विस्तरेण प्रकाशितम्।
वर्णमानं विभागेन क्रमशः श्रृणुत द्विजाः ।। ३४.४५ ।।

महाद्वीपास्तु विख्याताश्चत्वारः पत्रसंस्थिताः।
ततः कर्णिकसंस्थानो मेरुर्नाम महाबलः ।। ३४.४६ ।।

नानावर्णेषु पार्श्वेषु पूर्वतः श्वेत उच्यते।
पीतन्तु दक्षिणं तस्य शृङ्गं कृष्णं तथापरम् ।। ३४.४७ ।।

उत्तरं तस्य रक्तं वै शोभिवर्णसमन्वितम्।
मेरुस्तु शोभते शुभ्रो राजवत्स तु धिष्ठितः ।। ३४.४८ ।।

तरुणादित्यवर्णाभो विधूम इव पावकः।
चतुरशीतिसाहस्र उत्सेधेन प्रकीर्त्तितः ।। ३४.४९ ।।

प्रविष्टः षोडशाधस्ताद्विस्तृतस्तावदेव तु ।
स शरावस्थितः पूर्वं द्वात्रिंशन्मूर्ध्नि विस्तृतः ।। ३४.५० ।।

विस्तारात् त्रिगुणश्चास्य परिणाहः समन्ततः।

मण्डलेन प्रमाणेन त्र्यस्रेऽर्द्धन्तु तदिष्यते ।। ३४.५१ ।।

चत्वारिंशत्सहस्राणि योजनानां समन्ततः।
अष्टाभिरधिकानि स्युस्त्र्यस्रे माने प्रकीर्त्तितम् ।। ३४.५२ ।।

चतुरस्रेण मानेन परिणाहः समन्ततः।
चतुःषष्टिसहस्राणि योजनानां विधीयते ।। ३४.५३ ।।

स पर्वतो महादिव्यो दिव्यौषधिसमन्वितः।
भुवनैरावृतः सर्वो जातरूपमयैः शुभैः ।। ३४.५४ ।।

तत्र देवगणाः सर्वे गन्धर्वोरगराक्षसाः ।
शैलराजैः प्रदृश्यन्ते शुभाश्चाप्सरसाङ्गणाः ।। ३४.५५ ।।

स तुमेरुः परिवृतो भुवनैर्भूतभावनः।
चत्वारो यस्य देशा वै नानापार्श्वेष्वधिष्ठिताः ।। ३४.५६ ।।

भद्राश्वो भरतश्चैव केतुमालश्च पश्चिमः।
उत्तराः कुरवश्चैव कृतपुण्यप्रतिश्रयाः ।। ३४.५७ ।।

कर्णिका तस्य पद्मस्य समन्तात्परिमण्डला।
योजनानां सहस्राणि नवतिः षट् प्रकीर्त्तिताः।
चत्वारश्चाप्यशीतिश्च अन्तरान्तर धिष्ठिताः ।। ३४.५८ ।।

त्रिशतञ्च सहस्राणि योजनानां प्रमाणतः।
तस्य केशरजालानि विस्तीर्णानि समन्ततः ।। ३४.५९ ।।

शतसाहस्रिकायामा साशीतिपृथुलायता।
चत्वारि तस्य पत्राणि योजनानां चतुर्द्दिशम् ।। ३४.६० ।।

तत्र यासौ मया पूर्वं कर्णिकेत्यभिशब्दिता।
तां वर्ण्यमानामेकाग्राः समासेन निबोधत ।। ३४.६१ ।।

शताश्रिमेनं मेनेऽत्रिः सहस्राश्रिमृषिर्भृगुः।
अष्टाश्रिमेनं सावर्णिश्चतुरस्रन्तु भागुरिः ।। ३४.६२ ।।

वार्षायणिस्तु सामुद्रं शरावञ्चैव गालवः।
ऊर्द्ध्ववेणीकृतं गार्ग्यः क्रोष्टकिः परिमण्डलम् ।। ३४.६३ ।।

यद्यद्यस्य हि यत्पार्श्वे पर्वताधिपतेर्ऋषिः।
तत्तदेवास्य वेदासौ ब्रह्मैनं वेद कृत्स्नशः ।। ३४.६४ ।।

मणिरत्नमयं चित्रं नानावर्णप्रभायुतम्।
अनेकवर्णनिचयं सौवर्णमरुणप्रभम् ।। ३४.६५ ।।

कान्तं सहस्रपर्वाणं सहस्रोदककन्दरम्।
सहस्र शतपत्रन्तं विद्धि मेरुं नगोत्तमम् ।। ३४.६६ ।।

मणिरत्नार्पितस्तम्भैर्मणिचित्रितवेदिकैः।
सुवर्णमणिचित्राङ्गं तथा विद्रुमतोरणैः ।। ३४.६७ ।।

विमानयानैः श्रीमद्भिः शतसङ्ख्यैर्दिवौकसाम्।
प्रभादीपितपर्यन्तं मेरुं पर्वणि पर्वणि ।। ३४.६८ ।।

तस्य पर्वसहस्रेऽस्मिन् नानाश्रयविभूषिते।
सर्वदेव निकायानि सन्निविष्टान्यनेकशः ।। ३४.६९ ।।

तमावसच्चोर्द्ध्वतले देवदेवश्चतुर्मुखः।
ब्रह्मा ब्रह्मविदां श्रेष्ठो वरिष्ठस्त्रिदिवौकसाम् ।। ३४.७० ।।

महाभुवनसम्पूर्णैः सर्व्वैः कामफलप्रदैः ।
महासुरसहस्रैस्तं दिक्ष्वनेकसमाकुलम् ।। ३४.७१ ।।
तत्र ब्रह्मसभा रम्या ब्रह्मर्षिगणसेविता ।
नाम्ना मनोवती नाम सर्वलोकेषु विश्रुता ।। ३४.७२ ।।

तत्रेशानस्य देवस्य सहस्रादित्यवर्चसम्।
महाविमानं संस्थाप्य महिम्ना वर्तते सदा ।। ३४.७३ ।।

तत्र सर्षिगणा देवाश्चतुर्वक्त्रस्य ते तदा।
तदेव तेजसां राशिर्देवानां तत्र कीर्त्त्यते ।। ३४.७४ ।।

तत्रास्ते श्रीपतिः श्रीमान् सहस्राक्षः पुरन्दरः।
उपास्यमानस्त्रिदशैर्महायोगैः सुरर्षिभिः ।। ३४.७५ ।।

तत्र लोकपतेः स्थानमादित्यसमवर्चसः।
महेन्द्रस्य महाराज्ञः सर्व्वसिद्धैर्नमस्कृतम् ।। ३४.७६ ।।

तमिन्द्रलोकं लोकस्य ऋद्ध्या परमया युतम्।
दीप्यते त्वमरश्रेष्ठैस्त्रिदशैर्नित्यसेवितम् ।। ३४.७७ ।।

द्वितीयेऽप्यन्तरतटे वैदिश्ये पूर्व्वदक्षिणे।
नानाधातुशतश्चित्रैः सुरम्यमतितेजसम् ।। ३४.७८ ।।

नैकरत्नार्थिततलमनेकस्तम्भसंयुतम्।

जाम्बूनदकृतोद्यानं नानारत्नसुवेदिकम् ।। ३४.७९ ।।

कूटागारैर्विनिक्षिप्तमनेकैर्भवनोत्तमैः ।
महाविमानं प्रथितं भास्करं जातवेदसम् ।। ३४.८० ।।

सा हि तेजोवती नाम हुताशस्य महासभा।
साक्षात्तत्र सुरश्रेष्ठः सर्वदेवमुखोऽनलः ।। ३४.८१ ।।

शिखाशतसहस्राढ्यो ज्वालामाली विभा वसुः।
स्तूयते हूयते चैव तत्र सर्षिगणैः सुरैः ।। ३४.८२ ।।

अधिदैवकृतं विप्रैर्विशेषः स तु उच्यते।
स विभागञ्च तेजश्च सर्व एव न संशयः ।। ३४.८३ ।।

भोगान्तरमनुप्राप्त एकतेजो विभुः स्मृतः।
पृथक्त्वञ्च हि युक्त्या तु कार्यकारणमिश्रितम् ।। ३४.८४ ।।

तमग्निं लोकलोकज्ञैस्तद्वीर्यैस्तत्परा क्रमैः ।
महात्मभिर्महासिद्धैर्महाभागैर्नमस्कृतम् ।। ३४.८५ ।।

तृतीयेऽप्यन्तरतटे एवमेव महासभा।
वैवस्वतस्य विज्ञेया लोके ख्याता सुसंयमा ।। ३४.८६ ।।

तथा चतुर्थदिग्देशे नैर्ऋत्याधिपतेः सभा।
नाम्ना कृष्णाङ्गना नाम विरूपाक्षस्य धीमतः ।। ३४.८७ ।।

पञ्चमेऽप्यन्तरतटे एवमेव महासभा।
वैवस्वतस्य विज्ञेया नाम्ना शुभवती सती।
उदकाधिपतेः ख्याता वरुणस्य महात्मनः ।। ३४.८८ ।।

परोत्तरे तथा देशे षष्ठेऽन्तरतटे शिवे।
वायोर्गन्धवती नाम सभा सर्वगुणोत्तरा ।। ३४.८९ ।।
सप्त मेऽप्यन्तरतटे नक्षत्राधिपतेः सभा।
नाम्ना महोदया नाम शुद्धवैढूर्य्यवेदिका ।। ३४.९० ।।

तथाष्टमेऽन्तरतटे ईशानस्य महात्मनः

**।। सूत उवाच ।।**

यत्तद्वै कर्णिकामूलमिति वै सम्प्रकीर्तितम्।
तद्योजनसहस्राणां सप्ततीनामधः स्मृतम् ।। ३५.१ ।।

चत्वरिंशत्तथाष्टौ च सहस्राण्यत्र मण्डलम्।
शैलराजावृतं रम्यं मेरुमूलमिति श्रुतिः ।। ३५.२ ।।

तेषां गिरिसहस्राणामनेकेषु महोच्छ्रिताः।
दिक्षु सर्वासु पर्य्यन्तैर्मर्य्यादाः पर्वताः स्मृताः ।। ३५.३ ।।

निकुञ्जकन्दरनदीगुहानिर्झरशोभिताः।
बहुप्रासादकटकै स्तटैश्च कुसुमोज्ज्वलैः ।। ३५.४ ।।

नितम्बपुष्पमालौघैः सानुभिर्धातुमण्डितैः ।
शिखरैर्हेमकपिलैर्नैकप्रस्रवणावृतैः।
शोभिता गिरयः सर्व्वे पुष्टै रत्न समर्पितैः ।। ३५.५ ।।

विहङ्गशतसंजुष्टैः कुञ्जैरनुपमैरपि।
सिहशार्दूलशरभैर्नैकैश्चामरवारणैः।
नानावर्णाकृतिधरैः सेविता विविधैर्नगैः ।। ३५.६ ।।

सप्ताश्च हरिकृष्णाङ्गमेकैकं दशपर्वतम्।
बाह्यमाभ्यन्तरा ये तु त्रिवाहास्तु समाः स्मृताः ।। ३५.७ ।।

जठरो देवकूटश्च पूर्वस्यां दिशि पर्वतौ।
तौ दक्षिणोत्तरायामावानीलनिषधायतौ ।। ३५.८ ।।

कैलासो हिमवांश्चैव दक्षिणोत्तरपर्वतौ।
पूर्वपश्चायतावेतावर्णवान्तव्यवस्थितौ ।। ३५.९ ।।

योऽसौ मेरुर्द्विजश्रेष्ठाः प्रांशुः कनकपर्वतः।
विष्कम्भं तस्य वक्ष्यामि तन्मे निगदतः श्रृणु ।। ३५.१० ।।

महापादास्तु चत्वारो मेरोरथ चतुर्द्दिशम्।
यैर्धृतत्वान्न चलति सप्तद्वीपवती मही ।। ३५.११ ।।

दशयोजनसाहस्र आयामस्तेषु पठ्यते।
देवगन्धर्वयक्षाणां नानारत्नोपशोभिताः।
नैकनिर्झरवप्राढ्या रम्यकन्दरनिर्मिताः ।। ३५.१२ ।।

नितम्बपुष्पकादम्बैः शोभिताश्चित्रसानवः।
मनःशिलादरीभिश्च हरितालतलैस्तथा ।। ३५.१३ ।।

सुवर्णमणिचित्राभिर्गुहाभिश्च समन्ततः।
शुद्धहिङ्गुलकप्रख्यैः काञ्चनैर्धातुमण्डितैः ।। ३५.१४ ।।

वरकाञ्चनचित्रैश्च प्रवालैः समलंकृताः।
रुचिराः शतपर्वाणः सिद्धावासा मुदान्विताः।
महाविमानैः श्रीमद्भिः समन्तात्परिदीपिताः ।। ३५.१५ ।।

पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः।
विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्मृतः ।। ३५.१६ ।।

तेषां सहस्रश‍ृङ्गेषु वज्रवैदूर्यवेदिकाः।
शाखासहस्रकलिताः सुमूलाः सुप्रतिष्ठिताः ।। ३५.१७ ।।

स्निग्धैर्नीलैर्घनैः पर्णैः सञ्छन्नविविधाश्रयाः ।
अनेकप्रजनोत्सेधा महापुष्पफलोपगाः ।। ३५.१८ ।।

यक्षगन्धर्वसेव्याश्च सेविताः सिद्धचारणैः।
महावृक्षाः समुत्पन्नाश्चत्वारो द्वीपकेतवः ।। ३५.१९ ।।

मन्दरस्य गिरेःश‍ृङ्गे महावृक्षः स केतुराट्।
आलम्बशाखाशिखरः कन्दरश्च पादपः ।। ३५.२० ।।

महाकुम्भप्रमाणैस्तु पुष्पैर्विकचकेसरैः।
महागन्धैर्मनोज्ञैश्च शोभितः सर्वकालजैः ।। ३५.२१ ।।

सहस्रमधिकं सोऽथ गन्धेनापूरयद्दिशः।
योजनानां समन्ताद्वै मन्दमारुतवीजितः ।। ३५.२२ ।।

वरकेतुरेव प्रथितो भद्राश्वो नाम यो द्विजाः।
यत्र साक्षात् हृषीकेशः सिद्धसङ्घैर्महीयते ।। ३५.२३ ।।

तस्य रुद्रकदम्बस्य तदा श्वेतहरो हरिः ।
प्राप्तवानपरश्रेष्ठः स तत्र सहितः पुरा ।। ३५.२४ ।।

तेन चालोकितं सर्वं द्वीपं द्विपदनायकाः।
यस्य नाम्ना समाख्यातो भद्राश्वो नाम नामतः ।। ३५.२५ ।।

दक्षिणस्यापि शैलस्य शिखरे देवसेविता।
जम्बूः सदा पुष्पफला सदा माल्योपशोभिता ।। ३५.२६ ।।

महामूलैर्महास्कन्धैः स्निग्धवर्णैर्विभूषिता।

नवैः सदा पुष्पफलैः शाखाभिश्चोपशोभिता ।। ३५.२७ ।।

तस्या ह्यतिप्रमाणानि स्वादूनि च मृदूनि च।
फलान्यमृतकल्पानि पतन्ति गिरिमूर्द्धनि ।। ३५.२८ ।।

तस्माद्गिरिवरप्रस्थात् पुनः प्रस्यन्दवाहिनी।
नदी जम्बूनदी नाम प्रवृत्ता मधुवाहिनी ।। ३५.२९ ।।

तत्र जाम्बूनदन्नाम सुवर्णं ज्वलनप्रभम्।
देवालङ्कारमतुलं जायते पापनाशनम् ।। ३५.३० ।।

देवदानवगन्धर्वा यक्षराक्षसपन्नगाः।
यत् पिबन्त्यमृतप्रख्यं मधु जाम्भूरसस्रवम् ।। ३५.३१ ।।

स केतुर्दक्षिणे द्वीपे जम्भूर्लोकेषु विश्रुता।
यस्या नाम्ना स विख्यातो जम्भूद्वीपः सनातनः ।। ३५.३२ ।।

विपुलस्यापि शैलस्य पश्चिमस्य महात्मनः।
जातः श्रृङ्गेऽतिसुमहानश्वत्थ श्चैव पादपः ।। ३५.३३ ।।

विलम्बिवरमालाद्यः सुवर्णमणिवेदिकः।
महोच्चस्कन्धविटपो नैकसत्त्वगुणालयः ।। ३५.३४ ।।

कुम्भप्रमाणैः सुखदैः फलैः सर्वर्त्तुकैः शुभैः।
स केतुः केतुमालानां देवगन्धर्वसेवितः ।। ३५.३५ ।।

केतुमालेति च यथा तस्या नाम प्रकीर्तितम्।
तन्निबोधत विप्रेन्द्रा निरुक्तं नाम कर्मतः ।। ३५.३६ ।।

क्षीरोदमथने वृत्ते दैत्यपक्षे पराजिते।
महासमरसम्मर्दवृक्षक्षोभविमर्दिता ।। ३५.३७ ।।

सहस्राक्षेण विहिता माला तस्य सुतानिता।
तस्य स्कन्धे समासक्त्या ह्यश्वत्थस्य वनस्पतेः ।। ३५.३८ ।।

सा तथैव महागन्धा ह्यम्लाना सर्वकामिकी।
इज्यते सुमहाभागा विविधैः सिद्धचारणैः ।। ३५.३९ ।।

तस्य केतोः सदा माला देवदत्ता विराजते।
पवनेनेरिता दिव्यं वाति गन्धं मनोरमम् ।। ३५.४० ।।

ताभ्यां नामाङ्कितो द्वीपः पश्चिमे बहुविस्तरः।

केतुमाल इति ख्यातो दिवि चेह च सर्वशः ।। ३५.४१ ।।

स्वपार्श्वस्योत्तरे चापि श्रृङ्गे जातो महाद्रुमः ।
न्यग्रोधो विपुलस्कन्धोऽनेकयोजनमण्डलः ।। ३५.४२ ।।

माल्यदामकलापैश्च विविधैर्गन्धशालिभिः।
शाकाविलम्बी शुशुभे सिद्धचारणसेवितः ।। ३५.४३ ।।

प्रवालकुम्भसदृशैर्मधुपूर्णैः फलैः सदा।
स ह्युत्तर कुरूणान्तु केतुवृक्षः प्रकाशते ।। ३५.४४ ।।

सनत्कुमारावरजा मानसा ब्रह्मणः सुताः।
सप्त तत्र महाभागाः कुरवो नाम विश्रुताः ।। ३५.४५ ।।

तत्र तैरागतज्ञानैः सत्त्वस्थैः पुण्यकीर्तिभिः।
अक्षयं क्षेममपरं लोकं प्राप्तं सनातनम् ।। ३५.४६ ।।

तेषां नामाङ्कितो द्वीपः सप्तानां वै महात्मनाम् ।
दिवि चेह च विख्याता उत्तराः कुरवः सदा ।। ३५.४७ ।।

इति श्रीमहापुराणे वायुप्रोक्ते जम्बूद्वीपवर्णनं नाम पञ्चत्रिंशोऽध्यायः ।। ३५ ।।

**।।सूत उवाच।।**

तेषां चतुर्णां वक्ष्यामि शैलेन्द्राणां यथाक्रमम्।
अनुबन्धानि रम्याणि सर्वकालर्त्तुकानि च ।। ३६.१ ।।

सारिकाभिर्मयूरैश्च चकोरैश्च मदोत्कटैः।
शुकैश्च भृङ्गराजैश्च चित्रकैश्च समन्ततः ।। ३६.२ ।।

जीवञ्जीवकनादैश्च हेमकानाञ्च नादितैः।
मत्तकोकिलनादैश्च वल्गूनाञ्च निनादितैः ।। ३६.३ ।।

सुग्रीवकाञ्चनरवैः कलविङ्करुतैस्तथा।
कूजितान्तरशब्दैश्च सुरम्याणि च सर्वशः ।। ३६.४ ।।

मदात्कटैर्मधुरैश्च भ्रमरैश्च महालसैः।
उपगीतवनान्तानि किन्नरैश्च क्वचित् क्वचित् ।। ३६.५ ।।

पुष्पवृष्टिं विमुञ्चन्ति मन्दमारुतकम्पिताः।
तरवो यत्र दृश्यन्ते चारुपल्लवशोभिताः ।। ३६.६ ।।

स्तबकैर्मञ्जरीभिश्च ताम्रैः किसलयैस्तथा।
मन्दवातवशाल्लोलैर्दोलयद्भिर्युतानि च ।। ३६.७ ।।

नानाधातुविचित्रैश्च कान्तरूपैः शिलाशतैः।
शल्लैः क्वचिद्द्विजश्रेष्ठा विन्यस्तैः शोभितानि च ।। ३६.८ ।।

देवदानवगन्धर्वैर्यक्षराक्षसपन्नगैः।
सिद्धाप्सरोगणैश्चैव सेवितानि ततस्ततः ।। ३६.९ ।।

मनोहराणि चत्वारि देवाक्रीडनकान्यथ।
चतुर्दिशमुदाराणि नाम्ना श्रृणुत तानि मे ।। ३६.१० ।।

पूर्वञ्चैत्ररथं नाम दक्षिणं नन्दनं वनम्।
वैभ्राजं पश्चिमं विद्यादुत्तरं सवितुर्वनम् ।। ३६.११ ।।

महावनेषु चैतेषु निविष्टानि यथाक्रमम्।
अनुबन्धानि रम्याणि विहङ्गैः कूजितानि च ।। ३६.१२ ।।

वनैर्विस्तीर्णतीर्थानि महापुण्यावनानि च।
महानागाधिवासानि सेवितानि महात्मभिः ।। ३६.१३ ।।

सुरसामललोयानि शिवानि सुसुखानि च।
सिद्धदेवासुरवरैरुपस्पृष्टजलानि च ।। ३६.१४ ।।

छत्रप्रमाणैर्विकचैर्महागन्धैर्मनोहरैः।
पुण्डरीकैर्महापत्रैरुत्पलैः शोभितानि च।
महासरांसि चत्वारि तानि वक्ष्यामि नामतः ।। ३६.१५ ।।

अरुणोदं सरः पूर्वं दक्षिणं मानसं स्मृतम्।
सितोदं पश्चिमसरो महाभद्रन्तथोत्तरम् ।। ३६.१६ ।।

अरुणोदञ्च पूर्वेण ये च शैलास्ततः स्मृताः।
तान् कीर्त्यमानांस्तत्त्वेन श्रृणुध्वं विस्तरान्मम ।। ३६.१७ ।।

शीतान्तश्च कुमुञ्जश्च सुवीरश्चाचलोत्तमः।
विकङ्को मणिशीलश्च वृषभश्चाचलोत्तमः ।। ३६.१८ ।।
महानीलोऽथ रुचकः सबिन्दुर्मन्दरस्तथा।
वेणुमांश्च सुमेधश्च निषधो देवपर्वतः ।। ३६.१९ ।।

इत्येते पर्वतवरा अन्ये च गिरयस्तथा।
पूर्वेण मन्दरस्यैते सिद्धवासा उदाहृताः ।। ३६.२० ।।
सरसो मानसस्येह दक्षिणा ये महाचलाः।
ये कीर्तिता मया ते वै नामतस्तान्निबोधत ।। ३६.२१ ।।

शैलस्त्रिशिखरश्चापि शिशिरश्चाचलोत्तमः।
कलिङ्गश्च पतङ्गश्च रुचकश्चैव सानुमान् ।। ३६.२२ ।।

ताम्राभश्च विशाखश्च तथा श्वेतोदरो गिरिः।
समूलो विषधारश्च रत्नधारश्च पर्वतः ।। ३६.२३ ।।

एकश्रृङ्गो महामूलो गजशैलः पिशाचकः।
पञ्चशैलोऽथ कैलासो हिमवंश्चाचलोत्तमः ।। ३६.२४ ।।

इत्येते देवचरिता ह्युत्कृष्टाः पर्वतोत्तमाः।

दिग्भागो दक्षिणे प्रोक्ता मेरोरमरवर्च्चसः ।। ३६.२५ ।।

अपरेण सितोदस्य सरसो द्विजसत्तमाः।
उत्तमा ये महाशैलास्तान् प्रवक्ष्ये यथाक्रमम् ।। ३६.२६ ।।

सुवक्षाः शिखिशैलश्च कालो वैढूर्यपर्वतः।
कपिलः पिङ्गलो रुद्रः सुरसश्च महाचलः ।। ३६.२७ ।।

कुमुदो मधुमांश्चैव अञ्जनीमुकुटस्तथा।
कृष्णश्च पाण्डरश्चैव सहस्रशिखरश्चह ।। ३६.२८ ।।

पारियात्रश्च शैलेन्द्रस्त्रिश्रृङ्गश्चाचलोत्तमः।
इत्येते पर्वतवरा दिग्भागे पश्चिमे स्मृताः ।। ३६.२९ ।।

महाभद्रस्य सरस उत्तरेणापि श्रीमतः।
ये मया पूर्वतः प्रोक्तास्तान्वदिष्ये यथाक्रमम् ।। ३६.३० ।।

शङ्कुकूटो महाशैलो वृषभो हंसपर्वतः।
नागश्च कपिलश्चैव इन्द्रशैलश्च सानुमान् ।। ३६.३१ ।।

नीलः कनक श्रृङ्गश्च शतश्रृङ्गश्च पर्वतः।
पुष्पको मेघशैलश्च विराजश्चाचलोत्तमः।
जारुधिश्चैव शैलेन्द्र इत्येते उत्तराः स्मृताः ।। ३६.३२ ।।

एतेषां शैलमुख्यानामन्तरेषु यथाक्रमम्।
स्थल्योऽह्यन्तरद्रोण्यश्च सरांसि च निबोधत ।। ३६.३३ ।।

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम षट्त्रिंशोऽध्यायः ।। ३६ ।।

**।।सूत उवाच।।**

शीतान्तस्याचलेन्द्रस्य कुमुञ्जस्यान्तरेण तु।
द्रोण्यो विहङ्गसङ्घुष्टा नानासत्त्वनिषेविताः ।। ३७.१ ।।

त्रियोजनशतायामा विस्तीर्णाः शतयोजनाः।
सुरसामलपानीयरम्यं तत्र सरोवरम् ।। ३७.२ ।।

द्रोण्यायामप्रमाणैस्तु पुण्डरीकैः सुगन्धिभिः।
सहस्रशतपत्रैर्हि महापद्मैरलंकृतम् ।। ३७.३ ।।

महोरगैरध्युषितं महाभोगैर्दुरासदैः।
देवदानवगन्धर्वैरुपस्पृष्टं जलं शुभम् ।। ३७.४ ।।

पुण्यं तच्छ्रीसरो नाम प्रकाशं दिवि चेह च।
प्रसन्नजलसम्पूर्णं शरण्यं सर्वदेहिनाम् ।। ३७.५ ।।

तत्र त्वेकं महापद्मं मध्ये पद्मवनस्य ह।
कोटिपत्रप्रचारं तत्तरुणादित्यवर्चसम् ।। ३७.६ ।।

नित्यं व्याकोशमजरं चाञ्चल्याच्चातिमण्डलम्।
चारुकेशरजालाढ्यं मत्तषट्पदनादितम् ।। ३७.७ ।।

तस्मिन् पद्मे भगवती साक्षाच्छ्रीर्नित्यमेव हि।
लक्ष्म्याः पद्मं तदावासं मूर्त्तिमत्या न संशयः ।। ३७..८ ।।

सरसस्तस्य पूर्वस्मिन् तीरे सिद्धनिषेवित।
सदा पुष्पफलं रम्यं तत्र बिल्ववनं महत् ।। ३७.९ ।।

शतयोजनविस्तीर्णं त्रियोजनशताय तम्।
अर्धक्रोशोच्चशिखरैर्महावृक्षैः सहस्रशः ।। ३७.१० ।।

शाखासहस्रकलितैर्महास्कन्धैः समाकुलम्।
फलैः सुवर्णसङ्काशैर्हरितैः पाण्डरैस्तथा ।। ३७.११ ।।

अमृतस्वादुसद्दशैर्भेरीमात्रैः सुगन्धिभिः।
शीर्यमाणैः पतद्भिश्च कीर्णा भूमिर्निरन्तरा ।। ३७.१२ ।।

नाम्ना तच्छ्रीवनं नाम सर्वलोकेषु विश्रुतम्।
गन्धर्वैः किन्नरैर्यक्षैर्महानागैश्च सेवितम् ।। ३७.१३ ।।

सिद्धैश्चैव समाकीर्णं नित्यं बिल्वफलाशिभिः।
विविधैर्भूतसङ्घैश्च नित्यमेव निषेवितम् ।। ३७.१४ ।।

तस्मिन् वने भगवती साक्षाच्छ्रीर्नित्यमेव हि।
देवी सन्निहिता तत्र सिद्धसङ्घैर्नमस्कृता ।। ३७.१५ ।।

विकङ्कस्याचलेन्द्रस्य मणिशैलस्य चान्तरे।
शतयोजनविस्तीर्णं द्वियोजनशतायतम् ।। ३७.१६ ।।

विपुलञ्चम्पकवनं सिद्धचारणसेवितम्।
पुष्पलक्ष्म्यावृतं भाति ज्वलन्तमिव नित्यदा ।। ३७.१७ ।।

अर्द्धक्रोशोच्चशिखरैर्महास्कन्धैः पलाशिभिः ।
प्रफुल्लशाखाशिखरैः पिञ्जरं भाति तद्वनम् ।। ३७.१८ ।।

द्विबाहुपरिणाहैस्तैस्त्रिहस्तायामविस्तरैः ।
मनः शिलाचूर्णनिभैः पाण्डुकेसरशालिभिः ।। ३७.१९ ।।

पुष्पैर्मनोहरैर्व्याप्तं व्याकोशैर्गन्धशालिभिः।
विराजते वनं सर्वं मत्तभ्रमरनादितम् ।। ३७.२० ।।

तद्वनं दानवैर्देवगन्धर्वैर्यक्षराक्षसैः।
किन्नरैरप्सरोभिश्च महानागैश्च सेवितम् ।। ३७.२१ ।।

तत्राश्रमं भगवतः कश्यपस्य प्रजापतेः।
सिद्धसाध्यगणा कीर्णं नानाश्रुतिविभूषितम्।
महानीलकुमुञ्जाभ्यामन्तरेप्यचलावथ ।। ३७.२२ ।।

महानद्याः सुखायास्तु तीरे सिद्धनिषेविते।
पञ्चाशद्योजनायामं त्रिंशद्योजनविस्तरम्।
रम्यं तालवनं तद्धि अर्द्धक्रोशोच्चमस्तकम् ।। ३७.२३ ।।

महामूलैर्महासारैः स्थिरैरविरलैः शुभैः।
कुमुदाञ्जनसंस्थानैः परिवृत्तैर्महा फलैः।
मृष्टगन्धरसोपेतैरुपेतं सिद्धसेवितम् ।। ३७.२४ ।।

माहेन्द्रस्य द्विपेन्द्रस्य तत्र वास उदाहृतः।
ऐरावतस्य भद्रस्य सर्वलोकेषु विश्रुतः ।। ३७.२५ ।।

वेणुमन्तस्य शैलस्य सुमेधस्योत्तरेण च।
सहस्रयोजनायामं विस्तीर्णं शतयोजनम् ।। ३७.२६ ।।

वृक्षगुल्मलतागुच्छैः सर्ववीरुद्भिरीरितम्।
दूर्वाप्रस्तारमेवाथ सर्वसत्वविवर्जितम् ।। ३७.२७ ।।

तथा निषधशैलस्य देवशैलस्य चोत्तरे।
सहस्रयोजनायामा शतयोजनविस्तृता ।। ३७.२८ ।।

सर्वांह्येकशिला भूमिर्वृक्षवीरुद्विवर्जिता।
आप्लुता पादमात्रेण ह्युदकेन समन्ततः ।। ३७.२९ ।।

इत्येता ह्यन्तरद्रोण्यो नानाकाराः प्रकीर्त्तिताः।
मेरोः पूर्वेण विप्रेन्द्रा यथावदनुपूर्वशः ।। ३७.३० ।।

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम सप्तत्रिंशोऽध्यायः ।। ३७ ।।

**।।सूत उवाच ।।**

अतः परं प्रवक्ष्यामि दक्षिणान्दिशमाश्रिताः।
या द्रोण्यः सिद्धचरिताः शृणु ता ह्यनुपूर्वशः ।। ३८.१ ।।

शिशिरस्याचलेन्द्रस्य पतङ्गस्यान्तरेण च।
श्लक्ष्णभूमिश्रिया युक्तं लतालिङ्गितपादपम् ।। ३८.२ ।।

पृथुक्षेपोच्चशिखरैः पादपैरुपशोभितम्।
उदुम्बरवनं रम्यं पक्षिसङ्घनिषेवितम् ।। ३८.३ ।।

पक्वैर्विद्रुमसङ्काशै र्मधुपूर्णैर्मनोरमैः।
ज्वलितं तद्वनं भाति महाकुम्भोपमैः फलैः ।। ३८.४ ।।

तत् सिद्धयक्षगन्धर्वाः किन्नरा उरगास्तथा।
विद्याधराश्च मुदिता उपजीवन्ति नित्यशः ।। ३८.५ ।।

प्रसन्नस्वादुसलिलास्तत्र नद्यो बहूदकाः।
सुरसामलतोयास्ताः सरांसि च समन्ततः ।। ३८.६ ।।

तत्राश्रमं भगवतः कर्द्दमस्य प्रजापतेः।
रम्यं सुरगणाकीर्णं सर्वतश्चित्रकाननम्।
समन्ताद्योजनशतं तद्वनं परिमण्डलम् ।। ३८.७ ।।

ताम्रवर्णस्य शैलस्य पतङ्गस्यान्तरेण तु।
शतयोजनविस्तीर्णं द्वियोजनशतायतम् ।। ३८.८ ।।

तरुणादित्यसङ्काशैः पुण्डरीकैः समन्ततः।
सहस्रपत्रैर्विकचैर्महापद्मैरलङ्कृतम् ।। ३८.९ ।।

तथा भ्रमरसंलीनैः शतपत्रैः सुगन्धिभिः।
प्रफुल्लैः शोभितजलं रक्तनीलैर्महोत्पलैः ।। ३८.१० ।।

सरोवरं महापुण्यं देवदानवसेवितम्।
महोरगैरध्युषितं नीलजाल विभूषितम् ।। ३८.११ ।।

तस्य मध्ये जनपदो ह्यायतः शतयोजनः।
त्रिंशद्योजनविस्तीर्णो रक्तधातुविभूषितः ।। ३८.१२ ।।

तस्योपरि महारम्या प्रांशु प्राकारतोरणा।
नरनारीगणाकीर्णा स्फीता विभवविस्तरैः ।। ३८.१३ ।।

वलभीकूटनिर्व्यूहैर्मणिभक्तिविचित्रितैः।

रत्नचित्रार्पिततलैः श्लक्ष्णचित्रोत्तरच्छदैः ।। ३८.१४ ।।

महाभवनमालाभिर्महाप्रांशुभिरुत्तमैः।
विद्याधरपुरं तत्र शोभते भ्राजयच्छुभम् ।। ३८.१५ ।।

विद्याधरपतिस्तत्र पुलोमा तत्र विश्रुतः।
चित्रवेषधरः स्रग्वी माहेन्द्रसदृशद्युतिः ।। ३८.१६ ।।

दीप्तानां चित्रवेषाणां सूर्यप्रतिमतेजसाम्।
विद्याधरसहस्राणामनेकेषां स राजराट् ।। ३८.१७ ।।

विशाखस्याचलेन्द्रस्य पतङ्गस्यान्तरेण च।
सरसस्ताम्रवर्णस्य पूर्वे तीरे परिश्रुतम् ।। ३८.१८ ।।

पञ्चेषुक्षेपणैर्विद्धं सुशाखं वर्णशोभितम् ।
सर्व कालफलं तत्र स्फीतं चाम्रवणं महत् ।। ३८.१९ ।।

फलैः कनकसङ्काशैर्महास्वादैः सुगन्धिभिः।
महाकुम्भप्रमाणैश्चातनुशाखैः समन्ततः ।। ३८.२० ।।

गन्धर्वकिन्नरा यक्षा नागा विद्याधरास्तथा।
पिबन्त्याम्ररसं तत्र सुस्वादु ह्यमृतोपमम् ।। ३८.२१ ।।

तत्राम्ररसपीतानां मुदितानां महात्मनाम्।
श्रूयन्ते हृष्ट पुष्टानां नादास्तस्मिन् महावने ।। ३८.२२ ।।

सुमूलस्याचलेन्द्रस्य वसुधारस्य चान्तरे।
समा सुरभिपूर्णाढ्या विहङ्गैरुपशोभिता ।। ३८.२३ ।।

त्रिंशद्योजनविस्तीर्णा पञ्चाशद्योजनायता।
तत्र बिल्वस्थली विप्राः शुद्धा निम्नफलद्रुमाः ।। ३८.२४ ।।

सुस्वादैर्विद्रुमनिभैः फलैर्बिल्वैर्महोपमैः।
शीर्यमाणैर्विशीर्णैश्च प्रक्लिन्नतलमृत्तिकाः ।। ३८.२५ ।।

तां स्थलीमुपजीवन्ति यक्षगन्धर्वकिन्नराः।
सिद्धा नागाश्च बहुशो नित्यं बिल्वफलाशिनः ।। ३८.२६ ।।

अन्तरे वसुधारस्य रत्नधारस्य चान्तरे।
त्रिंशद्योजनविस्तीर्णमायतं शतयोजनम् ।। ३८.२७ ।।

सुगन्धं किंशुकवनं नित्यं पुष्पितपादपम्।

पुष्पलक्ष्म्यावृतं भाति प्रदीप्तमिव सर्वतः ।। ३८.२८ ।।

यस्य गन्धेन दिव्येन वास्यते परिमण्डलम्।
समग्रं योजनशतं काननानि समन्ततः ।। ३८.२९ ।।

तत् सिद्धचारणगणैरप्सरोभिश्च सेवितम् ।
रम्यं तत् किंशुक वनं जलाशयविभूषितम् ।। ३८.३० ।।

तत्रादित्यस्य देवस्य दीप्तमायतनं महत् ।
मासे मासेऽनतरति तत्र सूर्यः प्रजापतिः ।। ३८.३१ ।।

तत्र कालस्य कर्त्तारं सहस्रांशुं सुरोत्तमम्।
सिद्धसङ्घा नमस्यन्ति सर्वलोकनमस्कृतम् ।। ३८.३२ ।।

पञ्चकूटस्य शैलस्य कैलासस्यान्तरेण तु।
षट्त्रिंशद्योजनायामं विस्तीर्णं शतयोजनम् ।। ३८.३३ ।।

क्षुद्रसत्त्वैरनाधृष्यं सर्वतो हंसपाण्डुरम्।
दुष्पारं सर्वसत्वानां दुर्गमं लोमहर्षणम् ।। ३८.३४ ।।

इत्येता ह्यन्तरद्रोण्यो दक्षिणे परिकीर्तिताः।
यथानुपूर्वमखिलाः सिद्धसङ्घनिषेविताः ।। ३८.३५ ।।

पश्चिमायां दिशितथा येऽन्तरद्रोणिविस्तराः।
तान् वर्ण्यमानांस्तत्वेन श्रृणुतेमान् द्विजोत्तमाः ।। ३८.३६ ।।

अन्तराले गिरौ तस्मिन् सुवक्षः शिखिशैलयोः।
समन्ताद्योजनशतमेकभूमं शिलातलम् ।। ३८.३७ ।।

नित्यतप्तं महाघोरं दुःस्पर्शं रोमहर्षणम्।
अगम्यं सर्वसत्त्वानामीश्वराणां सुदारुणम् ।। ३८.३८ ।।

मध्ये तस्यां शिलास्थल्यां त्रिंशद्योजनमण्डलम्।
ज्वालासहस्रकलिलं वह्निस्थानं सुदारुणम् ।। ३८.३९ ।।

अनिन्धनस्तत्र सदा ज्वालामाली विभावसुः।
ज्वलत्येष सदा देवः शश्वत्तत्र हुताशनः ।। ३८.४० ।।

अधिदेवकृते योऽसावग्नेर्भागो विधीयते।
स तत्र ज्वलते नित्यं लोकसंवर्त्तकोऽनलः ।। ३८.४१ ।।

अन्तरे शैलवरयोर्देवा वापि तयोः शुभाः ।

मातुलुङ्गस्थली तत्र ह्यायामाद्दशयोजना ।। ३८.४२ ।।

मधुव्यञ्जनसंस्थानैः सुरसैः कनकप्रभैः।
फलैः परिणतैः सर्वा शोभिता सा महास्थली ।। ३८.४३ ।।

तत्राश्रमं महा पुण्यं सिद्धसङ्घनिषेवितम्।
बृहस्पतेः प्रमुदितं सर्वकामगुणैर्युतम् ।। ३८.४४ ।।

तथैव शैलवरयोः कुमुदाञ्जनयोरपि।
अन्तरे केसरद्रोणी ह्यनेकायाम योजना ।। ३८.४५ ।।

द्विबाहुपरिणाहैस्तैस्त्रिहस्तायतविस्तृतैः।
चन्द्रांशुवर्णैर्व्याकोशैर्मत्तषट्पदनादितैः ।। ३८.४६ ।।

मधुसर्पीरजः पृक्तैर्महागन्धैर्मनोहरैः।
शबलं तद्वनं भाति कुसुमैः सर्वकालजैः ।। ३८.४७ ।।

तत्र विष्णोः सुरगुरोर्दीप्तमायतनं महत्।
प्रकाशन्त्रिषु लोकेषु सर्वलोकनमस्कृतम् ।। ३८.४८ ।।

अन्तरे शैलवरयोः कृष्णपाण्डुरयोरपि।
त्रिंशद्योजनविस्तीर्णं नवत्यायतयोजनम् ।। ३८.४९ ।।

श्लक्ष्णमेकशिलं देशं वृक्षवीरुद्विवर्जितम् ।
सुखपादप्रचा रञ्च निम्नोन्नतविवर्जितम् ।। ३८.५० ।।

मध्ये तु सरसस्तस्य रम्या तु स्थलपद्मिनी।
सहस्रपत्रैर्व्याकोशैः छत्रमात्रैरलङ्कृता ।। ३८.५१ ।।

पुण्डरीकैर्महापद्मै रुचिरैर्गन्धशालिभिः ।
शतपत्रैश्च विकचैरुत्पलैर्नीलपत्रकैः ।। ३८.५२ ।।

मदोत्कटैर्मधुकरैर्भ्रमरैश्च मदोत्कटैः।
मृदुगद्घदकण्ठानां किन्नराणाञ्च निस्वनैः ।। ३८.५३ ।।

उपगीतपद्मखण्डाढ्या विस्तीर्णा स्थलपद्मिनी।
यक्षगन्धर्वचरिता सिद्धचारणसेविता ।। ३८.५४ ।।

मध्ये तस्याश्च पद्मिन्याः पञ्चयोजनमण्डलः।
न्यग्रोधो विपुलस्कन्धो ह्यनेकारोहिमण्डितः ।। ३८.५५ ।।

तत्र चन्द्रप्रभः श्रीमान् पूर्णचन्द्रनिभानन)।

सहस्रवदनो देवो नीलवासाः सुरारिहा ।। ३८.५६ ।।

पद्म माल्यधरस्थल्यां महाभागोऽपराजितः।
इज्यते यक्षगन्धर्वैर्विद्याधरगणैस्तथा ।। ३८.५७ ।।

तस्मिन्नायतने साक्षादनादिनिधनो हरिः।
पद्मोपहारौर्विविधै रिज्यते सिद्धचारणैः ।। ३८.५८ ।।

तदनन्तसदो नाम सर्वलोकेषु विश्रुतम्।
पद्ममालावलम्बाभिर्मालाभिरुपशोभितम् ।। ३८.५९ ।।

तथा सहस्रशिखरकुमुदस्यान्तरेण च।
पञ्चाशद्योजनायामं त्रिंशद्योजनविस्तरम् ।
इषुक्षेपोच्चशिखरं नानाविहगसेवितम् ।। ३८.६० ।।

महागन्धैर्महास्वादैर्गजदेहनिभैः फलैः।
मधुस्रवैर्महावृक्षैरुपेतं तत् समन्ततः ।। ३८.६१ ।।

तत्राश्रमं महापुण्यं देवर्षिगणसेवितम्।
शुक्रस्य प्रथितं तत्र भास्वरं पुण्यकर्मणः ।। ३८.६२ ।।

शङ्कुकूटस्य शैलस्य वृषभस्यान्तरेण च।
परूषकस्थली रम्या ह्यनेकायतयोजना ।। ३८.६३ ।।

बिल्वप्रमाणैश्च शुभैर्महास्वादैः सुगन्धिभिः।
फलैः प्रक्लिद्यते भूमिः परुषैर्वृन्तविच्युतैः ।। ३८.६४ ।।

तां स्थलीमुपजीवन्ति किन्नरोरगसाधवः।
परूषकरसोन्मत्ता मानाढ्यास्तत्र चारणाः ।। ३८.६५ ।।

कपिञ्जलस्य शैलस्य नागशैलस्य चान्तरे।
द्वियोजनशतायामा विस्तीर्णा शतयोजना ।। ३८.६६ ।।

स्थली मनोहरा सा हि नानावनविभूषिता ।
नानापुष्पफलोपेता किन्नरोरगसेविता ।। ३८.६७ ।।

द्राक्षावनानि रम्याणि तथा नागवनानि च।
खर्जूरवनखण्डानि नीलाशोकवनानि च ।। ३८.६८ ।।

दाडिमानाञ्च स्वादूनामक्षोटकवनानि च।
अतसीतिलकानाञ्च कदलीनां वनानि च ।। ३८.६९ ।।

बदरीणाञ्च स्वादूनां वनखण्डानि सर्वशः।
स्वादुशीताम्बुपूर्णाभिर्नदीभिः शोभितानि च ।। ३८.७० ।।

तथा पुष्पकशैलस्य महामेघस्य चान्तरे।
षष्टियोजनविस्तीर्णा सा भूमिः शतमायता ।। ३८.७१ ।।
समा पाणितलप्रख्या कठिना पाण्डुरा घना।
वृक्षगुल्मलतागुल्मैस्तृणैश्चापि विवर्जिता ।। ३८.७२ ।।

वर्जिता विविधैः सत्वैर्न्नित्यमस्मिन् निराश्रया।
सा काननस्थली नाम दारुणा रोमहर्षणा ।। ३८.७३ ।।

महासरांसि च तथा महावृक्षास्तथैव च।
महावनानि सर्वाणि कान्तनामानि सर्वशः ।। ३८.७४ ।।

सरसाञ्च वनानाञ्च सा स्थली च प्रजापतेः।
क्षुद्राणां सरसाञ्चैव सङ्ख्या तत्र न विद्यते ।। ३८.७५ ।।

दश द्वादश सप्ताष्टौ विंशत्त्रिंशच्च योजनाः।
स्थल्यो द्रोण्यश्च विख्याताः सरांसि च वनानि च ।। ३८.७६ ।।

केचित् सन्ति महाघोराः श्यामाः पर्वतकुक्षयः।
सूर्यांशुजालैरस्पृष्टा नित्यं शीता दुरासदाः ।। ३८.७७ ।।

तथा ह्यनलतप्तानि सरांसि द्विजसत्तमाः।
शैलकुक्ष्यन्तरस्थानि सहस्राणि शतानि च ।। ३८.७८ ।।

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नामाष्टत्रिंशोऽध्यायः ।। ३८ ।।

**।।सूत उवाच।।**

अतः परं प्रवक्ष्यामि यस्मिन् यस्मिन् शिलोच्चये।
ये सन्निविष्टा देवानां विविधानां गृहोत्तमाः ।। ३९.१ ।।

तत्र योऽसौ महाशैलः शीतान्तो नैक विस्तरः।
नैकधातुशतैश्चित्रैर्नैकरत्नाकराकरः ।। ३९.२ ।।

नितम्बैः पुष्पसालम्बैर्नैकसत्त्वगुणालयः।
महार्हमणिचित्राभिर्हेमवंशैरलंकृतः ।। ३९.३ ।।

नितम्बैः षट्पदोद्गीतैः प्रवालैर्हेमचित्रकैः।
तटैः कुसुमसङ्कीर्णैर्मत्तभ्रमरनादितैः ।। ३९.४ ।।

लतालम्बैश्चित्रवद्भिश्चित्रैर्धातुशतार्चितैः।
सानुभी रत्नचित्रैश्च पुष्पाढ्यैश्च विभूषितः ।। ३९.५ ।।

विमलस्वादुपानीयैर्नैकप्रस्रवमैर्युतः।
निकुञ्जैः कुसुमोत्कीर्णैरनेकैश्च विभूषितः ।। ३९.६ ।।

पुष्मौडुपवहाभिश्च स्रवन्तीभिरलंकृतः।
किन्नराचरिताभिश्च दरीभिः सर्वतस्ततः ।। ३९.७ ।।

यक्षगन्धर्वचरितैरनेकैः कन्दरोदरैः।
शोभितश्च सुखासेव्यैश्चित्रैर्गहनसङ्कटैः ।। ३९.८ ।।

नानासत्वगणाकीर्णैः सुपानीयैः सुखाश्रयैः।
नानापुष्पफलोपेतैः पादपैः समलंकृतः ।। ३९.९ .
तस्मिन् गुहाश्रयाकीर्णे अनेकोदरकन्दरे।
क्रीडावनं महेन्द्रस्य सर्वकामगुणैर्युतम् ।। ३९.१० ।।

तत्र तद्देवराजस्य पारिजातवनं महत्।
प्रकाशं त्रिषु लोकेषु गीयते श्रुतिनिश्चयात् ।। ३९.११ ।।

तरुणादित्यसंकाशै र्महागन्धैर्मनोहरैः।
पुष्पैर्भाति नगश्रेष्ठः सुदीप्त इव सर्वशः ।। ३९.१२ ।।

समग्रं योजनशतं तं गन्धमनिलो ववौ।
पारिजातकपुष्माणां माहेन्द्र वननिर्गतः ।। ३९.१३ ।।

वैढूर्यनीलैः कमलैः सौवर्णैर्वज्रकेसरैः।
सर्वगन्धबलोपेतैर्मत्तषट्पदनादितैः ।। ३९.१४ ।।

व्याकोशौर्विकचैश्चापि शतपत्रैर्मनोहरैः।
सपङ्कजैर्महा पत्रैर्वाप्यस्तत्र विभूषिताः ।। ३९.१५ ।।

विरेजुरन्तरम्बुस्थाः सौवर्णमणिभूषिताः।
परिप्सन्देक्षणा नित्यं मीनयूथाः सहस्रशः ।। ३९.१६ ।।

कूर्मैश्चानेकसंस्थानैर्हेमरत्नपरिष्कृतैः।
चञ्चूर्यमाणैः सलिलैर्भाति चित्रं समन्ततः ।। ३९.१७ ।।

नानावर्णैश्च शखुनैर्नानारत्नतनूरुहैः।
सुवर्णपुष्पैश्चानेकैर्मणितुण्डैर्द्विजातिभिः ।। ३९.१८ ।।

वल्गुस्वरैः सदोन्मत्तैः सम्पतद्भिः समन्ततः।
शुशुभे तद्वनं रम्यं सहस्राक्षस्य धीमतः ।। ३९.१९ ।।

मत्तभ्रमरसन्नादैर्विहङ्गानाञ्च कूजितैः।
नित्यमा नन्दितवनं तस्मात् क्रीडावनं महत् ।। ३९.२० ।।

सुवर्णपार्श्वैश्च नगैर्मणिमुक्तापुरस्कृतैः।
मणिश्रृङ्गकलापन्नैः पतद्भिश्च समन्ततः ।। ३९.२१ ।।

शाखामृगैश्च चित्राङ्गैर्नानारत्नतनूरुहैः।
नानावर्णप्रकारैश्च सत्वैरन्यैः समाकुलम् ।। ३९.२२ ।।

मुञ्चन्ति पुष्पवर्षञ्च तत्र बाललता द्रुमाः।
पारिजातकपुष्पाणां मन्दमारुत कम्पिताः ।। ३९.२३ ।।

शयनासननिर्व्यूहैः स्तीर्णै रत्नविभूषितैः।
विहारभूमयस्तत्र द्विजाः शक्रवने शुभाः।
न च शीतो न चाप्युष्णो रविस्तत्र समः सदा ।। ३९.२४ ।।

नित्यमुन्मादजननो मधुमाधवसम्भवः।
वाति चाप्यनिलस्तत्र नानापुष्पाधिवासितः।
नित्यं सङ्गसुखाह्लादी श्रमक्लमविनाशनः ।। ३९.२५ ।।

तस्मिन्निन्द्रवने शुभ्रे देवदानवपन्नगाः।
यक्षराक्षसगुह्याश्च गन्धर्वाश्चामितौजसः ।। ३९.२६ ।।

विद्याधराश्च सिद्धाश्च किन्नराश्च मुदा युताः।
अथाप्सरोगणाश्चैव नित्यं क्रीडापरायणाः ।। ३९.२७ ।।

तस्य पर्वतराजस्य पूर्वे पार्श्वे महोचितम्।

कुमुञ्चं शैलराजानं नैकनिर्झरकन्दरम् ।। ३९.२८ ।।

तस्य धातुविचित्रेषु कूटेषु बहुविस्तराः।
अष्टौ पुर्यो ह्युदीर्णाश्च दानवानां महात्मनाम् ।। ३९.२९ ।।

वज्रके पर्वते चापि अनेकशिखरोदरैः।
उदीर्णा राक्षसावासा नरनारीसमाकुलाः ।। ३९.३० ।।

नीलका नाम ते घोरा राक्षसाः कामरूपिणः।
तत्र तेऽभिरता नित्यं महाबलपराक्रमाः ।। ३९.३१ ।।

महानीलेऽपि शैलेन्द्रे पुराणि दश पञ्च च।
हयाननानां विख्याताः किन्नराणां महात्मनाम् ।। ३९.३२ ।।

देवसेनो महाबाहुर्बलमिन्द्रादयस्तथा।
तत्र किन्नरराजानो दशपञ्च च गर्विताः ।। ३९.३३ ।।

सुवर्णपार्श्वाः प्रायेण नानापर्णसमाकुलैः।
बिलप्रवेशैर्नगरैः शैलेन्द्रः सोऽभ्यलंकृतः ।। ३९.३४ ।।

अतिदारुणा दृष्टिविषा ह्यग्निकोपा दुरासदाः।
महोरगशतास्तत्र सुवर्णवशवर्तिनः ।। ३९.३५ ।।

सुनागेऽपि महाशैले दैत्यावासा- सहस्रशः।
हर्म्यप्रासाद कलिलाः प्रांशुप्राकारतोरणाः ।। ३९.३६ ।।

वेणुमन्ते महाशैले विद्याधरपुरत्रयम्।
त्रिंशदद्योजनविस्तीर्णं पञ्चाशद्योजनायतम् ।। ३९.३७ ।।

उलूको रोमशश्चैव महानेत्रश्च वीर्यवान्।
विद्याधरवरास्तत्र शक्रतुल्यपराक्रमाः ।। ३९.३८ ।।

वैकङ्के शैलशिखरे ह्यन्तःकन्दरनिर्झरे।
महोच्चश्रृङ्गे रुचिरे रत्नधातुविचित्रिते ।। ३९.३९ ।।

तत्रास्ते गारुडिर्नित्यं उरगारिर्दुरासदः।
महावायुजवश्चण्डः सुग्रीवो नाम वीर्यवान् ।। ३९.४० ।।

महाप्रमाणै र्विक्रान्तैर्महाबलपराक्रमैः।
सशैलो ह्यावृतः सर्वः पक्षिभिः पन्नगारिभिः ।। ३९.४१ ।।

करञ्जेऽभिरतो नित्यं साक्षाद्भूतपतिः प्रभुः।

वृषभाङ्को महादेवः शङ्करो योगिनां प्रभुः ।। ३९.४२ ।।

नानावेषधरैर्भूतैः प्रमथैश्च दुरासदैः।
करञ्जे सानवः सर्वे हयवकीर्णाः समन्ततः ।। ३९.४३ ।।

वसुधारे वसुमतां वसूनाममितौजसाम्।
अष्टावायतनान्याहुः पूजितानि महात्मनाम् ।। ३९.४४ ।।

रत्नधातौ गिरिवरे ऋषीणाञ्च महात्मनाम्।
सप्ताश्रमाणि पुण्यानि सिद्धावासयुतानि च ।। ३९.४५ ।।

महाप्रजापतेः स्थानं हेमश्रृङ्गो नगोत्तमे।
चतुर्वक्त्रस्य देवस्य सर्वभूतनमस्कृतम् ।। ३०.४६ ।।

गजशैले भगवतो नानाभूतगणावृताः ।
रुद्राः प्रमुदिता नित्यं सर्वभूतनमस्कृताः ।। ३९.४७ ।।

सुमेधे धातुचित्राढ्ये शैलेन्द्रे मेघसन्निभे।
नैकोदरदरीवप्रनिकुञ्जैश्चोपशोभिते ।। ३९.४८ ।।

आदित्यानां वसूनाञ्च रुद्राणाञ्चामितौजसाम्।
तत्रायतनविन्यासा रम्याश्चैवाश्विनोरपि ।। ३९.४९ ।।

स्थानानि सिद्धैर्देवानां स्थापितानि नगोत्तमे।
तत्र पूजापरा नित्यं यक्ष गन्धर्वकिन्नराः ।। ३९.५० ।।

गन्धर्वनगरी स्फीता हेमकक्षे नगोत्तमे।
अशीत्यामरपुर्य्याभा महाप्राकारतोरणा ।। ३९.५१ ।।

सिद्धा हयपत्तना नाम गन्धर्वा युद्ध शालिनः।
येषामधिपतिर्देवो राजराजः कपिञ्जलः ।। ३९.५२ ।।

अनले राक्षसावासाः पञ्चकूटेऽपि दानवाः।
ऊर्जिता देवरिपवो महाबलपराक्रमाः ।। ३९.५३ ।।

शतश्रृह्गे पुरशतं यक्षाणाममितौजसाम्।
ताम्राभे काद्रवेयस्य तक्षकस्य पुरोत्तमम् ।। ३९.५४ ।।

विशाखे पर्वतश्रेष्ठे नैकवप्रदरीशुभे।
गुहानिरतवासस्य गुहस्यायतनं महत् ।। ३९.५५ ।।

श्वेतोदरे महाशैले महाभवनमण्डिते।

पुरं गरुढपुत्रस्य सुनाभस्य महात्मनः ।। ३९.५६ ।।

पिशाचके गिरिवरे हर्म्यं प्रासाद मण्डितम्।
यक्षगन्धर्वचरितं कुबेरभवनं महत् ।। ३०.५७ ।।

हरिकूटे हरिर्देवः सर्वभूतनमस्कृतः।
प्रभावात्तस्य शैलोऽसौ महानाभः प्रकाशते ।। ३९.५८ ।।

कुमुदे किन्नरावासा अञ्जने च महोरगाः।
कृष्णे गन्धर्व्वनगरा महाभवनशालिनः ।। ३९.५९ ।।

पाण्डुरे चारुशिखरे महाप्राकारतोरणे।
विद्याधरपुरं तत्र महाभवनमालिनम् ।। ३९.६० ।।

सहस्रशिखरे शैले दैत्यानामुग्रकर्म्मणाम्।
पुराणि समुदीर्णानां सहस्रं हेममालिनाम् ।। ३९.६१ ।।

मुकुटे पन्नगावासा अनेकाः पर्वतोत्तमाः।
पुष्पके वै मुनिगणा नित्यमेव मुदा युताः ।। ३९.६२ ।।

वैवस्वतस्य सोमस्य वायोर्नागाधिपस्य च।
सुपक्षे पर्वतवरे चत्वार्य्यायतनानि च ।। ३९.६३ ।।

गन्धर्वैः किन्नरैर्यक्षैर्न्नागैर्विद्याधरोत्तमैः।
सिद्धैर्हि तेषु स्थानेषु नित्यमिष्टः प्रपूज्यते ।। ३९.६४ ।।

इति श्रीमहा पुराणे वायुप्रोक्ते भुवनविन्यासो नामैकोनचत्वारिंशोऽध्यायः ।। ३९ ।।

**।।सूत उवाच।।**

मर्य्यादापर्वते शुभ्रे देवकूटे निबोधत।
विस्तीर्णे सिखरे तस्य कूटे गिरिवरस्य ह ।। ४०.१ ।।

समन्ताद्योजनशतं महाभवनमण्डितम्।
जन्मक्षेत्रं सुपर्णस्य वैनतेयस्य धीमतः ।। ४०.२ ।।

नैकैर्महा पक्षिगणैर्गारुडैः शीघ्रविक्रमैः।
सम्पूर्णवीर्यसम्पन्नैर्दमनैरुरगारिभिः ।। ४०.३ ।।

पक्षिराजस्य भवनं प्रथमं तन्महात्मनः।
महावायुप्रवेशस्य शाल्मलि द्वीपवासिनः ।। ४०.४ ।।

तस्यैव चारुमूर्ध्नस्तु कूटेषु च महर्द्धिषु।
दक्षिणेषु विचित्रेषु सप्तस्वपि तु शोभिनः ।। ४०.५ ।।

सन्ध्याभ्राभाः समुदिता रुक्मप्राकारतोरणाः।
महाभवनमालाभिः शोभिता देवनिर्मिताः ।। ४०.६ ।।

त्रिंशद्योजनविस्तीर्णाश्चत्वारिंशत्तमायताः।
सप्त गन्धर्वनगरा नर नारीसमाकुलाः ।। ४०.७ ।।

आग्नेया नाम गन्धर्वा महाबलपराक्रमाः।
कुबेरानुचरा दीप्तास्तेषान्ते भवनोत्तमाः ।। ४०.८ ।।

तस्य चोत्तरकूटेषु भुवनस्य महागिरेः।
हर्म्यप्रासादबद्धं च उद्यानवनशोभितम् ।। ४०.९ ।।

पुरमाशीविषैः पुर्णं महाप्राकारतोरणम्।
वादित्रशतनिर्घोषैरानन्दितवनान्तरम् ।। ४०.१० ।।

दुष्प्रसह्यममित्राणां त्रिंशद्योजनमण्डलम्।
नगरं सैंहिकेयानामुदीर्णं देवविद्विषाम्।
सिद्धदेवर्षिचरितं देवकूटे निबोधत ।। ४०.११ ।।

द्वितीये द्विजशार्दूल मर्य्यादापर्वते शुभे।
महाभवनमालाभिर्नानावर्णाभिरावृतम् ।। ४०.१२ ।।

सुवर्णमणिचित्राभिरनेकाभिरलंकृतम् ।
विशालरथ्यं दुर्धर्षं नित्यं प्रमुदितं शिवम् ।। ४०.१३ ।।

नरनारीगणाकीर्णं प्रांशुप्राकारतोरणम् ।

षष्टियोजनविस्तीर्णं शतयोजनमायतम् ।। ४०.१४ ।।

नगरं कालकेयानामसुराणां दुरासदम्।
देवकूटतटे रम्ये सन्निविष्टं सुदुर्जयम्।
महाभ्रचयसङ्काशं सुनासन्नाम विश्रुतम् ।। ४०.१५ ।।

तस्यैव दक्षिणे कूटे विंशद्योजनविस्तरम्।
द्विषष्टियोजनायामं हेमप्राकारतोरणम् ।। ४०.१६ ।।

हृष्टपुष्टावलिप्तानामावासाः कामरूपिणाम्।
औत्कचानां प्रमुदितं राक्षसानां महापुरम् ।। ४०.१७ ।।

मध्यमे तु महाकूटे देवकूटस्य वै गिरेः ।
सुवर्णमणिपाषाणैश्चित्रैः श्लक्षणतरैः शुभैः।
शाखाशतसहस्राद्यैर्नैकारोहसमाकुलम् ।। ४०.१८ ।।

स्निग्ध पर्णमहामूलमनेकस्कन्धवाहनम्।
रम्यं ह्यविरलच्छायं दशयोजनमण्डलम् ।। ४०.१९ ।।

तत्र भूतवटन्नाम नानाभूतगणालयम्।
महादेवस्य प्रथितं त्र्यम्बकस्य महात्मनः।
दीप्तमायतनं तत्र सर्वलोकेषु विश्रुतम् ।। ४०.२० ।।

वराहगजसिंहर्क्षशार्दूलकरभाननैः।
गृध्रोलूकमुखैश्चैव मेषोष्ट्राजमहामुखैः ।। ४०.२१ ।।

कदम्बैर्विकटैः स्थूलैर्लम्बकेशतनूरुहैः।
नानावर्णाकृतिधरैर्नानासंस्थानसंस्थितैः ।। ४०.२२ ।।

दीप्तैरनेकैरुग्रास्यैर्भूतैरुग्रपराक्रमैः।
अशून्यमभवन्नित्यं महापारिषदैस्तथा ।। ४०.२३ ।।

तत्र भूतपतेर्भूता नित्यम्पूजां प्रयुञ्जते।
झर्झरैः शङ्खपटहैर्भेरीडिण्डिमगोमुखैः ।। ४०.२४ ।।

रणितालसितोद्गीतै र्नित्यं वलितवर्जितैः।
विस्फूर्ज्जितशतैस्तत्र पूजायुक्ता गणेश्वराः।
प्रीताः पुरारिप्रमथास्तत्र क्रीडापराः सदा ।। ४०.२५ ।।

सिद्धदेवर्षिगन्धर्वयक्षनागेन्द्र पूजितः।
स्थाने तस्मिन् महादेवः साक्षाल्लोकशिवः शिवः ।। ४०.२६ ।।

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम चत्वारिंशोऽध्यायः ।। ४० ।।

**।।सूत उवाच ।।**

विविक्तचारुशिखरं पत्रितं शङ्खवर्चसम्।

कैलासं देवभक्तानामालयं सुकृतात्मनाम् ।। ४१.१ ।।

तस्य कूटतटे रम्ये मध्यमे कुन्दसन्निभे।

योजनानां शतायामे पञ्चाशच्च तथायतम् ।। ४२.२ ।।

सुवर्णमणिचित्राभि अनेकाभिरलंकृतम्।

महाभवनमालाभिर्भूषितं नैकविस्तरम् ।। ४१.३ ।।

धनाध्यक्षस्य देवस्य कुबेरस्य महात्मनः।

नगरन्तदनाधृष्यमृद्धियुक्तं मुदायुतम् ।। ४१.४ ।।

तस्य मध्ये सभा रम्या नानाकनकमण्डिता।

विपुला नाम विख्याता विपुलस्तम्भतोरणा ।। ४१.५ ।।

तत्र तत्पुष्पकं नाम नानारत्नविभूषितम्।

महाविमानं रुचिरं सर्वकामगुणैर्युतम् ।। ४१.६ ।।

मनोजवं कामगमं हेमजालविभूषितम्।

वाहनं यक्षराजस्य कुबेरस्य महात्मनः ।। ४१.७ ।।

तत्रैकपिङ्गलो देवो महादेवसखः स्वयम्।

वसति स्म स यक्षेन्द्रः सर्वभूतनमस्कृतः ।। ४१.८ ।।

तत्राप्सरोगणैर्य्यक्षैर्गन्धर्वैः सिद्धचारणैः।

वसति स्म महात्माऽसौ कुबेरो देवसत्तमः ।। ४१.९ ।।

तत्र पद्ममहापद्मौ तथा मकरकच्छपौ।

कुमुदः शङ्ख नीलौ च नन्दनो निधिसत्तमः ।। ४१.१० ।।

अष्टावेतेऽक्षया दिव्या धनेशस्य महात्मनः।

महानिधानास्तिष्ठन्ति सभायां रत्नसञ्चिताः ।। ४१.११ ।।

तथेन्द्राग्नियमादीनां देवानामप्सरोगणैः।

तेषां कैलास आवासो यत्र यक्षेश्वरः प्रभुः ।। ४१.१२ ।।

कृत्वा पूर्वमुपस्थानं यक्षेन्द्रस्य महात्मनः।

पश्चाद्गच्छन्ति ये यस्य विहिताः परिचारकाः ।। ४१.१३ ।।

तत्र मन्दाकिनी नाम सुरम्या विपुलोदका।

सुवर्णमणिसोपाना नानापुष्पोत्कटोत्कटा ।। ४१.१४ ।।

जाम्बूनदमयैः पद्मैर्गन्धस्पर्शगुणान्वितैः।

नीलवैदूर्य्यपत्रैश्च गन्धोपैतैर्महोत्पलैः ।। ४१.१५ ।।

तथा कुमुदखण्डैश्च महापद्मैरलङ्कृता ।

यक्षगन्धर्वनारीभिरप्सरोभिश्च शोभिता ।। ४१.१६ ।।

देवदानवगन्धर्वैर्यक्षराक्षसपन्नगैः।
उपस्पृष्टजला रम्या वापी मन्दाकिनी तथा ।। ४१.१७ ।।
तथा अलकनन्दा च नन्दा च सरितां वरा ।
एतैरेव गुणैर्युक्ता नद्यो देवर्षिसेविताः ।। ४१.१८ ।।
तस्यैव शैलराजस्य पूर्वे कूटे परिश्रुताः।
सहस्रयोजनायामास्त्रिंशद्योजन विस्तराः ।। ४१.१९ ।।
दश गन्धर्वनगराः समृद्ध्या परया युताः।
महाभवनमालाभिरनेकाभिर्विभूषिताः ।। ४१.२० ।।
सुबाहुहरिकेशाद्या श्चित्रसेनजरादयः।
दश गन्धर्वराजानो दीप्तवह्निपराक्रमाः ।। ४१.२१ ।।
तस्यैव पश्चिमे कूटे कुन्देन्दुसदृशप्रभे।
नानाधातुशतैश्चित्रैः सिद्ध देवर्षिसेविते ।। ४१.२२ ।।
अशीतियोजनायामं चत्वारिंशत्प्रविस्तरम्।
एकैकयक्षभवनं महाभवनमालिनम् ।। ४१.२३ ।।
महायक्षालयान्यत्र त्रिंशदाढ्यानि मे श्रृणु।
मुदाऽथ परमद्धर्या च संयुक्तानि समन्ततः ।। ४१.२४ ।।
महामालिसुनेत्राद्यास्तथा मणिवरादयः।
उदीर्णा यक्षराजानस्तत्र त्रिंशत्सदा बभुः ।। ४१.२५ ।।
इत्येते कथिता यक्षा वाय्वग्निसमतेजसः।
येषामधिपतिर्देवः श्रीमान् वैश्रवणः प्रभुः ।। ४१.२६ ।।
तस्यैव दक्षिणे पार्श्वे हिमवत्यचलोत्तमे।
निकुञ्जनिर्झरगुहानैकसानुदरीतटे ।। ४१.२७ ।।
अर्णवादर्णवं यावत् पूर्वपश्चायतेऽचले।
किन्नराणां पुरशतं निविष्टं वै क्वचित् क्वचित् ।। ४१.२८ ।।
नैकश्रृङ्गकलापस्य शैलराजस्य कुक्षिषु।
नरनारीप्रमुदितं हृष्टपुष्टजनाकुलम् ।। ४१.२९ ।।
द्रुमसुग्रीवसैन्याद्या भगदत्तपुरःसराः ।
यत्र राजशतं तेषां दीप्तानां बलशालिनाम् ।। ४१.३० ।।
विवाहो यत्र रुद्रस्य महादेव्योमया सह।
तपस्तप्तवती चैव यत्र देवी वराङ्गना ।। ४१.३१ ।।
किरातरूपिणा चैव यत्र रुद्रेण क्रीडितम्।
यत्र चैव कृतं ताभ्यां जम्बूद्वीपावलोकनम् ।। ४१.३२ ।।
यत्र ताः सम्मुदा युक्ता नानाभूतगणैर्युताः।

चित्रपुष्पफलोपेता रुद्रस्याक्रीडभूमयः ।। ४१.३३ ।।
हृष्टा गिरिदरीवासाः कृशोदर्य्यो मनोरमाः।
कुन्दर्यो यत्र किन्नर्य्यो रमन्ते स्म सुलोचनाः ।। ४१.३४ ।।
विशालाक्षास्तथा यक्षा अन्याश्चाप्सरसाङ्गणाः।
गन्धर्वाश्चाङ्गशालिन्यो यत्र तत्र मुदा युताः ।। ४१.३५ ।।
तत्रैवोमावनं नाम सर्वलोकेषु विश्रुतम्।
अर्धनारीनरं रुपं धृतवान् यत्र शंकरः ।। ४१.३६ ।।
तथा शरवणं नाम यत्र जातः षडाननः ।
यत्र चैव कृतोत्साहः क्रौञ्चशैलवनं प्रति ।। ४१.३७ ।।
ध्वजापताकिनञ्चैव किङ्किणीजालमालिनम्।
यत्र सिंहरथं युक्तं कार्तिकेयस्य धीमतः ।। ४१.३८ ।।
चित्रपुष्पनिकुञ्जस्य क्रौञ्चस्य च गिरेस्तटे।
देवारिस्कन्दनः स्कन्दो यत्र शक्तिं विमुक्तवान् ।। ४१.३९ ।।
यत्राभिषिक्तश्च गुहः सेन्द्रोपेन्द्रैः सुरोत्तमैः।
सेनापत्ये च दैत्यारिर्द्वादशार्कप्रतापवान् ।। ४१.४० ।।
भूतसङ्घावकीर्णानि एतान्यन्यानि च द्विजाः।
तत्र तत्र कुमारस्य स्थानान्यायतनानि च ।। ४१.४१ ।।
तथा पाण्डुशिला नाम ह्याक्रीडा क्रौञ्चघातिनः।
नानाभूतगणाकीर्णे पृष्ठे हिमवतः शुभे ।। ४१.४२ ।।
तस्य पूर्वे तटे रम्ये सिद्धावासमुदाहृतम्।
कलापग्राममित्येवं नाम्ना ख्यातं मनीषिभिः ।। ४१.४३ ।।
मृकण्डस्य वसिष्ठस्य भरतस्य नलस्य च।
विश्वामित्रस्य विप्रर्षेस्तथैवोद्दालकस्य च ।। ४१.४४ ।।
अन्येषाञ्चोग्रतपसामृषीणां भावितात्मनाम्।
हिमवत्याश्रमाणाञ्च सहस्राणि शतानि च ।। ४१.४५ ।।
नैकसिध्दगणावासं स्थानायतनमण्डितम्।
यक्षगन्धर्वचरितं नानाम्लेच्छगणैर्युतम् ।। ४१.४६ ।।
नानारत्नाकरापूर्णं नानासत्त्वनिषेवितम्।
नानानदीसहस्राणां सम्भवं वरपर्वतम् ।। ४१.४७ ।।
पश्चिमस्याचलेन्द्रस्य निषधस्य यथार्थवत्।
कीर्त्त्यमानमशेषेण विशेषं श्रृणुत द्विजाः ।। ४१.४८ ।।
विस्तीर्णे मध्यमे कूटे हेमधा तुविबूषिते।
दीप्तमायतनं विष्णोः सिद्धर्षिगणसेवितम्।

यक्षाप्सरःसमाकीर्णं गन्धर्वगणसेवितम् ।। ४१.४९ ।।
तत्र साक्षान्महादेवः पीताम्बरधरो हरिः।
वरदः सेव्यते सिद्धैर्लोककर्त्ता सनातनः ।। ४१.५० ।।
तस्यैवाब्यन्तरे कूटे नानाधातुविभूषिते।
तटे निषधकूटस्य श्लक्ष्णचारुशिलातले ।। ४१.५१ ।।
रुक्मकाञ्चननिर्यूहं तप्तकाञ्चनतोरणम्।
अनेकवलभीकूटप्रलोलीशतसङ्कटम् ।। ४१.५२ ।।
हर्म्यप्रासादमतुलं तप्तकाञ्चनभूषितम्।
हर्म्यप्रासादबद्धञ्च मुदितञ्चातिविस्तरम् ।। ४१.५३ ।।
उद्यानमालाकलितं त्रिंशद्योजनमायतम्।
दुःप्रसह्यममित्रैस्तत् पूर्णमाशीविषोपमैः।
उलङ्घीनां प्रमुदितं रक्षसां राक्षसं पुरम् ।। ४१.५४ ।।
तस्यैव दक्षिणे पार्श्वे नैकदैत्यगणालये।
गुहाप्रवेशं नगरं शैलकुक्षौ दुरासदम् ।। ४१.५५ ।।
तथैव पश्चिमे कूटे पारिजातशिलोच्चये।
देवदानवभागानां समृद्धानि पुराणि तु ।। ४१.५६ ।।
तत्र सोमशिला नाम गिरेस्तस्य महातटे।
सोमो यत्रावतरति सदा पर्वसु पर्वसु ।। ४१.५७ ।।
उपासतेऽत्र श्रीमन्तं तारा पतिमनिन्दितम्।
ऋषिकिन्नरगन्धर्वाः साक्षाद्देवं तमोनुदम् ।। ४१.५८ ।।
तत्रैव चोत्तरे कूटे ब्रह्मपार्श्वमिति स्मृतम्।
स्थानं तत्र सुरेशस्य ब्रह्मणः प्रथितं दिवि ।। ४१.५९ ।।
इज्यापूजानमस्कारैस्तत्र सिद्धाः स्वयम्भुवम्।
उपासते महात्मानं यक्षगन्धर्वदानवाः ।। ४१.६० ।।
तथैवायतनं वह्नेः सर्वलोकेषु विश्रुतम्।
तत्र विग्रहवान् वाह्निः सेव्यते सिद्धचारणैः ।। ४१.६१ ।।
तथैव चोत्तरे रम्ये त्रिश्रृङ्गे वरपर्वते।
ऋषिसिद्धानुचरिते नानाभूतगणालये।
पुरं तत् त्रिषु लोकेषु हेमचित्रन्तु विश्रुतम् ।। ४१.६२ ।।
त्रयाणां देवमुख्यानां त्रीण्येवायतनानि च।
नारायणस्यायतनं पूर्वकूटे द्विजोत्तमाः ।
मध्यमे ब्रह्मणः स्थानं शङ्करस्य तु पश्चिमे ।। ४१.६३ ।।
दैत्यदानवगन्धर्वैर्यक्षराक्षसपन्नगैः।

इजाना अभिपूज्यन्ते देवदेवा महाबलाः ।। ४१.६४ ।।
तथा पुराणि रम्याणि देशे चैव क्वचित् क्वचित्।
यक्षगन्धर्वनागानां त्रिश्रृङ्गे वरपर्वते ।। ४१.६५ ।।
तथैव चोत्तरे देशे चारुधौ देवपर्वते।
अनेकश्रृङ्गकलिते सिद्धसाधु निषेविते ।। ४१.६६ ।।
यक्षाणां किन्नराणाञ्च गन्धर्वाणां सहस्रशः।
नागानां राक्षसानाञ्च दैत्यानाञ्च महाबले ।। ४१.६७ ।।
कूटे तु मध्यमे तस्य सिद्धसङ्घ निषेविते।
रम्ये देवर्षिचरिते रत्नधातुविभूषिते ।। ४१.६८ ।।
पद्मोत्पलवनैः फुल्लैः सौगन्धिकवनैस्तथा।
तथा कुमुदखण्डैश्च विकचैरुपशोभिते ।। ४१.६९ ।।
विहङ्गसङ्घसंघुष्टं नानासत्वनिषेवितम्।
हंसकारण्डवाकीर्णं मत्तषट्पदसेवितम् ।। ४१.७० ।।
नानासत्वगणाकीर्णं विहङ्गैरुपशोभितम्।
चारुतीर्थसुसम्बाधं त्रिंशद्योजनमण्डलम् ।। ४१.७१ ।।
सिद्धैरुपस्पृष्टजलं जलदोषविवर्जितम्।
तत्रानन्दजलन्नाम महापुण्यजलं सरः ।। ४१.७२ ।।
तत्र नागपति श्चण्ड श्चण्डो नाम दुरासदः।
शतशीर्षा महाभागो विष्णुचक्राङ्कचिह्नितः।
इत्येवमष्टौ विज्ञेया विचित्रा देवपर्वताः ।। ४१.७३ ।।।
पुरैरायतनैः पुण्यैः पुण्योदैश्च सरोवरैः।
सुवर्णपर्वतैर्नैकैस्तथा रजतपर्वतैः ।। ४१.७४ ।।
नानारत्नप्रभासैश्च नैकैश्च मणिपर्वतैः।
हरितालपर्वतैर्नैकैस्तथा हिङ्गुलकाञ्चनैः ।। ४१.७५ ।।
शुद्धैर्मनः शिलाजालैर्भास्वरैररुणप्रभैः ।
नानाधातुविचित्रैश्च नैकैश्च मणिपर्वतैः ।। ४१.७६ ।।
पूर्णा वसुमती सर्वा गिरिभिर्नैकविस्तरैः।
नदीकन्दरशैलाद्यैरनेकैश्चित्रसानुभिः ।। ४१.७७ ।।
इत्येवमचलैर्युक्तैर्दैत्यराक्षससाधुभिः।
किन्नरोरगगन्धर्वैर्विचित्रैः सिद्धचारणैः ।। ४१.७८ ।।
गन्धर्वैरप्सरोभिश्च सेविता नैक विस्तराः।
पुण्यकृद्भिः समाकीर्णा केसराकृतयो नगाः ।। ४१.७९ ।।
गिरिजालन्तु तन्मेरोः सिद्धलोकमिति स्मृतम्।

चित्रं नानाश्रयोपेतं प्रचारं सुकृतात्मनाम् ।। ४१.८० ।।
नात्युग्रकर्मसिद्धानां प्रतिमा मध्यमाः स्मृताः।
स हि स्वर्ग इति ख्यातः क्रमस्त्वेष प्रकीर्तितः ।। ४१.८१ ।।
चतुर्महाद्वीपवती सेयमुर्वी प्रकीर्तिता ।।
नानावर्णप्रमाणैर्हि नानावर्णबलैस्तथा ।। ४१.८२ ।।
नानाभक्ष्यान्नपानैश्च नानाच्छादनभूषणैः।
प्रजाविकारैर्विविधैश्चित्रैरध्युषितैः सह।। ४१.८३ ।।
चत्वारो नैकवर्णाद्या महाद्वीपाः परिश्रुताः।
भद्राश्च भरताश्चैव केतुमालाश्च पश्चिमाः।
उत्तराः कुरवश्चैव कृतपुण्यप्रतिश्रयाः ।। ४१.८४ ।।
सैषा चतुर्महाद्वीपा नानाद्वीपसमाकुला।
पृथिवी कीर्तिता कृत्स्ना पद्माकारा मया द्विजाः ।। ४१.८५ ।।
तदेषा सान्तरद्वीपा सशैलवनकानना।
पद्मेत्यभिहिता कृत्स्ना पृथिवी बहुविस्तरा ।। ४१.८६ ।।
सब्रह्मसदनं लोकं सदेवासुरमानुषम्।
त्रिलोकमिति विख्यातं यत्सत्त्वैर्व्यवहार्यते ।। ४१.८७ ।।
चन्द्रादित्यावतप्तं यत्तज्जगत् परिगीयते।
गन्धवर्णरसोपेतं शब्दस्पर्शगुणान्वितम् ।। ४१.८८ ।।
तं लोकपद्मं श्रुतिभिः पद्ममित्यभिधीयते।
एष सर्वपुराणेषु क्रमः सुपरिनिश्चितः ।। ४१.८९ ।।
इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नामैकचत्वारिंशोऽध्यायः ।। ४१ ।।

**।।सूत उवाच।।**

सरोवरेभ्यः पुण्योदा देव नद्यो विनिर्गताः।
महौघतोया नद्यश्च ताः श्रृणुध्वं यथाक्रमम् ।। ४२.१ ।।

आकाशाम्भोनिधेर्योऽसौ सोम इत्यभिधीयते।
आधारः सर्वभूतानां देवानाममृताकरः ।। ४२.२ ।।

तस्मात् प्रवृत्ता पुण्योदा नदी ह्याकाशगामिनी।
सप्तमेनानिलपथा प्रयाता विमलोदका ।। ४२.३ ।।

सा ज्योतिषि निवर्तन्ती ज्योतिर्गणनिषेविता।
ताराकोजिसहस्राणां नभसश्च समायता ।। ४२.४ ।।

माहेन्द्रेण गजेन्द्रेण आकाशपथयायिना।
क्रीडिता ह्यन्तरतले या सा विक्षोभितोदका ।। ४२.५ ।।

नैकैर्विमानसङ्घातैः प्रक्रामद्भिर्नभस्तलम्।
सिद्धैरुपस्पृष्टजला महापुण्यजला शिवा ।। ४२.६ ।।

वायुना प्रेर्यमाणा च अनेकाभोगगामिनी।
परिवर्त्तत्यहरहर्यथा सूर्यस्तथैव सा ।। ४२.७ ।।

चत्वार्यशीतिः प्रतता योजनानां समन्ततः।
वेगेन कुर्वती मेरुं सा प्रयाता प्रदक्षिणम् ।। ४२.८ ।।

विभिद्यमाना सलिलैस्तैजसेनानिलेन च।
मेरोरुत्तरकूटेषु पतिताथ चतुर्ष्वपि ।। ४२.९ ।।

मेरुकूटतटान्तेभ्य उत्कृष्टेभ्यो निवर्तिता।
विकीर्यमाण सलिला चतुर्द्धासंसृतोदका ।। ४२.१० ।।

षष्टियोजनसाहस्रं निरालम्बनमम्बरम्।
निपपात महाभाग मेरोस्तस्य चतुर्द्दिशम् ।। ४२.११ ।।

सा चतुर्ष्वभितश्चैव महापादेषु शोभना।
पुण्या मन्दरपूर्वेण पतिता हि महानदी ।। ४२.१२ ।।

पूर्वेणांशेन देवानां सर्वसिद्धगणालयम्।
सुवर्णचित्रकटकं नैकनिर्झरकन्दरम् ।। ४२.१३ ।।

प्लावयन्ती सशैलेन्द्रं मन्दरञ्चारुकन्दरम्।
वप्रप्रतापशमनैरनेकैः स्फाटिकोदकैः ।। ४२.१४ ।।

तथा चैत्ररथं रम्यं प्लावयन्ती प्रदक्षिणम्।
प्रविष्टा ह्यम्बरनदी ह्यरुणोदसरोवरम् ।। ४२.१५ ।।

अरुणोदान्निवृत्ताऽथ शीतान्ते रम्यनिर्झरे।
शैले सिद्धगणावासे निपपात सुगामिनी ।। ४२.१६ ।।

सीता नाम महा पुण्या नदीनां प्रवरा नदी।
सा निकुञ्जनिरुद्धा तु अनेकाभोगगामिनी ।। ४२.१७ ।।

शीतान्ताशिखराद्भ्रष्टा सुकुञ्जे वरपर्वते।
निपपात महाभागा तस्मादपि सुमञ्जसम् ।। ४२.१८ ।।

तस्मान्माल्यवतं शैलं भावयन्ती वरापगा।
वैकङ्कं समनुप्राप्ता वैकङ्कान्मणिपर्वतम्।
मणिपर्वतान्महाशैलं ऋषभं नैककन्दरम् ।। ४२.१९ ।।

एवं शैलसहस्राणि दारयन्ती महानदी।
पतिताऽथ महाशैले जठरे सिद्धसेविते ।। ४२.२० ।।

तस्मादपि महाशैलं देवकूटं तरङ्गिणी।
तस्य कुक्षिसमुद्भ्रान्ता क्रमेण पृथिवीं गता ।। ४२.२१ ।।

सैवं स्थलीसहस्राणि शैलराजशतानि च।
वनानि च विचित्राणि सरांसि विविधानि च ।। ४२.२२ ।।

स्रावयन्ती महाभागा विस्फारेष्ववलीकदा।
नदी सहस्रानुगता प्रवृत्ता च महानदी ।। ४२.२३ ।।

भद्राश्वं सुमहाद्वीपं प्लावयन्ती वरापगा।
प्रविष्टा ह्यर्णवं पूर्वं पूर्वे द्वीपे महानदी ।। ४२.२४ ।।

दक्षिणेऽपि प्रपन्ना या शैलेन्द्रे गन्धमादने।
चित्रैः प्रपातैर्विधैर्नैकविस्फालितोदका ।। ४२.२५ ।।

तद्घन्धमादनवनं नन्दनं देवनन्दनम्।
प्लावयन्ती महाभागा प्रयाता सा प्रदक्षिणम् ।। ४२.२६ ।।

नाम्ना ह्यलकनन्देति सर्वलोकेषु विश्रुता।
प्रविशत्युत्तरसरो मानसं देवमानसम् ।। ४२.२७ ।।

मानसाच्छैलराजानं रम्यं त्रिशिखरं गता।

त्रिकूटाच्छैलशिखरात् कलिङ्गशिखरं गता ।। ४२.२८ ।।

कलिङ्गशिखराद्भ्रष्टा रुचके निपपात सा।
रुचकान्निषधं प्राप्ता ताम्राभं निषधादपि ।। ४२.२९ ।।

ताम्राभशिखरार्द्भ्रष्टा गता श्वेतोदरं गिरिम् ।
तस्मात्सुमूलं शैलेन्द्रं वसुधारञ्च पर्वतम् ।। ४२.३० ।।

हेमकूटं गता तस्माद्देवश्रृङ्गे ततो गता।
तस्माद्गता महाशैलं ततश्चापि पिशाचकम् ।। ४२.३१ ।।

पिशाचकाच्छैलवरात् पञ्चकूटङ्गता पुनः।
पञ्चकूटात्तु कैलासं देवावासं शिलोच्चयम् ।। ४२.३२ ।।

तस्य कुक्षिषु विभ्रान्ता नैककन्दरसानुषु।
हिमवत्युत्तमनदी निपपाताचलोत्तमे ।। ४२.३३ ।।

सैवं शैलसहस्राणि दारयन्ती महानदी।
स्थलीशतान्यनेकानि प्लावयन्त्याशुगाणिनी ।। ४२.३४ ।।

वनानाञ्च सहस्राणि कन्दराणां शतानि च ।
स्रावयन्ती महाभागा प्रयाता दक्षिणोदधिम् ।। ४२.३५ ।।

रम्या योजनविस्तीर्णा शैलकुक्षिषु संवृता।
याधृता देवदेवेन शङ्करेण महात्मना ।। ४२.३६ ।।

पावनी द्विजशार्दूल घोराणामपि पाप्मनाम्।
शङ्करस्याङ्कसंस्पर्शान्महादेवस्य धीमतः।
द्विगुणं पवित्रसलिला सर्वलोके महानदी ।। ४२.३७ ।।

अनुशैलं समन्ताच्च निर्गता बहुभिर्मुखैः।
अथोऽन्येनाभिधानेन ख्याता नद्यः सहस्रशः ।। ४२.३८ ।।

तस्माद्धिमवतो गङ्गा गता सा तु महानदी।
एवं गङ्गेति नाम्नादिप्रकाशा सिद्धसेविता ।। ४२.३९ ।।

धन्यास्ते सत्तमा देशा यत्र गङ्गा महानदी।
रुद्रसाद्ध्यानिलादित्यैर्जुष्टतोया यशस्वती ।। ४२.४० ।।

महापादं प्रवक्ष्यामि मेरोरपि हि पश्चिमम्।
नानारत्नाकारं पुण्यं पुण्यकृद्भिर्निषेवितम् ।। ४२.४१ ।।

विपुलं शैलराजानं विपुलोदरकन्दरम् ।
नितम्बकुञ्ज कटकैर्विमलैर्म्मण्डितोदरम् ।। ४२.४२ ।।

अपि या त्र्यम्बकस्यैषा त्रिदशैः सेवितोदका।
वायुवेगा गताभोगा लतेव भ्रामिता पुनः ।। ४२.४३ ।।

मेरुकूटतटाद्भ्रष्टा प्रहतैः स्वादितोदका।
विस्तीर्य्यमाणसलिला निर्म्मलांशुकसन्निभा ।। ४२.४४ ।।

तस्य कूटेऽम्बरनदी सिद्धचारणसेविता ।
प्रदक्षिणमथावृत्य पतिता सा तु गामिनी ।। ४२.४५ ।।

देवभ्राजं महाभ्राजं सवैभ्राजं महावनम्।
प्लावयन्ती महाभागा नानापुष्पफलोदका ।। ४२.४६ ।।

प्रदक्षिणं प्रकुर्वाणा नानावनविभूषिता।
प्रविष्टा पश्विमसरः सितोदं विमलोदकम् ।। ४२.४७ ।।

सा सितोदाद्विनिष्क्रान्ता सुपक्षं पर्व्वतं गता।
सुपक्षतस्तु पुण्योदात्ततो देवर्षिसेविता ।। ४२.४८ ।।

सुपक्षकूटतटगा तस्माच्च संशितोदका।
निपपात महाभागा रमण्यं शिखिपर्व्वतम् ।। ४२.४९ ।।

शिखेश्च पर्वतात् कङ्कं कङ्काद्वैढूर्य्यपर्व्वतम्।
वैढूर्य्यात् कपिलं शैलं तस्माच्च गन्धमादनम् ।। ४२.५० ।।

तस्माद्गिरिवरात् प्राप्ता पिञ्जरं वरपर्व्वतम्।
पिञ्जरात् सरसं याता तस्माच्च कुमुदाचलम् ।। ४२.५१ ।।

मधुमन्तं जनञ्चैव मुकुटञ्च शिलोच्चयम्।
मुकुटाच्छैलशिखरात् कृष्णं याता महागिरिम् ।। ४२.५२ ।।

कृष्णात् श्वेतं महाशैलं महानगनिषेवितम्।
श्वेतात् सहस्रशिखरं शैलेन्द्रं पतिता पुनः ।। ४२.५३ ।।

अनेकाभिः स्रवन्तीभिराप्यायितजला शिवा ।
एवं शैलसहस्राणि सादयन्ती महानदी।
पारिजाते महाशैले निपपाताशुगामिनी ।। ४२.५४ ।।

अनेकनिर्झरनदी गुहासानुषु राजते।
तस्य कुक्षिष्वनेकासु भ्रान्ततोया तरङ्गिणी ।। ४२.५५ ।।

व्याहन्यमानसंवेगा गण्डशैलैरनेकशः।
संविद्यमानसलिला गता च धरणीतले ।। ४२.५६ ।।

केतुमालं महाद्वीपं नानाम्लेच्छ गणैर्युतम् ।
प्लावयन्ती महाभागा प्रयाता पश्चिमार्णवम् ।। ४२.५७ ।।

सुवर्णचित्रपार्श्वे तु सुपार्श्वेऽप्युत्तरे गिरौ ।
मेरोश्चित्रमहापादे महासत्त्वनिषेविते ।। ४२.५८ ।।

मेरुकूटतटाद्भ्रष्टा पवनेनेरितोदका।
अनेकाभोगवक्राङ्गी क्षिप्यमाणा नभस्तले ।। ४२.५९ ।।

षष्टियोजनसाहस्रे निरालम्बेऽम्बरे शुभे।
विकीर्यमाणा मालेव निपपात महानदी ।। ४२.६० ।।

एवं कूटतटैर्भ्रष्टा नैकैर्देवर्षिसेवितैः।
विकीर्यमाणसलिला नैकपुष्पोडुपोत्कचा ।। ४२.६१ ।।

नानारत्नवनोद्देशमरण्यं सवितुर्व्वनम्।
महावनं महाभागा प्लावयन्ती प्रदक्षिणम् ।। ४२.६२ ।।

सरोवरं महापुण्यं महाभागनिषेवितम्।
तत्राविवेश कल्याणी महाभद्रं सितोदका ।। ४२.६३ ।।

भद्रसोमेति नाम्ना हि महापारा महाजवा।
महानदी महापुण्या महाभद्रा विनिर्गता ।। ४२.६४ ।।

नैकनिर्झरवप्राढ्या शंखकूटतटे तु सा।
तत्र कूटे गिरितटे निपपाताशुगामिनी ।। ४२.६५ ।।

शंखकूटतटाद्भ्रष्टा पपात वृषपर्व्वतम्।
वृषपर्व्वताद्वत्सगिरिं नागशैलं ततो गता ।। ४२.६६ ।।

तस्मान्नीलं नगश्रेष्ठं संप्राप्ता वर्षपर्व्वतम्।
नीलात् कपिञ्जलञ्चैव इन्द्रनीलं च निम्नगा ।। ४२.६७ ।।

ततः परं महानीलं हेमश्रृङ्गञ्च सा ययौ ।
हेमश्रृङ्गाद्गता श्वेतं श्वेताच्च सुनगं ययौ ।। ४२.६८ ।।

सुनगात् शतश्रृङ्गञ्च संप्राप्ता सा महानदी।
शतश्रृङ्गान्महाशैलं पुष्करं पुष्पमण्डितम् ।। ४२.६९ ।।

पुष्कराच्च महाशैलं द्विराजं सुमहाबलम् ।
वराहपर्व्वतं तस्मान्मयूरञ्च शिलोच्चयम् ।। ४२.७० ।।

मयूराच्चैकशिखरं कन्दरोदरमण्डितम् ।
जारुधिं शैल शिखरं निपपाताशुगामिनी ।। ४२.७१ ।।

एवं गिरिसहस्राणि दारयन्ती महानदी।
त्रिश्रृङ्गं श्रृङ्गकलिलं मर्यादापर्वतं गता ।। ४२.७२ ।।

त्रिश्रृङ्गतटविभ्रष्टा महाभागनिषेविता।
मेरुकूटतटाद्भ्रष्टा पवनेनेरितोदका ।। ४२.७३ ।।

विरुद्धं पर्वतवरं पपात विमलोदका।
प्लावयन्ती महाभागा प्रयाता पश्चिमार्णवम् ।। ४२.७४ ।।

सुवर्णभुवि पार्श्वे तु सुपार्श्वेप्युत्तरे गिरौ ।।

मेरोश्वित्रे महापादे महासत्त्वनिषेविते ।। ४२.७५ ।।

कन्दरोदरविभ्रष्टा तस्मादपि तरङ्गिणी।
नैकभोगा पपातोर्वी चित्रपुष्पोढुपोत्कचा ।। ४२.७६ ।।

प्लावयन्ती प्रमुदिता उत्तरान् सा कुरून् शिवा।
महाद्वीपस्य मध्येन प्रयाता सोत्तरार्णवम् ।। ४२.७७ ।।

एवं तास्तु महानद्यश्चतस्रो विमलोदकाः।
महागिरितटभ्रष्टाः संप्रयाताश्चतुर्दिशम् ।। ४२.७८ ।।

तत्सेयं कथितप्राया पृथिवी बहुविस्तरा।
मेरुशैलमहाकीर्णाऽविशच्च सर्वतोदिशम् ।। ४२.७९ ।।

चतुर्महाद्वीपवती चतुराक्रीडकानना।
चतुष्केतुमहावृक्षा चतुर्वरसरस्वती ।। ४२.८० ।।

चतुर्महाशैलवती चतुर्भुजगसंश्रया।
अष्टोत्तरमहाशैला तथाष्टवरपर्वता ।। ४२.८१ ।।

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम द्विचत्वारिंशोऽध्यायः ।। ४२ ।।

**।।सूत उवाच।।**

गन्धमादनपार्श्वे तु स्फीता चोपरि गण्डिका।
द्वात्रिंशतं सहस्राणि योजनैः पूर्वपश्चिमा ।। ४३.१ ।।

अस्यायामशचवतुस्त्रिंशत्सहस्राणि प्रमाणतः।
तत्र ते शुभकर्माणः केतुमालाः परिश्रुताः ।। ४३.२ ।।

तत्र काला नराः सर्वे महासत्त्वा महाबलाः।
स्त्रियश्चोत्पलपत्राभाः सर्वास्ताः प्रिय दर्शनाः ।। ४३.३ ।।

तत्र दिव्यो महावृक्षः पनसः षड्रसाश्रयः।
ईश्वरो ब्रह्मणः पुत्रः कामचारी मनोजवः।
तस्य पीत्वा फलरसं जीवन्ति हि समायुतम् ।। ४३.४ ।।

पार्श्वे माल्यवतश्चापि पूर्वे पुर्वा तु गण्डिका।
आयामतोऽथ विस्ताराद्यथैवापरगण्डिका ।। ४३.५ ।।

भद्राश्वास्तत्र विज्ञेया नित्यं मुदितमानसा।
भद्रं सालवनं तत्र कालाम्राश्च महाद्रुमाः ।। ४३.६ ।।

तत्र ते पुरुषाः श्वेता महासत्त्वा महाबलाः।
स्त्रियः कुमुदवर्णाभाः सुन्दर्य्यः प्रियदर्शनाः ।। ४३.७ ।।

चन्द्रप्रभाश्वन्द्रवर्णाः पूर्णचन्द्रनिभाननाः।
चन्द्रशीतलगात्राश्च स्त्रियश्चोत्पलगन्धिकाः ।। ४३.८ ।।

दशवर्षसहस्राणि तेषामायुर्निरामयम्।
कालाम्रस्य रसं पीत्वा सर्वदा सिथरयौवनाः ।। ४३.९ ।।

**।।ऋषय ऊचुः।।**

प्रमाणं वर्णमायुश्च याथातथ्येन कीर्तितम्।
चतुर्णामपि द्वीपानां समासान्न तु विस्तरात् ।। ४३.१० ।।

**।।सूत उवाच।।**

भद्राश्वानां यथा चिह्नं कीर्तितं कीर्तिवर्द्धनाः।
तच्छृणुध्वं तु कात्स्न्र्येन पूर्वसिद्धैरुदाहृतम् ।। ४३.११ ।।

देवकूटस्य सर्वस्य प्रथितस्येह यत्परम्।
पूर्वेण दिक्षु सर्वासु यथावच्च प्रकीर्तितम् ।। ४३.१२ ।।

कुलाचलानां पञ्चानां नदीनाञ्च विशेषतः।
तथा जनपदानाञ्च यथा दृष्टं यथाश्रुतम् ।। ४३.१३ ।।

शैवालो वर्णमालाग्रः कोरञ्जश्चाचलोत्तमः।
श्वेतवर्णश्च नीलश्च पञ्चैते कुलपर्वताः ।। ४३.१४ ।।

तेषां प्रसूतिरन्येपि पर्वता बहुविस्तराः।
कोटिकोटिः क्षितौ ज्ञेयाः शतशोऽथ सहस्रशः ।। ४३.१५ ।।

तैर्विमिश्रा जनपदैर्नानासत्त्वसमाकुलाः।
नानाप्रकारजातीयास्त्वनेकनृपपालिताः ।। ४३.१६ ।।

नामधेयैश्च निक्रान्तैः श्रीमद्भिः पुरुषर्षभैः।
अध्यासिता जनपदाः कीर्तनीयाश्च शोभिताः ।। ४३.१७ ।।

तेषान्तु नामधेयानि राष्ट्राणि विविधानि च।
गिर्यन्तरनिविष्टानि समेषु विषमेषु च ।। ४३.१८ ।।

तथा सुमङ्गलाः शुद्धाश्चन्द्रकान्ताः सुनन्दनाः।
व्रजका नीलशैलेयाः सौवीरा विजयस्थलाः ।। ४३.१९ ।।

महास्थलाः सुकामाश्च महाकेशाः सुमूर्द्धजाः।
वातरंहाः सोपसङ्गाः परिवायाः पराचकाः ।। ४३.२० ।।

सम्भवक्रा महानेत्राः शैवालास्तनपास्तथा।
कुमुदाः शाकमुण्डाश्च उरः सङ्कीर्णभौमकाः ।। ४३.२१ ।।

सोदका वत्सकाश्चैके वाराहा हारवामकाः।
शङ्खाख्या भाविसन्द्राश्च उत्तरा हैमभौमकाः ।। ४३.२२ ।।

कृष्णभौमाः सुभौमाश्च महाभौमाश्च कीर्तिताः।
एते चान्ये च विख्याता नानाजनपदा मया ।। ४३.२३ ।।

ते पिबन्ति महापुण्यां महागङ्गां महानदीम्।
आदौ त्रैलोक्यविख्याता शीता शीताम्बुवाहिनी ।। ४३.२४ ।।

तथा च हंसवसतिर्महाचक्रा च निम्नगा।
चक्रा वक्रा च कञ्ची च सुरसा चापगोत्तमा ।। ४३.२५ ।।

शाखावती चेन्द्रनदी मेघा मङ्गारवाहिनी।
कावेरी हरितोया च सोमावर्त्ता शतह्रदा ।। ४३.२६ ।।

वनमाला वसुमती पम्पा पम्पावती शुभा।
सुवर्णा पञ्च वर्णा च तथा पुण्या वपुष्मती ।। ४३.२७ ।।

मणिवप्रा सुवप्रा च ब्रह्मभागा शिलाशिनी।
कृष्णतोया च पुण्योदा तथा नागपदी शुभा ।। ४३.२८ ।।

शैवालिनी मणितटा क्षारोदा चारुणावती।
तथा विष्णुपदी चैव महापुण्या महानदी ।। ४३.२९ ।।

हिरण्यवाहिनीला च स्कन्दमाला सुरावती ।
वामोदा च पताका च वेताली च महानदी ।। ४३.३० ।।

एता गङ्गा महानद्यो नायिकाः परिकीर्तिताः।
क्षुद्रनद्यस्त्वसंख्याताः शतशोऽथ सहस्रशः ।। ४३.३१ ।।

पूर्वद्वीपस्य वोहिन्यः पुण्यवत्यश्च कीर्तिताः।
कीर्त्तनेनापि चैतासां पूतः स्यादिति मे मतिः ।। ४३.३२ ।।

समृद्धराष्ट्रं स्फीतञ्च नानाजनपदाकुलम्।
नानावृक्षवनोद्देशं नानानग सुवेष्टितम् ।। ४३.३३ ।।

नरनारीगणाकीर्णं नित्यं प्रमुदितं शिवम्।
बहुधान्यधनोपेतं नानानृपतिपालितम् ।
उपेतं कीर्तनशतैर्नानारत्नाकराकरम् ।। ४३.३४ ।।

तस्मिन्देशे समाख्याता हेमशङ्खदलप्रभाः।
महाकाया महावीर्याः पुरुषाः पुरुषर्षभाः ।। ४३.३५ ।।

सम्भाषणं दर्शनञ्च समस्थानोपसेवनम् ।
देवैः सह महाभागाः कुर्वते तत्र वै प्रजाः ।। ४३.३६ ।।

दशवर्षसहस्राणि तेषामायुः प्रकीर्तितम्।
धर्माधर्मविशेषश्च न तेष्वस्ति महात्मसु।
अहिंसा सत्यवाक्यञ्च प्रकृत्यैव हि वर्त्तते ।। ४३.३७ ।।

ते भक्त्या शङ्करं देवं गौरीं परमवैष्णवीम्।
इज्यापूजानमस्कारांस्ताभ्यां नित्यं प्रयुञ्जते ।। ४३.३८ ।।

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम त्रिचत्वारिंशोऽध्यायः ।। ४३ ।।

**।।सूत उवाच ।।**

निसर्ग एष विख्यातो भद्राश्वानां यथार्थवत् ।
श्रृणुध्वं केतुमालानां विस्तरेण प्रकीर्त्तनम् ।। ४४.१ ।।

निषधस्याचलेन्द्रस्य पश्चिमस्य महात्मनः।
पश्चिमेन हि यत्तत्र दिक्षु सर्वासु कीर्तितम् ।। ४४.२ ।।

कुलाचलानां सप्तानां नदीनाञ्च विशेषतः।
तथा जनपदानाञ्च विस्तरं श्रोतुमर्हथ ।। ४४.३ ।।

विशालः कम्बलः कृष्णो जयन्तो हरिपर्वतः।
अशोको वर्द्धमानश्च सप्तैते कुलपर्व्वताः ।। ४४.४ ।।

तेषां प्रसूतिरन्येऽपि पर्वता बहुविस्तराः।
कोटिकोटिशता ज्ञेयाः शतशोऽथ सहस्रशः ।। ४४.५ ।।

तैर्विमिश्रा जनपदा नानाजातिसमाकुलाः।
नानाप्रकारविज्ञेयास्त्वनेकनृपपालिताः ।। ४४.६ ।।

ते नामधेयैर्विक्रान्ता विविधाः प्रथिताः भुवि।
अध्यासिता जनपदैः कीर्त्तनैश्च विभूषिताः ।। ४४.७ ।।

तेषां सनामधेयानि राष्ट्राणि विविधानि च।
गिर्य्यन्तरनिविष्टानि समेषु विषमेषु च ।। ४४.८ ।।

यथैह कथिताः पौरा गोमनुष्यकपोतकाः।
तत्सुखा भ्रमरा यूथा माहेयाचलकूटकाः ।। ४४.९ ।।

सुमौलाः स्तावकाः क्रौञ्चाः कृष्णाङ्गमणिपुञ्जकाः.
कूटकम्बलमौषीयाः समुद्रान्तरकास्तथा ।। ४४.१० ।।

करम्भवाः कुचाः श्वेताः सुवर्णकटकाः शुभाः।
श्वेताङ्गाः कृष्णपादाश्च विहगा कपिलकर्णिकाः ।। ४४.११ ।।

अत्याकरालगोज्वाला हीनानावनपातकाः।
महिषाः कुमुदाभाश्च करवाटाः सहोत्कचाः ।। ४४.१२ ।।

शु(नका) कनासा महानासा वनासगजभूमिकाः।
करञ्जमञ्जमा वाहाः किष्किण्डीपाण्डुभूमिकीः ।। ४४.१३ ।।

कुबेरा धूमजा जङ्गा वङ्गा राजीवकोकिलाः।
वाचाङ्गाश्च महाङ्गाश्च मधौरेयाः सुरेचकाः ।। ४४.१४ ।।

पित्तलाः काचलाश्चैव श्रवणा मत्तकासिकाः।
गोदावा बकुला वाङ्गा वङ्गका मोदकाः कलाः ।। ४४.१५ ।।

ते पिबन्ति महाभागाः प्रथमान्तु महानदीम्।
सुवप्रां पुण्यसलिलां महानागनिषेविताम् ।। ४४.१६ ।।

कम्बलां तामसीं श्यामां सुमेधां बकुलां नदीम्।
विकीर्णां शिखिमालाञ्च तथा दर्भावतीमपि ।। ४४.१७ ।।

भद्रानदीं शुकनदीं पलाशाञ्च महानदीम्।
भीमां प्रभञ्जनां काञ्चीं पुण्याञ्चैव कुशावतीम् ।। ४३.१८ ।।

दक्षां शाकवतीञ्चैव पुण्यो दाञ्च महानदीम्।
चन्द्रावतीं सुमूलाञ्च ऋषभाञ्चापगोत्तमाम् ।। ४४.१९ ।।

नदीं समुद्रमालाञ्च तथा चम्पावतीमपि।
एकाक्षां पुष्कलां वाहां सुवर्णां नन्दि नीमपि ।। ४४.२० ।।

कालिन्दीञ्चैव पुण्योदां भारतीञ्च महानदीम् ।
सीतोदाम्पातिकां ब्राह्मीं विशालाञ्च महानदीम् ।। ४४.२१ ।।

पीवरीं कुम्भकारीञ्च रुषा ञ्चैवापगोत्तमाम्।
महिषीं मानुषीं दण्डां तथा नदनदीं शुभाम् ।। ४४.२२ ।।

एताञ्चान्याञ्च पीयन्ते बह्वयो हि सरितोत्तमाः ।
देवर्षिसिद्धचरिताः पुण्योदाः पापहाः शुभाः ।। ४४.२३ ।।

नानाजनपदास्फीतं महापगाविभूषितम्।
नानारत्नौघसम्पूर्णं नित्यं प्रमुदितं शिवम् ।। ४४.२४ ।।

उदीर्णं धनधान्यार्थैर्नरवासैः समन्ततः।
सन्निविष्टं महाद्वीपं पश्चिमं सुकृतात्मनाम् ।
निसर्गः केतुमालानामेष वः परिकीर्त्तितः ।। ४४.२५ ।।

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम चतुश्वत्वारिंशोऽध्यायः ।। ४४ ।।

**।।शांशपायन उवाच ।।**

पूर्वापरौ समाख्यातौ द्वौ देशौ नस्त्वया प्रभो।
उत्तराणाञ्च वर्षाणां दक्षिणानाञ्च सर्वशः।
आचक्ष्व नो यथातथ्यं ये च पर्वतवासिनः ।। ४५.१ ।।

**।।सूत उवाच।।**

दक्षिणेन तु श्वेतस्य नीलस्यैवोत्तरेण तु।
वर्षं रमणकं नाम जायन्ते तत्र मानवाः ।। ४५.२ ।।

सर्वर्तुकामदाः सत्त्वा जरादुर्गन्धवर्जिताः।
शुक्राभिजनसम्पन्नाः सर्वे च प्रियदर्शनाः ।। ४५.३ ।।

तत्रापि सुमहान् दिव्यो न्यग्रोधो रोहिणो महान्।
तस्य पीत्वा फलरसं पिबन्तो वर्त्तयन्त्युत ।। ४५.४ ।।

दशवर्षसहस्राणि शतानि दशपञ्च च।
जीवन्ति ते महाभागा सदा हृष्टा नरोत्तमाः ।। ४५.५ ।।

उत्तरेण तु श्वेतस्य श्रृङ्गसाह्वस्य दक्षिणे।
वर्षं हिरण्यतं नाम यत्र हैरण्यती नदी ।। ४५.६ ।।

महाबलाः सुतेजस्काजायन्तेतत्र मानवाः।
सर्वर्तुकामदाः सत्वा धनिनः प्रिय दर्शनाः ।। ४५.७ ।।

एकादश सहस्राणि वर्षाणां तेऽमितौजसः।
आयुष्प्रमाणं जीवन्ति शतानि दशपञ्च च ।। ४५.८ ।।

तस्मिन् वर्षे महावृक्षो लकुचः षड्रसाश्रयः।
तस्यपीत्वा फलरसं तत्र जीवन्ति मानवाः ।। ४५.९ ।।

त्रीणि श्रृङ्गवतः श्रृङ्गाण्युच्छ्रितानि महान्ति च ।
एकं मणिमयं तेषामेकञ्चैव हिरण्ययम्।
सर्वरत्न मयं चैकं भवनैरुपशोभितम् ।। ४५.१० ।।

उत्तरस्य समुद्रस्य समुद्रान्ते च दक्षिणे।
कुरवस्तत्र तद्वर्षं पुण्यं सिद्धनिषेवितम् ।। ४५.११ ।।

तत्र वृक्षा मधुफला नित्यं पुष्पफलोपगाः।
वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च ।। ४५.१२ ।।

सर्वकामफलास्तत्र क्वचिद्वृक्षा मनोरमाः।
गन्धर्वाप्सरसोपेतं प्रक्षरन्ति मधूत्तमम् ।। ४५.१३ ।।

अपरे क्षीरिणो नाम वृक्षास्तत्र मनोरमाः।
ये क्षरन्ति सदा क्षीरं षड्रसं ह्यमृतोपमम् ।। ४५.१४ ।।

सर्वा मणिमयी भूमिः सूक्ष्मकाञ्चन वालुका।
सर्वातः सुखसंस्पर्शा निष्पङ्का नीरुजा शुभा ।। ४५.१५ ।।

देवलोकाच्च्युतास्तत्र जायन्ते मानवाः शुभाः।
शुक्लाभिजनसम्पन्नाः सर्वे च स्थिर यौवनाः ।। ४५.१६ ।।

मिथुनानि प्रसूयन्ते स्त्रियश्चातिमनोहराः।
ते च तं क्षीरिणं वृक्षं पिबन्ति ह्यमृतोपमम् ।। ४५.१७ ।।

मिथुनं जायते सद्यः समञ्चैव विवर्द्धते।
समं शीलञ्च रूपं च म्रियन्ते चैव ते समम् ।। ४५.१८ ।।

अन्योन्यमनुरक्ताश्च चक्रवाकसधर्मिणः।
अनामया ह्यशोकाश्च नित्यं सुखनिषेविणः ।। ४५.१९ ।।

त्रयोदश सहस्राणि शतानि दशपञ्च च।
जीवन्ति ते महावीर्या न चान्यस्त्रीनिषेविणः ।। ४५.२० ।।

कुरूणामपि चैतेषां श्रृणुध्वं विस्तरेण तु।
जारुधेः शैलराजस्याप्युत्तरेणोत्तरस्य हि।
दिक्षु सर्वासु यद्यत्र कीर्त्यमानं निबोधत ।। ४५.२१ ।।

अनेककन्दरदरीगुहानिर्झरमण्डितौ।
नैककुञ्जवनोपेतौ चित्रधातुविभूषितौ ।। ४५.२२ ।।

अनेकधातुकलिलौ सर्वधातुविभूषितौ।
पुष्पमूलफलोपेतौ सिद्धचारणसेवितौ ।। ४५.२३ ।।

द्वावप्येतौ सुमहतावुच्छ्रितौ कुल पर्वतौ।
ताभ्यां कूटशतैर्नैकैस्तद्द्वीपमुपसेवितम् ।। ४५.२४ ।।

चन्द्रकान्तश्च शैलश्च सूर्यकान्तश्च सानुमान् ।
ययोर्मध्ये न सा याता भद्रसोमा महानदी ।। ४५.२५ ।।

सहस्रशश्च नद्योऽन्याः प्रसन्नसुरसोदकाः।
पर्याप्तोदाः कुरूणां हि स्नानपानावगाहनैः ।। ४५.२६ ।।

तथाऽन्याः क्षीरवाहिन्यो महानद्यः सहस्रशः।

मधुमैरेयवाहिन्यो घृतवाहिन्य एव च ।। ४५.२७ ।।

दध्नः शतह्रदाश्चान्यास्ततः स्वाद्वन्नपर्वतः।
अमृतस्वादुकल्पानि फलानि विविधानि च ।। ४५.२८ ।।

गन्धवर्णरसाढ्यानि मूलानि च फलानि च।
पञ्चयोजनमानानि महागन्धानि सर्वशः ।। ४५.२९ ।।

नानावर्णप्रकाराणि पुष्पाणि च सहस्रशः।
उप भोगसहस्राणि भद्राणि च महान्ति च ।। ४५.३० ।।

गन्धवर्णरसाढ्यानि स्पर्शोपेतानि सर्वशः।
तमालागुरुगन्धानां चन्दनानां वनानि च ।। ४५.३१ ।।

भ्रमरैरुपगीतानि प्रफुल्लानि सदैव च।
वृक्षगुल्मलताढयानि वनानि सुसुखानि च ।। ४५.३२ ।।

षट्पदैरुपगीतानि द्विजैश्चान्यैर्द्विजोत्तमाः।
पद्मोत्पलवनाढ्यानि सरांसि च सहस्रशः ।। ४५.३३ ।।

भक्ष्यमाल्यसमृद्धाश्च बहुमाल्यानुलेपनाः।
मनोहरमुखैश्चित्रैः पक्षिसङ्घैर्निकूजिताः ।। ४५.३४ ।।

शयनासनोपभोगाश्च अनेकगुणविस्तराः।
विहारभूमयो रम्याः सर्वर्तुषु सुखप्रदाः ।। ४५.३५ ।।

आक्रीडाः सर्वतः स्फीताः मणिहेमपरिष्कृताः।
शिलागृहा वृक्षगृहा वरेण्याः कदली गृहाः ।। ४५.३६ ।।

लतागृहसहस्राणि सुसुखानि समन्ततः।
शुद्धशङ्खदलाभानि भूमिवेश्मशतानि च ।। ४५.३७ ।।

तपनीयगवाक्षाणि माणिजालान्तराणि च।
सुवर्णमणिचित्राणि सर्वत्र विपुलानि च ।। ४५.३८ ।।

महावृक्षसहस्राणि वरेण्यानि च सर्वशः।
नानाकाराणि वासांसि सूक्ष्माणि सुसुखानि च ।। ४५.३९ ।।

मृदङ्ग वेणुपणववीणाद्या बहुविस्तराः।
फलन्ति कल्पवृक्षाणां सहस्राणि शतानि च ।। ४५.४० ।।

सर्वत्रैव तथोद्यानं सर्वत्रैव हि तत्पुरम्।

सर्वद्वीपप्रमुदितं नरनारी समाकुलम्।
प्रवाति चानिलस्तत्र नानापुष्पाधिवासितः ।। ४५.४२ ।।

नित्यमङ्गसुखाह्लादस्तस्मिन् द्वीपे श्रमापहे ।
तत्र स्वर्गपरिभ्रष्टा जायन्ते हि नराः सदा।
भौमं तदपि हि स्वर्गं तत्रापि च गुणोत्तमम् ।। ४५.४२ ।।

चन्द्रकान्ता नरवराः श्यामाङ्काः पूर्वकूलजाः।
श्यामावदाताः सुखिनः सूर्यकान्ता वराः प्रजाः ।। ४५.४३ ।।

तस्मिन् देशे नराः श्रेष्ठा देवसत्त्वपराक्रमाः।
सदा विहारिणः सर्वे कामवृत्त्या सुवर्चसः ।। ४५.४४ ।।

वलयाङ्गदकेयूरहारकुण्डलभूषिताः ।
स्रग्विणश्चित्र मुकुटाश्चित्राच्छादनवाससः ।। ४५.४५ ।।

अजीर्णयौवनधराः सुप्रियाः प्रियदर्शनाः।
प्रजा वर्षसहस्राणि जीवन्ति सुबहून्युत ।। ४५.४६ ।।

न ताः प्रसवधर्मिण्यो न वंशप्रक्षयो विधिः।
मिथुनं जायते वृक्षादुपक्षममनीदृशम् ।। ४५.४७ ।।

सामान्यविभवाः सर्वे ममत्वपरिवर्जिताः।
न तत्र विद्यते धर्मो नाधर्मः सम्प्रवर्त्तते ।। ४५.४८ ।।

न व्यधिर्न जरा तत्र न दुर्मेधा न च क्लमः।
पूर्णे काले विनश्यन्ति जलबुद्बुदवच्च ते ।। ४५.४९ ।।

एवमत्यन्तसुखिनः सर्वदुःखविवर्जिताः।
रक्ता धर्मं न पश्यन्ति दुःखाद्धर्मोऽभिजायते ।। ४५.५० ।।

उत्तराणां कुरूणान्तु पार्श्वे ज्ञेयन्तु दक्षिणे।
समुद्रमूर्मिमालाढ्यं नानास्वरविभूषितम् ।। ४५.५१ ।।

पञ्चयोजनसाहस्रमतिक्रम्य सुरालयम्।
चन्द्रद्वीपमिति ख्यातं चद्रमण्डलसंस्थितम् ।। ४५.५२ ।।

सहस्रयोजनानान्तु सर्वतः परिमण्डलम्।
नाना पुष्पफलोपेतं समृद्ध्या परया युतम्।
शतयोजनविस्तीर्णमुच्छ्रितं तावदेव तु ।। ४५.५३ ।।

तस्य मध्ये गिरिवरः सिद्धचारणसेवितः।

चन्द्र तुल्यप्रभैः कान्तैश्चन्द्राकारैः सुलक्षणैः ।। ४५.५४ ।।

श्वेतवैढूर्यकुमुदैश्चित्रोऽसौ कुमुदप्रभः।
अनेकचित्रकोद्यानो नैकनिर्झरकन्दरः।
महासानुदरीकुञ्जैर्विविधैः समलंकृतः ।। ४५.५५ ।।

तस्माच्छैलान्महापुण्या चन्द्रांशुविमलोदका।
प्रवहत्युत्तमनदी चन्द्रावर्त्ता तरङ्गिणी ।। ४५.५६ ।।

तत्र चन्द्रमसः स्थानं नक्षत्राधिपतेर्वरम्।
सदाऽवतरते तत्र चन्द्रमा ग्रहनायकः ।। ४५.५७ ।।

तत्र चन्द्रमसो नाम्ना शैलः स तु परिश्रुतः।
चन्द्रद्वीपं महाद्वीपं प्रकाशं दिवि चेह च ।। ४५.५८ ।।

तत्र चन्द्रप्रतीकाशाः पूर्णचन्द्रनिभाननाः।
चन्द्रकान्ताः प्रजाः सर्वा विमलाश्चन्द्रदैवताः ।। ४५.५९ ।।

अत्यन्तधार्मिकाः सौम्याः सत्यसन्धाः सुतेजसः।
प्रजास्तत्र सदाचारा दशवर्षशतायुषः ।। ४५.६० ।।

पश्चिमेन तु द्वीपस्य पश्चिमस्य प्रकीर्त्तितम्।
चतुर्योजनसाहस्रं समतीत्य महोदधिम् ।। ४५.६१ ।।

दशयोजनसाहस्रं समन्तात् परिमण्डलम्।
द्वीपं भद्राकरं नाम नानापुष्पोपशोभितम् ।। ४५.६२ ।।

प्रभूतधनधान्याढ्यमनेकनृपपालितम् ।
नित्यं प्रमुदितं स्फीतं महाशैलैश्च शोभितम् ।। ४५.६३ ।।

तत्र भद्रासनं वायोर्नानारत्नैश्च मण्डितम्।
तत्र विग्रहवान् वायुः सदा पर्वसु पूज्यते ।। ४५.६४ ।।

तपनीयसुवर्णाभास्तपनीयविभूषिताः।
विराजन्तेऽमर प्रख्यास्तत्र चित्राम्बरस्रजः ।। ४५.६५ ।।

वीर्यवन्तो महाभागाः पञ्चवर्षशतायुषः।
सत्यसन्धा मुदा युक्ताः प्रजास्ता वायुदैवताः ।। ४५.६६ ।।

**।।सूत उवाच।।**
एवमेव निसर्गोऽयं वर्षाणां भारते युगे।
दृष्टः परमतत्त्वज्ञैर्भूयः किं कीर्त्तयामि ते ।। ४५.६७ ।।

आख्याते त्वेवमृषयः सूतपुत्रेण धीमता।
उत्तरश्रवणे भूयः पप्रच्छुस्तदनन्तरम् ।। ४५.६८ ।।

**।।ऋषय ऊचुः।**
यदिदं भारतं वर्ष यस्मिन् स्वायम्भुवादयः।
चतुर्दशैते मनवः प्रजासर्गे भवन्त्युत ।। ४५.६९ ।।

एतद्वेदितुमिच्छामस्तन्नो निगद सत्तम।
एतत् श्रुत्वा वचस्तेषामब्रवील्लोमहर्षणः ।। ४५.७० ।।

पौराणिकस्तदा सूत ऋषीणां भावितात्मनाम् ।
एत द्विस्तरतो भूयस्तानुवाच समाहितः ।। ४५.७१ ।।

**।।सूत उवाच।।**
निसर्ग एष विख्यातः कुरूणान्तु यथार्थवत्।
भारतस्य तु वक्ष्यामि निसर्गं तं निबोधत ।। ४५.७२ ।।

पुण्यतीर्थे हिमवतो दक्षिणस्याचलस्य हि।
पूर्वपश्चायतस्यास्य दक्षिणेन द्विजोत्तमाः ।। ४५.७३ ।।

तथा जनपदानां च विस्तरं श्रोतुमर्हथ।
अत्र वो वर्णयिष्यामि वर्षेऽस्मिन् भारते प्रजाः ।। ४५.७४ ।।

इदं तु मध्यमं चित्रं शुभाशुभफलोदयम्।
उत्तरं यत्समुद्रस्य हिमवद्दक्षिणं च यत् ।। ४५.७५ ।।

वर्षं यद्भारतं नाम यत्रेयं भारती प्रजा।
भरणाञ्च प्रजानां वै मनुर्भरत उच्यते।
निरुक्तवचनाच्चैव वर्षं तद्भारतं स्मृतम् ।। ४५.७६ ।।

ततः स्वर्गश्च मोक्षश्च मध्यश्रान्तश्च गम्यते।
न खल्वन्यत्र मर्त्यानां भूमौ कर्म विधीयते ।। ४५.७७ ।।

भारतस्यास्य वर्षस्य नव भेदाः प्रकीर्तिताः।
समुद्रान्तरिता ज्ञेयास्ते त्वगम्याः परस्परम् ।। ४५.७८ ।।

इन्द्रद्वीपः कसेरुश्च ताम्रवर्णो गभस्तिमान्।
नागद्वीपस्तथा सौम्यो गन्धर्वस्त्वथ वारुणः ।। ४५.७९ ।।

अयन्तु नवमस्तेषां द्वीपः सागरसंवृतः।
योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरम् ।। ४५.८० ।।

आयतो ह्याकुमारिक्यादाङ्गाप्रभवाच्च वै।
तिर्यगुत्तरविस्तीर्णः सहस्राणि नवैव तु ।। ४५.८१ ।।

द्वीपो ह्युपनिविष्टोऽयं म्लेच्छैरन्तेषु नित्यशः।
पूर्वे किराता ह्यस्यान्ते पश्चिमे यवनाः स्मृताः ।। ४५.८२ ।।

ब्राह्मणाः क्षत्रिया वैश्या मध्ये शूद्राश्च भागशः।
इज्यायुद्धवणिज्याभिर्वर्त्तयन्तो व्यवस्थिताः ।। ४५.८३ ।।

तेषां संव्यवहारोऽयं वर्त्तते तु परस्परम्।
धर्मार्थकामसंयुक्तो वर्णानां तु स्वकर्मसु ।। ४५.८४ ।।

सङ्कल्पपञ्चमानां तु आश्रमाणां यथाविधि।
इह स्वर्गापवर्गार्थं प्रवृत्तिर्येषु मानुषी ।। ४५.८५ ।।

यस्त्वयं नवमो द्वीपस्तिर्यगायत उच्यते।
कृत्स्नं जयति यो ह्येनं स सम्राडिह कीर्त्त्यते ।। ४५.८६ ।।

अयं लोकस्तु वै सम्राडन्तरिक्षो विराट् स्मृतः।
स्वराडन्यः स्मृतो लोकः पुनर्वक्ष्यामि विस्तरम् ।। ४५.८७ ।।

सप्त चास्मिन् सुपर्वाणो विश्रुताः कुलपर्वताः।
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः।
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ।। ४५.८८ ।।

तेषां सहस्रशश्चान्ये पर्वतास्तु समीपगाः।
अभिजाताः सर्वगुणा विपुलाश्चित्रसानवः ।। ४५.८९ ।।

मन्दरः पर्वत श्रेष्ठो वैहारो दर्दुरस्तथा।
कोलाहलः ससुरसः मैनाको वैद्युतस्तथा ।। ४५.९० ।।

पातन्धमो नाम गिरिस्तथा पाण्डुरपर्वतः।
गन्तुप्रस्थः कृष्णगिरिर्गोधनो गिरिरेव च ।। ४५.९१ ।।

पुष्पगिर्युज्जयन्तौ च शैलो रैवतकस्तथा।
श्रीपर्वतश्च कारुश्च कूटशैलो गिरिस्तथा ।। ४५.९२ ।।

अन्ये तेभ्यः परिज्ञाता ह्रस्वाः स्वल्पोपजीविनः।
तैर्विमिश्रा जतपदा आर्यम्लेच्छाश्च नित्यशः ।। ४५.९३ ।।

पीयन्ते यैरिमा नद्यो गङ्गा सिन्धुः सरस्वती।

शतद्रुश्चन्द्रभागा च यमुना सरयूस्तथा ।। ४५.९४ ।।

इरावती वितस्ता च विपाशा देविका कुहूः ।
गोमती धुतपापा च बाहुदा च दृषद्वती ।। ४५.९५ ।।

कौशिकी च तृतीया तु निश्चीरा गण्डकी तथा।
इक्षु र्लोहित इत्येता हिमवत्पादनिःसृताः ।। ४५.९६ ।।

वेदस्मृतिर्वेदवती वृत्रघ्नी सिन्धुरेव च।
वर्णाशा चन्दना चैव सतीरा महती तथा ।। ४५.९७ ।।

परा चर्म्मण्वती चैव विदिशा वेत्रवत्यपि।
शिप्रा ह्यवन्ती च तथा पारियात्राश्रयाः स्मृताः ।। ४५.९८ ।
शोणो महानदश्चैव नर्मदा सुमहाद्रुमा।
मन्दाकिनी दशार्णा च चित्रकूटा तथैव च ।। ४५.९९ ।।

तमसा पिप्पला श्रोणी करतोया पिशाचिका।
नीलोत्पला विपाशा च जम्बुला वालुवाहिनी ।। ४५.१०० ।।

सितेरजा शुक्तिमती मकुणा त्रिदिवा क्रमात् ।
ऋक्षपादात् प्रसूतास्ता नद्यो मणिनिभोदकाः ।। ४५.१०१ ।।

तापी पयोष्णी निर्विन्ध्या मद्रा च निषधा नदी।
वेन्वा वैतरणी चैव शितिबाहुः कुमुद्वती ।। ४५.१०२ ।।

तोया चैव महागौरी दुर्गा चान्तशिला तथा।
विन्ध्यपादप्रसूताश्च नद्यः पुण्यजलाः शुभाः ।। ४५.१०३ ।।

गोदावरी भीमरथी कृष्णा वैण्यथ वञ्जुला।
तुङ्गभद्रा सुप्रयोगा कावेरी च तथापगा।
दक्षिणापथनद्यस्तु सह्यपादाद्विनिःसृताः ।। ४५.१०४ ।।

कृतमाला ताम्रवर्णा पुष्पजात्युत्पलावती।
मलयाभिजातास्ता नद्यः सर्वाः शीतजलाः शुभाः ।। ४५.१०५ ।।

त्रिसामा ऋतुकुल्या च इक्षुला त्रिदिवा च या।
लाङ्गुलिनी वंशधरा महेन्द्रतनयाः स्मृताः ।। ४५.१०६ ।।

ऋषीका सुकुमारी च मन्दगा मन्दवाहिनी।
कूपा पलाशिनी चैव शुक्तिमत्प्रभवाः स्मृताः ।। ४५.१०७ ।।

सर्वाः पुण्याः सरस्वत्यः सर्वा गङ्गाः समुद्रगाः ।

विश्वस्य मातरः सर्वा जगत्पापहराः स्मृताः ।। ४५.१०८ ।।

तासां नद्युपनद्योऽपि शतशोऽथ सहस्रशः।
तास्त्विमे कुरुपाञ्चालाः शाल्वाश्चैव सजाङ्गलाः ।। ४५.१०९ ।।

शूरसेना भद्रकारा बोधाः शतपथेश्वरैः।
वत्साः किसष्णाः कुल्याश् च कुन्तलाः काशिकोशलाः ।। ४५.११० ।।

अथ पार्श्वे तिलङ्गाश्च मगधाश्च वृकैः सह।
मध्यदेशा जनपदाः प्रायशोऽमी प्रकीर्तिताः ।। ४५.१११ ।।

सह्यस्य चोत्तरार्द्धे तु यत्र गोदावरी नदी।
पृथिव्यामिह कृत्स्नायां सप्रदेशो मनोरमः ।। ४५.११२ ।।

तत्र गोवर्द्धनो नाम सुरराजेन निर्मितः।
रामप्रियार्थं स्वर्गोऽयं वृक्षा ओषधयस्तथा ।। ४५.११३ ।।

भरद्वाजेन मुनिना तत्प्रियार्थेऽवतारिताः।
अन्तःपुरवनोद्देशस्तेन जज्ञे मनोरमः ।। ४५.११४ ।।

वाह्लीका वाढधानाश्च आभीराः कालतोयकाः।
अपरीताश्च शूद्राश्च पह्नवाश्चर्मखण्डिकाः ।। ४५.११५ ।।

गान्धारा यवनाश्चैव सिन्धुसौवीरभद्रकाः।
शका ह्रदाः कुलिन्दाश्च परिता हारपूरिकाः ।। ४५.११६ ।।

रमटा रद्धकटकाः केकया दशमानिकाः।
क्षत्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च ।। ४५.११७ ।।

काम्बोजा दरदाश्चैव बर्बराः प्रियलौकिकाः।
पीनाश्चैव तुषाराश्च पह्लवा बाह्यतोदराः ।। ४५.११८ ।।

आत्रेयाश्च भरद्वाजाः प्रस्थलाश्च कसेरुकाः.
लम्पाका स्तनपाश्चैव पीडिका जुहुडैः सह ।। ४५.११९ ।।

अपगाश्चालिमद्राश्च किरातानाञ्च जातयः।
तोमरा हंसमार्गाश्च काश्मीरास्तङ्गणास्तथा ।। ४५.१२० ।।

चूलिकाश्चाहुकाश्चैव पूर्णदर्वास्तथैव च।
एते देशा ह्युदीच्याश्च प्राच्यान् देशान्निबोधत ।। ४५.१२१ ।।

अन्ध्रवाकाः सुजरका अन्तर्गिरिबहिर्गिराः।

तथा प्रवङ्गवङ्गेया मालदा मालवर्तिनः ।। ४५.१२२ ।।

ब्रह्मोत्तराः प्रविजया भार्गवा गेयमर्थकाः।
प्राग्ज्योतिषाश्च मुण्डाश्च विदेहास्तामलिप्तकाः।
माला मगधगोविन्दाः प्राच्यां जनपदाः स्मृताः ।। ४५.१२३ ।।

अथापरे जनपदा दक्षिणापथ वासिनः ।
पाण्ड्याश्च केरलाश्चैव चौल्याः कुल्यास्तथैव च ।। ४५.१२४ ।।

सेतुका मूषिकाश्चैव कुमना वनवासिकाः।
महाराष्ट्रा माहिषकाः कलिङ्गाश्चैव सर्वशः ।। ४५.१२५ ।।

अभीराः सह चैषीकाः आटव्याश्च वराश्च ये।
पुलिन्द्रा विन्ध्यमूलीका वैदर्बा दण्डकैः सह ।। ४५.१२६ ।।

पौनिका मौनिकाश्चैव अस्मका भोगवर्द्धनाः।
नैर्मिकाः कुन्तला आन्ध्रा उद्भिदा नलकालिकाः ।। ४५.१२७ ।।

दाक्षिणात्याश्च वै देशा अपरांस्तान्निबोधत।
शूर्पाकाराः कोलवनाः दुर्गाः कालीतकैः सह ।। ४५.१२८ ।।

पुलेयाश्च सुरालाश्च रूपसास्तापसैः सह।
तथा तुरसिताश्चैव सर्वे चैव परक्षराः ।। ४५.१२९ ।।

नासिक्याद्योश्च ये चान्ये ये चैवान्तरनर्मदाः।
भानुकच्छाः समा हेयाः सहसा शाश्वतैरपि ।। ४५.१३० ।।

कच्छीयाश्च सुराष्ट्राश्च अनर्त्ताश्चार्बुदैः सह।
इत्येते सम्परीताश्च श्रृणुध्वं विन्ध्यवासिनः ।। ४५.१३१ ।।

मालवाश्च करूषाश्च मेकलाश्चोत्कलैः सह।
उत्तमर्णा दशार्णाश्च भोजाः किष्किन्धकैः सह ।। ४५.१३२ ।।

तोसलाः कोसलाश्चैव त्रैपुरा वैदिकास्तथा।
तुमुरास्तुम्बुराश्चैव षट्सुरा निषधैः सह ।। ४५.१३३ ।।

अनुपास्तुण्डिकेराश्च वीतिहोत्रा ह्यवन्तयः।
एते जनपदाः सर्वे विन्ध्य पृष्ठनिवासिनः ।। ४५.१३४ ।।

अतो देशान् प्रवक्ष्यामि पर्वताश्रयिणश्च ये।
निगर्हरा हंसमार्गाः क्षुपणास्तङ्गणाः खसाः ।। ४५.१३५ ।।

कुशप्रावरणाश्चैव हूणा दर्वाः सहूदकाः।
त्रिगर्त्ता मालवाश्चैव किरातास्तामसैः सह ।। ४५.१३६ ।।

चत्वारि भारते वर्षे युगानि कवयो विदुः।
कृतं त्रेता द्वारपञ्च कलिश्चेति चतुष्टयम्।
तेषां निसर्गं वक्ष्यामि उपरिष्टान्निबोधत ।। ४५.१३७ ।।

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम पञ्चचत्वा रिंशोऽध्यायः ।। ४५ ।।

**||सूत उवाच||**

एतच्छ्रुत्वा तु ऋषय उत्तरं पुनरेव ते।
शुश्रूषवो मुदा युक्ताः पप्रच्छुर्लोमहर्षणम् || ४६.१ ||

**||ऋषय ऊचुः||**

यच्च किम्पुरुषं वर्षं हरिवर्षं तथैव च।
आचक्ष्व नो यथातत्त्वं कीर्त्तितं भारतं त्वया || ४६.२ ||

पृष्टस्त्विदं यथा विप्रैर्यथा प्रश्नं विशेषतः।
उवाच मुनिनिर्दिष्टं पुराणं विहितं यथा || ४६.३ ||

**||सूत उवाच||**

शुश्रूषा यत्र वो विप्रास्तच्छृणुध्वं मुदा युताः।
पुक्षखण्डः किम्पुरुषे सुमहान्नन्दनोपमः || ४६.४ ||

दशवर्षसहस्राणि स्थितिः किम्पुरुषे स्मृता।
सुवर्णवर्णाश्च नराः स्त्रियश्चाप्सरसोपमाः || ४६.५ ||

अनामया ह्यशोकाश्च सर्वे ते शुद्धमानसाः।
जायन्ते मानवास्तत्र निस्तप्तकनकप्रभाः || ४६.६ ||

वर्षे किम्पुरुषे पुण्ये प्लक्षो मधुवहः शुभः।
तस्य किम्पुरुषाः सर्वे पिबन्ति रसमुत्तमम् || ४६.७ ||

अतःपरं किं पुरुषाद्धरिवर्षः प्रचक्ष्यते।
महारजतसङ्काशा जायन्ते तत्र मानवाः || ४६.८ ||

देवलोकाच्च्युताः सर्वे देवरूपाश्च सर्वशः।
हरिवर्षे नराः सर्वे पिबन्तीक्षुरसं शुभम् || ४६.९ ||

एकादश सहस्राणि वर्षाणां तु मुदा युताः।
हरिवर्षे तु जीवन्ति सर्वे मुदितमानसाः।
न जरा बाधते तत्र जीर्यन्ति न च ते नराः || ४६.१० ||

मध्यमं यन्मया प्रोक्तं नाम्ना वर्षमिलावृतम्।
न तत्र सूर्यस्तपति न च जीर्यन्ति मानवाः || ४६.११ ||

चन्द्रसूर्यौ सनक्षत्रावप्रकाशाविलावृते ।
पद्मवर्णाः पद्म प्रभाः पद्मपत्रनिभेक्षणाः।
पक्षपत्रसुगन्धाश्च जायन्ते तत्र मानवाः || ४६.१२ ||

जम्बूरसफलाहारा ह्यनिष्पन्दाः सुगन्धिनः।

मनस्विनो भुक्तभोगाः सत्कर्मफलभोगिनः ।। ४६.१३ ।।
देवलोकाच्च्युताः सर्वे जायन्ते ह्यजरामराः.
त्रयोदशसहस्राणि वर्षाणान्ते नरोत्तमाः ।। ४६.१४ ।।

आयुष्प्रमाणं जीवन्ति ते तु वर्षे त्विलावृते ।
मेरोः प्रतिदिशं ते तु नवसाहस्रविस्तृते ।। ४६.१५ ।।

योजनानां सहस्राणि षड्विंशस्तस्य विस्तरः।
चतुरस्रः समन्ताच्च शरावाकार संस्थितः ।। ४६.१६ ।।

मेरोस्तु पश्चिमे भागे नवसाहस्रसंमिते।
चतुस्त्रिंशत्सहस्राणि गन्धमादनपर्वतः ।। ४६.१७ ।।

उदग्दक्षिणतश्चैव आनीलनिषधायतः।
चत्वारिंशत्सहस्राणि परिवृद्धो महीतलात्।
सहस्रमवगाढस्तु तावदेव तु धिष्ठितः ।। ४६.१८ ।।

पूर्वेण माल्यवान् शैलस्तत्प्रमाणः प्रकीर्तितः।
दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ।। ४६.१९ ।।

तेषां मध्ये महामेरुः सुप्रमाणः प्रकीर्तितः।
सर्वेषामेव शैलानामवगाढो यथा भवेत् ।। ४६.२० ।।

विस्तरस्तत्प्रमाणः स्यादायामे नियुतः स्मृतः।
वृत्तभावात् समुद्रस्य महीमण्डलभावनः ।। ४६.२१ ।।

आयामाः परिहीयन्ते चतुरस्राः समस्ततः।
अनावृत्ताश्चतुष्केण भिद्यन्ते मध्यमागताः ।। ४६.२२ ।।

प्रभिन्नाञ्जनसङ्काशा जम्बूरसवती नदी।
मेरोस्तु दक्षिणे पार्श्वे निषधस्योत्तरेण तु ।। ४५.२३ ।।

सुदर्शनो नाम महाजम्बूवृक्षः सनातनः।
नित्यपुष्पफलोपेतः सिद्धचारणसेवितः ।। ४६.२४ ।।

तस्य नाम्ना समाख्यातो जम्बूद्वीपे वनस्पतिः।
योजनानां सहस्रं तु शतचान्यमहाद्रुमः।
उत्सेधो वृक्षराजस्प दिवं स्पृशति सर्वशः ।। ४६.२५ ।।

अरत्नीनां शतान्यष्टौ एकषष्ट्यधिकानि तु।
फलप्रमाणं संख्यातमृषिभिस्तत्त्वदर्शिभिः ।। ४६.२६ ।।

पतमानानि तान्युर्व्यां कुर्वन्ति विपुलं स्वनम्।
तस्या जम्ब्वाः फलरसो नदीभूय प्रसर्पति ।। ४६.२७ ।।

मेरुं प्रदक्षिणीकृत्य जम्बू वृक्षंविशत्यधः।
ते पिबन्ति सदा हृष्टा जम्बूरसफलावृताः ।। ४६.२८ ।।

जम्बूरसफलं पीत्वा न जरां प्राप्नुवन्ति ते।
न च ध्रुवं न रोगं तु न च मृत्युं तथाविधम् ।। ४६.२९ ।।

तत्र जाम्बूनदं नाम कनकं देवभूषणम्।
इन्द्रगोपकशङ्काशं जायते भास्वरन्तु तत् ।। ४६.३० ।।

सर्वेषां वर्षवृक्षाणां शुभः फलरसस्तु सः।
स्कन्नं भवति तच्छुक्रं कनकं देवभूषणम् ।। ४६.३१ ।।

तेषां मूत्रं पुरीषञ्च दिक्षु सर्वासु भागशः।
ईश्वरानुग्रहाद्भूमिर्मृतांश्च ग्रसते तु तान् ।। ४६.३२ ।।

रक्षः पिशाचा यक्षाश्च सर्वे हैमवताः स्मृताः।
हेमकूटे तु गन्धर्वा विज्ञेयाः साप्सरोगणाः ।। ४६.३३ ।।

सर्वे नागास्तु निषधे शेषवासुकितक्षकाः।
महामेरौ त्रयस्त्रिंशद्भ्रमन्ते याज्ञिकाः सुराः ।
नीले तु वैडूर्यमये सिद्धब्रह्मर्षयो मताः ।। ४६.३४ ।।

दैत्यानां दानवानाञ्च श्वेतपर्वत उच्यते।
श्रृङ्गवान् पर्वतः श्रेष्ठः पितृणां प्रतिसञ्चरः ।। ४६.३५ ।।

नवस्वेतेषु वर्षेषु यथाभागस्थितेषु वै।
भूतान्युपनिविष्टानि गतिमन्ति ध्रुवाणि च ।। ४६.३६ ।।

तेषां विवृद्धिर्बहुला दृश्यते देवमानुषोः।
न शक्या परिसङ्ख्यातुं श्रद्धेयानु बुभूषता ।। ४६.३७ ।।

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नाम षट्चत्वारिंशोऽध्यायः ।। ४६ ।।

**।।सूत उवाच।।**

सव्ये हिमवतः पार्श्वे कैलासो नाम पर्वतः।
तस्मिन्निवसति श्रीमान् कुबेरः सह राक्षसैः।
अप्सरोगणसंयुक्तो मोदते ह्यलकाधिपः ।। ४७.१ ।।

कैलासपादात् सम्भूतं पुण्यं शीत जलं शुभम्।
मन्दं नाम्ना कुमुद्वन्तं शरदम्बुदसन्निभम् ।। ४७.२ ।।

तस्माद्दिव्या प्रभवति नदी मन्दाकिनी शुभा।
दिव्यञ्च नन्दनं तत्र तस्यास्तीरे महद्वनम् ।। ४७.३ ।।

प्रागुत्तरेण कैलासाद्दिव्यसत्त्वौषधं गिरिम्।
सुरधातुमयं चित्रं सुवर्णं पर्वतं प्रति ।। ४७.४ ।।

चन्द्रप्रभो नाम गिरिः सशुद्धां रत्नसन्निभः।
तस्य पादे महद्दिव्यमच्छोदं नाम तत्सरः ।। ४७.५ ।।

तस्माद्दिव्या प्रभवति ह्यच्छोदा नाम निम्नगा।
तस्यास्तीरे महादिव्यं वनं चैत्ररथं स्मृतम् ।। ४७.६ ।।

तस्मिन् गिरौ निवसति मणिभद्रः सहानुगः।
यक्षसेनापतिः क्रूरगुह्यकैः परिवारितः ।। ४७.७ ।।

पुण्या मन्दाकिनी चैव निम्नगाच्छोदिका तथा।
महीमण्डलमध्येन प्रविष्टे ते महोदधिम् ।। ४७.८ ।।

कैलासाद्दक्षिणप्राच्यां शिवसत्त्वौषधिं गुरुम् ।
मनःशिलामयं दिव्यं पिशङ्गं पर्वतं प्रति ।। ४७.९ ।।

लोहितो हेमश्रृङ्गस्तु गिरिः सूर्य प्रभो महान्।
तस्य पादे महद्दिव्यं लोहितं नाम तत्सरः ।। ४७.१० ।।

तस्मात् पुण्यः प्रभवति लौहित्यः सदनो महान्।
देवारण्यं विशोकञ्च तस्य तीरे महावनम् ।। ४७.११ ।।

तस्मिन् गिरौ निवसति यक्षो मणिवरो वशी।
सौम्यैः सुधार्मिकैश्चैव गुह्यकैः परिवारितः ।। ४७.१२ ।।

कैलासाद्दक्षिणे पार्श्वे क्रूरसत्वौषधं गिरिम्।
वृत्रकायात् किलोत्पन्नमञ्जनं त्रिककुत्प्रति ।। ४७.१३ ।।

सर्वधातुमयस्तत्र सुमहान् वैद्युतो गिरिः।

तस्य पादे सरः पुण्यं मानसं सिद्धसेवितम् ।। ४७.१४ ।।

तस्मात् प्रभवते पुण्या सरयूर्लोकभावनी।
तस्यास्तीरे वनं दिव्यं वैभ्राजं नाम विश्रुतम् ।। ४७.१५ ।।

कुबेरानुचरस्तत्र प्रहेतृतनयो वशी।
ब्रह्म पातो निवसति राक्षसोऽनन्तविक्रमः।
अन्तरिक्षचरैर्घोरैर्यातुधानशतैर्वृतः ।। ४७.१६ ।।

अपरेण तु कैलासान्मुख्यसत्त्वौषधिं गिरिम्।
अरुणं पर्वतश्रेष्ठं रुक्मधातुमयं प्रति ।। ४७.१७ ।।

भवस्य दयितः श्रीमान् पर्वतो मेघसन्निभः।
शातकुम्भमयैः शुभ्रैः शिलाजालैः समावृतः ।। ४७ .१८ ।।

शतसङ्ख्यैस्तापनीयैः श्रृङ्गैर्दिवमिवोल्लिखन्।
मुञ्जवान् स महादिव्यो दुर्गशैलो हिमार्चितः ।। ४७.१९ ।।

तस्मिन् गिरौ निवसति गिरिशो धूम्रलोहितः।
तस्य पादात् प्रभवति शैलोदं नाम तत्सरः ।। ४७.२० ।।

तस्मात् प्रभवते हिव्या शैलोदा नाम निम्नगा।
सा चक्षुःशीतयोर्मध्ये प्रविष्टा लवणोदधिम् ।। ४७.२१ ।।

तस्यास्तीरे वनं दिव्यं विश्रुतं सुरभीति वै।
अस्त्युत्तरेण कैलासाच्छिवसत्त्वौषधो गिरिः ।। ४७.२२ ।।

गौरो नाम गिरिस्तत्र हरितालमयः शुभः।
हिरण्यश्रृङ्गः सुमहान् दिव्यो मणिमयो गिरिः ।। ४७.२३ ।।

तस्य पादे महद्दिव्यं शुभं काञ्चनवालुकम्।
रम्यं बिन्दुसरो नाम यत्र यातो भगीरथः ।। ४७.२४ ।।

गङ्गानिमित्तं राजर्षिरुवास बहुलाः समाः ।
दिवं यास्यन्ति मे पूर्वे गङ्गातोयपरिप्लुताः ।। ४७.२५ ।।

तत्र त्रिपथगा देवी प्रथमन्तु प्रतिष्ठिता।
सोमपादप्रसूता सा सप्तधा प्रतिपद्य ते ।। ४७.२६ ।।

यूपा मणिमयास्तत्र चितयश्च हिरण्मयाः ।
तत्रेष्ट्वा तु गतः शर्वं शक्रः सर्वैः सुरैः सह ।। ४७.२७ ।।

दिविच्छायापथो यस्तु अनुनक्षत्रमण्डलम् ।
दृश्यते भास्वरो रात्रौ देवी त्रिपथगा तु सा ।। ४७.२८ ।।

अन्तरिक्षं दिवञ्चैव भावयन्ती भुवङ्गता।
भवोत्तमाङ्गे पतिता संरुद्धा योगमायया ।। ४७.२९ ।।

तस्या ये बिन्दवः केचित् क्रुद्धायाः पतिताः क्षितौ।
कृतं बिन्दुसरस्तत्र ततो बिन्दुसरः स्मृतम् ।। ४७.३० ।।

ततो निरुद्धा देवी सा भवेन स्मयता किल।
चिन्तयामास मनसा शङ्करक्षेपणं प्रति ।। ४७.३१ ।।

भित्त्वा विशामि पातालं स्रोतसा गृह्य शङ्करम्।
ज्ञात्वा तस्या अभिप्रायं क्रूरं देव्या चिकीर्षितम् ।। ४७.३२ ।।

तिरोभावयितुं बुद्धिरासीदङ्गेषु तां नदीम्।
तस्यावलेपं तं बुद्ध्वा नद्याः क्रुद्धस्तु शङ्करः।
निरुध्य तु शिरस्येनां वेगेन पतितां भुवि ।। ४७.३३ ।।

एतस्मिन्नेव काले तु दृष्ट्वा राजानमग्रतः।
धमनीसन्ततं क्षीणं क्षुधापरिगतेन्द्रियम् ।। ४७.३४ ।।

अनेन तोषितश्चाहं नद्यर्थं पूर्वमेव हि।
बुद्ध्वास्य वरदानं तु कोपं नियतवांस्तु सः ।। ४७.३५ ।।

ब्रह्मणो हि वचः श्रुत्वा प्रतिज्ञाधारणं प्रति।
ततो विसर्जयामास संरुद्धां स्वेन तेजसा।
नदीं भगीरथस्यार्थे तपसोग्रेण तोषितः ।। ४७.३६ ।।

ततो विसृज्यमानायाः स्रोतस्तत्सप्तताङ्गतम्।
त्रयः प्राचीमभिमुखं प्रतीचीं त्रयः एव तु ।। ४७.३७ ।।

नद्याः स्रोतस्तु गङ्गायाः प्रत्यपद्यत सप्तधा।
नलिनी ह्लादिनी चैव पावनी चैव प्राग्गता ।। ४७.३८ ।।

सीता चक्षुश्च सिन्धुश्च प्रतीचीं दिशमाश्रिताः।
सप्तमी त्वनुगा तासां दक्षिणेन भगीरथी ।। ४७.३९ ।।

तस्माद्भागीरथी या सा प्रविष्टा लवणोदधिम्।
सप्तैता भावयन्तीह हिमाह्वं वर्षमेव तु ।। ४७.४० ।।

प्रसूताः सप्त नद्यस्ताः शुभा बिन्दुसरोद्भवाः।

नानादेशान् भावयन्त्यो म्लेच्छप्रायांश्च सर्वशः ।। ४७.४१ ।।

उपगच्छन्ति ताः सर्वा यतो वर्षति वासनः।
सिरिन्ध्रान् कुन्तलांश्चीनान् बर्भरान् यवसान् द्रुहान् ।। ४७.४२ ।।

रुषाणांश्च कुणिन्दांश्च अङगलोकवराश्च ये।
कृत्वा द्विधा सिन्धुमरुं सीतागात्पश्चिमोदधिम् ।। ४७.४३ ।।

अथ चीनमरूंश्चैव नङ्गणान् सर्वमूलिकान् ।
साध्रांस्तु षारांस्तम्पाकान् पह्नवान् दरदान् शकान्।
एतान् जनपदान् चक्षुः स्नावयन्ती गतोदधिम् ।। ४७.४४ ।।

दरदांश्च सकांश्मीरान् गान्धारान् वरपान् ह्रदान्।
शिवपौरानिन्द्रहासान् वदातींश्च विसर्जयान् ।। ४७.४५ ।।

सैन्धवान् रन्ध्रकरकान् भ्रमराभीररोहकान् ।
शुनामुखांश्चोर्द्ध्वमनून् सिद्धचारणसोवितान् ।। ४७.४६ ।।

गन्धर्वान् किन्नरान् यक्षान् रक्षोविद्याधरोरगान्।
कलापग्रामकांश्चैव पारदान् सीगणान् खसान् ।। ४७.४७ ।।

किरातांश्च पुलिन्दांश्च कुरून् सभरतानपि।
पञ्चालकाशिमात्स्यांश्च मगधाङ्गांस्तथैव च ।। ४७.४८ ।।

ब्रह्मोत्तरांश्च वङ्गांश्च तामलिप्तांस्तथैव च।
एतान् जनपदानार्यान् गङ्गा भावयते शुभान् ।। ४७.४९ ।।

ततः प्रतिहता विन्ध्ये प्रविष्टा दक्षिणोददिम्।
ततक्ष्वाह्लादिनी पुण्या प्राचीनाभिमुखी ययौ ।। ४७.५० ।।

प्लावयन्त्युपभोगांश्च निषादानां च जातयः।
धीवरानृषिकांश्चैव तथा नीलमुखानपि ।। ४७.५१ ।।

केरलानुष्ट्रकर्णांश्च किराताानपि चैव हि।
कालोदरान् विवर्णांश्च कुमारान् स्वर्णभूषितान् ।। ४७.५२ ।।

सा मण्डले समुद्रस्य तिरोभूताऽनुपूर्वतः।
ततस्तु पावनी चैव प्राचीमेव दिशङ्गता ।। ४७.५३ ।।

अपथान् भावयन्तीह इन्द्रद्युम्नसरोऽपि च।
तता खरथांश्चैव इन्द्रशङ्कुपथानपि ।। ४७.५४ ।।

मध्येनोद्यानमस्कारान् कुथप्रावरणान् ययौ।
इन्द्रद्वीपसमुद्रे तु प्रविष्टा लवणोदधिम् ।। ४७.५५ ।।

ततश्च नलिनी चागात् प्राचीमाशां जवेन तु।
तोमरान् भावयन्तीह हंसमार्गान् सहूहुकान् ।। ४७.५६ ।।

पूर्वान् देशांश्च सेवन्ती भित्त्वा सा बहुधा गिरीन्।
कर्णप्रावरणांश्चैव प्राप्य चाश्वमुखानपि ।। ४७.५७ ।।

सिकतापर्वतमरून् गत्वा विद्याधरान् ययौ।
नेमिमण्डलकोष्ठे तु प्रविष्टा सा महोदधिम् ।। ४७.५८ ।।

तासां नद्युपनद्यश्च शतशोऽथ सहस्रशः।
उपगच्छन्ति ताः सर्वा यतो वर्षति वासवः ।। ४७.५९ ।।

वस्वोकसायास्तीरे तु वारिसुरभिविश्रुते।
हरिश्रृङ्गे तु वसति विद्वान् कौबैरको वशी ।। ४७.६० ।।

यज्ञोपेतः स सुमहानमितौजाः सुविक्रमः।
तत्रागस्त्यैः परिवृतो विद्वद्भिर्ब्रह्मराक्षसैः।
कुबैरानुचराः ह्येते चत्वारस्तत्समाः स्मृताः ।। ४७.६१ ।।

एवमेव तु विज्ञेया ऋद्धिः पर्वतवासिनाम्।
परस्परेण द्विगुणा धर्मतः कामतोऽर्थतः ।। ४७.६२ ।।

हेमकूटस्य पृष्ठे तु सायनं नाम तत्सरः।
मनस्विनी प्रभवति तस्माज्ज्योतिष्मती च सा ।। ४७.६३ ।।

अवगाह्य ह्युभयतः समुद्रौ पूर्वपश्चिमौ ।
सरो विष्णुपदं नाम निषधे पर्वतोत्तमे ।। ४७.६४ ।।

तस्माद्द्वयं प्रभवति गान्धर्वी नन्वली च या।
मेरोः पश्चात् प्रभवति ह्रदश्चन्द्रप्रभो महान् ।। ४७.६५ ।।

तत्र जाम्बूनदी पुण्या यस्यां जाम्बूनदं शुभम्।
पयोदं तु सरो नीले सुशुभ्रं पुण्डरीकवत् ।। ४७.६६ ।।

पुण्डरीकापयोदा च तस्मान्नद्यौ विनिर्गते।
श्वेतात् प्रभवते पुण्यं सरस्तूत्तरमानसम् ।। ४७.६७ ।।

ज्योत्स्ना च मृगकान्ता च तस्माद्द्वे संबभूवतुः।
मधुमत्सरः पुण्यञ्च पझमीनद्विजाकुलम् ।। ४७.६८ ।।

कल्पवृक्षसमाकीर्णं मधुवत्सर्वतः सुखम्।
रुद्रकान्तमिति ख्यातं निर्मितं तद्भवेन तु ।। ४७.६९ ।।

अन्ये चाप्यत्र विख्याताः पझमीनद्विजाकुलाः।
नाम्ना रुद्राजया नाम द्वादशोदधिसन्निभाः ।। ४७.७० ।।

तेभ्यः शान्ता च माध्वी च द्वे नद्यौ सम्बभूवतुः।
यनि किम्पुरुषाद्यानि तेषु देवो न वर्षति ।। ४७.७१ ।।

उद्भिद्यान्युदकान्यत्र प्रवहन्ति सरिद्वराः।
ऋषभो दुन्दुभिश्चैव धूम्रश्चैव महागिरिः ।। ४७.७२ ।।

पूर्वायता महभागा निम्नगा लवणाम्भसि।
चन्द्रकङ्कस्तथा प्राणो महानग्निः शिलोच्चयः।
उदग्याता उदीच्यान्ता अवगाढा महोदधिम् ।। ४७.७३ ।।

सोमकश्च वराहश्च नारदश्च महीधरः।
प्रतीचीमायतास्ते वै प्रविष्टा लवणोदधिम् ।। ४७.७४ ।।

चक्रो बलाहकश्चैव मैनाकश्चैव पर्वतः।
आयतास्ते महाशैलाः समुद्रं दक्षिणं प्रति।
चन्द्रमैनाकयोर्मध्येविदिशं दक्षिणां प्रति ।। ४७.७५ ।।

तत्र संवर्त्तको नाम सोऽग्निः पिबति तज्जलम्।
नाम्ना समुद्रपः श्रीमानौर्वः स वडवामुखः ।। ४७.७६ ।।

द्वादशैते प्रविष्टा हि पर्वता लवणोदधिम्।
महेन्द्रभयवित्रस्ताः पक्षच्छेदभयात्तदा।
यदेतदृश्यते चन्द्रे श्वेते कृष्णशशाकृतिः ।। ४७.७७ ।।

भारतस्य तु वर्षस्य भेदास्ते नव कीर्तिताः।
इहोदितस्य दृश्यन्ते तथान्येऽन्यत्र नोदिते ।। ४७.७८ ।।

उत्तरोत्तरमेतेषां वर्षमुद्दिश्यते गुणैः।
आरोग्यायुः प्रमाणाभ्यां धर्मतः कामतोऽर्थतः ।। ४७.७९ ।।

समन्वितानि भूतानि गुणै रेतैस्तु भागतः।
वसन्ति नानाजातीनि तेषु वर्षेषु तानि वै।
इत्येषाऽधारयत् सर्वं पृत्वी विश्वं जगत्स्थिता ।। ४७.८० ।।

इति महापुराणे वायु प्रोक्ते भुवनविन्यासो नाम सप्तचत्वारिंशोऽध्यायः ।। ४७ ।।

**।।सूत उवाच।।**

दक्षिणेनापि वर्षस्य भारतस्य निबोधत।
दशयोजनसाहस्रं समतीत्य महार्णवम् ।। ४८.१ ।।

त्रीण्येव तु सहस्राणि योजनानां समायतम्।
अतस्त्रिभागविस्तीर्णं नानापुष्पफलोदयम् ।। ४८.२ ।।

विद्युत्वन्तं महाशैलं तत्रैकं कुलपर्वतम्।
येन कूटतटैर्नैकैस्तद्द्वीपं समलंकृतम् ।। ४८.३ ।।

प्रसन्नस्वादुसलिलास्तत्र नद्यः सहस्रशः।
वाप्यस्तस्य तु द्वीपस्य प्रवृत्ता विमलोदकाः ।। ४८.४ ।।

तस्य शैलस्य छिद्रेषु विस्तीर्णेष्वायतेषु च।
अनेकेषु समृद्धानि नानाकाराणि सर्व्वशः ।। ४८.५ ।।

नरनारीसमाढ्यानि मुदितानि महान्ति च।
तेषां तलप्रवेशानि सहस्राणि शतानि च ।। ४८.६ ।।

पुराणि सन्निविष्टानि पर्वतान्तर्गतानि च।
सुसम्बद्धानि चान्योन्यमेकद्वाराणि चान्यथ ।। ४८.७ ।।

दीर्घश्मश्रुधरात्मानो नीला मेघसमप्रभाः।
जातमात्राः प्रजास्तत्र अशीतिपरमायुषः ।। ४८.८ ।।

शाखामृगसधर्माणः फलमूलाशिनस्तथा।
गोधर्माणो ह्यनिर्दिष्टाः शौचाचारविवर्जिताः ।। ४८.९ ।।

तद्द्वीपं तादृशैः पूर्णं मनुजैः क्षुद्रमानुषैः ।
एवमेतेऽन्तरद्वीपा व्याख्याता आनुपूर्वशः ।। ४८.१० ।।

विंशत्रिंशच्च पञ्चाशत् षष्ट्यशीतिः शतं तथा।
सहस्रमपि चाप्युक्तं योजनानां समन्ततः ।। ४८.११ ।।

विस्तीर्णाश्चायताश्चैव नानासत्त्वसमाकुलाः।
बर्हिणद्वीपपर्वाणि क्षुद्रद्वीपाः सहस्रशः ।। ४८.१२ ।।

जम्बूद्वीपप्रदेशात्तु षडन्ये विविधाश्रयाः।
अत्र द्वीपाः समाख्याता नानारत्नाकराः क्षितौ ।। ४८.१३ ।।

अङ्गद्वीपं यमद्वीपं मलयद्वीपमेव च।
शङ्खद्वीपं कुशद्वीपं वराहद्वीपमेव च ।। ४८.१४ ।।

अङ्गद्वीपं निबोध त्वं नानासङ्घसमाकुलम्।
नानाम्लेच्छगणाकीर्णं तद्द्वीपं बहुविस्तरम् ।। ४८.१५ ।।

हेमविद्रुमपूर्णानां रत्नानामाकरं क्षितौ।
नदीशैलवनैश्चित्रं सन्निभं लवणाम्भसा ।। ४८.१६ ।।

तत्र चक्रगिरिर्नाम नैक निर्झरकन्दरः।
तत्र सा तु दरी चास्य नानासत्वसमाश्रया ।। ४८.१७ ।।

स मध्ये नागदेशस्य नैकदेशो महागिरिः।
कोटिभ्यां नागनिलयं प्राप्तो नदनदी पतिम् ।। ४८.१८ ।।

यमद्वीपमिति प्रोक्तं नानारत्नाकराचितम् ।
तत्रापि द्युतिमान्नाम पर्वतो धातुमण्डितः।
समुद्रगानां प्रभवः प्रभवः काञ्चनस्य तु ।। ४८.१९ ।।

तथैव मलयद्वीपमेवमेव सुसंवृतम्।
मणिरत्नाकरं स्फीतमाकरं कनकस्य च ।। ४८.२० ।।

आकरं चन्दनानाञ्च समुद्राणां तथाकरम्।
नानाम्लेच्छगणाकीर्णं नदीपर्वतमण्डितम् ।। ४८.२१ ।।

तत्र श्रीमांस्तु मलयः पर्वतो रजताकरः।
महामलय इत्येवं विख्यातो वरपर्वतः ।। ४८.२२ ।।

द्वितीयं मन्दरं नाम प्रथितञ्च सदा क्षितौ।
आगस्त्यभवनं तत्र देवासुरनमस्कृतम् ।। ४८.२३ ।।

तथा काञ्चनपादस्य मलयस्यापरस्य हि।
निकुञ्जैस्तृणसोमाङ्गैराश्रमं पुण्यसेवितम् ।। ४८.२४ ।।

नानापुष्पफलोपेतं स्वर्गादपि विशिष्यते।
तत्रावतरते स्वर्गः सदा पर्वसु पर्वसु ।। ४८.२५ ।।

तथा त्रिकूटनिलये नानाधातुविभूषिते ।
अनेकयोजनोत्सेधे चित्रसानुदरीगृहे ।। ४८.२६ ।।

तस्य कूटतटे रम्ये हेमप्राकारतोरणा।
निर्यूहवलभीचित्रा हर्म्यप्रासादमालिनी ।। ४८.२७ ।।

शतयोजनविस्तीर्णा त्रिंशदायामयोजना।

नित्यप्रमुदिता स्फीता लङ्का नाम महापुरी ।। ४८.२८ ।।

सा कामरूपिणां स्थानं राक्षसानां महात्मनाम् ।
आवासो बलदृप्तानां तद्विद्याद्देवविद्विषाम्।
मानुषाणामसम्बाधा ह्यगम्या सा महापुरी ।। ४८.२९ ।।

तस्य द्वीपस्य वै पूर्वे तीरे नदनदीपतेः।
गोकर्णनामधेयस्य शङ्करस्यालयं महत् ।। ४८.३० ।।

तथैकराज्यं विज्ञेयं शङ्खद्वीपसमास्थितम्।
शतयोजनविस्तीर्णं नानाम्लेच्छगणालयम् ।। ४८.३१ ।।

तत्र शङ्खगिरिर्नाम धौतशङ्खदलप्रभः।
नानारत्नाकरः पुण्यः पुण्यकृद्भिर्निषेवितः ।। ४८.३२ ।।

शङ्ख नागा महापुण्या यस्मात् प्रभवते नदी।
यत्र शङ्खमुखो नाम नागराजः कृतालयः ।। ४८.३३ ।।

तथैव कुमुदद्वीपं नानापुण्योपशोभितम्।
नानाग्रामसमा कीर्णं नानारत्नाकरं शिवम् ।। ४८.३४ ।।

कुमुदाख्या महाभागा दुष्टचित्तनिबर्हणी।
महादेवस्य भगिनी प्रभाभिस्ताभिरिज्यते ।। ४८.३५ ।।

तथा वराहद्वीपे च नानाम्लेच्छगणाकुले।
नानाजालिसमाकीर्णे नानाधिष्ठानपत्तने ।। ४८.३६ ।।

धनधान्ययुते स्फीते धर्म्मिष्ठजनसङ्कुले।
नदीशैलवनैश्चित्रैर्बहुपुष्पफलोपगैः ।। ४८.३७ ।।

वराहपर्व्वतो नाम तत्र रम्यः शिलोच्चयः।
अनेककन्दरदरीगुहानिर्झरशोभितः ।। ४८.३८ ।।

तस्मात्सुरसपानीया पुण्यतीर्थतरङ्गिणी।
वाराही नाम वरदा प्रवृत्तास्य महानदी ।। ४८.३९ ।।

वाराहरूपिणे तत्र विष्णवे प्रभविष्णवे।
अनन्यदेवतास्तस्मै नमस्कुर्वन्ति विप्रजाः ।। ४८.४० ।।

एवं षडेते कथिता अनुद्वीपाः समन्ततः।
भारतद्वीपदेशो वै दक्षिणे बहुविस्तरः ।।४८.४१ ।।

एवमेकमिदं वर्षं बहुद्वीपमिहोच्यते।
समुद्रजलसम्बिन्नं खण्डं खण्डीकृतं स्मृतम् ।। ४८.४२ ।।

एवञ्चतुर्महाद्वीपः सान्तरद्वीपमण्डितः।
सानुद्वीपः समाख्यातो जम्बूद्वीपस्य विस्तरः ।। ४८.४३ ।।

इति महापुराणे वायुप्रोक्ते भुवनविन्यासो नामाष्टचत्वारिंशो ध्यायः ।। ४८ ।।

**।।सूत उवाच।।**

प्लक्षद्वीपं प्रवक्ष्यामि यथावदिव सङ्ग्रहात्।
श्रृणुतेमं यतातत्त्वं ब्रुवतो मे द्विजोत्तमाः ।। ४९.१ ।।

जम्बूद्वीपस्य विस्ताराद्द्विगुणस्तस्य विस्तरः।
विस्तारात्त्रिगुणश्चास्य परिणाहः समन्ततः।
तेनावृतः समुद्रोऽयं द्वीपेन लवणोदकः।। ४९.२ ।।

तत्र पुण्या जनपदाश्चिराच्च म्रियते प्रजा।
कुत एव हि दुर्भिक्षं जराव्याधिभयं कुतः ।। ४९.३ ।।

तत्रापि पर्वताः शुभ्राः सप्तैव मणिभूषणाः।
रत्नाकरास्तथा नद्यस्तासान्नामानि वच्मि भोः ।। ४९.४ ।।

प्लक्षद्वीपादिषु तेषु सप्त सप्तसु सप्तसु।
ऋज्वायताः प्रतिदिशं निविष्टाः पर्वताः सदा ।। ४९.५ ।।

प्लक्षद्वीपे तु वक्ष्यामि सप्त द्वीपान्महाचलान्।
गोमेद कोऽत्र प्रथमः पर्वतो मेघसन्निभः।
ख्यायते तस्य नाम्ना वै वर्षं गोमेदकन्तु तत् ।। ४९.६ ।।

द्वितीयः पर्वतश्चन्द्रः सर्वौषधिसमन्वितः।
अश्विभ्याममृतस्यार्थे ओषध्यस्तत्र संस्थिताः ।। ४९.७ ।।

तृतीयो नारदो नाम दुर्गशैलो महोच्छ्रयः।
तत्राचले समुत्पन्नौ पूर्वं नारदपर्वतौ ।। ४९.८ ।।

चतुर्थस्तत्र वै शैलो दुन्दुभिर्नाम नामतः।
शब्दमृत्युः पुरा तस्मिन् दुन्दुभिस्ताडितः सुरैः ।
रज्जुदारो रज्जुमयः शाल्मलस्वासुरान्तकृत् ।। ४९.९ ।।

पञ्चमः सोमको नाम देवै र्यत्रामृतं पुरा।
सम्भृतञ्च हृतं चैव मातुरर्थे गरुत्मता ।। ४९.१० ।।

षष्ठस्तु सुमना नाम स एवर्षभ उच्यते।
हिरण्याक्षो वराहेण तस्मिन् शैले निषूदितः ।। ४९.११ ।।

वैभ्राजः सप्तमस्तत्र भ्राजिष्णुः स्फाटिको महान्।
यस्माद्विभ्राजतेऽर्चिर्भिर्वैभ्राजस्तेन स स्मृतः ।। ४९.१२ ।।

तेषां वर्षाणि वक्ष्यामि नामतस्तु यथाक्रमम्।
गोमेदं प्रथमं वर्षं नाम्ना शान्तभयं स्मृतम् ।। ४९.१३ ।।

चन्द्रस्य शिखरं नाम नारदस्य सुखोदयम्।
आनन्दं दुन्दुभेर्वर्ष सोमकस्य शिवंस्मृतम्।
क्षेमकं ऋषभस्यापि वैभ्राजस्य ध्रुवं तथा ।। ४९.१४ ।।

एतेषु देवगन्धर्वाः सिद्धाश्च सहचारणैः
विहरन्ति रमन्ते च दृश्यमानास्तु तैः सह ।। ४९.१५ ।।

तेषां नद्यश्च सप्तैव प्रतिवर्षं समुद्रगाः।
नामतस्ताः प्रवक्ष्यामि सप्तगङ्गा महानदी ।। ४९.१६ ।।

अभिगच्छन्ति ता नद्यस्ताभ्यश्चान्याः सहस्रशः।
बहूदकाश्चौघवत्यो यतो वर्षति वासवः ।। ४९.१७ ।।

ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते।
शुभाः शान्तवहाश्चैव प्रमोदा ये च ते शिवाः ।। ४९.१८ ।।

आनन्दाश्च ध्रुवाश्चैव क्षेमकाश्च शिवै सह।
वर्णाश्रमाचारयुक्ताः प्रजास्तेष्वथ सर्वशः ।। ४९.१९ ।।

सर्वेष्वरोगाः सुबला- प्रजास्त्वामयवर्जिताः।
अधःसर्पिणी न तेष्वस्ति तथैवोत्सर्पिणी न च ।। ४९.२० ।।

न तत्रास्ति युगावस्था चतुर्युगकृता क्वचित्।
त्रेतायुगसमः कालः सर्वदा तत्र वर्त्तते ।। ४९.२१ ।।

प्लक्षद्वीपादिषु ज्ञेयः पञ्चस्वेतेषु सर्वशः।
देशस्यानुविधानेन कालस्यानुविधाः स्मृताः ।। ४९.२२ ।।

पञ्चवर्षसहस्राणि तेषु जीवन्ति मानवाः।
सुरूपाश्च सुवेषाश्च अरोगा बलिनस्तथा ।। ४९.२३ ।।

सुखमायुर्बलं रूपमारोग्यं धर्म एव च।
प्लक्षद्वीपादिषु ज्ञेयं शाकद्वीपान्तकेषु च ।। ४९.२४ ।।

प्लक्षद्वीपः पृथुः श्रीमान् सर्वतो धनधान्यवान्।
दिव्यौषधि फलोपेतः सर्वौषधिवनस्पतिः ।। ४९.२५ ।।

आवृतः पशुभिः सर्वैर्ग्रामारण्यैः सहस्रशः।
जम्बूवृक्षेण संख्यातस्तस्य मध्ये द्विजोत्तमाः।
प्लक्षो नाम्ना महावृक्षस्तस्य नाम्ना स उच्यते ।। ४९.२६ ।।

स तत्र पूज्यते स्थाणुर्मध्ये जनपदस्य हि।
स चापीक्षुरसोद्देशः प्लक्षद्वीपसमावृतः।
प्लक्षद्वीपस्य चैवेह वैपुल्याद्विस्तरेण तु ।। ४९.२७ ।।

इत्येष सन्निवेशोवः प्लक्षद्वीपस्य कीर्तितः।
आनुपूर्व्या समासेन शाल्मलन्तन्निबोधत ।। ४९.२८ ।।

ततस्तृतीयं द्वीपानां शाल्मलं द्वीपमुत्तमम्।
शाल्मलेन समुद्रस्तु द्वीपेनेक्षुरसोदकः।
प्लक्षद्वीपस्य विस्ताराद्द्विगुणेन समावृतः ।। ४९.२९ ।।

तत्रापि पर्वताः सप्त विज्ञेया रत्नयोनयः।
रत्नाकरास्तथा नद्यस्तेषु वर्षेषु सप्तसु ।। ४९.३० ।।

प्रथमः सूर्यसङ्काशः कुमुदो नाम पर्वतः।
सर्वधातुमयैः श्रृङ्गैः शिलाजालसमुद्गतैः ।। ४९.३१ ।।

द्वितीयः पर्वतस्तस्य उन्नतो नाम विश्रुतः।
हरितालमयैः श्रृङ्गैर्दिवमावृत्य तिष्ठति ।। ४९.३२ ।।

तृतीयः पर्वतस्तस्य बलाहक इति श्रुतः।
जात्यञ्जनमयैः श्रृङ्गैर्दिवमावृत्य तिष्ठति ।। ४९.३३ ।।

चतुर्थः पर्वतो द्रोणो यत्रौषध्यो महाबलाः।
विशल्यकरणी चैव मृतसञ्जीवनी तथा ।। ४९.३४ ।।

कङ्कस्तु पञ्चमस्तत्र पर्वतः सुमहोदयः।
दिव्यपुष्पफलो पेतो वृक्षवीरुत्समावृतः ।। ४९.३५ ।।

षष्ठस्तु पर्वतस्तत्र महिषो मेघसन्निभः।
यस्मिन् सोऽग्निर्निवसति महिषो नाम वारिजः ।। ४९.३६ ।।

सप्तमः पर्वतस्तत्र ककुझान्नाम भाष्यते।
तत्र रत्नान्यनेकानि स्वयं वर्षति वासवः।
प्रजापतिमुपादाय प्राजापत्ये विधिस्त्वयम् ।। ४९.३७ ।।

इत्येते पर्वताः सप्त शाल्मले मणिभूषिताः ।
तेषां वर्षाणि वक्ष्यामि सप्तैव तु शुभानि वै।
कुमुदात् प्रथमं श्वेतमुन्नतस्य तु लोहितम् ।। ४९.३८ ।।

बलाहकस्य जीमूतं द्रोणस्य हरितं स्मृतम् ।
कङ्कस्य वैद्युतं नाम महिषस्य तु मानसम् ।। ४९.३९ ।।

ककुदः सुप्रभं नाम सप्तैतानि तु सप्तधा।
वर्षाणि पर्वतांश्चैव नदीस्तेषु निबोधत ।। ४९.४० ।।

पानितोया वितृष्णा च चन्द्रा शुक्रा विमोचनी।
निवृत्तिः सप्तमी तासां प्रतिवर्षं तु ताः स्मृताः ।। ४९.४१ ।।

तासां समीपगाश्चान्याः शतशोऽथ सहस्रशः।
अशक्याः परिसंख्यातुं श्रद्धेयास्तु बुभूषता ।। ४९.४२ ।।

इत्येष सन्निवेशो वः शाल्मलस्यापि कीर्तितः।
प्लक्षवृक्षेण संख्यातस्तस्य मध्ये महाद्रुमः ।। ४९.४३ ।।

शाल्मलिर्विपुलस्कन्ध स्तस्य नाम्ना स उच्यते।
शाल्मलिस्तु समुद्रेण सुरोदेन समन्ततः।
विस्ताराच्छाल्मलस्यैव समेन तु समन्ततः ।। ४९.४४ ।।

उत्तरेषु तु धर्मज्ञा द्वीपेषु श्रृणुत प्रजाः।
यथाश्रुतं यथान्यायं ब्रुवतो मे निबोधत ।। ४९.४५ ।।

कुशद्वीपं प्रवक्ष्यामि चतुर्थं तं समासतः।
सुरोदकः परिवृतः कुशद्वीपेन सर्वतः ।। ४९.४६ ।।

सप्तैव गिरयस्तत्र वर्ण्यमानान्निबोधत।
शाल्मलस्य तु विस्ताराद् द्विगुणेन समन्ततः ।। ४९.४७ ।।

कुखद्वीपे तु विज्ञेयः पर्वतो विद्रुमोच्चयः।
द्वीपस्य प्रथमस्तस्य द्वितीयो हेमपर्वतः ।। ४९.४८ ।।

तृतीयो द्युतिमान्नाम जीमूतसदृशो गिरिः।
चतुर्थः पुष्पवान्नाम पञ्चमस्तु कुशेशयः ।। ४९.४९ ।।

षष्ठो हरिगिरिर्नाम सप्तमो मन्दरः स्मृतः ।
मन्दा इति ह्यपां नाम मन्दरो दारणादपाम् ।। ४९.५० ।।

तेषामन्तरविष्कम्भो द्विगुणः परिवारितः।
उद्भिदं प्रथमं वर्षं द्वितीयं वेणुमण्डलम् ।। ४९.५१ ।।

तृतीयं स्वैरथाकारं चतुर्थं लवणं स्मृतम्।
पञ्चमं धृतिमद्वर्षं षष्ठं वर्ष प्रभाकरम्।
सप्तमं कपिलं नाम सप्तैते वर्षपर्वताः ।। ४९.५२ ।।

एतेषु देवगन्धर्वाः प्रभास्तु जगदीश्वराः।
विहरन्ति रमन्ते च दृश्यमानास्तु वर्षशः ।। ४९.५३ ।।

न तेषु दस्यवः सन्ति म्लेच्छजात्यस्तथैव च।
गौरप्रायो जनः सर्वः क्रमाच्च म्रियते तथा ।। ४९.५४ ।।

तत्रापि नद्यः सप्तैव धुतपापाः शिवास्तथा।
पवित्रा सन्ततिश्चैव द्युतिगर्भा मही तथा ।। ४९.५५ ।।

अन्यास्ताभ्यः परिज्ञाताः शतशोऽथ सहस्रशः।
अभिगच्छन्ति ताः सर्वा यतो वर्षति वासवः ।। ४९.५६ ।।

घृतोदेन कुशद्वीपो बाह्यतः परिवारितः।
विज्ञेयः स तु विस्तारात् कुशद्वीपसमेन तु ।। ४९.५७ ।।

इत्येष सन्निवेशो वः कुशद्वीपस्य वर्णितः।
क्रौञ्चद्वीपस्य विस्तारं वक्ष्याम्यहमतः परम् ।। ४९.५८ ।।

कुशद्वीपस्य विस्ताराद् द्विगुणः स तु वै स्मृतः।
घृतोदकसमुद्रो वै क्रौञ्चद्वीपेन संवृतः ।। ४९.५९ ।।

तस्मिन् द्वीपे नगश्रेष्ठः क्रौञ्चस्थः प्रथमो गिरिः।
क्रौञ्चात्परो वामनको वामनादन्धकारकः ।। ४९.६० ।।

अन्धकारात्परश्चापि दिवावृन्नाम पर्वतः।
दिवावृतः परश्चपि दिविन्दो गिरिरुच्यते ।। ४९.६१ ।।

दिविन्दात्परतश्चापि पुण्डरीको महागिरिः।
पुण्डरीकात्परश्चापि प्रोच्यते दुन्दुभिस्वनः ।। ४९.६२ ।।

एते रत्नमयाः सप्त क्रौञ्चद्वीपस्य पर्वताः।
बहुवृक्षफलो पेता नानावृक्षलतावृताः ।। ४९.६३ ।।

परस्परेण द्विगुणा विष्कम्भाद्वर्षपर्व्वताः ।
वर्षाणि तत्र वक्ष्यामि नामतस्तु निबोधत ।। ४९.६४ ।।

क्रौञ्चस्य कुशली देशो वामनस्य मनोनुगः।
मनोनुगात्परश्चोष्णस्तृतीयो देश उच्यते ।। ४९.६५ ।।

उष्णात्परः प्रावरकः प्रावरादन्धकारकः।
अन्धकारकदेशात्तु मुनिदेशः परः स्मृतः ।। ४९.६६ ।।

मुनिदेशात्परश्चैव प्रोच्यते दुन्दुभिस्वनः।
सिद्धचारणसङ्कीर्णो गौरप्रायो जनः स्मृतः ।। ४९.६७ ।।

तत्रापि नद्यः सप्तैव प्रति वर्ष स्मृताः शुभाः ।
गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा ।
ख्यातिश्च पुण्डरीका च गङ्गा सप्तविधा स्मृता ।। ४९.६८ ।।

तासां समुद्रगाश्चान्या नद्यो यास्तु समीपगाः।
अनुगच्छन्ति ताः सर्वा विपुलाः सुबहूदकाः ।। ४९.६९ ।।

क्रौञ्चद्वीपः समुद्रेण दधिमण्डोदकेन तु।
आवृतः सर्वतः श्रीमान् क्रौञ्चद्वीपसमेन तु ।। ४९.७० ।।

प्लक्षद्वीपादयो ह्येते समासेन प्रकीर्त्तिताः।
तेषां निसर्गो द्वीपानामानुपूर्व्येण सर्वशः ।। ४९.७१ ।।

न शक्यं विस्तराद्वक्तु मपि वर्षशतैरपि ।
निसर्गोऽयं प्रजानां तु संहारो यश्च तासु वै ।। ४९.७२ ।।

अत ऊर्द्ध्वं प्रवक्ष्यामि शाकद्वीपस्य यो विधिः।
शाकद्वीपस्य कृत्स्नस्य यथावदिह निश्चयात्।
श्रृणुध्वं वै यथातत्त्वं ब्रुवतो मे यथार्थवत् ।। ४९.७३ ।।

क्रौञ्चद्वीपस्य विस्ताराद् द्विगुणस्तस्य विस्तरः।
परिवार्य समुद्रं स दधिमण्डोदकं स्थितः ।। ४९.७४ ।।

तत्र पुण्या जनपदाश्चिराच्च म्रियते जनः।
कुत एव तु दुर्भिक्षञ्चराव्याधिभयं कुतः ।। ४९.७५ ।।

तत्रापि पर्वताः शुभ्राः सप्तैव मणिभूषिताः।
रत्नाकरास्तथा नद्यस्तासां नामानि मे श्रृणु ।। ४९.७६ ।।

देवर्षिगन्धर्वयुतः प्रथमो मेरुरुच्यते।
प्रागायतः स सौवर्ण उदयो नाम पर्वतः ।। ४९.७७ ।।

तत्र मेघास्तु वृष्ट्यर्थं प्रभवन्ति च यान्ति च।
तस्यापरेण सुमहान् जलधारो महागिरिः ।। ४९.७८ ।।

तस्मान्नित्यमुपादत्ते वासवः परमं जलम्।
ततो वर्षं प्रभवति वर्षाकाले प्रजास्विह ।। ४९.७९ ।।

तस्यापरे रैवतको यत्र नित्यं प्रतिष्ठिता ।

रेवती दिवि नक्षत्रं पितामहकृतो गिरिः ।। ४९.८० ।।

तस्यापरेण सुमहान् श्यामो नाम महागिरिः।
तस्माच्छ्यामत्वमापन्नाः प्रजाः पूर्वमिमाः किल ।। ४९.८१ ।।

तस्यापरेण रजतो महानस्तो गिरिः स्मृतः।
तस्यापरेणाम्बिकेयो दुर्गः शैलो हिमाचितः ।। ४९.८२ .
आम्बिकेयात्परो रम्यः सर्वौषधिसमन्वितः ।
स चैव केशरीत्युक्तो यतो वायुः प्रवायति ।। ४९.८३ ।।

श्रृणुध्वं नामतस्तानि यथावदनुपूर्वशः।
उदयस्योदयं वर्षं जलदं नाम विश्रुतम् ।। ४९.८४ ।।

द्वितीयं जलधारस्य सुकुमारमिति स्मृतम्।
रैवतस्य तु कौमारं श्यामस्य तु मणीचकम् ।। ४९.८५ ।।

अस्तस्यापि शुभं वर्षं विज्ञेयं कुसुमोत्तरम्।
आम्बिकेयस्य मोदाकं केसरेषु महाद्रुमम् ।। ४९.८६ ।।

द्वीपस्य परिमाणञ्च ह्रस्वदीर्घत्वमेव च।
शाकद्वीपेन विख्यातस्तस्य मध्ये वनस्पतिः ।
शाको नाम महावृक्षस्तस्य पूजां प्रयुञ्जते ।। ४९.८७ ।।

एतेन देवगन्धर्वाः सिद्धाश्च सह चारणैः।
विहरन्ति रमन्ते च दृश्यमानाश्च तैः सह ।। ४९.८८ ।।

तत्र पुण्या जनपदाश्चातुर्वर्णसमन्विताः।
तेषु नद्यश्च सप्तैव प्रतिवर्षं समुद्रगाः ।
विद्धि नाम्नश्च ताः सर्वा गङ्गास्ताः सप्तधा स्मृताः ।। ४९.८९ ।।

प्रथमा सुकुमारीति गङ्गा शिवजला तथा।
अनु तप्ता च नाम्नैव नदी सम्परिकीर्त्तिता ।। ४९.९० ।।

कुमारी नामतः सिद्धा द्वितीया सा पुनः सती ।
नन्दा च पार्वती चैव तृतीय परिकीर्त्तिता ।। ४९.९१ ।।

शिवेतिका चतुर्थी स्यात् त्रिदिवा च पुनः स्मृता।
इक्षुश्च पञ्चमी ज्ञेया तथैव च पुनः क्रतुः ।। ४९.९२ ।।

धेनुका च मृता चैव षष्ठी संपरिकीर्त्तिता।
एताः सप्त महागङ्गाः प्रतिवर्षं शिवोदकाः।
भावयन्ति जनं सर्वं शाकद्वीपनिवासिनम् ।। ४९.९३ ।।

अनुगच्छन्ति तास्त्वन्या नदीनद्यः सहस्रशः।
बहूदक परिस्रावा यतो वर्षति वासवः ।। ४९.९४ ।।

तासान्तु नामधेयानि परिमाणं तथैव च।
न शक्यं परिसंख्यातुं पुण्यास्ताः सरिदुत्तमाः।
ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते ।। ४९.९५ ।।

शंशपायन विस्तीर्णो द्वीपोऽसौ चक्रसंस्थितः।
नदीजलैः प्रतिच्छन्नः पर्वतैश्चाभ्रसन्निभैः ।। ४९.९६ ।।

सर्वधातुविचित्रैश्च मणि विद्रुमभूषितैः।
पुरैश्च विविधाकारैः स्फीतैर्जनपदैरपि ।। ४९.९७ ।।

वृक्षैः पुष्पफलोपेतैः समन्ताद्धनधान्यवान्।
क्षीरोदेन समुद्रेण सर्वतः परिवारितः।
शाकद्वीपस्तु विस्तारात् समेन तु समन्ततः ।। ४९.९८ ।।

तस्मिन् जनपदाः पुण्याः पर्वतान्तरिते शुभाः ।
वर्णाश्रमसमाकीर्णा देशास्ते सप्त वै स्मृताः ।। ४९.९९ ।।

न सङ्करश्च तेष्वस्ति वर्णाश्रमकृतः व्कचित् ।
धर्मस्य चाव्यभीचारादेकान्तसुखिताः प्रजाः ।। ४९.१०० ।।

न तेषु लोभो माया वा ईर्ष्यासूयाऽधृतिः कुतः।
विपर्ययो न तेष्वस्ति एतत् स्वाभाविकं स्मृतम् ।। ४९.१०१ ।।

करोत्पत्तिर्नतेष्वस्ति न दण्डो न च दण्डकाः।
स्वधर्मेणैव धर्मज्ञास्ते रक्षन्ति परस्परम् ।। ४९.१०२ ।।

एतावदेव शक्यं वै तस्मिन् द्वीपे निवासिनाम्।
पुष्करं सप्तमं द्वीपं प्रवक्ष्यामि निबोधत ।। ४९.१०३ ।।

पुष्करेण तु द्वीपेन वृतः क्षीरोदको बहिः।
शाकद्वीपस्य विस्ताराद्द्विगुणेन समन्ततः ।। ४९.१०४ ।।

पुष्करे पर्वतः श्रीमान् एक एव महाशिलः।
चित्रै र्मणिमयैः शीलैः शिखरैस्तु समुच्छ्रितैः ।। ४९.१०५ ।।

द्वीपस्य तस्य पूर्वार्द्धे चित्रसानुः स्थितो महान्।
परिमण्डलसहस्राणि विस्तीर्णः पञ्चविंशतिः ।। ४९.१०६ ।।

ऊर्द्ध्वञ्चैव चतुस्त्रिंशत्सहस्राणि समाचितः।
द्वीपार्द्धस्य परिस्तोमः पर्वतो मानसोत्तमः ।। ४९.१०७ ।।

स्थितो वेलासमीपे तु नवचन्द्र इवोदितः।
योजनानां सहस्राणि ऊर्द्ध्वं पञ्चशदुच्छ्रितः ।। ४९.१०८ ।।

तावदेव स विस्तीर्णः सर्वतः परिमण्डलः।
स एवं द्वीपपश्चार्द्धे मानसः पृथिवीधरः ।। ४९.१०९ ।।

एक एव महासानुः सन्निवेशाद्द्विधा कृतः।
स्वादूदकेनोदधिना सर्वतः परिवारितः ।। ४९.११० ।।

पुष्करद्वीपविस्ताराद्विस्तीर्णोऽसौ समन्ततः।
तस्मिन् द्वीपे स्मृतौ द्वौ तु पुण्यौ जनपदौ शुभौ।
अभितो मानसस्याथ पर्वतस्यानुमण्डलौ ।। ४९.१११ ।।

महावीतन्तु यद्वर्षं बाह्यतो मानसस्य तत्।
तस्यैवाभ्यन्तरे यत्तु धातकीखण्डमुच्यते ।। ४९.११२ ।।

दशवर्षसहस्राणि तत्र जेवन्ति मानवाः।
आरोग्यसुखभूयिष्ठा मानसीं सिद्धिमास्थिताः ।। ४९.११३ ।।

सममायुश्च रूपञ्च तस्मिन् वर्षद्वये स्थितम्।
अधमोत्तमौ न तेष्वास्तां तुल्यास्ते रूपशीलतः ।। ४९.११४ ।।

न तत्र वञ्चको नेर्ष्या न स्तेना न भयं तथा।
निग्रहो न च दण्डोऽस्ति न लोभो न परिग्रहः ।। ४९.११५ ।।

सत्यानृतं न तत्रास्ति धर्माधर्मौ तथैव च।
वर्णाश्रमाणां वार्त्ता वा पाशुपाल्यं वणिक्क्रिया ।। ४९.११६ ।।

त्रयी विद्या दण्डनीतिः शुश्रूषा शल्यमेव च।
वर्षद्वये सर्वमेतत् पुष्करस्य न विद्यते ।। ४९.११७ ।।

न तत्र नद्यो वर्षञ्च शीतोष्णं वा न विद्यते ।
उद्भिज्जान्युदकान्यत्र गिरिप्रस्रवणानि च ।। ४९.११८ ।।

उत्तराणां कुरूणाञ्च तुल्यकालो जनः सदा।
सर्वत्र सुसुखस्तत्र जराक्लमविवर्जितः ।। ४९.११९ ।।

इत्येष धातकीखण्डो महावीते तथैव च ।
आनुपूर्व्याद्विधिः कृत्स्नः पुष्करस्य प्रकीर्तितः ।। ४९.१२० ।।

स्वादूदकेनोदधिना पुष्करः परिवारितः।
विस्तरान्मण्डलाच्चैव पुष्करस्य तथैव च ।। ४९.१२१ ।।

एवं द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः।
द्वीपस्यानन्तरो यस्तु समुद्रस्तु समन्ततः ।। ४९.१२२ ।।

एवं द्वीपसमुद्राणां वृद्धिर्ज्ञेया परस्परात्।
अपाञ्चैव समुद्रेकात् समुद्रा इति संज्ञिताः ।। ४९.१२३ ।।

ऋषयो निवसन्त्यस्मिन् प्रजा यस्माच्चतुर्विधाः।
तस्माद्वर्षमिति प्रोक्तं प्रजानां सुखदन्तु तत् ।। ४९.१२४ ।।

ऋष इत्येव ऋषयः वृषः शक्तिप्रबन्धने।
इति प्रबन्धनात् सिद्धं वर्षत्वं तेन तेषु तत् ।। ४९.१२५ ।।

शुक्लपक्षे चन्द्रवृद्धौ समुद्रः पूर्यते तदा।
प्रक्षीयमाणे बहुले क्षीयतेऽस्तमिते खगे ।। ४९.१२६ ।।

आपूर्यमाणे उदधिः स्वत एवाभिपूर्यते।
ततोऽपक्षीयमाणेऽपि स्वात्मनैवापकृष्यते ।। ४९.१२७ ।।

उखास्थमग्निसंयोगात् जलमुद्रिच्यते यथा।
तथा महोदधिगतं तोयमुद्रिच्यते ततः ।। ४९.१२८ ।।

अन्यूनाह्यतिरिक्ताश्च वर्द्धन्त्यापो ह्रसन्ति च।
उदयास्तमितैश्चेन्दोः पक्षयोः शुक्लकृष्णयोः।
क्षयवृद्धिरेवमुदधेः सोमवृद्धिक्षयात्पुनः ।। ४९.१२९ ।।

दशोत्तराणि पञ्चैव अङ्गुलीनां शतानि तु।
अपां वृद्धिः क्षयो दृष्टः समुद्राणान्तु पर्वसु ।। ४९.१३० ।।

द्विरापत्वात् स्मृता द्वीपाः सर्वतश्चोदकावृताः।
उदकस्याधानं यस्माच्च तस्मादुदधिरुच्यते ।। ४९.१३१ ।।

अपर्वाणस्तु गिरयः पर्वभिः पर्वताः स्मृताः ।
प्लक्षद्वीपे तु गोमेदः पर्वतस्तेन चोच्यते ।। ४९.१३२ ।।

शाल्मलिः शाल्मलद्वीपे पूज्यते च महाद्रुमाः।
कुशद्वीपे कुशस्तम्बस्तस्य नाम्ना स उच्यते ।। ४९.१३३ ।।

क्रौञ्चद्वीपे गिरिः क्रौञ्चो मध्ये जनपदस्य ह।

शकद्वीपे द्रुमः शाकस्तस्य नाम्ना स उच्यते ।। ४९.१३४ ।।

न्यग्रोधः पुष्करद्वीपे तत्र तैः स नमस्कृतः।
महादेवः पुष्करे तु ब्रह्मा त्रिभुवनेश्वरः ।। ४९.१३५ ।।

तस्मिन्निवसति ब्रह्मा साध्यैः सार्द्धं प्रजापतिः।
उपासते तत्र देवास्त्रयस्त्रिंशन्महर्षिभिः।
स तत्र पूज्यते चैव देवैर्देवोत्तमोत्तमः ।। ४९.१३६ ।।

जम्बूद्वीपात्प्रवर्त्तन्ते रत्नानि विविधानि च।
द्वीपेषु तेषु सर्वेषु प्रजानां हि क्रमास्त्विह ।। ४९.१३७ ।।

सर्वसो ब्रह्मचर्येण सत्येन च दमेन च।
आरोग्यायुःप्रमाणाद्धि द्विगुणञ्च समन्ततः ।। ४९.१३८ ।।

एतस्मिन् पुष्करद्वीपे यदुक्तं वर्षकद्वयम्।
गोपायति प्रजास्तत्र स्वयं सज्जनमण्डिताः ।। ४९.१३९ ।।

ईश्वरो दण्डमुद्यम्य ब्रह्मा त्रिभुवनेश्वरः।
सविष्णुः सशिवो देवः सपिता सपितामहः ।। ४९.१४० ।।

भोजनञ्चाप्रयत्नेन तत्र स्वयमुपस्थितम् ।
षड्रसं सुमहावीर्यं भुञ्जते च प्रजाः सदा ।। ४९.१४१ ।।

परेण पुष्करस्याथ आवृत्या यः स्थितो महान् ।
स्वादूदकः समुद्रस्तु समन्तात्परिवेष्टितः ।। ४९.१४२ ।।

परेण तस्य महती दृश्यते लोक संस्थितिः।
काञ्चनी द्विगुणा भूमिः सर्वा चैकशिलोपमा ।। ४९.१४३ ।।

तस्मात्परेण शैलस्तु मर्यादान्ते तु मण्डलम्।
प्रकाशश्चाप्रकाशश्च लोकालोकः स उच्यते ।। ४९.१४४ ।।

आलोकस्तस्य चार्वाक्तु निरालोकस्ततः परम्।
योजनानां सहस्राणि दश तस्योच्छ्रयः स्मृतः ।। ४९.१४५ ।।

तावांश्च विस्तरस्तस्य पृथिव्यां कामगश्च सः।
आलोके लोकशब्दस्तु निरालोके सलोकता।
लोकार्थं सम्मतो लोको निरालोकस्तु बाह्यतः ।। ४९.१४६ ।।

लोकविस्तारमात्रन्तु आलोकः सर्वतो बहिः।
परिच्छिन्नः समन्ताच्च उदकेनावृतश्च सः।

निरालोकात्परश्चापि अण्डमावृत्य तिष्ठति ।। ४९.१४७ ।।

अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी।
भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महस्तथा ।। ४९.१४८ ।।

जनस्तपस्तथा सत्य एतावान् लोकसङ्ग्रहः।
एकावानेव विज्ञेयो लोकान्तश्चैव तत्परः ।। ४९.१४९ ।।

कुम्बस्थायी भवेद्यादृक् प्रतीच्यान्दिशि चन्द्रमाः।
आदितः शुक्लपक्षस्य वपुरण्डस्य तद्विधम् ।। ४९.१५० ।।

अण्डानामीदृशानान्तु कोट्यो ज्ञेयाः सहस्रशः।
तिर्यगूर्ध्वमधस्ताच्च कारणस्याव्ययात्मनः।
कारणैः प्राकृतैस्तत्र ह्यावृतं प्रतिसप्तभिः ।। ४९.१५१ ।।

दशाधिक्येन चान्योन्यं धारयन्ति परस्परम्।
परस्परावृताः सर्वे उत्पन्नाश्च परस्परात् ।। ४९.१५२ ।।

अण्डस्यास्य समन्तात्तु सन्निविष्टो घनोदधिः।
समन्ताद्येन तोयेन धार्यमाणः स तिष्ठति ।। ४९.१५३ ।।

बाह्यतो घनतोयस्य तिर्यगूर्द्ध्वानुमण्डलम्।
धार्यमाणं समन्तात्तु तिष्ठते घनतेजसा ।। ४९.१५४ ।।

अयोगुडनिभो वह्निः समन्तान्मण्डलाकृतिः।
समन्ताद्घनवातेन धार्यमाणः स तिष्ठति।
घनवातस्तथाकाशन्धारयाणस्तु तिष्ठति ।। ४९.१५५ ।।

भूतादिश्च तथाकाशं भूतादयञ्चाप्यसौ महान् ।
महान् व्याप्तो ह्यनन्तेन अव्यक्तेन तु धार्यते ।। ४९.१५६ ।।

अनन्तमपरिव्यक्तन्दशधा सूक्ष्म एव च।
अनन्तमकृतात्मानमनादिनिधनञ्च तत् ।। ४९.१५७ ।।

अतीत्य पर तो घोरमनालम्बमनामयम्।
नैकयोजनसाहस्रं विप्रकृष्टं तमोवृतम् ।। ४९.१५८ ।।

तम एव निरालोकममर्यादमदेशिकम्।
देवानामप्यविदितं व्यवहारविवर्ज्जितम् ।। ४९.१५९ ।।

तमसोऽन्ते च विख्यातमाकाशान्ते च भास्वरम्।
मर्यादायामतस्तस्य शिवस्यायतनं महत् ।। ४९.१६० ।।

त्रिदशानामगम्यन्तु स्थानं दिव्यमिति श्रुतिः।
महतो देवदेवस्य मर्यादायां व्यवस्थितम् ।। ४९.१६१ ।।

चन्द्रादित्यावतप्तास्तु ये लोकाः प्रथिता बुधैः।
ते लोका इत्यभिहिता जगतश्च न संशयः ।। ४९.१६२ ।।

रसातलतलात् सप्त सप्तैवोर्द्ध्वतलाः क्षितौ।
सप्तस्कन्धास्तथा वायोः सब्रह्मसदना द्विजाः ।। ४९.१६३ ।।

आपातालाद्दिवं यावदत्र पञ्चविधा गतिः।
प्रमाणमेतज्जगत एष संसारसागरः ।। ४९.१६४ ।।

अनाद्यन्ता प्रयात्येवं नैकजातिसमुद्भवाः।
विचित्रा जगतः सा वै प्रवृत्तिरनवस्थिता ।। ४९.१६५ ।।

यथैतद् भौतिकं नाम निसर्गबहुविस्तरम्।
अतीन्द्रियैर्महाभागैः सिद्धैरपि न लक्ष्यते ।। ४९.१६६ ।।

पृथिव्याञ्चाग्निवायूनां महतस्तमसस्तथा।
ईश्वरस्य तु देवस्य अनन्तस्य द्विजोत्तमाः ।। ४९.१६७ ।।

क्षयो वा परिमाणं वा अन्तो वापि न विद्यते।
अनन्त एष सर्वत्र सर्वस्थानेषु पठ्यते।
तस्य चोक्तं मया पूर्वं तस्मिन्नामानुकीर्त्तने ।। ४९.१६८ ।।

य एष शिवनाम्ना हि तद्वः कात्स्न्र्येन कीर्तितम्।
स एष सर्वत्र गतः सर्वस्थानेषु पूज्यते ।। ४९.१६९ ।।

भूमौ रसातले चैव आकाशे पवनेऽनले।
अर्णवेषु च सर्वेषु दिवि चैव न संशयः ।। ४९.१७० ।।

तथा तपसि विज्ञेय एष एव महाद्युतिः।
अनेकधा विभक्ताङ्गो महायोगी महेश्वरः।
सर्वलोकेषु लोकेश इज्यते बहुधा प्रभुः ।। ४९.१७१ ।।

एवं परस्परोत्पन्ना धार्यन्ते च परस्परान्।
आधाराधेयभावेन विकारास्ते विकारिणः ।। ४९.१७२ ।।

पृथ्व्यादयो विकारास्ते परिच्छिन्नाः परस्परम्।
परस्पराधिकाश्चैव प्रविष्टाश्च परस्परम् ।। ४९.१७३ ।।

यस्माद्विष्टाश्च तेऽन्योन्यं तस्मात् स्थैर्यमुपागताः।
प्रागासन् ह्यविशेषास्तु विशेषान्योन्यवेशनात्।
पृथिव्याद्याश्च वाय्वन्ताः परिच्छिन्नास्त्रयस्तु ते ।। ४९.१७४ ।।

गुणापचयसारेण परिच्छेदो विशेषतः।
शेषाणां तु परिच्छेदः सौक्ष्म्यान्नेह विभाव्यते ।। ४९.१७५ ।।

भूतेभ्यः परतस्तेभ्यो ह्यालोकः परतः स्मृतः।
भूतान्यालोक आकाशे परिच्छिन्नानि सर्वशः ।। ४९.१७६ ।।

पात्रे महति पात्राणि यथैवान्तर्गतानि तु।
भवन्त्यन्योन्यहीनानि परस्परसमाश्रयात्।
तथा ह्यालोक आकाशे भेदास्त्वन्तर्गता मताः ।। ४९.१७७ ।।

कृत्स्नान्येतानि चत्वारि अन्योन्यस्याधिकानि तु ।
यावदेतानि भूतानि तावदुत्पत्ति रुच्यते ।। ४९.१७८ ।।

जन्तूनामिह संस्कारो भूतेष्वन्तर्गतो मताः।
प्रत्याख्याय च भूतानि कार्योत्पत्तिर्न विद्यते ।। ४९.१७९ ।।

तस्मात्परिमिता भेदाः स्मृताः कार्यात्मकास्तु ते।
कारणात्मकास्तथैव स्युर्भेदा ये महदादयः ।। ४९.१८० ।।

इत्येष सन्निवेशो वो मया प्रोक्तो विभागशः।
सप्तद्वीपसमुद्राया याथातथ्येन वै द्विजाः ।। ४९.१८१ ।।

विस्तारान्मण्जलाच्चैव प्रसंख्यातेन चैव हि ।
वैश्वरूपं प्रधानस्य परिमाणैकदेशिकम् ।। ४९.१८२ ।।

अदिष्ठानं भगनतो यस्य सर्वमिदं जगत् ।
एवं भूतगणाः सप्त सन्निविष्टाः परस्परम् ।। ४९.१८३ ।।

एतावान् सन्निवेशस्तु मया शक्यः प्रभावितु म्।
एतावदेव श्रोतव्यं सन्निवेशे तु पार्थिव ।। ४९.१८४ ।।

सप्त प्रकृतयस्त्वेता धारयन्ति परस्परम्।
तास्वल्पपरिमाणेन प्रसङ्ख्यातुमिहोच्यते।
असङ्ख्येयाः प्रकृतयस्तिर्यगूर्द्ध्वमधश्च याः ।। ४९.१८५ ।।

तारकासन्निवेशश्च यावद्दिव्यं तु मण्जलम्।
मर्यादासन्निवेशस्तु भूमेस्तदनुमण्डलम्।
अतः परं प्रवक्ष्यामि पृथिव्यां वै द्विजोत्तमाः ।। ४९.१८६ ।।

इति श्रीमहापुराणे वायुप्रोक्ते भुवनविन्यासो नामैकोनपञ्चाशोऽध्यायः ।। ४९ ।।

**।।सूत उवाच।।**

अधःप्रमाणमूर्द्ध्वञ्च वर्ण्यमानं निबोधत।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम्।
अनन्तधातवो ह्येते व्यापकास्तु प्रकीर्तिताः ।। ५०.१ ।।

जननी सर्वभूतानां सर्व भूतधरा धरा।
नानाजनपदाकीर्णा नानाधिष्ठानपत्तना ।। ५०.२ ।।

नानानदनदीशैला नैकजातिसमाकुला।
अनन्ता गीयते देवी पृथिवी बहुविस्तरा ।। ५०.३ ।।

नदीनदसमुद्रस्थास्तथा क्षुद्राश्रयाः स्थिताः।
पर्वताकाशसंस्थाश्च अन्तर्भूमिगताश्च याः ।। ५०.४ ।।

आपोऽनन्ताश्च विज्ञेयास्तथाग्निः सर्वलौकिकः।
अनन्तः पठ्यते चैव व्यापकः सर्वसम्भवः ।। ५०.५ ।।

तथाकाशमनालम्बं रम्यं नानाश्रयं स्मृतम्।
अनन्तं प्रथितं सर्वं वायुश्चाकाशसम्भवः ।। ५०.६ ।।

आपः पृथिव्यामुदके पृथिवी चोपरि स्थिता।
आकाशञ्चापरमधः पुनर्भूमिः पुनर्ज्जलम् ।। ५०.७ ।।

एवमन्तमनन्तस्य भौतिकस्य न विद्यते।
पुरा सुरैरभिहितं निश्चितन्तु निबोधत ।। ५०.८ ।।

भूमिर्जलमथाकाशमिति ज्ञेया परम्परा।
स्थितिरेषा तु विज्ञेया सप्तमेऽस्मिन् रसातले ।। ५०.९ ।।

दशयोजनसाहस्रमेकभौमं रसातलम्।
साधुभिः परिविख्यातमेकैकं बहुविस्तरम् ।। ५०.१० ।।

प्रथममतलञ्चैव सुतलन्तु ततः परम्।
ततः परतरं विद्याद्वितलं बहुविस्तरम् ।। ५०.११ ।।

ततो गभस्तलं नाम परतश्च महातलम्।
श्रीतलञ्च ततः प्राहुः पातालं सप्तमंस्मृतम् ।। ५०.१२ ।।

कृष्णभौमञ्च प्रथमं भूमिभागञ्च कीर्त्तितम्।
पाण्डुभौमं द्वितीयन्तु तृतीयं रक्तमृत्तिकम् ।। ५०.१३ ।।

पीतभौमञ्चतुर्थन्तु पञ्चमं शर्करातलम्।
षष्ठं सिलामयञ्चैव सौवर्णं सप्तमन्तलम् ।। ५०.१४ ।।

प्रथमे तु तले ख्यातमसुरेन्द्रस्य मन्दिरम्।
नमुचेरिन्द्रशत्रोर्हि महानादस्य चालयम् ।। ५०.१५ ।।

पुरञ्च शङ्कुकर्णस्य कबन्धस्य च मन्दिरम्।
निष्कुलादस्य च पुरं प्रहृष्टजनसङ्कुलम् ।। ५०.१६ ।।

राक्षसस्य च भीमस्य शूलदन्तस्य चालयम्।
लोहिताक्षकलिङ्गानां नगरं श्वापदस्य तु ।। ५०.१७ ।।

धनञ्जयस्य च पुरं माहेन्द्रस्य महात्मनः ।
कालियस्य च नागस्य नगरं कलसस्य च ।। ५०.१८ ।।

एवं पुरसहस्राणिं नागदानवरक्षसाम्।
तले ज्ञेयानि प्रथमे कृष्णभौमे न संशयः ।। ५०.१९ ।।

द्वितीयेऽपि तले विप्रा दैत्येन्द्रस्य सुरक्षसः।
महाजम्भस्य च तथा नगरं प्रथमस्य तु ।। ५०.२० ।।

हयग्रीवस्य कृष्णस्य निकुम्भस्य च मन्दिरम्।
शङ्खाख्येयस्य च पुरं नगरं गोमुखस्य च ।। ५०.२१ ।।

राक्षसस्य च नीलस्य मेघस्य क्रथनस्य च।
पुरञ्च कुरुपादस्य महोष्णीषस्य चालयम् ।। ५०.२२ ।।

कम्बलस्य च नागस्य पुरमश्वतरस्य च।
कद्रुपुत्रस्य च पुरं तक्षकस्य महात्मनः ।। ५०.२३ ।।

एवं पुरसहस्राणि नागदानवरक्षसाम्।
द्वितीयेऽस्मिन् तले विप्राः पाण्डुभौमे न संशयः ।। ५०.२४ ।।

तृतीये तु तलेख्यातं प्रह्लादस्य महात्मनः।
अनुह्लादस्य च पुरं देत्येन्द्रस्य महात्मनः ।। ५०.२५ ।।

तारकाख्यस्य च पुरं पुरं त्रिशिरसस्तथा।
शिशुमारस्य च पुरं हृष्टपुष्टजनाकुलम् ।। ५०.२६ ।।

च्यवनस्य च विज्ञेयं राक्षसस्य च मन्दिरम्।
राक्षसेन्द्रस्य च पुरंकुम्भिलस्य खरस्यच ।। ५०.२७ ।।

विराधस्य च क्रूरस्य पुरमुल्कामुखस्य च।
हेमकस्य च नागस्य तथा पाण्डुरकस्य च ।। ५०.२८ ।।

मणिमन्त्रस्य च पुरं कपिलस्य च मन्दिरम्।
नन्दस्य चोरगपतेर्विशालस्य च मन्दिरम् ।। ५०.२९ ।।

एवं पुरसहस्राणि नागदानवरक्षसाम्।
तृतीयेऽस्मिस्तले विप्राः पीतभौमे न संशयः ।। ५०.३० ।।

चतुर्थे दैत्यसिंहस्य कालनेमेर्महात्मनः।
गजकर्णस्य च पुरं नगरं कुञ्जरस्य च ।। ५०.३१ ।।

राक्षसेन्द्रस्य च पुरं सुमालेर्बहुविस्तरम्।
मुञ्जस्य लोकनाथस्य वृकवक्त्रस्य चालयम् ।। ५०.३२ ।।

बहुयोजनसाहस्रं बहुपक्षिसमाकुलम् ।
नगरं वैनतेयस्य चतुर्थेऽस्मिन् रसातले ।। ५०.३३ ।।

पञ्चमे शर्कराभौमे बहुयोजनविस्तृते।
विरोचनस्य नगरं दैत्यसिंहस्य धीमतः ।। ५०.३४ ।।

वैढूर्य्यस्याग्निजिह्वस्य हिरण्याक्षस्य चालयम्।
पुरञ्च विद्युज्जिह्वस्य राक्षसस्य च धीमतः ।। ५०.३५ ।।

महामेघस्य च पुरं राक्षसेन्द्रस्य शालिनः।
कर्म्मारस्य च नागस्य स्वस्तिकस्य जयस्य च ।। ५०.३६ ।।

एवं पुरसहस्राणि नागदानवरक्षसाम्।
पञ्चमेऽपि तथा ज्ञेयं शर्करानिलये सदा ।। ५०.३७ ।।

षष्ठे तले दैत्यपतेः केसरेर्नगरोत्तमम्।

सुपर्व्वणः सुलोम्नश्च नगरं महिषस्य च।
राक्षसेन्द्रस्य च पुरमुत्क्रोशस्य महात्मनः ।। ५०.३८ ।।

तत्रास्ते सुरसापुत्रः शतशीर्षो मुदा युतः।
कश्यपस्य सुतः श्रीमान् वासुकिर्नाम नागराट् ।। ५०.३९ ।।

एवं पुरसहस्राणि नागदानवरक्षसाम् ।
षष्ठे तलेऽस्मिन् विख्याते शिलाभौमे रसातले ।। ५०.४० ।।

सप्तमे तु तले ज्ञेयं पाताले सर्व्वपश्चिमे ।
पुरं बलेः प्रमुदितं नरनारीसमाकुलम् ।। ५०.४१ ।।

असुराशीविषैः पूर्णमुद्धतैर्द्देवशत्रुभिः।
मुचुकुन्दस्य दैत्यस्य तत्र वै नगरं महत् ।। ५०.४२ ।।

अनेकैर्दितिपुत्राणां समुदीर्णैर्महापुरैः।
तथैव नागनगरैरृद्धिमद्भिः सहस्रशः ।। ५०.४३ ।।

दैत्यानां दानवानाञ्च समुदीर्णै र्महापुरैः।
उदीर्णै राक्षसावासैरनेकैश्च समाकुलम् ।। ५०.४४ ।।

पातालान्ते च विप्रेन्द्रा विस्तीर्णे बहुयोजने।
आस्ते रक्तारविन्दाक्षो महात्मा ह्यजरामरः ।। ५०.४५ ।।

धौतशङ्खोदरवपुर्नीलवासा महाभुजः।
विशालभोगो द्युतिमांश्चित्रमालाधरो बली ।। ५०.४६ ।।

रुक्मश्रृङ्गावदातेन दीप्तास्येन विराजता।
प्रभुर्मुखसहस्रेण शोभते वै स कुण्डली ।। ५०.४७ ।।

स जिह्वामालया देवो लोलज्वालानलार्चिषा।
ज्वालामालापरिक्षिप्तः कैलास इव लक्ष्यते ।। ५०.४८ ।।

स तु नेत्रसहस्रेण द्विगुणेन विराजता।
बालसूर्य्याभिताम्रेण शोभते स्निग्धमण्डलः ।। ५०.४९ ।।

तस्य कुन्देन्दुवर्णस्य अक्षमाला विराजते ।
तरुणादि त्यमालेव श्वेतपर्व्वतमूर्द्धनि ।। ५०.५० ।।

जटाकरालो द्युतिमान् लक्ष्यते शयनासने।
विस्तीर्ण इव मेदिन्यां सहस्रशिखरो गिरिः ।। ५०.५१ ।।

महाभोगैर्महाभागै र्महानागैर्महाबलैः।
उपास्यते महातेजा महानागपतिः स्वयम् ।। ५०.५२ ।।

स राजा सर्वनागानां शेषो नाम महाद्युतिः।
सा वैष्णवी ह्यहितनुर्मर्यादायां व्यवस्थिता ।। ५०.५३ ।।

सप्तैवमेते कथिता व्यवहार्या रसातलाः ।
देवासुरमहानागराक्षसाध्युषिताः सदा ।। ५०.५४ ।।

अतःपरमनालोक्यमगम्यं सिद्धसाधुभिः।
देवा मानप्यविदितं व्यवहारविवर्ज्जितम् ।। ५०.५५ ।।

पृथिव्यग्न्यम्बुवायूनां नभसश्च द्विजोत्तमाः।
महत्त्वमेवमृषिभिर्वर्ण्यते नात्र संशयः ।। ५०.५६ ।।

अत ऊर्द्ध्वं प्रवक्ष्यामि सूर्याचन्द्रमसोर्गतिम्।
सूर्याचन्द्रमसावेतौ भ्रमन्तौ यावदेव तु।
प्रकाशतः स्वभाभिस्तौ मण्डलाभ्यां समास्थितौ ।। ५०.५७ ।।

सप्तानाञ्च समुद्राणां द्वीपानान्तु स विस्तरः।
विस्तरार्द्धं पृथिव्यास्तु भवेदन्यत्र बाह्यतः ।। ५०.५८ ।।

पर्यासपारिमाण्यन्तु चान्द्रादित्यौ प्रकाशतः।
पर्यासपारिमाण्येन भूमेस्तुल्यं दिवं स्मृतम् ।। ५०.५९ ।।

अवति त्रीनिमान् लोकान् यस्मात् सूर्यः परिभ्रमन्।
अवधातुः प्रकाशाख्यो ह्यवनात्स रविः स्मृतः ।। ५०.६० ।।

अतः परं प्रवक्ष्यामि प्रमाणं चन्द्रसूर्ययोः।
महितत्वान्महीशब्दो ह्यस्मिन् वर्षे निपात्यते ।। ५०.६१ ।।

अस्य भारतवर्षस्य विष्कम्भन्तु सुविस्तरम्।
मण्डलं भास्करस्याथ योजनानां निबोधत ।। ५०.६२ ।।

नवयोजनसाहस्रो विस्तारो भास्करस्य तु।
विस्तारात्त्रिरगुणश्चास्य परिणाहोऽथ मण्डलम्।
विष्कम्बो मण्जलस्यैव भास्कराद् द्विगुणः शशी ।। ५०.६३ ।।

अतः पृथिव्यां वक्ष्यामि प्रमाणं योजनैः सह।
सप्तद्वीपसमुद्राया विस्तारो मण्जलञ्च यत् ।। ५०.६४ ।।

इत्येतदिह सङ्ख्यातं पुराणं परिमाणतः।
तद्वक्ष्यामि प्रसङ्ख्याय साम्प्रतैरभिमानिभिः ।। ५०.६५ ।।

अभिमानिव्यतीता ये तुल्यास्ते साम्प्रतैरिह।
देवा ये वै ह्यतीतास्ते रूपैर्नामभिरेव च ।। ५०.६६ ।।

तस्मात्तु साम्प्रतैर्देवैर्वक्ष्यामि वसुधातलम्।
दिवस्तु सन्निवेशो वै साम्प्रतैरेव कृत्स्नशः ।। ५०.६७ ।।

शतार्द्ध कोटिविस्तारा पृथिवी कृत्स्नतः स्मृता।
तस्या वार्धप्रमाणेन मेरोर्वै चातुरन्तरम् ।। ५०.६८ ।।

पृथिव्या वार्धविस्तारो योजनाग्रात्प्रकीर्त्तितः ।
मेरुमध्यात् प्रति दिशं कोटिरेकादश स्मृताः ।। ५०.६९ ।।

तथा शतसहस्राणि एकोननवतिः पुनः।
पञ्चाशच्च सहस्राणि पृथिव्या वार्धविस्तरः ।। ५०.७० ।।

पृथिव्या विस्तरं कृत्स्नं योजनैस्तन्निबोधत।
तिस्रः कोट्यस्तु विस्तारः संख्यातः स चतुर्दिशम् ।। ५०.७१ ।।

तथा शतसहस्राणामेकोनाशीतिरुच्यते।
सप्तद्वीपसमुद्रायाः पृथिव्यास्त्वेष विस्तरः ।। ५०.७२ ।।

विस्तारात् त्रिगुणञ्चैव पृथिव्यन्तस्य मण्डलम्।
गणितं योजनाग्रन्तु कोट्यस्त्वेकादश स्मृताः ।। ५०.७३ ।।

तथा शतसहस्रन्तु सप्त त्रिंशाधिकानि तु।
इत्येतद्वै प्रसङ्ख्यातं पृथिव्यन्तस्य मण्डलम् ।। ५०.७४ ।।

तारकासन्निवेशस्य दिवि यावद्धि मण्डलम्।

पर्यासः सन्निवेशस्य भूमस्तावत्तु मण्डलम् ।। ५०.७५ ।।

पर्यासपारिमाण्डेन भूमेस्तुल्यं दिवं स्मृतम्।
सप्तानामपि लोकानामेतन्मानं प्रकीर्तितम् ।। ५०.७६ ।।

पर्यासपारिमाण्डेन मण्डलानुगतेन च।
उपर्युपरि लोकानां छत्रवत्परिमण्डलम् ।। ५०.७७ ।।

संस्थितिर्विहिता सर्वा येषु तिष्ठन्ति जन्तवः।
एतदण्डकटाहस्य प्रमाणं परिकीर्त्तितम् ।। ५०.७८ ।।

अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी।
भूर्लोकस्व भुवश्चैव तृतीयः स्वरिति स्मृतः ।
महर्लोको जनश्चैव तपः सत्यश्च सप्तमः ।। ५०.७९ ।।

एते सप्त कृता लोकाश्छत्राकारा व्यवस्थिताः।
स्वकैरावरणैः सूक्ष्मैर्धार्यमाणाः पृथक् पृथक् ।। ५०.८० ।।

दशभागाधिकाभिश्च ताभिः प्रकृतिभिर्बहिः।
धार्यमाणा विशेषैश्च समुत्पन्नैः परस्परम् ।। ५०.८१ ।।

अस्याण्डस्य समन्ताच्च सन्निविष्टो घनोदधिः।
पृथिवीमण्डलं कृत्स्नं घनतोयेन धार्यते ।। ५०.८२ ।।

घनोदधिपरेणाथ धार्य्यते घनतेजसा।
बाह्यतो घनतेजस्तु तिर्य्यगूर्द्ध्वन्तु मण्डलम् ।। ५०.८३ ।।

समन्ताद्वनवातेन धार्य्यमाणं प्रतिष्ठितम्।
घनवातात्तथाकाशमाकाशञ्च महात्मना ।। ५०.८४ ।।

भूतादिना वृतं सर्व्वं भूताधिर्महता वृतः ।
वृतो महाननन्तेन प्रधानेनाव्ययात्मना ।। ५०.८५ ।।

पुराणि लोकपालानां प्रवक्ष्यामि यथाक्रमम् ।
ज्योतिर्गणप्रचारस्य प्रमाणं परिवक्ष्यते ।। ५०.८६ ।।

मेरोः प्राच्यां दिशि तथा मानसस्यैव मूर्द्धनि।
वस्वोकसारा माहेन्द्री पुण्या हेमपरिष्कृता । ५०.८७ ।।

दक्षिणेन पुनर्मेरोर्मानसस्यैव मूर्द्धनि।
वैवस्वतो निवसति यमः संयमने पुरे ।। ५०.८८ ।।

प्रतीच्यान्तु पुनर्मेरोर्मानसस्यैव मूर्द्धनि।
सुखा नाम पुरी रम्या वरुणस्याथ धीमतः ।। ५०.८९ ।।

दिश्युत्तरस्यां मेरोस्तु मानसस्यैव मूर्द्धनि।
तुल्या माहेन्द्रपुर्य्या तु सोमस्यापि विभावरी ।। ५०.९० ।।

मानसोत्तरपृष्ठे तु लोकपालाश्चतुर्द्दिशम्।
स्थिता धर्म्मव्यवस्थायै लोकसंरक्षणाय च ।। ५०.९१ ।।

लोकपालोपरिष्टात्तु सर्व्वतो दक्षिणायने।
काष्ठागतस्य सूर्य्यस्य गतिर्या तां निबोधत ।। ५०.९२ ।।

दक्षिणे प्रक्रमे सूर्य्यः क्षिप्तेषुरिव सर्पति।
ज्योतिषाञ्चक्रमादाय सततं परिगच्छति ।। ५०.९३ ।।

मध्यगश्चामरावत्यां यदा भवति भास्करः।
वैवस्वते संयमने उदयस्तत्र उच्यते ।। ५०.९४ ।।

सुखायामर्द्धरात्रञ्च मध्यगः स्याद्रविर्यदा।
सुखायामथ वारुण्यामुत्तिष्ठन् स तु दृश्यते ।। ५०.९५ ।।

विभायामर्द्धरात्रं स्यान्माहेन्द्य्रामस्तमेति च।
तदा दक्षिणपूर्व्वेषामपराह्नो विधीयते ।। ५०.९६ ।।

दक्षिणापर देश्यानां पूर्व्वाह्नः परिकीर्त्त्यते।
तेषामपररात्रञ्च ये जना उत्तरापथे ।। ५०.९७ ।।

देशा उत्तरपूर्व्वा ये पूर्व्वरात्रन्तु तान् प्रति।
एवमेवोत्तरेष्वर्को भवनेषु विराजते ।। ५०.९८ ।।

सुखायामथ वारुण्यां मध्याह्ने चार्य्यमा यदा।
विभावर्य्यां सोमपुर्य्यामुत्तिष्ठति विभावसुः ।। ५०.९९ ।।

रात्र्यर्द्धं चामरावत्यामस्तमेति यमस्य च।

सोमपुर्यां विभायान्तु मध्याह्ने स्याद्दिवाकरः ।। ५०.१०० ।।

महेन्द्रस्यामरावत्यामुत्तिष्ठति यदा रविः।
अर्द्धरात्रं संयमने वारुण्यामस्तमेति च ।। ५०.१०१ ।।

स शीग्रमेति पर्य्येति भास्करोऽलातचक्रवत्।
भ्रमन् वै भ्रममाणानि ऋक्षाणि गगने रविः ।। ५०.१०२ ।।

एवं चतुर्षु द्वीपेषु दक्षिणान्तेन सर्पति।
उदयास्तमनेनासावुत्तिष्ठति पुनः पुनः ।। ५०.१०३ ।।

पूर्व्वाह्ने चापराह्ने तु द्वौ द्वौ देवालयौ तु सः।
तपत्येकन्तु मध्याह्ने तैरेव तु सरश्मिभिः ।। ५०.१०४ ।।

उदितो वर्द्धमानाभिरामध्याह्नं तपन् रविः।
अतः परं ह्रसन्तीभिर्गोभिरस्तं स गच्छति ।। ५०.१०५ ।।

उदयास्तमयाभ्यां हिस्मृते पूर्वापरे दिशो।
यावत्पुरस्तात्तपति तावत् पृष्ठे तु पार्श्वयोः ।। ५०.१०६ ।।

यत्रोद्यन् दृश्यते सूर्यस्तेषां स उदयः स्मृतः।
यत्र प्रणाशमायाति तेषामस्तः स उच्यते ।। ५०.१०७ ।।

सर्वेषामुत्तरे मेरुर्लोकालोकस्तु दक्षिणे।
विदूरभावादर्कस्य भूमेर्लेखावृतस्य च।
ह्रियन्ते रश्मयो यस्मात्तेन रात्रौ न दृश्यते ।। ५०.१०८ ।।

ग्रहनक्षत्रताराणां दर्शनं भास्करस्य च।
उच्छ्रायस्य प्रमाणेन ज्ञेयमस्तमनोदयम् ।। ५०.१०९ ।।

शुक्लच्छायोग्निरापश्च कृष्णच्छाया च मेदिनी।
विदूरभावादर्कस्य उद्यातस्य विरश्मिता।
रक्ताबावो विरश्मित्वाद्रक्ततत्वाच्चाप्यनुष्णता ।। ५०.११० ।।

लेखयावस्थितः सूर्यो यत्र यत्र तु दृश्यते।
ऊर्द्ध्वं गतः सहस्रन्तु योजनानां स दृश्यते ।। ५०.१११ ।।

प्रभा हि सौरी पादेन अस्तङ्गच्छति भास्करे।

अग्निमाविशते रात्रौ तस्माद्दूरात् प्रकाशते ।। ५०.११२ ।।

उदितस्तु पुनः सूर्यः अस्तमाग्नेयमाविशत्।
संयुक्तो वह्निना सूर्यस्ततः स तपते दिवा ।। ५०.११३ ।।

प्राकाश्यञ्च तथौष्ण्यञ्च सूर्याग्नेयी च तेजसी।
परस्परानुप्रवेशादाप्यायेते दिवानिशम् ।। ५०.११४ ।।

उत्तरे चैव भूम्यर्द्धे तथा तस्मिंश्च दक्षिणे।
उत्तिष्ठति तथा सूर्ये रात्रिराविशते त्वपः ।
तस्मात्ताम्रा भवन्त्यापो दिवारात्रिप्रवेशनात् ।। ५०.११५ ।।

अस्तं याति पुनः सूर्ये दिनं वै प्रविशत्यपः।
तस्माच्छुक्ला भवन्त्यापो नक्तमह्नः प्रवेशनात् ।। ५०.११६ ।।

एतेन क्रमयोगेन भूम्यर्द्धे दक्षिणोत्तरे।
उदयास्तमनेऽर्कस्य अहोरात्रं विशत्यपः ।। ५०.११७ ।।

दिनं सूर्यप्रकाशाख्यं तामसी रात्रिरुच्यते।
तस्माद्व्यवस्थिता रात्रिः सूर्यावेक्ष्यमहः स्मृतम् ।। ५०.११८।
एवं पुष्करमध्येन यदा सर्पति भास्करः।
त्रिंशां शकन्तु मेदिन्या मुहूर्तेनैव गच्छति ।। ५०.११९ ।।

योजनाग्रान्मुहूर्तस्य इमां सङ्ख्यां निबोधत।
पूर्णं शतसहस्राणामेकत्रिंशत्तु सा स्मृता ।। ५०.१२० ।।

पञ्चाशत्तु तथान्यानि सहस्राण्यधिकानि तु।
मौहूर्त्तिकी गतिर्ह्येषा सूर्यस्य तु विधीयते ।। ५०.१२१ ।।

एतेन गतियोगेन यदा काष्ठान्तु दक्षिणाम्।
पर्य्यागच्छेत्तदादित्यो माघे काष्ठान्तमेव हि ।। ५०.१२२ ।।

सर्पते दक्षिणायान्तु काष्ठायां तन्निबोधत।
नवकोट्यः प्रसङ्ख्याता योजनैः परिमण्डलम् ।। ५०.१२३ ।।

तथा शतसहस्राणि चत्वारिंशच्च पञ्च च।
अहोरात्रात्पतङ्गस्य गतिरेषा विधीयते ।। ५०.१२४ ।।

दक्षिणाद्विनिवृत्तोऽसौ विषुवस्थो यदा रविः।
क्षीरोदस्य समुद्रस्य उत्तरान्ता दिशश्चरन् ।। ५०.१२५ ।।

मण्डलं विषुवद्यापि योजनैस्तन्निबोधत।
तिस्रः कोट्यस्तु विस्तीर्णा विषुवद्यापि सा स्मृता ।। ५०.१२६ ।।

तथा शतसहस्राणामशीत्येकाधिका पुनः ।
श्रवणे चोत्तरां काष्ठाञ्चित्रभानुर्यदा भवेत् ।
शाकद्वीपस्य षष्ठस्य उत्तरान्ता दिशश्चरन् ।। ५०.१२७ ।।

उत्तरायाञ्च काष्ठायां प्रमाणं मण्डलस्य च।
योजनाग्रात्प्रसङ्ख्याता कोटिरेका तु सा द्विजैः ।। ५०.१२८ ।।

अशीतिर्नियुतानीह योजनानां तथैव च।
अष्टपञ्चाशतञ्चैव योजनान्यधिकानि तु ।। ५०.१२९ ।।

नागवीथ्युत्तरावीथी अजवीथी च दक्षिणा।
मूलं चैव तथाषाडे ह्यजवीथ्युदयास्त्रयः।
अभिजित्पूर्वतः स्वातिर्नागवीथ्युदयास्त्रयः ।। ५०.१३० ।।

काष्ठयोरन्तरं यच्च तद्वक्ष्ये योजनैः पुनः।
एतच्छतसहस्राणामेकत्रिंशोत्तरं शतम् ।। ५०.१३१ ।।

त्रयस्त्रिंशाधिकाश्चान्ये त्रयस्त्रिंशच्च योजनैः।
काष्ठयोरन्तरं ह्येतद्योजनाग्रात् प्रतिष्ठितम् ।। ५०.१३२ ।।

काष्ठयोर्लेखयोश्चैव अन्तरे दक्षिणोत्तरे ।
ते तु वक्ष्यामि सङ्ख्याय योजनैस्तन्निबोधत ।। ५०.१३३ ।।

एकैकमन्तरन्तस्या नियुतान्येकसप्ततिः।
सहस्राण्यतिरिक्ताश्च ततोऽन्या पञ्चसप्ततिः ।। ५०.१३४ ।।

लेखयोः काष्ठयोश्चैव बाह्याभ्यन्तरयोः स्मृतम्।
अभ्यन्तरन्तु पर्येति मण्डलान्युत्तरायणे ।। ५०.१३५ ।।

बाह्यतो दक्षिणे चैव सततन्तु यथाक्रमम्।
मण्डलानां शतं पूर्णमशीत्यधिकमुत्तरम् ।। ५०.१३६ ।।

चरते दक्षिणे चापि तावदेव विभावसुः।
प्रमाणं मण्डलस्याथ योजनाग्रान्निबोधत ।। ५०.१३७ ।।

एकविंशद्योजनानां सहस्राणि समासतः।
शते द्वे पुनरप्यन्ये योजनानां प्रकीर्त्तिते ।। ५०.१३८ ।।

एकविंशतिभिश्चैव योजनैरधिकैर्हि ते।
एतत्प्रमाणमाख्यातं योजनैर्मण्डलं हि तत् ।। ५०.१३९ ।।

विष्कम्भो मण्डलस्यैष तिर्यक् स तु विधीयते।
प्रत्यहञ्चरते तानि सूर्यो वै मण्डलक्रमम् ।। ५०.१४० ।।

कुलालचक्रपर्यन्तो यथा शीघ्रं निवर्त्तते।
दक्षिणे प्रक्रमे सूर्यस्तथा शीघ्रं निवर्त्तते ।। ५०.१४१ ।।

तस्मात् प्रकृष्टां भूमिञ्च कालेनाल्पेन गच्छति।
सूर्यो द्वादशभिः शीघ्रं मुहूर्त्तैर्दक्षिणोत्तरे ।। ५०.१४२ ।।

त्रयोदशार्द्धमृक्षाणामह्नानुचरते रविः।
मुहूर्त्तैस्तावदृक्षाणि नक्तमष्टादशैश्चरन् ।। ५०.१४३ ।।

कुलालचक्रमध्यस्तु यथा मन्दं प्रसर्पति।
तथोदगयने सूर्यः सर्पते मन्दविक्रमः ।। ५०.१४४ ।।

त्रयोदशार्द्धमर्द्धेन ऋक्षाणां चरते रविः।
तस्माद्दीर्घेण कालेन भूमिमिल्पां निगच्छति ।। ५०.१४५ ।।

अष्टादशमुहूर्त्तैस्तु उत्तरायणपश्चिमम्।
अहर्भवति तच्चापि चरते मन्दविक्रमः ।। ५०.१४६ ।।

त्रयोदशार्द्धमर्धेन ऋक्षाणाञ्चरते रविः।
मुहूर्त्तैस्तावदृक्षाणि नक्तमष्टादशैश्चरन् ।। ५०.१४७ ।।

ततो मन्दतरं ताभ्याञ्चक्रं भ्रमति वै यथा।
मृत्पिण्ड इव मध्यस्थो ध्रुवो भ्रमति वै यथा ।। ५०.१४८ ।।

त्रिंशन्मुहूर्त्ताने वाहुरहोरात्रं ध्रुवो भ्रमन् ।
उभयोः काष्ठयोर्मध्ये भ्रमते मण्डलानि सः ।। ५०.१४९ ।।

कुलालचक्रनाभिस्तु यथा तत्रैव वर्त्तते।
ध्रुवस्तथा हि विज्ञेयस्तत्रैव परिवर्त्तते ।। ५०.१५० ।।

उभयोः काष्ठयोर्मध्ये भ्रमतो मण्डलानि तु।
दिवा नक्तञ्च सूर्यस्य मन्दा शीघ्रा च वै गतिः ।। ५०.१५१ ।।

उत्तरे प्रक्रमे त्विन्दो र्दिवा मन्दा गतिः स्मृता।
तथैव च पुनर्नक्तं शीघ्रा सूर्यस्य वै गतिः ।। ५०.१५२ ।।

दक्षिणे प्रक्रमे चैव दिवा शीघ्रं विधीयते ।
गतिः सूर्यस्य नक्तं वै मन्दा चापि तथा स्मृता ।। ५०.१५३ ।।

एवं गतिविशेषेण विभजन् रात्र्यहानि तु।
तथा विचरते मार्गं समेन विषमेण च ।। ५०.१५४ ।।

लोकालोके स्थिता ये ते लोकपालाश्चतुर्दिशम्।
अगस्त्यश्चरते तेषामुपरिष्टाज्जवेन तु ।
भजन्नसावहोरात्रमेवङ्गतिविशेषणैः ।। ५०.१५५ ।।

दक्षिणे नागवीथ्यायां लोकालोकस्य चोत्तरम्।
लोकसन्तारको ह्येष वैश्वानरपथाद्बहिः ।। ५०.१५६ ।।

पृष्ठे यावत् प्रभा सौही पुरस्तात् सम्प्रकाशते।
पार्श्वयोः पृष्ठतस्तावल्लोकालोकस्य सर्वतः ।। ५०.१५७ ।।

योजनानां सहस्राणि दशोर्द्ध्वन्तूच्छ्रितो गिरिः।
प्रकाशश्चाप्रकाशश्च सर्वतः परिमण्डलः ।। ५०.१५८ ।।

नक्षत्रचन्द्रसूर्याश्च ग्रहास्तारागणैः सह।
अभ्यन्तरं प्रकाशन्ते लोकालोकस्य वै गिरेः ।। ५०.१५९ ।।

एतावानेव लोकस्तु निरालोकस्त्वतः परम्।
लोकालोक एकधा तु निरालोकस्त्वनेकधा ।। ५०.१६० ।।

लोकालोकन्तु सन्धत्ते यस्मात् सूर्यः परिग्रहम्।
तस्मात्सन्ध्येति तामाहुरुषाव्युष्ट्योर्यदन्तरम् ।
उषा रात्रिः स्मृता विप्रैर्व्युष्टिश्चापि त्वहः स्मृतम् ।। ५०.१६१ ।।

सूर्यं हि ग्रसमानानां सन्ध्याकाले हि रक्षसाम्।
प्रजापतिनियोगेन शापस्तेषां दुरात्मनाम् ।
अक्षयत्वञ्च देहस्य प्रापिता मरणं तथा ।। ५०.१६२ ।।

तिस्रः कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः।
प्रार्थयन्ति सहस्रांशुमुदयन्ति दिने दिने।
तापयन्तो दुरात्मानः सूर्यमिच्छन्ति खादितुम् ।। ५०.१६३ ।।

अथ सूर्यस्य तेषाञ्च युद्धमासीत् सुदारुणम्।
ततो ब्रह्मा च देवाश्च ब्राह्मणाश्चैव सत्तमाः।
सन्ध्येति समुपासन्तः क्षेपयन्ति महाजलम् ।। ५०.१६४ ।।

ओङ्कारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम्।
तेन दह्यन्ति ते दैत्या वज्रभूतेन वारिणा ।। ५०.१६५ ।।

ततः पुनर्महातेजा महाद्युतिपराक्रमः.
योजनानां सह स्राणि ऊर्द्ध्वमुत्तिष्ठते शतम् ।। ५०.१६६ ।।

ततः प्रयाति भगवान् ब्राह्मणैः परिवारितः।
वालखिल्यैश्च मुनिभिः कृतार्थैः समरीचिभिः ।। ५०.१६७ ।।

काष्ठा निमेषा दश पञ्च चैव त्रिंशच्च काष्ठा गणयेत् कलान्तम् ।
त्रिंशत् कलाश्चैव भवेन्मुहूर्त्तस्तैस्त्रिंशता रात्र्यहनी समेते ।। ५०.१६८ ।।

ह्रासवृद्धी त्वहर्भागैर्दिवसानां यथाक्रमम्।
सन्ध्या मुहूर्तमानन्तु ह्रासे वृद्धौ समा स्मृता ।। ५०.१६९ ।।

लेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तागते तु वै।
प्रातस्तनः स्मृतः कालो भागस्त्वह्नः स पञ्चमः ।। ५०.१७० ।।

तस्मात् प्रातस्तनात्कालात् त्रिमुहूर्त्तस्तु सङ्गवः।
मध्याह्नस्त्रिमुहूर्त्तस्तु तस्मात्कालाच्च सङ्गवात् ।। ५०.१७१ ।।

तस्मान्मध्यन्दिनात् कालादपराह्न इति स्मृतः ।
त्रय एव मुहूर्त्तास्तु तस्मात् कालाच्च मध्यमात् ।। ५०.१७२ ।।

अपराह्ने व्यतीपाते काल- सायाह्न उच्यते।

दशपञ्चमुहूर्त्ताद्वै मुहूर्त्तास्त्रय एव च ।। ५०.१७३ ।।

दशपञ्चमुहूर्त्तं वै अहर्विषुवति स्मृतम्।
दशपञ्चमुहूर्त्ताद्वै रात्रिन्दिवमिति स्मृतम् ।। ५०.१७४ ।।

वर्ध्धते ह्रसते चैव अयने दक्षिणोत्तरे।
अहस्तु ग्रसते रात्रिं रात्रिस्तु ग्रसते त्वहः ।। ५०.१७५ ।।

शरद्वसन्तयोर्मध्ये विषुवन्तद्विभाव्यते।
अहोरात्रं कलाश्चैव सप्त सोमः समश्नुते ।। ५०.१७६ ।।

तथा पञ्चदशाहानि पक्ष इत्याभिधीयते।
द्वौ पक्षौ च भवेन्मासो द्वौ मासावन्तरावृतुः।
ऋतुत्रयमयनं स्याद्द्वेऽयने वर्षमुच्यते ।। ५०.१७७ ।।

निमेषादिकृतः कालः काष्ठाया दश पञ्च च।
कलायास्त्रिंशतः काष्ठा मात्राधीतिद्वयात्मिका ।। ५०.१७८ ।।

शतघ्नैकोनकास्त्रिंशन्मात्रात्रिशत् षडुत्तरा।
द्विषष्टिभाक् त्रयोविंशन्मात्रायाञ्च चला भवेत् ।। ५०.१७९ ।।

चत्वारिंशत्सहस्राणि शतान्यष्टौ च विद्युतिः।
सप्ततिञ्चापि तत्रैव नवतिं विद्धि निस्वये ।। ५०.१८० ।।

चत्वार्येव शतान्याहुर्विद्युतौ वैधसंयुगे।
चरांशो ह्येष विज्ञेयो नालिका चात्र कारणम् ।। ५०.१८१ ।।

संवत्सरादयः पञ्च चतुर्मानविकल्पिताः।
निश्चयः सर्वकालस्य युग इत्यभिधीयते ।। ५०.१८२ ।।

संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः।
इद्वत्सरस्तृतीयस्तु चतुर्थश्चानुवत्सरः।
पञ्चमो वत्सरस्तेषां कालस्तु परिसंज्ञितः ।। ५०.१८३ ।।

विंशशतं भवेत्पूर्णं पर्वणां तु रवेर्युगम्।
एतान्यष्टादशस्त्रिंशदुदयो भास्करस्य च ।। ५०.१८४ ।।

ऋतवस्त्रिंशतः सौरा अयनानि दशैव तु।

पञ्चत्रिंशत् शतं चापि षष्टिर्मासाश्च भास्करः ।। ५०.१८५ ।।

त्रिंशदेव त्वहोरात्रं स तु मासश्च भास्करः।
एकषष्टिस्त्वहोरात्रा दनुरेको निभाव्यते ।। ५०.१८६ ।।

अहनान्तु त्र्यधिकाशीतिः शतं चाप्यधिकं भवेत्।
मानं तच्चित्रभानोस्तु विज्ञेयं भुवनस्य तु ।। ५०.१८७ ।।

सौरसौम्यं तु विज्ञेयं नक्षत्रं सावनं तथा।
नामान्येतानि चत्वारि यैः पुराणं विभाव्यते ।। ५०.१८८ ।।

खे तस्योत्तरतश्चैव श्रृङ्गवान्नाम पर्वतः।
त्रीणि तस्य तु श्रृङ्गाणि स्पृशन्तीव नभस्तलम् ।। ५०.१८९ ।।

तैश्चापि श्रृङ्गवान्नाम सर्वतश्चैव विश्रुतः।
एकमार्गश्च विस्तारो विष्कम्भश्चापि कीर्तितः ।। ५०.१९० ।।

तस्य वै सर्वतः श्रृङ्गं मध्यमन्तद्धिरण्मयम्।
दक्षिणं राजतञ्चैव श्रृङ्गं तु स्फटिकप्रभम् ।। ५०.१९१ ।।

सर्वरत्नमयं चैकं श्रृङ्गमुत्तरमुत्तमम्।
एवं कूटैस्त्रिभिः शैलैः श्रृङ्गवानिति विश्रुतः ।। ५०.१९२ ।।

यत्तद्विषुवतं श्रृङ्गन्तदर्कः प्रतिपद्यते।
शरद्वसन्तयोर्मध्ये मध्यमां गतिमास्थितः।
अहस्तुल्यामथो रात्रिं करोति तिमिरापहः ।। ५०.१९३ ।।

हरिताश्च हया दिव्यास्ते नियुक्ता महारथे।
अनुलिप्ता इवाभान्ति पझरक्तैर्गभस्तिभिः ।। ५०.१९४ ।।

मेषान्ते च तुलान्ते च भास्करोदयतः स्मृताः ।
मुहूर्त्ता दश पञ्चैव अहोरात्रिश्च तावती ।। ५०.१९५ ।।

कृत्तिकानां यदा सूर्यः प्रथमांशगतो भवेत् ।
विशाखानां तथा ज्ञेयश्चतुर्थांशे निशाकरः।। ५०.१९६ ।।

विशाखायां यदा सूर्य श्चरतेंऽशं तृतीयकम्।
तदा चन्द्रं विजानीयात् कृत्तिकाशिरसि स्थितम् ।। ५०.१९७ ।।

विषुवन्तं तदा विद्यादेवमाहुर्महर्षयः।
सूर्येण विषुवं विद्यात् कालं सोमेन लक्षयेत् ।। ५०.१९८ ।।

समा रात्रिरहश्चैव यदा तद्विषुवद्भवेत्।
तदा दानानि देयानि पितृभ्यो विषुवत्यपि।
ब्राह्मणेभ्यो विशेषेण मुखमेतत्तु दैवतम् ।। ५०.१९९ ।।

ऊनरात्राधिमासौ च कलाकाष्ठामुहूर्त्तकाः।
पौर्णमासी तथा ज्ञेया अमावास्या तथैव च।
सिनीवाली कुहूश्चैव राका चानुमति स्तथा ।। ५०.२०० ।।

तपस्तपस्यौ मधुमाधवौ च शुक्रः शुचिश्चायनमुत्तरं स्यात्।
नभो नभश्योऽथ इषुः सहोर्जः सहःसहस्याविति दक्षिणं स्यात् ।। ५०.२०१ ।।

संवत्सरास्ततो ज्ञेयाः पञ्चाब्दा ब्रब्मणः सुताः।
तस्मात्तु ऋतवो ज्ञेया ऋतवो ह्यन्तराः स्मृताः ।। ५०.२०२ ।।

तस्मादनुमुखा ज्ञेया अमावास्यास्य पर्वणः.
तस्मात्तु विषुवं ज्ञेयं पितृदैवहितं सदा ।। ५०.२०३ ।।

एवं ज्ञात्वा न मुह्येत दैवे पित्र्ये च मानवः।
तस्मात् स्मृतं प्रजानां वै विषुवत्सर्वगं सदा ।। ५०.२०४ ।।

आलोकान्तः स्मृतो लोको लोकान्तो लोक उच्यते।
लोकपालाः स्थितास्तत्र लोकालोकस्य मध्यतः ।। ५०.२०५ ।।

चत्वारस्ते महात्मानस्तिष्ठन्त्याभूतसम्प्लवात्।
सुधामा चैव वैराजः कर्द्दमः शङ्कृपस्तथा।
हिरण्यलोमा पर्ज्जन्यः केतुमान् जातनिश्चयः ।। ५०.२०६ ।।

निर्द्वन्द्वा निरभीमाना निस्तन्त्रा निष्परिग्रहाः।
लोकपालाः स्थिता ह्येते लोकालोके चतुर्दिशम् ।। ५०.२०७ ।।

उत्तरं यदगस्त्यस्य अजवीथ्याश्च दक्षिणम्।
पितृयाणः स वै पन्था वैश्वानरपथाद्बहिः ।। ५०.२०८ ।।

तत्रासते प्रजावन्तो मुनयो ह्यग्निहोत्रिणः ।

लोकस्य सन्तानकराः पितृयाणे पथि स्थिताः ।। ५०.२०९ ।।

भूतारम्भ कृतं कर्म आशिषा ऋत्विगुच्यते ।
प्रारभन्ते लोककामास्तेषां पन्थाः स दक्षिणः ।। ५०.२१० ।।

चलितन्ते पुनर्द्धर्मं स्थापयन्ति युगे युगे।
सन्तत्या तपसा चैव मर्यादाभिः श्रुतेन च ।। ५०.२११ ।।

जायमानास्तु पूर्वे वै पश्चिमानां गृहेषु च।
पश्चिमाश्चैव जायन्ते पूर्वेषां निधनेष्वपि।
एव मावर्त्तमानास्ते तिष्ठन्त्याभूतसम्प्लवात् ।। ५०.२१२ ।।

अष्टाशीतिसहस्राणि मुनीनां गृहमेधिनाम्।
सवितुर्द्दक्षिणं मार्गं श्रिता ह्याचन्द्रतारकम्।
क्रियावतां प्रसङ्ख्येया ये श्मशानानि भेजिरे ।। ५०.२१३ ।।

लोकशंव्यवहारेण भूतारम्भकृतेन च।
इच्छाद्वेषप्रकृत्या च मैथुनोपगमेन च ।। ५०.२१४ ।।

तथा कायकृतेनेह सेवनाद्विषयस्य च।
एतैस्तैः कारणैः सिद्धाः श्मशानानि हि भेजिरे।
प्रजैषिणस्ते मुनयो द्वापरेष्विह जज्ञिरे ।। ५०.२१५ ।।

नागवीथ्युत्तरे यच्च सप्तर्षिभ्यश्च दक्षिणम् ।
उत्तरः सवितुः पन्था देवयानस्तु स स्मृतः ।। ५०.२१६ ।।

यत्र ते वासिनः सिद्धा विमला ब्रह्मचारिणः।
सततन्ते जुगुप्सन्ते तस्मान्मृत्युर्ज्जितस्तु तैः ।। ५०.२१७ ।।

अष्टाशीतिसहस्राणि तेषामप्यूर्द्ध्वरेतसाम्।
उदकूपन्थानमर्यम्णः श्रिता ह्याभूतसम्प्लवात् ।। ५०.२१८ ।।

इत्येतैः कारणैः शुद्धैस्तेऽ मृतत्वं हि भेजिरे।
आभूतसम्प्लवस्थानममृतत्वं विभाव्यते ।। ५०.२१९ ।।

त्रैलोक्यस्थितिकालोऽयमपुनर्मार्गगामिनः।
ब्रह्महत्याश्वमेधाभ्यां पुण्यापापकृतोऽपरम्।
आभूतसम्प्लवान्ते तु क्षीयन्ते ह्यूर्द्ध्वरेतसः ।। ५०.२२० ।।

ऊर्द्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्रास्ति वै स्मृतम्।
एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरम् ।। ५०.२२१ ।।

तत्र गत्वा न शोचन्ति तद्विष्णोः परमं पदम्।
धर्मध्रुवाद्यास्तिष्ठन्ति यत्र ते लोकसाधकाः ।। ५०.२२२ ।।

इति श्रीमहापुराणे वायुप्रोक्ते ज्योतिष्प्रचारो नाम पञ्चाशोऽद्यायः ।। ५० ।।

**।।सूत उवाच।।**

स्वायम्भुवे निसर्गे तु व्याख्यातान्युत्तराणि तु।
भविष्याणि च सर्वाणि तेषां वक्ष्याम्यनुक्रमम् ।। ५१.१ ।।

एतच्छ्रुत्वा तु मुनयः पप्रच्छुर्लोमहर्षणम्।
सूर्याचन्द्रमसोश्चारं ग्रहाणाञ्चैव सर्वशः ।। ५१.२ ।।

**।।ऋषय ऊचुः ।।**

भ्रमन्ते कथमेतानि ज्योतींषि दिवि मण्डलम्।
तिर्यग्व्यूहेन सर्वाणि तथैवासङ्करेण च।
कश्च भ्रामयते तानि भ्रमन्ति यदि वा स्वयम् ।। ५१.३ ।।

एतद्वेदितुमिच्छामस्तन्नो निगद सत्तम्।
भूतसम्मोहनन्त्वेतच्छ्रोतुमिच्छा प्रवर्त्तते ।। ५१.४ ।।

**।।सूत उवाच।।**

भूतसम्मोहनं ह्येतद् ब्रुवतो मे निबोधत।
प्रत्यक्षमपि दृस्यं यत्तत् संमोहयते प्रजाः ।। ५१.५ ।।

योऽसौ चतुर्दिशं पुच्छे शिशुमारे व्यवस्थितः।
उत्तानपादपुत्रोऽसौ मेढीभूतो ध्रुवो दिवि ।। ५१.६ ।।

स हि भ्रमन् भ्रामयते चन्द्रादित्यौ ग्रहैः सह।
भ्रमन्तमनुगच्छन्ति नक्षत्राणि च चक्रवत् ।। ५१.७ ।।

ध्रुवस्य मनसा चासौ सर्पते भगणः स्वयम्।
सूर्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः सह ।। ५१.८ ।।

वातानीकमयैर्बन्धैर्ध्रुवे बद्धानि तानि वै।
तेषां योगस्व भेदाश्च कालचारस्तथैव च ।। ५१.९ ।।

अस्तोदयौ तथोत्पाता अयने दक्षिणोत्तरे।
विषुवद्ग्रहवर्णाश्च ध्रुवात्सर्वं प्रवर्त्तते ।। ५१.१० ।।

वर्षा धर्मो हिमं रात्रिः सन्ध्या चैव दिनं तथा ।
शुभाशुभं प्रजानाञ्च ध्रुवात्सर्वं प्रवर्त्तते ।। ५१.११ ।।

ध्रुवेणाधिकृतांश्चैव सूर्योऽपावृत्त्य तिष्ठति।
तदेष दीप्तकिरणः स कालाग्निर्द्दिवाकरः ।। ५१.१२ ।।

परिवर्त्त क्रमाद्विप्रा भाभिरालोकयन् दिशः।
सूर्यः किरणजालेन वायुयुक्तेन सर्वशः।

जगतो जलमादत्ते कृत्स्नस्य द्विजसत्तमाः ।। ५१.१३ ।।

आधित्यपीतं सूर्याग्नेः सोमं संक्रमते जलम्।
नाडीभिर्वायुयुक्ताभिर्लोकाधानं प्रवर्त्तते ।। ५१.१४ ।।

यत्सोमात् स्रवते सूर्यस्तदग्रेष्ववतिष्ठते।
मेघा वायुनिघातेन विसृजन्ति जलम्भुवि ।। ५१.१५ ।।

एकमुत्क्षिप्यते चैव पतते च पुनर्ज्जलम्।
नानाप्रकारमुदकन्तदेव परिवर्त्तते ।। ५१.१६ ।।

सन्धारणार्थं भूतानां मायैषा विश्वनिर्मिता।
अनया मायया व्याप्तं त्रैलोक्यं सचराचरम् ।। ५१.१७ ।।

विश्वेशो लोककृद्देवः सहस्रांशुः प्रजापतिः।
धाता कृत्स्नस्य लोकस्य प्रभु र्विष्णुर्दिवाकरः ।। ५१.१८ ।।

सर्वलौकिकमम्भो वै यत्सोमान्नभसः स्नुतम्।
सोमाधारं जगत्सर्वमेतत्तथ्यं प्रकीर्तितम् ।। ५१.१९ ।।

सूर्यादुष्णं निस्रवते सोमाच्छीतं प्रवर्त्तते।
शीतोष्णवीर्यौ द्वावेतौ युक्तौ धारयतो जगत् ।। ५१.२० ।।

सोमाधारा नदी गङ्गा पवित्रा विमलोदका।
सोमपुत्रपुरोगाश्च महानद्यो द्विजोत्तमाः ।। ५१.२१ ।।

सर्वभूतशरीरेषु आपो ह्यनुगताश्च याः ।
तेषु सन्दह्यमानेषु जङ्गमस्थावरेषु च।
धूमभूतास्तु ता आपो निष्क्रामन्तीह सर्वशः ।। ५१.२२ ।।

तेन चाभ्राणि जायन्ते स्थानमत्राम्भसां स्मृतम् ।
आर्कन्तेजो हि भूतेभ्यो ह्यादत्ते रश्मिभिर्जलम् ।। ५१.२३ ।।

समुद्राद्वायुसंयोगाद्वहन्त्यापो गभस्तयः।
यतस्त्वृतुवशात् काले परिवर्त्तो दिवाकारः।
यच्छत्यपो हि मेघेब्यः शुक्लाः शुक्लगभस्तिभिः ।। ५१.२४ ।।

अभ्रस्था प्रपतन्त्यापो वायुना समुदीरिताः।
सर्वभूतहितार्थाय वायुभिश्च समन्ततः ।। ५१.२५ ।।

ततो वर्षति षण्मासान् सर्वभूतविवृद्धये।
वायव्यं स्तनितञ्चैव वैद्युतञ्चाग्निसंभवम् ।। ५१.२६ ।।

मेहनाच्च मिहेर्द्धातोर्मेघत्वं व्यञ्जयन्ति च।
न भ्रश्यन्ति यतस्त्वापस्तदभ्रं कवयो विदुः ।। ५१.२७ ।।

मेघानां पुनरुत्पत्तिस्त्रिविधा योनिरुच्यते।
आग्नेया ब्रह्मजाश्चैव पक्षजाश्च पृथग्विधाः।
त्रिधा घनाः समाख्यातास्तेषां वक्ष्यामि सम्भवम् ।। ५१.२८ ।।

आग्नेयास्त्वर्णजाः प्रोक्तास्तेषां तस्मात् प्रवर्त्तनम्।
शीतदुर्दिनवाता ये स्वगुणास्ते व्यवस्थिताः ।। ५१.२९ ।।

महिषाश्च वराहाश्च मत्तमातङ्गगामिनः।
भूत्वा धरणिमभ्येत्य विचरन्ति रमन्ति च ।। ५१.३० ।।

जीमूता नाम ते मेघा एतेब्यो जीवसम्भवाः।
विद्युद्गुणविहीनाश्च जलधारावलम्बिनः ।। ५१.३१ ।।

मूका घना महाकाया प्रवाहस्य वशानुगाः।
क्रोशमात्राच्च वर्षन्ति क्रोशार्द्धादपि वा पुनः ।। ५१.३२ ।।

पर्वताग्रनितम्बेषु वर्षन्ति च रमन्ति च।
बलाकागर्भदाश्चैव बलाकागर्भधारिणः ।। ५१.३३ ।।

ब्रह्मजानाम ते मेघा ब्रह्मनिःश्वाससम्भवाः।
ते हि विद्युद्गुणोपेताः स्तनयन्ति स्वनप्रियाः ।। ५१.३४ ।।

तेषां शब्दप्रणादेन भूमिः स्वाङ्गरुहोद्घमा।
राज्ञी राज्ञाभिषिक्तेव पुनर्यौवनमश्नुते।
तेष्वियं प्रीतिमासक्ता भूतानां जीवितोद्भवा ।। ५१.३५ ।।

जीमूता नाम ते मेघास्तेभ्यो जीवस्य सम्भवः।
द्वितीयं प्रवहं वायुं मेघास्ते तु समाश्रिताः ।। ५१.३६ ।।

एते योजनमात्राच्च सार्द्धार्द्धान्निष्कृतादपि।
वृष्टिसर्गस्तथा तेषां धारासाराः प्रकीर्त्तिताः।
पुष्करावर्त्तका नाम ये मेघाः पक्षसम्भवाः ।। ५१.३७ ।।

शक्रेण पक्षाश्छिन्ना ये पर्वतानां महोजसाम्।
कामगानां प्रवृद्धानां भूतानां शिवमिच्छता ।। ५१.३८ ।।

पुष्करा नाम ते मेघा बृहन्तस्तोय मत्सराः।
पुष्करावर्त्तकास्तेन कारणेनेह शब्दिताः ।। ५१.३९ ।।

नानारूपधराश्चैव महाघोरतराश्च ते।
कल्पान्तवृष्टेः स्रष्टारः संवर्त्ताग्नेर्नियामकाः ।। ५१.४० ।।

वर्षन्त्येते युगान्तेषु तृतीयास्ते प्रकीर्त्तिताः।
अनेकरूपसंस्थानाः पूरयन्तो महीतलम् ।
वायुं परं वहन्तः स्युराश्रिताः कल्पसाधकाः ।। ५१.४१ ।।

यान्यस्याण्डकपालस्य प्राकृतस्याभवंस्तदा।
तस्माद्ब्रह्मा समुत्पन्नश्चतुर्वक्त्रः स्वयम्भुवः।
तान्येवाण्डकपालस्य सर्वे मेघाः प्रकीर्त्तिताः ।। ५१.४२ ।।

तेषामाप्यायनं धूमः सर्वेषामविशेषतः ।
तेषां श्रेष्ठस्तु पर्ज्जन्यश्चत्वारश्चैव दिग्गजाः ।। ५१.४३ ।।

गजानां पर्वतानाञ्च मेगानां भोगिभिः सह।
कुलमेकं पृथग्भूतं योनिरेका जलं स्मृतम् ।। ५१.४४ ।।

पर्जन्यो दिग्गजाश्चैव हेमन्ते शीतसम्भवाः।
तुषारवृष्टिं वर्षन्ति सर्वसस्यविवृद्धये ।। ५१.४५ ।।

श्रेष्ठः परिवहो नाम तेषां वायुरपाश्रयः।
योऽसौ बिभर्त्ति भगवान् गङ्गामाकाशगोचराम्।
दिव्यामतिजलां पुण्यां विद्यां स्वर्गपथिस्थिताम् ।। ५१.४६ ।।

तस्याविष्पन्दजन्तोयं दिग्गजाः पृथुभिः करैः।
शीकरं सम्प्रमुञ्चन्ति नीहार इति स स्मृतः ।। ५१.४७ ।।

दक्षिणेन गिरिर्योऽसौ हेमकूट इति स्मृतः।
उदग् हिमवतः शैलादुत्तरस्य च दक्षिणे।
पुण्ड्रं नाम समाख्यातं नगरं तत्र वै स्मृतम् ।। ५१.४८ ।।

तस्मिन्निपतितं वर्षं यत्तुषारसमुद्भवम् ।
ततस्तदावहो वायुर्हिमशैलात् समुद्वहन्।
आनयत्यात्मयोगेन सिञ्चमानो महागिरिम् ।। ५१.४९ ।।

हिमवन्तमतिक्रम्य वृष्टिशेषं ततः परम्।
इहाभ्येति ततः पश्चादपरान्तविवृद्धये ।। ५१.५० ।।

मेघावाप्यायतश्चैव सर्वमेतत् प्रकीर्त्तितम् ।
सूर्य एव तु वृष्टिनां स्रष्टा समुपदिश्यते ।। ५१.५१ ।।

ध्रुवेणा वेष्टितः सूर्यस्ताभ्यां वृष्टिः प्रवर्त्तते।
ध्रुवेणावेष्टितो वायुर्वृष्टिं संहरते पुनः ।। ५१.५२ ।।

ग्रहान्निःसृत्य सूर्यात्तु कृत्स्ने नक्षत्रमण्डले ।
वारस्यान्ते विशत्यर्कं ध्रुवेण परिवेष्टितम् ।। ५१.५३ ।।

अतः सूर्यरथस्याथ सन्निवेशं निबोधत।
संस्थितैनैकचक्रेण पञ्चारेण त्रिनाभिना ।। ५१.५४ ।।

हिरण्मयेन भगवान् पर्वणा तु महौजसा।
नष्टवर्त्मान्धकारेण षट्प्रकारैकनेमिना।
चक्रेण भास्वता सूर्यः स्यन्दनेन प्रसर्प्पति ।। ५१.५५ ।।

दश योजनसाहस्रो विस्तारायामतः स्मृतः।
द्विगुणोऽस्य रथोपस्थादीषादण्डप्रमाणतः ।। ५१.५६ ।।

स तस्य ब्रह्मणा सृष्टो रथो ह्यर्थवशेन तु।
असङ्गः काञ्चनो दिव्यो युक्तः परमगैर्हयैः ।। ५१.५७ ।।

छन्दोभिर्वाजिरूपैस्तु यतः शुक्रस्ततः स्थितः।
वरुणस्यन्दनस्तेह लक्षणैः सदृशस्तु सः।
ते नाऽसौ सर्पतिव्योम्नि भास्वता तु दिवाकरः ।। ५१.५८ ।।

अथेमानि तु सूर्यस्य प्रत्यङ्गानि रथस्य तु।
संवत्सरस्यावयवैः कल्पितानि यथा क्रमम् ।। ५१.५९ ।।

अहस्तु नाभिः सूर्यस्य एकचक्रः स वै स्मृतः।
आराः पञ्चर्त्तवस्तस्य नेमिः षढृतवः स्मृताः ।। ५१.६० ।।

रथनीडः स्मृतो ह्यब्दस्त्वयने कूबरावुभौ ।
मुहूर्ता बन्धुरास्तस्य शम्या तस्य कलाः स्मृताः ।। ५१.६१ ।।

तस्य काष्ठाः स्मृता घोणा ईषादण्डः क्षणांस्तु वै।
निमेषाश्चानुकर्षोऽस्य ईषा चास्य लवाः स्मृताः ।। ५१.६२ ।।

रात्रिर्वरूथो घर्मोऽस्य ध्वज ऊर्द्ध्वसमुच्छ्रितः।
युगाक्षकोटी ते तस्य अर्थकामावुभौ स्मृतौ ।। ५१.६३ ।।

सप्ताश्वरूपाश्छन्दांसि वहन्ते वामतो धुराम्।
गायत्री चैव त्रिष्टुपू च अनुष्टुब् जगती तथा ।। ५१.६४ ।।

पङ्क्तिश्च बृहती चैव उष्णिक् चैव तु सप्तमम्।

अक्षे चक्रं निबद्धन्तु ध्रुवे त्वक्षः समर्पितः ।। ५१.६५ ।।

सहचक्रो भ्रमत्यक्षः सहाक्षो भ्रमति ध्रुवः।
अक्षः सहैव चक्रेण भ्रमतेऽसौ ध्रुवेरितः ।। ५१.६६ ।।

एवमर्थ वशात्तस्य सन्निवेशो रथस्य तु।
तथा संयोगभागेन संसिद्धो बास्वरो रथः ।। ५१.६७ ।।

तेनाऽसौ तरणिर्देवस्तरसा सर्पते दिवि।
युगाक्षकोटिसम्बद्धौ रश्मी द्वौ स्यन्दनस्य हि ।। ५१.६८ ।।

ध्रुवेण भ्रमतो रश्मी विचक्रयुगयोस्तु वै।
भ्रमतो मण्डलानि स्युः खेचरस्य रथस्य तु ।। ५१.६९ ।।

युगाक्षकोटी ते तस्य दक्षिणे स्यन्दनस्य तु।
ध्रुवेण संगृहीते वै द्विचक्रश्वेतरज्जुवत् ।। ५१.७० ।।

भ्रमन्तमनुगच्छेतां ध्रुवं रश्मी तु तावुभौ ।
युगाक्ष कोटी ते तस्य वातोर्मी स्यन्दनस्य तु ।। ५१.७१ ।।

कीलासक्तो यथा रज्जुर्भ्रमते सर्वतो दिशम्।
ह्रसतस्तस्य रश्मी तौ मण्डलेषूत्तरायणे ।। ५१.७२ ।।

वर्द्धेते दक्षिणे चैव भ्रमतो मण्डलानि तु।
ध्रुवेण संगृहीतौ तु रस्मी वै नयतो रविम् ।। ५१.७३ ।।

आकृष्येते यदा तौ वै ध्रुवेण समधिष्ठितौ।
तदा सोऽभ्यन्तरं सूर्यो भ्रमते मण्डलानि तु ।। ५१.७४ ।।

अशीतिमण्डलशतं काष्ठयोरुभयोश्चरन् ।
ध्रुवेण मुच्यमानाभ्यां रश्मिभ्यां पुनरेव तु ।। ५१.७५ ।।

तथैव बाह्यतः सूर्यो भ्रमते मण्डलानि तु।
उद्वेष्टयन् स वेगेन मण्डलानि तु गच्छति ।। ५१.७६ ।।

इति श्रीमहापुराणे वायुप्रेक्ते ज्योतिष्प्रचारो नामैकपञ्चा शोऽध्यायः ।। ५१ ।।

**।।सूत उवाच।।**

स रथोऽधिष्ठितो देवैरादित्यैॠषिभिस्तथा।

गन्धर्वैरप्सरोभिश्च ग्रामणीसर्पराक्षसैः ।। ५२.१ ।।

एते वसन्ति वै सूर्ये द्वौ द्वौ मासौ क्रमेण तु।

धातार्यमा पुलस्त्यश्च पुलहश्च प्रजापतिः ।। ५२.२ ।।

उरगो वासुकिश्चैव सङ्कीर्णारश्च तावुभौ।

तुम्बुरुर्नारदश्चैव गन्धर्वौ गायतां वरौ ।। ५२.३ ।।

क्रतुस्थल्यप्सराश्चैव तथा वै पुञ्जिकस्थली।

ग्रामणी रथकृच्छ्रश्च तपोर्यश्चैव तावुभौ ।। ५२.४ ।।

रक्षो हेतिः प्रहेतिश्च यातुधानावुदाहृतौ।

मधुमाधवयोरेष गणो वसति भास्करे ।। ५२.५ ।।

वासन्तौ ग्रैष्मिकौ मासौ मित्रश्च वरुणश्च ह।

ॠषिरत्रिर्वसिष्ठश्च तक्षको रम्भ एव च ।। ५२.६ ।।

मेनका सहजन्या च गन्धर्वौ च हहा हुहूः।

रथस्वनश्च ग्रामण्यो रथचित्रश्च तावुभौ ।। ५२.७ ।।

पौरुषेयो धवश्चैव यातुधानावुदाहृतौ।

एते वसन्ति वै सूर्ये मासयोः शुचिशुक्रयोः ।। ५२.८ ।।

ततः सूर्ये पुनस्त्वन्या निवसन्तीह देवताः।

इन्द्रश्चैव विवस्वांश्च अङ्गिरा भृगुरेव च ।। ५२.९ ।।

एलापर्णस्तथा सर्पः शङ्खपालश्च तावुभौ।

विश्वावसूग्रसेनौ च प्रातश्चैवारुणश्च ह ।। ५२.१० ।।

प्रम्लोचेति च विख्याता निम्लोचेति च ते उभे।

यातुधानस्तथा सर्पो व्याघ्रः श्वेतश्च तावुभौ।

नभोनभस्ययोरेष गणो वसति भास्करे ।। ५२.११ ।।

शरद्द-तौ पुनः शुभ्रा वसन्ति मुनि देवताः।

पर्ज्जन्यश्चाथ पूषा च भरद्वाजः सगौतमः ।। ५२.१२ ।।

विश्वावसुश्च गन्धर्वास्तथैव सुरभिश्च यः।

विश्वाची च घृताची च उभे ते शुभलक्षणे ।। ५२.१३ ।।

नाग ऐरावतश्चैव विश्रुतश्च धनञ्जयः।

सेनजिच्च सुषेणशचव सेनानीर्ग्रामणीश्च तौ ।। ५२.१४ ।।

आपो वातश्च तावेतौ यातुधानावुभौ स्मृतौ।

वसन्त्येते तु वै सूर्ये मासयोश्च इषोर्जयोः ।। ५२.१५ ।।

हैमन्तिकौ तु द्वौ मासौ वसन्ति तु दिवाकरे।

अंशो भगश्च द्वावेतौ कश्यपश्च ऋतुश्च ह ।। ५२.१६ ।।
भुजङ्गश्च महापझः सर्पः कर्कोटकस्तथा।
चित्रसेनश्च गन्धर्व ऊर्णायुश्चैव तावुभौ ।। ५२.१७ ।।
उर्वशी विप्रचित्तिश्च तथैवाप्सरसौ शुभे।
ताक्ष्र्यश्चारिष्टनेमिश्च सेनानीर्ग्रामणीश्च तौ ।। ५२.१८ ।।
विद्युत्स्फूर्ज्जश्च तावुग्रौ यातुधानावुदाहृतौ।
सहे चैव सहस्ये च वसन्त्येते दिवाकरे ।। ५२.१९ ।।
ततः शैशिरयोश्वापि मासयोर्निवसन्ति वै।
त्वष्टा विष्णुर्जमदग्निर्विश्वामित्रस्तथैव च ।। ५२.२० ।।
काद्रवेयौ तथा नागौ कम्बलाश्वतरावुभौ।
गन्धर्वो धृतराष्ट्रश्च सूर्यवर्च्चास्तथैव च ।। ५२.२१ ।।
तिलोत्तमाप्सराश्चैव देवी रम्बा मनोरमा।
ऋतजित्सत्यजिच्चैव ग्रामण्यौ लोकविश्रुतौ ।। ५२.२२ ।।
ब्रह्मोपेतस्तथा दक्षो यज्ञोपेतश्च स स्मृतः।
एते देवा वसन्त्यर्के द्वौ मासौ तु क्रमेण तु ।। ५२.२३ ।।
स्थानाभिमानिनो ह्येते गणा द्वादश सप्तकाः।
सूर्यमाप्याययन्त्येते तेजसा तेज उत्तमम् ।। ५२.२४ ।।
प्रथितैस्तैर्वचोबिस्तु स्तुवन्ति मुनयो रविम्।
गन्धर्वाप्सरसश्चैव गीतनृत्यैरुपासते ।। ५२.२५ ।।
ग्रामणीयक्षभूतास्तु कुर्वते भीमसंग्रहम्।
सर्पा वहन्ति सूर्यञ्च यातुधानानुयान्ति च।
वालखिल्या नयन्त्यस्तं परिचार्योदयाद्रविम् ।। ५२.२६ ।।
एतेषामेव देवानां यतावीर्यं यथातपः।
यथायोगं यथासत्यं यथाधर्मं यताबलम् ।। ५२.२७ ।।
यथा तपत्यसौ सूर्यस्तेषां सिद्धस्तु तेजसा।
इत्येते वै वसन्तीह द्वौ द्वौ मासौ दिवाकरे ।। ५२.२८ ।।
ऋषयो देवगन्धर्वाः पन्नगाप्सरसाङ्गणाः ।
ग्रामण्यश्च तथा यक्षा यातुधानाश्च भूरिशः ।। ५२.२९ ।।
एते तपन्ति वर्षन्ति भान्ति वान्ति सृजन्ति च।
भूतानामशुभं कर्म व्यपोहन्तीह कीर्तिताः ।। ५२.३० ।।
मानवानां शुभं ह्येते हरन्ति दुरितात्मनाम्।
दुरितं हि प्रचाराणां व्यपोहन्ति क्वचित् क्वचित् ।। ५२.३१ ।।
विमानेऽवस्थिता दिव्ये कामगा वातरंहसः।

एते सहैव सूर्येण भ्रमन्ति दिवसानुगाः ।। ५२.३२ ।।
वर्षन्तश्च तपन्तश्च ह्लादयन्तश्च वै प्रजाः।
गोपायन्ति तु भूतानि सर्वानीहामनुक्षयात् ।। ५२.३३ ।।
स्थानाभिमानिनामेतत् स्थानं मन्वन्तरेषु वै।
अतीतानागतानां वै वर्त्तन्ते साम्प्रतन्तु ये ।। ५२.३४ ।।
एवं वसन्ति वै सूर्ये सप्तकास्ते चतुर्द्दिशम्।
चतुर्द्दशसु सर्गेषु गणा मन्वन्तरेषु च ।। ५२.३५ ।।
ग्रीष्मे हिमे च वर्षासु मुञ्चमाना घर्मं हिमञ्च वर्षञ्च दिनं निशाञ्च।
कालेन गच्छत्यृतुवशात् परिवृत्तरश्मि र्देवान् पितॄंश्च मनुजांश्च तर्पयन् वै ।। ५२.३६ ।।
प्रीणाति देवानमृतेन सूर्यः सोमं सुषुम्नेन विवर्द्धयित्वा ।
शुक्ले तु पूर्णं दिवसक्रमेण तं कृष्णपक्षे विबुधाः पिबन्ति ।। ५२.३७ ।।
पीतन्तु सोमं द्विकालावशिष्टं कृष्णक्षये रश्मिभिस्तं क्षरन्तम्।
सुधामृतं तत्पितरः पिबन्ति देवाश्च सौम्याश्च तथैव कव्यम् ।। ५२.३८ ।।
सूर्येण गोभिस्तु समुद्धृताभिरद्भिः पुनश्चैव समुद्धृताभिः।
वृष्ट्यातिवृद्धाभिरथौषधीभिर्मर्त्याः क्षुधन्त्वन्नपानैर्जयन्ति ।। ५२.३९ ।।
अमृतेन तृप्तिस्त्वर्द्धमासं सुराणां मासार्द्धतृप्तिः स्वधया पितॄणाम्।
अन्नेन शश्वत्तु दधाति मर्त्यान् सूर्यः स्वयं तच्च बिभर्ति गोभिः ।। ५२.४० ।।
अयं हरिस्तैर्हरिभिस्तुरङ्गमैरयन् हि चापो हरतीति रश्मिभिः।
विसर्गकाले विसृजंश्च ताः पुनर्बिभर्ति शश्वत् सविता चराचरम् ।। ५२.४१ ।।
हरिर्हरिद्भिर्ह्रियते तुरङ्गमैः पिबत्यथापो हरिभिः सहस्रधा।
ततः प्रमुञ्चत्यपि तास्त्वसौ हरिः स मुह्यमानो हरिभिस्तुरङ्गमैः ।। ५२.४२ ।।
इत्येष एकचक्रेण सूर्यस्तूर्णं रथेन तु।
भद्रैस्तैरक्षतैरश्वैः सर्पतेऽसौ दिवि क्षये ।। ५२.४३ ।।
अहोरात्राद्रथैनासौ एकचक्रेण तु भ्रमन्।
सप्तद्वीपसमुद्रान्तं सप्तभिः सप्तभिर्हयैः ।। ५२.४४ ।।
छन्दोभिरश्वरूपैस्तैर्यतश्चक्रन्ततः स्थितैः।
कामरूपैः सकृद्युक्तैरमितैस्तैर्मनोजवैः ।। ५२.४५ ।।
हरितैरव्ययैः पिङ्गैरीश्वरैर्ब्रह्मवादिभिः।
अशीति मण्डलशतं भ्रमन्त्यब्देन ते हयाः ।। ५२.४६ ।।
बाह्यमभ्यन्तरञ्चैव मण्डलं दिवसक्रमात् ।
कल्पादौ सम्प्रयुक्तास्ते वहन्त्याभूतसम्प्लवात्।
आवृता वालखिल्यैस्ते भ्रमन्ते रात्र्यहानि तु ।। ५२.४७ ।।
प्रथितैर्वचोभङ्गिरग्र्यैः स्तूयमानो महर्षिभिः।

सैव्यते गीतवृत्यैश्च गन्धर्वैरप्सरोगणैः।

पतङ्गः पत गैरश्वैर्भ्रममाणो दिवस्पतिः ।। ५२.४८ ।।

वीथ्याश्रयाणि चरति नक्षत्राणि तथा शशी।

ह्रासवृद्धी तथैवास्य रश्मीनां सूर्यवत् स्मृते ।। ५२.४९ ।।

त्रिचक्रोभयपार्श्वस्थो विज्ञेयः शशिनो रथः।

अपां गर्भसमुत्पन्नो रथः साश्वः ससारथिः।

शतारैश्च त्रिभिश्चक्रैर्युक्तः शुल्कैर्हयोत्तमैः ।। ५२.५० ।।

दश भिस्तु कृशैर्दिव्यैरसङ्गैस्तैर्मनोजवैः।

सकृद्युक्ते रथे तस्मिन् वहन्ते चायुगक्षयात् ।। ५२.५१ ।।

संगृहीते रथे तस्मिन् श्वेतश्चक्षुःश्रवास्तु वै।

अश्वा स्तमेकवर्णास्ते वहन्ते शङ्खवर्च्चसम् ।। ५२.५२ ।।

ययुश्च त्रिमनाश्चैव वृषो राजीवलो हयः।

अस्वो वामस्तुरण्यश्च हंसो व्योमी मृगस्तथा ।। ५२.५३ ।।

इत्येते नामभिः सर्वे दश चन्द्रमसो हयाः ।

एते चन्द्रमसं देवं वहन्ति दिवसक्षयात् ।। ५२.५४ ।।

देवैः परिवृतः सौम्यः पितृभिश्चैव गच्छति।

सोमस्य शुक्ल पक्षादौ भास्करे पुरतः स्थिते।

आपूर्यते पुरस्यान्तः सततं दिवसक्रमात् ।। ५२.५५ ।।

देवैः पीतं क्षये सोममाप्याययति नित्यदा।

पीतं पञ्चदशाहन्तु रश्मिनैकेन भास्करः ।। ५२.५६ ।।

आपूरयन् सुषुम्नेन भागं भागमहःक्रमात् ।

सुषुम्नाप्यायमानस्य शुक्ला वर्द्धन्ति वै कलाः ।। ५२.५७ ।।

तस्माद्ध्रसन्ति वै कृष्णे शुक्ल आप्याययन्ति च।

इत्येवं सूर्यवीर्येण चन्द्रस्याप्यायिता तनुः ।। ५२.५८ ।।

पौर्णमास्यां स दृश्येत शुक्लः सम्पूर्णमण्डलः ।

एवमाप्यायितः सोमः शुक्लपक्षे दिनक्रमात् ।। ५२.५९ ।।

ततो द्वितीयाप्रभृति बहुलस्य चतुर्द्दशी।

अपां सारमयस्येन्दो रसमात्रात्मकस्य च।

पिबन्त्यम्बुमयं देवा मधु सौम्यं सुधाम यम् ।। ५२.६० ।।

सम्भृतञ्चार्द्धमासेन अमृतं सूर्यतेजसा ।

भक्षार्थममृतं सौम्यं पौर्णमास्यामुपासते ।। ५२.६१ ।।

एकरात्रं सुरैः सर्वैः पितृभिश्च महर्षिभिः।

सोमस्य कृष्णपक्षादौ भास्कराभिमुखस्य च ।। ५२.६२ ।।

प्रक्षीयते पुरस्यान्तः पीयमानाः कलाः क्रमात्।
क्षीयन्ते तस्मात् कृष्णे याः शुक्ले ह्याप्याययन्ति ताः ।। ५२.६३ ।।
एवं दिनक्रमातीते विबुधास्तु निशाकरम् ।
पीत्वाऽर्द्धमासङ्गच्छन्ति अमावास्यां सुरोत्तमाः ।
पितरश्चोपतिष्ठन्ति अमावास्यां निशाकरम् ।। ५२.६४ ।।
ततः पञ्चदशे भागे किञ्चिच्छिष्टे कलात्मके।
अपराह्ने पितृगणैर्जघन्यः पर्युपास्यते ।। ५२.६५ ।।
पिबन्ति द्विकलाकालं शिष्टा तस्य तु या कला।
निःसृतं तदमावास्याङ्गभस्तिभ्यः स्वधामृतम्।
तां स्वधां मासतृप्त्यै तु पीत्वा गच्छन्ति तेऽमृतम् ।। ५२.६६ ।।
सौम्या बर्हिषदश्चैव अग्निष्वात्तास्तथैव च।
कव्याश्चैव तु ये प्रोक्ताः पितरः सर्व एव ते ।। ५२.६७ ।।
संवत्सरास्तु वै कव्याः पञ्चाब्दा ये द्विजैः स्मृताः।
सौम्यास्तु ऋतवो ज्ञेया मासा बर्हिषदः स्मृताः।
अग्निष्वात्तार्तवश्चैव पितृसर्गा हि वै द्विजाः ।। ५२.६८ ।।
पितृभिः पीयमानस्य पञ्चदश्यां कला तु वै।
यावन्न क्षीयते तस्य भागः पञ्चदश स्तु सः ।। ५२.६९ ।।
अमावस्यान्तदा तस्य अन्तमापूर्यते परम्।
वृद्धिक्षयौ वै पक्षादौ षोडश्यां शशिनः स्मृतौ ।। ५२.७० ।।
एवं सूर्यनिमित्तैषा क्षयवृद्धि र्निशाकरे।
ताराग्रहाणां वक्ष्यामि स्वर्भानोश्च रथं पुनः ।। ५२.७१ ।।
तोयतेजोमयः शुभ्रः सोमपुत्रस्य वै रथः।
युक्तो हयैः पिशङ्गैस्तु अष्टाभिर्वातरंहसैः ।। ५२.७२ ।।
सवरूथः सानुकर्षः सूतो दिव्यो रथे महान्।
सोपासङ्गपताकस्तु सध्वजो मेघसन्निभः ।। ५२.७३ ।।
भार्गवस्य रथः श्रीणांस्तेजसा सूर्यसन्निभः।
पृथिवीसम्भवैर्युक्तो नानावर्णैर्हयोत्तमैः ।। ५२.७४ ।।
श्वेतः पिशङ्गः सारङ्गो नीलः पीतो विलोहितः।
कृष्णश्च हरितश्चैव पृषतः पृष्णिरेव च।
दशभि स्तैर्महाभागैरकृशैर्वातवेगितैः ।। ५२.७५ ।।
अष्टाश्वः काञ्चनः श्रीमान् सोमस्यापि रथोऽभवत्।
असङ्गैर्लौहितैरश्वैः सर्वगैरग्निसम्भवैः।
सर्पतेऽसौ कुमारो वै ऋजुवक्रानुचक्रगः ।। ५२.७६ ।।

ततस्त्वाङ्गिरसो विद्वान् देवाचार्यो बृहस्पतिः।
शोणैरश्वैः काञ्चनेन स्यन्दनेन प्रसर्पति ।। ५२.७७ ।।
युक्तस्तु वाजिभिर्दिव्यैरष्टाभिर्वातसम्मितैः।
नक्षत्रेऽब्दन्निवसति सवेगस्तेन गच्छति ।। ५२.७८ ।।
ततः शनैश्वरोप्यश्वैः शबलैर्व्योमसम्भवैः।
कार्ष्णायसं समारुह्य स्यन्दनं याति वै शनैः ।। ५२.७९ ।।
स्वर्भानोस्तु तथैवाश्वाः कृष्णा ह्यष्टौ मनोजवाः।
रथन्तमोमयन्तस्य सकृद्युक्ता वहन्त्युत ।। ५२.८० ।।
आदित्यान्निःसृतो राहुः सोमं गच्छति पर्वसु।
आदित्यमेति सोमाच्च पुनः सौरेषु पर्वसु ।। ५२.८१ ।।
अथ केतुरथस्याश्वा अष्टाष्टौ वातरंहसः।
पलालधूमसङ्काशाः शबला रासभारुणाः ।। ५२.८२ ।।
एते वाहा ग्रहाणां वै मया प्रोक्ता रथैः सह।
सर्वे ध्रुवनिबद्धास्ते प्रबद्धा वातरश्मिभिः ।। ५२.८३ ।।
एते वै भ्राम्यमाणास्तु यथा योगं भ्रमन्ति वै।
वायव्याभिरदृश्याभिः प्रबद्धा वातरश्मिभिः ।। ५२.८४ ।।
परिभ्रमन्ति तद्बद्धाश्चन्द्रसूर्यग्रहा दिवि।
भ्रमन्तमनुगच्छन्ति ध्रुवन्ते ज्योतिषां गणाः ।। ५२.८५ ।।
यथा नद्युदके नौस्तु सलिलेन सहोह्यते।
तथा देवालया ह्येते उह्यन्ते वातरश्मिभिः।
तस्मात्सर्वेण दृस्यन्ते व्योम्नि देवगणास्तु ते ।। ५२.८६ ।।
यावन्त्यश्चैव तारास्तु तावन्तो वातरश्मयः।
सर्वा ध्रुवनिबद्धास्ता ब्रमन्त्यो भ्रामयन्ति तम् ।। ५२.८७ ।।
तैलपीडाकरं चक्रं भ्रमद्भ्रामयते यथा।
तथा भ्रमन्ति ज्योतींषि वायबद्धानि सर्वशः ।। ५२.८८ ।।
अलातचक्रवद्यान्ति वातचक्रेरितानि तु।
तस्माज्ज्योतींषि वहते प्रवहंस्तेन स स्मृतः ।। ५२.८९ ।।
एवं ध्रुवनिबद्धोऽसौ सर्पते ज्योतिषां गणः।
सैष तारामयोज्ञेयः शिशुमारो ध्रुवो दिवि।
यदह्ना कुरुते पापं दृष्टवा तं निशि मुच्यते ।। ५२.९० ।।
यावत्यश्चैव तारास्ताः शिशूमाराश्रिता दिवि।
तावन्त्येव तु वर्षाणि जीवन्त्यभ्यधिकानि तु ।। ५२.९१ ।।
शाश्वतः शिशुमारोऽसौ विज्ञेयः प्रविभागशः।

उत्तानपादस्तस्याथ विज्ञेयो ह्युत्तरो हनुः ।। ५२.९२ ।।
यज्ञोऽधरस्तु विज्ञेयो धर्मो मूर्द्धानमाश्रितः।
हृदि नारायणः साध्यः अश्विनौ पूर्वपादयोः ।। ५२.९३ ।।
वरुणश्चार्यमा चैव पश्चिमे तस्य सस्थिनि।
शिश्नः संवत्सरस्तस्य मित्रोऽपाने समाश्रितः ।। ५२.९४ ।।
पुच्छेऽग्निश्च महेन्द्रश्च मरीचिः कश्यपो ध्रुवः।
तारकाः शिशुमारश्च नास्तमेति चतुष्टयम् ।। ५२.९५ ।।
नक्षत्रचन्द्रसूर्याश्च ग्रहास्तारागणैः सह।
उन्मुखाभिमुखाः सर्वे चक्रीभूताश्रिता दिवि ।। ५२.९६ ।।
ध्रुवेणाधिष्ठिताः सर्वे ध्रुवमेव प्रदक्षिणम् ।
प्रयान्तीह वरं श्रेष्ठमेधीभूतं ध्रुवन्दिवि ।। ५२.९७ ।।
ध्रुवाग्निकश्यपानान्तु वरस्वासौ ध्रुवः स्मृतः।
एक एव भ्रमत्येष मेरुपर्वतमूर्द्धनि ।। ५२.९८ ।।
ज्योतिषाञ्चक्रमेतद्धि सदा कर्षत्यवाङ्मुखः।
मेरुमालोकयत्येष प्रयातीह प्रदक्षिणम् ।। ५२.९९ ।।
इति श्रीमहापुराणे वायुप्रोक्ते ध्रुवचर्या नाम द्विपञ्चाशोऽध्यायः ।। ५२ ।।

**।। शांशपायन उवाच ।।**

एतच्छ्रुत्वा तु मुनयः पुनस्ते संशयान्विताः।
पप्रच्छुरुत्तरं भूयस्तदा ते लोमहर्षणम् ।। ५३.१ ।।

**।।ऋषय उचुः ।।**

यदेतदुक्तम्भवता गृहाण्येतानि विश्रितम्।
कथं देवगृहाणि स्युः कथं ज्योतींषि वर्णय ।। ५३.२ ।।
एतत्सर्वं समाचक्ष्व ज्योतिषाञ्चैव निश्चयम्।
श्रुत्वा तु वचनं तेषां तदा सूतः समाहितः ।। ५३.३ ।।
अस्मिन्नर्थे महाप्राज्ञैर्यदुक्तं ज्ञानबुद्धिभिः।
तद्वोऽहं सम्प्रवक्ष्यामि सूर्याचन्द्रमसोर्भवम्।
यथा देवगृहाणीह सूर्याचन्द्रमसोर्गृहम् ।। ५३.४ ।।
अतः परं त्रिविधाग्नेर्वक्ष्येऽहन्तु समुद्भवम्।
दिव्यस्य भौतिकस्याग्नेरथाग्नेः पार्थिवस्य च ।। ५३.५ ।।
व्युष्टायान्तु रजन्यां वै ब्रह्मणोऽव्यक्तजन्मनः।
अव्याकृतमिदन्त्वासीन्नैशेन तमसावृतम् ।। ५३.६ ।।
चतुर्भूतावशिष्टेऽस्मिन् पार्थिवः सोऽग्निरुच्यते।
यश्चादौ तपते सूर्ये शुचिरग्निस्तु स स्मृतः ।। ५३.७ ।।
वैद्युताख्यस्तु विज्ञेयस्तेषां वक्ष्येऽथ लक्षणम्।
वैद्युतो जाठरः सौरो ह्यपाङ्गर्भास्त्रयोऽग्नयः।
तस्मादपः पिबन् सूर्यो गोभिदीर्प्यत्यसौ दिवि ।। ५३.८ ।।
वैद्युतेन समाविष्टो वार्क्षो नाद्भिः प्रशाम्यति ।
मानवानाञ्च कुक्षिस्थो नाद्भिः शाम्यति पावकः ।। ५३.९ ।।
अर्च्चिर्षष्मान् परमः सोऽग्निः प्रभवो जाठरः स्मृतः।
यश्चायं मण्डली शुक्लो निरूष्मा संप्रकाशते ।। ५३.१० ।।
प्रभा हि सौरी पादेन ह्यस्तं याति दिवाकरे।
अग्निमाविशते रात्रौ तस्माद्दूरात् प्रकाशते ।। ५३.११ ।।
उद्यन्तञ्च पुनः सूर्यमौष्ण्यमाग्नेयमाविशत्।
पादेन पार्थिवस्याग्नेस्तस्मादग्निस्तपत्यसौ ।। ५३.१२ ।।
प्रकाशश्च तथौष्ण्यञ्च सौराग्नेये तु तेजसी।
परस्परानुप्रवेशादाप्यायेते दिवानिशम् ।। ५३.१३ ।।
उत्तरे चैव भूम्यर्द्धे तस्मादस्मिंश्च दक्षिणे।
उत्तिष्ठति पुनः सूर्ये रात्रिराविशते त्वपः।
तस्मात्ताम्रा भवन्त्यापो दिवारात्रिप्रवेशनात् ।। ५३.१४ ।।

अस्तं याति पुनः सूर्ये अहर्वै प्रविशत्यपः।
तस्मान्नक्तं पुनः शुक्ला आपो विश्यन्ति भास्करे ।। ५३.१५ ।।
एतेन क्रमयोगेन भूम्यर्द्धे दक्षिणोत्तरे ।
उदयास्तमये नित्यमहोरात्रं विशत्यपः ।। ५३.१६ ।।
यश्चासौ तपते सूर्ये पिबन्नम्भो गभस्तिभिः।
पार्थिवो हि विमिश्रोऽसौ दिव्यः शुचिरिति स्मृतः ।। ५३.१७ ।।
सहस्रपादः सोऽग्निस्तु वृत्तः कुम्भनिभः शुचिः।
आदत्ते तत्तु रश्मीनां सहस्रेण समन्ततः ।। ५३.१८ ।।
नादेयीश्चैव सामुद्रीः कौप्याश्चैव सधान्वनीः।
स्थावरा जङ्गमाश्चैव यश्च सूर्यो हिरण्मयः।
तस्य रश्मिसहस्रन्तु वर्षशीतोष्णनिःस्रवम् ।। ५३.१९ ।।
तासाञ्चतुःशता नाड्यो वर्षन्ति चित्रमूर्त्तयः।
वन्दनाश्चैव वन्द्यश्च ऋतना नूतनास्तथा।
अमृता नामतः सर्व्वा रश्मयो वृष्टिसर्जनाः ।। ५३.२० ।।
हिमवाहाश्च ताभ्योऽन्या रश्मयस्त्रिशताः पुनः।
दृश्या मेध्याश्च वाह्याश्च ह्लादिन्यो हिमसर्जनाः ।। ५३.२१ ।।
चन्द्रास्ता नामतः सर्वाः पीताभास्तु गभस्तयः।
शुक्लाश्च ककुभश्चैव गावो विश्वभृतस्तथा ।। ५३.२२ ।।
शुक्लास्ता नामतः सर्वास्त्रिशता घर्मसर्जनाः।
समं बिभर्ति ताभिस्तु मनुष्यपितृदेवताः ।। ५३.२३ ।।
मनुष्यानौषधेनेह स्वधया च पितॄनपि।
अमृतेन सुरान् सर्वांस्त्रींस्त्रिभिस्तर्पयत्यसौ ।। ५३.२४ ।।
वसन्ते चैव ग्रीष्मे च सतैः सुतपते त्रिभिः।
वर्षास्वथो शरदि च चतुर्भिः सम्प्रकर्षति ।। ५३.२५ ।।
हेमन्ते शिशिरे चैव हिमं स सृज ते त्रिभिः।
ओषधीषु बलन्धत्ते स्वधया च पितॄनपि।
सूर्योऽमरत्वममृतत्रयन्त्रिषु नियच्छति ।। ५३.२६ ।।
एवं रश्मिसहस्रन्तत् सौरं लोकार्थ साधकम्।
भिद्यते ऋतुमासाद्य जलशीतोष्णनिःस्रवम् ।। ५३.२७ ।।
इत्येतन्मण्डलं शुक्लं भास्वरं सूर्यसंज्ञितम्।
नक्षत्रग्रहसोमानां प्रतिष्ठायोनिरेव च।
ऋक्षचन्द्रग्रहाः सर्वे निर्ज्ञेयाः सूर्यसम्भवाः ।। ५३.२८ ।।
नक्षत्राधिपतिः सोमो ग्रहराजो दिवाकरः।

शेषाः पञ्चग्रहा ज्ञेया ईश्वराः कामरूपिणः ।। ५३.२९ ।।
पठ्यते चाग्निरादित्य औदकश्चन्द्रमाः स्मृतः।
शेषाणां प्रकृतिं सम्यग्वर्ण्यमानां निबोधत ।। ५३.३० ।।
सुरसेनापति स्कन्दः पठ्यतेऽङ्गारको ग्रहः ।
नारायणं बुधं प्राहुर्देवं ज्ञानविदो विदुः ।। ५३.३१ ।।
रुद्रो वैवस्वतः साक्षाद्धर्मो लोके प्रभुः स्वयम्।
महाग्रहो द्विजश्रेष्ठो मन्दगामी शनैश्चरः ।। ५३.३२ ।।
देवासुरगुरू द्वौ तु भानुमन्तौ महाग्रहौ।
प्रजापतिसुतावेतावुभौ शुक्रबृहस्पती।
दैत्यो महेन्द्रश्च तयोराधिपत्ये विनिर्मितौ ।। ५३.३३ ।।
आदित्यमूलमखिलं त्रिलोकं नात्र संशयः।
भवत्यस्य जगत्कृत्स्नं सदेवासुरमानुषम् ।। ५३.३४ ।।
रुद्रेन्द्रोपेन्द्रचन्द्राणां विप्रेन्द्रास्त्रिदिवौकसाम्।
द्युतिर्द्युतिमतां कृत्स्ना यत्तेजः सार्वलौकिकम् ।। ५३.३५ ।।
सर्वात्मा सर्वलोकेशो मूलं परमदैवतम्।
ततः संजायते सर्वं तत्र चैव प्रलीयते ।। ५३.३६ ।।
बावाभावौ हि लोकानामादित्यान्निः सृतौ पुरा।
जगज्ज्ञेयो ग्रहो विप्रा दीप्तिमान् सुग्राहो रविः ।। ५३.३७ ।।
यत्र गच्छन्ति निधनं जायन्ते च पुनः पुनः।
क्षणा मुहूर्त्ता दिवसा निशाः पक्षाश्च कृत्स्नशः।
मासाः संवत्सराश्चैव ऋतवोऽन्दयुगानि च ।। ५३.३८ ।।
तदादित्यादृते तेषां कालसंख्या न विद्यते।
कालादृते न निगमो न दीक्षा नाह्निकक्रमः ।। ५३.३९ ।।
ऋतुनामविभागश्च पुष्पमूलफलं कुतः।
कुतः सस्याभिनिष्पत्तिर्गुणौषधिगणादि वा ।। ५३.४० ।।
अभावो व्यवहाराणां देवानां दिवि चेह च।
जगत्प्रतापनमृते भास्करं वारितस्करम् ।। ५३.४१ ।।
स एव कालश्चाग्निश्च द्वादशात्मा प्रजापतिः।
तपत्येष द्विजश्रेष्टास्त्रैलोक्यं सचराचरम् ।। ५३.४२ ।।
स एष तेजसां राशिः समस्तः सार्वलौकिकः।
उत्तमं मार्गमास्थाय वायोभाभिरिदञ्जगत्।
पार्श्वमूर्द्ध्वमधश्चैव तापयत्येष सर्वशः ।। ५३.४३ ।।
रवेरश्मिसहस्रं यत् प्राङ्मया समुदाहृतम् ।

तेषां श्रेष्ठाः पुनः सप्त रश्मयो ग्रहयोनयः ।। ५३.४४ ।।
सुषुम्नो हरिकेशश्च विश्वकर्मा तथैव च।
विश्वश्रवाः पुनश्चान्यः सम्पद्वसुरतः परम् ।
अर्वावसुः पुनश्चान्योमया चात्र प्रकीर्त्तितः ।। ५३.४५ ।।
सुषुम्नः सूर्यरश्मिस्तु क्षीणं शशिनमेधयन्।
तिर्यगूर्द्ध्वप्रभावोऽसौ सुषुम्नः परिकीर्त्यते ।। ५३.४६ ।।
हरिकेशः पुरस्त्वाद्या ऋक्षयोनिः प्रकीर्त्यते।
दक्षिणे विश्वकर्मा तु रश्मिर्वर्द्धयते बुधम् ।। ५३.४७ ।।
विश्वश्रवास्तु यः पश्चात् शुक्रयोनिः स्मृतो बुधैः।
सम्पद्वसुश्च यो रश्मिः सा योनिर्लोहितस्य च ।। ५३.४८ ।।
षष्ठस्त्वर्वावसू रश्मिर्योनिस्तु स बृहस्पतेः।
शनैश्चरं पुनश्चापि रश्मिराप्यायते स्वराट् ।। ५३.४९ ।।
एवं सूर्यप्रभावेण ग्रहनक्षत्रतारकाः।
वर्द्धन्ते विदिताः सर्वा विश्वञ्चैदं पुनर्जगत् ।
नक्षीयन्ते पुनस्तानि तस्मान्नक्षत्रता स्मृता ।। ५३.५० ।।
क्षेत्राण्येतानि वै पूर्वमापतन्ति गभस्तिभिः।
तेषां क्षेत्राण्यथादत्ते सूर्यो नक्षत्रताङ्गतः ।। ५३.५१ ।।
तीर्णानां सुकृतेनेह सुकृतान्ते ग्रहाश्रयात् ।
ताराणां तारका ह्येताः शुक्लत्वाच्चैव तारकाः ।। ५३.५२ ।।
दिव्यानां पार्थिवानाञ्च नैशानाञ्चैव सर्वशः ।
आदानान्नित्यमादित्यस्तमसां तेजसां महान् ।। ५३.५३ ।।
सुवति स्पन्दनार्थे च धातुरेष विभाव्यते।
सवनात्तेजसोऽपाञ्च तेनासौ सविता मतः ।। ५३.५४ ।।
बह्वर्थश्चन्द्र इत्येष ह्लादने धातुरिष्यते ।
शुक्लत्वे चामृतत्वे च शीतत्वे च विभाव्यते ।। ५३.५५ ।।
सुर्याचन्द्रमसोर्दिव्ये मण्डले भास्वरे खगे।
ज्वलत्तेजोमये शुक्ले वृत्तकुम्भनिभे शुभे ।। ५३.५६ ।।
घनतोयात्मकं तत्र मण्डलं शशिनः स्मृतम्।
घनतेजोमयं शुक्लं मण्डलं भास्करस्य तु ।। ५३.५७ ।।
विशन्ति सर्वदेवास्तु स्थानान्येतानि सर्वशः।
मन्वन्तरेषु सर्वेषु ऋक्षसूर्यग्रहाश्रयाः ।। ५३.५८ ।।
तानि देवगृहाण्येव तदाख्यास्ते भवन्ति च।
सौरं सूर्यो विशस्थानं सौम्यं सोमस्तथैव च ।। ५३.५९ ।।

शौक्रं शुक्रो विशस्थानं षोडशार्च्चिः प्रतापवान्।
बृहद्बृहस्पतिश्चैव लोहितश्चैव लौहितः ।
शानैश्चरं तथा स्थानं देव श्चैव शनैश्चरः ।। ५३.६० ।।
आदित्यरश्मिसंयोगात् संप्रकाशात्मिकाः स्मृताः ।
नवयोजनसाहस्रो विष्कम्भः सवितुः स्मृतः ।। ५३.६१ ।।
त्रिगुणस्तस्य विस्तारो मण्डलञ्च प्रमाणतः।
द्विगुणः सूर्यविस्ताराद्विस्तारः शशिनः स्मृतः ।। ५३.६२ ।।
तुल्यस्तयोस्तु स्वर्भानुर्भूत्वाधस्तात् प्रसर्पति।
उद्धृत्य पार्थिवच्छायां निर्मितो मण्डलाकृतिः ।। ५३.६३ ।।
स्वर्भानोस्तु बृहत् स्थानन्निर्मितं यत्तमोमयम्।
आदित्यात्तच्च निष्क्रम्य सोमं गच्छति पर्वसु ।। ५३.६४ ।।
आदित्यमेति सोमाच्च पुनः सोमञ्च पर्वसु।
स्वर्भासानुदते यस्मात्ततः स्वर्भानुरुच्यते ।। ५३.६५ ।।
चन्द्रस्य षोडशो भागो भार्गवश्च निधीयते।
विष्कम्भान्मण्डलाच्चैव योजनाग्रात् प्रमाणतः ।। ५३.६६ ।।
भार्गवात्पादहीनस्तु विज्ञेयो वै बृहस्पतिः।
बुहस्पतेः पादहीनौ कुजसौरावुभौ स्मृतौ ।
विस्तारान्मण्डलाच्चैव पादहीनस्तयोर्बुधः ।। ५३.६७ ।।
तारानक्षत्ररूपाणि स्वपुष्मन्तीह यानि वै।
बुधेन समतुल्यानि विस्तारान्मण्डलादथ ।। ५३.६८ ।।
प्रायशश्चन्द्रयोगानि विद्याद्दक्षाणि तत्त्ववित्।
तारानक्षत्ररूपाणि हीनानि तु परस्परम् ।। ५३.६९ ।।
शतानि पञ्च चत्वारि त्रीणि द्वे चैव योजने।
पूर्वापरनिकृष्टानि तारकामण्डलानि तु।
योजनान्यर्द्धमात्राणि तेभ्यो ह्रस्वं न विद्यते ।। ५३.७० ।।
उपरिष्टात्रयस्तेषां ग्रहा ये दूरसर्पिणः।
सौरोऽङ्गिराश्च वक्रश्च ज्ञेया मन्दविचारिणः ।। ५३.७१ ।।
तेभ्योऽधस्तात्तु चत्वारः पुनरन्ये महाग्रहाः।
सूर्यः सोमो बुधश्चैव भार्गवश्चैव शीघ्रगाः ।। ५३.७२ ।।
यावन्त्य स्तारकाः कोट्यस्तावद्दक्षाणि सर्वशः।
वीथीनां नियमाच्चैवमृक्षमार्गो व्यवस्थितः ।। ५३.७३ ।।
गतिस्तास्त्वेव सूर्यस्य नीचोच्चत्वेऽयनक्रमात्।
उत्तरायण मार्गस्थो यदा पर्वसु चन्द्रमाः।

बौधं बौधोऽथ स्वर्भानुः स्वर्भानोः स्थानमास्थितः ।। ५३.७४ ।।
नक्षत्राणि च सर्वाणि नक्षत्राणि विशन्त्युत।
गृहाण्ये तानि सर्वाणि ज्योतींषि सुकृतात्मनाम् ।। ५३.७५ ।।
कल्पादौ संप्रवृत्तानि निर्मितानि स्वयम्भुवा।
स्थानान्येतानि तिष्ठन्ति यावदाभूतसंप्लवम् ।। ५३.७६ ।।
मन्वन्तरेषु सर्वेषु देवतायतनानि वै।
अभिमानिनोऽवतिष्टन्ति यावदाभूतसंप्लवम् ।। ५३.७७ ।।
अतीतैस्तु सहातीता भाव्याभाव्यैः सुरासुरैः ।
वर्त्तन्ते वर्त्तमानैश्च स्थानानि स्वैः सुरैः सह ।। ५३.७८ ।।
अस्मिन् मन्वन्तरे चैव ग्रहा वैमानिकाः स्मृताः।
विवस्वानदितेः पुत्रः सूर्यो वैवस्वतेऽन्तरे ।। ५३.७९ ।।
त्विषिमान्धर्मपुत्रस्तु सोमदेवो वसुः स्मृतः।
शुक्रो देवस्तु विज्ञेयो भार्गवोऽसुरराजकः ।। ५३.८० ।।
बृहत्तेजाः स्मृतो देवो देवाचार्योऽङ्गिरःसुतः।
बुधो मनोहरश्चैव त्विषिपुत्रस्तु स स्मृतः ।। ५३.८१ ।।
अग्निर्विकल्पात् संजज्ञे युवाऽसौ लोहिताधिपः।
नक्षत्रऋक्षगामिन्यो दाक्षायण्यः स्मृतास्तु ताः ।। ५३.८२ ।।
स्वर्भानुः सिंहिकापुत्रो भूतसन्तापनोऽसुरः।
सोमर्क्षग्रहसूर्ये तु कीर्तितास्त्वभिमानिनः ।। ५३.८३ ।।
स्थानान्येतान्यथोक्तानि स्थानिन्यश्चैव देवताः।
शुक्लमग्निमयं स्थानं सहस्रांशोर्विवस्वतः ।। ५३.८४ ।।
सहस्रांशोस्त्विषः स्थानमम्मयं शुक्लमेव च।
अथ श्यामं मनोज्ञस्य पञ्चरश्मेर्गृहं स्मृतम् ।। ५३.८५ ।।
शुक्रस्याप्यम्मयं स्थानं सद्म षोडशरश्मिवत्।
नवरश्मेस्तु यूनो हि लोहितस्थानमम्मयम् ।। ५३.८६ ।।
हरिश्चाप्यं बृहच्चापि द्वादशांशोर्बृहस्पतेः।
अष्ट रश्मेर्गृहं प्रोक्तं कृष्णं बुद्धस्य अम्मयम् ।। ५३.८७ ।।
स्वर्भानोस्तामसं स्थानं भूतसन्तापनालयम्।
विज्ञेयास्तारकाः सर्वास्त्वम्मयास्त्वेकरश्मयः ।। ५३.८८ ।।
आश्रयाः पुण्यकीर्तीनां सुशुक्लाश्चैव वर्णतः।
घनतोयात्मिका ज्ञेयाः कल्पादौ वेदनिर्मिताः ।। ५३.८९ ।।
उच्चत्वाद्दृश्यते शीघ्रमभिव्यक्तैर्गभस्तिभिः।
तथा दक्षिणमार्गस्थो नीविवीथीसमाक्षितः ।। ५३.९० ।।

भूमिलेखावृतः सूर्यः पूर्णामावास्ययोस्तथा।
नदृश्यते यथाकालं शाघ्रतोऽस्तमुपैति च ।। ५३.९१ ।।
तस्मादुत्तरमार्गस्थो ह्यमावास्यां निशाकरः।
दृश्यते दक्षिणे मार्गे नियमाद्धृश्यते न च ।। ५३.९२ ।।
ज्योतिषां गतियोगेन सूर्याचन्द्रमसावुभौ।
समानकालास्तमयौ विषुवत्सु समोदयौ ।। ५३.९३ ।।
उत्तरासु च वीथीषु व्यन्तरास्तमयोदयौ।
पूर्णामावास्ययोर्ज्ञेयौ ज्योतिश्चक्रानुवर्त्तिनौ ।। ५३.९४ ।।
दक्षिणायनमार्गस्थो यदा भवति रश्मिवान्।
तदा सर्वग्रहाणां स सूर्योऽधस्तात् प्रसर्पति ।। ५३.९५ ।।
विस्तीर्णं मण्डलं कृत्वा तस्योर्द्ध्वञ्चरते शशी।
नक्षत्रमण्डलं कृत्स्नं सोमादूर्द्ध्वं प्रसर्पति ।। ५३.९६ ।।
नक्षत्रेभ्यो बुधश्वोर्द्ध्वं बुधादूर्द्ध्वं बृहस्पतिः।
तस्माच्छनैश्चरश्चोर्द्ध्वं तस्मात्सप्तर्षिमण्डलम् ।
ऋषीणाञ्चैव सप्तानां ध्रुव ऊर्द्ध्वं व्यवस्थितः ।। ५३.९७ ।।
द्विगुणेषु सहस्रेषु योजनानां शतेषु च।
ताराग्रहान्तराणि स्युरुपरिष्टाद्यथाक्रमम् ।। ५३.९८ ।।
ग्रहाश्च चन्द्रसूर्यौ तु दिवि दिव्येन तेजसा।
नित्यमृक्षेषु युज्यन्ति गच्छन्ति नियमक्रमात् ।। ५३.९९ ।।
ग्रहनक्षत्रसूर्यास्तु नीचोच्चमृद्ववस्थिताः।
समागमे च भेदे च पश्यन्ति युगपत् प्रजाः ।। ५३.१०० ।।
परस्परस्थिताः ह्येते युज्यन्ते च परस्परम्।
असङ्करेण विज्ञेयस्तेषां योगस्तु वै बुधैः ।। ५३.१०१ ।।
इत्येष सन्निवेशो वः पृथिव्यां ज्यौतिषस्य च।
द्वीपानामुद्नधीनां च पर्वतानां तथैव च ।। ५३.१०२ ।।
वर्षाणां च नदीनाञ्च येषु तेषु वसन्ति वै।
एते चैव ग्रहाः पूर्वं नक्षत्रेषु समुत्थिताः ।। ५३.१०३ ।।
विवस्वानदितेः पुत्रः सूर्यो वै चाक्षुषेऽन्तरे।
विशाखासु समुत्पन्नो ग्रहाणां प्रथमो ग्रहः ।। ५३.१०४ ।।
त्विषिमान् धर्म्मपुत्रस्तु सोमो विश्वावसुस्तथा।
शीतरश्मिः समुत्पन्नः कृत्तिकासु निशाकरः ।। ५३.१०५ ।।
षोडशार्चिर्भृगोः पुत्रः शुक्रः सूर्यादनन्तरम्।
ताराग्रहाणां प्रवरस्तिष्यक्षेत्रे समुत्थितः ।। ५३.१०६ ।।

ग्रहश्चाङ्गिरसः पुत्रो द्वादशार्च्चिर्बृहस्पतिः।
फाल्गुनीषु समुत्पन्नः सर्वासु च जगद्गुरुः ।। ५३.१०७ ।।
नवार्चिर्लोहिताङ्गस्तु प्रजापतिसुतो ग्रहः ।
आषाढास्विह पूर्वासु समुत्पन्न इति श्रुतिः ।। ५३.१०८ ।।
रेवतीष्वेव सप्तार्चि स्तथा सौरशनैश्चरः।
रोहिणीषु समुत्पन्नौ ग्रहौ चन्द्रार्कमर्द्दनौ ।। ५३.१०९ ।।
एते ताराग्रहाश्चैव बोद्धव्या भार्गवादय।
जन्मनक्षत्रपीडासु यान्ति वैगुण्यतां यतः।
स्पृशन्ते तेन दोषेण ततस्ता ग्रहभक्तिषु ।। ५३.११० ।।
सर्वग्रहाणामेतेषामादिरादित्य उच्यते।
ताराग्रहाणां शुक्रस्तु केतूनाञ्चैव धूमवान् ।। ५३.१११ ।।
ध्रुवः कालो ग्रहाणां तु विभक्तानां चतुर्दिशम् ।
नक्षत्राणां श्रविष्ठा स्यादयनानां तथोत्तरम् ।। ५३.११२ ।।
वर्षाणाञ्चापि पञ्चानामाद्यः संवत्सरः स्मृतः।
ॠतूनां शिशिरञ्चापि मासानां माघ एव च ।। ५३.११३ ।।
पक्षाणां शुक्लपक्षस्तु तिथीनां प्रतिपत्तथा।
अहोरात्रविभागानामहश्चापि प्रकीर्तितम् ।। ५३.११४ ।।
मुहूर्त्तानां तथैवादिर्मुहूर्त्तो रुद्रदैवतः।
अक्ष्णोश्चापि निमेषादिः कालः कालविदो मतः ।। ५३.११५ ।।
श्रवणान्तं श्रविष्ठादियुगं स्यात् पञ्चवार्षिकम्।
भानोर्गतिविशेषेण चक्रवत् परिवर्त्तते ।। ५३.११६ ।।
दिवाकरः स्मृतस्तस्मात्कालस्तं विद्धि चेश्वरम्।
चतुर्वनिधानां भूतानां प्रवर्त्तकनिवर्त्तकः ।। ५३.११७ ।।
इत्येष ज्योतिषामेव सन्निवेशोऽर्थनिश्चयात्।
लोकसंव्यवहारार्थमीश्वरेण विनिर्मितः ।। ५३.११८ ।।
उत्पन्नः श्रवणेनासौ संक्षिप्तश्च ध्रुवे तथा।
सर्वतोऽन्तेषु विस्तीर्णो वृक्षाकार इति स्थितिः ।। ५३.११९ ।।
बुद्धिपूर्वम्भगवता कल्पादौ संप्रकीर्तितः।
साश्रयः सोऽभिमानी च सर्वस्य ज्योतिरात्मकः।
विश्वरूपः प्रधानस्य परिणामोऽयमद्भुतः ।। ५३.१२० ।।
नैव शक्यं प्रसंख्यातुं याथातथ्येन केनचित्।
गतागतं मनुष्येषु ज्योतिषां मांसचक्षुषा ।। ५३.१२१ ।।
आगमादनुमानाच्च प्रत्यक्षादुपपत्तितः।

परीक्ष्य निपुणं भक्त्या श्रद्धातव्यं विपश्चिता ।। ५३.१२२ ।।
चक्षुः शास्त्रं जलं लेख्यं गणितं बुद्धिसत्तमाः।
पञ्चैते हेतवो ज्ञेया ज्योतिर्गणविचिन्तने ।। ५३.१२३ ।।
इति श्रीमहापुराणे वायुप्रोक्ते ज्योतिःसन्निवेशो नाम त्रिपञ्चाशोऽध्यायः ।। ५३ ।।।

**।।ऋषय ऊचुः।।**
कस्मिन् देशे महापुण्यमेतदाख्यानमुत्तमम्।
वृत्तं ब्रह्मपुरोगाणां कस्मिन् काले महाद्युते।
एतदाख्याहि नः सम्यग् यथा वृत्तं तपोधन ।। ५४.१ ।।

**।।सूत उवाच।।**
यथा श्रुतं मया पूर्वं वायुना जगदायुना।
कथ्यमानं द्विजश्रेष्ठाः सत्रे वर्षसहस्रके ।। ५४.२ ।।

नीलता येन कण्ठस्य देवदेवस्य शूलिनः।
तदहं कीर्त्तयिष्यामि श्रृणुध्वं शंसितव्रताः ।। ५४.३ ।।

उत्तरे शैलराजस्य सरांसि सरितो ह्रदाः।
पुण्योद्यानेषु तीर्थेषु देवतायतनेषु च।
गिरिश्रृङ्गेषु तुङ्गेषु गह्वरोपवनेषु च ।। ५४.४ ।।

देवभक्ता महात्मानो मुनयः शंसितव्रताः।
स्तुवन्ति च महादेवं यत्र यथाविधि ।। ५४.५ ।।

ऋग्यजुःसामवेदैश्च नृत्यगीतार्च्चनादिभिः।
ओङ्कारेण नमस्कारैरर्च्चयन्ति सदा शिवम् ।। ५४.६ ।।

प्रवृत्ते ज्योतिषां चक्रे मध्यव्याप्ते दिवाकरे।
देवता नियतात्मानः सर्वे तिष्ठन्ति तां कथाम् ।
अथ नियमप्रवृत्ताश्च प्राणशेषव्यवस्थिताः ।। ५४.७ ।।

नमस्ते नीलकण्ठाय इत्युवाच सदागतिः।
तच्छ्रुत्वा भावितात्मानो मुनयः शंशितव्रताः।
वालखिल्येति विख्याताः पतङ्गसहचारिणः ।। ५४.८ ।।

अष्टाशीतिसहस्राणि मुनीनामूर्द्ध्वरेतसाम्।
तस्मात् पृच्छन्ति वै वायुं वायुपर्णाम्बुभोजनाः ।। ५४.९ ।।

**।।ऋषय ऊचुः।।**
नीलकण्ठेति यत् प्रोक्तं त्वया पवनसत्तम।
एतद्गुह्यं पवित्राणां पुण्यं पुण्यकृतां वराः ।। ५४.१० ।।

तद्वयं श्रोतुमिच्छामस्त्वत्प्रसादात्प्रभञ्जन।
नीलता येन कण्ठस्य कारणेनाम्बिकापतेः ।। ५४.११ ।।

श्रोतुमिच्छा महे सम्यक् तव वक्राद्विशेषतः।

यावद्वाचः प्रवर्त्तन्ते सार्थास्ताश्च त्वयेरिताः ।। ५४.१२ ।।

वर्णस्थानगते वायौ वाग्विधिः संप्रवर्तते।
ज्ञानं पूर्वमथोत्साह स्त्वत्तो वायो प्रवर्तते ।। ५४.१३ .
त्वयि निष्पन्दमाने तु शेषा वर्णप्रवृत्तयः।
यत्र वाचो निवर्तन्ते देहबन्धाश्च दुर्लभाः ।। ५४.१४ ।।

तत्रापि तेऽस्ति सद्भावः सर्वगस्त्वं सदानिल।
नान्यः सर्वगतो देवस्त्वदृतेशस्ति समीरण ।। ५४.१५ ।।

एष वै जीवलोकस्ते प्रत्यक्षः सर्वतोऽनिल।
वेत्थ वाचस्पतिं देवं मनोनायकमीस्वरम् ।। ५४.१६ ।।

ब्रूहि तत्कण्ठदेशस्य किं कृता रूपविक्रिया।
श्रुत्वा वाक्यन्ततस्तेषामृषीणां भावितात्मानाम्।
प्रत्युवाच महातेजा वायुर्लोक नमस्कृतः ।। ५४.१७ ।।

**।।वायुरुवाच।।**
पुरा कृतयुगे विप्रो वेदनिर्णयतत्परः।
वसिष्ठो नाम धर्मात्मा मानसो वै प्रजापतेः ।। ५४.१८ ।।

प्रपच्छ कार्तिकेयं वै मयूरवरवाहनम्।
महिषासुरनारीणां नयनाञ्जनतस्करम् ।। ५४.१९ ।।

महासेनं महात्मानं मेघस्तनितनिःस्वनम्।
उमामनःप्रहर्षेण बालकं छझरूपिणम् ।। ५४.२० ।।

क्रौञ्चजीवितहर्त्तारं पार्वतीहृदि नन्दनम्।
वसिष्ठः पृच्छते भक्त्या कार्तिकेयं महाबलम् ।। ५४.२१ ।।

**।।वसिष्ठ उवाच।।**
नमस्ते हरनन्दाय उमागर्भ नमो ऽस्तु ते।
नमस्ते अग्निगर्भाय गङ्गागर्भ नमोऽस्तु ते ।। ५४.२२ ।।

नमस्ते शरगर्भाय नमस्ते कृत्तिकासुत।
नमो द्वादशनेत्राय षण्मुखाय नमोऽस्तु ते ।। ५४.२३ ।।

नमस्ते शक्तिहस्ताय दिव्यघण्टापताकिने।
एवं स्तुत्वा महासेनं पप्रच्छ शिखिवाहनम् ।। ५४.२४ ।।

यदेतद्दृश्यते वर्णं शुभं शुभ्राञ्जनप्रभम्।
तत्किमर्थं समुत्पन्नं कण्ठे कुन्देन्दुसंप्रभे ।। ५४.२५ ।।

एतदाप्ताय भक्ताय दान्ताय ब्रूहि पृच्छते।
कथां मङ्गलसंयुक्तां पवित्रां पापनाशिनीम् ।
मत्प्रियार्थं महाभाग वक्तुमर्हस्यशेषतः ।। ५४.२६ ।।

श्रुत्वा वाक्यं ततस्तस्य वसिष्ठस्य महात्मनः।
प्रत्युवाच महातेजाः सुरारिबलसूदनः ।। ५४.२७ ।।

श्रृणुष्व वदतां श्रेष्ठ कथ्यमानं वचो मम।
उमोत्सङ्गनिविष्टेन मया पूर्वं यथाश्रुतम् ।। ५४.२८ ।।

पार्वत्या सह संवादः शर्वस्य च महात्मनः।
तदहङ्कीर्त्तयिष्यामि त्वत्प्रियार्थं महामुने ।। ५४.२९ ।।

कैलासशिखरे रम्ये नानाधातुविचित्रिते।
नानाद्रुमलताकीर्णे चक्रवाकोपशोभिते ।। ५४.३० ।।

षट्पदोद्गीतबहुले धारासम्पातनादिते।
मत्तक्रौञ्चमयूराणां नादैरुद्घुष्टकन्दरे ।। ५४.३१ ।।

अप्सरोगणसङ्कीर्णे किन्नरैश्चोपशोभिते ।
जीवञ्जीवकजातीनां वीरुद्भिरुपशोभिते ।। ५४.३२ ।।

कोकिलारावमधुरे सिद्ध चारणसेविते।
सौरभैयीनिनादाढ्ये अधस्तनितनिःस्वने ।। ५४.३३ ।।

विनायकभयोद्विग्ने कुञ्जरैर्युक्तकन्दरे।
वीणावादित्रनिर्घोषैः श्रोत्रेन्द्रियमनोरमैः ।। ५४.३४ ।।

दोलालम्बितसम्पाते वनितासङ्घसेविते।
ध्वजैर्लम्बितदोलानां घण्ठानां निनदाकुले ।। ५४.३५ ।।

मुखमर्दलवादित्रैर्बलिनां स्फोटितैस्तथा।
क्रीडारवविचाराणां निर्घोषैः पूर्णमन्दिरे ।। ५४.३६ ।।

हासैः सन्त्रासजननैर्विकरालमुखैस्तथा।
देहगन्धैर्विचित्रैश्च प्रक्रीडितगणेश्चरैः ।। ५४.३७ ।।

वज्रस्फटिकसोपान चित्रपट्टिशिलातलैः।
व्याध्रसिंहमुखैशचवान्यैर्गजवाजिमुखैस्तथा ।। ५४.३८ ।।

बिडालवदनैश्चोग्रैः क्रोष्टुकाकारमूर्तिभिः ।

ह्रस्वैर्दीर्घैः कृशैः स्थूलैर्लम्बोदर महोदरैः ।। ५४.३९ ।।

ह्रस्वजङ्घैश्च लम्बोष्ठैस्तालजङ्घैस्तथापरैः।
गौकर्णैरिककर्णैश्च महाकर्णैरकर्णकैः ।। ५४.४० ।।

बहुपादैर्महापादैरेकपादैरपादकैः।
बहुशीर्षैर्महाशीर्षैरेकशीर्षैरशीर्षकैः ।। ५४.४१ ।।

बहुनेत्रैर्महानेत्रैरेकनैत्रैरनैत्रकैः ।
एवंविधैर्महायोगिभूतैर्भूतपतिर्वृतः ।। ५४.४२ ।।

विशुद्धमुक्तामणिरत्नभूषिते शिलातले हेममये मनोरमे।
सुखोपविष्टं मदनाङ्गनाशनं प्रोवाच वाक्यं गिरिराजपुत्री ।। ५४.४३ ।।

**।।देव्युवाच।।**
भगवन् भूतभव्येश गोवृषाङ्कितशासन।
तव कण्ठे महादेव भ्राजतेऽम्बुदशन्निभम् ।। ५४.४४ ।।

नात्युल्बणं नातिशुभ्रं नीलाञ्जनचयोपमम्।
किमिदं दीप्यते देव कण्ठे कामाङ्ग नाशन ।। ५४.४५ ।।

को हेतुः कारणं किञ्च कण्ठे नीलत्वमीश्वरः ।
एतत्सर्वं यथान्यायं ब्रूहि कौतूहलं हिमे ।। ५४.४६ ।।

श्रुत्वा वाक्यं ततस्तस्याः पार्वत्याः पार्वतीप्रियः ।
कथां मङ्गलसंयुक्तां कथयामास शङ्करः ।। ५४.४७ ।।

मथ्यमानेऽमृते पूर्वं क्षीरोदे सुरदानवैः।
अग्रे समुत्थितं तस्मिन् विषं कालानलप्रभम् ।। ५४.४८ ।।

तं दृष्ट्वा सुरसङ्घाश्च दैत्याश्चैव वरानने।
विषण्णवदनाः सर्वे गतास्ते ब्रह्मणोऽन्तिकम् ।। ५४.४९ ।।

दृष्ट्वा सुरगणान् भीतान् ब्रह्मो वाच महाद्युतिः।
किमर्थं भो महाभागा भीता उद्विग्नचेतसः ।। ५४.५० ।।

मयाष्टगुणमैश्वर्यं भवतां सम्प्रकल्पितम्।
केन व्यावर्त्तितैश्वर्या यूयं वै सुरसत्तमाः ।। ५४.५१ ।।

त्रैलोक्यस्येश्वरा यूयं सर्वे वै विगतज्वराः।
प्रजासर्गे न सोऽस्तीह आज्ञां यो मे निवर्त्तयेत् ।। ५४.५२ ।।

विमानगामिनः सर्वे सर्वे स्वच्छन्दगामिनः।
अध्यात्मे चाधिभूते च अधिदैवे च नित्यशः।
प्रजाः कर्मविपाकेन शक्ता यूयं प्रवर्त्तितुम् ।। ५४.५३ ।।

तत्किमर्थं भयोद्विग्ना मृगाः सिंहार्दिता इव।
किं दुःखं केन सन्तापः कुलो वा भयमागतम्।
एतत्सर्वं यथान्यायं शीघ्रमाख्यातुमर्हथ ।। ५४.५४ ।।

श्रुत्वा वाक्यं ततस्तस्य ब्रह्मणो वै महात्मनः।
ऊचुस्ते ऋषिभिः सार्ध्दं सुरदैत्येन्द्रदानवाः ।। ५४.५५ ।।

सुरासुरैर्मथ्यमाने पाथोधौ च महात्मभिः।
भुजङ्गभृङ्गसङ्काशं नीलजीमूतसन्निभम्।
प्रादुर्भूतं विषं घोरं संवर्ताग्निसमप्रभम् ।। ५४.५६ ।।

कालमृत्युरिवोद्भूतं युगान्तादित्यवर्चसम्।
त्रैलोक्योत्सादि सूर्याभं प्रस्फुरन्तं समन्ततः ।। ५४.५७ ।।

विषेणोत्तिष्ठमानेन कालानलसमत्विषा।
निर्दग्धो रक्तगौराङ्गः कृतकृष्णो जनार्दनः ।। ५४.५८ ।।

दृष्ट्वा तं रक्तगौराङ्गं कृतकृष्णं जनार्दनम्।
भीताः सर्वे वयं देवास्त्वामेव शरणं गताः ।। ५४.५९ ।।

सुराणामसुराणाञ्च श्रुत्वा वाक्यं पितामहः।
प्रत्युवाच महातेजा लोकानां हितकाम्यया ।। ५४.६० ।।

श्रृणुध्वं देवताः सर्वे ऋषयश्च तपोधनाः।
यत्तदग्रे समुत्पन्नं मथ्यमाने महोदधौ ।। ५४.६१ ।।

विषं कालानलप्रख्यं कालकूटेति विश्रुतम्।
येन प्रोद्भूतमात्रेण कृतकृष्णो जनार्दनः ।। ५४.६२ ।।

तस्य विष्णुरहञ्चापि सर्वे ते सुरपुङ्गवाः।
न शक्नुवन्ति वै सोढुं वेगमन्ये तु शङ्करात् ।। ५४.६३ ।।

इत्युक्त्वा पद्मगर्भाभः पद्मयोनिरयोनिजः ।
ततः स्तोतुं समारब्धो ब्रह्मा लोकपितामहः ।। ५४.६४ ।।

नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे।
नमः पिनाकहस्ताय वज्रहस्ताय वै नमः ।। ५४.६५ ।।

नमस्त्रैलोक्यनाथाय भूतानाम्पतये नमः।
नमः सुरारिसंहर्त्रे तापसाय त्रिचक्षुषे ।। ५४.६६ ।।

ब्रह्मणे चैव रुद्राय विष्णवे चैव ते नमः।
साङ्ख्याय चैव योगाय भूतग्रामाय वै नमः ।। ५४.६७ ।।

मन्मताङ्गविनाशाय कालकालाय वै नमः।
रुद्राय च सुरेशाय देवदेवाय ते नमः। ५४.६८।
कपर्दिने करालाय शङ्कराय कपालिने।
विरूपायैकरूपाय शिवाय वरदाय च ।। ५४.६९ ।।

त्रिपुरघ्नाय वन्द्याय मातृणाम्पतये नमः।
बुद्धाय चैव शुद्धाय मुक्ताय केवलाय च ।। ५४.७० ।।

नमः कमलहस्ताय दिग्वासाय शिखण्डिने ।
लोक त्रयवलिधात्रे च चन्द्राय वरुणाय च ।। ५४.७१ ।।

अग्राय चैव चोग्राय विप्रायानेकचक्षुषे।
रजसे चैव सत्त्वाय तमसेऽव्यक्तयोनये ।। ५४.७२ ।।

नित्यायानित्यरूपाय नित्यानित्याय वै नमः।
व्यक्ताय चैवाव्यक्ताय व्यक्ताव्यक्ताय वै नमः ।। ५४.७३ ।।

चिन्त्याय चैवाचिन्त्याय चिन्त्याचिन्त्याय वै नमः।
भक्तानामार्तिनाशाय नरनारायणाय च ।। ५४.७४ ।।

उमाप्रियाय शर्वाय नन्दिचक्राङ्किताय च।
पक्षमासार्द्धमासाय नमः संवत्सराय च ।। ५४.७५ ।।

बहुरूपाय मुण्डाय दण्डिनेऽथ वरूथिने।
नमः कपालहस्ताय दिग्वासाय शिखण्डिने ।। ५४.७६ ।।

ध्वजिने रथिने चैव यमिने ब्रह्मचारिणे।
ऋग्यजुः सामवेदाय पुरुषायेश्वराय च।
इत्येवमादिचरितैस्तुभ्यं देव नमोऽस्तु ते ।। ५४.७७ ।।

**।।श्रीमहादेव उवाच।।**
एवं स्तुतस्ततो देवैः प्रणिपत्य वरानने ।। ५४.७८ ।।

ज्ञात्वा तु भक्तिं मम देवदेवो गङ्गाजलाप्लावितकेशदेशः।
सूक्ष्मोऽतियोगातिशयादचिन्त्यो न हि प्लुतो व्यक्तमुपैति चन्द्रः ।। ५४.७९ ।।

एवं भगवता पूर्वं ब्रह्मणा लोककर्तृणा।
स्तुतोऽहं विविधैः स्तोत्रै र्वेदवेदाङ्गसम्भवैः ।। ५४.८० ।।

ततः प्रीतो ह्यहं तस्मै ब्रह्मणे सुमहात्मने।
ततोऽहं सूक्ष्मया वाचा पितामहमथाब्रुवम् ।। ५४.८१ ।।

भगवन् भूतभव्येश लोकनाथ जगत्पते।
किं कार्यं ते मया ब्रह्मन् कर्त्तव्यं वद सुव्रत ।। ५४.८२ ।।

श्रुत्वा वाक्यं ततो ब्रह्मा प्रत्युवाचाम्बुजेक्षणः ।
भूतभव्यभवन्नाथ श्रूयतां कारणेश्वर ।। ५४.८३ ।।

सुरासुरैर्मथ्यमाने पयोधावम्बुजेक्षण।
भगवन्मेघ सङ्काशं नीलजीमूतसन्निभम् ।। ५४.८४ ।।

प्रादुर्भूतं विषङ्घोरं संवर्त्ताग्निसमप्रभम्।
कालमृत्युरिवोद्भूतं युगान्तादित्यवर्च्चसम् ।। ५४.८५ ।।

त्रैलोक्योत्सादि सूर्याभं विस्फुरन्तं समन्ततः।
अग्रे समुत्थितं तस्मिन् विषङ्कालानलप्रभम् ।। ५४.८६ ।।

तं दृष्ट्वा तु वयं सर्वे भीताः सम्भ्रान्तचेतसः।
तत् पिबस्व महादेव लोकानां हितकाम्यया ।
भवानग्र्यस्य भोक्ता वै भवांश्चैव वरः प्रभुः ।। ५४.८७ ।।

त्वामृतेऽन्यो महादेव विषं सोढुं न विद्यते ।
नास्ति कश्चित् पुमान् शक्तस्त्रैलोक्येषु च गीयते ।। ५४.८८ ।।

एवं तस्य वचः श्रुत्वा ब्रह्मणः परमेष्ठिनः।
बाढमित्येव तद्वाक्यं प्रतिगृह्य वरानने ।। ५४.८९ ।।

ततोऽहं पातुमारब्धो विषमन्तकसन्निभम्।
पिबतो मे महाघोरं विषं सुरभयङ्करम्।
कण्ठः समभवत्तूर्णं कृष्णो मे वरवर्णिनि ।। ५४.९० ।।

तंदृष्ट्वो त्पलपत्राभं कण्ठे सक्तमिवोरगम् ।
तक्षकं नागराजानं लेलिहानमिव स्थितम् ।। ५४.९१ ।।

अथोवाच महातेजा ब्रह्मा लोकपितामहः।
शोभसे त्वं महादेव कण्ठेनानेन सुव्रत ।। ५४.९२ ।।

ततस्तस्य वचः श्रुत्वा मया गिरिवरात्मजे।

पश्यतां देवसङ्गानां दैत्यानाञ्च वरानने ।। ५४.९३ ।।

यक्षगन्धर्वभूतानां पिशाचोरगरक्षसाम्।
धृतं कण्ठे विषं घोरं नीलकण्टस्ततो ह्यहम् ।। ५४.९४ ।।

तत् कालकूटं विषमुग्रतेजः कण्ठे मया पर्वतराजपुत्रि।
निवेश्यमानं सुरदैत्यसङ्घो दृष्ट्वा परं विस्मयमाजगाम ।। ५४.९५ ।।

ततः सुरगणाः सर्वे सदैत्योरगराक्षसाः।
ऊचुः प्राञ्चलयो भूत्वा मत्तमातङ्गगामिनि ।। ५४.९६ ।।

अहो बलं वीर्यपराक्रमस्ते अहो पुनर्योगबलं तवैव।
अहो प्रभुत्वं तव देवदेव गङ्गाजलास्फालितमुक्तकेश ।। ५४.९७ ।।

त्वमेव विष्णुश्चतुराननस्त्वं त्वमेव मृत्यु र्वरदस्त्वमेव।
त्वमेव सूर्यो रजनीकरश्च त्वमेव भूमिः सलिलं त्वमेव ।। ५४.९८ ।।

त्वमेव यज्ञो नियमस्त्वमेव त्वमेव भूतं भविता त्वमेव।
त्वमेव चादि र्निधनं त्वमेव स्थूलश्च सूक्ष्मः पुरुषस्त्वमेव ।। ५४.९९ ।।

त्वमेव सूक्ष्मस्य परस्य सूक्ष्मस्त्वमेव वह्निः पवनस्त्वमेव।
त्वमेव सर्वस्य चराचरस्य लोकस्य कर्त्ता प्रलये च गोप्ता ।। ५४.१०० ।।

इतीदमुक्त्वा वचनं सुरेन्द्राः प्रगृह्य सोमं प्रणिपत्य मूर्द्ना।
गता विमानैरनिगृह्य वेगैर्महात्मनो मेरुमुपेत्य सर्वे ।। ५४.१०१ ।।

इत्येतत्परमं गुह्यं पुण्यात्पुण्यमहत्तरम्।
नीलकण्ठेति यत् प्रोक्तं विख्यातं लोकविश्रुतम् ।। ५४.१०२ ।।

स्वयं स्वयम्भुवा प्रोक्तां पुण्यां पापप्रणाशनीम्।
यस्तु धारयते नित्यमेनां ब्रह्मोद्भवां कथाम्।
तस्याहं संप्रवक्ष्यामि फलं वै विपुलं महत् ।। ५४.१०३ ।।

विषं तस्य वरारोहे स्थावरं जङ्गमन्तथा।
गात्रं प्राप्य च सुश्रोणि क्षिप्रं तत् प्रतिहन्यते ।। ५४.१०४ ।।

शमयत्यशुभं घोरं दुःस्वप्नञ्चापकर्षति।
स्त्रीषु वल्लभतां याति सभायां पार्थिवस्य च ।। ५४.१०५ ।।

विवादे जयमाप्नोति युद्धे शूरत्वमेव च।
गच्छतः क्षेममध्वानं गृहे च नित्यसम्पदः ।। ५४.१०६ ।।

शरीरभेदे वक्ष्यामि गतिं तस्य वरानने।
नीलकण्ठो हरिच्छमश्रुः शशाङ्काङ्कितमूर्द्धजः ।। ५४.१०७ ।।

त्र्यक्षस्त्रिशूलपाणिश्च वृषयानः पिनाकधृक्।
नन्धितुल्यबलः श्रीमान् नन्दितुल्यपराक्रमः ।। ५४.१०८ ।।

विचरत्यचिरात् सर्वान् सर्वलोकान्ममाज्ञया ।
न हन्यते गतिस्तस्य अनिलस्य यथाम्बरे।
मम तुल्यबलो भूत्वा तिष्ठत्याभूतसम्प्लवम् ।। ५४.१०९ ।।

मम भक्ता वरारोहे ये च श्रृण्वन्ति मानवाः।
तेषां गतिं प्रवक्ष्यामि इह लोके परत्र च ।। ५४.११० ।।

ब्राह्मणो वेदमाप्नोति क्षत्रियो जयते महीम्।
वैश्यस्तु लभते लाभं शूद्रः सुखमवाप्नुयात् ।। ५४.१११ ।।

व्याधितो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात्।
गुर्विणी लभते पुत्रं कन्या विन्दति सत्पतिम्।
नष्टञ्च लभते सर्वमिहलोके परत्र च ।। ५४.११२ ।।

गवां शतसहस्रस्य सम्यग्दत्तस्य यत् फलम्।
तत् फलं भवति श्रुत्वा विभोर्दिव्यामिमां कथाम् ।। ५४.११३ ।।

पादं वा यदि वाप्यर्द्धं श्लोकं श्लोकार्द्धमेव वा।
यस्तु धारयते नित्यं रुद्रलोकं स गच्छति ।। ५४.११४ ।।

कथामिमां पुण्यफलादियुक्तां निवेद्य देव्याः शशिबद्ध मूर्द्धजः।
वृषस्य पृष्ठेन सहोमया प्रभुर्जगाम किष्किन्धगुहां गुहप्रियः ।। ५४.११५ ।।

क्रान्तं मया पापहरं महापदं निवेद्य तेभ्यः प्रददौ प्रभञ्जनः।
अधीत्य सर्वं त्वखिलं सुलक्षणं जगाम आदित्यपथं द्विजोत्तमः ।। ५४.११६ ।।

इति श्रीमहापुराणे वायु प्रोक्ते नीलकण्ठस्तवो नाम चतुः पञ्चाशोऽध्यायः ।। ५४ ।।

**।।ऋषय ऊचुः।।**

गुणकर्मप्रभावैश्च कोऽधिको वदतां वरः।
श्रोतुमिच्छामहे सम्यगाश्चर्यं गुणविस्तरम् ।। ५५.१ ।।

**।।सूत उवाच।।**

अत्राप्युदाहरन्तीममिति हासं पुरातनम् ।
महादेवस्य माहात्म्यं विभुत्वञ्च महात्मनः ।। ५५.२ ।।

पूर्वं त्रैलोक्यविजये विष्णुना समुदाहृतम्।
बलिं बद्ध्वा महौजास्तु त्रैलोक्याधि पतिः पुरा ।। ५५.३ ।।

प्रणष्टेषु च दैत्येषु प्रहृष्टे च शचीपतौ।
अथाजग्मुः प्रभुं द्रष्टुं सर्वे देवाः सवासवाः ।। ५५.४ ।।

यत्रास्ते विश्वरूपात्मा क्षीरोदस्य समी पतः।
सिद्धब्रह्मर्षयो यक्षा गन्धर्वाप्सरसाङ्गणाः ।। ५५.५ ।।

नागा देवर्षयश्चैव नद्यः सर्वे च पर्वताः।
अभिगम्य महात्मानं स्तुवन्ति पुरुषं हरिम् ।। ५५.६ ।।

त्वं धाता त्वञ्च कर्त्ताऽस्य त्वं लोकान् सृजसि प्रभो।
त्वत्प्रसादाच्च कल्याणं प्राप्तं त्रैलोक्यमव्ययम्।
असुराश्च जिताः सर्वे बलिर्बद्धश्च वै त्वया ।। ५५.७ ।।

एव मुक्तः सुरैर्विष्णुः सिद्धैश्च परमर्षिभिः।
प्रत्युवाच ततो देवान् सर्वांस्तान् पुरुषोत्तमः ।। ५५.८ ।।

श्रूयतामभिधास्यामि कारणं सुरसत्तमाः।
यः स्रष्टा सर्वभूतानां कालः कालकरः प्रभुः ।। ५५.९ ।।

येन हि ब्रह्मणा सार्द्धं सृष्टा लोकाश्च मायया।
तस्यैव च प्रसादेन आदौ सिद्धत्वमागतम् ।। ५५.१० ।।

पुरा तमसि चाव्यक्ते त्रैलोक्ये ग्रासिते मया।
उदरस्थेषु भूतेषु लोकेऽहं शयितस्तदा ।। ५५.११ ।।

सहस्रशीर्षा भूत्वा च सहस्राक्षः सहस्रपात्।
शङ्खचक्रगदा पाणिः शयितो विमलेऽम्भसि ।। ५५.१२ ।।

एतस्मिन्नन्तरे दूरात् पश्यामि ह्यमितप्रभम्।
शतसूर्यप्रतीकाशं ज्वलन्तं स्वेन तेजसा ।। ५५.१३ ।।

चतुर्वक्त्रं महा योगं पुरुषं काञ्चनप्रभम्।
कृष्णाजिनधरं देवं कमण्डलुविभूषितम्।
निमेषान्तरमात्रेण प्राप्तोऽसौ पुरुषोत्तमः ।। ५५.१४ ।।

ततो मामब्रवीद्ब्रह्मा सर्वलोक नमस्कृतः।
कस्त्वं कुतो वा किञ्चेह तिष्ठसे वद मे विभो ।। ५५.१५ ।।

अहं कर्त्तास्मि लोकानां स्वयम्भूर्विश्वतोमुखः।
एवमुक्तस्तदा देन ब्रह्मणाहमुवाच तम् ।। ५५.१६ ।।

अहं कर्त्ता च लोकानां संहर्त्ता च पुनः पुनः।
एवं सम्भाषमाणाभ्यां परस्परजयैषिणाम्।
उत्तरां दिशमास्थाय ज्वाला दृष्टाप्यधिष्ठिता ।। ५५.१७ ।।

ज्वालान्ततस्तामालोक्य विस्मित्तौ च तदानयोः ।
तेजसा चैव तेनाथ सर्वं ज्योतिःकृतं जलम् ।। ५५.१८ ।।

वर्द्धमाने तदा वह्नावत्यन्तपरमाद्भुते।
अतिदुद्राव तां ज्वालां ब्रह्मा चाहञ्च सत्वरः ।। ५५.१९ ।।

दिवं भूमिञ्च विष्टभ्य तिष्ठन्तं ज्वालमण्डलम्।
तस्य ज्वालस्य मध्ये तु पश्यावो विपुलप्रभम् ।। ५५.२० ।।

प्रादेशमात्रमव्यक्तं लिङ्गं परमदीपितम्।
न च तत्काञ्चनं मध्ये न शैलं न च राजतम् ।। ५५.२१ ।।

अनिर्द्देश्यमचिन्त्यञ्च लक्ष्यालक्ष्यं पुनः पुनः।
महौजसं महाघोरं वर्द्धमानं भृशं तदा।
ज्वालामालायतं न्यस्तं सर्वभूतभयङ्करम् ।। ५५.२२ ।।

अस्य लिङ्गस्य योऽन्तं वै गच्छते मन्त्रकारणम्।
घोर रूपिणमत्यर्थं भिन्दन्तमिव रोदसी ।। ५५.२३ ।।

ततो मामब्रवीद्ब्रह्मा अधो गच्छ त्वतन्द्रितः।
अन्तमस्य विजानीमो लिङ्गस्य तु महात्मनः ।। ५५.२४ ।।

अहमूर्द्ध्वं गमिष्यामि यावदन्तोऽस्य दृश्यते।
तदा तौ समयं कृत्वा गतावूर्द्ध्वमधश्च ह ।। ५५.२५ ।।

ततो वर्षसहस्रन्तु अहं पुनरधो गतः।
न च पश्यामि तस्यान्तं भीतश्चाहं न संशयः ।। ५५.२६ ।।

तथा ब्रह्मा च श्रान्तश्च न चान्तन्तस्य पश्यति।
समागतो मया सार्द्धं तत्रैव च महाम्भसि ।। ५५.२७ ।।

ततो विस्मयमापन्नावुभौ तस्य महात्मनः ।।

मायया मोहितौ तेन नष्टसंज्ञौ व्यवस्थितौ ।। ५५.२८ ।।

ततो ध्यानगतन्तत्र ईश्वरं सर्वतोमुखम्।
प्रभवं निधनञ्चैव लोकानां प्रभुमव्ययम् ।। ५५.२९ ।।

ब्रह्माञ्जलिपुटो भूत्वा तस्मै शर्वाय शूलिने।
महाभैरवनादाय भीमरूपाय दंष्ट्रिणे।
अव्यक्ताय महान्ताय नमस्कारं प्रकुर्महे ।। ५५.३० ।।

नमोऽस्तु ते लोकसुरेश देव नमोऽस्तु ते भूतपते महांश्च।
नमोऽस्तु ते शाश्वत सिद्धयोने नमोऽस्तु ते सर्वजगत्प्रतिष्ठ ।। ५५.३१ ।।

परमेष्ठी परं ब्रह्म अक्षरं परमं पदम्।
श्रेष्ठस्त्वं वामदेवश्च रुद्रः स्कन्दः शिवः प्रभुः ।। ५५.३२ ।।

त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कारः परं पदम्।
स्वाहाकारो नमस्कारः संस्कारः सर्वकर्मणाम् ।। ५५.३३ ।।

स्वधाकारश्च जाप्यश्च व्रतानि नियमास्तथा।
वेदा लोकाश्च देवाश्च भगवानेव सर्वशः ।। ५५.३४ ।।

आकाशस्य च शब्दस्त्वं भूतानां प्रभवाव्ययम्।
भूमेर्गन्धो रसश्वापां तेजोरूपं महेश्वर ।। ५५.३५ ।।

वायोः रुपर्शश्च देवश्च वपुश्चन्द्रमसस्तथा ।
बुधो ज्ञानञ्च देवेश प्रकृतौ बीजमेव च ।। ५५.३६ ।।

त्वं कर्त्ता सर्वभूतानां कालो मृत्युर्यमोऽन्तकः।
त्वं धारयसि लोकास्त्रींस्त्वमेव सृजसि प्रभो ।। ५५.३७ ।।

पूर्वेण वदनेन त्वमिन्द्रत्वञ्च प्रकाशसे।
दक्षिणेन च वक्रेण लोकान् संक्षीयसे प्रभो ।। ५५.३८ ।।

पश्चिमेन तु वक्रेण वरुणत्वं करोषि वै।
उत्तरेण तु वक्रेण सौम्यत्वञ्च व्यवस्थितम् ।। ५५.३९ ।।

राजसे बहुधा देव लोकानां प्रभवाव्ययः।

आदित्या वसवो रुद्रा मरुतश्चाश्विनीसुतौ ।। ५५.४० ।।

साध्या विद्याधरा नागाश्वारणाश्च तपोधनाः.
वालखिल्या महात्मानस्तपः सिद्धाश्च सुव्रताः ।। ५५.४१ ।।

त्वत्तः प्रसूता देवेश ये चान्ये नियतव्रताः।
उमा सीता सिनी वाली कुहूर्गायत्रिरेव च ।। ५५.४२ ।।

लक्ष्मीः कीर्त्तिर्धृतिर्मेधा लज्जा क्षान्तिर्वपुः स्वधा।
तुष्टिः पुष्ठिः क्रिया चैव वाचां देवी सरस्वती।
त्वत्तः प्रसूता देवेश सन्ध्या रात्रिस्तथैव च ।। ५५.४३ ।।

सूर्यायुतानामयुतप्रभा च नमोऽस्तु ते चन्द्रसहस्रगोचर।
नमोऽस्तु ते पर्वतरूपधारिणे नमोऽस्तु ते सर्वगुणाकराय ।। ५५.४४ ।।

नमोऽस्तु ते पट्टिशरूपधारिणे नमोऽस्तु ते चर्मविभूतिधारिणे ।
नमोऽस्तु ते रुद्रपिनाकपाणये नमोऽस्तु ते सायकचक्रधारिणे ।। ५५.४५ ।।

नमोऽस्तु ते भस्मविभूषिताङ्ग नमोऽस्तु ते कामशरीरनाशन।
नमोऽस्तु ते देव हिरण्यवाससे नमोऽस्तु ते देव हिरण्यबाहवे ।। ५५.४६ ।।

नमोऽस्तु ते देव हिरण्यरूप नमोऽस्तु ते देव हिरण्यनाभ।
नमोऽस्तु ते नेत्रसहस्रचित्र नमोऽस्तु ते देव हिरण्यरेतः ।। ५५.४७ ।।

नमोऽस्तु ते देव हिरण्यवर्ण नमोऽस्तु ते देव हिरण्यगर्भ।
नमोऽस्तु ते देव हिरण्यचीर नमोऽस्तु ते देव हिरण्यदायिने ।। ५५.४८ ।।

नमोऽस्तु ते देव हिरण्यमालिने नमोऽस्तु ते देव हिरण्यवाहिने।
नमोऽस्तु ते देव हिरण्यचीर नमोऽस्तु ते भैरवनादनादिने ।। ५५.४९ ।।

नमोऽस्तु ते भैरववेगवेग नमोऽस्तु ते शङ्कर नीलकण्ठ।
मनोऽस्तु ते दिव्यसहस्रबाहो नमोऽस्तु ते नर्त्तनवादनप्रिय ।। ५५.५० ।।

एवं संस्तूयमानस्तु व्यक्तो भूत्वा महामतिः।
भाति देवो महायोगी सूर्यकोटिसमप्रभः ।। ५५.५१ ।।

अभिभाष्यस्तदा हृष्टो महादेवो महेश्वरः।
वक्रकोटिसहस्रेण ग्रसमान इवापरम् ।। ५५.५२ ।।

एकग्रीवस्त्वेकजटो नानाभूषणभूषितः।
नानाचित्रविचित्राङ्गो नानामाल्यानुलेपनः ।। ५५.५३ ।।

पिनाकपाणिर्भगवान् वृषभासनशूलधृक् ।
दण्डकृष्णाजिनधरः कपाली घोररूपधृक् ।। ५५.५४ ।।

व्यालयज्ञोपवीती च सुराणामभयङ्करः।
दुन्दुभिस्वननिर्घोषपर्जन्यनिनदोपमः।
मुक्तो हासस्तदा तेन नभः सर्वमपूरयत् ।। ५५.५५ ।।

तेन शब्देन महता वयं भीता महात्मनः।
तदोवाच महायोगी प्रीतोऽहं सुरसत्तमौ ।। ५५.५६ ।।

पश्येताञ्च महामायां भयं सर्वं प्रमुच्यताम् ।
युवां प्रसूतौ गात्रेषु मम पूर्वसनातनौ ।। ५५.५७ ।।

अयं मे दक्षिणो बाहुर्ब्रह्मा लोकपितामहः।
वामो बाहुश्च मे विष्णुर्नित्यं युद्धेषु तिष्ठति।
प्रीतोऽहं युवयोः सम्यग्वरं दझि यथेप्सितम् ।। ५५.५८ ।।

ततः प्रहृष्टमनसौ प्रणतौ पादयोः पुनः ।
ऊचतुश्च महात्मानौ पुनरेव तदानघौ ।। ५५.५९ ।।

यदि प्रीतिः समुत्पन्ना यदि देयो वरश्च नौ।
भक्तिर्भवतु नौ नित्यं त्वयि देव सुरेश्वर ।। ५५.६० ।।

**।।भगवानुवाच।।**
एवमस्तु महाभागौ सृजतां विविधाः प्रजाः।
एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ।। ५५.६१ ।।

एवमेष मयोक्तो वः प्रभावस्तस्य योगिनः।
तेन सर्वमिदं सृष्टं हेतुमात्रा वयन्त्विह ।। ५५.६२ ।।

एतद्धि रूपमज्ञातमव्यक्तं शिवसंज्ञितम्।
अचिन्त्यं तदद्दश्यञ्च पश्यन्ति ज्ञानचक्षुषः ।। ५५.६३ ।।

तस्मै देवाधिपत्याय नमस्कारं प्रयुङ्क्त ह।
येन सूक्ष्ममचिन्त्यञ्च पश्यन्ति ज्ञानचक्षुषः ।। ५५.६४ ।।

महादेव नमस्तेऽस्तु महेश्वर नमोऽस्तु ते।
सुरासुरवर श्रेष्ठ मनोहंस नमोऽस्तु ते ।। ५५.६५ ।।

**।।सूत उवाच।।**
एतच्छ्रुत्वा गताः सर्वे सुराः स्वं स्वं निवेशनम्।
नमस्कारं प्रयुञ्जानाः शङ्कराय महात्मने ।। ५५.६६ ।।

इमं स्तवं पठेद्यस्तु ईश्वरस्य महात्मनः।
कामांश्च लभते सर्वान् पापेभ्यस्तु विमुच्यते ।। ५५.६७ ।।

एतत्सर्वं सदा तेन विष्णुना प्रभविष्णुना।
महादेवप्रसादेन उक्तं ब्रह्म सनातनम्।
एतद्वः सर्वमाख्यातं मया माहेश्वरं बलम् ।। ५५.६८ ।।

इति श्रीमहापुराणे वायुप्रोक्ते लिङ्गोद्भवस्तवो नाम पञ्चपञ्चाशोऽध्यायः ।। ५५ ।।

**।।शांशपायन उवाच ।।**

अगात्कथममावास्यां मासि मासि दिवं नृपः।

ऐलः पुरूरवाः सूत कथं वाऽतर्पयत् पितृन् ।। ५६.१ ।।

**।।सूत उवाच।।**

तस्य चाहं प्रवक्ष्यामि प्रभावं शांशपायन।

ऐलस्यादित्यसंयोगं सोमस्य च महात्मनः ।। ५६.२ ।।

अपांसारमयस्येन्दोः पक्षयोः शुक्लकृष्णयोः।

ह्रासवृद्धी पितृमतः पक्षस्य च विनिर्णयः ।। ५६.३ ।।

सोमाच्चैवामृतप्राप्तिः पितृणां तर्पणं तथा।

कव्याग्नेश्चात्तसोमानां पितृणाञ्चैव दर्शनम् ।। ५६.४ ।।

यथा पुरूरवाश्चैल तर्पयामास वै पितृन्।

एतत्सर्वं प्रवक्ष्यामि पर्वाणि च यथाक्रमम् ।। ५६.५ ।।

यदा तु चन्द्रसूर्यौ तौ नक्षत्रेण समागतौ।

अमावास्यान्निवसत एकरात्रैकमण्डले ।। ५६.६ ।।

स गच्छति तदा द्रष्टुं दिवाकरनिशाकरौ।

अमावस्याममावास्यां मातामहपितामहौ।

अभिवाद्य तदा तत्र कालापेक्षः प्रतीक्ष्यते ।। ५६.७ ।।

प्रसीदमानात् सोमाच्च पित्रर्थं तत्परिस्रवात्।

ऐलः पुरूरवा विद्वान् मासि मासि प्रयत्नतः।

उवास्ते पितृमन्तं तं ससोमं स दिवास्थितः ।। ५६.८ ।।

द्विलवं कुहुमात्रं तु ते उभे तु विचार्य सः।

सिनीवालीप्रमाणेन सिनीवालीमुपासकः ।। ५६.९ ।।

कुहूमात्रां कलाञ्चैव ज्ञात्वोपास्ते कुहुं पुनः।

स तदा भानुमत्येक कालावेक्षी प्रपश्यति ।। ५६.१० ।।

सुधामृतं कुतः सोमात् प्रस्रवेन्मासतृप्तये।

दशभिः पञ्चभिश्चैव सुधामृतपरिस्रवैः ।। ५६.११ ।।

कृष्णपक्षे तदा पीत्वा दुह्यमानं तथांशुभिः।

सद्यः पक्षरता तेन सौम्येन मधुना च सः ।। ५६.१२ ।।

निर्वापणार्थं दत्तेन पित्रेण विधिना नृपः।

सुधामृतेन राजेन्द्रस्तर्पयामास वै पितृन्।

सौम्या बर्हिषदः काव्या अग्निष्वात्तास्तथैव च ।। ५६.१३ ।।

ऋतुरग्निस्तु यः प्रोक्तः स तु संवत्सरो मतः।

जज्ञिरे ह्यृतवस्तस्मादृतुभ्यश्चार्त्तवाश्च ये । ५६.१४ ।।

आर्त्तवा ह्यर्द्धमासाख्याः पितरो ह्यब्दसूनवः।
ऋतुः पितामहा मासा ऋतुश्चैवाभ्दसूनवः ।। ५६.१५ ।।
प्रपितामहास्तु वै देवाः पञ्चाब्दा ब्रह्मणः सुताः।
सौम्यास्तु सौम्यजा ज्ञेयाः काव्या ज्ञेयाः कवेः सुताः ।। ५६.१६ ।।
उपहूताः स्मृताः देवाः सोमजाः सोमपास्तथा।
आज्यपास्तु स्मृताः काव्यास्तृप्यन्ति पितृजातयः ।। ५६.१७ ।।
काव्या बर्हिषदश्चैव अग्निष्वात्ताश्च ते त्रिधा।
गृहस्था ये च यज्वाना ऋतुर्बर्हिषदो ध्रुवम् ।। ५६.१८ ।।
गृहस्थाश्चापि यज्वाना अग्निष्वात्तास्तथार्त्तवाः।
अष्टकापतयः काव्याः पञ्चाब्दास्तान्निबोधत ।। ५६.१९ ।।
एषां संवत्सरो ह्यग्निः सूर्यस्तु परिवत्सरः।
सोम ईद्वत्सरः प्रोक्तो वायुश्चैवानुवत्सरः ।। ५६.२० ।।
रुद्रस्तु वत्सरस्तेषां पञ्चाब्दा ये युगात्मकाः।
लेखाश्वैवोष्मपाश्चैव दिवाकीर्त्याश्च ते स्मृताः ।। ५६.२१ ।।
एते पिबन्त्यमावास्यां मासि मासि सुधां दिवि ।
तांस्तेन तर्पयामास यावदासीत् पुरूरवाः ।। ५६.२२ ।।
यस्मात् प्रस्रवते सोमान्मासि मासि निबोधत।
तस्मात् सुधामृतं द्वै पितॄणां सोमपायिनाम् ।। ५६.२३ ।।
एवं तदमृतं सौम्यं सुधा च मधु चैव ह ।
कृष्णपक्षे यथा चेन्दोः कलाः पञ्चदश क्रमात् ।। ५६.२४ ।।
पिबन्त्यम्बुमयीर्दे वास्त्रयस्त्रिंशत्तु छन्दजाः।
पीत्वा च मासं गच्छन्ति चतुर्द्दश्यां सुधामृतम् ।। ५६.२५ ।।
इत्येवं पीयमानस्तु दैवतैश्च निशाकरः।
समागच्छदमावास्यां भागे पञ्चदशे स्थितः ।। ५६.२६।
सुषुम्नाप्यायितञ्चैव अमावास्यां यथाक्रमम्।
पिबन्ति द्विकलं कालं पितरस्ते सुधामृतम् ।। ५६.२७ ।।
ततः पीतक्षये सोमे सूर्योऽसावेकरश्मिना।
आप्याययत्सुषुम्नेन पितॄणां सोमपायिनाम् ।। ५६.२८ ।।
निःशेषायां कलायान्तु सोममाप्याययत् पुनः।
सुषुम्नाप्यायमानस्य भागं भाग महःक्रमात्।
कलाः क्षीयन्ति ताः कृष्णाः शुक्लाश्चाप्याययन्ति च ।। ५६.२९ ।।
एवं सूर्यस्य वीर्येण चन्द्रस्याप्यायिता तनुः।
दृश्यते पौर्णमास्यां वै शुक्लः सम्पूर्णमण्डलः।

संसिद्धिरेवं सोमस्य पक्षयोः शुक्लकृष्णयोः ।। ५६.३० ।।
इत्येष पितृमान् सोमः स्मृत इद्वत्सरः क्रमात् ।
क्रान्तः पंचदशैः सार्द्धं सुधा मृतपरिस्रवैः ।। ५६.३१ ।।
अतः पर्वाणि वक्ष्यामि पर्वणां सन्धयस्तथा।
ग्रन्थिमन्ति यथा पर्वाणीक्षुवेण्वोर्भवन्त्युत ।। ५६.३२ ।।
तथार्द्धमासपर्वाणि शुक्लकृष्णानि वै विदुः।
पूर्णामावास्ययोर्भेदैर्ग्रन्थिर्या सन्धयश्च वै ।
अर्द्धमासास्तु पर्वाणि तृतीयाप्रभृतीनि तु ।। ५६.३३ ।।
अग्नयाधानक्रिया यस्मात् क्रियते पर्वसन्धिषु।
सायाह्ने प्रतिपच्चैव स कालः पौर्णमासिकः ।। ५६.३४ ।।
व्यतीपाते स्थिते सूर्ये लेसोर्द्धन्तु युगान्तरे।
युगान्तरोदिते चैव लेखोर्द्ध्वं शशिनः क्रमात् ।। ५६.३५ ।।
पौर्णमासे व्यतीपाते यदीक्षेते परस्परम्।
यस्मिन्काले स सीमान्ते स व्यतीपात एव तु ।। ५६.३६ ।।
कालं सूर्यस्य निर्द्देशं दृष्ट्वा सङ्ख्या तु सर्पति।
स वै पथं क्रियाकालः कालात्सद्यो विधीयते ।। ५६.३७ ।।
पूर्णेन्दोः पूर्णपक्षे तु रात्रिसन्धिषु पूर्णिमा।
यस्मात्तामनुपश्यन्ति पितरो दैवतैः सह।
तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता ।। ५६.३८ ।।
अत्यर्थं भ्राजते यस्मात् पौर्णमास्यान्निशाकरः।
रञ्जनाच्चैव चन्द्रस्य राकेति कवयो विदुः ।। ५६.३९ ।।
अमा वसेतामृक्षे तु यदा चन्द्रदिवाकरौ।
एकां पञ्चदशीं रात्रिममावास्या ततः स्मृता ।। ५६.४० ।।
ततोऽपरस्य तैर्व्यक्तः पौर्णमास्यां निशाकरः।
यदीक्षते व्यतीपाते दिवा पूर्णे परस्परम्।
चन्द्रार्कावपराह्ने तु पूर्णात्मानौ तु पूर्णिमा ।। ५६.४१ ।।
विच्छिन्नांताममावास्यां पश्यतश्च समागतौ।
अन्योन्यं चन्द्रसूर्यौ तौ यदा तद्दर्श उच्यते ।। ५६.४२ ।।
द्वौ द्वौ लवावमावास्यां यः कालः पर्वसन्धिषु।
द्वाक्षरं कुहुमात्रं तु एवं कालस्तु स स्मृतः।
नष्टचन्द्रा प्यमावास्या मध्यसूर्येण सङ्गता ।। ५६.४३ ।।
दिवसार्द्धेन रात्र्यर्द्धं सूर्यं प्राप्य तु चन्द्रमाः.
सूर्येण सहसा मुक्तिं गत्वा प्रातस्तनोत्सवौ ।

द्वौ कालौ सङ्गमश्चैव मध्याह्ने निष्पतेद्रविः ।। ५६.४४ ।।
प्रतिपच्छुक्लपक्षस्य चन्द्रमाः सूर्यमण्डलात्।
निर्मुच्यमानयोर्मध्ये तयोर्मण्डलयोस्तु वै ।। ५६.४५ ।।
स तदा ह्याहुतेः कालो दर्शस्य च वषट्क्रिया।
एतदृतुमुखं ज्ञेयममावास्यास्य पर्वणः ।। ५६.४६ ।।
दिवा पर्वण्यमावास्यां क्षीणेन्दौ बहुले तु वै।
तस्माद्दिवा ह्यमावास्यां गृह्यतेऽसौ दिवाकरः।
गृह्यते वै दिवा ह्यस्मादमावास्यां दिविक्षयैः ।। ५६.४७ ।।
कलानामपि वै तासां बहुमान्याजडात्मकैः।
तिथीनां नाम धेयानि विद्वद्भिः संज्ञितानि वै ।। ५६.४८ ।।
दर्शयेतामथान्योन्यं सूर्याचन्द्रमसावुभौ ।
निष्क्रामत्यथ तेनैव क्रमशः सूर्यमण्डलात् ।। ५६.४९ ।।
द्विलवेन ह्यहो रात्रं भास्करं स्पृशते शशी।
स तदा ह्याहुतेः कालो दर्शस्य च वषट्क्रिया ।। ५६.५० ।।
कुहेति कोकिरेनोक्तो यः कालः परिचिह्नितः।
तत्कालसंज्ञिता यस्मादमावास्या कुहुः स्मृता ।। ५६.५१ ।।
सिनीवालीप्रमाणेन क्षीणशेषो निशाकरः।
अमावास्यां विशत्यर्कं सिनीवाली ततः स्मृता ।। ५६.५२ ।।
पर्वणः पर्वकालस्तु तुल्यो वै तु वषट्क्रिया।
चन्द्रसूर्यव्यतीपाते उभे ते पूर्णिमे स्मृते ।। ५६.५३ ।।
प्रतिपत्पञ्चदश्योश्च पर्वकालो द्विमात्रकः।
कालः कुहुसिनीवाल्योः समुद्रो द्विलवः स्मृतः ।। ५६.५४ ।।
अर्काग्निमण्डले सोमे पर्वकालः कलाश्रयः।
एवं स शुक्रपक्षो वै रजन्याः पर्वसन्धिषु ।। ५६.५५ ।।
सम्पूर्णमण्डलः श्रीमांश्चन्द्रमा उपरज्यते।
यस्मादाप्यायते सोमः पञ्चदश्यान्तु पूर्णिमा ।। ५६.५६ ।।
दशभिः पञ्चभिश्चैव कलाभिर्दिवसक्रमात्।
तस्मात् कला पञ्चदशी सोमे नास्ति तु षोडशी।
तस्मात्सोमस्य भवति पञ्चदश्यां महाक्षयः ।। ५६.५७ ।।
इत्येते पितरो देवाः सोमपाः सोमवर्द्धनाः।
आर्त्तवा ऋतवो यस्मात्ते देवा भावयन्ति च ।। ५६.५८ ।।
अतः पितॄन् प्रवक्ष्यामि मासश्राद्धभुजस्तु ये।
तेषां गतिञ्च सत्त्वञ्च गतिं श्राद्धस्य चैव हि ।। ५६.५९ ।।

न मृतानां गतिः शक्या विज्ञातुं पुनरागतिः।
तपसापि प्रसिद्धेन किं पुनर्मांसचक्षुषा ।। ५६.६० ।।
श्राद्धदेवान् पिदृनेतान् पितरो लौकिकाः स्मृताः।
देवाः सौम्याश्च यज्वानः सर्वे चैव हृययोनिजाः ।। ५६.६१ ।।
देवास्ते पितरः सर्वे देवास्तान् भावयन्त्युत।
मनुष्याः पितरश्चैव तेभ्योऽन्ये लौकिकाः स्मृताः ।। ५६.६२ ।।
पिता पितामहश्चैव तथैव प्रपितामहः।
यज्वानो ये तु सोमे न सोमवन्तस्तु ते स्मृताः ।। ५६.६३ ।।
ये यज्वानः स्मृतास्तेषां ते वै बर्हिषदः स्मृताः।
कर्मस्वेतेषु युक्तास्ते तृप्यन्त्यादेहसम्भवात् ।। ५६.६४ ।।
अग्निष्वात्ताः स्मृतास्तेषां होमिनो याज्ययाजिनः।
ये वाप्याश्रमधर्मेण प्रस्थानेषु व्यवस्थिताः ।। ५६.६५ ।।
अन्ते च नैव सीदन्ति श्रद्धायुक्तेन कर्मणा।
ब्रह्मचर्येण तपसा यज्ञेन प्रजया च वै ।। ५६.६६ ।।
श्रद्धया विद्यया चैव प्रदानेन च सप्तधा।
कर्मस्वेतेषु ये युक्ता भवन्त्या देवपातनात् ।। ५६.६७ ।।
देवैस्तैः पितृभिः सार्द्धं सूक्ष्मकैः सोमपायकैः।
स्वर्गता दिवि मोदन्ते पितृमन्तमुपासते ।। ५६.६८ ।।
प्रजावतां प्रशंसैव स्मृता सिद्धा क्रियावताम्।
तेषां निवापदत्तान्नं तत्कुलीनैश्च बान्धवैः ।। ५६.६९ ।।
मासं श्राद्धभुजस्तृप्ति लभन्ते सोमलौकिकाः।
एते मनुष्याः पितरो मासि श्राद्ध भुजस्तु ते ।। ५६.७० ।।
तेभ्योऽपरे तु ये चान्ये सङ्कीर्णाः कर्मयोनिषु।
भ्रष्टाश्चाश्रमधर्मेभ्यः स्वधास्वाहाविवर्जिताः ।। ५६.७१ ।।
भिन्नदेहा दुरात्मनः प्रेतभूता यमक्षये।
स्वकर्माण्येव शोचन्ति यातनास्थानमागताः ।। ५६.७२ ।।
दीर्घायुषोऽतिशुष्काश्च विवर्णाश्च विवाससः।
क्षुत्पिपासापरीताश्च विद्रवन्ति इतस्ततः ।। ५६.७३ ।।
सरित्सरस्तडागानि वापिश्चैव जलेप्सवः।
परान्नानि च लिप्सन्ते कम्पमानास्ततस्ततः ।। ५६.७४ ।।
स्थानेषु पाच्यमानाश्च यातायातेषु तेषु वै।
शाल्मलौ वैतरण्याञ्च कुम्भीपाकेषु तेषु च ।। ५६.७५ ।।
करम्भवालुकायाञ्च असिपत्रवने तथा।

शिलासम्पेषणे चैव पात्यमानाः स्वकर्मभिः ।। ५६.७६ ।।
तत्र स्थानानि तेषां वै दुःखानामप्यनाकवत्।
तेषां लोकान्तरस्थानां विविधैर्नामगोत्रतः ।। ५६.७७ ।।
भूम्यापसव्यदर्भेषु दत्त्वा पिण्डत्रयन्तु वै।
पति तांस्तर्पयन्ते च प्रेतस्थानेष्वधिष्ठिताः ।। ५६.७८ ।।
अप्राप्ता यातनास्थानं सृष्टा ये भुवि पञ्चधा।
पश्चादिस्थावरान्तेषु भूतानां तेषु कर्मसु ।। ५६.७९ ।।
नानारूपासु जातीषु तिर्यग्योनिषु चातिषु।
यदाहारा भवन्त्येते तासु तास्विह योनिषु।
तस्मिस्तस्मिंस्तदाहारं श्राद्धदत्तोपतिष्ठति ।। ५६.८० ।।
काले न्यायागतं पात्रं विधिना प्रतिपादितम्।
प्राप्नोत्यन्नं यथा दत्तं बन्धुर्यत्रावतिष्ठते ।। ५६.८१ ।।
यथा गोषु प्रनष्टासु वत्सो विन्दति मातरम्।
तथा श्राद्धे तदिष्टानां मन्त्रः प्रापयते पितॄन् ।। ५६.८२ ।।
एवं हृयविकलं श्राद्धं श्राद्धदत्तन्तु मन्त्रतः।
सनत्कुमारः प्रोवाच पश्यन् दिव्येन चक्षुषा।
गतागतिज्ञः प्रेतानां मन्त्रः प्रापयते पितॄन् ।। ५६.८३ ।।
बह्वीकास्वोष्मपाश्चैव दिवाकीर्त्याश्च ते स्मृताः।
कृष्णपक्षस्त्वहस्तेषां शुक्लः स्वप्राय शर्वरी ।। ५६.८४ ।।
इत्ये ते पितरो देवा देवाश्च पितरश्च वै।
ऋतार्त्तवा अनेके तु अन्योन्यपितरः स्मृताः ।। ५६.८५ ।।
एते तु पितरो देवा मानुषाः पितरश्च ये।
प्रीतेषु तेषु प्रीयन्ते श्रद्धायुक्तेन कर्मणा ।। ५६.८६ ।।
इत्येवं पितरः प्रोक्ताः पिदृणां सोमपायिनाम्।
एतत् पितृमतत्वं हि पुराणे निश्चयो मतः ।। ५६.८७ ।।
इत्यर्कपितृ सोमानामैलस्य च समागमः।
सुधामृतस्य चावाप्तिः पितॄणाञ्चैव तर्पणम् ।। ५६.८८ ।।
पूर्णिमावास्ययोः कालः पितॄणां स्थानमेव च।
समासात्कीर्त्तितस्तुभ्यमेष सर्गः सनातनः ।। ५६.८९ ।।
वैश्वरूप्यन्तु सर्वस्य कथितञ्चैकदेशिकम्।
न शक्यं परिसङ्ख्यातुं श्रद्धेयं भूतिमिच्छता ।। ५६.९० ।।
स्वायम्भुवस्य हीत्येष सर्गः क्रान्तो मयात्र वै।

विस्तरेणानुपूर्व्या च भूयः किं वर्णयाम्यहम् ।। ५६.९१ ।।
इति श्रीमहापुराणे वायुप्रोक्ते पितृवर्णनं नाम षच्पञ्चाशोऽध्यायः ।। ५६ ।।

**।।ऋषय ऊचुः ।।**

चतुर्युगानि यान्यासन् पूर्वं स्वायम्भुवेऽन्तरे ।

तेषां निसर्गं तत्त्वञ्च श्रोतुमिच्छामि विस्तरात् ।। ५७.१ ।।

**।।सूत उवाच।।**

पृथिव्यादिप्रसङ्गेन यन्मया प्रागुदाहृतम्।

तेषाञ्चतुर्युगं ह्येतत् प्रवक्ष्यामि निबोधत ।। ५७.२ ।।

सङ्ख्ययेह प्रसङ्ख्याय विस्ताराच्चैव सर्वशः।

युगञ्च युगभेदञ्च युगधर्मन्तथैव च ।। ५७.३ ।।

युगसन्ध्यंशकञ्चैव युगसन्धानमेव च।

षट्प्रकारयुगाख्यानां प्रवक्ष्यामीह तत्त्वतः ।। ५७.४ ।।

लौकिकेन प्रमाणेन विबुद्धोऽब्दस्तु मानुषः।

तेनाब्देन प्रसङ्ख्याय वक्ष्यामीह चतुर्युगम् ।। ५७.५ .

निमेषकालः काष्ठा च कलाश्चापि मुहूर्त्तकाः।

निमेषकालतुल्यं हि विद्याल्लघ्वक्षरञ्चयत् ।। ५७.६ ।।

काष्ठा निमेषा दश पञ्च चैव त्रिंशच्च काष्ठा गणयेत् कलास्ताः।

त्रिंशत् कलाश्चैव भवेन्मुहूर्त्तास्तत्त्रिंशता रात्र्यहनी समेते ।। ५७.७ ।।

अहोरात्रे विभजते सूर्यो मानुषदैविके।

तत्राहः कर्मचेष्टायां रात्रिः स्वप्नाय कल्प्यते ।। ५७.८ ।।

पित्र्ये रात्र्यहनी मासः प्रविभागस्तयोः पुनः।

कृष्ण पक्षस्त्वहस्तेषां शुक्लः स्वप्नाय शर्वरी ।। ५७.९ ।।

त्रिंशच्च मानुषा मासाः पित्र्यो मासश्च स स्मृतः।

शतानि त्रीणि मासानां षष्टया चाप्यधिकानि वै।

पित्र्यः संवत्सरो ह्येष मानुषेण विभाव्यते ।। ५७.१० ।।

मानुषेणैव मानेन वर्षाणां यच्छतं भवेत् ।

पिदॄणां त्रीणि वर्षाणि सङ्खयातानीह तानि वै।

चत्वार श्चाधिका मासाः पित्रे चैवेह कीर्त्तिताः ।। ५७.११ ।।

लोकिकेनैव मानेन अब्दो यो मानुषः स्मृतः।

एतद्दिव्यमहोरात्रं शास्त्रेऽस्मिन् निश्वयो मतः ।। ५७.१२ ।।

दिव्ये रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः ।

अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम् ।। ५७.१३ ।।

ये ते रात्र्यहनी दिव्ये प्रसङ्खयाते तयोः पुनः।

त्रिंशच्च तानि वर्षाणि दिव्यो मासस्तु स स्मृतः ।। ५७.१४ ।।

मानुषञ्च शतं विद्धि दिव्यमासास्त्रयस्तु ते।

दश चैव तथाहानि दिव्यो ह्येष विधिः स्मृतः ।। ५७.१५ ।।

त्रीणि पर्षशतान्येव षष्टिवर्षाणि यानि च।

दिव्यः संवत्सरो ह्येष मानुषेण प्रकीर्त्तितः ।। ५७.१६ ।।

त्रीणि वर्षसहस्राणि मानुषेण प्रमाणतः।

त्रिंशद्यानि तु वर्षाणि मतः सप्तर्षिवत्सरः ।। ५७.१७ ।।

नव यानि सहस्राणि वर्षाणां मानुषाणि तु ।

अन्यानि नवतिश्चैव क्रौञ्चः संवत्सरः स्मृतः ।। ५७.१८ ।।

षट्त्रिंशत्तु सहस्राणि वर्षाणां मानुषाणि तु ।

वर्षाणान्तु शतं ज्ञेयं दिव्यो ह्येष विधिः स्मृतः ।। ५७.१९ ।।

त्रीण्येव नियुतान्येव वर्षाणां मानुषाणि च।

षष्टिश्चैव सहस्राणि सङ्ख्यातानि तु सङ्ख्यया।

दिव्यवर्षसहस्रन्तु प्राहुः सङ्ख्याविदो जनाः ।। ५७.२० ।।

इत्येवमृषिभिर्गीतं दिव्यया सङ्ख्ययान्वितम्।

दिव्येनैव प्रमाणेन युगसङ्कचाप्रकल्पनम् ।। ५७.२१ ।।

चत्वारि भारते वर्षे युगानि कवयो विदुः।

पूर्वं कृतयुगं नाम ततस्त्रेता विधीयते।

द्वापरश्च कलि श्चैव युगान्येतानि कल्पयेत् ।। ५७.२२ ।।

चत्वार्याहुः सहस्राणि वर्षाणान्तु कृतं युगम्।

तत्र तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ।। ५७.२३ ।।

इत रासु च सन्ध्यासु सन्ध्यांशेषु च वै त्रिषु ।

एकापायेन वर्त्तन्ते सहस्राणि शतानि च ।। ५७.२४ ।।

त्रेता त्रीणि सहस्राणि सङ्ख्यैव परिकीर्त्यते।

तस्यास्तु त्रिशती सन्ध्या सन्ध्यांशश्च तथाविधः ।। ५७.२५ ।।

द्वापरं द्वे सहस्रे तु युगमाहुर्मनीषिणः ।

तस्यापि द्विशती सन्ध्या सन्धयांशः सन्ध्यया समः ।। ५७.२६ ।।

कलिं वर्षसहस्रन्तु युगमाहुर्मनीषिणः।

तस्याप्येकशती सन्ध्या सन्ध्यया समः ।। ५७.२७ ।।

एषा द्वादशसाहस्री युगाख्या परिकीर्त्तिता।

कृतं त्रेता द्वापरञ्च कलिश्चैव चतुष्टयम् ।। ५७.२८ ।।

अत्र संवत्सराः सृष्टा मानुषेण प्रमाणतः।

कृतस्य तावद्वक्ष्यामि वर्षाणां तत्प्रमाणतः ।। ५७.२९ ।।

सहस्राणां शतान्यत्र चतुर्दश तु सङ्ख्यया।

चत्वारिंशत् सहस्राणि कलिकालयुगस्य तु ।। ५७.३० ।।

एवं सङ्ख्यातकालश्च कालेष्विह विशेषतः।

एवं चतुर्युगः कालो विना सन्ध्यांशकैः स्मृतः ।। ५७.३१ ।।

चत्वारिंशत्त्रीणि चैव नियुतानि च सङ्ख्यया ।

विंशतिश्च सहस्राणि ससन्ध्यांशश्चतुर्युगः ।। ५७.३२ ।।

एवं चतुर्युगाख्या तु साधिका ह्येकसप्ततिः।

कृतत्रेतादियुक्ता सा मनोरन्तरमुच्यते ।। ५७.३३ ।।

मन्वन्तरस्य सङ्ख्या तु वर्षाग्रेण निबोधत।

त्रिंशत्कोट्यस्तु वर्षाणां मानुषेण प्रकीर्तिताः ।। ५७.३४ ।।

सप्तषष्टिस्तथान्यानि नियुतान्यधिकानि तु।

विंशतिश्च सहस्राणि कालोऽयं साधिकां विना ।। ५७.३५ ।।

मन्वन्तरस्य सङ्ख्यैषा सङ्ख्याविद्भिर्द्विजैः स्मृता।

मन्वन्तरस्य कालोऽयं युगैः सार्द्धं प्रकीर्तितः ।। ५७.३६ ।।

चतुः सहस्रयुक्तं वै प्रथमन्तत् कृतं युगम्।

त्रेतावशिष्टं वक्ष्यामि द्वापरं कलिमेव च ।। ५७.३७ ।।

युगपत्समवेतार्थो द्विधा वक्तुं न शक्यते।

क्रमागतं मया ह्येतत्तुभ्यं प्रोक्तं युगद्वयम्।

ऋषिवंशप्रसङ्गेन व्याकुलत्वात्तथैव च ।। ५७.३८ ।।

तत्र त्रेतायुगस्यादौ मनुः सप्तर्षयश्च ते।

श्रौतं स्मार्त्तञ्च धर्मञ्च ब्रह्मणा च प्रचोदितम् ।। ५७.३९ ।।

दाराग्निहोत्रसंयोगमृग्यजुः सामसंज्ञितम्।

इत्यादिलक्षणं श्रौतं धर्मं सप्तर्षयोऽब्रुवन् ।। ५७.४० ।।

परस्परागतं धर्मं स्मार्त्तञ्चाचारलक्षणम्।

वर्णाश्रमाचारयुतं मनुः स्वायम्भुवोऽब्रवीत् ।। ५७.४१ ।।

सत्येन ब्रह्मचर्येण श्रुतेन तपसा च वै।

तेषां सुतप्ततपसामार्षेयेण क्रमेण तु ।। ५७.४२ ।।

सप्तर्षीणां मनोश्चैव आद्ये त्रेतायुगस्य तु ।

अबुद्धिपूर्वकं तेषामक्रियापूर्वमेव च ।। ५७.४३ ।।

अभिव्यक्तास्तु ते मन्त्रास्तारकाद्यैर्निदर्शनैः।

आदिकल्पे तु देवानां प्रादुर्भूतास्तु ते स्वयम् ।। ५७.४४ ।।

प्रणाशे त्वथ सिद्धीनामप्यासाञ्च प्रवर्त्तनम्।

आसन् मन्त्रा व्यतीतेषु ये कल्पेषु सहस्रशः।

तेमन्त्रा वै पुनस्तेषां प्रतिभाससमुत्थिताः ।। ५७.४५ ।।

ऋचो यजूंषि सामानि मन्त्राश्चाथर्वणानि च।

सप्तर्षिभिस्तु ते प्रोक्ताः स्मार्तं धर्मं मनुर्जगौ ।। ५७.४६ ।।

त्रेतादौ संहिता वैदाः केवला धर्मशेषतः।

संरोधादायुषश्चैवव्यस्यन्ते द्वापरेषु ते ।। ५७.४७ ।।

ऋषयस्तपसा देवाः कलौ च द्वापरेषु वै।

अनादिनिधना दिव्याः पूर्वं सृष्टाः स्वयम्भुवा ।। ५७.४८ ।।

सधर्माः सप्रजाः साङ्गा यथाधर्मं युगे युगे।

विक्रीडन्ते समानार्था वेदवादा यथायुगम् ।। ५७.४९ ।।

आरम्भयज्ञा क्षत्रस्य हविर्यज्ञा विशाम्पतेः।

परिचार यज्ञाः शूद्रास्तु जपयज्ञा द्विजोत्तमाः ।। ५७.५० ।।

तथा प्रमुदिता वर्णास्त्रेतायां धर्मपालिताः।

क्रियावन्तः प्रजावन्तः समृद्धाः सुखिनस्तथा ।। ५७.५१ ।।

ब्राह्मणाननुवर्त्तन्ते क्षत्रियाः क्षत्रियान् विशः।

वैश्यानुवर्तिनः शूद्राः परस्परमनुव्रताः ।। ५७.५२ ।।

शुभाः प्रवृत्तयस्तेषां धर्मा वर्णाश्रमास्तथा।

सङ्कल्पितेन मनसा वाचोक्तेन स्वसर्मणा।

त्रेतायुगे त्वविकलः कर्म्मारम्भः प्रसिद्ध्यति ।। ५७.५३ ।।

आयुर्मेधा बलं रूपमारोग्यं धर्मशीलता।

सर्वसाधारणा ह्येते त्रेतायां वै भवन्त्युत ।। ५७.५४ ।।

वर्णाश्रमव्यवस्थानं तेषां ब्रह्मा तथाकरोत् ।

पुनः प्रजास्तु ता मोहात्तान् धर्मान्न ह्यपालयन् ।। ५७.५५ ।।

परस्परविरोधेन मनुन्ताः पुनरन्वयुः।

मनुः स्वायम्भुवो दृष्ट्वा याथातथ्यं प्रजापतिः ।। ५७.५६ ।।

धाता तु शतरूपायाः पुमान् स उदपादयत्।

प्रियव्रतोत्तानपादौ प्रधमन्तौ महीपती ।। ५७.५७ ।।

ततः प्रभृति राजान उत्पन्ना दण्डधारिणः।

प्रजानां रञ्जनाच्चैव राजानस्त्वभवन्नृषाः ।। ५७.५८ ।।

प्रच्छन्नपापा ये जेतुमशक्या मनुजा भुवि।

धर्मसंस्थापनार्थाय तेषां शास्त्रे तपो मया ।। ५७.५९ ।।

वर्णानां प्रविभागाश्च त्रेतायां संप्रकीर्तिताः।

संहिताश्च ततो मन्त्रा ऋषभिर्ब्रह्मणैस्तु ते ।। ५७.६० ।।

यज्ञः प्रवर्तितश्चैव तदा ह्येवन्तु दैवतैः।

यामैः शुक्लैर्जपैश्चैव सर्वसम्भारसंवृतैः ।। ५७.६१ ।।

सार्द्धं विश्वभुजा चैव देवेन्द्रेण महौजसा।

स्वायम्भुवेऽन्तरे देवैर्यज्ञास्ते प्राक् प्रवर्तिताः ।। ५७.६२ ।।

सत्यं जपस्तपो दानं त्रेतायां धर्म उच्यते।

क्रिया धर्मश्च ह्रसते सत्यधर्मः प्रवर्त्तते ।। ५७.६३ ।।

प्रजायन्ते ततः शूरा आयुष्मन्तो महाबलाः।

न्यस्तदण्डमहाभागा यज्वानो ब्रह्मवादिनः ।। ५७.६४ ।।

पद्म पत्रायताक्षाश्च पृथूरस्काः सुसंहिताः।

सिंहान्तका महासत्त्वा मत्तमातङ्गगामिनः ।। ५७.६५ ।।

महाधनुर्द्धराश्चैव त्रेतायां चक्रवर्तिनः।

सर्वलक्षणसम्पन्ना न्यग्रोधपरिमण्डलाः ।। ५७.६६ ।।

न्यग्रोधौ तौ स्मृतौ बाहू व्यामो न्यग्रोध उच्यते।

वामेनैवोच्छ्र्याद्यस्य सम ऊर्द्ध्वन्तु देहिनः।

समुच्छ्रयः परीणाहो ज्ञेयो न्यग्रोधमण्डलः ।। ५७.६७ ।।

चक्रं रथो मणिर्भार्या निधिरश्चागजास्तथा।

सप्तातिशयरत्नानि सर्वेषाञ्चक्रवर्त्तिनाम् ।। ५७.६८ ।।

चक्रं रथो मणिः खड्गं धनूरत्नञ्च पञ्चमम्।

केतुर्निधिश्च सप्तैते प्राणहीनाः प्रकीर्त्तिताः ।। ५७.६९ ।।

भार्या पुरोहितश्चैव सेनानी रथकृच्च यः।

मन्त्र्यश्वः कलभश्चैव प्राणिनः सम्प्रकीर्त्तिताः ।। ५७.७० ।।

रत्नान्येतानि दिव्यानि संसिद्धानि महात्मनाम्।

चतुर्दश विधेयानि सर्वेषां चक्रवार्तिनाम् ।। ५७.७१ ।।

विष्णोरंशेन जायन्ते पृथिव्यां चक्रवर्त्तिनः।

मन्वन्तरेषु सर्वेषु अतीतानागतेषु वै ।। ५७.७२ ।।

भूतभव्यानि यानीह वर्त्तमानानि यानि च।

त्रेतायुगादिकेष्वत्र जायन्ते चक्रवर्त्तिनः ।। ५७.७३ ।।

भद्राणीमानि तेषां वै भवन्तीह महीक्षिताम्।

अद्भुतानि च चत्वारि बलं धर्मः सुखं धनम् ।। ५७.७४ ।।

अन्योन्यस्याविरोधेन प्राप्यन्ते वै नृपैः समम्।

अर्थो धर्मश्च कामश्च यशो विजय एव च ।। ५७.७५ ।।

ऐश्वर्येणाणिमाद्येन प्रभुशक्त्या तथैव च।

अन्येन तपसा चैव ॠषीनभिभवन्ति च।

बलेन तपसा चैव देवदानवामानुषान् ।। ५७.७६ ।।

लक्षणैश्चापि जायन्ते शरीरस्थैरमानुषैः।

केशस्थिता ललाटोर्णा जिह्वा चास्यप्रमार्जनी।

ताम्रप्रभोष्ठदन्तोष्ठाः श्रीवत्साश्चोर्द्ध्वरोमशाः ।। ५७.७७ ।।

आजानुबाहनश्चैव जालहस्ता वृषाङ्किताः।

न्यग्रोधपरिणाहाश्च सिंहस्कन्धाः सुमेहनाः ।

गजेन्द्रगतयश्चैव महाहनव एव च ।। ५७.७८ ।।

पादयोश्चक्रमत्स्यौ तु शङ्खपद्मौ तु हस्तयोः।

पञ्चाशीतिसहस्राणि ते भवन्त्यजरा नृपाः ।। ५७.७९ ।।

असङ्गा गतयस्तेषां चतस्रश्चक्रवर्त्तिनाम्।

अन्तरिक्षे समुद्रे च पाताले पर्वतेषु च ।। ५७.८० ।।

इज्या दानं तपः सत्यं त्रेतायां धर्म उच्यते ।

तदा प्रवर्त्तते धर्मो वर्णाश्रमविभागशः ।। ५७.८१ ।।

मर्यादास्थापनार्थं च दण्डनीतिः प्रवर्त्तते ।

हृष्टपुष्टाः प्रजाः सर्वा ह्यरोगाः पूर्णमानसाः ।। ५७.८२ ।।

एको वेदश्चतुष्पादस्त्रेतायुगविधौ स्मृतः।

त्रीणि वर्षसहस्राणि तदा जीवन्ति मानवाः ।। ५७.८३ ।।

पुत्रपौत्रसमाकीर्णा म्रियन्ते च क्रमेण तु ।

एष त्रेतायुगे धर्मस्त्रेतासन्धौ निबोधत ।। ५७.८४ ।।

त्रेतायुग स्वभावस्तु सन्ध्यापादेव वर्त्तते ।

सन्ध्यायां वै स्वभावस्तु युगपादेन तिष्ठति ।। ५७.८५ ।।

**।।शांशपायन उवाच।।**

कथं त्रेतायुगमुखे यज्ञस्यासीत्प्रवर्तनम्।

पूर्वं स्वायम्भुवे सर्गे यथावत्तद्ब्रवीहि मे ।। ५७.८६ ।।

अन्तर्हितायां सन्ध्यायां सार्द्धं कृतयुगेन वै।

कलाख्यायां प्रवृत्तायां प्राप्ते त्रेतायुगे तदा।

वर्णाश्रमव्यवस्थानं कृतवन्तश्च वै पुनः ।। ५७.८७ ।।

सम्भारांस्तां श्च सम्भृत्य कथं यत्रः प्रवर्तितः।

एतच्छ्रुत्वाब्रवीत्सूतः श्रूयतां शांशपायन ।। ५७.८८ ।।

iयथा त्रेतायुगमुखे यज्ञस्यासीत्प्रवर्तनम्।

ओषधीषु च जातासु प्रवृत्ते वृष्टिसर्जने।

प्रतिष्ठितायां वार्तायां गृहाश्रमपुरेषु च ।। ५७.८९ ।।

वर्णाश्रम व्यवस्थानं कृत्वा मन्त्रांश्च संहिताम्।

मन्त्रान् संयोजयित्वाथ इहामुत्रेषु कर्मसु ।। ५७.९० ।।

तथा विश्वमुगिन्द्रस्तु यज्ञं प्रावर्तयत्तदा।

दैवतैः सहितः सर्वैः सर्वसम्भारसम्भृतम् ।। ५७.९१ ।।

अथाश्वमेधे वितते समाजग्मुर्महर्षयः।

यजन्ते पशुभिर्मेध्यैर्हुत्वा सर्वे समागताः ।। ५७.९२ ।।

कर्मव्यग्रेषु ऋत्विक्षु सतते यज्ञकर्मणि।

सम्प्रगीतेषु तेष्वेवमागमेष्वथ सत्वरम् ।। ५७.९३ ।।

परिक्रान्तेषु लघुषु अध्वर्युवृषभेषु च।

आलब्धेषु च मेध्येषु तथा पशुगणेषु वै ।। ५७.९४ ।।

हविष्यग्नौ हूयमाने देवानां देवहोतृभिः।

आहूतेषु च देवेषु यज्ञभाक्षु महात्मसु ।। ५७.९५ ।।

य इन्द्रियात्मका देवा यज्ञभाजस्तथा तु ये।

तान् यजन्ते तदा देवाः कल्पादिषु भवन्ति ये ।। ५७.९६ ।।

अध्वर्यवः प्रैषकाले व्युत्थिता ये महर्षयः।

महर्षयस्तु तान् दृष्ट्वा दीनान् पशुगणान् स्थितान् ।

पप्रच्छुरिन्द्रं सम्भूय कोऽयं यज्ञविधिस्तव ।। ५७.९७ ।।

अधर्मो बलवानेष हिंसाधर्मेप्सया तव।

नेष्टः पशुवधस्त्वेष तव यज्ञे सुरोत्तम ।। ५७.९८ ।।

अधर्मो धर्मगाताय प्रारब्धः पशुभिस्त्वया।

नायं धर्मो ह्यधर्मोऽयं न हिंसा धर्म उच्यते ।। ५७.९९ ।।

आगमेन भवान् यज्ञं करोतु यदिहेच्छसि।

विधिदृष्टेन यज्ञेन धर्ममव्ययहेतुना।

यज्ञबीजैः सुरश्रेष्ठ येषु हिंसा न विद्यते ।। ५७.१०० ।।

त्रिवर्षपरमं कालमुषितैरप्ररोहिभिः।

एष धर्मो महानिन्द्र स्वयम्भुविङितः पुरा ।। ५७.१०१ ।।

एवं विश्वभुगिन्द्रस्तु मुनिभिस्तत्त्वदर्शिभिः।

जङ्गमैः स्थावरैर्वेति कैर्यष्टव्यमिहोच्यते ।। ५७.१०२ ।।

ते तु खिन्ना विवादेन तत्त्वयुक्ता महर्षयः।

सन्धाय वाक्यमिन्द्रेण प्रपच्छुश्चेश्वरं वसुम् ।। ५७.१०३ ।।

**।।ऋषय ऊचुः।।**

महाप्राज्ञ कथं दृष्टस्त्वया यज्ञविधिर्नृप।

उत्तानपादे प्रब्रूहि संशयं छिन्धि नः प्रभो ।। ५७.१०४ ।।

श्रुत्वा वाक्यं ततस्तेषामविचार्य बलाबलम्।

वेदशास्त्रमनुस्मृत्य यज्ञतत्त्वमुवाच ह।

यथोपदिष्टैर्यष्टव्यमिति होवाच पार्थिवः ।। ५७.१०५ ।।

यष्टव्यं पशुभिर्मेध्यैरथ बीजैः फलैस्तथा।

हिंसास्वभावो यज्ञस्य इति मे दर्शयत्यसौ ।। ५७.१०६ ।।

यथेह संहितामन्त्रा हिंसालिङ्गा महर्षिभिः।

दीर्घेण तपसा युक्तैर्दर्शनैस्तारकादिभिः।

तत्प्रामाण्यान्मया चोक्तं तस्मान्मा मन्तुमर्हथ ।। ५७.१०७ ।।

यदि प्रमाणं तान्येव मन्त्रवाक्यानि वै द्विजाः ।

तदा प्रावर्त्तता यज्ञो ह्यन्यथा नोऽनृतं वचः।

एवं हृतोत्तरास्ते वै युक्तात्मानस्तपोधनाः ।। ५७.१०८ ।।

अधस्व भवनं दृष्ट्वा तमर्थं वाग्यतो भव।

मिथ्यावादी नृपो यस्मात् प्रविवेश रसातलम् ।। ५७.१०९ ।।

इत्युक्तमात्रे नृपतिः प्रविवेश रसातलम्।

ऊर्द्ध्वचारी वसुर्भूत्वा रसातलचरोऽभवत् ।। ५७.११० ।।

वसुधातलवासी तु तेन वाक्येन सोऽभवत्।

धर्माणां संशयच्छेत्ता राजा वसुरथागतः ।। ५७.१११ ।।

तस्मान्न वाच्यमेकेन बहुज्ञेनापि संशयः।

बहूद्वारस्य धर्मस्य सूक्ष्माद्दूरमुपागतिः ।। ५७.११२ ।।

तस्मान्न निश्चयाद्वक्तुं धर्मः शक्यस्तु केनचित्।

देवानृषीनुपादाय स्वायम्भुवमृते मनुम् ।। ५७.११३ ।।

तस्मान्न हिंसाधर्मस्य द्वारमुक्तं महर्षिभिः।

ऋषिकोटिसहस्राणि कर्मभिः स्वैर्दिवं ययुः ।। ५७.११४ ।।

तस्मान्न दानं यज्ञं वा प्रशंसन्ति महर्षयः।

तुच्छं मूलं फलं शाकमुदपात्रं तपोधनाः।

एवं दत्त्वा विभवतः स्वर्गलोके प्रतिष्ठिताः ।। ५७.११५ ।।

अद्रोहश्चाप्यलोभश्च दमो भूतदया तपः।

ब्रह्मचर्यं तथा सत्यमनुक्रोशः क्षमा धृतिः।

सनातनस्य धर्मस्य मूलमेतद्दुरासदम् ।। ५७.११६ ।।

धर्ममन्त्रात्मको यज्ञस्तपश्चानशनात्मकम्।

यज्ञेन देवानाप्नोति वैराग्यं तपसा पुनः ।। ५७.११७ ।।

ब्राह्मण्यं कर्मसंन्यासाद्वैराग्यात् प्रेक्षते लयम्।

ज्ञानात् प्राप्नोति कैवल्यं पञ्चैता गतयः स्मृताः ।। ५७.११८ ।।

एवं विवादः सुमहान् यज्ञस्यासीत् प्रवर्त्तने।

ऋषीणां देवतानाञ्च पूर्वं स्वायम्भुवेऽन्तरे ।। ५७.११९ ।।

ततस्ते ऋषयो दृष्ट्वाद्भुतं वर्त्म बलेन तु।

वसोर्वाक्यमनादृत्य जग्मुस्ते वै यथागताः ।। ५७.१२० ।।

गतेषु देवसङ्घेषु देवा यज्ञमवाप्नुयुः।

श्रूयन्ते हि तपःसिद्धा ब्रह्मक्षत्रमया नृपाः ।। ५७.१२१ ।।

प्रियव्रतोत्तानपादौ ध्रुवो मेधातिथिर्वसुः।

सुमेधा विरजाश्चैव शङ्खपाद्रज एव च।

प्राचीनबर्हिः पर्जन्यो हविर्द्धानादयो नृपाः ।। ५७.१२२ ।।

एते चान्ये च बहवो नृपाः सिद्धा दिवं गताः।

राजर्षयो महासत्त्वा येषां कीर्त्तिः प्रतिष्ठिता ।। ५७.१२३ ।।

तस्माद्विशिष्यते यज्ञात्तपः सर्वेषु कारणैः।

ब्रह्मणा तपसा सृष्ट जगद्विश्वमिदं पुरा ।। ५७.१२४ ।।

तस्मान्नात्येति तद्यज्ञं तपोमूलमिदं स्मृतम्।

यज्ञप्रवर्त्तनं ह्येवमतः स्वायम्भुवेऽन्तरे।

ततःप्रभृति यज्ञोऽयं युगैः सह व्यवर्त्तत ।। ५७.१२५ ।।

इति श्रीमहापुराणे वायुप्रोक्ते यज्ञप्रवर्त्तनं नाम सप्तपञ्चाशोऽध्यायः ।। ५७ ।।

**।।सूत उवाच ।।**

अत ऊर्द्ध्वं प्रवक्ष्यामि द्वापरस्य विधिं पुनः।
तत्र त्रेतायुगे क्षीणे द्वापरं प्रतिपद्यते ।। ५८.१ ।।

द्वापरादौ प्रजानान्तु सिद्धिस्त्रतायुगे तु या।
परिवृत्ते युगे तस्मिंस्ततः सा संप्रणश्यति ।। ५८.२ ।।

ततः प्रवर्त्तते तासां प्रजानां द्वापरे पुनः।
लोभोऽधृतिर्वणिग्युद्धं तत्त्वानामविनिश्चयः ।। ५८.३ ।।

तम्भेदश्चैव वर्णानां कार्याणाञ्चा विनिर्णयः।
यज्ञौषधेः पशोर्दण्डो मदो दम्भोऽक्षमा बलम्।
एषां रजस्तमोयुक्ता प्रवृत्तिर्द्वापरे स्मृता ।। ५८.४ ।।

आद्ये कृते च धर्मोऽस्ति त्रेतायां सम्प्रपद्यते।
द्वापरे व्याकुलीभूत्वा प्रणश्यति कलौ युगे ।। ५८.५ ।।

वर्णानां विपरिध्वंसः संकीर्त्त्यते तथाश्रमः।
द्वैधमुत्पद्यते चैव युगे तस्मिन् श्रुतौ स्मृतौ ।। ५८.६ ।।

द्वैधात् श्रुतेः स्मृतेश्चैव निश्चयो नाधिगम्यते।
अनिश्चयादिगमनाद्धर्मतत्त्वं निगद्यते।
धर्मतत्त्वे तु भिन्नानां मतिभेदो भवेन्नृणाम् ।। ५८.७ ।।

परस्परविभिन्नैस्तैर्दृष्टीनां विभ्रमेण च।
अयं धर्मो ह्ययं नेति निश्चयो नाभिगम्यते ।। ५८.८ ।।

कारणानाञ्च वकैल्यात् कारणस्याप्यनिश्चयात्।
मतिभेदे च तेषां वै दृष्टीनां विभ्रमो भवेत् ।। ५८.९ ।।

ततो दृष्टिविभिन्नैस्तैः कृतं शास्त्रकुलन्त्विदम्।
एको वेदश्चतुष्पादस्त्रेतास्विह विधीयते ।। ५८.१० ।।

संरोधादायुषश्चैव दृश्यते द्वापरेषु च ।
वेदव्यासैश्चतुर्धा तु व्यस्यते द्वापरादिषु ।। ५८.११ ।।

ऋषिपुत्रैः पुनर्वेदा भिद्यन्ते दृष्टिविभ्रमैः।
मन्त्रब्राह्मणविन्यासैः स्वरवर्णविपर्ययैः ।। ५८.१२ ।।

संहिता ऋग्यजुःसाम्नां संहन्यन्ते श्रुतर्षिभिः।
सामान्याद्वैकृताच्चैव दृष्टिभिन्नैः क्वचित्क्वचित् ।। ५८.१३ ।।

ब्राह्मणं कल्पसूत्राणि मन्त्रप्रवचनानि च।
अन्ये तु प्रहितास्तीर्थैः केचित्तान् प्रत्यवस्थिताः ।। ५८.१४ ।।

द्वापरेषु प्रवर्त्तन्ते भिन्नवृत्ताश्रमा द्विजाः।
एकमाध्वर्यवं पूर्वमासीद्द्वैधं पुनस्ततः ।। ५८.१५ ।।

सामान्यविपरीतार्थैः कृतं शास्त्रकुलन्त्विदम्।
आध्वर्यवस्य प्रस्तावैर्बहुधा व्याकुलं कृतम् ।। ५८.१६ ।।

तथैवाथर्वऋक्साम्नां विकल्पैश्चाप्यसंक्षयैः।
व्याकुलं द्वापरे भिन्ने क्रियते भिन्नदर्शनैः ।। ५८.१७ ।।

तैषां भेदाः प्रभेदाश्च विकल्पैश्चाप्यसंक्षयाः ।
द्वापरे सम्प्रवर्तन्ते विनश्यन्ति पुनः कलौ ।। ५८.१८ ।।

तेषां विपर्ययाश्चैव भवन्ति द्वापरे पुनः।
अवृष्टिर्मरणञ्चैव तथैव व्याध्युपद्रवाः ।। ५८.१९ ।।

वाङ्मनःकर्मजैर्दुःखैर्निर्वेदो जायते पुनः ।
निर्वेदाज्जायते तेषां दुःखमोक्ष विचारणा ।। ५८.२० ।।

विचाराणाच्च वैराग्यं वैराग्याद्दोपदर्शनम्।
दोषाणां दर्शनाच्चैव द्वापरे ज्ञानसम्भवः ।। ५८.२१ ।।

तेषाञ्च मानिनां पूर्वमाद्ये स्वायम्भुवेऽन्तरे।
उत्पद्यन्ते हि शास्त्राणां द्वापरे परिपन्थिनः ।। ५८.२२ ।।

आयुर्वेदविकल्पाश्च अङ्गानां ज्यौतिषस्य च।
अर्थशास्त्रविकल्पश्च हेतुशास्त्रविकल्पनम् ।। ५८.२३ ।।

स्मृतिशास्त्रप्रभेदाश्च प्रस्थानानि पृथक् पृथक्।
द्वापरेष्वभिवर्त्तन्ते मतिभेदास्तथा नृणाम् ।। ५८.२४ ।।

मनसा कर्मणा वाचा कृच्छ्रा द्वार्त्ता प्रसिद्ध्यति।
द्वापरे सर्वभूतानां कायक्लेशपुरस्कृता ।। ५८.२५ ।।

लोभेऽधृतिर्वणिग्युद्धं तत्त्वानामविनिश्चयः।
वेदशास्त्रप्रणयनं धर्माणां सङ्करस्तथा ।। ५८.२६ ।।

द्वापरेषु प्रवर्त्तन्ते रोगो लोभो वधस्तथा।
वर्णाश्रमपरिध्वंसाः कामद्वेषौ तथैव च ।। ५८.२७ ।।

पूर्णे वर्षसहस्रे द्वे परमायुस्तुथा नृणाम्।
निःशेपे द्वापरे तस्मिन् तस्य सन्ध्या तु पादतः ।। ५८.२८ ।।

प्रतिष्ठते गुणैर्हीनो धर्मोऽसौ द्वापरस्य तु ।
तथैव सन्ध्यापादेन अंशस्तस्यावतिष्ठते ।। ५८.२९ ।।

द्वापरस्य च वर्षे या तिष्यस्य तु निबोधत।
द्वापरस्यांशशेषे तु प्रतिपत्तिः कलेरतः ।। ५८.३० ।।

हिंसासूयानृतं माया वधश्चैव तपस्विनाम्।
एते स्वभावास्तिष्यस्य साधयन्ति च वै प्रजाः ।। ५८.३१ ।।

एष धर्मः कृतः कृत्स्नो धर्मश्च परिहीयते।
मनसा कर्मणा स्तुत्या वार्त्ता सिद्ध्यति वा न वा ।। ५८.३२ ।।

कलौ प्रमारको रोगः सततं क्षुद्भयानि वै।
अनावृष्टिभयं घोरं दर्शनञ्च विपर्ययम् ।। ५८.३३ ।।

न प्रमाणं स्मृतेरस्ति तिष्ये लोके युगे युगे।
गर्भस्थो म्रियते कश्चिद्यौवनस्थस्तथापरः ।
स्थाविरे मध्यकौमारे म्रियन्ते वै कलौ प्रजाः ।। ५८.३४ ।।

अधार्मिकास्त्वनाचारास्तीक्ष्ण कोपाल्पतेजसः।
अनृतब्रुवश्च सततं तिष्ये जायन्ति वै प्रजाः ।। ५८.३५ ।।

दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः।
विप्राणां कर्मदोषैस्तैः प्रजानां जायते भयम् ।। ५८.३६ ।।

हिंसा माया तथेर्ष्या च क्रोधोऽसूयाक्षमानृतम्।
तिष्ये भवन्ति जन्तूनां रागो लोभश्च सर्वशः ।। ५८.३७ ।।

संक्षोभो जायतेऽत्यर्थं कलिमासाद्य वै युगम्।
नाधीयन्ते तदा वेदा न यजन्ते द्विजातयः।
उत्सीदन्ति नराश्चैव क्षत्रियाः सविशः क्रमात् ।। ५८.३८ ।।

क्षुद्राणामन्त्ययोनेस्तु सम्बन्धा ब्राह्मणैः सह।
भवन्तीह कलौ तस्मिन् शयनासनभोजनैः ।। ५८.३९ ।।

राजानः शूद्रभूयिष्ठा पाषण्डानां प्रवर्तकाः।
भ्रूणहत्याः प्रजास्तत्र प्रजा एवं प्रवर्त्तते ।। ५८.४० ।।

आयुर्मेधा बलं रूपं कुलञ्चैव प्रहीयते।

शूद्राश्च ब्राह्मणाचाराः शूद्राचाराश्च ब्राह्मणाः ।। ५८.४१ ।।

राजवृत्ते स्थिताश्चौराश्चौरवृत्ताश्च पार्थिवाः।
भृत्याश्च नष्टसुहृदो युगान्ते पर्युपस्थिते ।। ५८.४२ ।।

अशीलिन्योऽव्रताश्चापि स्त्रियो मद्यामिषप्रियाः।
मायामात्रा भविष्यन्ति युगान्ते प्रत्युपस्थिते ।। ५८.४३ ।।

श्वापदप्रबलत्वञ्च गवाञ्चैवाप्युपक्षयः।
साधूनां विनिवृत्तिश्च विद्यात्तस्मिन् कलौ युगे ।। ५८.४४ ।।

तदा सूक्ष्मे महोदर्को दुर्लभो भोगिनां तथा।
चतुराश्रमशैथिल्याद्धर्मः प्रविचलिष्यति ।। ५८.४५ ।।

तदा ह्यल्पफला देवी भवेद्भूमिर्महीयसी।
शूद्रास्तपश्चरिष्यन्ति युगान्ते प्रत्युपश्थिते ।। ५८.४६ ।।

तदा ह्यैकाहिको धर्मो द्वापरे यश्च मासिकः।
त्रेतायां वत्सरस्थश्च एकाहादतिरिच्यते ।। ५८.४७ ।।

अरक्षितारो हर्त्तारो बलिभागस्य पार्थिवाः।
युगान्तेषु भविष्यन्ति स्वरक्षणपरायणाः ।। ५८.४८ ।।

अक्षत्रियाश्च राजानो विशः शूद्रोपजीविनः।
शूद्राभिवादिनः सर्वे युगान्ते द्विजसत्तमाः ।। ५८.४९ ।।

पतयश्च भविष्यन्ति बहवोऽस्मिन् कलौ युगे।
चित्रवर्षी तदा देवो यदा स्यात्तु युगक्षयः ।। ५८.५० ।।

सर्वे वाणिजकाश्चापि भविष्यन्त्यधमे युगे।
भूयिष्ठं कूटमानैश्च पण्यविक्रीततेजनैः ।। ५८.५१ ।।

कुशीलचर्या पाषण्डैर्वृथारूपैः समावृतम्।
पुरुषाल्पं बहुस्त्रीकं युगान्ते पर्युपस्थिते ।। ५८.५२ ।।

बहुयाचनको लोको भविष्यति परस्परम्।
क्रव्यादनः क्रूरवाक्यो नार्जवो नानसूयकः ।। ५८.५३ ।।

न कृते प्रतिकर्ता च क्षीणो लोको भविष्यति।
अशङ्का चैव पतिते तद्युगान्तस्य लक्षणम् ।। ५८.५४ ।।

नरशून्या वसुमती शून्या चैव भविष्यति।

मण्डलानि भवन्त्यत्र देशेषु नगरेषु च ।। ५८.५५ ।।

अल्पोदका चाल्पफला भविष्यति वसुन्धरा।
गोप्तारश्चाप्यगोप्तारः प्रभविष्यन्त्यशासनाः ।। ५८.५६ ।।

हर्त्तारः पररत्नानां परदारप्रधर्षकाः।
कामात्मानो दुरात्मानो ह्यधर्मात् साहसप्रियाः ।। ५८.५७ ।।

अनष्टचेतनाः पुंसो मुक्तकेशास्तु चूलिकाः।
ऊनषोडशवर्षाश्च प्रजायन्ते युगक्षये ।। ५८.५८ ।।

शुक्लदन्ता जिताक्षाश्च मुण्डाः काषायवाससः।
शूद्रा धर्मञ्चरिष्यन्ति युगान्ते पर्युपस्थिते ।। ५८.५९ ।।

सस्यचौरा भविष्यंति तथा चैलाभिमर्शनाः।
चौराश्चौरस्य हर्त्तारो हन्तुर्हर्त्तार एव व ।। ५८.६० ।।

ज्ञानकर्मण्युपरते लोके निष्क्रियताङ्गते ।
कीटमूषिकसर्पाश्च धर्षयिष्यन्ति मानवान् ।। ५८.६१ ।।

सुभिक्षं क्षेममारोग्यं सामर्थ्यं दुर्लभं भवेत्।
कौशिकाः प्रतिवत्स्यन्ति देशान् क्षुद्भयपीडितान् ।। ५८.६२ ।।

दुःखेनाभिप्लुतानाञ्च परमायुः शतं भवेत्।
दृश्यन्ते न च दृश्यन्ते वेदाः कलियुगेऽखिलाः ।। ५८.६३ ।।

उत्सीदन्ति तथा यज्ञाः केवला धर्मपीडिताः।
कषायिणश्च निर्ग्रन्थास्तथा कापालिनश्च ह ।। ५८.६४ ।।

वेदविक्रयिणश्चान्ये तीर्थविक्रयिणोऽपरे ।
वर्णाश्रमाणां ये चान्ये पाषण्डाः परिपन्थिनः ।। ५८.६५ ।।

उत्पद्यन्ते तथा ते वै संप्राप्ते तु कलौ युगे।
नाधीयन्ते तदा वेदाः शूद्रा धर्मार्थकोविदाः ।। ५८.६६ ।।

यजन्ते नाश्वमेधेन राजानः शूद्रयोनयः।
स्त्रीवधं गोवधं कृत्वा हत्वा चैव परस्परम्।
उपहन्युस्तदान्योन्यं साधयन्ति तथा प्रजाः ।। ५८.६७ ।।

दुःखप्रचारतोऽल्पायुर्देशोत्सादः सरोगता।
मोहो ग्लानिस्तथासौख्यं तमोवृत्तं कलौ स्मृतम् ।। ५८.६८ ।।

प्रजा तु भ्रूणहत्यायामथ वै सम्प्रवर्त्तते।
तस्मादायुर्बलं रूपं कलिं प्राप्य प्रहीयते।
दुःखेनाभिप्लुतानां वै परमायुः शतं नृणाम् ।। ५८.६९ ।।

दृश्यन्ते नाभिदृश्यन्ते वेदाः कलियुगेऽखिलाः।
उत्सीदन्ते तदा यज्ञाः कोवला धर्मपीडिताः ।। ५८.७० ।।

तदा त्वल्पेन कालेन सिद्धिं यास्यन्ति मानवाः।
धन्या धर्मञ्चरिष्यन्ति युगान्ते द्विजसत्तमाः ।। ५८.७१ ।।

श्रुतिस्मृत्युदितं धर्मं ये चरन्त्यनसूयकाः.
त्रेतायां वार्षिको धर्मो द्वापरे मासिकः स्मृतः।
यथाशक्तिं चरन् प्राज्ञस्तदह्ना प्राप्नुयात् कलौ ।। ५८.७२ ।।

एषा कलियुगेऽवस्था सन्ध्यांशन्तु निबोध मे ।
युगे युगे तु हीयन्ते त्रींस्त्रीन् पादांश्च सिद्धयः ।। ५८.७३ ।।

युगस्वभावात्सन्ध्यास्तु तिष्ठन्तीमास्तु पादशः।
सन्ध्यास्वभावाच्चांशेषु पादशस्ते प्रतिष्ठिताः ।। ५८.७४ ।।

एवं सन्ध्यांशके काले सम्प्राप्ते तु युगान्तिके।
तेषां शास्ता ह्यसाधूनां भृगूणां निधनोत्थितः ।। ५८.७५ ।।

गोत्रेण वै चन्द्रमसो नाम्ना प्रमितिरुच्यते।
माधवस्य तु सोंशेन पूर्वं स्वायम्भुवेऽन्तरे ।। ५८.७६ ।।

समाः स विंशतिं पूर्णाः पर्यटन् वै वसुन्धराम्।
आचकर्ष स वै सेनां सवाजिरथकुञ्जराम् ।। ५८.७७ ।।

प्रगृहीतायुधैर्विप्रैः शतशोऽथ सहस्रशः।
स तदा तैः परिवृतो म्लेच्छान् हन्ति सहस्रशः ।। ५८.७८ ।।

स हत्वा सर्वगश्चैव राज्ञस्तान् शूद्रयोनिजात्।
पाषण्डान् स ततः सर्वान्निःशेषान् कृतवान् प्रभुः ।। ५८.७९ ।।

नात्यर्थं धार्मिका ये च तान् सर्वान् हन्ति सर्वशः।
वर्णव्यत्यासजातांश्च ये च तानुपजीविनः ।। ५८.८० ।।

उदीच्यान्मध्यदेशांश्च पार्वतीयांस्तथैव च।
प्राच्यान् प्रतीच्यांश्च तथा विन्ध्यपृष्ठापरान्तिकान् ।। ५८.८१ ।।

तथैव दाक्षिणात्यांश्च द्रविडान् सिंहलैः सह।

गान्दारान् पारदांश्चैव पह्नवान् यवनांस्तथा ।। ५८.८२ ।।

तुषारान् वर्वरांश्चीनान् शूलिकान् दरदान् खसान्।
लम्पाकान्थ केतांश्च किरातानाञ्च जातयः ।। ५८.८३ ।।

प्रवृत्तचक्रो बलवान् म्लेच्छानामन्तकृद्विभुः।
अधृष्यः सर्वभूतानां चचाराथ वसुन्धराम् ।। ५८.८४ ।।

माधवस्य तु सोंशेन देवस्य हि विजज्ञिवान् ।
पूर्वजन्मविधिज्ञैश्च प्रमितिर्नाम वीर्यवान् ।। ५८.८५ ।।

गोत्रेण वै चन्द्रमसः पूर्वे कलियुगे प्रभुः।
द्वात्रिंशेऽभ्युदिते वर्षे प्रक्रान्ते विंशतिं समाः ।। ५८.८६ ।।

विनिघ्नन् सर्वभूतानि मानवानि सहस्रशः।
कृत्वा वीर्यावशेषान्तु पृथ्वीं रूढेन कर्मणा ।
परस्परनिमित्तेन कोपेनाकस्मिकेन तु ।। ५८.८७ ।।

स साधयित्वा वृषलान् प्रायशस्तानधार्मिकान् ।
गङ्गायमुनयोर्मध्ये निष्ठां प्राप्तः सहानुगः ।। ५८.८८ ।।

ततो व्यतीते तस्मिंस्तु अमात्ये सत्यसैनिके।
उत्साद्य पार्थिवान् सर्वान् म्लेच्छांश्चैव सहस्रशः ।। ५८.८९ ।।

तत्र सन्ध्यांशके काले सम्प्राप्ते तु युगान्तिके।
स्थितास्वल्पावशिष्टासु प्रजास्विह क्वचित् क्वचित् ।। ५८.९० ।।

अप्रग्रहास्ततस्ता वै लोकचेष्टास्तु वृन्दशः।
उपहिंसन्ति चान्योन्यं प्रपद्यन्ते परस्परम् ।। ५८.९१ ।।

अराजके युगवशात् संशये समुपस्थिते।
प्रजास्ता वै ततः सर्वाः परस्परभयार्दिताः ।। ५८.९२ ।।

व्याकुलाश्च परिश्रान्तास्त्यक्त्वा दारान् गृहाणि च।
स्वान् प्राणान् समवेक्षन्तो निष्ठां प्राप्ताः सुदुःखिताः ।। ५८.९३ ।।

नष्टे श्रौते स्मृते धर्मे परस्परहतास्तदा।
निर्मर्यादा निराक्रन्दा निःस्नेहा निरपत्रपाः ।। ५८.९४ ।।

नष्टे वर्पे प्रतिहता ह्रस्वकाः पञ्जविंशकाः।
हित्वा दारांश्च पुत्रांश्च विषादव्याकुलेन्द्रियाः ।। ५८.९५ ।।

अनावृष्टिहताश्चैव वार्त्तामुत्सृज्य दुःखिताः।
प्रत्यन्तांस्तान्निपेवन्ते हित्वा जनपदान् स्वकान् ।। ५८.९६ ।।

सरितः सागरान् कूपान् सेवन्ते पर्वतांस्तदा।
मधुमांसैर्मूलफलैर्वर्त्तयन्ति सुदुःखिताः ।। ५८.९७ ।।

चीरवस्त्राजिनधरा निष्पत्रा निष्परिग्रहाः।
वर्णाश्रमपरिभ्रष्टाः सङ्करं घोरमास्थिताः ।। ५८.९८ ।।

एताः काष्ठामनुप्राप्ता अल्पशेषास्तथा प्रजाः ।
जराव्याधिक्षुधाविष्टा दुःखान्निर्वेदमागमन् ।। ५८.९९ ।।

विचारणन्तु निर्वेदात् साम्यावस्था विचारणात्।
साम्यावस्थासु सम्बोधः सम्बोधाद्धर्मशीलता ।। ५८.१०० ।।

तासुपगमयुक्तासु कलिशिष्टासु वै स्वयम्।
अहोरात्रं तदा तासां युगन्तु परिवर्त्तते ।। ५८.१०१ ।।

चित्तसम्मोहनं कृत्वा तासान्तैः सप्तमन्तु तत्।
भाविनोऽर्थस्य च बलात्ततः कृतमवर्तत ।। ५८.१०२ ।।

प्रवृत्ते तु पुनस्तस्मिंस्ततः कृतयुगे तु वै।
उत्पन्नाः कलिशिष्टास्तु कार्तयुग्यः प्रजाम्तदा ।। ५८.१०३ ।।

तिष्ठन्ति चेह ये सिद्धाः सुदृष्टा विचरन्ति च।
सदा सप्तर्षयश्चैव तत्र ते च व्यवस्थिताः ।। ५८.१०४ ।।

ब्रह्मक्षत्रविशः शूद्रा बीजार्थं ये स्मृता इह।
कलिजैः सह ते सर्वे निर्विशेषास्तदाभवन् ।। ५८.१०५ ।।

तेषां सप्तर्षयो धर्म कथयन्तीतरेषु च ।
वर्णा श्रमाचारयुक्तः श्रौतः स्मार्तो द्विधा तु सः ।। ५८.१०६ ।।

ततस्तेषु क्रियावत्सु वर्तन्ते वै प्रजाः कृते ।
श्रौतः स्मार्त्तः कृतानान्तु धर्मः सप्तर्षिदर्शितः ।। ५८.१०७ ।।

तासु धर्मव्यवस्तार्थं तिष्ठन्तीहायुगक्षयात् ।
मन्वन्तराधिकारेषु तिष्ठन्ति मुनयस्तु वै ।। ५८.१०८ ।।

यथा दावप्रदग्धेषु तृणेष्विह तपे ऋतौ ।
नवानां प्रथमं दृष्टस्तेषां मूले तु सम्भवः ।। ५८.१०९ ।।

एवं युगाद्युगस्तेह सन्तानस्तु परस्परम् ।
वर्त्तते ह्यव्यवच्छेदाद्यावन्मन्वन्तरक्षयः ।। ५८.११० ।।

सुखमायुर्बलं रूपं धर्मार्थौ काम एव च ।
युगेष्वेतानि हीयन्ते त्रीणि पादक्रमेण तु ।। ५८.१११ ।।

ससन्ध्यंशेषु हीयन्ते युगानां धर्मसिद्धयः।
इत्येष प्रतिसन्धिर्वः कीर्त्तितस्तु मया द्विजाः ।। ५८.११२ ।।

चतुर्युगानां सर्वेषामेतेनैव प्रसाधनम् ।।
एषा चतुर्युगावृत्तिरासहस्रात् प्रवर्त्तते ।। ५८.११३ ।।

ब्रह्मणस्तदहः प्रोक्तं रात्रिश्च तावती स्मृता ।
अत्रार्जवं जडीभावो भूतानामायुगक्षयात् ।। ५८.११४ ।।

एतदेव तु सर्वेषां युगानां लक्षणं स्मृतम्।
एषा चतुर्युगानान्तु गणना ह्येकसप्ततिः।
क्रमेण परिवृत्ता तु मनोरन्तरमुच्यते ।। ५८.११५ ।।

चतुर्युगे तथैकस्मिन् भवतीह यथाश्रुतम्।
तथा चान्येषु भवति पुनस्तद्वै यथाक्रमम् ।। ५८.११६ ।।

सर्गे सर्गे यथा भेदा उत्पद्यन्ते तथैव तु ।
पञ्चविंशत्परिमिता न न्यूना नाधिकास्तथा ।। ५८.११७ ।।

तथा कल्पयुगैः सार्द्धं भवन्ति समलक्षणाः।
मन्वन्तराणां सर्वेषामेतदेव तु लक्षणम् ।। ५८.११८ ।।

तथा युगानां परिवर्त्तनानि चिरप्रवृत्तानि युगस्वभवात् ।
तथा न सन्तिष्ठति जीवलोकः क्षयोदयाभ्यां परिवर्त्तमानः ।। ५८.११९ ।।

इत्येतल्लक्षणं प्रोक्तं युगानां वै समासतः।
अतीतानागतानां वै सर्वाण्येवान्तराणि ।। ५८.१२० ।।

अनागतेषु तद्वच्च तर्क्कः कार्यो विजानता।
मन्वन्तरेषु सर्वेषु अतीतानागतेष्विह ।। ५८.१२१ ।।

मन्वन्तरेण चैकेन सर्वाण्येवान्तराणि वै।
व्याख्यातानि विजानीद्वं कल्पे कल्पेन चैव हि ।। ५८.१२२ ।।

अस्याभिमानिनः सर्वे नामरूपैर्भवन्त्युत।
देवा ह्यष्टविधा ये च इह मन्वन्तरेश्वराः ।। ५८.१२३ ।।

ऋषयो मनवश्चैव सर्वे तुल्याः प्रयोजनैः।
एवं वर्णाश्रमाणान्तु प्रविभागो युगे युगे ।। ५८.१२४ ।।

युगस्वभावाच्च तथा विधत्ते वै सदा प्रभुः ।
वर्णाश्रमविभागश्च युगानि युगसिद्धये ।। ५८.१२५ ।।

अनुषङ्गः समाख्यातः सृष्टिसर्गन्निबोधत।
विस्तरेणानुपूर्व्या च स्थितिं वक्ष्ये युगेष्विह ।। ५८.१२६ ।।

इति श्रीमहापुराणे वायुप्रोक्ते चतुर्युगाख्यानं नामाष्टपञ्चाशोऽध्यायः ।। ५८ ।।

**।।सूत उवाच।।**

युगेषु यास्तु जायन्ते प्रजास्ता वै निबोधत।
आशुरी सर्पगोपक्षिपैशाची यक्षराक्षसी।
यस्मिन् युगे च सम्भूतिस्तासां यावत्तु जीवितम् ।। ५९.१ ।।

पिशाचासुरगन्धर्वा यक्षराक्षसपन्नगाः।
युगमात्रन्तु जीवन्ति ऋते मृत्युवधेन ते ।। ५९.२ ।।

मानुषाणां पशूनाञ्च पक्षिणां स्थावरैःसह।
तेषामायुः परिक्रान्तं युगधर्मेषु सर्वशः ।। ५९.३ ।।

अस्थितिस्तु कलौ दृष्टा भूतानामायुषस्तु वै।
परमायुः शतन्त्वेतन्मनुष्याणां कलौ स्मृतम् ।। ५९.४ ।।

देवासुरप्रमाणात्तु सप्तसप्ताङ्गुलं ह्रसत्।
अहगुलानां शतं पूर्णमष्टपञ्चाशदुत्तरम् ।। ५९.५ ।।

देवासुरप्रमाणन्तदुच्छ्रायं कलिजैः स्मृतम्।
चत्वारश्चाप्यशीतिश्च कलिजैरङ्गुलैः स्मृतम् ।। ५९.६ ।।

स्वेनाङ्गुलप्रमाणेन ऊर्द्ध्वमापादमस्तकम्।
इत्येष मानुषोत्सेधो ह्रसतीह युगान्तिके ।। ५९.७ ।।

सर्वेषु युगकालेषु अतीतानागतेष्विह।
स्वेनाङ्गुलप्रमाणेन अष्टतालः स्मृतो नरः ।। ५९.८ ।।

आपादतो मस्तकन्तु नवतालो भवेत्तु यः।
संहताजानुबाहुस्तु स सुरैरपि पूज्यते ।। ५९.९ ।।

गवाश्वहस्तिनाञ्चैव महिष स्थावरात्मनाम्।
क्रमेणैतेन योगेन ह्रासवृद्धी युगे युगे ।। ५९.१० ।।

षट्सप्तत्यङ्गुलोत्सेधः पशूनां ककुदस्तु वै।
अङ्गुलाष्टशतं पूर्णमुत्सेधः करिणां स्मृतः ।। ५९.११ ।।

अङ्गुलानां सहस्रन्तु चत्वारिंशाङ्गुलं विना ।
पञ्चाशतं हयानाञ्च उत्सेधः शाखिनां स्मृतः ।। ५९.१२ ।।

मानुषस्य शरीरस्य सन्निवेशस्तु यादृशः।
तल्लक्षणस्तु देवानां दृश्यते तत्त्वर्शनात् ।। ५९.१३ ।।

बुद्ध्यातिशययुक्तञ्च देवानां कायमुच्यते ।

देवानतिशयञ्चैव मानुषं कायमुच्यते ।। ५९.१४ ।।

इत्येते वै परिक्रान्ता भावा ये दिव्यमानुषाः।
पशूनां पक्षिणाञ्चैव स्थावराणां निबोधत ।। ५९.१५ ।।

गावो ह्यजा महिष्योऽश्वा हस्तिनः पक्षिणो नगाः।
उपयूक्ताः क्रियास्वेते यज्ञियास्विह सर्वशः ।। ५९.१६ ।।

देवस्थानेषु जायन्ते तद्रूपा एव ते पुनः ।
यथाशयोपभोगास्तु देवानां शुभमूर्त्तयः ।। ५९.१७ ।।

तेषां रूपानुरूपैस्तैः प्रमाणैः स्थाणुजङ्गमैः।
मनोज्ञैस्तत्त्वभावज्ञैः सुखिनो ह्युपपेदिरे ।। ५९.१८ ।।

अतः शिष्टान् प्रवक्ष्यामि सतः साधूंस्तथैव च।
सदिति ब्रह्मणः शब्दस्तद्वन्तो ये भवन्त्युत।
सायुज्यं ब्रह्मणोऽत्यन्तं तेन सन्तः प्रजक्ष्यते ।। ५९.१९ ।।

दशात्मके ये विषये कारणे चाष्टलक्षणे ।
न क्रुध्यन्ति न हृष्यन्ति जितात्मानस्तु ते स्मृताः ।। ५९.२० ।।

सामान्येषु च धर्मेषु तथा वैशेषिकेषु च।
ब्रह्मक्षत्रविशो युक्ता यस्मात्तस्माद्द्विजातयः ।। ५९.२१ ।।

वर्णाश्रमेषु युक्तस्य स्वर्गगोमुखचारिणः।
श्रौतस्मार्तस्य धर्मस्य ज्ञानाद्धर्मः स उच्यते ।। ५९.२२ ।।

विद्यायाः साधनात्साधुर्ब्रह्मचारी गुरोर्हितः।
क्रियाणां साधनाच्चैव गृहस्थः साधुरुच्यते ।। ५९.२३ ।।

साधनात्तपसोऽरण्ये साधुर्वैखानसः स्मृतः।
यतमानो यतिः साधुः स्मृतो योगस्य साधनात् ।। ५९.२४ ।।

एवमाश्रमधर्माणां साधनात् साधवः स्मृताः।
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ।। ५९.२५ ।।

न च देवा न पितरो मुनयो न च मानवाः।
अयं धर्मो ह्ययं नेति ब्रुवन्तोऽभिन्नदर्शनाः ।। ५९.२६ ।।

धर्माधर्माविह प्रोक्तौ शब्दावेतौ क्रियात्मकौ।
कुशलाकुशलं कर्म धर्मा धर्माविति स्मृतौ ।। ५९.२७ ।।

धारणा धृतिरित्यर्थाद्धातोर्धर्मः प्रकीर्त्तितः ।
अधारणेऽमहत्त्वे च अधर्म इति चोच्यते ।। ५९.२८ ।।

अत्रेष्टप्रापका धर्मा आचार्यैरुपदिश्यते।
वृद्धा ह्यलोलुपाश्चैव आत्मवन्तो ह्यदम्भकाः।
सम्यग्विनीता ऋजवस्तानाचार्यान् प्रचक्षते ।। ५९.२९ ।।

स्वयमाचरते यस्मादाचारं स्थापयत्यपि।
आचिनोति च शास्त्रार्थान्यमैः सन्नियमैर्युतः ।। ५९.३० ।।

पूर्वेभ्यो वेदयित्वेह श्रौतं सप्तर्षयोऽब्रुवन्।
ऋचो यजूंषि सामानि ब्रह्मणोऽङ्गानि च श्रुतिः ।। ५९.३१ ।।

मन्वन्तरस्यातीतस्य स्मृत्वाचारं पुनर्जगौ।
तस्मात्स्मार्तः स्मृतो धर्मो वर्णाश्रमविभागजः ।। ५९.३२ ।।

स एष द्विविधो धर्मः शिष्टाचार इहोच्यते।
शेषशब्दात् शिष्ट इति शिष्टाचारः प्रचक्ष्यते ।। ५९.३३ ।।

मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्मिकाः।
मनुः सप्तर्षयश्चैव लोकसन्तानकारणात्।
धर्मार्थं ये च शिष्ट वै याथातथ्यं प्रचक्ष्यते ।। ५९.३४ ।।

मन्वादयश्च ये शिष्टा ये मया प्रागुदीरिताः।
तैः शिष्टैश्चरितो धर्मः सम्यगेव युगे युगे ।। ५९.३५ ।।

त्रयी वार्ता दण्डनीतिरिज्या वर्णाश्रमास्तथा।
शिष्टैराचर्यते यस्मान्मनुना च पुनः पुनः।
पूर्वैः पूर्वगतत्वाच्च शिष्टाचारः स शाश्वतः ।। ५९.३६ ।।

दानं सत्यन्तपोऽलोभो विद्येज्याप्रजनी दया।
अष्टौ तानि चरित्राणि शिष्टाचारस्य लक्षणम् ।। ५९.३७ ।।

शिष्टा यस्माच्चरन्त्येनं मनुः सप्तर्षयश्च वै।
मन्वन्तरेषु सर्वेषु शिष्टाचारस्ततः स्मृतः ।। ५९.३८ ।।

विज्ञेयः श्रवणात् श्रौतः स्मरणात् स्मार्त्त उच्यते।
इज्या वेदात्मकः श्रौतः स्मार्तो वर्णाश्रमात्मकः।
प्रत्यङ्गानि च वक्ष्यामि धर्मस्येह तु लक्षणम् ।। ५९.३९ ।।

दृष्ट्वा प्रभूतमर्थं यः पृष्टो वै न निगूहति।
यथा भूतप्रवादस्तु इत्येतत्सत्यलक्षणम् ।। ५९.४० ।।

ब्रह्मचर्यं जपो मौनं निराहारत्वमेव च।
इत्येतत् तपसो मूलं सुघोरं तद्दुरासदम् ।। ५९.४१ ।।

पशूनां द्रव्यहविषामृक्सामयजुषां तथा।
ऋत्विजां दक्षिणानाञ्च संयोगो योग उच्यते ।। ५९.४२ ।।

आत्मवत्सर्वभूतेषु यो हितायाहिताय च।
समा प्रवर्त्तते दृष्टिः कृत्स्ना ह्येषा दया स्मृता ।। ५९.४३ ।।

आक्रुष्टोऽभिहतो वापि नाक्रोशेद्यो न हन्ति वा।
वाङ्मनःकर्मभिः क्षान्तिस्तितिक्षैषा क्षमा स्मृता ।। ५९.४४ ।।

स्वामिनारक्ष्यमाणानामुत्सृष्टानाञ्च मृत्सु च।
परस्वानामनादानमलोभ इह कीर्त्यते ।। ५९.४५ ।।

मैथुनस्यासमाचारो ह्यचिन्तनमकल्पनम्।
निवृत्तिर्ब्रह्मचर्यं तदच्छिद्रं दम उच्यते ।। ५९.४६ ।।

आत्मार्थं वा परार्थं वा इन्द्रियाणीह यस्य वै।
न मिथ्या सम्प्रवर्तन्ते शमस्यै तत्तु लक्षणम् ।। ५९.४७ ।।

दशात्मके यो विषये कारणे चाष्टलक्षणे।
न क्रुध्येत्तु प्रतिहतः स जितात्मा विभाव्यते ।। ५९.४८ ।।

यद्यदिष्टतमं द्रव्यं न्यायेनोपागतञ्च यत्।
तत्तद्गुणवते देयमित्येतद्दानलक्षणम् ।। ५९.४९ ।।

दानं त्रिविधमित्येतत् कनिष्ठज्येष्ठमधयमम् ।
तत्र नैःश्रेयसं ज्येष्ठं कनिष्ठं स्वार्थसिद्धये।
कारुण्यात्सर्वभूतेभ्यः सुविभागस्तु बन्धुषु ।। ५९.५० ।।

श्रुतिस्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः।
शिष्टाचाराविरुद्धश्च धर्मः सत्साधुसङ्गतः ।। ५९.५१ ।।

अप्रद्वेषो ह्यनिष्टेषु तथेष्टानभिनन्दनम्।
प्रीतितापविषादेभ्यो विनिवृत्तिर्विरक्तता ।। ५९.५२ ।।

संन्यासः कर्मणो न्यासः कृतानामकृतैः सह।
कुशलाकुशलानाञ्च प्रहाणं त्याग उच्यते ।। ५९.५३ ।।

अव्यक्ताद्योऽविशेषाच्च विकारोऽस्मिन्नचेतने।

चेतनाचेतान्यत्वविज्ञानं ज्ञानमुच्यते ।। ५९.५४ ।।

प्रत्यङ्गानां तु धर्मस्य इत्येतल्लक्षणं स्मृतम् ।
ऋषिभिर्धर्मतत्त्वज्ञैः पूर्वे स्वायम्भुवेऽन्तरे ।। ५९.५५ ।।

अत्र वो वर्त्तयिष्यामि विधिर्मन्वन्तरस्य यः ।
इतरेतरवर्णस्य चातुर्वर्णस्य चैव हि।
प्रतिमन्वन्तरञ्चैव श्रुतिरन्या विधीयते ।। ५९.५६ ।।

ऋचो यजूषिं सामानि यथावत् प्रतिदैवतम्।
आभूतसंप्लवस्यापि वर्ज्यैकं शतरुद्रियम् ।। ५९.५७ ।।

विधिर्होत्रं तथा स्तोत्रं पूर्ववत्सम्प्रवर्तते।
द्रव्यस्तोत्रं गुणस्तोत्रं कर्म स्तोत्रं तथैव च।
चतुर्थमाभिजनिकं स्तोत्रमेतच्चतुर्विधम् ।। ५९.५८ ।।

मन्वन्तरेषु सर्वेषु यथा देवा भवन्ति ये।
प्रवर्त्तयति तेषां वै ब्रह्मस्तोत्रं चतुर्विधम्।
एवं मन्त्रगुणानाञ्च समुत्पत्तिश्चतुर्विधा ।। ५९.५९ ।।

अथर्वयजुषां साम्नां वेदेष्विह पृथक् पृथक् ।
ऋषीणान्तप्यतामुग्रन्तपः परमदुश्चरम् ।। ५९.६० ।।

मन्त्राः प्रादुर्बभूवुर्हि पूर्वमन्वन्तरेष्विह।
परितोषाद्भयाद्दुःखात्सुखाच्छोकाच्च पञ्चधा ।। ५९.६१ ।।

ऋषीणां तपःकात्स्न्र्येन दर्शनेन यदृच्छया।
ऋषीणां यदृषित्वं हि तद्वक्ष्यामीह लक्षणैः ।। ५९.६२ ।।

अतीतानागतानान्तु पञ्चधा ऋषिरुच्यते।
अतस्त्वृषीणां वक्ष्यामि ह्यार्षस्य च समुद्भवम् ।। ५९. ६३ ।।

गुणसाम्ये वर्त्तमाने सर्वसम्प्रलये तदा।
अतिचारे तु देवानामतिदेशे तयोर्यथा ।। ५९.६४ ।।

अबुद्धिपूर्वकं तद्वै चेतनार्थं प्रवर्त्तते ।
तेन ह्यबुद्धिपूर्वं तच्चेतनेन ह्यधिष्ठितम् ।। ५९.६५ ।।

वर्त्तते च यथा तौ तु यथा मत्स्योदके उभे।
चेतनाधिष्ठितं तत्त्वं प्रवर्त्तति गुणात्मना ।। ५९.६६ ।।

करणत्वात्तथा कार्यं तदा तस्य प्रवर्त्तते।

विषये विषयित्वाच्च ह्यर्थेऽर्थित्वात्तथैव च ।। ५९.६७ ।।

कालेन प्रापणीयेन भेदास्तु कारणात्मकाः।
संसिध्यन्ति तदा व्यक्ताः क्रमेण महदादयः ।। ५९.६८ ।।

महतश्चाप्यहङ्कारस्तस्माद्भूतेन्द्रियाणि च।
भूतभेदास्तु भेदेभ्यो जज्ञिरे ते परस्परम्।
संसिद्धिकारणं कार्यं सद्य एव विवर्त्तते ।। ५९.६९ ।।

यथोल्मुकस्तुटन्नूर्द्ध्वमेककालं प्रवर्त्तते।
तथा विवृतः क्षेत्रज्ञः कालेनैकेन कर्मणा ।। ५९.७० ।।

यथान्धकारे खद्योतः सहसा सम्प्रदृश्यते।
तथा विवृत्तो ह्यव्यक्तात् खद्योत इव चेल्वणः ।। ५९.७१ ।।

स महान् सशरीरस्तु यत्रैवाग्रे व्यवस्थितः।
तत्रैव संस्थितो विद्वान् द्वारशालामुखे स्थितः ।। ५९.७२ ।।

महांस्तु तमसः पारे वैलक्षण्याद्विभाव्यते ।
तत्रैव संस्थितो विद्वांस्तमसोऽन्त इति श्रुतिः ।। ५९.७३ ।।

बुद्धिर्विवर्त्तमानस्य प्रादुर्भूता चतुर्विधा ।
ज्ञानं वैराग्यमैश्वर्यं धर्मश्चेति चतुष्टयम् ।। ५९.७४ ।।

सांसिद्धिकान्यथैतानि सुप्रतीकानि तस्य वै ।
महतः सशरीरस्य वैवर्त्त्यात् सिद्धिरुच्यते ।। ५९.७५ ।।

अत्र शेते च यत्पुर्यां क्षेत्रज्ञानमथापि वा।
पुरीशयत्वात्पुरुषः क्षेत्रज्ञानात् सउच्यते ।। ५९.७६ ।।

क्षेत्रज्ञः क्षेत्रविज्ञानात् भगवान् मतिरुच्यते।
यस्माद्बुद्ध्या तु शेते ह तस्माद्बोधात्मकः स वै ।
संसिद्धये परिगतं व्यक्ताव्यक्तमचेतनम् ।। ५९.७७ ।।

एवं निवृत्तिः क्षेत्रज्ञा क्षेत्रज्ञेनाभिसंहिता।
क्षेत्रज्ञेन परिज्ञातो भोग्योऽयं विषयस्त्विवति ।। ५९.७८ ।।

ऋषीत्येष गतौ धातुःश्रुतौ सत्ये तपस्यथ।
एतत्सन्नियते तस्मिन् ब्रह्मणा स ऋषिः स्मृतः ।। ५९.७९ ।।

निवृत्तिसमकालं तु बुद्ध्याव्यक्तमृषिः स्वयम्।
परं हि ऋषते यस्मात्परमर्षिस्ततः स्मृतः ।। ५९.८० ।।

गत्यर्थादृषतेर्द्धातोर्नामनिर्वृत्तिरादितः ।
यस्मादेष स्वयम्भूतस्तस्माच्चात्मर्षिता स्मृता।
ईश्वराः स्वयमुद्भूता मानसा ब्रह्मणः सुताः ।। ५९.८१ ।।

यस्मान्न हन्यते मानैर्महान् परिगतः पुरः।
यस्मादृषन्ति ये धीरा महान्तं सर्वतो गुणैः।
तस्मान्महर्षयः प्रोक्ता बुद्धेः परमदर्शिनः ।। ५९.८२ ।।

ईश्वराणां शुभास्तेषां मानसान्तरसाश्च ते।
अहङ्कारं तमश्चैव त्यक्त्वा च ऋषिताङ्गाताः ।। ५९.८३ ।।

तस्मात्तु ऋषयस्ते वै भूतादौ तत्त्वदर्शनाः।
ऋषिपुत्रा ऋषीकास्तु मैथुनाद्गर्भसम्भवाः ।। ५९.८४ ।।

तन्मात्राणि च सत्यञ्च ऋषन्ते ते महौजसः।
सत्यर्षयस्ततस्ते वै परमाः सत्यदर्शनाः ।। ५९.८५ ।।

ऋषीणाञ्च सुतास्ते तु विज्ञेया ऋषिपुत्रकाः ।
ऋषन्ति वै श्रुतं यस्माद्विशेषांश्चैव तत्त्वतः।
तस्मात् श्रुतर्षयस्तेऽपि श्रुतस्य परिदर्शनाः ।। ५९.८६ ।।

अव्यक्तात्मा महात्मा चाहङ्कारात्मा तथैव च।
भूतात्मा चेन्द्रियात्मा च तेषां तज्ज्ञानमुच्यते ।
इत्येता ऋषिजातीस्तु नामभिः पञ्च वै श्रृणु ।। ५९.८७ ।।

भृगुर्मरीचिरत्रिश्च अङ्गिराः पुलहःक्रतुः।
मनुर्दक्षो वसिष्ठश्च पुलस्त्यश्चेति ते दश।
ब्रह्मणो मानसा ह्येते उद्भूताः स्वयमीश्वराः ।। ५९.८८ ।।

प्रवर्त्तन्ते ऋषेर्यस्मान्महांस्तस्मान्महर्षयः।
ईश्वराणां सुतास्त्वेते ऋषयस्तान्निबोधत ।। ५९.८९ ।।

काव्यो बृहस्पतिश्चैव कश्यपश्चोशनास्तथा।
उतथ्यो वामदेवश्च अपोज्यश्चैशिजस्तथा ।। ५९.९० ।।

कर्द्दमो विश्रवाः शक्तिर्वालखिल्य स्तथा धराः।
इत्येते ऋषयः प्रोक्ता ज्ञानतो ऋषिताङ्गताः ।। ५९.९१ ।।

ऋषिपुत्रानृषिकांस्तु गर्भोत्पन्नान्निबोधत।
वत्सरो नग्रहूश्चैव भारद्वाजस्तथैव च ।। ५९.९२ ।।

बृहदुत्थः शरद्वांश्च अगस्त्यश्चौशिजस्तथा।
ऋषिर्दीर्घतमाश्चैव बृहदुक्थः शरद्वतः ।। ५९.९३ ।।

वाजश्रवाः सुवित्तश्च सुवाग्वेषपरायणः।
दधीचः शङ्खमांश्चैव राजा वैश्रवणस्तथा।
इत्येते ऋषिकाः प्रोक्तास्ते सत्याद्दृषिताङ्गताः ।। ५९.९४ ।।

ईश्वरा ऋषिकाश्चैव ये चान्ये वै तथा स्मृताः।
एते मन्त्रक्षकृतः सर्वे कृत्स्नशस्तान्निबोधत ।। ५९.९५ ।।

भृगुः काव्यः प्रचेतास्तु दधीचो ह्यात्मवानपि ।
और्वोऽथ जमदग्निश्च दिवः सारस्वत स्तथा ।। ५९.९६ ।।

अद्विषेण ह्यरूपश्च वीतहव्य सुमेधसः।
वैन्यः पृथुर्दिवोदासः प्रश्वारो गृत्समान्नभः।
एकोनविंशदित्येते ऋषयो मन्त्रवादिनः ।। ५९.९७ ।।

अङ्गिरा वेधसश्चैव भारद्वाजोऽथ बाष्कलिः।
तथामृतस्तथा गार्ग्यः शेनी संहृतिरेव च ।। ५९.९८ ।।

पुरुकुत्सोऽथ मान्धाता अम्बरीषस्तथैव च।
आहार्योथाजमीढश्च ऋषभो वलिरेव च ।। ५९.९९ ।।

पृषदश्वो विरूपश्च कण्वश्चैवाथ मुद्गलः।
युवनाश्वः पौरुकुत्सस्त्रसद्दस्युः सदस्युमान् ।। ५९.१०० ।।

उतथ्यश्च भरद्वाजस्तथा वाजश्रवा अपि ।
आयाप्यश्च सुवित्तिश्च वामदेवस्तथैव च ।। ५९.१०१ ।।

औगजो बृहदुक्थश्च ऋषिर्दीर्घतपास्तथा।
कक्षीवांश्च त्रयस्त्रिंशत् स्मृता अङ्गिरसो वराः।
एते मन्त्रकृतः सर्वे काश्यपांस्तु निबोधत ।। ५९.१०२ ।।

काश्यपश्चैव वत्सारो विभ्रमो रैभ्य एव च।
असितो देवलश्चैव षडेते ब्रह्मवादिनः ।। ५९.१०३ ।।

अत्रिरर्च्चिसनश्चैव श्यामावांश्चाथ निष्ठुरः।
वल्गूतको मुनिर्द्धीमांस्तथा पूर्वातिथिश्च यः।
इत्येते चात्रयः प्रोक्ता मन्त्रकारा महर्षयः ।। ५९.१०४ ।।

वसिष्ठश्चैव शक्तिश्च तथैव च पराशरः।
चतुर्थ इन्द्रप्रमतिः पञ्चमस्तु भरद्वसुः ।। ५९.१०५ ।।

षष्ठस्तु मैत्रावरुणाः कुण्डिनः सप्तमस्तथा।
सुद्युम्नश्चाष्टमश्चैव नवमोऽथ बृहस्पतिः।
दशमस्तु भरद्वाजौ मन्त्रब्राह्मणकारकाः ।। ५९.१०६ ।।

एते चैव हि कर्तारो विधर्मध्वंसकारिणः।
लक्षणं ब्रह्मणश्चैतद्विहितं सर्वशाखिनाम् ।। ५९.१०७ ।।

हेतुर्हितेः स्मृतो धातोर्यन्निहन्त्युदितम्परैः।
अथ वार्थपरि प्राप्तेर्हिनोतेर्गतिकर्मणः ।। ५९.१०८ ।।

तथा निर्वचनं ब्रूयाद्वाक्यार्थस्यावधारणम् ।
निन्दां तामाहुराचार्या यद्दोषन्निन्द्यते वचः ।। ५९.१०९ ।।

प्रषूर्वाच्छंसतेर्धातोः प्रशसां गुणवत्तया।
इदन्त्विदमिदं नेदमित्यनिश्चित्य संशयः ।। ५९.११० ।।

इदमेव विधातव्यमित्ययं विधिरुच्यते ।
अन्यस्यान्यस्य चोक्तत्वाद्बुधैः परकृतिः स्मृता ।। ५९.१११ ।।

यो ह्यत्यन्ततरोक्तश्च पुराकल्पः स उच्यते।
पुराविक्रान्तवाचित्वात् पुराकल्पस्य कल्पना ।। ५९.११२ ।।

मन्त्रब्राह्मणकल्पैस्तु निगमैः शुद्धविस्तरैः ।
अनिश्चित्य कृतामाहुर्व्यवधारणकल्पनाम् ।। ५९.११३ ।।

यथा हीदं तथा तद्वै इदं वापि तथैव तत्।
इत्येष ह्युपदेशोऽयं दशमो ब्राह्मणस्य तु ।। ५९.११४ ।।

इत्येतद्ब्राह्मणस्यादौ विहितं लक्षणं बुधः ।
तस्य तद्वृत्तिरुद्दिष्टा व्याख्याप्यनुपदं द्विजैः ।। ५९.११५ ।।

मन्त्राणां कल्पनं चैव विधिदृष्टेषु कर्मसु।
मन्त्रो मन्त्रयतेर्धातोर्ब्राह्मणो ब्रह्मणोऽवनात् ।। ५९.११६ ।।

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः ।। ५९.११७ ।।

इति श्रीमहापुराणे वायुप्रोक्ते ऋषिलक्षणं नामोनषष्टितमोऽध्यायः ।। ५९ ।।

**।।ऋषय ऊचुः।।**

ऋषयस्तद्वचः श्रुत्वा सूतमाहुः सुदुस्तरम्।
कथं वेदा पुरा व्यस्तास्तन्नो ब्रूहि महामते ।। ६०.१ ।।

**।।सूत उवाच ।।**

द्वापरे तु परावृत्ते मनोः स्वायम्भुवेऽन्तरे ।
ब्रह्मा मनुमुवाचेदं तद्वदिष्ये महामते ।। ६०.२ ।।

परिवृत्ते युगे तात स्वल्पवीर्या द्विजातयः।
संवृत्तां युग दोषेण सर्वे चैव यथाक्रमम् ।। ६०.३ ।।
भ्रश्यमानं युगवशादल्पशिष्टं हि दृश्यते।
दशसाहस्रभागेन ह्यवशिष्टं कृतादिदम् ।। ६०.४ ।।

वीर्यं तेजो बलं वाक्यं सर्वञ्चैव प्रणश्यति।
वेदवेदा हि कार्याः स्युर्माभूद्वेदविनाशनम् ।। ६०.५ ।।

वेदे नाशमनुप्राप्ते यज्ञो नाशं गमिष्यति।
यत्रे नष्टे देवनाशस्ततः सर्वं प्रणश्यति ।। ६०.६ ।।

आद्यो वेदश्चतुष्पादः शतसाहस्रसंज्ञितः।
पुनर्दशगुणः कृत्स्नो यज्ञो वै सर्वकामधुक् ।। ६०.७ ।।

एवमुक्तस्तथेत्युक्त्वा मनुर्लोकहिते रतः।
वेदमेकं चतुष्पादं चतुर्धा व्यभजत्प्रभुः ।। ६०.८ ।।

ब्रह्मणो वचनात्तात लोकानां हितकाम्यया।
तदिदं वर्त्तमानेन युष्माकं वेदकल्पनम् ।। ६०.९ ।।

मन्वन्तरेण वक्ष्यामि व्यतीतानां प्रकल्पनम्।
प्रत्यक्षेण परोक्षं वै तन्निबोधत सत्तमाः ।। ६०.१० ।।

अस्मिन् युगे कृतो व्यासः पाराशर्यः परन्तपः।
द्वैपायन इति ख्यातो विष्णोरंशः प्रकीर्तितः ।। ६०.११ ।।

ब्रह्मणा चोदितः सोऽस्मिन् वेदं व्यस्तुं प्रचक्रमे।
अथ शिष्यान् स जग्राह चतुरो वेदकारणात् ।। ६०.१२ ।।

जैमिनिञ्च सुमन्तुञ्च वैशम्पायनमेव च।
पैलन्तेषां चतुर्थन्तु पञ्चमं लोमहर्षणम् ।। ६०.१३ ।।

ऋग्वेदश्रावकं पैलञ्जग्राह विधिवद् द्विजम् ।
यजुर्वेदप्रवक्तारं वैशम्पायनमेव च ।। ६०.१४ ।।

जैमिनिं सामवेदार्थश्रावकं सोऽन्वपद्यत।
तथैवाथर्ववेदस्य सुमन्तुमृषिसत्तमम् ।। ६०.१५ ।।

इतिहासपुराणस्य वक्तारं सम्यगेव हि।
माञ्चैव प्रतिजग्राह भगवानीश्वरः प्रभुः ।। ६०.१६ ।।

एक आसीद्यजुर्वेदस्तञ्चतुर्द्धा व्यकल्पयत्।
चतुर्होत्रमभूत्तस्मिंस्तेन यज्ञमकल्पयत् ।। ६०.१७ ।।

आध्वर्यवं यजुर्भिस्तु ऋग्भिर्होत्रं तथैव च।
उद्गात्रं सामभिश्चक्रे ब्रह्मत्वञ्चाप्यथर्वभिः।
ब्रह्मत्वमकरोद्यज्ञे वेदेनाथर्वणेन तु ।। ६०.१८ ।।

ततः सऋचमुद्धृत्य ऋग्वेदं समकल्प यत्।
होतृकं कल्प्यते तेन यज्ञवाहं जगद्धितम् ।। ६०.१९ ।।

सामभिः सामवेदञ्च तेनोद्गात्रमरोचयत् ।
राज्ञस्त्वथर्ववेदेन सर्वकर्माण्यकारयत् ।। ६०.२० ।।

आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कुलकर्मभिः।
पुराणसंहिताश्चक्रे पुराणार्थविशारदः ।। ६०.२१ ।।

यच्छिष्टन्तु यजुर्वेदे तेन यज्ञमथायुजत्।
युञ्जानः स यजुर्वेदे इति शास्त्रविनिश्चयः ।। ६०.२२ ।।

पदानामुद्धृतत्वाच्च यजूंषि विषमाणि वै ।
स तेनोद्धृतवीर्यस्तु ऋत्विग्भिर्वेदपारगैः।
प्रयुज्यते ह्यश्वमेधस्तेन वा युज्यते तु सः ।। ६०.२३ ।।

ऋचो गृहीत्वा पैलस्तु व्यभजत्तद् विधा पुनः ।
द्विष्कृत्वा संयुगे चैव शिष्याभ्यामददत्प्रभुः ।। ६०.२४ ।।

इन्द्रप्रमतये चैकां द्‌वितीयां बाष्कलाय च।
चतस्रः संहिताः कृत्वा बाष्कलिर्द्‌विजसत्तमः।
शिष्यानध्यापयामास शुश्रूषाभिरतान् हितान् ।। ६०.२५ ।।

बोधन्तु प्रथमां शाखां द्‌वितीयामग्निमाठरम्।
पाराशरं तृतीयान्तु याज्ञवल्क्यामथापराम् ।। ६०.२६ ।।

इन्द्रप्रमतिरेकान्तु संहितां द्‌विजसत्तमः।
अध्यापयन्महाभागं मार्कण्डेयं यशस्विनम् ।। ६०.२७ ।।

सत्यश्रवसमग्र्यन्तु पुत्रं स तु महायशाः।
सत्यश्रवाः सत्यहितं पुनरध्यापयद् द्‌विजः ।। ६०.२८ ।।

सोऽपि सत्यतरं पुत्रं पुनरध्यापयद्‌विभुः।
सत्यश्रियं महात्मानं सत्यधर्मपरायणम् ।। ६०.२९ ।।

अभवंस्तस्य शिष्या वै त्रयस्तु सुमहौजसः ।
सत्यश्रियस्तु विद्‌वासः शास्त्रग्रहणतत्पराः ।। ६०.३० ।।

शाकल्यः प्रथमस्तेषां तस्मादन्यो रथ(ा)न्तरः ।
बाष्कलिश्च भरद्‌वाज इति शाखाप्रवर्तकाः ।। ६०.३१ ।।

देवमित्रस्तु शाकल्यो ज्ञानाहङ्कारगर्वितः।
जनकस्यस यज्ञे वै विनाशमगमद् द्‌विजः ।। ६०.३२ ।।

**।।शांशपायन उवाच।।**
कथं विनाशमगमत्स मुनिर्ज्ञानगर्वितः।
जनकस्याश्वमेधेन कथं वादो बभूव ह ।। ६०.३३ ।।

किमर्थञ्चाभवद्‌वादः केन सार्द्धमथापि वा।
सर्वमेतद्‌यथावृत्तमाचक्ष्व विदितन्तव।
ऋषीणान्तु वचः श्रुत्वा तदुत्तरमथाब्रवीत् ।। ६०.३४ ।।

**।।सूत उवाच।।**
जनकस्याश्वमेधे तु महानासीत्समागमः।
ऋषीणान्तु सहस्राणि तत्राजग्मुरनेकशः।

राजर्षेर्जनकस्याथ तं यज्ञं हि दिदृक्षवः ।। ६०.३५ ।।

आगतान् ब्राह्मणान् दृष्ट्वा जिज्ञासास्याभवत्ततः।
कोन्वेषां ब्राह्मणः श्रेष्ठः कथं मे निश्चयो भवेत्।
इति निश्चित्य मनसा बुद्धिं चक्रे जनाधिपः ।। ६०.३६ ।।

गवां सहस्रमादाय सुवर्णमधिकं ततः।
ग्रामान् रत्नानि दासांश्च मुनीन् प्राह नराधिपः।
सर्वानहं प्रपन्ननोऽस्मि शिरसा श्रेष्ठभागिनः ।। ६०.३७ ।।

यदेतदाहृतं वित्तं ये वः श्रेष्ठतमो भवेत्।
तस्मै तदुपनीतं हि विद्यावित्तं द्विजोत्तमाः ।। ६०.३८ ।।

जनकस्य वचः श्रुत्वा मुनयस्ते श्रुतिक्षमाः।
दृष्ट्वा धनं महासारं धनवृद्ध्या जिघृक्षवः ।
श्रद्धयाञ्चक्रुरन्योन्यं वेदज्ञानमदोल्बणाः ।। ६०.३९ ।।

मनसा गतवित्तास्ते ममेदं धनमित्युत।
ममैवैतन्न वेत्यन्यो ब्रूहि किं वा विकल्प्यते।
इत्येवं धनदोषेण वादांश्चक्रुरनेकशः ।। ६०.४० ।।

तथान्यस्तत्र वै विद्वान् ब्रह्मवाहसुतः कविः।
याज्ञवल्क्यो महातेजास्तपस्वी ब्रह्मवित्तमः ।। ६०.४१ ।।

ब्रह्मणोऽङ्गात् समुत्पन्नो वाक्यं प्रोवाच सुस्वरम्।
शिष्यं ब्रह्मविदां श्रेष्ठो धनमेतद् गृहाण भो ।। ६०.४२ ।।

नयस्व च गृहं वत्स ममैतन्नात्र संशयः।
सर्ववेदेष्वहं वक्ता नान्यः कश्चित्तु मत्समः।
योवा न प्रीयते विप्रः स मे ह्यवतु माऽचिरम् ।। ६०.४३ ।।

ततो ब्रह्मार्णवः क्षुब्धः समुद्र इव सम्प्लवे ।
तानुवाच ततः स्वस्थो याज्ञवल्क्यो हसन्निव ।। ६०.४४ ।।

क्रोध माकार्षुविद्वांसो भवन्तः सत्यवादिनः।
वदामहे यथायुक्तं जिज्ञासन्तः परस्परम् ।। ६०.४५ ।।

ततोऽभ्युपागमंस्तेषां वादा जग्मुरनेकशः।
सहस्रधा शुभैरर्थैः सूक्ष्मदर्शनसम्भवैः ।। ६०.४६ ।।

लोके वेदे तथाध्यात्मे विद्यास्थानैरलंकृताः।
शापोत्तमगुणैर्युक्ता नृपौघपरिवर्जनाः ।
वादाः समभवंस्तत्र धनहेतोर्महात्मनाम् ।। ६०.४७ ।।

ऋषयस्त्वेकतः सर्वे याज्ञवल्क्यस्तथैकतः।
सर्वे ते मुनयस्तेन याज्ञवल्क्येन धीमता ।
एकैकशस्ततः पृष्टा नैवोत्तरमथाव्रुवन् ।। ६०.४८ ।।

तान्विजित्य मुनीन् सर्वान् ब्रह्मराशिर्महाद्युतिः।
शाकल्यमिति होवाच वादकर्त्तारमञ्जसा ।। ६०.४९ ।।

शाकल्य वद वक्तव्यं किं ध्यायन्नवतिष्टसे।
पूर्णस्त्वं जडमानेन वाताध्मातो यथा दृतिः ।। ६०.५० ।।

एवं स धर्षितस्तेन रोषात्ताम्रास्यलोचनः।
प्रोवाच याज्ञवल्क्यं तं पुरुषं मुनिसन्निधौ ।। ६०.५१ ।।

त्वमस्मांस्तृणवत्त्यक्त्वा तथैवेमान् द्विजोत्तमान्।
विद्याधनं महासारं स्वयंग्राहं जिघृक्षसि ।। ६०.५२ ।।

शाकल्येनैवनुक्तः स्याद्याज्ञवल्क्यः समब्रवीत्।
ब्रह्मिष्ठानां बलं विद्धि विद्यातत्त्वार्थदर्शनम् ।। ६०.५३ ।।

कामश्चार्थेन सम्बद्धस्तेनार्थं कामयामहे ।
कामप्रश्नधना विप्राः कामप्रश्नान्वदामहे ।। ६०.५४ ।।

पणश्चैषोऽस्य राजर्षेस्तस्मान्नीतं धनं मया।
एतच्छ्रुत्वा वचस्तस्य शाकल्यः क्रोधमूर्च्छितः।
याज्ञवल्क्यमथोवाच कामप्रश्नार्थमद्वचः ।। ६०.५५ ।।

ब्रूहीदानीं मयोद्दिष्टान् कामप्रश्नान् यथार्थतः।
ततः समभवद्वादस्तयोर्ब्रह्मविदोर्महान् ।। ६०.५६ ।।

साग्रं प्रश्नसहस्रन्तु शाकल्यस्तमुचूचुदत्।

याज्ञवल्क्योऽब्रवीत्सर्वान् ऋषीणां श्रृण्वतां तदा ।। ६०.५७ ।।

शाकल्ये चापि निर्वादे याज्ञवल्क्यस्तमब्रवीत् ।
प्रश्नमेकं ममापि त्वं वद शाकल्य कामिकम्।
शापः पणोऽस्य वादस्य अब्रुवन् मृत्युमाव्रजेत् ।। ६०.५८ ।।

अथ सन्नोदितं प्रश्नं याज्ञवल्क्येन धीमता ।
शाकल्यस्तमविज्ञाय सद्यो मृत्युमवाप्नुयात् ।। ६०.५९ ।।

एवं मृतः स शाकल्यः प्रश्नव्याख्यानपीडितः।
एवं वादश्च सुमहानासीत्तेषां धनार्थिभिः।
ऋषीणां मुनिभिः सार्द्धं याज्ञवल्क्यस्य चैव हि ।। ६०.६० ।।

सर्वैः पृष्टांस्तु सम्प्रश्नान् शतशोऽथ सहस्रशः।
व्याख्याय वै मुने तेषां प्रश्नसारं महागतिः ।। ६०.६१ ।।

याज्ञवल्क्यो धनं गृह्य यशो विख्याप्य चात्मनः।
जगाम वै गृहं स्वस्थः शिष्यैः परिवृतो वशी ।। ६०.६२ ।।

देवमित्रस्तु शाकल्यो महात्मा द्विजसत्तमः।
चकार संहिताः पञ्चबुद्धिमान् पदवित्तमः ।। ६०.६३ ।।

तच्छिष्या अभवन् पञ्च मुद्घलो गोलकस्तथा।
खालीयश्च तथा मत्स्वः शैशिरेयस्तु पञ्चमः ।। ६०.६४ ।।

प्रोवाच संहितास्तिस्रः शाकपूर्णरथीतरः।
निरुक्तञ्च पुनश्चक्रे चतुर्थं द्विजसत्तमः ।। ६०.६५ ।।

तस्य शिष्यास्तु चत्वारः केतवो दालकिस्तथा।
धर्मशर्मा देवशर्मा सर्वे व्रतधरा द्विजाः ।। ६०.६६ ।।

शाकल्ये तु मृते सर्वे ब्रह्मघ्नास्ते बभूविरे।
तदा चिन्तां परां प्राप्य गतास्ते ब्रह्मणोऽन्तिकम् ।। ६०.६७ ।।

तान् ज्ञात्वा चेतसा ब्रह्मा प्रेषितः पवनःपुरे।
तत्र गच्छत यूयं वःसद्यः पापं प्रणश्यति ।। ६०.६८ ।।

द्वादशार्कं नमस्कृत्या तथा वै वालुकेश्वरम् ।
एकादश तथा रुद्रान् वायुपुत्रं विशेषतः।
कुण्डे चतुष्टये स्नात्वा ब्रह्महत्यां तरिष्यथ ।। ६०.६९ ।।

सर्वे शीघ्रतरा भूत्वा तत्पुरं समुपागताः।
स्नानं कृतं विधानेन देवानां दर्शनं कृतम् ।। ६०.७० ।।

उत्तरेश्वरं नमस्कृत्य वाडवानां प्रसादतः।
सर्वे पापविनिर्मुक्ता गतास्ते सूर्यमण्डलम् ।। ६०.७१ ।।

तदा प्रभृति तत्तीर्थं जातं पातकनाशनम्।
वायोः पुरं पवित्रञ्च वायुना निर्मितं पुरा ।। ६०.७२ ।।

अञ्जनागर्भसम्भूतहनुमान्पवनात्मजः।
यदा जातो महादेवोहनुमान्सत्यविक्रमः।
तदेवं निर्मितं तीर्थं वायुना ब्रह्मयोनिना ।। ६०.७३ ।।

ऊर्व्यां जातास्तु ये शूद्रा ब्राह्मणानां निवेदिताः।
वृत्त्यर्थं ब्रह्मयज्ञार्थं करस्तेषु कृतो महान् ।। ६०.७४ ।।

अनेन विधिना जातं विप्राणां शासनं महत् ।
गोघ्नो वापि कृतघ्नो वा सुरापी गुरूतल्पगः।
वाडादित्यं नमस्कृत्य सर्वपापैः प्रमुच्यते ।। ६०.७५ ।।

इति श्रीमहापुराणे वायुप्रोक्ते महास्थानतीर्थवर्णनं नाम षष्टितमोऽद्यायः ।। ६० ।।

**।।ऋषय ऊचुः।।**

भारद्वाजो याज्ञवल्क्यो गालकिः सालकिस्तथा।
धीमान् शतबलाकश्च नैगमश्च द्विजोत्तमः ।। ६१.१ ।।

बाष्कलिश्च भरद्वाजस्तिस्रः प्रोवाच संहिताः।
रथीतरो निरुक्तञ्च पुनश्चक्रे चतुर्थकम् ।। ६१.२ ।।

त्रयस्तस्याभवञ्छिष्या महात्मानो गुणान्विताः।
धीमान्नन्दायनीयश्च पन्नगारिश्च बुद्धिमान्।
तृतीयश्चार्यवस्ते च तपसा शंसितव्रताः ।। ६१.३ ।।

वीतरागा महातेजाः संहिताज्ञानपारगाः।
इत्येते बह्वृचाः प्रोक्ताः संहिता यैः प्रवर्त्तिताः ।। ६१.४ ।।

वैशम्पायनगोत्रोऽसौ यजुर्वेदं व्यकल्पयत्।
षडशीतिश्च तस्यापि संहितानां विकल्पकाः ।। ६१.५ ।।

शिष्येभ्यः प्रददौ ताश्च जगृहुस्ते विधानतः।
एकस्तत्र परित्यक्तो याज्ञवल्क्यो महातपाः।
षडशीतिश्च तस्यापि संहितानां विकल्पकाः ।। ६१.६ ।।

सर्वेषामेव तेषां वै त्रिधा भेदाः प्रकीर्त्तिताः।
त्रिधा भेदास्तु ते प्रोक्ता भेदेऽस्मिन्नवमे शुभे ।। ६१.७ ।।

उदीच्या मध्यदेशाश्च प्राच्याश्चैव पृथग्विधाः।
श्यामायनिरुदीच्यानां प्रधानः सम्बभूव ह ।। ६१.८ ।।

मध्य देशप्रतिष्ठानामारुणिः प्रथमः स्तुतः।
आलम्बिरादिः प्राच्यानान्त्रयोदश्यादयस्तु ते ।। ६१.९ ।।

इत्येते चरकाः प्रोक्ताः संहितावादिनो द्विजाः।
ऋषय स्तद्वचः श्रुत्वा सूतं जिज्ञासवोऽब्रुवन् ।। ६१.१० ।।

चरकाध्वर्यवः केन कारणं ब्रूहि तत्त्वतः।
किञ्चीर्णं कस्य हेतोश्च वाचकत्वञ्च भेजिरे।
इत्युक्तः प्राह तेषां स चरकत्वमभूद्यथा ।। ६१.११ ।।

**।।सूत उवाच ।।**

कार्यमासीदृषीणाञ्च किञ्चिद्ब्राह्मणसत्तमाः।
मेरुपृष्ठं समासाद्य तैस्तदा त्विति मन्त्रितम् ।। ६१.१२ ।।

यो नोऽत्र सप्तरात्रेण नागच्छेद् द्विजसत्तमाः।
स कुर्याद्ब्रह्मवध्यां वै समयो नः प्रकीर्तितः ।। ६१.१३ ।।

ततस्ते सगणाः सर्वे वैशम्पायन वर्जिताः।
प्रययुः सप्तरात्रेण यत्र सन्धिः कृतोऽभवत् ।। ६१.१४ ।।

ब्राह्मणानान्तु वचनाद्ब्रह्मवध्याञ्चकार सः ।
शिष्यानथ समानीय स वैशण्पायनोऽब्रवीत् ।। ६१.१५ ।।

ब्रह्मवद्याञ्चरध्वं वै मत्कृते द्विजसत्तमाः।
सर्वे यूयं समागम्य ब्रूत मे तद्धितं वचः ।। ६१.१६ ।।

**।।याज्ञवल्क्य उवाच।।**

अहमेव चरिष्यामि तिष्ठन्तु मुनयस्त्विमे।
बलञ्चोत्थापयिष्यामि तपसा स्वेन भावितः ।। ६१.१७ ।।

एवमुक्तस्ततः क्रुद्धो याज्ञवल्क्यमथाब्रवीत् ।
उवाच यत्त्वयाधीतं सर्वं प्रत्यर्पयस्व मे ।। ६१.१८ ।।

एवमुक्तः स रूपाणि यजूंषि प्रददौ गुरोः।
रुधिरेण तथाक्तानि छर्दित्वा ब्रह्मवित्तमः ।। ६१.१९ ।।

ततः स ध्यानमास्थाय सूर्यमाराधयद् द्विजाः ।
सूर्यब्रह्म यदुच्छिन्नं खं गत्वा प्रतितिष्ठति ।। ६१.२० ।।

ततो यानि गतान्यूर्द्ध्वं यजूंष्यादित्यमण्डलम्।
तानि तस्मै ददौ तुष्टः सूर्यो वै ब्रह्मरीतये।
अश्व रूपाय मार्तण्डो याज्ञवल्क्याय धीमते ।। ६१.२१ ।।

यजूंष्यधीयन्ते यानि ब्राह्मणा येन केन च।
अश्वरूपाय दत्तानि ततस्ते वाजिनोऽभवन् ।। ६१.२२ ।।

ब्रह्महत्या तु यैश्चीर्णा चरणाच्चरकाः स्मृताः ।

वैशम्पायनशिष्यास्ते चरकाः समुदाहृताः ।। ६१.२३ ।।

इत्येते चरकाः प्रोक्ता वाजिनस्तान्निबोधत।
याज्ञवल्क्यस्य शिष्यास्ते कण्ववैधेयशालिनः ।। ६१.२४ ।।

मध्यन्दिनश्च शापेयी विदिग्धश्चाप्य उद्दलः।
ताम्रायणश्च वात्स्यश्च तथा गालवशैशिरी।
आटवी च तथा पर्णी वीरणी सपरायणः ।। ६१.२५ ।।

इत्येते वाजिनः प्रोक्ता दश पञ्च च संस्मृताः।
शतमेकाधिकं कृत्स्नं यजुषां वै विकल्पकाः ।। ६१.२६ ।।

पुत्रमध्यापयामास सुमन्तुमथ जैमिनिः।
सुमन्तुश्चापि सुत्वानं पुत्रमध्यापयत्प्रभुः।
सुकर्माणं सुतं सुत्वा पुत्रमध्यापयत्प्रभुः ।। ६१.२७ ।।

स सहस्रमधीत्याशु सुकर्माप्यथ संहिताः।
प्रोवाचाथ सहस्रस्य सुकर्मा सूर्यवर्चसः ।। ६१.२८ ।।

अनध्यायेष्वधीयानांस्ताञ्जघान शतक्रतुः।
प्रायोपवेशमकरोत्ततोऽसौ शिष्यकारणात् ।। ६१.२९ ।।

क्रुद्धं दृष्ट्वा ततः शक्रो वरमस्मै ददौ पुनः।
भाविनौ ते महावीर्यौ शिष्यावनलवर्चसौ ।। ६१.३० ।।

अधीयानौ महाप्राज्ञौ सहस्रं सहितावुभौ।
एतौ सुरौ महाभागौ मा क्रुध्य द्विजसत्तम ।। ६१.३१ ।।

इत्युक्त्वा वासवः श्रीमान्सुकर्माणं यशस्विनम्।
शान्तक्रोधं द्विजं दृष्ट्वा तत्रैवान्तरधीयत ।। ६१.३२ ।।

तस्य शिष्यो भवेद्धीमान्पौष्यञ्जी द्विजसत्तमाः।
हिरण्यनाभः कौशिक्यौ द्वितीयोऽभून्नराधिपः ।। ६१.३३ ।।

अध्यापयत्तु पौष्यञ्जी सहस्रार्द्धन्तु संहिताः।
तेनान्योदीच्यसामान्याः शिष्याः पौष्यञ्जिनः शुभाः ।। ६१.३४ ।।

शतानि पञ्च कौशिक्यः संहितानाञ्च वीर्यवान्।
शिष्या हिरण्यनाभस्य स्मृतास्ते प्राच्यसामगाः ।। ६१.३५ ।।

लोकाक्षी कुथुमिश्चैव कुशीती लाङ्गलिस्तथा।
पौष्यञ्जिशिष्याश्चत्वारस्तेषां भेदान्निबोधत ।। ६१.३६ ।।

राणायनीयः स हि तण्डिपुत्रस्तस्मादन्यो मूलचारी सुविद्वान्।
सकतिपुत्रः सहसात्यपुत्र एतान् भेदान् वित्त लोकाक्षिणस्तु ।। ६१.३७ ।।

त्रयस्तु कुथुमेः पुत्रा औरसो रसपासरः।
भागवित्तिश्च तेजस्वी त्रिविधाः कौथुमाः स्मृताः ।। ६१.३८ ।।

शौरिद्युः श्रृङ्गिपुत्रश्चद्वावेतौ चरितव्रतौ।
राणायनीयः सौमित्रिः सामवेदविशारदौ ।। ६१.३९ ।।

प्रोवाच संहितास्तिस्रः श्रृङ्गिपुत्रो महातपाः।
चैलः प्राचीनयोगश्च सुरालश्च द्विजोत्तमाः ।। ६१.४० ।।

प्रोवाच संहिताः षट्तु पाराशर्यस्तु कौथुमः।
आसुरायणवैशाख्यौ वेदवृद्धपरायणौ ।। ६१.४१ ।।

प्राचीनयोगपुत्रश्च बुद्धिमांश्च पतञ्जलिः।
कौथुमस्य तु भेदास्ते पाराशर्यस्य षट् स्मृताः।
लाङ्गलिः शालिहोत्रश्च षट् षट् प्रोवाच संहिताः ।। ६१.४२ ।।

भालुकिः कामहानिश्च जैमिनिर्लोमगायिनः।
कण्डश्च कोलहश्चैव षडेते लाङ्गलाः स्मृताः।
एते लाङ्गलिनः शिष्याः संहिता यैः प्रसाधिताः ।। ६१.४३ ।।

ततो हिरण्यनाभस्य कृतशिष्यो नृपात्मजः ।
सोऽकरोच्च चतुर्विंशत्संहिता द्विपदां वरः ।
प्रोवाच चैव शिष्येभ्यो येभ्यस्तांश्च निबोधत ।। ६१.४४ ।।

राडश्च महवीर्यश्च पञ्चमो वाहनस्तथा।
तालकः पाण्डकश्चैष कालिको राजिकस्तथा।
गौतमश्चाजबस्तश्च सोमराजापतत्ततः ।। ६१.४५ ।।

पृष्ठग्नः परिकृष्टश्च उलूखलक एव च।
यवीयसश्च वैशालो अंगुलीयश्च कौशिकः ।। ६१.४६ ।।

सालिमञ्जरिसत्यश्च कापीयः कानिकश्च यः।
पराशरश्च धर्मात्मा इति क्रान्तास्तु सामगाः ।। ६१.४७ ।।

सामगानान्तु सर्वेषां श्रेष्ठौ द्वौ तु प्रकीर्त्तितौ।
पौष्यञ्जिश्च कृतिश्चैव संहितानां विकल्पकौ ।। ६१.४८ ।।

अथर्वाणं द्विधा कृत्वा सुमन्तुरददद् द्विजाः ।
कबन्धाय पुनः कृत्स्नं स च विद्याद्यथाक्रमम् ।। ६१.४९ ।।

कबन्धस्तु द्विदा कृत्वा पथ्यायैकं पुनर्ददौ।
द्वितीयं वेदस्पर्शाय स चतुर्द्धाकरोत् पुनः ।। ६१.५० ।।

मोदो ब्रह्मबलश्चैव पिप्पलादस्तथैव च।
शौकायनिश्च धर्मज्ञश्चतुर्थस्तपनः स्मृतः।?
वेदस्पर्शस्य चत्वारः शिष्यास्त्वेते दृढव्रताः ।। ६१.५१ ।।

पुनश्च त्रिविधं विद्धि पथ्यानां भेदमुत्तमम्।
जाजलिः कुमुदादिश्च तृतीयः शौनकः स्मृतः ।। ६१.५२ ।।

शौनकस्तु द्विधा कृत्वा ददावेकन्तु बभ्रवे।
द्वितीयां संहितां धीमान्सैन्धवायनसंज्ञिते ।। ६१.५३ ।।

सैन्धवो मुञ्जकेशाय भिन्ना सा च द्विधा पुनः।
नक्षत्र कल्पो वैतानस्तृतीयः संहितानिधिः।
चतुर्थोऽङ्गिरसः कल्पः शान्तिकल्पश्च पञ्चमः ।। ६१.५४ ।।

श्रेष्ठस्त्वथर्वणो ह्येते संहितानां विकल्पनाः।
षट्शः कृत्वा मयाप्युक्तं पुराणमृषिसत्तमाः ।। ६१.५५ ।।

आत्रेयः सुमतिर्धीमान्काश्यपो ह्यकृतव्रणः।
भारद्वाजोऽग्निवर्चाश्च वसिष्ठो मित्रयुश्च यः ।
सावर्णिः सोमदत्तिस्तु सुशर्मा शांशपायनः ।। ६१.५६ ।।

एते शिष्या मम ब्रह्मन् पुराणेषु दृढव्रताः।

त्रिभिस्तिस्रः कृतास्तिस्रः संहिताः पुनरेव हि ।। ६१.५७ ।।

काश्यपः संहिताकर्त्ता सावर्णिः शांशपायनः।
सामिका च चतुर्थीस्यात्सा चैषा पूर्वसंहिता ।। ६१.५८ ।।

सर्वास्ता हि चतुष्पादाः सर्वाश्चैकार्थवाचिकाः।
पाठान्तरे पृथग्भूता वेदशाखा यथा तथा।
चतुःसाहस्रिकाः सर्वाः शांशपायनिकामृते ।। ६१.५९ ।।

लोमहर्षणिका मूलास्ततः काश्यपिकाः पराः।
सावर्णिकास्तृतीयास्ता यजुर्वाक्यार्थपण्डिताः ।। ६१.६० ।।

शांशपायनिकाश्चान्या नोदनार्थविभूषिताः ।
सहस्राणि ऋचामष्टौ षट्शतानि तथैव च ।। ६१.६१ ।।

एताः पञ्चदशान्याश्च दशान्या दशभिस्तथा।
वालखिल्याः समप्रैखाः (षाः) ससावर्णाः प्रकीर्तिताः ।। ६१.६२ ।।

अष्टौ सामसहस्राणि सामानि च चतुर्द्दश।
आरण्यकं सहोमञ्च एताद्गायन्ति सामगाः ।। ६१.६३ ।।

द्वादशैव सहस्राणि छन्द आध्वर्यवं स्मृतम्।
यजुषां ब्राह्मणानाञ्च यथा व्यासो व्यकल्पयत् ।। ६१.६४ ।।

सग्राम्यारण्यकन्तत्स्यात्समन्त्रकरणं तथा।
अतः परं कथानान्तु पूर्वा इति विशेषणम् ।। ६१.६५ ।।

ग्राम्यारण्यं समन्त्रञ्च ऋग्ब्राह्मणयजुः स्मृतम्।
तथा हारिद्रवीयाणां खिलान्युपखिलानि च।
तथैव तैत्तिरीयाणां परक्षुद्रा इति स्मृतम् ।। ६१.६६ ।।

द्वे सहस्रे शतन्यूने वेदे वाजसनेयके।
ऋग्गणः परि संख्यातो ब्राह्मणन्तु चतुर्गुणम् ।। ६१.६७ ।।

अष्टौ सहस्राणि शतानि चाष्टौ अशीतिरन्यान्यधिकश्च पादः।
एतत्प्रमाणं यजुषामृचाञ्च सशुक्रियं साखिल याज्ञवल्क्यम् ।। ६१.६८ ।।

तथा चरणविद्यानां प्रमाणं संहितां श्रृणु।
षट्साहस्रमृचामुक्तमृचः षड्विंशतिः पुनः ।
एतावदधिकं तेषां यजुः कामं विवक्षति ।। ६१.६९ ।।

एकादश सहस्राणि दश चान्या दशोत्तराः ।
ऋचान्दश सहस्राणि अशीतित्रिशतानि च ।। ६१.७० ।।

सहस्रमेकं मन्त्राणामृचामुक्तं प्रमाणतः।
एतावद्भृगुविस्तारमन्यच्चाथर्विकं बहु ।। ६१.७१ ।।

ऋचामथर्वणां पञ्च सहस्राणि विनिश्चयः।
सहस्रमन्यद्विज्ञेयमृषिभिर्विंशतिं विना ।। ६१.७२ ।।

एतदङ्गिरसा प्रोक्तन्तेषामारण्यकं पुनः।
इति संख्या प्रसंख्याता शाखाभेदास्तथैव च ।। ६१.७३ ।।

कर्त्तारश्चैव शाखानां भेदे हेतुस्तथैव च।
सर्वमन्वन्तरेष्वेवं शाखाभेदाः समाः स्मृताः ।। ६१.७४ ।।

प्राजापत्या श्रुतिर्नित्या तद्विकल्पास्त्विमे स्मृताः।
अनित्यभावाद्देवानां मन्त्रोत्पत्तिः पुनः पुनः ।। ६१.७५ ।।

मन्वन्तराणां क्रियते सुराणां नामनिश्चयः।
द्वापरेषु पुनर्भेदाः श्रुतानां परिकीर्त्तिताः ।। ६१.७६ ।।

एवं वेदं तदान्यस्य भगवानृषिसत्तमः।
शिष्येभ्यश्च पुनर्दत्त्वा तपस्तप्तुं गतो वनम्।
तस्य शिष्यप्रशिष्यैस्तु शाखाभेदास्त्विमे कृताः ।। ६१.७७ ।।

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्म शास्त्रं पुराणञ्च विद्यास्त्वेताश्चतुर्दश ।। ६१.७८ ।।

आयुर्वेदो धनुर्वेदो गान्धर्वश्चैव ते त्रयः।
अर्थशास्त्रं चतुर्थन्तु विद्यास्त्वष्टादशैव तु ।। ६१.७९ ।।

ज्ञेया ब्रह्मर्षयः पूर्वन्तेभ्यो देवर्षयः पुनः।
राजर्षयः पुनस्तेभ्य ऋषिप्रकृतयस्त्रयः।

तेभ्य ऋषिप्रकृतयो मुनिभिः संसितव्रतैः ।। ६१.८० ।।

कश्यपेषु वसिष्ठेषु तथा भृग्वङ्गिरोऽत्रिषु।
पञ्चस्वेतेषु जायन्ते गोत्रेषु ब्रह्मवादिनः।
यस्माद्दृषन्ति ब्रह्माणन्तेन ब्रह्मर्षयः स्मृताः ।। ६१.८१ ।।

धर्मस्याथ पुलस्त्यस्य क्रतोश्च पुलहस्य च।
प्रत्यूषस्य प्रभासस्य कश्यपस्य तथा पुनः ।। ६१.८२ ।।

देवर्षयः सुतास्तेषां नामतस्तान्निबोधत।
देवर्षी धर्मपुत्रौ तु नरनारायणानुभौ ।। ६१.८३ ।।

वालखिल्याः क्रतोः पुत्राः कर्दमः पुलहस्य तु।
कुबेरश्चैव पौलस्त्यः प्रत्यूषस्याचलः स्मृतः ।। ६१.८४ ।।

पर्वतो नारदश्चैव कश्यपस्यात्मजावुभौ।
ऋषन्ति देवान् तस्मात्ते तस्माद्देवर्षयः स्मृताः ।। ६१.८५ ।।

मानवे वैषये वंशे ऐलवंशे च ये नृपाः।
ऐला ऐक्ष्वाकनाभागा ज्ञेया राजर्षयस्तु ते ।। ६१.८६ ।।

ऋषन्ति रञ्जनाद्यस्मात्प्रजा राजर्षयस्ततः ।
ब्रह्मलोकप्रतिष्ठास्तु स्मृता ब्रह्मर्षयो मताः ।। ६१.८७ ।।

देवलोकप्रतिष्ठाश्च ज्ञेया देवर्षयः शुभाः।
इन्द्रलोकप्रतिष्ठास्तु सर्वे राजर्षयो मताः ।। ६१.८८ ।।

अभिजात्या च तपसा मन्त्रव्याहरणैस्तथा।
एवं ब्रह्मर्षयः प्रोक्ता दिव्या राजर्षयस्तु ये ।। ६१.८९ ।।

देवर्षयस्तथान्ये च तेषां वक्ष्यामि लक्षणम्।
भूतभव्यभवज्ञानं सत्याभिव्याहृतं तथा ।। ६१.९० ।।

सम्बुद्धास्तु स्वयं ये तु सम्बुद्धा ये च वै स्वयम्।
तपसेह प्रसिद्धा ये गर्भेयैश्च प्रणोदितम् ।। ६१.९१ ।।

मन्त्रव्याहारिणो ये च ऐश्वर्यात्सर्वगाश्च ये।

इत्येते ऋषिबिर्युक्ता देवद्विजनृपास्तु ये ।। ६१.९२ ।।

एतान् भावानधीयाना ये चैत ऋषयो मताः।
सप्तैते सप्तभिश्चैव गुणैः सप्तर्षयः स्मृताः ।। ६१.९३ ।।

दीर्घायुषो मन्त्रकृत ईश्वरा दिव्यचक्षुषः।
बुद्धाः प्रत्यक्षधर्माणो गोत्रप्रवर्तकाश्च ये ।। ६१.९४ ।।

षट्कर्माभिरता नित्यं शालिनो गृहमेधिनः।
तुल्यैर्व्यवहरन्ति स्म अदृष्टैः कर्महेतुभिः ।। ६१.९५ ।।

अग्राम्यैर्वर्त्तयन्ति स्म रसैश्चैव स्वयंकृतैः।
कुटुम्बिन ऋद्विमन्तो बाह्यान्तरनिवासिनः ।। ६१.९६ ।।

कृतादिषु युगाख्येषु सर्वेष्वेव पुनः पुनः।
वर्णाश्रमव्यवस्थानं क्रियन्ते प्रथमन्तु वै ।। ६१.९७ ।।

प्राप्तै त्रेतायुगमुखे पुनः सप्तर्षयस्त्विह।
प्रवर्त्तयन्ति ये वर्णा नाश्रमांश्चैव सर्वशः।
तेषामेवान्वये वीरा उत्पद्यन्ते पुनः पुनः ।। ६१.९८ ।।

जायमाने पिता पुत्रेपुत्रः पितरि चैव हि।
एवं समेत्याविच्छेदाद्वर्त्तयन्त्यायुगक्षयात्।
अष्टाशीतिसहस्राणि प्रोक्तानि गृहमेधिनाम् ।। ६१.९९ ।।

अर्यम्णो दक्षिणा ये तु पितृयाणं समाश्रिताः।
दाराग्निहोत्रिणस्ते वै ये प्रजाहेतवः स्मृताः ।। ६१.१०० ।।

गृहमेधिनाञ्च संख्येयाः श्मशानान्याश्रयन्ति ते।
अष्टाशीतिसहस्राणि निहिता उत्तरायणे ।। ६१.१०१ ।।

ये श्रूयन्ते दिवं प्राप्ता ऋषयो ह्यूर्द्वरेतसः।
मन्त्रब्राह्मणकर्त्तारो जायन्ते ह युगक्षये ।। ६१.१०२ ।।

एवमावर्त्तमानास्ते द्वापरेषु पुनः पुनः।
कल्पानां भाष्यविद्यानां नानाशास्त्रकृतः क्षये ।। ६१.१०३ ।।

भविष्ये द्वापरे चैव द्रोणिर्द्वैपायनः पुनः ।
वेदव्यासो ह्यतीतेऽस्मिन् भविता सुमहातपाः ।। ६१.१०४ ।।

भविष्यन्ति भविष्येषु शाखाप्रणयनानि तु।
तस्मै तद्ब्रह्मणा ब्रह्मतपसा प्राप्तमव्ययम् ।। ६१.१०५ ।।

तपसा कर्म सम्प्राप्तं कर्मणा हि ततो यशः।
यशसा प्राप्य सत्यं हि सत्येनाप्तो हि चाव्ययः ।। ६१.१०६ ।।

अव्ययादमृतं शुक्रममृतात् सर्वमेव हि।
ध्रुवमेकाक्षरमिदं स्वात्मन्येव व्यवस्थितम्।
बृहत्त्वाद्बृंहणाच्चैव तद्ब्रह्मेत्यभिधीयते ।। ६१.१०७ ।।

प्रणवाव स्थितं भूयो भूर्भुवःस्वरिति स्मृतम्।
ऋग्यजुः सामाथर्वरूपिणे ब्रह्मणे नमः ।। ६१.१०८ ।।

जगतः प्रलयोत्पत्तौ यत्तत्कारणसंज्ञितम्।
महतः परमं गुह्यं तस्मै सुब्रह्मणे नमः ।। ६१.१०९ ।।

अगाधापरमक्षय्यं जगत्सम्मोहनालयम्।
सप्रकाशप्रवृत्तिभ्यां पुरुषार्थप्रयोजनम् ।। ६१.११० ।।

साङ्ख्यज्ञानवतां निष्ठा गतिः सङ्गदमात्मनः।
यत्तदव्यक्तममृतं प्रकृतिब्रह्म शाश्वतम् ।। ६१.१११ ।।

प्रधानमात्मयोनिश्च गुह्यं सत्त्वञ्च शब्द्यते।
अविभागस्तथा शुक्रमक्षरं बहु वाचकम्।
परमब्रह्मणे तस्मै नित्यमेव नमो नमः ।। ६१.११२ ।।

कृते पुनः क्रिया नास्ति कुत एवाकृतक्रिया।
सकृदेव कृतं सर्वं यद्वै लोके कृताकृतम् ।। ६१.११३ ।।

श्रोतव्यं वै श्रुतं वापि तथैवासाधुसाधुता।
ज्ञातव्यञ्चाथ मन्तव्यं स्प्रष्टव्यं भोज्यमेव च।
द्रष्टव्यञ्चाथ श्रोतव्यं ज्ञातव्यं वाथ किञ्चन ।। ६१.११४ ।।

दर्शितं यदनेनैव ज्ञानं तद्वै सुरर्षिणाम् ।

यद्वै दर्शितवानेष कस्तदन्वेष्टुमर्हति ।
सर्वाणि सर्वान्सर्वांश्च भगवानेव सोऽब्रवीत् ।। ६१.११५ ।।

यदा यत्क्रियते येन तदा तत्सोऽभिमन्यते।
येनेदं क्रियते पूर्वं तदन्येन विभावितम् ।। ६१.११६ ।।

यदा तु क्रियते किञ्चित्केनचिद्वाङ्मयं क्वचित्।
तेनैव तत्कृतं पूर्वं कर्त्तृणां प्रतिभाति वै ।। ६१.११७ ।।

विरक्तञ्चातिरिक्तञ्च ज्ञानाज्ञाने प्रियाप्रिये।
धर्माधर्मौ सुखं दुःखं मृत्युश्चामृतमेव च।
ऊर्द्ध्वन्तिर्यगधोभागस्तस्यैवादृष्टकारणम् ।। ६१.११८ ।।

स्वायम्भुवोऽथ ज्येष्ठस्य ब्रह्मणः परमेष्ठिनः।
प्रत्येकविद्यम्भवति त्रेतास्विह पुनः पुनः ।। ६१.११९ ।।

व्यस्यते ह्येकविद्यन्तद्द्वापरेषु पुनः पुनः ।
ब्रह्मा चैतदुवाचादौ तस्मिन् वैवस्वतेऽन्तरे ।। ६१.१२० ।।

आवर्त्तमाना ऋषयो युगाख्यासु पुनः पुनः।
कुर्वन्ति संहिता ह्येते जायमानाः परस्परम् ।। ६१.१२१ ।।

अष्टाशीतिसहस्राणि श्रुतर्षीणां स्मृतानि वै।
ता एव संहिता ह्येते आवर्त्तन्ते पुनः पुनः ।। ६१.१२२ ।।

श्रिता दक्षिणपन्थानं ये श्मशानानि भेजिरे।
युगे युगे तु ताः शाखा व्यस्यन्ते तैः पुनः पुनः ।। ६१.१२३ ।।

द्वापरेष्विव सर्वेषु संहिताश्च श्रुतर्षिभिः।
तेषां गोत्रेष्विमाः शाखा भवन्तीह पुनः पुनः।
ताः शाखास्तत्र कर्त्तारो भवन्तीह युगक्षयात् ।। ६१.१२४ ।।

एवमेव तु विज्ञेयं व्यतीतानागतेष्विह।
मन्वन्तरेषु सर्वेषु शाखाप्रणयनानि वै ।। ६१.१२५ ।।

अतीतेषु अतीतानि वर्त्तन्ते साम्प्रतेषु च।
भविष्याणि च यानि स्युर्वर्ण्यन्तेऽनागतेष्वपि ।। ६१.१२६ ।।

पूर्वेण पश्चिमं ज्ञेयं वर्त्तमानेन चोभयम्।
एतेन क्रमयोगेन मन्वन्तरविनिश्चयः ।। ६१.१२७ ।।

एवं देवाश्च पितर ऋषयो मनवश्च ये।
मन्त्रैः सहोर्द्ध्वं गच्छन्ति ह्यावर्त्तन्ते च तैः सह ।। ६१.१२८ ।।

जनलोकात्सुराः सर्वे पशुकल्पात्पुनः पुनः।
पर्याप्तकाले सम्प्राप्ते सम्भूता नैव नस्य (?) तु ।। ६१.१२९ ।।

अवश्यम्भाविनार्थेन सम्बध्यन्ते तदा तु ते।
ततस्ते दोषवज्जन्म पश्यन्ते रागपूर्वकम् ।। ६१.१३० ।।

निवर्त्तते तदा वृत्तिस्तेषामादोषदर्शनात् ।
एवं देव युगानीह दशकृत्वा निवर्त्तते ।। ६१.१३१ ।।

जनलोकात्तपोलोकं गच्छन्तीहानिवर्त्तनम्।
एवं देवयुगानीह व्यतीतानि सहस्रशः।
निधनं ब्रह्मलोके वै गतानि मुनिभिस्सह ।। ६१.१३२ ।।

न शक्यमानुपूर्व्येण तेषां वक्तुं सविस्तरान् ।
अनादित्वाच्च कालस्य असङ्ख्यानाच्च सर्वशः।
मन्वन्तराण्यतीतानि यानि कल्पैः पुरा सह ।। ६१.१३३ ।।

पितृभिर्मुनिभिर्देवैः सार्द्धं सप्तार्षिभिश्च वै।
कालेन प्रतिसृष्टानां युगानाञ्च निवर्तनम् ।। ६१.१३४ ।।

एतेन क्रमयोगेन कल्पमन्वन्तराणि तु।
सप्रजानि व्यतीतानि शतशोऽथ सहस्रशः ।। ६१.१३५ ।।

मन्वन्तरान्ते संहारः संहारान्ते च सम्भवः।
देवतानामृषीणाञ्च मनोः पितृगणस्य च ।। ६१.१३६ ।।

न शक्यमानुपूर्व्येण वक्तुं वर्षशतैरपि।
विस्तरस्तु निसर्गस्य संहारस्य च सर्वशः।
मन्वन्तरस्य संख्यां तु मानुषेण निबोधत ।। ६१.१३७ ।।

देवतानामृषीणाञ्च सङ्ख्यानार्थनिशारदैः।
त्रिंशत्कोट्यस्तु संपूर्णाः सङ्ख्याताः सङ्ख्यया द्विजैः ।। ६१.१३८ ।।

सप्तषष्टिस्तथान्यानि नियुतानि च सङ्ख्यया।
विंशतिश्च सहस्राणि कालोऽयं सोधिकान् विना ।। ६१.१३९ ।।

मन्वन्तरस्य सङ्ख्यैषा मानुषेण प्रकीर्तिता।
वत्सरेणैव दिव्येन प्रवक्ष्याम्यन्तरम्मनोः ।। ६१.१४० ।।

अष्टौ शतसहस्राणि दिव्यया सङ्ख्यया स्मृतम्।
द्विपञ्चाशत्तथान्यानि सहस्राण्यधिकानि तु ।। ६१.१४१ ।।

चतुर्द्दशगुणो ह्येष काल आहूतसंप्लवः।
पूर्णं युगसहस्रं स्यात्तदहर्ब्रह्मणः स्मृतम् ।। ६१.१४२ ।।

तत्र सर्वाणि भूतानि दग्धान्यादित्यरश्मिभिः।
ब्रह्माणमग्रतः कृत्वा सह देवर्षिदानवैः।
प्रविशन्ति सुरश्रेष्ठं देवदेवं महेश्वरम् ।। ६१.१४३ ।।

स स्रष्टा सर्वभूतानि कल्पादिषु पुनः पुनः।
इत्येष स्थितिकालो वै मनोर्देवर्षिभिः सह ।। ६१.१४४ ।।

सर्वमन्वन्तराणां वै प्रतिसन्धिं निबोधत।
युगाख्या या समुद्दिष्टा प्रागेवास्मिन् मया तव ।। ६१.१४५ ।।

कृतत्रेतादि संयुक्तं चतुर्युगमिति स्मृतम्।
तदेकसप्ततिगुणं परिवृत्तं तु साधिकम्।
मनोरेकमधीकारं प्रोवाच भगवान् प्रभुः ।। ६१.१४६ ।।

एवं मन्वन्तराणां तु सर्वेषामेव लक्षणम्।
अतीतानागतानां वै वर्त्तमानेन कीर्त्तितम् ।। ६१.१४७ ।।

इत्येष कीर्त्तितः सर्गा मनोः स्वायम्भुवस्य ह।
प्रति सन्धिन्तु वक्ष्यामि तस्य वै चापरस्य तु ।। ६१.१४८ ।।

मन्वन्तरं यथा पूर्वमृषिभिर्दैवतैः सह।
अवश्यम्भाविनार्थेन यथा तद्वै निवर्त्तते ।। ६१.१४९ ।।

अस्मिन् मन्वन्तरे पूर्वं त्रैलोक्यस्येश्वरास्तु ये।
सप्तर्षयश्च देवास्ते पितरो मनवस्तथा।
मन्वन्तरस्य काले तु सम्पूर्णे साधकास्तथा ।। ६१.१५० ।।

क्षीणाधिकाराः संवृत्ता बुद्ध्वा पर्यायमात्मनः।
महर्लोकाय ते सर्वे उन्मुखा दधिरे गतिम् ।। ६१.१५१ ।।

ततो मन्वन्तरे तस्मिन् प्रक्षीणा देवतास्तु ताः।
सम्पूर्णे स्थितिकाले तु तिष्ठन्त्येकं कृतं युगम् ।। ६१.१५२ ।।

उत्पद्यन्ते भविष्याश्च यावन्मन्वन्तरेश्वराः।
देवताः पितरश्चैव ऋषयो मनुरेव च ।। ६१.१५३ ।।

मन्वन्तरे तु सम्पूर्णे यद्यन्यद्वै कलौ युगे।
सम्पद्यते कृतं तेषु कलिशिष्टेषु वै तदा ।। ६१.१५४ ।।

यथा कृतस्य सन्तानः कलिपूर्वः स्मृतो बुधैः।
तथा मन्वन्तरान्तेषु आदिर्मन्वन्तरस्य च ।। ६१.१५५ ।।

क्षीणे मन्वन्तरे पूर्वे प्रवृत्ते चापरे पुनः।
मुखे कृतयुगस्याथ तेषां शिष्टास्तु ये तदा ।। ६१.१५६ ।।

स्प्तर्षयो मनुश्चैव कालावेक्षास्तु ये स्थिताः।
मन्वन्तरं प्रतीक्षन्ते क्षीयन्ते तपसि स्थिताः ।। ६१.१५७ ।।

मन्वन्तरव्यवस्थार्थं सन्तत्यर्थञ्च सर्वशः।
पूर्ववत् सम्प्रवर्त्तन्ते प्रवृत्ते वृष्टिसर्ज्जने ।। ६१.१५८ ।।

द्वन्द्वेषु सम्प्रवृत्तेषु उत्पन्नास्वौषधीषु च।
प्रजासु च निकेतासु संस्थितासु क्वचित् क्वचित् ।। ६१.१५९ ।।

वार्त्तायान्तु प्रवृत्तायां सद्धर्मे ऋषिभाविते ।
निरानन्दे गते लोके नष्टे स्थावरजङ्गमे ।। ६१.१६० ।।

अग्रामनगरे चैव वर्णाश्रमविवर्जिते।
पूर्वमन्वन्तरे शिष्टे ये भवन्तीह धार्मिकाः ।

सप्तर्षयो मनुश्चैव सन्तानार्थं व्यवस्तिताः ।। ६१.१६१ ।।

प्रजार्थं तपतां तेषां तपः परमदुश्चरम्।
उत्पद्यन्तीह सर्वेषां निधनेष्विह सर्वशः ।। ६१.१६२ ।।

देवासुराः पितृगणा मुनयो मनवस्तथा।
सर्पा भूताः पिशाचाश्च गन्धर्वा यक्षराक्षसाः ।। ६१.१६३ ।।

ततस्तेषां तु ये शिष्टा शिष्टाचारान् प्रचक्षते ।
सप्तर्षयो मनुश्चैव आदौ मन्वन्तरस्य ह।
प्रारम्भन्ते च कर्माणि मनुष्या दैवतैः सह ।। ६१.१६४ ।।

मन्वन्तरादौ प्रागेव त्रेतायुगमुखे ततः ।
पूर्वं देवास्ततस्ते वै स्थिते धर्मे तु सर्वशः ।। ६१.१६५ ।।

ऋषीणां ब्रह्मचर्येण गत्वाऽऽनृण्यन्तु वै ततः।
पितॄणां प्रजया चैव देवानामिज्यया तथा ।। ६१.१६६ ।।

शतं वर्षसहस्राणि धर्मे वर्णात्मके स्थिताः।
त्रयीं वार्त्तां दण्डनीतिं धर्मान् वर्णाश्रमांस्तथा।
स्थापयित्वाश्रमांश्चैव स्वर्गाय दधिरे मतीः ।। ६१.१६७ ।।

पूर्वं देवेषु तेष्वेव स्वर्गाय प्रमुखेषु च।
पूर्वं देवास्ततस्ते वै स्थिता धर्मेण कृत्स्नशः ।। ६१.१६८ ।।

मन्वन्तरे परावृत्ते स्थानान्युत्सृज्य सर्वशः।
मन्त्रैः सहोर्ध्वङ्गच्छन्ति महर्लोकमनामयम् ।। ६१.१६९ ।।

विनिवृत्तविकारास्ते मानसीं सिद्धिमास्थिताः।
अवेक्षमाणा वशिनस्तिष्ठन्त्याभूतसंप्लवम् ।। ६१.१७० ।।

ततस्तेषु व्यतीतेषु सर्वेष्वेतेषु सर्वदा।
शून्येषु देवस्थानेषु त्रैलोक्ये तेषु सर्वशः।
उपस्थिता इहैवान्ये देवा ये स्वर्गवासिनः ।। ६१.१७१ ।।

ततस्ते तपसा युक्ता स्थानान्यापूरयन्ति वै।
सत्यैन ब्रह्मचर्येण श्रुतेन च समन्विताः ।। ६१.१७२ ।।

सप्तर्षीणं मनोश्चैव देवानां पितृभिः सह।
निधनानीह पूर्वेषामादिना च भविष्यता ।। ६१.१७३ ।।

तेषामत्यन्तविच्छेद इह मन्वन्तरक्षयात्।
एवं पूर्वानुपूर्व्येण स्थितिरेषानवस्थिता।
मन्वन्तरेषु सर्वेषु यावदाभूतसंप्लवम् ।। ६१.१७४ ।।

एवं मन्वन्तराणान्तु प्रतिसन्धानलक्षणम्।
अतीतानागतानान्तु प्रोक्तं स्वायम्भुवेन तु ।। ६१.१७५ ।।

मन्वन्तरेष्वतीतेषु भविष्याणां तु साधनम् ।
एवमत्यन्तविच्छिन्नं भवत्याभूतसंप्लवात् ।। ६१.१७६ ।।

मन्वन्तराणां परिवर्त्तनानि एकान्ततस्तानि महर्गतानि।
महर्जनञ्चैव जनन्तपश्च एकान्तगानि स्म भवन्ति सत्ये ।। ६१.१७७ ।।

तद्भाविनां तत्र तु दर्शनेन नानात्वदृष्टेन च प्रत्ययेन।
सत्ये स्थितानीह तदा तु तानि प्रप्ते विकारे प्रतिसर्गकाले ।। ६१.१७८ ।।

मन्वन्तराणां परिवर्त्तनानि मुञ्चन्ति सत्यन्तु ततोऽपरान्ते।
ततोऽभियोगाद्विषमप्रमाणं विशन्ति नारायणमेव देवम् ।। ६१.१७९ ।।

मन्वन्तराणां परिवर्त्तनेषु चिरप्रवृत्तेषु निधिस्वभावात्।
क्षणं रसं तिष्ठति जीवलोकः क्षयोदयाभ्यां परिवन्दमानः ।। ६१.१८० ।।

इत्युत्तराण्येवमृषिस्तुतानां धर्मात्मनां दिव्यदृशां मनूनाम्।
वायुप्रणीतान्युपलभ्य दृश्यं दिव्यौजसा व्याससमासयोगैः ।। ६१.१८१ ।।

सर्वाणि राजर्षिसुरर्षिमन्ति ब्रह्मर्षिदेवोरगवन्ति चैव।
सुरेशसप्तर्षिपितृप्रजैशैर्युक्तानि सम्यक् परिवर्त्तनानि ।। ६१.१८२ ।।

उदारवंशाभिजनद्युतीनां प्रकृष्टमेधाभिसमेधितानाम्।
कीर्तिद्युतिख्यातिभिरन्वितानां पुण्यं हि विख्यापनमीश्वराणाम् ।। ६१.१८३ ।।

स्वर्गीयमेतत् परमं पवित्रं पुत्रीयमेतच्च परं रहस्यम्।
जप्यं महत्पर्वसु चैतदग्र्यं दुःस्वप्नशान्तिः परमायुषेयम् ।। ६१.१८४ ।।

प्रजेशदेवर्षिमनुप्रधानां पुण्यप्रसूतिं प्रथितामजस्य।
ममापि विख्यापनसंयमाय सिद्धिं जुषध्वं सुमहेशतत्वम् । ६१.१८५ ।।

इत्येतदन्तरं प्रोक्तं मनोः स्वायम्भुवस्य तु।
विस्तरेणानुपूर्व्या च भूयः किं वर्णयाम्यहम् ।। ६१.१८६ ।।

इति महापुराणे वायुप्रोक्ते प्रजापतिवंशानुकीर्त्तनं नामैकषष्टितमोऽध्यायः ।। ६१ ।।

।। इति श्रीमद्वायुपुराणे पूर्वार्द्धं समाप्तम् ।।

उत्तरार्द्धम् ।।
श्रीगणेशाय नमः ।।

शांशपायन उवाच॥

क्रमं मन्वन्तराणान्तु ज्ञातुमिच्छामि तत्त्वतः ।

दैवतानां च सर्वेषां ये च यस्यान्तरे मनोः ॥१॥

सूत उवाच॥ मन्वन्तराणां यानि स्युरतीतानागतानि ह ।

समासाद्विस्तराच्चैव ब्रुवतो वै निबोदत ॥२॥

स्वायम्भुवो मनुः पूर्वं मनुः स्वारोचिषस्तथा ।

औत्तमस्तामसश्चैव तथा रैवतचाक्षुषौ ।

षडेते मनवोऽतीता वक्ष्याम्यष्टावनागतान् ॥३॥

सावर्णाः पञ्च रौच्यश्च भौत्यो वैवस्वतस्तथा ।

वक्ष्याम्येतान् पुरस्तात्तु मनोर्वैवस्वतस्य ह ॥४॥

मनवः पञ्च येऽतीता मानवांस्तान् निबोधत ।

मन्वन्तरं मया चोक्तं क्रान्तं स्वायम्भुवस्य ह ॥५॥

अत ऊर्द्ध्वं प्रवक्ष्यामि मनोः स्वारोचिषस्य ह ।

प्रजासर्गं समासेन द्वितीयस्य महात्मनः ॥६॥

आसन् वै तुषिता देवा मनुस्वारोचिषेऽन्तरे ।

पारावताश्च विद्वांसो द्वावेव तु गणौ स्मृतौ ॥७॥

तुषितायां समुत्पन्नाः क्रतोः पुत्राः स्वरोचिषः ।

पारावताश्च शिष्टाश्च द्वादशौतौ गणौ स्मृतौ ।

छन्दजाश्च चतुर्विंशद्देवास्ते वै तदा स्मृताः ॥८॥

धैवस्यशोऽथ वामान्यो गोपा देवायतस्तथा ।

अजश्च भगवान् देवो दुरोणश्च महाबलः ॥९॥

आपश्चापि महाबाहुर्महौजाश्चापि वीर्यवान् ।

चिकित्वान् निभृतो यश्च अंशोयश्चैव पठ्यते ।

इत्येते क्रतुपुत्रास्तु तदासन् सोमपायिनः ॥२.१.१०॥ ६२.१०

प्रचेताश्चैव यो देवो विश्वेदेवास्तथैव च ।

समञ्जो विश्रुतो यश्च अजिह्मश्चारिमर्द्दनः ॥११॥

अजोषौ च महाभागौ यवीयश्च महाबलः ॥१२॥

होता यज्वाच इत्येते पराक्रान्ताः परावताः ।

इत्येता देवता ह्यासन्मनुस्वारोचिषेन्तरे ॥१३॥

सोमपास्तु तदा ह्येताश्चतुर्विंशतिदेवताः ।

तेषामिन्द्रस्तदा ह्यासीद्वैधश्च लोकविश्रुतः ॥१४॥

ऊर्जौ वसिष्ठपुत्रस्तु स्तम्भः काश्यप एव च ।

भार्गवश्च तदा द्रोणो ऋषभोऽङ्गिरसस्तथा ॥१५॥

पौलस्त्यश्चैव दत्तात्रिरात्रेयो निश्चलस्तथा ।

पौलहस्य च धावांस्तु एते सप्तर्षयः स्मृताः ॥१६॥

बृहद्गुहो नवश्चैव सुताश्चैते नव स्मृताः ॥१७॥

मनोः स्वारोचिषस्यैते पुत्रा वंशकराः स्मृताः ।

पुराणे परिसङ्ख्याता द्वितीयं चैतदन्तरम् ॥१८॥

सप्तर्षयो मनुर्देवाः पितरश्च चतुष्टयम् ।

मूलं मन्वन्तरस्यैते तेषां चैवान्तरे प्रजाः ॥१९॥

ऋषीणां देवताः पुत्राः पितरो देवसूनवः ।

ऋषयो देवपुत्राश्च इति शास्त्रविनिश्चयः ॥२.१.२०॥ ६२.२१

मनोः क्षत्रं विशश्चैव सप्तर्षिभ्यो द्विजातयः ।

एतन्मन्वन्तरं प्रोक्तं समासान्न तु विस्तरात् ॥२१॥

स्वायम्भुवेन विस्तारो ज्ञेयः स्वारोचिषस्य तु ।

न शक्यो विस्तरस्तस्य वक्तुं वर्षशतैरपि ।

पुनरुक्तबहुत्वात्तु प्रजानां वैकुले कुले ॥२२॥

तृतीयस्त्वथ पर्याय औत्तमस्यान्तरे मनोः ।

पञ्च चैव गणाः प्रोक्तास्तान् वक्ष्यामि निबोधत ॥२३॥

सुधामानश्च देवाश्च ये चान्ये वशवर्त्तिनः ।

प्रतर्द्दनाः शिवाः सत्या गणा द्वादश वै स्मृताः ॥२४॥

सत्यो धृतिर्दमो दान्तः क्षमः क्षामो धृतिः शुचिः ।

ईषोर्जाश्च तथा ज्येष्ठो वपुष्मांश्चैव द्वादश ।

इत्येते नामभिः क्रान्ताः सुधामानस्तु द्वादश ॥२५ ।

सहस्रधारो विश्वात्मा शमितारो बृहद्वसुः ।
विश्वधाविश्वकर्मा च मनस्वन्तो विराड्यशाः ॥२६॥
ज्योतिश्चैव विभाव्यश्च कीर्त्तिमान् वंशकारिणः ।
अन्यानाराधितो देवो वसुधिष्णो विवस्वसुः ॥२७॥
दिनक्रतुः सुधर्मा च धृतवर्मा यशस्विनः ।
केतुमांश्चैव इत्येते कीर्तितास्तु प्रमर्द्दनाः ॥२८॥
हंसस्वरोऽहिहा चैव प्रतर्द्दनयशस्करौ ।
सुदानो वसुदानश्च सुमञ्जसविषावुभौ ॥२९॥
जन्तुवाहयतिश्चैव सुवित्तसुनयस्तथा ।
शिवा ह्येते तु विज्ञेया यज्ञिया द्वादशापराः ॥२.१.३०॥ ६२.३०
सत्यानामपि नामानि निबोधत यथामतम् ।
दिक्पतिर्वाक्पतिश्चैव विश्वः शम्भुस्तथैव च ॥३१॥
स्वमृडीकोऽधिपश्चैव वर्च्चोधा मुह्यसर्व्वशः ।
वासवश्च सदाश्वश्च क्षेमानन्दौ तथैव च ॥३२॥
सत्या ह्येते परिक्रान्ता यज्ञिया द्वादशापराः ।
इत्येते देवता ह्यासन्नौत्तमस्यान्तरे मनोः ॥३३॥
अजश्च परशुश्चैव दिव्यो दिव्यौषधिर्न्नयः ।
देवानुजश्चाप्रतिमो महोत्साहौशिजस्तथा ॥३४॥
विनीतश्च सुकेतुश्च सुमित्रः सुबलः शुचिः ।
औत्तमस्य मनोः पुत्रास्त्रयोदश महात्मनः ।
एते क्षत्रप्रणेतारस्तृतीयं चैतदन्तरम् ॥३५॥
औत्तमे परिसङ्ख्यातः सर्गः स्वारोचिषेण तु ।
विस्तरेणानुपूर्व्या च तामसस्तान्निबोधत ॥३६॥
चतुर्थेत्वथ पर्याये तामसस्यान्तरे मनोः ।
सत्या स्वरूपाः सुधियो हरयश्चतुरो गणाः ॥३७॥
पुलस्त्यपुत्रस्तु शीर्ष्यण्यास्तमश्चैवाष्टमस्तथा ।
इन्द्रियाणि तदा देवा मनोस्तस्यान्तरे स्मृताः ॥३८॥
इन्द्रियाणां शतं यद्धिमुनयः प्रतिजानते ।

सत्यप्राणास्तु शीर्ष्यण्यास्तमश्चैवाष्टमस्तथा ।

इन्द्रियाणि तदा देवा मनोस्तस्यान्तरे स्मृताः ॥३९॥

तेषां च प्रभुदेवानां शिविरिन्द्रः प्रतापवान् ।

सप्तर्षयोऽन्तरे चैव तान्निबोधत सत्तमाः ॥२.१.४०॥ ६२.४०

काव्यो हर्षस्तथा चैव काश्यपः पृथुरेव च ।

आत्रेयश्चाग्निरित्येव ज्योतिर्धामा च भार्गवः ॥४१॥

पौलहो वनपीठश्च गोत्रे वासिष्ठ एव च ।

चैत्रस्तथापि पौलस्त्य ऋषयस्तामसेऽन्तरे ॥४२॥

जनुवण्डस्तथा शान्तिर्नरः ख्यातिर्भयस्तथा ।

प्रियभृत्यो हयवक्षिश्च पृष्टलोढो दृढोद्यतः ।

ऋतश्च ऋतबन्धुश्च तामसस्य मनोः सुताः ॥४३॥

पञ्चमेत्वथ पर्याये मनोश्चारिष्णवेऽन्तरे ।

गणास्तु सुसमाख्याता देवतानां निबोधत ॥४४॥

अमृता भाभूतरजोविकुण्ठाः ससुमेधसः ।

चरिष्णोस्तु शुभाः पुत्रा वसिष्ठस्य प्रजापतेः ।

चतुर्दश च चत्वारो गणास्तेषान्तु भास्वराः ॥४५॥

स्वत्रविप्रेग्निभासस्व प्रत्येतिष्ठामृतस्तथा ।

सुमतिर्वाविरावश्च वाचिनोदः स्रवस्तथा ॥४६॥

प्रविराशी च वादश्च प्राशश्चेति चतुर्दश ।

अमृताभाः स्मृता ह्येते देवाश्चारिष्णवेऽन्तरे ॥४७॥

मतिश्च सुमतिश्चैव ऋतसत्यौ तथैव च ।

आवृतिर्विवृतिश्चैव मदो विनय एव च ॥४८॥

जेता जिष्णुः सहश्चैव द्युतिमान् स्रवसस्तथा ।

इत्येतानीह नामानि आभूतरजसां विदुः ॥४९॥

वृषभेत्ता जयो भीमः शुचिर्दान्तो यशो दमः ।

नाथो विद्वानजेयश्च कृशो गौरो ध्रुवस्तथा ।

कीर्तितास्तु विकुण्ठा वै सुमेधास्तु निबोधत ॥२.१.५०॥ ६२.५०

मेधा मेधातिथिश्चैव सत्यमेधास्तथैव च ।

पृश्निमेधाल्पमेधाश्च भूयोमेधादयः प्रभुः ॥५१॥

दीप्तिमेधा यशोमेधाः स्थिरमेधास्तथैव च ।

सर्वमेधाश्वमेधाश्च प्रतिमेधाश्च यः स्मृतः ।

मेधावान् मेधहर्त्ता च कीर्त्तितास्तु सुमेधसः ॥५२॥

विभुरिन्द्रस्तदा तेषामासीद्विक्रान्तपौरुषः ।

पौलस्त्यो वेदबाहुश्च यजुर्नामा च काश्यपः ॥५३॥

हिरण्यरोमाङ्गिरसो वेदश्रीश्चैव भार्गवः ।

ऊर्द्ध्वबाहुश्च वासिष्ठः पर्जन्यः पौलहस्तथा ।

सत्यनेत्रस्तथात्रेय ऋषयो रैवतान्तरे ॥५४॥

महापुराणसम्भाव्यः प्रत्यङ्गपरहा शुचिः ।

बलबन्धुर्निरामित्रः केतुभृङ्गो दृढव्रतः ।

चरिष्णवस्य पुत्रास्ते पञ्चमञ्चैतदन्तरम् ॥५५॥

स्वारोचिषोत्तमश्चैव तामसो रैवतस्तथा ।

प्रियव्रतान्वया ह्येते चत्वारो मनवस्तथा ॥५६॥

षष्ठे खल्वथ पर्याये देवा ये चाक्षुषेऽन्तरे ।

आद्याः प्रसूता भाव्याश्च पृथुकाश्च दिवौकसः ।

महानुभावलेखाश्च पञ्च देवगणाः स्मृतः ॥५७॥

दिवौकसः सर्ग एष प्रोच्यते मातृनामभिः ।

अत्रेः पुत्रस्य नप्तार आरण्यस्य प्रजापतेः ।

गणाश्च तेषां देवानामेकैको ह्यष्टकः स्मृतः ॥५८॥

अन्तरिक्षो वसुहयो ह्यतिथिश्च प्रियवतः ।

श्रोता मन्ता सुमन्ता च आद्या ह्येते प्रकीर्त्तिताः ॥५९॥

श्येनभद्रस्तथा पश्यः पथ्यनेत्रो महायशाः ।

सुमनाश्च सुवेताश्च रैवतः सुप्रचेतसः ।

द्युतिश्चैव महासत्त्वः प्रसूताः परिकीर्त्तिताः ॥२.१.६०॥ ६२.६०

विजयः सुजयश्चैव मनोद्यानौ तथैव च ।

सुमतिः सुपरिश्चैव विज्ञातोऽर्थपतिश्च यः ।

भाव्या ह्येते स्मृता देवाः पृथुकांस्तु निबोधत ॥६१॥

अजिष्टः शाक्यनो देवो वानपृष्ठस्तथैव च ।

शाङ्करः सत्यधृष्णुश्च विष्णुश्च विजयस्तथा ।

अजितश्च महाभागः पृथुकास्ते दिवौकसः ॥६२॥

लेखांस्तथा प्रवक्ष्यामि ब्रुवतो मे निबोधत ।

मनोजवः प्रघासस्तु प्रचेतास्तु महायशाः ॥६३॥

वातो ध्रुवक्षितिश्चैव अद्भुतश्चैव वीर्यवान् ।

अवनो बृहस्पतिश्चैव लेखाः सम्परिकीर्त्तिताः ॥६४॥

मनोजवो महावीर्यस्तेषामिन्द्रस्तदाभवत् ।

उन्नतो भार्गवश्चैव हविष्मानङ्गिरःसुतः ॥६५॥

सुधामा काश्यपश्चैव वासिष्ठो विरजस्तथा ।

अतिमानश्च पौलस्त्यः सहिष्णुः पौलहस्तथा ।

मधुरा त्रेय इत्येते सप्त वै चाक्षुषेऽन्तरे ॥६६॥

ऊरुः पूरुः शतद्युम्नस्तपस्वी सत्यवाक् कृतिः ।

अग्निष्टुदतिरात्रश्च सुद्युम्नश्चेति ते नव ॥६७॥

अभिमन्युश्च दशमो नाद्वलेया मनोः सुताः ।

चाक्षुषस्य सुता ह्येते षष्ठं चैव तदन्तरम् ॥६८॥

वैवस्वतेन सङ्ख्यातस्तस्य सर्गो महात्मनः ।

विस्तरेणानुपूर्व्या च कथितं वै मया द्विजाः ॥६९॥

॥ऋषय ऊचुः॥

चाक्षुषस्य तु दायादः सम्भूतः कश्यपान्वये ।

तस्यान्ववाये येऽप्यन्ये तन्नो ब्रूहि यथातथम् ॥२.१.७०॥ ६२.७०

सूत उवाच॥ चाक्षुषस्य निसर्गन्तु समासाच्छ्रोतुमर्हथ ।

तस्यान्ववाये सम्भूतः पृथुर्वैन्यः प्रतापवान् ॥७१॥

प्रजानां पतयश्चान्ये दक्षः प्राचेतसस्तथा ।

उत्तानपादं जग्राह पुत्रमत्रिः प्रजापतिः ॥७२॥

दक्षकस्य तु पुत्रोऽस्य राजा ह्यासीत् प्रजापतेः ।

स्वायम्भुवेन मनुना दत्तोऽत्रेः कारणं प्रति ॥७३॥

मन्वन्तरमथासाद्य भविष्यं चाक्षुषस्य ह ।

षष्ठं तदनुवक्ष्यामि उपोद्घातेन वै द्विजाः ॥७४॥

उत्तानपादाच्चतुरा सूनृता वित्तभाविनी ।

उत्पन्ना चाधिधर्मेण ध्रुवस्य जननी शुभा ।

धर्मस्य पत्न्यां लक्ष्म्यां वै उत्पन्ना सा शुचिस्मिता ॥७५॥

ध्रुवञ्च कीर्त्तिमन्तञ्च अयस्मन्तं वसुं तथा ।

उत्तानपादोऽजनयत् कन्ये द्वे च शुचिस्मिते ।

मनस्विनीं स्वराञ्चैव त्रयोः पुत्राः प्रकीर्त्तिताः ॥७६॥

ध्रुवो वर्षसहस्राणि दश दिव्यानि वीर्यवान् ।

तपस्तेपे निराहारः प्रार्थयन् विपुलं यशः ॥७७॥

त्रेतायुगे तु प्रथमे पौत्रः स्वायम्भुवस्य सः ।

आत्मानं धारयन् योगात् प्रार्थयन् सुमहद्यशः ॥७८॥

तस्मै ब्रह्मा ददौ प्रीतो ज्योतिषां स्थानमुत्तमम् ।

आभूतसंप्लवं ह्रद्यमस्तोदयविवर्जितम् ॥७९॥

तस्यातिमात्रामृद्धिं च महिमानं निरीक्ष्य ह ।

दैत्यासुराणामाचार्यः श्लोकमप्युशना जगौ॥२.१.८०॥ ६२.८०

अहो स्य तपसो वीर्यमहो श्रुतमहो हुतम्।

स्थिताः सप्तर्षयः कृत्वा यदेनमुपरि ध्रुवम् ।

ध्रुवे दिवं समासक्तमीश्वरः स दिवस्पतिः ॥८१॥

ध्रुवात्पुष्टिञ्च भव्यञ्च भूमिः सा सुषुवे नृपौ ।

स्वां छायामाह वै पुष्टिर्भव नारी तु तां विभुः ॥८२॥

सत्याभिव्याहृते तस्य सद्यः स्त्री साभवत्तदा ।

दिव्यसंहन नाच्छाया दिव्याभरणभूषिता ॥८३॥

छायायां पुष्टिराधत्त पञ्च पुत्रानकल्मषान् ।

प्राचीनगर्भं वृषकं वृकञ्च वृकलं धृतिम् ॥८४॥

पत्नी प्राचीनगर्भस्य भूवर्चा सुषुवे नृपम् ।

नाम्नोदारधियं पुत्रमिन्द्रो यः पूर्वजन्मनि ॥८५॥

संवत्सरसहस्रान्ते सकृदाहारमाहरत् ।

एवं मन्वन्तरं युक्तमिन्द्रत्वं प्राप्तवान्विभुः ॥८६॥

उदारधेः सुतं भद्राजनयत्सा दिवञ्जयम् ।
रिपुं रिपुञ्जयं जज्ञे वराङ्गी सा दिवञ्जयात् ॥८७॥
रिपोराधत्त बृहती चाक्षुषं सर्वतेजसम् ।
व्यजीजनत् पुष्करिण्यां वारुण्यां चाक्षुणो मनुम् ।
प्रजापतेरात्मजायामारण्यस्य महात्मनः ॥८८॥
मनोरजायन्त दशनद्वलायां शुभाः सुताः ।
कन्यायां वै महाभाग वैराजस्य प्रजापतेः ॥८९॥
ऊरुः पूरुः शतद्युम्नस्तपस्वी सत्यवाक् कविः ।
अग्निष्टुदतिरात्रश्च सुद्युम्नश्चेति ते नव ।
अभिमन्युश्च दशमो नद्वलायां मनोः सुताः ॥२.१.९०॥ ६२.९०
ऊरोरजनयत् पुत्रान् षडाग्नेयी महाप्रभान् ।
अङ्गं सुमनसं स्वातिं क्रतुमङ्गिरसं शिवम् ॥९१॥
अङ्गात सुनीथापत्यं वै वेनमेकं व्यजायत ।
अपचारेण वेनस्य प्रकोपः सुमहानभूत् ॥९२॥
प्रजार्थमृषयस्तस्य ममन्थुर्दक्षिणं करम् ।
वेनस्य पाणौ मथिते सम्बभूव महान्नृपः ।
वैन्यो नाम महीपालो यः पृथुः परिकीर्त्तितः ॥९३॥
स धन्वी कवची जातस्तेजसा प्रज्वलन्निव ।
पृथुर्वैन्यः सर्वलोकान् ररक्ष क्षत्रपूर्वजः ॥९४॥
तस्य स्तवार्थमुत्पन्नौ निपुणौ सूतमागधौ ॥९५॥
तेनेयं गौर्महाराज्ञा दुग्धा सस्यानि धीमता ।
प्रजानां वृत्तिकामानां देवैरृषिगणैः सह ॥९६॥
पितृभिर्दानवैश्चैव गन्धर्वैरप्सरोगणैः ।
सर्वैः पुण्यजनैश्चैव वीरुद्भिः पर्वतैस्तथा ॥९७॥
तेषु तेषु तु पात्रेषु दुह्यमाना वसुन्धरा ।
प्रादादयथेप्सितं क्षीरं तेन लोकांस्त्ववधारयत् ॥९८॥
ऋषय ऊचुः॥ विस्तरेण पृथोर्जन्म कीर्त्तयस्व महा मते ।
यथा महात्मना दुग्धा पूर्वं तेन वसुन्धरा ॥९९॥

यथा देवैश्च नागैश्च यथा ब्रह्मर्षिभिः सह ।

यथा यक्षैः सगन्धर्वैरप्सरोभिर्यथा पुरा ॥२.१.१००॥ ६२.१००

तेषां पात्रविशेषांश्च दोग्धारं क्षीरमेव च ।

तथा वत्सविशेषांश्च तन्नः प्रब्रूहि पृच्छताम् ॥१०१॥

यस्मिंश्च कारणे पाणिर्वेनस्य मथितः पुरा ।

क्रुद्धैर्महर्षिभिः पूर्वं तत् सर्वं कथयस्व नः ॥१०२॥

॥सूत उवाच॥ वर्णयिष्यामि वो विप्राः पृथोर्वैन्यस्य सम्भवम् ।

एकाग्राः प्रयताश्चैव शूश्रूषध्वं द्विजोत्तमाः ॥१०३॥

नाशुचेर्नापि पापाय नाशिष्यायाहिताय च ।

वर्णयेयमिमं पुण्यं नाव्रताय कथञ्चन ॥१०४॥

स्वर्ग्यं यशस्यमायुष्यं पुण्यं वेदैश्च सम्मितम् ।

रहस्यमृषिभिः प्रोक्तं श्रृणुयाद्योऽनसूयकः ॥१०५॥

यश्चेमं श्रावयेन्मर्त्यः पृथोर्वैन्यस्य सम्भवम् ।

ब्राह्मणेभ्यो नमस्कृत्य न स शोचेत् कृताकृतम् ।

गोप्ता धर्मस्य राजासौ बभूवात्रिसमः प्रभुः ॥१०६॥

अत्रिवंशसमुत्पन्नो ह्यङ्गो नाम प्रजापतिः ।

यस्य पुत्रोऽभवद्वेनो नात्यर्थं धार्मिक स्तथा ॥१०७॥

जातो मृत्युसुतायां वै सुनीथायां प्रजापतिः ।

स मातामहदोषेण वेनः कालात्मजात्मजः ॥१०८॥

स धर्मं पृष्ठतः कृत्वा कामाल्लोभे व्यवर्त्तत ।

स्थापनं स्थापयामास धर्मापेतं स पार्थिवः ॥१०९॥

वेदशास्त्राण्यतिक्रम्य ह्यधर्मे निरतोऽभवत् ।

निःस्वाध्यायवषट्काराः प्रजा स्तस्मिन् प्रशासति ।

आसन्न च पपुः सोमं हुतं यज्ञेषु देवताः ॥२.१.११०॥ ६२.११०

न यष्टव्यं न होतव्यमिति तस्य प्रजापतेः ।

आसीत् प्रतिज्ञा क्रूरेयं विनाशे प्रत्युपस्थिते ॥१११॥

अहमिज्यश्च पूज्यश्च सर्वयज्ञे द्विजातिभिः ।

मयि यज्ञो विधातव्यो मयि होतव्यमित्यपि ॥११२॥

तमतिक्रान्तमर्यादमाददानमसाम्प्रतम् ।

ऊचुर्महर्षयः सर्वे मरीचिप्रमुखास्तथा ॥११३॥

वयं दीक्षां प्रवेक्ष्यामः संवत्सरशतान् बहून् ।

माऽधर्मं वेन कार्षीस्त्वं नैष धर्मः सनातनः ।

निधने च प्रसूतोऽसि प्रजापतिरसंशयः ॥११४॥

पालयिष्ये प्रजाश्चेति त्वया पूर्वं प्रतिश्रुतम् ।

तांस्तथा वादिनः सर्वान् ब्रह्मर्षीनब्रवीत्तदा ॥११५॥

स प्रहस्य तु दुर्बुद्धिरिदं वचनकोविदः ।

स्रष्टा धर्मस्य कश्चान्यः श्रोतव्यं कस्य वै मया ॥११६॥

वीर्यश्रुततपःसत्यैर्मया वा कः समो भुवि ।

महात्मानमनूनं मां यूयं जानीत तत्त्वतः ॥११७॥

प्रभवः सर्वलोकानां धर्माणाञ्च विशेषतः ।

इच्छन् दहेयं पृथिवीं प्लावयेयं जलेन वा ।

सृजेयं वा ग्रसेयं वा नात्र कार्या विचारणा ॥११८॥

यदा न शक्यते स्तम्भान्मानाच्च भृशमोहितः ।

अनुनेतुं नृपो वेनस्ततः क्रुद्धा महर्षयः ॥११९॥

निगृह्य तं महाबाहुं विस्फुरन्तं यथाऽनलम् ।

ततोऽस्य वामहस्तं ते ममन्थुर्भृशकोपिताः ॥२.१.१२०॥ ६२.१२०

तस्मात् प्रमथ्यमानाद्वै जज्ञे पूर्वमभिश्रुतः ।

ह्रस्वोऽतिमात्रं पुरुषः कृष्णश्चापि तथा द्विजाः ॥१२१॥

स भीतः प्राञ्जलिश्चैव स्थितवान् व्याकुलेन्द्रियः ।

तमार्त्तं विह्वलं दृष्ट्वा निषीदेत्यब्रुवन् किल ॥१२२॥

निषादवंशकर्त्ताऽसौ बभूवानन्तविक्रमः ।

धीवरानसृजत्सोऽपि वेनकल्मषसम्भवान् ॥१२३॥

ये चान्ये विन्ध्यनिलयास्तुम्बुरातुवराः खसाः ।

अधर्मरुचयश्चापि सम्भूता वेनकल्मषात् ॥१२४॥

पुनर्महर्षयस्तस्य पाणिं वेनस्य दक्षिणम् ।

अरणीमिव संरम्भान्ममन्थुर्जातमन्यवः ॥१२५॥

पृथुस्तस्मात् समुत्पन्नः करास्फालनतेजसः ।
पृथोः करतलाद्वापि यस्माज्जातः पृथुस्ततः ।
दीप्यमानः स्ववपुषा साक्षादग्निरिवोज्वलन् ॥१२६॥
आद्यमाजगवं नाम धनुर्गृह्य महारवम् ।
शरांश्च बिभ्रद्रक्षार्थं कवचञ्च महाप्रभम् ॥१२७॥
तस्मिञ्जातेऽथ भूतानि संप्रहृष्टानि सर्वशः ।
समुत्पन्ने महारात्रि वेनश्च त्रिदिवङ्गतः ॥१२८॥
समुत्पन्नेन राजर्षिः स सत्पुत्रेण धीमता ।
पुरुषव्याघ्रः पुन्नाम्नो नरकात्त्रायते ततः ॥१२९॥
तं नद्यश्च समुद्राश्च रत्नान्यादाय सर्वशः ।
समागम्य तदा वैन्यमभ्यषिञ्चन्नराधिपम् ।
महता राजराज्येन महाराजं महाद्युतिम् ॥१३०॥ ६२.१३०
सोऽभिषिक्तो महाराजा देवैरङ्गिरसः सुतैः ।
आदिराजो महाराजः पृथुर्वैन्यः प्रतापवान् ॥१३१॥
पित्राऽपरञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः ।
ततो राजेति नामास्य अनुरागादजायत ॥१३२॥
आपस्तस्तम्भिरे चास्य समुद्रमभियास्यतः ।
पर्वताश्च विशीर्यन्ते ध्वजभङ्गश्च नाभवत् ॥१३३॥
अकृष्टपच्या पृथिवी सिद्ध्यन्त्यन्नानि चिन्तया ।
सर्वकामदुघा गावः पुटके पुटके मधु ॥१३४॥
एतस्मिन्नेव काले च यज्ञे पैतामहे शुभे ।
सूतः सूत्यां समुत्पन्नः सौत्येऽहनि महामतिः ।
तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः ॥१३५॥
ऐन्द्रेण हविषा चापि हविः पृक्तं बृहस्पतेः ।
जुहावेन्द्राय देवेन ततः सूतो व्यजायत ॥१३६॥
प्रमादस्तत्र सञ्जज्ञे प्रायश्चित्तञ्च कर्मसु ।
शिष्यहव्येन यत्पृक्तमाभिभूतं गुरोर्हविः ।
अधरोत्तरचारेण जज्ञे तद्वर्णवैकृतम् ॥१३७॥

यच्च क्षत्रात्सम्भवद्ब्राह्मण्यां हीनयोनितः ।
सूतः पूर्वेण साधर्मतुल्यधर्मः प्रकीर्त्तितः ॥१३८॥
मध्यमो ह्येष सूतस्य धर्मः क्षत्रोपजीवनम् ।
रथनागाश्च चरितं जघन्यञ्च चिकित्सितम् ॥१३९॥
पृथोः स्तवार्थं तौ तत्र समाहूतौ सुरर्षिभिः ।
तावूचुर्मुनयः सर्वे स्तूयतामेष पार्थिवः ।
कर्मैतदनुरूपं वां पात्रं स्तोत्रस्य चाप्ययम् ॥२.१.१४०॥ ६२.१४२
तावूचतुस्तदा सर्वास्तानृषीन्सूतमागधौ ।
आवां देवानृषींश्चैव प्रीणयावः स्वकर्मभिः ॥१४१॥
न चास्य कर्म वै विद्वो न तथा लक्षणं यशः ।
स्तोत्रं येनास्य कुर्यावो राज्ञस्तेजस्विनो द्विजाः ॥१४२॥
ऋषिभिस्तौ नियुक्तौ तु भविष्यैः स्तूयतामिति ।
दानधर्मरतो नित्यं सत्यवान् स जितेन्द्रियः ।
ज्ञानशीलो वदान्यस्तु संग्रामेष्वपराजितः ॥१४३॥
यानि कर्माणि कृतवान् पृथुश्चापि महाबलः ।
तानि शीलेन बद्धानि स्तुवद्भिः सूतमागधैः ॥१४४॥
ततः स्तवान्ते सुप्रीतः पृथुः प्रादात् प्रजेश्वरः ।
अनूपदेशं सूताय मगधं मागधाय च ॥१४५॥
तदा वै पृथिवीपालाः स्तूयन्ते सूतमागधैः ।
आशीर्वादैः प्रबोध्यन्ते सूतमागधबन्दिभिः ॥१४६॥
तं दृष्ट्वा परमप्रीताः प्रजा ऊचुर्महर्षयः ।
एष वो वृत्तिदो वैन्यो भवन्त्विति नराधिपः ॥१४७॥
ततो वैन्यं महाभागं प्रजाः समभिदुद्रुवुः ।
त्वन्नो वृत्तिं विधत्स्वेति महर्षेर्वचनात्तदा ।
सोऽभिद्रुतः प्रजाभिस्तु प्रजाहितचिकीर्षया ॥१४८॥
धनुर्गृहीत्वा बाणांश्च वसुधामार्द्दयद्बली ।
अस्यार्द्दनभय त्रस्ता गौर्भूत्वा प्राद्रवन्मही ॥१४९॥
तां पृथुर्धनुरादाय द्रवन्तीमन्वधावत ।

सा लोकान् ब्रह्मलोकादीन् गत्वा वैन्यभयात्तदा ।

ददर्श चाग्रतो वैन्यं कार्मुकोद्यतधारिणम् ॥२.१.१५०॥ ६२.१५२

ज्वलद्भिर्विशिखैर्बाणैर्दीप्ततेजसमच्युतम् ।

महायोगं महात्मानं दुर्द्धर्षममरैरपि ॥१५१॥

अलभन्ती तदा त्राणं वैन्यमेवान्वपद्यत ।

कृताञ्जलिपुटा देवी पूज्या लोकैस्त्रिभिः सदा ॥१५२॥

उवाच वैन्यं नाधर्मं स्त्रीवधे परिपश्यसि ।

कथं धारयिता चासि प्रजा राजन् मया विना ॥१५३॥

मयि लोकाः स्थिता राजन् मयेदन्धार्यते जगत् ।

मद्दते च विनश्येयुः प्रजाः पार्थिवसत्तम ॥१५४॥

न मामर्हसि वै हन्तुं श्रेयश्चेत्त्वं चिकीर्षसि ।

प्रजानां पृथिवीपाल श्रृणु चेदं वचो मम ॥१५५ .

उपायतः समारब्धाः सर्वे सिद्धन्त्युपक्रमाः.

हत्वापि मां न शक्तस्त्वं प्रजानां पालने नृप ॥१५६॥

अन्नभूता भविष्यामि जहि कोपं महाद्युते ।

अवध्याश्च स्त्रियः प्राहुस्तिर्यग्योनिशतेष्वपि ।

मत्वैवं पृथिवीपाल धर्मं न त्यक्तुमर्हसि ॥१५७॥

एवं बहुविधं वाक्यं श्रुत्वा राजा महामनाः ।

क्रोधं निगृह्य धर्मात्मा वसुधामिदमब्रवीत् ॥१५८॥

एकस्यार्थाय यो हन्यादात्मनो वा परस्य वा ।

एकं प्राणं बहून् वापि कामं तस्यास्ति पातकम् ॥१५९॥

यस्मिंस्तु निहते भद्रे लभन्ते बहवः सुखम् ।

तस्मिन्हते शुभे नास्ति पातकञ्चोप पातकम् ॥२.१.१६०॥ ६२.१६२

सोऽहं प्रजानिमित्तं त्वां वधिष्यामि वसुन्धरे ।

यदि मे वचनं नाद्य करिष्यसि जगद्धितम् ॥१६१॥

त्वां निहत्याद्य बाणेन मच्छासनपराङ्मुखीम् ।

आत्मानं प्रथयित्वेह धारयिष्याम्यहं प्रजाः ॥१६२॥

सा त्वं वचनमासाद्य मम धर्मभृतां वरे ।

सञ्जीवय प्रजा नित्यं शक्ता ह्यसि न संशयः ॥१६३॥

दुहितृत्वञ्च मे गच्छ एवमेतं महद्वरम् ।

नियच्छे त्वान्तु धर्मार्थं प्रयुक्तं घोरदर्शने ॥१६४॥

प्रत्युवाच ततो वैन्यमेवमुक्ता सती मही ।

एवमेतदहं राजन् विधास्यामि न संशयः ॥१६५॥

वत्सन्तु मम तं यच्छ क्षरेयं येन वत्सला ।

समाञ्च कुरु सर्वत्र मां त्वं धर्मभृतां वर ।

यथा विष्यन्दमानञ्च क्षीरं सर्वत्र भावये ॥१६६॥

तत उत्सारयामास शिलाजालानि सर्वशः ।

धनुष्कोट्या ततो वैन्यस्तेन शैला विवार्द्धिताः ॥१६७॥

मन्वन्तरेष्वतीतेषु विषमासीद्वसुन्धरा ।

स्वभावेनाभवंस्तस्याः समानि विषमाणि च ॥१६८॥

न हि पूर्वनिसर्गे वै विषमे पृथिवीतले ।

प्रविभागः पुराणां वा ग्रामाणां वापि विद्यते ॥१६९॥

न सस्यानि न गोरक्षा न कृषिर्न वणिक्पथः ।

चाक्षुषस्यान्तरे पूर्वमेतदासीत्पुरा किल ।

वैवस्वतेऽन्तरे तस्मिन्सर्वस्यैतस्य सम्भवः ॥२.१.१७०॥ ६२.१७२

समत्वं यत्र यत्रासीद्भूयस्तस्मिंस्तदेव हि ।

तत्र तत्र प्रजास्ता वै निवसन्ति स्म सर्वदा ॥१७१॥

आहारः फलमूलन्तु प्रजानामभत्किल ।

वैन्यात्प्रभृति लोकेऽस्मिन्सर्वस्यैतस्य सम्भवः ॥१७२॥

कृच्छ्रेण महता सोऽपि प्रनष्टास्वोषधीषु वै ।

स कल्पयित्वा वत्सन्तु चाक्षुषं मनुमीश्वरः ।

पृथुर्दुदोह सस्यानि स्वतले पृथिवीं ततः ॥१७३॥

सस्यानि तेन दुग्धानि वैन्येन तु वसुन्धराम् ।

मनुञ्च चाक्षुषं कृत्वा वत्सम्पात्रे च भूमये ।

तेनान्नेन तदा ता वै वर्त्तयन्ते प्रजाः सदा ॥१७४॥

ऋषिभिः स्तूयते वापि पुनर्दुग्धा वसुन्धरा ।

वत्सः सोमस्त्वभूत्तेषां दोग्धा चापि बृहस्पतिः ॥१७५॥

पात्रमासीत्तु छन्दांसि गायत्र्यादीनि सर्वशः ।

क्षीरमासीत्तदा तेषां तपो ब्रह्म च शाश्वतम् ॥१७६॥

पुनः स्तुत्वा देवगणैः पुरन्दरपुरोगमैः ।

सौवर्णं पात्रमादाय अमृतं दुदुहे तदा ।

तेनैव वर्त्तयन्ते च देवा इन्द्रपुरोगमाः ॥१७७॥

नागैश्च स्तूयते दुग्धा विषं क्षीरं तदा मही ।

तेषाञ्च वासुकिर्दोग्धा काद्रवेया महौजसः ॥१७८॥

नागानां वै द्विजश्रेष्ठ सर्पाणाञ्चैव सर्वशः ।

तेनैव वर्त्तयन्त्युग्रा महाकाया महोल्बणाः ।

तदाहारास्तदाचारास्तद्वीर्यास्तु सदाश्रयाः ॥१७९॥

श्राम(आम)पात्रे पुनर्दुग्धा त्वन्तर्द्धानमियं मही ।

वत्सं वैश्रवणं कृत्वा यक्षैः पुण्यजनैस्तथा ॥२.१.१८०॥ ६२.१८२

दोग्धा च जतुनाभस्तु पिता मणिवरस्य सः ।

यक्षात्मजो महातेजा वशी स सुमहाबलः ।

तेन ते वर्त्तयन्तीति परमर्षिरुवाच ह ॥१८१॥

राक्षसैश्च पिशाचैश्च पुनर्दुग्धा वसुन्धरा ।

ब्रह्मोपेतस्तु दोग्धा वै तेषामासीत्कुबेरकः ॥१८२॥

रक्षः सुमाली बलवान्क्षीरं रुधिरमेव च ।

कपालपात्रे निर्दुग्धा अन्तर्द्धानञ्च राक्षसैः ।

तेन क्षीरेण रक्षांसि वर्त्तयन्तीह सर्वशः ॥१८३॥

पद्मपात्रे पुनर्दुग्धा गन्धर्वैरप्सरोगणैः ।

वत्सं चित्ररथं कृत्वा शुचीन् गन्धास्तथैव च ॥१८४॥

तेषां विश्वावसुस्त्वासीद्दोग्धा पुत्रो मुनेः शुचिः ।

गन्धर्वराजोऽतिबलो महात्मा सूर्यसन्निभः ॥१८५॥

शैलैश्च स्तूयते दुग्धा पुनर्देवी वसुन्धरा ।

तत्रौषधीर्मूर्त्तिमती रत्नानि विविधानि च ॥१८६॥

वत्सस्तु हिमवांस्तेषां मेरुर्दोग्धा महागिरिः ।

पात्रन्तु शैलमेवासीत्तेन शैलः प्रतिष्ठितः ॥१८७॥

स्तूयते वृक्षवीरुद्भिः पुनर्दुग्धा वसुन्धरा ।

पलाशपात्रमादाय दुग्धं छिन्नप्ररोहणम् ॥१८८॥

कामधुक् पुष्पितः शैलः प्लक्षो वत्सो यशस्विनी ।

सर्वकामदुघा दोग्ध्री पृथिवी भूतभाविनी ॥१८९॥

सैषा धात्री विधात्री च धारणी च वसुन्धरा ।

दुग्धा हितार्थं लोकानां पृथुना इति नः श्रुतम् ।

चराचरस्य लोकस्य प्रतिष्ठा योनिरेव च ॥२.१.१९०॥ ६२.१९३

इति श्रीमहापुराणे वायुप्रोक्ते पृथिवीदोहनं नाम प्रथमोऽध्यायः ॥२.१॥

।।सूत उवाच ।।

आसीदियं समुद्रान्ता मेदिनीति परिश्रुता।

वसु धारयते यस्माद्वसुधा तेन चोच्यते ।। २.१ ।।

मधुकैटभयोः पूर्वं मेदसा संपरिप्लुता।

ततोऽभ्युपगमाद्राज्ञः पृथोर्वैन्यस्य धीमतः ।। २.२ ।।

इयञ्चासीत् समुद्रान्ता मेदिनीति परिश्रुता।

दुहितृत्वमनुप्राप्ता पृथिवीत्युच्यते ततः ।। २.३ ।।

प्रथिता प्रविभक्ता च शोभिता च वसुन्धरा।

सस्याकरवती राज्ञा पत्तनाकरमालिनी।

चातुर्वर्ण्यसमाकीर्णा रक्षिता तेन धीमता ।। २.४ ।।

एवंप्रभावो राजासीद्वैन्यः स नृपसत्तमः।

नमस्यश्चैव पूज्यश्च भूतग्रामेण सर्वशः ।। २.५ ।।

ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः।

पृथुरेव नमस्कार्यो ब्रह्मयोनिः सनातनः ।। २.६ ।।

पार्थिवैश्च महाभागैः प्रार्थयद्भिर्महद्यशः।

आदिराजा न मस्कार्यः पृथुर्वैन्यः प्रतापवान् ।। २.७ ।।

योधैरपि च संग्रामे प्रार्थयानैर्जयं युधि।

आदिकर्त्ता नराणां वै नमस्यः पृथुरेव हि ।। २.८ ।।

यो हि योद्धा रणं याति कीर्त्तयित्वा पृथुं नृपम्।

स घोररूपे संग्रामे क्षेमी तरति कीर्तिमान् ।। २.९ ।।

वैश्यैरपि च राजर्षिर्वैश्यवृत्तिसमास्थितैः।

पृथुरेव नमस्कार्यो वृत्तिदाता महायशाः ।। २.१० ।।

एते वत्सविशेषाश्च दोग्धारः क्षीरमेव च।

पात्राणि च मयोक्तानि सर्वाण्येव यथाक्रमम् ।। २.११ ।।

ब्रह्मणा प्रथमं दुग्धा पुरा पृथ्वी महात्मना।

वायुं कृत्वा तदा वत्सं बीजानि वसुधातले ।। २.१२ ।।

ततः स्वायम्भुवे पूर्वन्तदा मन्वन्तरे पुनः।

वत्सं स्वायम्भुवं कृत्वा दुग्धा ग्रीष्मेण वै मही ।। २.१३ ।। *

मनौ स्वारोचिषे दुग्धा मही चैत्रेण धीमता।

मनुं स्वारोचिषं कृत्वा वत्सं सस्यानि वै पुरा ।। २.१४ ।।

उत्तमेऽनुत्तमेनापि दुग्धा देवभुजेन तु ।

मनुं कृत्वोत्तमं वत्सं सर्वसस्यानि धीमता ।। २.१५ ।।

पुनश्च पञ्चमे पृथ्वी तामसस्यान्तरे मनोः।

दुग्धेयं तामसं वत्सं कृत्वा तु बलबन्धुना ।। २.१६ ।।

चारिष्णवस्य देवस्य संप्राप्ते चान्तरे मनोः।

दुग्धा मही पुराणेन वत्सञ्चारिष्णवं प्रति ।। २..१७ ।।

चाक्षुषेऽपि च सम्प्राप्ते तदा मन्वन्तरे पुनः।

दुग्धा मही पुराणेन वत्सं कृत्वा तु चाक्षुषम् ।। २.१८ ।।

चाक्षुषस्यान्तरेऽतीते प्राप्ते वैवस्वते पुनः ।

वैन्येनेयं मही दुग्धा यथा ते कीर्तितं मया ।। २.१९ ।।

एतैर्दुग्धा पुरा पृथ्वी व्यतीतेष्वन्तरेषु वै।

देवादिभिर्मनुष्यैश्च तथा भूतादिभिश्च या ।। २.२० ।।

एवं सर्वेषु विज्ञेया ह्यतीतानागतेष्विह।

देवा मन्वन्तरेष्वस्य पृथोस्तु श्रृणुत प्रजाः ।। २.२१ ।।

पृथोस्तु पुत्रौ विक्रान्तौ जज्ञातेऽन्तर्द्धिपालिनौ।

शिखण्डिनी हविर्द्धानमन्तर्द्धानाद्व्यजायत ।। २.२२ ।।

हविर्द्धानात्षडाग्नेयी धिषणाऽजनयत्सुतान्।

प्राचीनबर्हिषं शुक्रं गयं कृष्णं व्रजाजिनौ ।। २.२३ ।।

प्राचीनबर्हिर्भगवान् महानासीत् प्रजापतिः।

बलुश्रुततपोवीर्यैः पृथिव्यामेकराढसौ।

प्राचीनाग्राः कुशास्तस्य तस्मात्प्राचीन बर्ह्यसौ ।। २.२४ ।।

समुद्रतनयायान्तु कृतदारः स वै प्रभुः।

महतस्तमसः पारे सवर्णायां प्रजापतेः।

सवर्णाऽऽधत्त सामुद्री दश प्राचीन बर्हिषः ।। २.२५ ।।

सर्वे प्रचेतसो नाम धनुर्वेदस्य पारगाः।

अपृथग्धर्मचरणास्तेऽतप्यन्त महत्तपः।

दशवर्षसहस्राणि समुद्रसलिलेशयाः ।। २.२६ ।।

तपश्चरत्सु पृथिवीं प्रचेतःसु महीरुहाः।

अरक्ष्यमाणामाववृर्बभूवाथ प्रजाक्षयः ।। २.२७ ।।

प्रत्याहते तदा तस्मिंश्चाक्षुषस्यान्तरे मनोः ।

नाशकन् मारुतो वातुं वृतं खमभवद्द्रुमैः।

दशवर्षसहस्राणि न शेकुश्चेष्टितुं प्रजाः ।। २.२८ ।।

तदुपश्रुत्य तपसा सर्वे युक्ताः प्रचेतसः।

मुखेभ्यो वायुमग्निञ्च ससृजुर्ज्जातमन्यवः ।। २.२९ ।।

उन्मूलानथ तान् वृक्षान् कृत्वा वायुरशोषयत्।

तानग्निरदहद्वोर एवमासीद् द्रुमक्षयः ।। २.३० ।।

द्रुमक्षयमथो बुद्ध्वा किञ्चिच्छेषेषु शाखिषु।

उपगम्याब्रवीदेतान् राजा सोमः प्रचेतसः ।। २.३१ ।।

दृष्ट्वा प्रयोजनं सर्वं लोकसन्तानकारणात्।

कोपन्त्यजत राजानः सर्वं प्राचीनबर्हिषः ।। २.३२ ।।

वृक्षाः क्षित्यां जनिष्यन्ति शाम्येतामग्निमारुतौ।

रत्नभूता तु कन्येयं वृक्षाणां वरवर्णिनी ।। २.३३ ।।

भविष्यं जानता ह्येषा मया गोभिर्विवर्द्धिता।

मारिषा नाम नाम्नैषा वृक्षैरेव विनिर्मिता।

भार्या भवतु वो ह्येषा सोमगर्भविवर्द्धिता ।। २.३४ ।।

युष्माकं तेजसोऽर्द्धेन मम चार्द्धेन तेजसः।

अस्यामुत्पत्स्यते विद्वान् दक्षो नाम प्रजापतिः ।। २.३५ ।।

स इमां दग्धभूयिष्ठां युष्मत्तेजोमयेन वै।

अग्निनाग्निसमो भूयः प्रजाः संवर्द्धयिष्यति ।। २.३६ ।।

ततः सोमस्य वचनाज्जगृहुस्ते प्रचेतसः।

संहृत्य कोपं वृक्षेभ्यः पत्नीं धर्मेण मारिषाम् ।। २.३७ ।।

मारिषायां ततस्ते वै मनसा गर्भमादधुः।

दशभ्यस्तु प्रचेतोभ्यो मारिषायां प्रजापतिः ।। २.३८ ।।

दक्षो जज्ञे महातेजाः सोमस्यांशेन वीर्यवान् ।

असृजन्मानसानादौ प्रजा दक्षोऽथ मैथुनात् ।। २.३९ ।।

अचरांश्च चरांश्चैव द्विपदोऽथ चतुष्पदान्।

विसृज्य मनसा दक्षः पश्चादसृजत स्त्रियः ।। २.४० ।।

ददौ स दश धर्माय कश्यपाय त्रयोदश।

कालस्य नयने युक्ताः सप्तविंशतिमिन्दवे ।। २.४१ ।।

एभ्यो दत्त्वा ततोऽन्या वै चतस्रोऽरिष्टनेमिने ।

द्वे चैव बाहुपुत्राय द्वे चैवाङ्गिरसे तथा।

कन्यामेकां कृशाश्वाय तेभ्योऽपत्यं निबोधत ।। २.४२ ।।

अन्तरं चाक्षुषस्यात्र मनोः षष्ठन्तु हीयते।

मनोर्वैवस्वतस्यापि सप्तमस्य प्रजापतेः ।। २.४३ ।।

तासु देवाः खगा गावो नागा दितिजदानवाः।

गन्धर्वोप्सरसश्चैव जज्ञिरेऽन्याश्च जातयः ।। २.४४ ।।

ततः प्रभृति लोकेऽस्मिन् प्रजा मैथुनसम्भवाः।

सङ्कल्पाद्दर्शनात्स्पर्शात्पूर्वेषां सृष्टिरुच्यते ।। २.४५ ।।

।।ऋषय ऊचुः।।

देवानां दानवानाञ्च देवर्षीणाञ्च ते शुभः।

सम्भवः कथितः पूर्वं दक्षस्य च महात्मनः ।। २.४६ ।।

प्राणात्प्रजापतेर्जन्म दक्षस्य कथितं त्वया।

कथं प्रचेतसत्वञ्च पुनर्लेभे महातपाः ।। २.४७ ।।

एतन्नः संशयं सूत व्याख्यातुं त्वमिहार्हसि।

स दौहित्रश्च सोमस्य कथं श्वशुरताङ्गतः ।। २.४८ ।।

।।सूत उवाच।।

उत्पत्तिश्च निरोधश्च नित्यं भूतेषु सत्तमाः।

ऋषयोऽत्र न मुह्यन्ति विद्यावन्तश्च ये नराः ।। २.४९ ।।

युगे युगे भवन्त्येते सर्वे दक्षादयो द्विजाः ।

पुनश्चैव निरुध्यन्ते विद्वांस्तत्र न मुह्यति ।। २.५० ।।

ज्यैष्ठ्यं कानिष्ठ्यमप्येषां पूर्वं नासीद् द्विजोत्तमाः।

तप एव गरीयोऽभूत् प्रभावश्चैव कारणम् ।। २.५१ ।।

इमां विसृष्टिं यो वेद चाक्षुषस्य चराचरम्।

प्रजानामायुरुत्तीर्णः स्वर्गलोके महीयते ।। २.५२ ।।

एष सर्गः समाख्यातश्चाक्षुषस्य समा सतः।

इत्येते षढविसर्गा हिक्रान्ता मन्वन्तरात्मकाः।

स्वायम्भुवाद्या- संक्षेपाच्चाक्षुषान्ता यथाक्रमम् ।। २.५३ ।।

एते सर्गा यथाप्रज्ञं प्रोक्ता वै द्विजसत्तमाः।

वैवस्वतनिसर्गेण तेषां ज्ञेयस्तु विस्तरः ।। २.५४ ।।

अनन्ता नातिरिक्ताश्च सर्वे सर्गा विवस्वतः।

आरोग्यायुष्प्रमाणेन धर्मतः कामतोऽर्थतः।

एतानेव गुणानेति यः पठत्यनसूयकः ।। २.५५ ।।

वैवस्वतस्य वक्ष्यामि साम्प्रतस्य महात्मनः।

समासाद्व्यासतः सर्गं ब्रुवतो मे निबोधत ।। २.५६ ।।

इतिश्रीमहापुराणे वायुप्रोक्ते पृथुवंशानुकीर्त्तनं नाम द्वितीयोऽध्यायः ।। २ ।।

सूत उवाच।।
सप्तमे त्वथ पर्याये मनोर्वैवस्वतस्य ह।
मारीचात्कश्यपाद्देवा जज्ञिरे परमर्षयः ।। ३.१ ।।

आदित्या वसवो रुद्राः साध्या विश्वे मरुद्गणाः।
भृगवोऽङ्गिरसश्चैव ह्यष्टौ देवगणाः स्मृताः ।। ३.२ ।।

आदित्या मरुतो रुद्रा विज्ञेयाः कश्यपात्मजाः।
साध्याश्च वसवो विश्वे धर्मपुत्रास्त्रयो गणाः ।। ३.३ ।।

भृगोस्तु भार्गवो देवो ह्यङ्गिरोऽङ्गिरसः सुतः ।
वैवस्वतेऽन्तेरे ह्यस्मिन् नित्यं ते छन्दजाः सुराः ।। ३.४ ।।

एष सर्गस्तु मारीचो विज्ञेयः साम्प्रतः शुभः।
तेजस्वी साम्प्रतस्तेषामिन्द्रो नाम्ना महाबलः ।। ३.५ ।।

अतीतानागता ये च वर्त्तन्ते ये च साम्प्रतम्।
सर्वे मन्वन्तरेन्द्रास्तु विज्ञेयास्तुल्यलक्षणाः ।। ३.६ ।।

भूतभव्यभवन्नाथः सहस्राक्षः पुरन्दरः ।
मघवन्तश्च ते सर्वे श्रृङ्गिणो वज्रपाणयः।
सर्वैः क्रतुशतेनेष्टं पृथक् शतगुणेन तु ।। ३.७ ।।

त्रैलोक्ये यानि सत्त्वानि गतिमन्त्यबलानि च।
अभिभूयावतिष्ठन्ते धर्माद्यैः कारणैरपि ।। ३.८ ।।

तेजसा तपसा बुद्ध्या बलश्रुतपराक्रमैः।
भूतभव्यभवन्नाथा यथा ते प्रभविष्णवः।
एतत्सर्वं प्रवक्ष्यामि ब्रुवतो मेनिबोधत ।। ३.९ ।।

भूतं भव्यं भविष्यं तत् स्मृतं लोकत्रयं द्विजैः।
भूर्लोकोऽयं स्मृतो भूमिरन्तरिक्षं भुवं स्मृतम् ।
भव्यं स्मृतं दिवं ह्येतत्तेषां वक्ष्यामि साधनम् ।। ३.१० ।।

ध्यायता पुत्रकामेन ब्रह्मणाग्रे विभाषितम्।
भूरिति व्याहृतं पूर्वं भूर्लोकोऽयमभूत्तदा ।। ३.११ ।।

भूतेऽस्मिन् भवदित्युक्तं द्वितीयं ब्रह्मणा पुनः।
भवत्वाद्दर्शनत्वाच्च भूर्लोकोऽयमभूत्ततः।
अतोऽयं प्रथमो लोको भूतत्वाद्भूर्द्विजैः स्मृतः ।। ३.१२ ।।

भूतेऽस्मिन् भवदित्युक्तं द्वितीयं ब्रह्मणा पुनः।

भवत्युत्पद्यमानेन कालशब्दोऽयमुच्यते ।। ३.१३ ।।

भवनात्तु भुवर्लोको निरुक्तज्ञैर्निरुच्यते।
अन्तरिक्षं भुवस्तस्माद् द्वितीयो लोक उच्यते ।। ३.१४ ।।

उत्पन्ने तु भुवर्लोके तृतीयं ब्रह्मणा पुनः ।
भव्येति व्याहृतं यस्माद्भव्यो लोकस्तदाऽभवत् ।। ३.१५ ।।

अनागते भव्य इति शब्द एष विभाव्यते।
तस्माद्भव्यो ह्यसौ लोको नामतस्तु दिवं स्मृतम् ।। ३.१६ ।।

स्वरित्युक्तं तृतीयोऽन्यो भाव्यो लोकस्तदाभवत्।
भाव्य इत्येष धातुर्वै भाव्ये काले विभाव्यते ।। ३.१७ ।।

भूरितीयं स्मृता भूमिरन्तरिक्षं भुवं स्मृतम्।
दिवं स्मृतं तथा भाव्यं त्रैलोक्यस्यैष संग्रहः ।। ३.१८ ।।

त्रैलोक्ययुक्तैर्व्याहारैस्तिस्रो व्याहृतयोऽभवन्।
नाथ इत्येष धातुर्वै धातुज्ञैः पालने स्मृतः ।। ३.१९ ।।

यस्माद्भूतस्य लोकस्य भव्यस्य भवतस्तदा।
लोकत्रयस्य नाथास्ते तस्मादिन्द्रा द्विजैः स्मृताः ।। ३.२० ।।

प्रधानभूता देवेन्द्रा गुण भूतास्तथैव च।
मन्वन्तरेषु ये देवा यज्ञभाजो भवन्ति हि ।। ३.२१ ।।

यक्षगन्धर्वरक्षांसि पिशाचोरगदानवाः।
महिमानः स्मृता ह्येते देवन्द्राणान्तु सर्वशः ।। ३.२२ ।।

देवेन्द्रा गुरवो नाथा राजानः पितरो हि ते ।
रक्षन्तीमाः प्रजाः सर्वा धर्मेणेह सुरोत्तमाः ।। ३.२३ ।।

इत्येतल्लक्षणं प्रोक्तं देवेन्द्राणां समासतः।
सप्तर्षीन् सम्प्रवक्ष्यामि साम्प्रतं ये दिवि स्थिताः ।। ३.२४ ।।

गाधिजः कौशिको धीमान् विश्वामित्रो महातपाः।
भार्गवो जमदग्निश्च ऊरुपुत्रः प्रतापवान् ।। ३.२५ ।।

बृहस्पतिसुतश्चापि भारद्वाजो महातपाः।
औतथ्यो गौतमो विद्वाञ्छरद्वान्नाम धार्मिकः ।। ३.२६ ।।

स्वायम्भुवोऽत्रिर्भगवान् ब्रह्मको शस्तु पञ्चमः।

षष्ठो वासिष्ठपुत्रस्तु वसुमान् लोकविश्रुतः ।। ३.२७ ।।

वत्सारः काश्यपश्चैव सप्तैते साधुसम्मताः।
एते सप्तर्षयः सिद्धा वर्त्तन्ते साम्प्रतेऽन्तरे ।। ३.२८ ।।

इक्ष्वाकुश्चैव नाभागो धृष्टः शर्यातिरेव च।
नरिष्यन्तश्च विख्यातो नाभ उद्दिष्ट एव च ।। ३.२९ ।।

करुषश्च पृषध्रश्च वसुमान्नवमः स्मृतः।
मनोर्वैवस्तस्यैते नव पुत्राः प्रकीर्त्तिताः ।
कीर्त्तिता वै मया ह्येते सप्तमञ्चैतदन्तरम् ।। ३.३० ।।

इत्येष वै मया पादो द्वितीयः कथितो द्विजाः।
विस्तरेणानुपूर्व्या च भूयः किं वर्णयाम्यहम् ।। ३.३१ ।।

इति श्रीमहापुराणे वायुप्रोक्ते वैवस्वतसर्गवर्णनं नाम तृतीयोऽध्यायः ।। ३ ।। इत्युपोद्वातपादः ।।*।।

।।ऋषय ऊचुः ।।

श्रुत्वा पादं द्वितीयन्तु क्रान्तं सूतेन धीमता।

अतस्तृतीयं पप्रच्छ पादं वै शांशपायनः ।। ४.१ ।।

पाद क्रान्तो द्वितीयोऽयमनु षङ्गेण यस्त्वया।

तृतीयं विस्तरात्पादं सोपोद्वातं प्रकीर्त्तय।

एवमुक्तोऽब्रवीत्सूतः प्रहृष्टेनान्तरात्मना ।। ४.२ ।।

।।सूत उवाच।।

कीर्त्तयिष्ये तृतीयञ्च सोपोद्वातं सविस्तरम्।

पादं समुदयाद्विप्रा गदतो मे निबोधत ।। ४.३ ।।

मनोर्वैवस्वतस्येमं साम्प्रतस्य महात्मनः।

विस्तरेणानुपूर्व्या च निसर्गं श्रृणुत द्विजाः ।। ४.४ ।।

चतुर्युगैकसप्तत्या सङ्ख्यातः पूर्वमेव तु।

सह देवगणैश्चैव ऋषिभिर्दानवैः सह ।। ४.५ ।।

पितृगन्धर्वयक्षैश्च रक्षोभूतगणैस्तथा।

मानुषैः पशुभिश्चैव पक्षिभिः स्थावरैः सह ।। ४.६ ।।

मन्वादिकं भविष्यान्तमाख्यानैर्बहुविस्तरम् ।

वक्ष्ये वैवस्वतं सर्गं नमस्कृत्य विवस्वते ।। ४.७ ।।

आद्ये मन्वन्तरेऽतीताः सर्गाः प्रावर्त्तकाश्च ये।

स्वायम्भुवेऽन्तरे पूर्वं सप्तासन् ये महर्षयः।

चाक्षुषस्यान्तरेऽतीते प्राप्ते वैवस्वते पुनः ।। ४.८ ।।

दक्षस्य च ऋषीणाञ्च भृग्वादीनां महौजसाम्।

शापान्महेश्वरस्यासीत् प्रादुर्भावो महात्मनाम् ।। ४.९ ।।

भूयः सप्तर्षयस्ते च उत्पन्नाः सप्त मानसाः।

पुत्रत्वे कल्पिताश्चैव स्वयमेव स्वयम्भुवा ।। ४.१० ।।

प्रजासन्तानकृद्भिस्तैरुत्पद्यद्भिर्महात्मभिः।

पुनः प्रवर्त्तितः सर्गो यथापूर्वं यथाक्रमम् ।। ४.११ ।।

तेषां प्रसूतिं वक्ष्यामि विशुद्धज्ञानकर्मणाम्।

समासव्यासयोगाभ्यां यथावदनुपूर्वशः ।। ४.१२ ।।

येषामन्वयसम्भूतैर्लोकोऽयं सचराचरः।

पुनः स पूरितः सर्गो ग्रह नक्षत्रमण्डितः ।। ४.१३ ।।

एतच्छ्रुत्वा वचस्तस्य मुनीनां संशयोऽभवत् ।

ततस्तं संशयाविष्टाः सूतं संशयनिश्चये।

सत्कृत्य परिपप्रच्छुर्मुनयः शंसितव्रताः ।। ४.१४ ।।

।।ऋषय ऊचुः।।

कथं सप्तर्षयः पूर्व्वमुत्पन्नाः सप्त मानसाः।

पुत्रत्वे कल्पिताश्चैव तन्नो निगद सत्तम।

ततोऽब्रवीन्महातेजाः सूत पौराणिकः शुभम् ।। ४.१५ ।।

कथं सप्तर्षयः सिद्धा ये वै स्वायम्भुवेऽन्तरे।

मन्वन्तरं समासाद्य पुनर्वैवस्वतं किल ।। ४.१६ ।।

भवाभिशापात्संविद्धा ह्यप्राप्तास्ते तदा तपः।

उपपन्ना जने लोके सकृदागामिनस्तु ते ।। ४.१७ ।।

ऊचुः सर्वे ततोऽन्योन्यं जनलोके महर्षयः।

ऊचुरेव महाभागा वारुणे वितते क्रतौ ।। ४.१८ ।।

सर्वे वयं प्रसूयामश्चाक्षुषस्यान्तरे मनोः।

पितामहात्मजाः सर्वे ततः श्रेयो भविष्यति ।। ४.१९ ।।

स्वायम्भुवेऽन्तरे शप्ताः सप्तार्थं ते भवेन तु।

जज्ञिरे वै पुनस्ते ह जनलोकाद्दिवं गता ।। ४.२० ।।

देवस्य महतो यज्ञे वारुणीं बिभ्रतस्तनुम्।

ब्रह्मणो जुह्वतः शुक्रमग्नौ पूर्वं प्रजेप्सया।

ऋषयो जज्ञिरे पूर्वं द्वितीयमिति नः श्रुतम् ।। ४.२१ ।।

भृगुरङ्गिरा मरीचिः पुलस्त्यः पुलहः क्रतुः।

अत्रिश्चैव वसिष्ठश्च अष्टौ ते ब्रह्मणः सुताः ।। ४.२२ ।।

तथास्य वितते यज्ञे देवाः सर्वे समागताः।

यज्ञाङ्गानि च सर्वाणि वषट्कारश्च मूर्तिमान् ।। ४.२३ ।।

मूर्त्तिमन्ति च सामानि यजूंषि च सहस्रशः।

ऋग्वेद श्चाभवत्तत्र पदक्रमविभूषितः ।। ४.२४ ।।

यजुर्वेदश्च वृत्ताढ्य ओङ्कारवदनोज्ज्वलः।

स्थितो यज्ञार्थसंपृक्तसूक्तब्राह्मणमन्त्रवान् ।। ४.२५ ।।

सामवेदश्च वृत्ताढ्यः सर्वगेयपुरःसरः।

विश्वावस्वादिभिः सार्द्धं गन्धर्वैः सम्भृतोऽभवत् ।। ४.२६ ।।

ब्रह्म वेदस्तथा घोरैः कृत्याविधिभिरन्वितः।

प्रत्यङ्गिरसयोगैश्च द्विशरीरशिरोऽभवत् ।। ४.२७ ।।

लक्षणानि स्वराः स्तोभा निरुक्तस्वरभक्तयः।

आश्रयस्तु वषट्कारो निग्रहप्रग्रहावपि ।। ४.२८ ।।

दीप्ता दीप्तिरिलादेवी दिशः प्रदिशगीश्वराः ।

देवकन्याश्च पत्न्यश्च तथा मातर एव च ।। ४.२९ ।।

आयुः सर्वत एवैते देवस्य यजतो मुखे।
मूर्त्तिमन्तः स्वरूपाख्या वरुणस्य वपुर्भृतः ।। ४.३० ।।
स्वयम्भुवस्तु ता दृष्ट्वा रेतः समपतद्भुवि।
ब्रह्मर्षेर्भावभूतस्य विधानाच्च न संशयः ।। ४.३१ ।।
कृत्वा जुहाव स्रुग्भ्याञ्च स्रुवेण परिगृह्य च।
आज्यवज्जुहुवाञ्जक्रे मन्त्रवच्च पितामहः ।। ४.३२ ।।
ततः स जनयामास भूतग्रामं प्रजापतिः।
तस्यार्वाक् तेजसस्तस्य यज्ञे लोकेषु तैजसम्।
तमसाभावव्याप्यत्वं तथा सत्त्वं तथा रजः ।। ४.३३ ।।
सगुणात्तेजसो नित्यमाकाशे तमसि स्थितम्।
तमसस्तेजसत्वाच्च सर्वभूतानि जज्ञिरे ।। ४.३४ ।।
यदा तस्मिन्नजायन्त काले पुत्रास्तु कर्मजाः।
आज्यस्थाल्यामुपादाय स्वशुक्रं हुतवांश्च ह ।। ४.३५ ।।
शुक्रे हुतेऽथ तस्मिंस्तु प्रादुर्भूता महर्षयः।
ज्वलन्तो वपुषा युक्ताः सप्त वै प्रसवैर्गुणैः ।। ४.३६ ।।
हुते चाग्नौ सकृच्छुक्रे ज्वालाया निःसृतः कविः।
हिरण्यगर्भस्तं दृष्ट्वा ज्वालां भित्त्वा विनिःसृतम्।
भृगुस्त्वमिति होवाच यस्मात्तस्मात्स वै भृगुः ।। ४.३७ ।।
महादेवस्तथोद्भूतं दृष्ट्वा ब्राह्मणमब्रवीत्।
ममैष पुत्रकामस्य दीक्षितस्य त्वयं प्रभो।
विजज्ञेऽथ भृगुर्द्देवो मम पुत्रो भवत्वयम् ।। ४.३८ ।।
तथोति समनुज्ञातो महादेवः स्वयम्भुवा।
पुत्रत्वे कल्पयामास महादेवस्तथा भृगुम्।
वारुणा भृगवस्तस्मात्तदपत्यञ्च स प्रभुः ।। ४.३९ ।।
द्वितीयन्तु ततः शुक्रमङ्गारेष्वपतत्प्रभुः।
अङ्गारेष्वङ्गिरोऽङ्गानि संहितानि ततोऽङ्गिराः ।। ४.४० ।।
सम्भूतिं तस्य तां दृष्ट्वा वह्निर्ब्रह्माणमब्रवीत्।
रेतोधास्तुभ्यमेवाहं द्वितीयोऽयं ममास्त्विवति ।। ४.४१ ।।
एवमस्त्विवति सोऽप्युक्तो ब्रह्मणा सदसस्पतिः।
तस्मादङ्गिरसश्चापि आग्नेया इति नः श्रुतम् ।। ४.४२ ।।
षट्कृत्यस्तु पुनः शुक्रे ब्रह्मणा लोककारिणा।
हुते समभवंस्तत्र षड्ब्रह्माण इति श्रुतिः ।। ४.४३ ।।
मरीचिः प्रथमस्तत्र मरीचिभ्यः समुत्थितः।

क्रतौ तस्मिन् सुतो जज्ञे यतस्तस्मात्स वै क्रतुः ।। ४.४४ ।।
अहं तृतीय इत्यर्थस्तस्मादत्रिः स कीर्त्त्यते।
केशैश्च निशितैर्भूतः पुलस्त्यस्तेन स स्मृतः ।। ४.४५ ।।
केशैर्लम्बैः समुद्भूतस्तस्मात्तु पुलहः स्मृतः ।
वसुमध्यात्समुत्पन्नो वसुमान् वसुधाश्रयः ।। ४.४६ ।।
वसिष्ठ इति तत्त्वज्ञैः प्रोच्यते व्रह्मवादिभिः ।
इत्येते ब्रह्मणः पुत्रा मानसाः षण्महर्षयः ।। ४.४७ ।।
लोकस्य सन्तानकरास्तैरिमा वर्द्धिताः प्रजाः।
प्रजापतय इत्येवं पठ्यन्ते ब्रह्मणः सुताः ।। ४.४८ ।।
अपरे पितरो नाम एतैरेव महर्षिभिः।
उत्पादिता ऋषिगणाः सप्त लोकेषु विश्रुताः ।। ४.४९ ।।
मारीचा भार्गवाश्चैव तथैवाङ्गिरसोऽपरे।
पौलस्त्याः पौलहाश्चैव वासिष्ठाश्चैव विश्रुताः।
आत्रेयाश्च गणाः प्रोक्ताः पितृणां लोकविश्रुताः ।। ४.५० ।।
एते समासतस्तात पुरैव तु गुणास्त्रयः।
अपूर्वश्च प्रकाशश्च ज्योतिष्मन्तश्च विश्रुताः ।। ४.५१ ।।
तेषां राजा यमो देवो यमैर्विहितकल्मषाः।
अपरे प्रजानां पतयस्ताञ्छृणुध्वमतन्द्रिताः ।। ४.५२ ।।
कर्द्दमः कश्यपः शेषो विक्रान्तः सुश्रुवास्तथा।
बहुपुत्रः कुमारश्च विवस्वान् स शुचिश्रवाः ।। ४.५३ ।।
प्रचेतसोऽरिष्टनेमिर्बहुलस्व प्रजापतिः।
इत्येवमादयोऽन्येऽपि बहवश्च प्रजेश्वराः ।। ४.५४ ।।
कुशोच्चया वालखिल्याः सम्भूताः परमर्षयः।
मनोजवाः सर्वगताः सार्वभौमाश्च तेऽभवन् ।। ४.५५ ।।
जाता भस्मव्यपोहिन्यां ब्रह्मर्षिगणसम्मताः।
वैखानसा मुनिगणास्तपःश्रुतपरायणाः ।। ४.५६ ।।
स्रोतोभ्यस्तस्य चोत्पन्नावश्विनौ रूपसम्मितौ।
विदुर्जन्माक्षरजसो विमला नेत्रसम्भवाः ४.५७ ।।
ज्येष्ठाः प्रजानां पतयः स्रोतोभ्यस्तस्य जज्ञिरे।
ऋषयो रोमकूपेभ्यस्तथा स्वेदमलोद्भवाः ।। ४.५८ ।।
दारुणा हि रुते मासा निर्यासाः पक्षसन्धयः।
वत्सरा ये त्वहोरात्राः पित्रं ज्योतिश्च दारुणम् ।। ४.५९ ।।
रौद्रं लोहितमित्याहुर्लोहितं कनकं स्मृतम्।

तन्मैत्रमिति विज्ञेयं धूमश्च पशवः स्मृताः ।। ४.६० ।।
येऽर्च्चिषस्तस्य ते रुद्रास्तथादित्याः समुद्भवाः।
अङ्गारेभ्यः समुत्पन्ना ज्योतिषो दिव्यमानुषाः ।। ४.६१ ।।
आदिमानस्य लोकस्य ब्रह्मा ब्रह्मसमुद्भवः।
सर्वकामदमित्याहुस्तत्र कन्यामुदाहरन् ।। ४.६२ ।।
ब्रह्मा सुरगुरुस्तत्र त्रिदशैः संप्रसीदति।
इमे वै जनयिष्यन्ति प्रजाः सर्वाः प्रजेश्वराः ।। ४.६३ ।।
स्वे प्रजानां पतयः सर्वे चापि तपस्विनः।
तत्प्रसादादिमाँल्लोकान्धारयेयुरिमाः क्रियाः ।। ४.६४ ।।
द्वन्द्वं संवर्द्धयामास तव तेजोविवर्द्धनम्।
देवेषु वेदविद्वांसः सर्वे राजर्षयस्तथा ।। ४.६५ ।।
वेदमन्त्र पराः सर्वे प्रजापतिगुणोद्भवाः।
अनन्तं ब्रह्म सत्यञ्च तपश्च परमं भुवि ।। ४.६६ ।।
सर्वे हि वयमेते च तवैव प्रसवः प्रभो।
ब्रह्म च ब्राह्मणाश्चैव लोकाश्चैव चराचराः ।। ४.६७ ।।
मरीचिमादितः कृत्वा देवाश्च ऋषिभिः सह।
अपत्यानीह सञ्चिन्त्य तेऽपत्यङ्कामयामहे ।। ४.६८ ।।
तस्मिन् यज्ञे महाभागा देवाश्च ऋषिभिः सह।
एतद्वंशसमुद्भूताः स्थानकालाभिमानिनः ।। ४.६९ ।।
न च तेनैव रूपेण स्थापयेयुरिमाः प्रजाः।
युगादिनिधनाच्चैव स्थापयेयुरिमाः प्रजाः ।। ४.७० ।।
ततोऽब्रवील्लोकगुरुः परमित्यविचारयन् ।
एवं देवा विनिश्चित्य मया सृष्टा न संशयः।
भवतां वंशसम्भूताः पुनरेते महर्षयः ।। ४.७१ ।।
तेषां भृघोः कीर्तयिष्ये वंशं पूर्वमहात्मनः।
विस्तरेणानुपूर्व्या च प्रथमस्य प्रजापतेः ।। ४.७२ ।।
भार्या भृगोरप्रतिमे उत्तमेऽभिजने शुभे।
हिरण्यकशिपोः कन्या दिव्या नाम परिश्रुता।
पुलोम्नश्चापि पौलोमी दुहिता वर वर्णिनी ।। ४.७३ ।।
भृगोस्त्वजनयद्दिव्या काव्यं वेदविदां वरम्।
देवासुराणामाचार्यं शुक्राङ्कविसुतं ग्रहम् ।। ४.७४ ।।
स शुक्रश्चोशना ख्यातः स्मृतः काव्योऽपि नामतः।
पितृणां मानसी कन्या सोमपानां यशस्विनी।

शुक्रस्य भार्याङ्गी नाम विजज्ञे चतुरः सुतान् ।। ४.७५ ।।
ब्राह्मेण तेजसा युक्तः स चातो ब्रह्मवित्तमः।
तस्यामेव तु चत्वारः पुत्राः शुक्रस्य जज्ञिरे ।। ४.७६ ।।
त्वष्टा वरूत्री द्वावेतौ शण्डामर्कौ च तावुभौ।
ते तदादित्यसङ्काशा ब्रह्म कल्पाः प्रभावतः ।। ४.७७ ।।
रञ्जनः पृथुरश्मिश्च विद्वान्यश्च बृहद्गिराः।
वरूत्रिणः सुता ह्येते ब्रह्मिष्ठाः सुरयाजकाः ।। ४.७८ ।।
इज्याधर्मविनाशार्थं मनुमेत्याभ्ययोजयन्।
निरस्यमानं वै धर्मं दृष्ट्वेन्द्रो मनुमब्रवीत् ।। ४.७९ ।।
एतैरेव तु कामं त्वां प्रापयिष्यामि याजनम्।
श्रुत्वेन्द्रस्य तु तद्वाक्यं तस्माद् देशादपाक्रमन् ।। ४.८० ।।
तिरोभूतेषु तेष्मिन्द्रो धर्मपत्नीञ्च चेतनाम्।
ग्रहेण मोचयित्वा तु ततः सोऽनुससार ताम् ।। ४.८१ ।।
तत इन्द्रविनाशाय यत मानान् यतींस्तु तान् ।
तत्रागतान् पुनर्दृष्ट्वा दुष्टानिन्द्रः प्रहन्यतु।
सुष्वाप देवदेवस्य वेद्यां वै दक्षिणे ततः ।। ४.८२ ।।
तेषान्तु भक्ष्यमाणानां तत्र शालावृकैः सह।
शीर्षाणि न्यपतंस्तानि खर्जूराण्यभवंस्ततः ।। ४.८३ ।।
एवं वरूत्रिणः पुत्रा इन्द्रेण निहताः पुरा।
यजन्यां देवयानी च शुक्रस्य दुहिताऽभवत् ।। ४.८४ ।।
त्रिशिरा विश्वरूपस्तु त्वष्टुः पुत्रोऽभवन्महान्।
विश्वरूपानुजश्चापि विश्वकर्मा यमः स्मृतः ।। ४.८५ ।।
भृगोस्तु भृगवो देवा जज्ञिरे द्वादशात्मजाः।
देव्यां तान्सुषुवे सर्वान्काव्यश्चैवात्मजान्प्रभुः ।। ४.८६ ।।
भुवनो भावनश्चैव अन्यश्चान्यायतस्तथा।
क्रतुःश्रवाश्च मूर्द्धा च व्यजयो व्यश्रुषश्च यः।
प्रसव श्चाप्यजश्चैव द्वादशोऽधिपतिः स्मृतः ।। ४.८७ ।।
इत्येते भृगवो देवाः स्मृता द्वादश याज्ञिकाः ।
पौलोम्यजनयत्पुत्रं ब्रह्मिष्ठं वशिनं विभुम् ।। ४.८८ ।।
व्याधितः सोऽष्टमे मासि गर्भक्रूरेण कर्मणा।
च्यवनाच्च्यवनासोऽथ चेतनस्तु प्रचेतसः।
प्राचेतसाच्च्यवनक्रोधादध्वानं पुरुषादजः ।। ४.८९ ।।
जनयामास पुत्रौ द्वौ सुकन्यायाञ्च भार्गवः।

आत्मवानं दधीचञ्च तावुभौ साधुसंमतौ ।। ४.९० ।।
सारस्वतः सरस्वत्यां दधीचाच्चोपपद्यते।
रुची पत्नी महाभागा आत्मवानस्य नाहुषी ।। ४.९१ ।।
तस्य ऊर्वोऋषिर्जज्ञे ऊरू भित्त्वा महायशाः ।
और्वश्चासीदृचीकस्तु दीप्ताग्निसदृशप्रभः ।। ४.९२ ।।
जमदग्निऋचीकस्य सत्यवत्यां व्यजायत।
भृगोश्च रुचिपर्याये रौद्रवैष्णवयोस्तथा ।। ४.९३ ।।
जमनाद्वैष्णवस्याग्नेर्जमदग्निरजायत।
रेणुका जमदग्नेस्तु शक्रतुल्यपराक्रमम्।
ब्रह्मक्षत्रमयं रामं सुषुवेऽमिततेजसम् ।। ४.९४ ।।
और्वस्यासीत्पुत्रशतं जमदग्निपुरागेमम् ।
तेषां पुत्रसहस्राणि भार्गवाणां परस्परात् ।। ४.९५ ।।
ऋष्यन्तरेषु वै बाह्या बहवो भार्गवाः स्मृताः ।
वत्सो विश्वोऽश्विषेणश्च पाण्डः पथ्यः सशौनकः।
गोत्रेण सप्तमा ह्येते पक्षा ज्ञेयास्तु भार्गवाः ।। ४.९६ ।।
श्रृणुताङ्गिरसो वंशमग्नेः पुत्रस्य धीमतः।
यस्यान्ववाये सम्भूता भारद्वाजाः सगौतमाः।
देवाश्चाङ्गिरसो मुख्यास्त्विषुमन्तो महौजसः ।। ४.९७ ।।
सुरूपा चैव मारीची कार्द्दमी च तथा स्वराट्।
पथ्या च मानवी कन्या तिस्रो भार्यास्त्वथर्वणः।
इत्येताङ्गिरसः पत्न्यस्तासु वक्ष्यामि सन्ततिम् ।। ४.९८ ।।
अथर्वणस्तु दायादास्तासु जाताः कुलोद्वहाः।
उत्पन्ना महता चैव तपसा भावितात्मनाम् ।। ४.९९ ।।
बृहस्पतिः सुरूपायां गौतमः सुषुवे स्वराट्।
अवन्ध्यं वामदेवञ्च उतथ्यमुशिजन्तथा ।। ४.१०० ।।
धिष्णुः पुत्रस्तु पथ्यायां संवर्तश्चैव मानसः।
विचित्तश्च तथायस्यः शरद्वांश्चाप्युतथ्यजः ।। ४.१०१ ।।
अशिजो दीर्घतमा बृहदुत्थो वामदेवजः।
धिष्णुः पुत्राः सुध्न्वान ऋषभश्च सुधन्वनः।।४.१०२
रथकाराः स्मृता देवा ऋषयो ये परिश्रुताः।
बृहस्पतेर्भरद्वाजो विश्रुतः सुमहायशाः ।। ४.१०३ ।।
अङ्गिरसस्तु संवर्त्तो देवानङ्गिरसः श्रृणु।
बृहस्पतेर्यवीयांसो देवा ह्यङ्गिरसः स्मृताः ।। ४.१०४ ।।

औरसाङ्गिरसः पुत्राः सुरूपायां विजज्ञिरे।
औदार्यायुर्दनुर्दक्षो दर्भः प्राणस्तथैव च।
हविष्मांश्च हविष्णुश्च क्रतुः सत्यश्च ते दश ।। ४.१०५ ।।
अयस्यस्तु उतथ्यश्च वामदेवस्तथोशिजः।
भारद्वाजाः शांकृतिका गार्ग्यकाण्वरथीतराः ।। ४.१०६ ।।
मुद्गला विष्णुवृद्धाश्च हरिता वायवस्तथा।
तथा भाक्षा भरद्वाजा आर्षभाः किम्भयास्तथा ।। ४.१०७ ।।
एते ह्यङ्गिरसः पक्षा विज्ञेया दश पञ्च च।
ऋष्यन्तरेषु वै बाह्या बहवोऽङ्गिरसः स्मृताः ।। ४.१०८ ।।
मारीचं परिवक्ष्यामि वंशमुत्तमपूरुषम्।
यस्यान्ववाये सम्भूतं जगत्स्थावरजङ्गमम् ।। ४.१०९ ।।
मरीचिरापश्चकमे ताभिध्यायन्प्रजेप्सया।
पुत्रः सर्वगुणोपेतः प्रजावान् सुरुचिर्दितिः।
संपूज्यते प्रशस्तायां मनसा भाविता प्रभुः ।। ४.११० ।।
आहूताश्च ततः सर्वा आपः समवसत्प्रभुः।
तासु प्रणिहितात्मानमेकः सोऽजनयत्प्रभुः ।। ४.१११ ।।
पुत्रमप्रतिमन्नाम्नारिष्टनेमिः प्रजापतिः।
पुत्रं मरीचं सूर्याभं वधौवेशो व्यजीजनत् ।। ४.११२ ।।
प्रध्यायन् हि सतां वाचं पुत्रार्थी सलिले स्थितः।
सप्तवर्षसहस्राणि ततः सोऽप्रतिमोऽभवत् ।। ४.११३ ।।
कश्यपः सवितुर्विद्वांस्तेन स ब्रह्मणः समः ।
मन्वन्तरेषु सर्वेषु ब्राह्मणांशेन जायते ।। ४.११४ ।।
कन्यानिमितमित्युक्ते दक्षेण कुपिताः प्रजाः ।
अपिबत्स तदा कश्यं कश्यं मद्यमिहोच्यते ।। ४.११५ ।।
हाश्चेकसा हि विज्ञेया ब्रह्मणः कश्य उच्यते।
कश्यं मद्यं स्मृतं विप्रैः कश्यपानात्तु कश्यपः ।। ४.११६ ।।
करोति नाम यद्वाचो वाचं क्रूरमुदाहृतम्।
दक्षाभिशप्तः कुपितः कश्यपस्तेन सोऽभवत् ।। ४.११७ ।।
तस्माच्च कश्यपेनोक्तो ब्रह्मणा परमेष्ठिना।
तस्माद्दक्षः कश्यपाय कन्यास्ताः प्रत्यपद्यत।
सर्वाश्च ब्रह्मवादिन्यः सर्वास्ता लोकमातरः ।। ४.११८ ।।
इत्येतमृषिसर्गन्तु पुण्यं यो वेद वारुणम्।
आयुष्मान् पुण्यवान् शुद्धः सुखमाप्नोत्यनुत्तमम्।

धारणात् श्रवणाच्चैव सर्वपापैः प्रमुच्यते ।। ४.११९ ।।
अथाब्रुवन् पुनः सर्वे मुनयो रोमहर्षणम्।
विनिवृत्ते प्रजासर्गे षष्ठे वै चाक्षुषस्य ह ।
निसर्गः सम्प्रवृत्तोऽयं मनोर्वैव स्वतस्य ह ।। ४.१२० ।।
।।सूत उवाच।।
प्रजाः सृजेति व्यादिष्टः स्वयं दक्षः स्वयम्भुवा।
ससर्ज दक्षो भूतानि गतिमन्ति ध्रुवाणि च ।
उपस्थितेऽन्तरे ह्यस्मिन् मनोर्वैवस्वतस्य ह ।। ४.१२१ ।।
ततः प्रवृत्तो दक्षस्तुप्रजाः स्रष्टुञ्चतुर्विधाः।
जरायुजा अण्डजाश्च उद्भिज्जाः स्वेदजास्तथा ।। ४.१२२ ।।
दशवर्ष सहस्राणि तप्त्वा घोरं महत्तपः।
सम्भावितो योगबलैरणिमाद्यैर्विशेषतः ।। ४.१२३ ।।
आत्मानं व्यभजन् श्रीमान् मनुष्योरगराक्षसान्।
देवासुरसगन्धर्वान् दिव्यसंहननप्रजान् ।
ईश्वरानात्मनस्तुल्यान् रूपद्रविणतेजसा ।। ४.१२४ ।।
तथैवान्यानि मुदितो गतिमन्ति ध्रुवाणि च।
मानसान्येव भूतानि सिसृक्षुर्विविधाः प्रजाः ।। ४.१२५ ।।
ऋषीन् देवान् सगन्धर्वान् मनुष्योरगराक्षसान्।
यक्षभूतपिशाचांश्च वयःपशुमृगांस्तथा ।। ४.१२६ ।।
यदास्य मनसा सृष्टा न व्यवर्द्धन्त ताः प्रजाः।
अपध्याता भगवता महादेवेन धीमता ।। ४.१२७ ।।
मैथुनेन च भावेन सिसृक्षुर्विविधाः प्रजाः।
असिक्रीं चावहत् पत्नीं वीरणस्य प्रजापतेः ।। ४.१२८ ।।
सुतां सुमहता युक्तां तपसा लोकधारिणीम्।
यया धृतमिदं सर्वं जगत् स्थावरजङ्गमम् ।। ४.१२९ ।।
अत्राप्युदा हरन्तीमौ श्लोकौ प्राचेतसं प्रति।
दक्षस्योद्वहतो भार्यामसिक्नीं वीरिणीं पराम् ।। ४.१३० ।।
कूपानां नियुतं दक्षः सर्पिणां साभिमानिनाम्।
नदीगिरिषु सज्जंस्ताः पृष्ठतोऽनुययौ प्रभुः ।। ४.१३१ ।।
तं दृष्ट्वा ऋषिभिः प्रोक्तं प्रतिष्ठास्यति वै प्रजाः।
प्रथमात्र द्वितीया तु दक्षस्येह प्रजापतेः ।। ४.१३२ ।।
तथागच्छद्यथाकालं कूपानां नियुते तु सः।
असिक्नीं वैरिणीं यत्र दक्षः प्राचेतसोऽवहत् ।। ४.१३३ ।।

अथ पुत्रसहस्रं स वैरिण्याममितौजसा।
असिवन्यां जनयामास दक्षः प्राचेतसः प्रभुः ।। ४.१३४ ।।
तांस्तु दृष्ट्वा महातेजाः स विवर्द्धयिषून् प्रजाः.
देवर्षिः प्रियसंवादो नारदो ब्रह्मणः सुतः।
नाशाय वचनं तेषां शापायैवात्मनोऽब्रवीत् ।। ४.१३५ ।।
यः स वै प्रोच्यतेविप्रः कश्यपस्येति कृत्रिमः।
दक्षशापभयाद्भीतो ब्रह्मार्षिस्तेन कर्मणा ।। ४.१३६ ।।
यः कश्यपसुतस्याथ परमेष्ठी व्यजायत।
मानसः कश्यपस्येह दक्षशापभयात् पुनः ।। ४.१३७ ।।
तस्मात् स कश्यपस्याथ द्वितीयं मानसोऽभवत्।
स हि पूर्वसमुत्पन्नो नारदः परमेष्ठिनः ।। ४.१३८ ।।
येन दक्षस्य पुत्रास्ते हर्यश्वा इति विश्रुताः ।
निन्दार्थं नाशिताः सर्वे विनष्टाश्च न संशयः ।। ४.१३९ ।।
तस्योद्यतस्तदा दक्षः क्रुद्धो नाशाय वै प्रभुः ।
ब्रह्मर्षीन् वै पुरस्कृत्य याचितः परमेष्ठिना ।। ४.१४० ।।
ततोऽभिसन्धितं चक्रे दक्षस्तु परमेष्ठिना।
कन्यायां नारदो मह्यं तव पुत्रो भवत्विति ।। ४.१४१ ।।
ततो दक्षः सुतां प्रादात् प्रियां वै परमेष्ठिने ।
तस्मात् स नारदो जज्ञे भूयः शान्तो भयादृषिः ।। ४.१४२ ।।
तदुपश्रुत्य विप्रास्ते जातकौतूहलाः पुनः ।
अपृच्छन् वदतां श्रेष्ठं सूतं तत्त्वार्थदर्शिनम् ।। ४.१४३ ।।
।।ऋषय ऊचुः ।।
कथं विनाशिताः पुत्रा नारदेन महात्मना।
प्रजापतिसुतास्ते वै प्रजाः प्राचेतसात्मजाः ।। ४.१४४ ।।
स तथ्यं वचनं श्रुत्वा जिज्ञासासम्भवं शुभम् ।
प्रोवाच मधुरं वाक्यं तेषां सर्वगुणान्वितम् ।। ४.१४५ ।।
दक्षपुत्राश्च हर्यश्वा विवर्द्धयिषवः प्रजाः।
समागता महावीर्या नारदस्तानुवाच ह ।। ४.१४६ ।।
बालिशा बल यूयं वै न प्रजानीथ भूतलम्।
अन्तमूर्द्ध्वमधश्चैव कथं स्रक्ष्यथ वै प्रजाः ।। ४.१४७ ।।
किं प्रमाणन्तु मेदिन्याः स्रष्टव्यानि तथैव च।
अविज्ञायेह स्रष्टव्यमन्यथा किं नु स्रक्ष्यथ।
अल्पं वापि बहुर्वापि तत्र दोषस्तु दृश्यते ।। ४.१४८ ।।

ते तु तद्वचनं श्रुत्वा प्रयाताः सर्वतोदिशम्।
वायुन्तु समनुप्राप्य गतास्ते वै पराभवम् ।। ४.१४९ ।।
अद्यापि न निवर्त्तन्ते भ्रमन्तो वायुमिश्रिताः ।
एवं वायुपथं प्राप्य भ्रमन्ते ते महर्षयः ।। ४.१५० ।।
स्वेषु पुत्रेषु नष्टेषु दक्षः प्राचेतसः पुनः।
वैरिम्यामेव पुत्राणां सहस्रमसृजत् प्रभुः ।। ४.१५१ ।।
प्रजा विवर्द्धयिषवः शबलाश्वाः पुनस्तु ते।
पूर्वमुक्तं वचस्तत्र श्राविता नारदेन ह ।। ४.१५२ ।।
तच्छ्रुत्वा वचनं सर्वे कुमारास्ते महौजसः।
अन्योऽन्यमूचुस्ते सर्वे सम्यगाह महानृषिः।
भ्रातृणां पदवी चैव गन्तव्या नात्र संशयः ।। ४.१५३ ।।
ज्ञात्वा प्रमाणं पृत्व्याश्च सुखं स्रक्ष्यामहे प्रजाः।
तेऽपि तेनैव मार्गेण प्रयाताः सर्वतोदिशम्।
अद्यापि न निवर्त्तन्ते समुद्रेभ्य इवापगाः ।। ४.१५४ ।।
ततः प्रभृति वै भ्राता भ्रातुरन्वेषणे रतः।
प्रयातो नश्यति तथा तन्न कार्यं विजानता ।। ४.१५५ ।।
नष्टेषु शबलाश्वेषु दक्षः क्रुद्धोऽभवद्विभुः।
नारदं नाशमेहीति गर्भवासं वसेति च ।। ४.१५६ ।।
तथा तेष्वपि नष्टेषु महात्मसु पुरा किल।
षष्टिकन्याऽसृजद्दक्षो वैरिण्यामेव विश्रुताः ।। ४.१५७ ।।
तास्तदा प्रतिजग्राह पत्न्यर्थे कश्यपः प्रभुः।
धर्मः सोमस्तु भगवांस्तथैवान्ये महर्षयः ।। ४.१५८ ।।
इमा विसृष्टिं दक्षस्य कृत्स्नां यो वेद तत्त्वतः।
आयुष्मान् कीर्त्तिमान् धन्यः प्रजानांश्च भवत्युत ।। ४.१५९ ।।
इति श्रीमहापुराणे वायुप्रोक्ते प्रजापतिवंशानुकीर्त्तनं नाम चतुर्थो ऽध्यायः ।। ४ ।। *

।।ऋषय ऊचुः ।।

देवानां दानवानाञ्च दैत्यानाञ्चैव सर्वशः।
उत्पत्तिं विस्तरेणेह ब्रूहि वैवस्वतेऽन्तरे ।। ५.१ ।।

।।सूत उवाच।।
धर्मस्य तावद्वक्ष्यामि निसर्गं तं निबोधत।
अरुन्धती वसुर्यामी लम्बा भानुर्मरुत्वती ।। ५.२ ।।

सङ्कल्पा च मुहूर्ता च साध्या विश्वा तथैव च।
धर्मपत्न्यो दशत्वेता दक्षः प्राचेतसो ददौ ।। ५.३ ।।

साध्या पुत्रांस्तु धर्मस्य साध्यान् द्वादश जज्ञिरे।
साध्या नाम महाभागाश्छन्दजा यज्ञभागिनः।
देवेभ्यस्तान् परान् देवान् देवज्ञाः परिचक्षिरे ।। ५.४ ।।

ब्रह्मणो वै मुखात् सृष्टा जया देवाः प्रजेप्सया।
सर्वे मन्त्रशरीरास्ते स्मृता मन्वन्तरेष्विह ।। ५.५ ।।

दर्शश्च पौर्णमासश्च बृहद्यच्च रथन्तरम् ।
चित्तिश्चैव विचित्तिश्च आकूतिः कूतिरेव च ।। ५.६ ।।

विज्ञाता चैव विज्ञातो मनो यज्ञश्च ते स्मृताः ।
नामान्येतानि तेषां वै जयानां प्रथितानि च ।। ५.७ ।।

ब्रह्मशापेन ते जाताः पुनः स्वायम्भुवे जिताः।
स्वारोचिषे वै तुषिताः सत्याश्चैवोत्तमे पुनः ।। ५.८ ।।

तामसे हरयो नाम वैकुण्ठा रैवतान्तरे।
साध्याश्च चाक्षुषे नाम्ना छन्दजा जज्ञिरे सुराः ।। ५.९ ।।

धर्मपुत्रा महाभागाः साध्या ये द्वादशामराः।
पूर्वं स्म अनुसूयन्ते चाक्षुषस्यान्तरे मनोः ।। ५.१० ।।

स्वारोचिषेऽन्तरेऽतीता देवा ये वै महौजसः।
तुषिता नाम तेऽन्योन्यमूचुर्वै चाक्षुषेऽन्तरे ।। ५.११ ।।

किञ्चिच्छिष्टे तदा तस्मिन् देवा वै तुषिताऽब्रुवन्।
इतरेतरं महाभागान् वयं साध्यान् प्रविश्य वै।
मन्वन्तरे भविष्यामस्तन्नः श्रेयो भविष्यति ।। ५.१२ ।।

एवमुक्त्वातु ते सर्वे चाक्षुषस्यान्तरे मनोः।
तस्माद्द्वादशसम्भूतान् धर्मान् स्वायम्भुवात् पुनः ।। ५.१३ ।।

नरनारायणौ तत्र जज्ञाते पुनरेव हि।
विपश्चिदिन्द्रो यश्चासीत्तथा सत्यो हरिश्च तौ।
स्वारोचिषेऽन्तरे पूर्वमास्तान्तौ तुषितौ सुरौ ।। ५.१४ ।।

तुषितानान्तु साध्यत्वे नामान्येतानि वक्ष्यते।
मनोऽनुमन्ता प्राणश्च नरो यानश्च वीर्यवान् ।। ५.१५ ।।

चित्तिर्हयो नयश्चैव हंसो नारायणस्तथा।
प्रभवोऽथ विभुश्चैव साध्या द्वादश जज्ञिरे ।। ५.१६ ।।

स्वायम्भुवेऽन्तरे पूर्वं ततः स्वारोचिषे पुनः।
नामान्यासन् पुनस्तानि तुषितानां निबोधत ।। ५.१७ ।।

प्राणोऽपानस्तथोदानः समानो व्यान एव च।
चक्षुः श्रोत्रं तथा प्राणः स्पर्शो बुद्धिर्मनस्तथा ।। ५.१८ ।।

प्राणापानावुदानश्च समानो व्यान एव च।
नामान्येतानि पूर्वन्तु तुषितानां स्मृतानि ह ।। ५.१९ ।।

वसोस्तु वसवः पुत्राः साध्यानामनुजाः स्मृताः ।
धरो ध्रुवश्च सोमश्च आपश्चैवानलोऽनिलः।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः ।। ५.२० ।।

धरस्य पुत्रो द्रविणो हुतहव्यवहस्तथा।
ध्रुवपुत्रो भवो नाम्ना कालो लोकप्रकालनः ।। ५.२१ ।।

सोमस्य भगवान् वर्चा बुधश्च ग्रहबोधनः।
रोहिण्यां तौ समुत्पन्नौ त्रिषु लोकेषु विश्रुतौ ।। ५.२२ ।।

धारोर्मिकलिलाश्चैव त्रयश्चन्द्रमसः सुताः।

आपस्य पुत्रो वैतण्ड्यः शमः शान्तस्तथैव च ।। ५.२३ ।।

स्कन्दः सनत्कुमारश्च जज्ञे पादेन तेजसः।
अग्निपुत्रः कुमारस्तु शरस्तम्बे व्यजायत।
तस्य शाखो विशखश्च नैगमेयश्च पृष्ठजाः ।। ५.२४ ।।

अनिलस्य शिवा भार्या तस्याः पुत्रो मनोजवः।
अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य च ।। ५.२५ ।।

प्रत्यूषस्य विदुः पुत्र ऋषिर्नाम्ना तु देवलः।
द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ ।। ५.२६ ।।

बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मचारिणी।
योगसिद्धा जगत्कृत्स्नमसक्ता विचरत्युत ।। ५.२७ ।।

प्रभासस्य तु या भार्या वसूनामष्टमस्य ह।
विश्वकर्मा सुतस्तस्या जातः शिल्पिप्रजापतिः ।। ५.२८ ।।

स कर्त्ता सर्वशिल्पानां त्रिदशानाञ्च वर्द्धकिः।
भूषणानाञ्च सर्वेषां कर्त्ता कारयिता च सः ।। ५.२९ ।।

सर्वेषाञ्च विमानानि दैवतानां करोति सः।
मानुषाश्चोपजीवन्ति यस्य शिल्पानि शिल्पिनः ।। ५.३० ।।

विश्वेदेवास्तु विश्वाया जज्ञिरे दश विश्रुताः।
क्रतुर्दक्षः श्रवः सत्यः कालः कामो धुनिस्तथा ।। ५.३१ ।।

कुरुवान् प्रभवांश्चैव रोचमानश्च ते दश।
धर्मपुत्राः स्मृता ह्येते विश्वायां जज्ञिरे शुभाः ।। ५.३२ ।।

मरुत्वत्यां मरुत्वन्तो भानवो भानुजाः स्मृताः ।
मुहूर्त्ताश्च मुहूर्त्तायां घोषं लम्बा व्यजायत ।। ५.३३ ।।

सङ्कल्पायान्तु संजज्ञे विद्वान् सङ्कल्प एव च।
नागवीथ्यस्तु जाम्याञ्च पथत्रयसमाश्रिताः ।। ५.३४ ।।

पृथिवीविषयं सर्वमरुन्धत्यां व्यजायत।

एष सर्गः समाख्यातो विद्वान् धर्मस्य शाश्वतः ।। ५.३५ ।।

मुहूर्त्ताश्चैव तिथ्यश्च पतिभिः सह सुव्रताः।
नामतः संप्रवक्ष्यामि ब्रुवतो मे निबोधत ।। ५.३६ ।।

अहोरात्रविभागश्च नक्षत्राणि समासतः।
मुहूर्त्ताः सर्वनक्षत्रा अहोरात्रविदस्तथा ।। ५.३७ ।।

अहोरात्रकलानान्तु षट्शतीत्यधिका स्मृता।
रवेर्गतिविशेषेण सर्वेषु ऋतुमिच्छतः ।। ५.३८ ।।

ततो वेदविदश्चैतां तिथिमिच्छन्ति पर्वसु।
अविशेषेषु कालेषु योज्यः स पितृदानतः ।। ५.३९ ।।

रौद्रः सार्वस्तथा मैत्रः पिण्ड्यवासव एव च।
आप्योऽथ वैश्वदेवश्च ब्राह्मो मध्याह्नसंश्रितः ।। ५.४० ।।

प्राजापत्यस्तथा ऐन्द्रस्तथेन्द्रो निऋतिस्तथा।
वारुणश्च तथार्यम्णो भागाश्चापि दिनाश्रिताः ।। ५.४१ ।।

एते दिनमुहूर्त्ताश्च दिवाकरविनिर्मिताः।
शङ्कुच्छायानिशेषेण वोदेतव्याः प्रमाणतः ।। ५.४२ ।।

अजास्तथाहिर्बुध्न्यश्च पूषा हि यमदेवताः।
आग्नेयश्चापि विज्ञेयः प्राजापत्यस्तथैव च ।। ५.४३ ।।

ब्रह्मसौम्यस्तथादित्यो बार्हस्पत्योऽथ वैष्णवः।
सावित्रोऽथ तथा त्वाष्ट्रो वायव्यश्चेति संग्रहः ।। ५.४४ ।।

एकरात्रिमुहूर्त्ताः स्युः क्रमोक्ता दश पञ्च च।
इन्दोर्गत्युदया ज्ञेया नालिकाः पादिकास्तथा।
कालावस्थास्विगास्त्वेते मुहूर्ता देवताः स्मृताः ।। ५.४५ ।।

सर्वग्रहाणां त्रीण्येव स्थानानि विहितानि च।
दक्षिणोत्तरमध्यानि तानि विद्याद्यथाक्रमम् ।। ५.४६ ।।

स्थानं जारद्गवं मध्ये तथैरावतमुत्तरम्।

वैश्वानरं दक्षिमतो निर्द्दिष्टमिह तत्त्वतः ।। ५.४७ ।।

अश्विनी कृत्तिका याम्या नागवीथिरिति स्मृता ।
पुष्योऽश्लेषा पुनर्वसू वीथिरैरावती मता।
तिस्रस्तु वीथयो ह्येता उत्तरे मार्ग उच्यते ।। ५.४८ ।।

पूर्वोत्तरे फाल्गुन्यौ च मघा चैवार्यमी स्मृता ।
हस्तचित्रे तथा स्वाती गोवीथीत्यभिशब्धिता ।। ५.४९ ।।

ज्येष्ठा विशाखानुराधा वीथी जारद्गवी स्मृता।
एतास्तु वीथयस्तिस्रो मध्यमे मार्ग उच्यते ।। ५.५० ।।

मूलञ्चाषाढे द्वे चापि अजवीथ्यभिशब्दिता ।
श्रवणञ्च धनिष्ठा च गार्गी शतभिषक्तथा ।। ५.५१ ।।

वैश्वानरी भाद्रपदे रेवती चैव कीर्तिता।
स्मृता वीथ्यस्तु तिस्रस्ता मार्गे वै दक्षिणे बुधैः ।। ५.५२ ।।

सप्तविंशत्तु याः कन्या दक्षः सोमाय ता ददौ।
सर्वा नक्षत्रनाम्न्यस्ता ज्योतिषे चैव कीर्त्तिताः।
तासामपत्यान्यभवन् दीप्तान्यमिततेजसा ।। ५.५३ ।।

यास्तु शेषास्तदा कन्याः प्रतिजग्राह कश्यपः।
चतुर्दश महाभागाः सर्वास्ता लोकमातरः ।। ५.५४ ।।

अदितिर्दितिर्दनुः काला अरिष्टा सुरसा तथा।
सुरभिर्विनता चैव ताम्रा क्रोधवशा इरा।
कद्रुर्मुनिश्च धर्मज्ञः प्रजास्तासां निबोधत ।। ५.५५ ।।

चारिष्णवेऽन्तरेऽतीते ये द्वादश पुरोगमाः।
वैकुण्ठानाम ते सात्र्या बभूवुश्चाक्षुषेऽन्तरे ।। ५.५६ ।।

उपस्थितेऽन्तरे ह्यस्मिन् पुनर्वैवस्वतस्य ह।
आराधिता ह्यदित्या ते समेत्याहुः परस्परम् ।। ५.५७ ।।

एतामेव महाभागामदितिं संप्रविश्य वै।
वैवस्वतेऽन्तरे ह्यस्मिन् योगादर्द्धेन चेतसः ।। ५.५८ ।।

गच्छामः पुत्रतामस्यास्तन्नः श्रेयो भविष्यति।
अदित्यास्तु प्रसूतानामादित्यत्वं भविष्यति ।। ५.५९ ।।

एवमुक्त्वा तु ते सर्वे चाक्षुषस्यान्तरे मनोः।
जज्ञिरे द्वादशादित्या मारीचात् कश्यपात्पुनः ।। ५.६०।
शतक्रतुश्च विष्णुश्च जज्ञाते पुनरेव हि ।
वैवस्वतेऽन्तरे ह्यस्मिन् नरनारायणौ सुरौ ।। ५.६१ ।।

तेषामपि हि देवानां निधनोत्पत्तिरुच्यते।
यथा सूर्यस्य लोकेऽस्मिन् उदयास्तमयावुभौ।
प्रजापतेश्च विष्णोश्च भवस्य च महात्मनः ।। ५.६२ ।।

श्रेष्ठानुश्रविके यस्माच्छक्ताः शब्दादिलक्षणे।
अष्टात्मकेऽणिमाद्ये च तस्मात्ते चज्ञिरे सुराः ।। ५.६३ ।।

इत्येष विष्ये रागः सम्भूत्याः कारणं स्मृतम्।
ब्रह्मशापेन सम्भूता जयाः स्वायम्भुवे जिताः ।। ५.६४ ।।

स्वारोचिषे वै तुषिताः सत्याश्चैवोत्तमे पुनः।
तामसे हरयो देवा जाताश्चारिष्णवे तु वै।
वैकुण्ठाश्चाक्षुषे साध्या आदित्याः साम्प्रते पुनः ।। ५.६५ ।।

धाताऽर्यमा च मित्रश्च वरुणोंऽशो भगस्तथा।
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः ।। ५.६६ ।।

ततस्त्वष्टा ततो विष्णुरजघन्योऽजघन्यजः।
इत्येते द्वादशादित्याः कश्यपस्य सुताः स्मृताः ।। ५.६७ ।।

सुरभी कश्यपाद्रुद्रानेकादश विजज्ञिरे।
महादेवप्रसादेन तपसा भाविता सती ।। ५.६८ ।।

अङ्गारकं तथा सर्पं निऋतिं सदसस्पतिम्।
अजैकपादहिर्बुध्न्यमूर्द्ध्वकेतुं ज्वरं तथा ।। ५.६९ ।।

भुवनञ्चेश्वरं मृत्युं कपालञ्चैव विश्रुतम्।
देवानेकादशैतांस्तु रुद्रांस्त्रिभुवनेश्वरान्।

तपसा तेन महता सुरभी तानजीजनत् ।। ५.७० ।।

ततो दुहितरावन्ये सुरभी द्वे व्यजायत।
रोहिणी चैव रुद्राभा गान्धारी च यशस्विनी ।। ५.७१ ।।

रोहिण्यां जज्ञिरे कन्याश्चतस्रो लोकविश्रुताः।
सुरूपा हंसकीला च भद्रा कामदुघा तथा।
सुषुवे कामदुघा तु सुरूपा तनयद्वयम् ।। ५.७२ ।।

हंसकीला नृप मृषीन् भद्रायास्तु व्यजायत।
विश्रुतास्तु महाभागा गन्धर्वा वाजिनः सुताः ।। ५.७३ ।।

उच्चैःश्रवास्तदा जाताः खेचरास्ते मनोजवाः।
श्वेताः श्येनाः पिशङ्गाश्च सारङ्गा हरितार्जुनाः।
रुद्रा देवोपबाह्यास्ते गन्धर्वयोनयो हयाः ।। ५.७४ ।।

भूयो जज्ञे सुरभ्यास्तु श्रीमान् चन्द्राभसुप्रभः।
स्रग्वी ककुझी द्युतिमानमृतालयसम्भवः।
सुरभ्यनुमते दत्तो ध्वजो माहेश्वरस्तु सः ।। ५.७५ ।।

इत्येते कश्यपसुता रुद्रादित्याः प्रकीर्त्तिताः।
धर्मपुत्राः स्मृताः साध्या विश्वे च वसवस्तथा ।। ५.७६ ।।

अरिष्टनेमिपत्नीनामपत्यानीह षोडश।
बहुपुत्रस्य विदुषश्चतस्रो विद्युतः स्मृताः।
प्रत्यङ्गिरसजाः श्रेष्ठा ऋचो ब्रह्मर्षिसत्कृताः ।। ५.७७ ।।

कृशाश्वस्य तु देवर्षेर्देवप्रहरणाः स्मृताः ।
एते युगसहस्रान्ते जायन्ते पुनरेव हि ।। ५.७८ ।।

सर्वे देवगणा विप्रास्त्रय स्त्रिंशत्तु छन्दजाः।
एतेषामपि देवानां निरोधोत्पत्तिरुच्यते ।। ५.७९ ।।

यथा सूर्यस्य लोकेऽस्मिन् उदयास्तमयावुभौ।
एते देवनिकायास्ते सम्भवन्ति युगे युगे ।। ५.८० ।।

।।ऋषय ऊचुः।।

साध्याश्च वसवो विश्वे रुद्रादित्यास्तथैव च।
अभिजात्या प्रभावैश्च कर्मभिश्चैव विश्रुताः ।। ५.८१ ।।

प्रजापतेश्च विष्णोश्च भवस्य च महात्मनः।
अन्तरं ज्ञातुमिच्छामो यश्च यस्माद्विशिष्यते ।। ५.८२ ।।

यश्च यस्मात् प्रभवति यश्च यस्मिन् प्रतिष्ठितः।
ज्यायान्यो मध्यमश्चैव कनीयान् यश्च तेषु वै ।। ५.८३ ।।

प्रधानभूतो यस्तेषां गुणभूतश्च तेषु यः।
कर्मभिश्चाभिजात्या च प्रभावेण च यो महान्।
एतत् प्रभ्रूहि नः सर्वं त्वं हि वेत्थ यथायथम् ।। ५.८४ ।।

।।सूत उवाच।।
अत्र वो वर्णयिष्येहमन्तरन्तेषु यत् स्मृतम्।
यद्ब्रह्मविष्णुरुद्राणां श्रृणुध्वं मे विवक्षतः ।। ५.८५ ।।

राजसी तामसी चैव सात्त्विकी चैव ताः स्मृताः ।
तन्वः स्वयम्भुवः प्रोक्ताः काले काले भवन्ति याः ।। ५.८६ ।।

एतासामन्तरं वक्तुं नैव शक्यं द्विजोत्तमाः।
गुणवृद्धिनिबन्धत्वाद् द्विधानुग्रहबन्धतः ।। ५.८७ ।।

प्रवृत्तिञ्च निवृत्तिञ्च गुणवृद्धिमिह द्विजाः।
यथाशक्ति प्रवक्ष्यामि तनूनां तन्निबोधत ।। ५.८८ ।।

एका तु कुरुते तासां राजसी सर्वतः प्रजाः।
एका चैवार्णवस्था तु सानुगृह्णाति सात्त्विकी।
एका सा क्षिपते काले तामसी ग्रसते प्रजाः ।। ५.८९ ।।

रजसा तु समुद्रिक्तो ब्रह्मा सम्भवते यदा।
पुरुषाख्या तदा तस्य सात्त्विकी विनिवर्त्तते ।। ५.९० ।।

यदा भवति कालात्मा उद्रेकात्तमसस्तु सः।
ब्रह्माख्या सा तदा त्वस्य राजसी विनिवर्त्तते ।। ५.९१ ।।

सत्त्वोद्रेकात्तु पुरुषो यदा भवति स प्रभुः।

कालाख्या सा तदा तस्य पुनर्नभवतीति वै ।। ५.९२ ।।

क्रमात्तस्य निवर्त्तन्ते रूपं नाम च कर्म च।
त्रैलोक्ये वर्त्तमानस्य सर्वानुग्रहनिग्रहैः ।। ५.९३ ।।

यदा भवति ब्रह्मा च तदा चान्तरमुच्यते।
यदा च पुरुषो ब्रह्मा न चैव पुरुषस्तु सः ।। ५.९४ ।।

मणिर्विभजते वर्णान् विचित्रान् स्फटिके यथा।
वैमल्यादाश्रयवशात्तद्वर्णः स्यात्तदञ्जनः ।। ५.९५ ।।

तदा गुणवशात्तस्य स्वयम्भोरनुरञ्जनम्।
एकत्वे च पृथक्त्वे च प्रोक्तमेतन्निदर्घनम् ।। ५.९६ ।।

एको भूत्वा यथा मेघः पृथक्त्वेनावतिष्ठते।
रूपतो वर्णतश्चैव तथा गुणवशात्तु सः ।। ५.९७ ।।

भवत्येको द्विधा चैव त्रिधा मूर्तिविनाशनात्।
एको ब्रह्मान्तकृच्चैव पुरुषश्चेति ते त्रयः ।। ५.९८ ।।

एकस्यैताः स्मृतास्तिस्रस्तनवस्तु स्वयम्भुवः।
ब्राह्मी च पौरुषी चैव अन्तकारी च ते त्रयः ।। ५.९९ ।।

तत्र या राजसी तस्य तनुः सा वै प्रजाकरी।
या तामसी तु कालाख्या प्रजाक्षयकरी तु सा।
सात्त्विकी पौरुषी या तु सानुग्रहकरी स्मृता ।। ५.१०० ।।

राजस्या ब्रह्मणोंऽशेन मरीचिः कश्यपोऽभवत्।
तामसी चान्तकृद्या तु तदंशेनाभवद्भवः ।। ५.१०१ ।।

सात्त्विकी पौरुषी या सा तस्याः शोचिष्णुरुच्यते।
त्रैलोक्ये ताः स्मृतास्तिस्रस्तनवस्तु स्वयम्भुवः ।। ५.१०२ ।।

नानाप्रयोजनार्थां हि कालोऽवस्थां करोति यः।
ब्रह्मत्वेन प्रजाः सृष्ठ्वा विष्णुत्वेनानुगृह्य च।
वैष्णव्यानुगृहीता स्ता रौद्यानुग्रसते पुनः ।। ५.१०३ ।।

एकः स्वयम्भुवः कालस्त्रिभिस्त्रीन् वै करोति सः।
सृजते चानुगृह्णाति प्रजाः संहरते तथा ।। ५.१०४ ।।

इत्येताः कथिता स्तिस्रस्तनवस्तु स्वयम्भुवः।
प्रजापत्या च रौद्री च वैष्णवी चैव ताः स्मृताः ।। ५.१०५ ।।

एका तनुः स्मृता वेदे धर्मशास्त्रे पुरातने।
साङ्ख्ययोगपरे वीरैः पृथक्त्वैकत्वदर्शिभिः।
अभिजातप्रभावज्ञैऋषिभिस्तत्त्वदर्शिभिः ।। ५.१०६ ।।

एकत्वे च पृथक्त्वे च तासु भिन्नाः प्रजास्त्विह ।
इदं परमिदं नेति ब्रुवतो भिन्नदर्शनाः ।। ५.१०७ ।।

ब्रह्माणं कारणं केचित् केचित् प्राहुः प्रजापतिम्।
केचिच्छिवं परत्वेन प्राहुर्विष्णुं तथाऽपरे।
अविज्ञानेन संसक्ताः सक्ता रत्यादिचेतसा ।। ५.१०८ ।।

तत्त्वं कालञ्च देशञ्च कार्याण्यावेक्ष्य तत्त्वतः।
कारणञ्च स्मृता ह्येता नानार्थैष्विह देवताः ।। ५.१०९ ।।

एकं निन्दति यस्तेषां सर्वानेन स निन्दति।
एकं प्रशसमानस्तु सर्वानेव प्रशंसति।
एकं यो वेत्ति पुरुषं तमाहुर्ब्रह्मवादिनम् ।। ५.११० ।।

अद्वेषस्तु सदा कार्यो देवतासु विजानता।
न शक्यमीश्वरं ज्ञातुमैश्वर्येण व्यवस्थितम् ।। ५.१११ ।।

एकात्मा स त्रिधा भूत्वा संमोहयति यः प्रजाः।
एतेषाञ्च त्रयाणान्तु विचरन्त्यन्तरं जनाः ।। ५.११२ ।।

जिज्ञासन्तः परीक्षन्तः सक्ता रूपाविचेतसः।
इदं परमिदं नेति वदन्ति भिन्नदर्शिनः ।। ५.११३ ।।

यातुधानान् विशन्त्येताः पिशाचांश्चैव तान्नरान् ।
एकत्वेन पृथक्त्वेन स्वयम्भूर्व्यवतिष्ठते ।। ५.११४ ।।

गुणमात्रात्मिकाभिस्तु तनुभिर्मोहयन् प्रजाः।

तेष्वेकं यजते यस्तु स तदा यजते त्रयम् ।। ५.११५ ।।

तस्माद्देवास्त्रयो ह्येते नैरन्तर्ये व्यवस्थिताः।
तस्मात् पृथक्त्वमेकत्वसङ्ख्या सङ्ख्यागतागतम्।
एकत्वं वा बहुत्वं वा तेषु को ज्ञातुमर्हति ।। ५.११६ ।।

यस्मात् सृष्ट्वानुगृह्णीते ग्रसते चैव ते प्रजाः ।
गुणात्मकत्वात्त्रैकाल्ये तस्मादेकः स उच्यते ।। ५.११७ ।।

रुद्रं ब्रह्माणमिन्द्रञ्च लोक पालान् ऋषीन् दनून्।
देवं तमेकं बहुधा प्राहुर्नारायणं द्विजाः ।। ५.११८ ।।

प्राजापत्या तनुर्या च तनुर्या चैव वैष्णवी।
मन्वन्तरे च कल्पे च आवर्त्तन्ते पुनः पुनः ।। ५.११९ ।।

तेजसा यशसा बुद्ध्या श्रुतेन च बलेन च ।
जायन्ते तत्समाश्चैव तानपीह निबोधत ।। ५.१२० ।।

राजस्या ब्राह्मणोंऽशेन मरीचिः कश्यपोऽभवत्।
तामस्यास्तस्य चांशेन कालात्मा रुद्र उच्यते ।
सात्त्विक्याः पुरुषांशेन यज्ञे विष्णुरभूत्तदा ।। ५.१२१ ।।

त्रिषु कालेषु तस्यैता ब्रह्मणस्तनवोंऽशजाः।
कालो भूत्वा पुनश्चासौ रुद्रः संहरते प्रजाः ।। ५.१२२ ।।

सम्प्राप्ते चैव कल्पान्ते सप्तरश्मिर्द्दिवाकरः।
भूत्वा संवर्त्तकादित्यो लोकांस्त्रीन् स तदादहत् ।। ५.१२३ ।।

विष्णुः प्रजानुगृह्णाति नामरुपविपर्यये ।
तस्यान्तस्यामवस्थायां तत्तदुत्पत्तिकारणम् ।। ५.१२४ ।।

सत्त्वोद्रिक्ता तु या प्रोक्ता ब्रह्मणः पौरुषी तनुः।
तस्यांशेन विजज्ञे स इह स्वायम्भुवेऽन्तरे।
आकूत्यां मनसो देव उत्पन्नः प्रथमे विभुः ।. ५.१२५ ।।

ततः पुनः स वै देवो प्राप्ते स्वारोचिषेऽन्तरे।
तुषितायां समुत्पन्नो ह्यतीतस्तुषितैः सह ।। ५.१२६ ।।

औत्तमे चान्तरे चैव तुषितस्तु विदुः स वै।
वशवर्त्तिभिरुत्पन्नो वशवर्त्ती हरिः पुनः ।। ५.१२७ ।।

सत्यायामभवत्सत्यः सत्यैः सह सुरोत्तमैः।
तामसस्यान्तरे चापि सम्प्राप्ते पुनरेव हि।
भार्यायां हरिभिः सार्द्धं हरिरेव बभूव ह ।। ५.१२८ ।।

चारिष्णवेऽन्तरे चापि हरिर्दवः पुनस्तु सः।
वैकुण्ठायामसौ जज्ञे ह्याभूतरजसैः सह।
वैकुण्ठः स पुनर्द्देवः सम्प्राप्ते चाक्षुषेऽन्तरे ।। ५.१२९ ।।

धर्मो नारायणः साध्यः साध्यैः सह सुरैरभूत् ।
स तु नारायणः साध्यः प्राप्ते वैवस्वतेऽन्तरे ।। ५.१३० ।।

मारीचात् कश्यपाद्विष्णुरदित्यां सम्बमूव ह।
त्रिस्त्रिः क्रमैरिमान् लोकान् जित्वा विष्णुरुरुक्रमम् ।। ५.१३१ ।।

प्रत्यपादयदिन्द्राय देवेभ्यश्चैव स प्रभुः।
इत्येतासतनवस्तस्य व्यतीताः सप्त सप्तसु।
मन्वन्तरेष्वतीतेषु याभिः संरक्षिताः प्रजाः ।। ५.१३२ ।।

तस्माद्विष्टमिदं सर्वं वामनेनेह जायता।
तस्मात्स वै स्मृतो विष्णुर्विशेर्धातोः प्रवेशनात् ।। ५.१३३ ।।

इत्येते ब्रह्मणश्चैव वामनस्य महात्मनः।
एकत्वञ्च पृथक्त्वञ्च विशिष्टत्वञ्च कीर्त्तितम् ।। ५.१३४ ।।

देवतानामिहांशेन जायन्ते यास्तु देवताः।
तासान्तास्तेजसा बुद्ध्या श्रुतेन च बलेन च।
जायन्ते तत्समाश्चैव ता वै तेषामनुग्रहात् ।। ५.१३५ ।।

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छध्वं विष्णोस्तेजोंऽशसम्भवम् ।। ५.१३६ ।।

स एवं जायतेंऽशेन केचिदिच्छन्ति मानवाः।
ततोऽपरे ब्रुवन्तीममन्योन्यांशेन जायते ।। ५.१३७ ।।

एवं विवदमानास्ते दृष्ट्वा तान्वै ब्रुवन्ति ह।
यस्मान्न विद्यते भेदो मनसश्चेतसश्च ह।
तस्मादनुग्रहास्तेषां क्षेत्रज्ञास्ते भवन्त्युत ।। ५.१३८ ।।

एकस्तु प्रभुशक्त्या वै बहुधा भवतीश्वरः।
भूत्वा यस्माच्च बहुधा भवन्येकः पुनस्तु सः ।। ५.१३९ ।।

तस्मात्सुमनसो भेदाज्जायन्ते तेजसश्च ह।
मन्वन्तरेषु सर्वेषु प्रजाः स्थावरजङ्गमाः।
सर्गादौ सकृदुत्पन्नास्तिष्ठन्तीह प्रशंसया ।। ५.१४० ।।

प्राप्ते प्राप्ते तु कल्पान्ते रुद्रः संहरति प्रजाः।
जायन्ते मोहयन्तोऽन्यानीश्वरा योगमायया ।। ५.१४१ ।।

ऐश्वर्येण चरन्तस्ते मोहयन्ति ह्यनीश्वराः।
तस्माद्दोषप्रचारेषु युक्तायुक्तं न विद्यते ।। ५.१४२ ।।

भूतापवादिनो दुष्टा मध्यस्था भूतभाविनः।
भूतापवादिनः शक्तास्त्रयो वेदाः प्रवादिनाम् ।। ५.१४३ ।।

दृढपूर्वश्रुतत्वाच्च प्रवादाच्चैव लौकिकात्।
चतुर्भिः कारणैरेभिर्यथातत्त्वं न विन्दति ।। ५.१४४ ।।

पूर्वमर्थान्तरे न्यस्ताः कालान्तरगता अपि।
तेनान्यत् सन्तमप्यर्थं द्वेषान्न प्रतिपद्यते ।। ५.१४५ ।।

दर्शानां द्रव्यभूतो यो गुणभूतस्तु तेषु यः।
कर्मणां मनसां कर्त्ता अभिजात्या च यो महान्।
श्रुतज्ञैः कारणैरेतैश्चतुर्भिः परिकीर्त्त्यते ।। ५.१४६ ।।

अशक्तरुष्टो जानाति देवताः प्रविभागशः।
इमौ चोदाहरन्त्यत्र श्लोकौ योगेश्वरं प्रति ।। ५.१४७ ।।

आत्मनः प्रतिरूपाणि परेषाञ्च सहस्रशः।
कुर्याद्योगबलम्प्राप्य तैश्च सर्वैः सहाचरेत् ।। ५.१४८ ।।

प्राप्नुयाद्विषयाश्चैव तथैवोग्रतपश्चरन् ।
संहरेच्च पुनः सर्वान् सूर्यतेजो गुणानिव ।। ५.१४९ ।।

इति श्रीमहापुराणे वायुप्रोक्ते कश्यपीयप्रजासर्गो नाम पञ्चमोऽध्यायः ।। ५ ।। *

।।ऋषय उचुः ।।
एतच्छ्रुत्वा वचस्तस्य नैमिषेयास्तपस्विनः।
पप्रच्छुऋषयः श्रेष्ठं वचनस्य यथाक्रमम् ।। ६.१ ।।
सप्तस्विह कथं देवा जाता मन्वन्तरेष्विह।
इन्द्रविष्णुप्रधानास्ते आदित्यास्तु महौजसः।
एतत् प्रब्रूहि नः सर्वं विस्तराद्रोमहर्षण ।। ६.२ ।।
एव मुक्तस्तदा सूतो विनयी ब्रह्मवादिभिः।
उवाच वदतां श्रेष्ठो यथा पृष्टो महर्षिभिः ।। ६.३ ।।
।।सूत उवाच।।
व्रह्मणो वै मुखात् सृष्टा यथा देवाः प्रजेप्सया।
सर्व मन्त्रशरीरास्ते स्मृता मन्वतरेष्विह ।। ६.४ ।।
दर्शश्च पौर्णमासश्च बृहद्यच्च रथन्तरम्।
आकूतः प्रथमस्तेषां ततस्त्वाकूतिरेव च ।। ६.५ ।।
वित्तिश्चैव सुवित्तिश्च आकूतिः कूतिरेव च।
अधीष्टस्तु ततो ज्ञेयः अधीतिश्चैव तत्त्वतः।
विज्ञातिश्चैव विज्ञातो मानवो ये च द्वादश ।। ६.६ ।।
ज्ञेयो द्वादशपुत्रश्च यश्चाब्देन समाजयेत्।
तं दृष्ट्वा चाब्रवीद्ब्रह्मा जया देवानसूयत ।। ६.७ ।।
दारा ग्रिहोत्रसंयोगे मिथ्यामारभतेति च।
एवमुक्त्वा तु तं व्रह्मा तत्रैवान्तरधीयत ।। ६.८ ।।
ततस्ते नाभ्यनन्दन्त तद्वाक्यं परमेष्ठिनः।
सत्यस्येह तु कर्माणि वाङ्मनः कर्मजानि तु ।। ६.९ ।।
य एवाप्यवतिष्ठन्ते दोषं दृष्ट्वा तु कर्मसु।
क्षयातिशययुक्तन्तु ते दृष्ट्वा कर्मणां फलम् ।। ६.१० ।।
जुगुप्सन्तः प्रसूतिञ्च निस्तन्द्रा निर्ममाभवन्।
अजस्रं कांक्षमाणास्ते विरक्ता दोषदर्शिनः ।। ६.११ ।।
अर्थं धर्मञ्च कामञ्च हित्वा ते वै व्यवस्थिताः।
पौरुषं ज्ञानमास्थाय तेजः संक्षिप्य चास्थिताः ।। ६.१२ ।।
तेषाञ्च तमभिप्रायं ज्ञात्वा ब्रह्मा चुकोप ह।
तानब्रवीत्तदा ब्रह्मा निरुत्साहात् सुरानथ ।। ६.१३ ।।
प्रजार्थमिह यूयं वै प्रजास्रष्टाऽस्मि नान्यथा।
प्रसूयध्वं जयध्वञ्चेत्युक्तवानस्मि यत् पुरा ।। ६.१४ ।।
यस्माद्वाक्यमनादृत्य मम वैराग्यमास्थिताः।

जुगुप्समानाः स्वं जन्म सन्ततिं नाभि नन्दथ ।। ६.१५ ।।
कर्मणाञ्च कृतो न्यासो ह्यमृतत्त्वाभिकांक्षया।
तस्माद्यूयमनादृत्य सप्तकृत्वस्तु यास्यथ ।। ६.१६ ।।
ते शप्ता ब्रह्मणा देवा जयास्तं वै प्रसादयन्।
क्षमास्माकं महादेव यदज्ञानात् कृतं विभो ।। ६.१७ ।।
प्रणिपत्य सानुनयं ब्रह्मा तानब्रवीत् पुनः।
लोके मयाननुज्ञातः कः स्वातन्त्र्यमिहार्हसि ।। ६.१८ ।।
मया परिगतं सर्वं कथमच्छन्दतो मम।
प्रतिपत्स्यन्ति भूतानि शुभं वा यदि वाऽशुभम् ।। ६.१९ ।।
लोके यदस्ति किञ्चिद्वै सत्त्वासत्त्वव्यवस्थितम्।
बुद्ध्यात्मना मया व्याप्तं को मां लोकेऽतिसन्धयेत् ।। ६.२० ।।
भूतानां तर्कितं यच्च यच्चाप्येषां विधारितम्।
तथा विचारितं यच्च तत्सर्वं विदितं मम ।। ६.२१ ।।
मया स्थितमिदं सर्वं जगत् स्थावरजङ्गमम्।
आशामयेन तत्त्वेन कथं छेत्तुमिहोत्सहे ।। ६.२२ ।।
यस्माच्चाहं विवृत्तो वै सर्गार्थमिह नान्यथा।
इह कर्माण्यनारभ्य को मे छन्दाद्विमोक्ष्यते ।। ६.२३ ।।
परिभाष्य ततो देवान् जयान् वै नष्टचेतसः।
अब्रवीत्स पुनस्तान् वै धृतान् दण्डे प्रजापतिः ।। ६.२४ ।।
यस्मान्ममाभिसन्धाय सन्न्यासो वः कृतः पुरा।
यस्मात्स विफलोऽयन्नो ह्यपारस्त्वेष यः कृतः।
भविताऽतः सुखोदर्को देवा भावेषु जायताम् ।। ६.२५ ।।
आत्मच्छन्देन वो जन्म भविष्यति सुरोत्तमाः।
मन्वन्तरेषु संमूढाः षट्सु सर्वे गमिष्यथ ।। ६.२६ ।।
वैवस्वतान्तेषु सुरास्तथा स्वायम्भुवादिषु।
तान् ज्ञात्वा ब्रह्मणा तत्र श्लोको गीतः पुरातनः ।। ६.२७ ।।
त्रयीं विद्यां ब्रह्मचर्यं प्रसूतिं श्राद्धमेव च ।
यज्ञञ्चैव तु दानञ्च एषामेव तु कुर्वताम्।
स हि स्म विरजा भूत्वा वसतेऽन्यप्रशंसया ।। ६.२८ ।।
स एवं स्लोकं दृष्ट्वा तु जया देवानथाब्रवीत्।
वैवस्वतेऽन्तरेऽतीते मत्समीपमिहेष्यथ ।। ६.२९ ।।
ततो यूयं मया सार्द्धं सिद्धिं प्राप्स्यथ शाश्वतीम्।
एवमुक्त्वा तु तान् ब्रह्मा तत्रैवान्तरधीयत ।। ६.३० ।।

ततो देवास्तिरोभूते ईश्वरे ह्यकुतोभयम्।
प्रपन्ना अणिमाद्यैश्च युक्ता योगबलान्विताः ।। ६.३१ ।।
ततस्तेषान्तु यास्तन्वस्ताऽभवन् द्वादश ह्रदाः।
जया इति समाख्याता जाता श्चोदधिसन्निभाः ।। ६.३२ ।।
ततः स्वायम्भुवे तस्मिन् सर्गेते जज्ञिरे सुराः।
अजितायां रुचेः पुत्रा अजिता द्वादशात्मकः ।। ६.३३ ।।
विधिश्च मुनयश्चैव क्षेमो नन्दोऽव्ययस्तथा।
प्राणोऽपानः सुधामा च क्रतुशक्तिव्यवस्थिताः ।
इत्येते मानसाः सर्वे अजिता द्वादश स्मृताः ।। ६.३४ ।।
ते च यज्ञे सुरैः सार्द्धं यज्ञभाजस्तदा स्मृताः।
स्वायम्भुवेऽन्तरे पूर्वे ततः स्वारोचिषे पुनः।
तुषितायां समुत्पन्नाः पुनः पुत्राः स्वरोचिषः ।। ६.३५ ।।
तुषिता नाम ते ह्यासन् प्राणाख्या यात्रिकाः सुराः।
पुनस्ते तुषिता देवा उत्तमे त्वन्तरे स्वयम् ।। ६.३६ ।।
उत्तमस्य तु ते पुत्राः सत्यायां जज्ञिरे शुभाः।
ततः सत्याः स्मृता देवा उत्तमे चान्तरे तदा ।। ६.३७ ।।
अभजन् यज्ञभाजस्ते तृतीये द्वापरान्तरे।
ते तु सत्याः पुनर्द्देवाः सम्प्राप्ते तामसेऽन्तरे ।। ६.३८ ।।
हर्षा ये तमसः पुत्रा जज्ञिरे द्वादशैव तु ।
हरयो नाम ते देवा यज्ञभाजस्तथाऽभवन् ।। ६.३९ ।।
ततस्ते हरयो देवाः प्राप्ते चारिष्णवेऽन्तरे।
वैकुण्ठायां ततस्ते वै चरिष्णोर्जज्ञिरे सुराः।
वैकुण्ठा नाम ते देवाः पञ्चमस्यान्तरे मनोः ।। ६.४० ।।
ततस्ते वै पुनर्द्देवा वैकुण्ठाः प्राप्य चाक्षुषम्।
साध्यायां द्वादश सुता जज्ञिरे धर्मसूनवः ।। ६.४१ ।।
ततस्ते वै पुनः साध्याः संक्षीणे चाक्षुषेऽन्तरे ।
उपस्थिते मनोः सर्गे पुनर्वैवस्वतस्य ह ।। ६.४२ ।।
आद्ये त्रेतायुगमुखे प्राप्ते वैवस्वतस्य तु ।
अंशेन साध्यास्तेऽदित्यां मारीचात् कश्यपात् पुनः ।। ६.४३ ।।
जज्ञिरे द्वादशादित्या वर्त्तमानेऽन्तरे पुनः।
यदा त्वेते समुत्पन्नाश्चाक्षुषस्यान्तरे मनोः ।। ६.४४ ।।
ततः स्वायम्भुवे साध्या जज्ञिरे द्वादशामराः।
एवमाद्या जयास्ते वै शापात्समभवंस्तदा ।। ६.४५ ।।

य इमां सप्तसम्भूतिं देवानां देवशासनात् ।
पठेद्यः श्रद्धया युक्तः प्रत्वायं न गच्छति ।। ६.४६ ।।
इत्येते भूतयः सप्त जयानां सप्तलक्षणाः।
परिक्रान्ता मया चाद्य किम्भूयः श्रोतुमिच्छथ ।। ६.४७ ।।
।।ऋष ऊचुः ।।
दैत्यानां दानवानाञ्च गन्धर्वोरगरक्षसाम्।
सर्वभूतपिशाचानां पशूनां पक्षिवीरुधाम्।
उत्पत्तिं निधनञ्चैव विस्तरात् कथयस्व नः ।। ६.४८ ।।
एवमुक्तस्तदा सूत उवाच ऋषिसत्तमान् ।
दितेः पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतम् ।। ६.४९ ।।
कश्यपस्यात्मजौ तौ वै सर्वेभ्यः पूर्वजौ स्मृतौ।
सूत्येऽहन्यतिरात्रस्य कश्यपस्याश्वमेधिके ।। ६.५० ।।
हिरण्यकशिपुर्नाम प्रथमं ऋत्विगासनम्।
दित्या गर्भाद्विनिःसृत्य तत्रासीनोच्चसंसदि।
हिरण्यकशिपुस्तस्मात् कर्मणा तेन स स्मृतः ।। ६.५१ ।।
।।ऋषय ऊचुः ।।
हिरण्यकशिपोर्नाम जन्म चैव महात्मनः।
प्रभावञ्चैव दैत्यस्य विस्तराद्ब्रूहि नः प्रभो ।। ६.५२ ।।
।।सूत उवाच।।
कश्यपस्याश्वमेधोऽभूत् पुण्यो वै पुष्करे पुरा।
ऋषिभिर्द्देवताभिश्च गन्धर्वै रुपशोभितः ।। ६.५३ ।।
उत्कृष्टेनैव विधिना आख्यानादौ यथाविधि।
आसनान्युपक्लृप्तानि काञ्चनानि तु पञ्च वै ।। ६.५४ ।।
कुशपूतानि त्रीण्यत्र कूर्चफलकमेव च।
मुख्यार्त्विजश्च चत्वारस्तेषान्तान्युपकल्पयेत् ।। ६.५५ ।।
शुभं तत्रासनं यत्तु होतुरर्थे प्रकल्पितम्।
हिरण्मयं तथा दिव्यं दिव्यास्तरणसंस्तृतम् ।। ६.५६ ।।
अन्तर्वत्नी दितिश्चैव पत्नीत्वं स्मुपागता।
दश वर्षसहस्राणि गर्भस्तस्या अवर्तत ।। ६.५७ ।।
स तु गर्भाद्विनिःसृत्य मातुर्वै उदरात्तदा।
उपक्लृप्तासनं यत्तु होतुरर्थे हिरण्मयम्।
निषसाद सगर्भोऽत्र तत्रासीनः शशंस च ।। ६.५८ ।।
आक्यानपञ्चमान् वेदान् महर्षिः काश्यपो यथा।

तं दृष्ट्वा मुनयस्तस्य नामाकुर्वंस्तु तद्विधम् ।। ६.५९ ।।
हिरण्यकशिपुस्तस्मात् कर्मणा तेन विश्रुतः।
हिरण्याक्षोऽनुजस्तस्य सिंहिका तस्य चानुजा।
राहोः सा जननी देवी विप्रचित्तेः परिग्रहात् ।। ६.६० ।।
हिरण्यकशिपुर्दैत्यश्चचार परमं तपः।
शतं वर्षसहस्राणां निराहारो ह्यधःशिराः ।। ६.६१ ।।
तं ब्रह्मा छन्दयामास दैत्यं तुष्टो वरेण तु।
सर्वामरत्वं विप्रेभ्यः सर्वभूतेभ्य एव च।
योगाद्देवान् विनिर्जित्य सर्वदेवत्वमास्थितः ।। ६.६२ ।।
दानवाश्चासुराश्चैव देवाः समा भवन्तु वै।
मारुतेर्यन्महैश्वर्यमेष मे दीयतां वरः ।। ६.६३ ।।
एवमुक्तोऽथ ब्रह्मा तु तस्मै दत्त्वा यथेप्सितम्।
दत्त्वा तस्मै वरान् दिव्यान् तत्रैवान्तरधीयत।
हिरण्यकशिपुर्दैत्यः श्लोकैर्गीतः पुरातनैः ।। ६.६४ ।।
राजा हिरण्यकशिपुर्यां यामाशां निषेवते।
तस्यास्तस्या दिशो देवा नमश्चक्रुर्महर्षिभिः ।। ६.६५ ।।
एवंप्रभावो दैत्येन्द्रो हिरण्यकशिपु र्द्विजाः।
तस्यासीन्नरसिंहः स विष्णुर्मृत्युः पुरा किल।
नखैस्तु तेन निर्भिन्नस्ततः शुद्धा नखाः स्मृताः ।। ६.६६ ।।
हिरण्याक्षसुताः पञ्च विक्रान्ताः सुमहा बलाः।
उत्कुरः शकुनिश्चैव कालनाभस्तथैव च ।। ६.६७ ।।
महानाभश्च विक्रान्तो भूतसन्तापनस्तथा।
हिरण्याक्षसुताः ह्येते देवैरपि दुरासदाः ।। ६.६८ ।।
तेषां पुत्राश्च पौत्राश्च बाडेयः सगणः स्मृतः।
शतन्तानि सहस्राणि निहतास्तारकामये ।। ६.६९ ।।
हिरण्यकशिपोः पुत्राश्चत्वारस्तु महाबलाः।
प्रह्लादः पूर्वजस्तेषामनुह्लादस्तथैव च।
संह्लादश्च ह्लदश्चैव ह्लदपुत्रान्निबोधत ।। ६.७० ।।
ह्लादो निसुन्दश्च तता ह्लदपुत्रौ बभूवतुः।
सुन्दोपसुन्दौ विक्रान्तौ निसुन्दतन यावुभौ ।। ६.७१ ।।
ब्रह्मघ्नस्तु महावीर्यो मूकस्तु ह्लददायिनः।
मारीचः सुन्दपुत्रस्तु ताडकामुपपद्यते ।। ६.७२ ।।
ताडका निहता साऽथ राघवेण बलीयसा।

मूको विनिहतश्चापि किराते सव्यसाचिना ।। ६.७३ ।।
उत्पन्ना महता चैव तपसा भाविताः स्वयम्।
तिस्रः कोट्यस्तु तेषां वै मणिवर्त्तनिवासिनाम्।
अवध्या देवतानां वै निहताः सव्यसाचिना ।। ६.७४ ।।
अनुह्लादसुतो वायुः शिनीवाली तथैव च ।
तेषान्तु शतसाहस्रो गणो हालाहलः स्मृतः ।। ६.७५ ।।
वैरोचनस्तु प्राह्लादिः पञ्च तस्यात्मजाः स्मृताः।
गवेष्ठी कालनेमिश्च जम्भो बाष्कल एव च।
शम्भुस्तु अनुजस्तेषां स्मृताः प्राह्लादिसूनवः ।। ६.७६ ।।
यथाप्रधानं वक्ष्यामि तेषां पुत्रान् दुरासदान्।
शुम्भश्चैव निशुम्भश्च विष्वक्सेनो महौजसः ।। ६.७७ ।।
गवेष्ठिनः सुता ह्येते जम्भस्य शतदुन्दुभिः।
तथा दक्षश्च खण्डश्च त्रयस्तु जम्भसूनवः ।। ६.७८ ।।
विरोधश्च मनुश्चैव वृक्षायुः कुशलीमुखः।
बाष्कलस्य सुता ह्येते कालनेमिसुतान् श्रृणु ।। ६.७९ ।।
ब्रह्मजित् क्षत्रजिच्चैव देवान्तकनरान्तकौ ।
कालनेमिसुता ह्येते शम्भोस्तु श्रृणुत प्रजाः ।। ६.८० ।।
धनुको ह्यसिलोमा च नाबलश्च सगोमुखः।
गवाक्षश्चैव गोमांश्च शम्भोः पुत्राः प्रकीर्त्तिताः ।। ६.८१ ।।
विरोचनस्य पुत्रस्तु बलिरेकः प्रतापवान्।
बलेः पुत्रशतं जज्ञे राजानः सर्व एव ते ।। ६.८२ ।।
तेषां प्रधानाश्चत्वारो विक्रान्ताः सुमहाबलाः।
सहस्रबाहुर्ज्येष्ठस्तु बाणो द्रविणसम्मतः।
कुम्भनाभो गर्द्दभाक्षः कुशिरित्येवमादयः ।। ६.८३ ।।
शकुनी पूतना चैव कन्ये द्वे तु बलेः सुते।
बलेः पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः ।। ६.८४ ।।
बलिर्यो नामविख्यातो गणो विक्रान्तपौरुषः।
बाणस्य चन्द्र मनसो लौहित्यमुपपद्यते ।। ६.८५ ।।
दितिर्विनष्टपुत्रा वै तोषयामास कश्यपम्।
स कश्यपः प्रसन्नात्मा सम्यगाराधितस्तया ।
वरेण च्छन्दयामास सा च वव्रे वरं ततः ।। ६.८६ ।।
स तु तस्यै वरं प्रादात् प्रार्थितं भगवन् प्रभुः।
किमिच्छसि मयि शुभ्रे मारीचस्तामभाषत ।। ६.८७ ।।

मारीचं कश्यपं तुष्टं भर्तारं प्राञ्जलिस्तथा।
हतपुत्रास्मि भगवान् आदित्यैस्तव सूनुभिः ।। ६.८८ ।।
शक्रहन्तारमिच्छेयं पुत्रं दीर्घतपोऽन्वितम्।
अहं तपश्चरिष्यामि गर्भं माधातुमर्हसि ।। ६.८९ ।।
तस्यास्तद्वचनं श्रुत्वा मारीचः कश्यपस्तथा।
प्रत्युवाच महातेजा दितिं परमदुःखिताम् ।। ६.९० ।।
एवं भवतु भद्रन्ते शुचिर्भव तपोधने।
जनयिष्यसि सत्पुत्रं शक्रहन्तारमाहवे ।। ६.९१ ।।
पूर्णं वर्षशतं तावत् शुचिर्यदि भविष्यसि ।
पुत्रं त्रिलोकप्रचरमथत्वं जनयिष्यसि ।। ६.९२ ।।
एवमुक्त्वा महातेजास्तया समवसत् प्रभुः ।
तामालिङ्ग्य त्रिभुवनं जगाम भगवानृषिः ।। ६.९३ ।।
गते भर्त्तरि सा देवी दितिः परमहर्षिता।
कुशलं वनमासाद्य तपस्तेपे सुदारुणम् ।। ६.९४ ।।
तपस्तस्यान्तु कुर्वन्त्यां परिचर्याञ्चकार ह।
सहस्राक्षः सुरश्रेष्ठः परया गुणसम्पदा ।। ६.९५ ।।
अग्निं समित्कुशं काष्ठं फलं मूलं तथैव च।
न्यवेदयत् सहस्राक्षो यच्चान्यदपि किञ्चन ।। ६.९६ ।।
गात्रसंवाहनैश्चैव श्रमापनयनैस्तथा।
शक्रः सर्वेषु (लोकेषु) कालेषु दितिं परिचचार ह ।
एवमाराधिता शक्रमुवाचाथ दितिस्तथा ।। ६.९७ ।।
।।दितिरुवाच।।
प्रीता तेऽहं सुरश्रेष्ठ दशवर्षाणि पुत्रक।
अवशिष्टानि भद्रान्ते भ्रातरं द्रक्ष्यसे ततः ।। ६.९८ ।।
जयलिप्सां समाधास्ये लब्ध्वाहं तादृशं सुतम्।
त्रैलोक्यविजयं पूत्र प्राप्स्यामि सह तेन वै ।। ६.९९ ।।
एवमुक्त्वा दितिः शक्रं मध्यं प्राप्ते दिवाकरे ।
निद्रयापहृता देवी जान्वोः कृत्वा शिरस्तदा ।। ६.१०० ।।
दृष्ट्वा तामशुचिं शक्रः पादयोर्गतमूर्द्धजाम् ।
तस्यास्तदन्तरं लब्ध्वा जहास च मुमोद च ।। ६.१०१ ।।
तस्याः शरीरं विवृतं विवेशाथ पुरन्दरः।
प्रविश्य चामितं दृष्ट्वा गर्भमिन्द्रो महौजसम्।
अभिनत्स प्रधानन्तु कुलिशेन महायशाः ।। ६.१०२ ।।

भिद्यमानस्तदा गर्भो वज्रेण शतपर्वणा।
रुरोद सस्वरं भीमं वेपमानः पुनः पुनः ।
मारोदीरिति तं गर्भं शक्रः पुनरभाषत ।। ६.१०३ ।।
तं गर्भं सप्तधाभूतं ह्येकैकं सप्तधा पुनः।
कुलिशेन बिभेदेन्द्रस्ततो दितिरबुध्यत ।। ६.१०४ ।।
न हन्तव्यो न हन्तव्य इत्येवं दितिरब्रवीत् ।
निष्पपातोदराद्वज्री मातुर्वचनगौरवात्।
प्राञ्जलिर्वज्रसहितो दितिं शक्रोऽभ्यभाषत ।। ६.१०५ ।।
अशुचिर्देवि सुप्तासि पादयोर्गतमूर्द्धजा।
तदन्तरमहं लब्ध्वा शक्रहन्तारमाहवे।
भिन्नवान् गर्भमेतन्ते बहुधा क्षन्तुमर्हसि ।। ६.१०६ ।।
तस्मिस्तु विफले गर्भे दितिः परमदुःखिता।
सहस्राक्षं ततो वाक्यं मातुर्नयनमब्रवीत् ।। ६.१०७ ।।
ममापराधाद्गर्भोऽयं यदि ते विफलीकृतः।
नापराधोऽस्ति देवेश ऋषिपुत्र महाबल ।। ६.१०८ ।।
शत्रोर्वधे न दोषोऽस्ति तेन त्वां न शपामि भोः।
प्रियन्तु कर्त्तुमिच्छामि श्रेयो गर्भस्य मे कुरु ।। ६.१०९ ।।
भवन्तु मम पुत्राणां सप्त स्थानानि वै दिवि।
वातस्कन्धानिमान् सप्त चरन्तु मम पुत्रकाः।
मरुतश्चेति विख्याता गणास्ते सप्त सप्तकाः ।। ६.११० ।।
पृथिव्यां प्रथमस्कन्धो द्वितीयश्चैव भास्करे।
सोमे तृतीयो विज्ञेयश्चतुर्थो ज्योतिषां गणे ।। ६.१११ ।।
ग्रहेषु पञ्चमश्चैव षष्ठः सप्तर्षिमण्डले।
ध्रुवे तु सप्तमश्चैव वातस्कन्धः परस्तु सः ।। ६.११२ ।।
तान्येते विचरन्त्वद्य काले काले ममात्मजाः।
वातस्कन्धानिमान् भूत्वा चरन्तु मम पुत्रकाः ।। ६.११३ ।।
पृथिव्यां प्रथमस्कन्धो अमेध्येभ्यो य आवहः।
चरन्तु मम पुत्रास्ते प्रथमश्चरताङ्गणः ।। ६.११४ ।।
द्वितीयश्चापि मेध्येभ्य आसूर्यात् प्रवहस्तु यः।
वातस्कन्धं द्वितीयन्तु द्वितीयश्चरताङ्गणः ।। ६.११५ ।।
सूर्योर्द्ध्वन्तु ततः सोमादुद्वहो यस्तु वै स्मृतः।
वातस्कन्धन्तु तं प्राहुस्तृतीयश्चरताङ्गणः ।। ६.११६ ।।
सोमादूर्द्ध्वं तथर्क्षेभ्यश्चतुर्थः सुवहस्तु यः।

चतुर्थो मम पुत्राणां गणस्तु चरतां विभो ।। ६.११७ ।।
यक्षेभ्यश्च तथैवोर्द्ध्वमाग्रहाद्विवहस्तु यः।
पञ्चमं पञ्चमः सौम्यः स्कन्धस्तु चरताङ्गणः ।। ६.११८ ।।
ऊर्द्ध्वं ग्रहादृषिभ्यस्तु षष्ठो यो वै पराहतः ।
चरन्तु मम पुत्रास्तु तत्र षष्ठे गणे तु ये ।। ६.११९ ।।
सप्तर्षयस्तथैवोर्द्ध्वमाध्रुवात् सप्तमस्तु यः।
वात स्कन्धः परिवहस्तत्र तिष्ठन्तु मे सुताः ।। ६.१२० ।।
एतत् सर्वं चरन्त्वेते काले काले ममात्मजाः।
तत्र तेन च नाम्ना वै भवन्तु मरुतस्त्विमे ।। ६.१२१ ।।
ततस्तेषान्तु नामानि मातापुत्रौ प्रचक्रतुः।
तत्कृते कर्मभिश्चैव मरुतो वै पृथक् पृथक् ।। ६.१२२ ।।
सत्त्वज्योतिस्तथादित्यः सत्यज्योतिस्तथाऽपरः।
तिर्यग्ज्योतिश्च सज्योतिर्ज्ज्योतिष्मानपरस्तथा ।। ६.१२३ ।।
प्रथमस्तु गणः प्रोक्तो द्वितीयं मे निबोधत।
ॠतजित्सत्यजिच्चैव सुषेणः सेनजित्तथा ।। ६.१२४ ।।
सत्मित्रोऽभिमित्रश्च हरिमित्रस्तथाऽपरः।
गण एष द्वितीयस्तु तृतीयं मे निबोधत ।। ६.१२५ ।।
कृतः सत्यो * * * * ध्रुवो धर्त्ता विधारयः ।
ध्वान्तश्चैव धुनिश्चैव ह्युग्रो भीमस्तथैव च।
अभियुः सक्षिपश्चैवमाह्वयश्च गणः स्मृतः ।। ६.१२६ ।।
ईदृक् चैव तथान्यादृक् यादृक् च प्रतिकृत्तथा।
(?) समितिश्चैव संरम्भश्च तथा गणः ।। ६.१२७ ।।
ईदृक् च पुरुषश्चैव अन्यादृक्षाच्च चेतसः।
समितासमितदृक्षाच्च प्रतिदृक्षाच्च वै गुणाः ।। ६.१२८ ।।
एते ह्येको नपञ्चाशन्मरुतो नामतः स्मृताः।
प्रसंख्यातास्तथा ताभ्यां दित्या चन्द्रेण चैव हि ।। ६.१२९ ।।
श्रुत्वा तेषान्तु नामानि दितिरिन्द्रमुवाच ह।
वात स्कन्धं चरन्त्वेते मम पुत्राश्च पुत्रक।
विचरन्तु च भद्रन्ते देवैः सह ममात्मजाः ।। ६.१३० ।।
तस्यास्तद्वचनं श्रुत्वा सहस्राक्षः पुरन्दरः।
उवाच प्राञ्जलिर्भूत्वा मातर्भवतु तत्तथा ।। ६.१३१ ।।
सर्वमेतद्यथोक्तन्ते भविष्यति न संशयः।
देवभूता महात्मानः कुमारा देवसंमताः।

देवैः सह भविष्यन्ति यज्ञ भाजस्तथात्मजाः ।। ६.१३२ ।।
तस्मात्ते मरुतो देवाः सर्वे चेन्द्रानुजामराः।
विज्ञेयाश्चामराः सर्वे दितिपुत्रास्तपस्विनः ।। ६.१३३ ।।
एवं तौ निश्चयं ज्ञात्वा मातापुत्रौ तपोधनौ।
जग्मतुस्त्रिदिवं हृष्टौ शक्रोऽपि त्रिदिवं गतः ।। ६.१३४ ।।
मरुतां हि शुभं जन्म श्रृणुयाद्यः पठेत वा।
नावृष्टिभयमाप्नोति बह्वायुश्च भवेत्ततः ।। ६.१३५ ।।
इति श्रीमहापुराणे वायुप्रोक्ते कश्यपीयप्रजासर्गो नाम षष्ठोऽध्यायः ।। ६ ।।

।।सूत उवाच।।
अत ऊर्द्ध्वं प्रवक्ष्यामि दनुपुत्रान्निबोधत।
अभवन् दनुपुत्रास्तु वंशे ख्याता महासुराः ।। ७.१ ।।

विप्रचित्तिप्रधानास्ते शतं तीव्रपराक्रमाः।
सर्वे लब्धवराश्चैव सुतप्ततपसस्तथा ।। ७.२ ।।

सत्यसन्धाः पराक्रान्ताः क्रूरा मायाविनश्च ते ।
महाबला अयज्वानो ह्यब्रह्मण्याश्च दानवाः ।
कीत्त्र्यमानान्मया सर्वान् प्राधान्येन निबोधत ।। ७.३ ।।

द्विमूर्द्धा शङ्कुवर्णश्च तथा शङ्कुनिरामयः।
शङ्कुकर्णो महाविश्वो गवेष्ठिर्दुन्दुभिस्तथा ।। ७.४ ।।

अजामुखोऽथ भगवान् शिलो वामनसस्तथा।
मरीचिरक्षकश्चैव महागार्ग्योऽङ्गिरावृतः ।। ७.५ ।।

विक्षोभ्यश्च सुकेतुश्च सुवीर्यः सुहृदस्तथा।
इन्द्रजिद्विश्वजिच्चैव तथासुर विमर्द्दनः ।। ७.६ ।।

एकचक्रः सुबाहुश्च तारकश्च महाबलः।
वैश्वानरः पुलोमा च प्रवीणोऽथ महाशिराः ।। ७.७ ।।

स्वर्भानुर्वृषपर्वा च मुण्डकश्च महासुरः।
धृतराष्ट्रश्च सूर्यश्च चन्द्र इन्द्रश्च तापिनः ।। ७.८ ।।

सूक्ष्मश्चैव निचन्द्रश्च ऊर्णनाभो महागिरिः।
असिलोमा सुकेशश्च सदश्च बलको दश ।। ७.९ ।।

तथा गगनमूर्द्धा च कुम्भनाभा महोदरः।
प्रमोदाहश्च कुपथो हयग्रीवश्च वीर्यवान् ।। ७.१० ।।

असुरश्च विरुपाक्षः सुपथोऽथ महासुरः।
अजो हिरण्मयश्चैव शतमायुश्च शम्बरः ।। ७.११ ।।

शरभः शलभश्चैव सूर्याचन्द्रमसावुभौ।
असुराणां सुरावेतौ सुराणां साम्प्रताविमौ ।। ७.१२ ।।

इति पुत्रा दनोर्वंशाः प्रधानाः परिकीर्तिताः।
तेषामपरिसङ्ख्येयं पुत्रपौत्राद्यनन्तकम् ।। ७.१३ ।।

इत्येते त्वसुराः प्रोक्ता दैतेया दानवाश्च ये।

स्वर्भानुस्तु स्मृतो दैत्यो ह्यनुभानुर्दनोः सुतः।
इमे तु वंशानुगता दनोः पुत्रास्तु ये स्मृताः ।। ७.१४ ।।

एकाक्ष ऋषभोऽरिष्टः प्रबन्धनरकावपि।
इन्द्रबाधनकेशी च मेरुः शम्बोऽथ धेनुकः ।। ७.१५ ।।

गवेष्ठिश्च गवाक्षश्च तालकेतुश्च वीर्यवान्।
एते मनुष्यधर्मास्तु दनोः पुत्रा मया स्मृताः ।। ७.१६ ।।

दैत्यदानवसंहर्षे जाता भीमपराक्रमाः।
सिंहिकायामथोत्पन्ना विप्रचित्तिसुतास्त्विमे ।। ७.१७ ।।

सैंहिकेया इति ख्याताश्चतुर्द्दश महासुराः।
शतगालश्च बलवान्न्यासः शाम्बस्तथैव च । ७.१८ ।।

अनुलोमः शुचिश्चैव वातापिश्च सितांशुकः।
हरः कल्पः कालनाभो भौमश्च नरकस्तथा ।। ७.१९ ।।

राहुर्ज्यष्ठस्तु तेषां वै चन्द्रसूर्यप्रमर्दनः।
इत्येते सिंहिकापुत्रा देवैरपि दुरासदाः ।। ७.२० ।।

दारुणाभिजनाः क्रूराः सर्वे ब्रह्मद्विषश्च ते।
दशान्यानि सहस्राणि सैंहिकेयो गणः स्मृतः ।। ७.२१ ।।

निहतो जामदग्न्येन भार्गवेण बलीयसा।
स्वर्भानोस्तु प्रभा कन्या पुलोम्नोऽथ शची तथा ।। ७.२२ ।।

उपदानवी यमस्यापि शर्मिष्ठा वार्ष पर्वणी।
पुलोमा कालिका चैव वैश्वानरसुते उभे ।। ७.२३ ।।

प्रभाया नहुषः पुत्रो जयन्तश्च शचीसुतः।
पुरुंजज्ञेऽथ शर्मिष्ठा दुष्मन्तमुपदानवी ।। ७.२४ ।।

वैश्वानरसुते ह्येते पुलोमा कालिका उभे ।
उभे ह्यपि तु ते कन्ये मारीचस्य परिग्रहे । ७.२५ ।।

ताभ्यां पुत्रसहस्राणि षष्टिर्दानवपुङ्गवाः।
चतुर्दश तथान्यानि हिरण्यपुरवासिनाम् ।। ७.२६ ।।

पौलोमाः कालकेयाश्च दानवाः सुमहाबलाः।
अवध्या दानवानां ते निहताः सव्यसाचिना ।। ७.२७ ।।

मयस्य जाता ये पुत्राः सर्वे वीरपराक्रमाः।
मायावी दुन्दुभिश्चैव वृषश्च महिषस्तथा ।। ७.२८ ।।

बालिको वज्रकर्णश्च कन्या मन्दोदरी तथा।
दैत्यानां दानवानाञ्च सर्ग एष प्रकीर्त्तितः ।। ७.२९ ।।

दनायुषायाः पुत्रास्तु स्मृताः पञ्च महाबलाः।
अरूरुर्बालिजम्भौ च विरक्षश्च विषस्तथा ।। ७.३० ।।

अरुरो स्तनयः क्रूरो धुन्धुर्नाम महासुरः।
निहतः कुवलाश्वेन उत्तङ्कवचनात् किल ।। ७.३१ ।।

बलेः पुत्रौ महावीर्यौ तेजसाप्रतिमावुभौ।
कुम्भिलश्चक्रवर्मा च स कर्णः पूर्वजन्मनि ।। ७.३२ ।।

विरक्षस्यापि पुत्रौ द्वौ कालकश्च वरश्च तौ।
विषस्य त्वभवन् पुत्राश्चत्वारः क्रूरकर्मणः।
श्राद्धहा यज्ञहा चैव ब्रह्महा पशुहा तथा ।। ७.३३ ।।

क्रान्ता दनायुषापुत्रा वृत्रस्यापि निबोधत।
जज्ञिरे श्वसनाद्घोराद्वृत्रस्येन्द्रेण युध्यतः ।। ७.३४ ।।

भर्त्तारो मनसा ख्याता राक्षसाः सुमहाबलाः ।
शतं तानि सहस्राणि महेन्द्रानुचराः स्मृताः ।। ७.३५ ।।

सर्वे ब्रह्मविदः सौम्या धार्मिकाः सूक्ष्ममूर्त्तयः।
प्रजास्वन्तर्गताः सर्वे निवसन्ति सुधार्मिकाः ।। ७.३६ ।।

दैत्यानां दानवानाञ्च सर्ग एष प्रकीर्त्तितः।
प्रवाह्यजनयत् पुत्रान् यज्ञे वै गायनोत्तमान् ।। ७.३७ ।।

सत्त्वनः सत्वात्मकश्चैव कलापश्चैव वीर्यवान् ।
कृतवीर्यो ब्रह्मचारी सुपाण्डुश्चैव सप्तमः ।। ७.३८ ।।

पनश्चैव तरण्यश्च सुचन्द्रो दशमस्तथा।
इत्येते देवगन्धर्वा विज्ञेयाः परिकीर्त्तिताः ।। ७.३९ ।।

इति श्रीमहापुराणे वायुप्रोक्ते कश्यपीयप्रजासर्गो नाम सप्तमोऽध्यायः ।। ७ ।। *

।।सूत उवाच।।
गन्धर्वाप्सरसः पुण्या मौनेयाः परिकीर्त्तिताः।
चित्रसेनोग्रसेनश्च ऊर्णायुरनघस्तथा ।। ८.१ ।।

धृतराष्ट्रः पुलोमा च सूर्यवर्च्चास्तथैव च।
युगपत्तृणपत्कालिर्दितिश्चित्ररथ स्तथा ।। ८.२ ।।

त्रयोदशो भ्रमिशिराः पर्जन्यश्च चतुर्दशः।
कलिः पञ्चदशश्चैव नारदश्चैव षोडशः।
इत्येते देवगन्धर्वा मौनेयाः परिकीर्त्तिताः ।। ८.३ ।।

चतुस्त्रिंशद्यवीयस्यस्तेषामप्सरसः शुभाः ।
अन्तरा दारवत्या च प्रियमुख्या सुरोत्तमा ।। ८.४ ।।

मिश्रकेशी तथा शाची पर्णिनी वाप्यलम्बुषा।
मारीची पुत्रिका चैव विद्युद्वर्णा तिलोत्तमा ।। ८.५ ।।

अद्रिका लक्षणा चैव देवी रम्भा मनोरमा।
सुवरा च सुबाहुश्च पूर्णिता सुप्रतिष्ठिता ।। ८.६ ।।

पुण्डरीका सुगन्धा च सुदन्ता सुरसा तथा।
हेमासरा सुती चैव सुवृत्ता कमला च या ।। ८.७ ।।

सुभुजा हंसपादा च लौकिक्योऽप्सरसस्तथा।
गन्धर्वाप्सरसो ह्येता मौनेयाः परिकीर्तिताः ।। ८.८ ।।

गन्धर्वाणां दुहितरो मया याः परिकीर्त्तिताः।
तासां नामानि सर्वासां कीर्त्त्यमानानि मे श्रृणु ।। ८.९ ।।

सुयशा प्रथमा तासां गान्धर्वी तदनन्तरम् ।
विद्यावती चारुमुखी सुमुखी च वरानना ।। ८.१० ।।

तत्रेमे सुयशापुत्रा महाबलपराक्रमाः।
प्रचेतसः सुता यक्षास्तेषां नामानि मे श्रृणु ।। ८.११ ।।

कम्बलो हरिकेशश्च कपिलः काञ्चनस्तथा।
मेघमालीतु यक्षाणां गण एष उदाहृतः ।। ८.१२ ।।

सुयशाया दुहितरश्चतस्रोऽप्सरसः स्मृताः।
तासां नामानि वै सम्यग् ब्रुवतो मे निबोधत ।। ८.१३ ।।

लोहेयी त्वभवज्ज्येष्ठा भरता तदनन्तरम्।
कृशाङ्गी च विशाला च रूपेणाप्रतिमा तथा ।। ८.१४ ।।

ताभ्योऽपरे यक्षगणाश्चत्वारः परिकीर्त्तिताः।
उत्पादिता विशालेन विक्रान्तेन महात्मना ।। ८.१५ ।।

लोहेयो भरतेयश्च कृशाङ्गेयश्च विश्रुतः ।
विशालेश्च यक्षाणां पुराणे प्रथिता गणाः ।। ८.१६ ।।

इत्येतैरसुरैर्घोरैर्महाबलपराक्रमैः।
लोकैर्यक्षगणैर्व्याप्ता लोकालोक विदांवराः ।। ८.१७ ।।

गन्धर्वाश्चाथ वालेया विक्रान्तेन महात्मना।
उत्पादिता महावीर्या महागन्धर्वनायकाः ।। ८.१८ ।।

विक्रमौदार्यसम्पन्ना महाबलपराक्रमाः।
तेषां नामानि वक्ष्यामि यथावदनुपूर्वशः ।। ८.१९ ।।

चित्राङ्गदो महावीर्यश्चित्रवर्मा तथैव च।
चित्रकेतुर्महाभागः सोमदत्तोऽथ वीर्यवान्।
तिस्रो दुहितरश्चैव तासां नामानि वक्ष्यते ।। ८.२० ।।

प्रथमा त्वग्निका नाम कम्बला तदनन्तरम्।
तथा वसुमती नाम रूपेणाप्रतिमौजसः ।। ८.२१ ।।

ताभ्यः परे कुमारेण गणा उत्पादितास्त्विमे।
त्रयो गन्धर्वमुख्यानां विक्रान्ता युद्धदुर्मदाः ।। ८.२२ ।।

आग्नेयाः काम्बलेयाश्च तथा वसुमतीसुताः।
तैर्गणैर्विविधैर्व्याप्तमिदं लोकचराचरम् ।। ८.२३ ।।

विद्यावन्तश्च तेनैव विक्रान्तेन महात्मना।
उत्पादिता महाभागा रूपविद्याधनेश्वराः ।। ८.२४ ।।

तेषामुदीर्ण वीर्याणां गन्धर्वाणां महात्मनाम्।

नामानि कीर्त्त्यमानानि श्रृणुध्वं मे विवक्षतः ।। ८.२५ ।।

हिरण्यरोमा कपिलः सुलोमा मागधस्तथा।
चन्द्रकेतुश्च वै गाङ्गो गोदश्चैव महाबलः ।। ८.२६ ।।

महाविद्यावदातानां विक्रान्तानां तपस्विनाम्।
इत्येवमादिर्हि गणो द्वे चान्ये च सुलोचने ।। ८.२७ ।।

शिवा च सुमनाश्चैव ताभ्यामपि महात्मना।
उत्पादिता विश्रवसा विद्याचरणगोचराः ।। ८.२८ ।।

शैवेयाश्चैव विक्रान्तास्तथा सौमनसो गणाः।
एतैर्व्याप्तमिदं लोकं विद्याधरगणैस्त्रिभिः ।। ८.२९ ।।

एभ्योऽनेकानि जातानि अम्बरान्तरचारिणाम्।
लोके गणशतान्येव विद्याघरविचेष्टितात् ।। ८.३० ।।

अश्वमुखाश्च तेनैव विक्रान्तेन महात्मना।
उत्पादिता हयश्वमुखाः किन्नरांस्तान्निबोधत ।। ८.३१ ।।

समुद्रः सेनः कालिन्दो महानेत्रो महाबलः।
सुवर्णघोषः सुग्रीवो महाघोषश्च वीर्यवान् ।। ८.३२ ।।

इत्येवमादिर्हि गणः किन्नराणां महात्मनाम्।
हयाननानां विद्वद्भिर्विस्तीर्णः परिकीर्त्त्यते ।। ८.३३ ।।

तथासमुत्थितेनैव विक्रान्तेन महात्मना।
उत्पादिता नरमुखाः किन्नराः शांशपायनाः ।। ८.३४ ।।

हरिषेणः सुषेणश्च वारिषेणश्च वीर्यवान्।
रुद्रदत्तेन्द्रदत्तौ च चन्द्रद्रुम महाद्रुमौ ।। ८.३५ ।।

बिन्दुश्च बिन्दुसारश्च चन्द्रवंशाश्च किन्नराः।
इत्येते किन्नराः श्रेष्ठा लोके ख्याताः सुशोभनाः ।। ८.३६ ।।

नृत्यगीतप्रगल्भानामेतेषां द्विजसत्तमाः।
लोके गणशतान्येव किन्नराणां महात्मनाम् ।। ८.३७ ।।

यक्षा यक्षोपशान्तश्च लौहेया रूपशालिनी।
दुहीता सुरविन्देति प्रकाशा सिद्धसम्मता ।। ८.३८ ।।

उपायाकेतनस्याहि स्वयमुत्पादितो गणः ।
करालकेन भूतानां तेषां नामानि मे श्रृणु ।। ८.३९ ।।

भूता भूतगणैर्ज्ञेया आवेशकनिवेशकाः।
इत्येवमादिर्हि गणो भूमिगोचरकः स्मृतः ।। ८.४० ।।

विज्ञेय इह लोकेऽस्मिन् भूतानां भूतनायकः।
ये उत्कृष्टा भवन्त्येषामम्बरान्तरचारिणाम्।
वृक्षाग्रमात्रमाकाशं ते चरन्ति न संशयः ।। ८.४१ ।।

तत्रेमे देवगन्धर्वाः प्रायेण कथिता मया।
देवोपस्थाननिरता विज्ञेयास्ते यशस्विनः ।। ८.४२ ।।

नारायणं सुरगुरुं विरजं पुष्करेक्षणम्।
हिरण्यगर्भञ्च तथा चतुर्वक्त्रं स्वयम्भुवम् ।। ८.४३ ।।

शङ्करञ्च महादेवमीशानञ्च जगत्प्रभुम्।
इन्द्रपूर्वांस्तथा दित्यान् रुद्रांश्च वसुभिः सह ।। ८.४४ ।।

उपतस्थुः सगन्धर्वा नृत्त्यगीतविशारदाः।
त्रिदशाः सर्वलोकस्था निपुणा गीतवादिनः ।। ८.४५ ।।

हंसो ज्येष्ठः कनिष्ठोऽन्यो मध्यमौ च हहा हुहूः।
चतुर्थो धिषणश्चैव ततो वासिरुचिस्तथा ।। ८.४६ ।।

षष्ठस्तु तुम्बुरुस्तेषां ततो विश्वावसुः स्मृतः।
इमाश्चाप्सरसो दिव्या विहिताः पुण्यलक्षणाः ।। ८.४७ ।।

सुषुवेऽष्टौ महाभागा वरिष्ठा देवपूजिताः।
अनवद्यामनवशामन्वतां मदनप्रियाम्।
अरूषां सुभगां भासी मरिष्टाऽष्टौ व्यजायत ।। ८.४८ ।।

मनोवती सुकेशा च तुम्बुरोस्तु सुते उभे।
पञ्चचूडास्त्विमा दिव्या दैविक्योऽप्सरसो दश ।। ८.४९ ।।

मेनका सहजन्या च पर्णिनी पुञ्जिकस्थला।
घृतस्थला घृताची च विश्वाची पूर्वचीत्यपि।
प्रम्लोचेत्यभिविख्यातानुम्लोचन्ती तथैव च ।। ८.५० ।।

अनादिनिधनस्याथ जज्ञे नारायणस्य या।
ऊरोः सर्वानवद्याङ्गी उर्वश्येकादशी स्मृता ।। ८.५१ ।।

मेनस्य मेनका कन्या ब्रह्मणो हृष्टचेतसः ।
सर्वाश्च ब्रह्म वादिन्यो महायोगाश्च ताः स्मृताः ।। ८.५२ ।।

गणा अप्सरसाङ्ख्याताः पुण्यास्ते वै चतुर्द्दश।
आहूताः शोभयन्तश्च गणा ह्येते चतुर्द्दश ।। ८.५३ ।।

ब्रह्मणो मानसाः कन्याः शोभयन्त्यो मनोः सुताः।
वेगवन्त्यस्त्वरिष्टाया ऊर्ज्जायाश्चाग्निसम्भवाः ।। ८.५४ ।।

आयुष्मन्त्यश्च सूर्यस्य रश्मिजाताः सुभा स्वराः।
वारिजा ह्यमृतोत्पन्ना अमृता नामतः स्मृताः ।। ८.५५ ।।

वायूत्पन्ना मुदा नाम भूमिजाता भवास्तु वै ।
विद्युतश्च रुचो नाम मृत्योः कन्याश्च भैरवाः ।। ८.५६ ।।

शोभयन्त्यः कामगुणा गणाः प्रोक्ताश्चतुर्द्दश।
सेन्द्रोपेन्द्रैः सुरगणैः रूपातिशयनिर्मिताः ।। ८.५७ ।।

शुभरूपा महाभागा दिव्या नारी तिलोत्तमा।
ब्रह्मणश्चाग्निकुण्डाच्च देवनारी प्रभावती।
रूपयौवनसम्पन्ना उत्पन्ना लोकविश्रुता ।। ८.५८ ।।

वे दीतलसमुत्पन्ना चतुर्वक्त्रस्य धीमतः।
नाम्ना वेदवती नाम सुरनारी महाप्रभा ।। ८.५९ ।।

तथा यमस्य दुहिता रूपयौवनशालिनी।
वरहेमविभा हेमा देवनारी सुलोचना ।। ८.६० ।।

इत्येते बहुसाहस्रं भास्वरा ह्यप्सरोगणाः।
देवतानामृषीणाञ्च पत्न्यस्ता मातरश्च ह ।। ८.६१ ।।

सुगन्धाश्चम्पवर्णाश्च सर्वाश्चाप्सरसः समाः।
सम्प्रयोगे तु कान्तेन माद्यन्ति मदिरां विना।
तासामाप्यायते स्पर्शादानन्दश्च विवर्द्धते ।। ८.६२ ।।

पर्वते नारदे पूर्वं रेतः स्कन्नं प्रजापतेः।
पर्वतस्तत्र संभूतो नारदश्चैव तावुभौ।।
तयोर्यवीयसी चैव तृतीयारन्धती स्मृता।
देवरुख्यो सूर्यजन्म तस्मिन्नारदपर्वतौ।।(पाठभेदः)

विनतायास्तु पुत्रौ द्वावरुणो गरुडश्च ह।
षट्त्रिंशत्तु स्वसारश्च यवीयस्यस्तु ताः स्मृताः ।। ८.६३ ।।

गायत्र्यादीनि च्छन्दांसि सौपर्णेयाश्च पक्षिणः।
इत्येवाहानि सर्वाणि दिक्षु सन्निहितानि च ।। ८.६४ ।।

कद्रूर्नागसहस्रं वै चरा चरमजीजनत् ।
अनेकशिरसां तेषां खेचराणां महात्मनाम्।
बहुधानामधेयानां प्रायशस्तु निबोधत ।। ८.६५ ।।

तेषां प्रधाननागाश्च शेषवासुकितक्षकाः।
सकणीरश्च जम्भश्च अञ्जनो वामनस्तथा ।। ८.६६ ।।

ऐरावतमहापझौ कम्बलाश्वतरावुभौ।
ऐलपत्रश्च शङ्खश्च कर्कोटकधनञ्जयौ ।। ८.६७ ।।

महाकर्णो महानीलो धृतराष्ट्रबलाहकौ।
कुमारः पुष्पदन्तश्च सुमुखो दुर्मुखस्तथा ।। ८.६८ ।।

शिलीमुखो दधिमुखः कालीयः शालिपिण्डकः ।
बिन्दुपादः पुण्डरीको नागश्चापूरणस्तथा ।। ८.६९ ।।

कपिलश्चाम्बरीषश्च धृतपादश्च कच्छपः ।
प्रह्लादः पझचित्रश्च गन्धर्वोऽथ नमस्विकः ।। ८.७० ।।

नहुषः खररोमा च मणिरित्येवमादयः।
काद्रवेया मया ख्याताः खशायांस्तु निबोधत ।। ८.७१ ।।

खशा विजज्ञे पुत्रौ द्वौ विश्रुतौ पुरुषादकौ।
ज्येष्ठं पश्चिमसङ्ख्यायां पूर्वस्यां मनुजास्तथा ।। ८.७२ ।।

विलोहितं विकर्णञ्च पूर्वं साऽजनयत् सुतम्।
चतुर्भुजं चतुष्पादं द्विमूर्द्धानं द्विधागतिम् ।। ८.७३ ।।

सर्वाङ्गकेशं स्थूलाङ्गं तुङ्गनासं महोदरम्।
स्थूलशीर्षं महाकर्णं मुञ्जाकेशं मनोरथम् ।। ८.७४ ।।

हस्त्योष्ठं दीर्घजङ्घञ्च अश्वदंष्ट्रं महाहनुम्।
रक्तजिह्वं जटाक्षञ्च स्थूलास्यं दीर्घनासिकम् ।। ८.७५ ।।

गुह्यकं शितिकर्णञ्च महानन्दं महामुखम्।
एवंविधं खशापुत्रं विजज्ञे साऽतिभीषणम् ।। ८.७६ ।।

तस्यानुजं द्वितीयन्तु खशा चैव व्यजायत।
त्रिशीर्षञ्च त्रिपादञ्च त्रिहस्तं कृष्णलोचनम् ।। ८.७७ ।।

ऊर्द्ध्वकेशं हरिच्छमश्रुं शिलासंहननं दृढम् ।
ह्रस्व कायं सुबाहुञ्च महाकायं महाबलम् ।। ८.७८ ।।

आकर्णदारितास्यञ्च लम्बभ्रूं स्थूलनासिकम्।
स्थूलोष्ठमष्टदंष्ट्रञ्च द्विजिह्वं शङ्कुकर्णकम् ।। ८.७९ ।।

पिङ्गलोद्वृत्तनयनं जटिलं पिङ्गलं तथा।
महाकर्णं महोरस्कं कटिहीनं कृशोदरम्।
नखिनं लोहितग्रीवं सा कनिष्ठं प्रसूयते ।। ८.८० ।।

सद्यः प्रसूयमात्रौ तु विवृद्धौ च प्रमाणतः।
उपभोगसमर्थाभ्यां शरीराभ्यामुपस्थितौ।
सद्योजातविवृद्धाङ्गौ मातरं पर्यभूष्यताम् ।। ८.८१ ।।

ज्यायांस्तयोस्तु यः क्रूरो मातरं सोऽभ्यकर्षत।
अब्रवीन्मातरायाहि भक्षार्थे क्षुधयार्द्दितः ।। ८.८२ ।।

न्यषेधयत् पुनर्ह्येनं ज्यायांसन्तु कनिष्ठकः।
अब्रवीत् सोऽसकृत्तं वै रक्षेमां मातरं खशाम्।
बाहुभ्यां परिगृह्यैनं मातरं तां व्यमोचयत् ।। ८.८३ ।।

एतस्मिन्नेव काले तु प्रादुर्भूतस्तयोः पिता ।

तौ दृष्ट्वा विकृताकारौ वसतां हीत्यभाषत ।। ८.८४ ।।

तौ तु तं पितरं दृष्ट्वा बलवन्तौ त्वरान्वितौ ।
मातुरेव पुनस्वाङ्के प्रलपेतां स्वमायया ।। ८.८५ ।।

अथोऽब्रवीदृषिर्भार्यामावाभ्यामुक्तवत्यसि ।
पूर्वमाचक्ष्व तत्त्वेन तथैवाभ्यां व्यतिक्रमम् ।। ८.८६ ।।

मातुलं भजते पुत्रः पितॄन् भजति कन्यका।
यथाशीला भवेन्माता तथाशीलो भवेत् सुतः ।। ८.८७ ।।

यद्वर्णा तु भवेद्भूमिस्तद्वर्णं सलिलं ध्रुवम्।
मातॄणां शीलदोषेण तथा शीलगुणैः पुनः।
विभिन्नास्तु प्रजाः सर्वास्तथा ख्यातिवशेन च ।। ८.८८ ।।

बलशीलादिभिस्तासामदितिर्धर्मतत्परा।
धर्मशीलादिभिश्चैव प्रबोधबलशालिनी ।। ८.८९ ।।

गीतशीला तथाऽरिष्टा मायाशीला दनुः स्मृता।
विनता तु पुनर्द्देवी वैहायसगतिप्रिया ।। ८.९० ।।

तपोमयेन शीलेन सुरभिः समलंकृता।
क्रोधशीला तथा कद्रूः क्रोधेनासुखशीलका ।। ८.९१ ।।

दनायुषायाः शीलं वै वैरनुग्रह लक्षणम्।
त्वञ्च देवि महाभागे क्रोधशीला मतासि मे ।। ८.९२ ।।

इत्येतानि सशीलानि स्वभावाल्लोकनान्नृणाम्।
कर्मतो यत्नतो बुद्ध्या रूपतो बलतस्तथा।
क्षमातश्चैव भिन्नानि भावितार्थबलेन च ।। ८.९३ ।।

रजःसत्त्वतमोवृत्तेर्विश्वरूपाः स्वभावतः।
मातुलन्त्वनुयातास्ते पुत्रका गुणवृत्तिभिः ।। ८.९४ ।।

इत्येवमुक्त्वा भगवान् खशामप्रतिमां तदा।
पुत्रावाहूय साम्ना वै चक्रे सोममभीतयः ।। ८.९५ ।।

ताभ्याञ्च यत् कृतं तस्यास्तदाचष्ट तदा खशा।

मात्रा यथा समाख्यातं कर्म ताभ्यां पृथक् पृथक्।
तेन धात्वर्थयोगेन तत्त्वदर्शी चकार ह ।। ८.९६ ।।

यक्ष इत्येष धातुर्वै खादने कृषणे च सः।
यक्षयेत्युक्तवान् यस्मात् तस्माद्यक्षो भवत्ययम् ।। ८.९७ ।।

रक्ष इत्येष धातुर्यः पालने स विभाव्यते।
उक्तवांश्चैव यस्मात्तु रक्ष मे मातरं खशाम्।
नाम्नाऽयं राक्षसस्तस्मात् भविष्यति तवात्मजः ।। ८.९८ ।।

स तदा तद्विधान् दृष्ट्वा विस्मितः परिमृग्य च।
तयोः प्रादिशदाहारं प्रजापतिरसृग्वसे ।। ८.९९ ।।

पिता तौ क्षुधितौ दृष्ट्वा वरञ्चेमं तयोर्ददौ।
युवयोर्हस्तसंस्पर्शो नक्तमेन तु सर्वशः ।। ८.१०० ।।

नक्ताहारविहारौ च दिवा स्वप्नोपभोगिनौ।
नक्तञ्चैव बलीयांसौ दिवा सुप्तावुभौ युवाम् ।। ८.१०१ ।।

मातरं रक्षतञ्चैव धर्मश्चैवानुशिष्यताम्।
इत्युक्त्वा कश्यपः पुत्रौ तत्रैवान्तरधीयत ।। ८.१०२ ।।

गते पितरि तौ वीरौ निसर्गादेव दारुणौ।
विपर्ययेण वर्त्तन्तौ किम्भक्षौ प्राणिहिंसकौ ।। ८.१०३ ।।

महाबलौ महासत्त्वौ महाकायौ दुरासदौ।
मायाविनौ च दृश्यौ तावन्तर्द्धानगतावुभौ ।। ८.१०४ ।।

तौ कामरूपिणौ घोरौ विकृताङ्गौ स्वभावतः।
रूपानुरूपैराहारैः प्रभवेतामुभावपि ।। ८.१०५ ।।

देवा सुरानृषींश्चैव गन्धर्वान् किन्नरानपि।
पिशाचांश्च मनुष्यांश्च पन्नगान् पक्षिणः पशून् ।। ८.१०६ ।।

भक्षार्थमपि लिप्सन्तौ सर्वतस्तौ निशाचरौ।
इन्द्रेण तु वरौ चैव धृतौ दत्त्वा सुवध्यताम् ।। ८.१०७ ।।

यक्षस्तु न कदाचिद्वै निशीथै ह्येककश्चिरम्।

आहारं स परीप्सन् वै शब्देनानुचचार ह ।। ८.१०८ ।।

आससाद पिशाचौ द्वौ जन्तुचण्डौ च तावुभौ।
पिङ्गाक्षावूर्द्ध्वरोमाणौ वृत्ताक्षौ तु सुदारूणौ ।। ८.१०९ ।।

असृङ्मांसवसाहारौ पुरुषादौ महाबलौ।
कन्याभ्यां सहितौ तौ तु ताभ्यां प्रियचिकीर्षया ।। ८.११० ।।

द्वे कन्ये कामरूपिण्यौ तदाचारे च ते शुभे।
आहारार्थमटन्तौ तौ कन्याभ्यां सहितावुभौ ।। ८.१११ ।।

तेऽपश्यन् राक्षसं तत्र कामरूपं महाबलम्।
सहसा सन्निपाते तु दृष्ट्वा चैव परस्परम् ।। ८.११२ ।।

रक्षमाणौ ततोऽन्योन्यं परस्परजिघृक्षवः।
पितरावूचतुः कन्ये युवामानयत द्रुतम् ।। ८.११३ ।।

जीवग्राहं विगृह्यैनं विस्फुरन्तं पदे पदे।
ततः समभिसृत्यैनं कन्ये जगृहतुस्तदा।
गृहीत्वा हस्तयोस्ताभ्यामानीते पितृसंसदि ।। ८.११४ ।।

ताभ्यां करे गृहीतं तं पिशाचमथ राक्षसम्।
पृच्छतां कोऽसि कस्य त्वं स च सर्वमभाषत ।। ८.११५ ।।

तस्य कर्माभिविज्ञातं ज्ञात्वा तौ राक्षसर्षभौ।
अजञ्च शण्डं तस्यैते प्रत्यपादयतां सुते।
तौ तुष्टौ कर्मणा तस्य कन्ये द्वे ददतुः सुते ।। ८.११६ ।।

पैशाचेव विवाहेन सुदत्या बुद्धवाहनः।
अजः खण्डश्च ताभ्यां तौ तदाश्रावयतां धनम् ।। ८.११७ ।।

इयं ब्रह्मधना नाम मम कन्या ह्यलोमिका ।
ब्रह्मसत्त्वधनाहारा इति खण्डोभ्यभाषत ।। ८.११८ ।।

इयं जन्तुधना नाम कन्या सर्वाङ्गसुन्दरी।
जन्तवोऽस्या धनाहारास्तावश्रावयतां धनम् ।। ८.११९ ।।

सर्वाङ्गकेशी नाम्ना च कन्या जन्तुधना तथा।

अकर्णान्ताप्यरोमा च कन्या ब्रह्मधना तु या ।। ८.१२० ।।

ब्रह्मधनं प्रसूता सा धनानाच्चैव कन्यका।
एवं पिशाचकन्ये ते मिथुने द्वे प्रसूयताम्।
तयोः प्रजाविसर्गञ्च ब्रुवतो मे निबोधत ।। ८.१२१ ।।

हेतिः प्रहेतिरुग्रश्च पौरुषेयो वधस्तथा।
विस्फूर्जिश्चैव वातश्च आपो व्याघ्रस्तथैव च ।। ८.१२२ ।।

सर्पश्च राक्षसा ह्येते यातुधानात्मजा दश।
सूर्यस्यानुचरा ह्येते सह तेन भ्रमन्ति च ।। ८.१२३ ।।

हेतिपुत्रस्तथा लङ्कुर्लङ्कोर्द्वावेव चात्मजौ।
माल्यवांश्च सुमाली च प्रहेतितनयान् श्रृणु।
प्रहेतितनयः श्रीमान् पुलोमा नाम विश्रुतः ।। ८.१२४ ।।

वधपुत्रो निकुम्भश्च क्रूरो वै ब्रह्मराक्षसः।
वातपुत्रो विरागस्तु आपपुत्रस्तु जम्बुकः ।। ८.१२५ ।।

व्याघ्रपुत्रो निरानन्दो जन्तूनां विघ्नकारकः।
इत्येते वै परिक्रान्ताः क्रूराः सर्वे तु राक्षसाः ।। ८.१२६ ।।

कीर्तिता यातुधानास्तु ब्रह्मधानान् निबोधत।
यज्ञः पिता धुनिः क्षेमो ब्रह्मा पापोऽथ यज्ञहा ।। ८.१२७ ।।

स्वाकोटकः कलिः सर्पो ब्रह्मधानात्मजा दश।
स्वसारो ब्रह्मराक्षस्यस्तेषाञ्चेमाः सुदारुणाः ।। ८.१२८ ।।

रक्तकर्णा महाजिह्वाऽक्षया चैवोपहारिणी।
एतासामन्वये जाताः पृथिव्यां ब्रह्मराक्षसाः ।। ८.१२९ ।।

श्लेष्मातकतरुष्वेते प्रायशस्तु कृतालयाः।
इत्येते राक्षसाः क्रान्ता यक्षस्यापि निबोधत ।। ८.१३० ।।

चकमेऽप्सरसं यक्ष पञ्चस्थूलां क्रतुस्थलीम्।
तां लिप्सुश्चिन्तमानश्च नन्दनं स चचार ह ।। ८.१३१ ।।

वैभ्राजं सुरभिञ्चैव तथा चैत्ररथञ्च यत्।

दृष्टवान् नन्दने तस्मिन्नप्सरोभिः सहासतीम् ।। ८.१३२ ।।

नोपायं विन्दते तत्र तस्या लाभाय चिन्तयन्।
दूषितः स्वेन रूपेण कर्म्मणा तेन दूषितः ।। ८.१३३ ।।

ममोद्विजन्ते भूतानि भयावृत्तस्य सर्वशः।
तत्कथं नाम चार्वङ्गीं प्राप्नुयामहमङ्गनाम् ।। ८.१३४ ।।

दृष्ट्वोपायं ततः सोऽथ शीघ्रकारी व्यवर्त्तत।
कृत्वा रूपं बहुमतं गन्धर्वस्य तु गुह्यकः।
ततः सोऽप्सरसां मध्ये तां जग्राह क्रतुस्थलीम् ।। ८.१३५ ।।

बुद्ध्वा च सुरुचिं तं सा भावेनैवाभ्यवर्त्तत।
संवृतः स तया सार्द्धं दृश्यमानोऽप्सरोगणैः ।। ८.१३६ ।।

स तत्र सिद्धकरणः सद्यो जातः सुतोऽस्य वै ।
परिणाहोच्छ्र्यैर्युक्तः सद्यो वृत्तो ज्वलन् श्रिया ।। ८.१३७ ।।

राजाहमिति नाभिर्हि पितरं सोऽभ्यभाषत।
तवात्र जाते न भीतिः पिता तं प्रत्युवाच ह ।। ८.१३८ ।।

मात्रानुरूपो रूपेण पितुर्वीर्येण जायते।
जाते स तस्मिन् हर्षेण स्वरूपं प्रत्यपद्यत ।। ८.१३९ ।।

स्वभावं प्रतिपद्यन्ते बृहन्तो यक्षराक्षसाः ।
म्रियमाणाः प्रसुप्ताश्च क्रुद्धा भीताः प्रहर्षिताः ।। ८.१४० ।।

ततोऽब्रवीदप्सरसः स्मयमानः स गुह्यकः।
गृहं मे गच्छ सुश्रोणि सपुत्रा वरवर्णिनी ।। ८.१४१ ।।

इत्युक्त्वा सहसा तञ्च दृष्ट्वा स्वं रूपमास्थितम्।
विभ्रान्ताः प्राद्रवन् भीताः क्रोधमानाऽप्सरोगणाः ।। ८.१४२ ।।

गच्छन्तीरन्वगच्छद्या पुत्रस्तां सान्त्वयन् गिरा।
गन्धर्वाप्सरसां मध्येतां नीत्वा स न्यवर्त्तत ।। ८.१४३ ।।

ताञ्च दृष्ट्वा समुत्पत्तिं यक्षस्याप्सरसां गणाः।
यक्षाणां त्वं जनित्रीति प्रोचुस्तां वै क्रतुस्थलीम् ।। ८.१४४ ।।

जगाम सह पुत्रेण ततो यक्षः स्वमालयम्।
न्यग्रोधरोहिणं नाम गुह्यका यत्र शेरते।
तस्मान्निवासो यक्षाणां न्यग्रोधः सर्वतः प्रियः ।। ८.१४५ ।।

यक्षो रजतनाभस्तु गुह्यकानां पितामहः।
अनुह्लादस्य दैत्यस्य भद्रामतिवरां सुताम्।
उपयेमे स भद्रायां यस्यां मणिवरो वशी ।। ८.१४६ ।।

जज्ञे सा मणिभद्रञ्च शक्रतुल्यपराक्रमम्।
तयोः पत्न्यौ भगिन्यौ तु क्रतुस्थल्यात्मजे शुभे ।। ८.१४७ ।।

नाम्ना पुण्यजनी चैव तथा देवजनी च या।
विजज्ञे मणिभद्रात्तु पुत्रान् पुण्यजनी शुभान् ।। ८.१४८ ।।

सिद्धार्थं सूर्यतेजञ्च सुमन्तं नन्दनं तथा।
कन्यकं यविक्ञ्चैव मणिदत्तं वसुं तथा ।। ८.१४९ ।।

सर्वानुभूतं शङ्खञ्च पिङ्गाक्षं भीरुमेव च।
तथा मन्दरशोभिञ्च पद्मं चन्द्रप्रभं तथा ।। ८.१५० ।।

मघपूर्णं सुभद्रञ्च प्रद्योतञ्च महौजसम्।
द्युतिमत्केतुमन्तौ च मित्रं मौलिसुदर्शनौ ।। ८.१५१ ।।

चत्वारो विंशतिश्चैव पुत्राः पुण्यजनाः शुभाः ।
जज्ञिरे मणिभद्रस्य ते सर्वे पुण्यलक्षणाः ।
तेषां पुत्राश्च पौत्राश्च यक्षा पुण्यजनाः शुभाः ।। ८.१५२ ।।

विजज्ञे देवजननी पुत्रान् मणिवरात्मजात् ।
पूर्णभद्रं हेमरथं मणिमन्ननन्दिवर्द्धनौ ।। ८.१५३ ।।

कुस्तुम्बुरुं पिशङ्गाभं स्थूलकर्णं महाजयम्।
श्वेतञ्च विपुलञ्चैव पुष्पवन्तं भयावहम् ।। ८.१५४ ।।

पद्मवर्णं सुनेत्रञ्च यक्षं बालं बकं तथा।
कुमुदं क्षेमकञ्चैव वर्द्धमानं तथा दमम् ।। ८.१५५ ।।

पद्मनाभं वराङ्गञ्च सुवीरं विजयं कृतिम्।

पूर्णमासं हिरण्याक्षं सुरूपञ्चैवमादयः ।। ८.१५६ ।।

पुत्रा मणिवरस्यैते यक्षा वै गुह्यकाः स्मृताः ।
सुरूपाश्च विरूपाश्च स्रग्विणः प्रियदर्शनाः।
तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः ।। ८.१५७ ।।

खशायास्त्वपरे पुत्रा राक्षसाः कामरूपिणः ।
तेषां यथा प्रधानान् वै वर्ण्यमानान्निबोधत ।। ८.१५८ ।।

लालाविः कुथनो भीमः सुमाली मधुरेव च।
विस्फूर्जितो विद्युज्जिह्वो मातङ्गो धूम्रितस्तता ।। ८.१५९ ।।

चन्द्रार्कः सुकरो बुध्नः कपिलोमा प्रहासकः।
क्रीडः परशुनाभश्च चक्राक्षश्च निशाचरः ।। ८.१६० ।।

त्रिशिराः शतदंष्ट्रश्च तुण्डकेशश्च राक्षसः।
यक्षश्चाकम्पनश्चैव दुर्मुखश्च शिलीमुखः ।। ८.१६१ ।।

इत्येते राक्षसवरा विक्रान्ता गणरूपिणः.
सर्वलोकचरास्ते तु त्रिदशानां समक्रमाः ।। ८.१६२ ।।

सप्त चान्या दुहितरस्ताः श्रृणुध्वं यथाक्रमम्।
तासाञ्च यः प्रजासर्गो येन चोत्पादिता गणाः ।। ८.१६३ ।।

आलम्बा उत्कचा कृष्णा निर्ऋतो कपिला शिवा।
केशिनी च महाभागा भगिन्यः सप्त याः स्मृताः ।। ८.१६४ ।।

ताभ्यो लोकामिषादश्च हन्तारो युद्धदुर्मदाः।
उदीर्णा राक्षसगणा इमे उत्पादिताः शुभाः ।। ८.१६५ ।।

आलम्बेयो गणः क्रूर उत्कचेयो गणस्तथा।
तथा कार्ष्णेयशैवेया राक्षसा ह्युत्तमा गणाः ।। ८.१६६ ।।

तथैव नैर्ऋतो नाम त्र्यम्बकानुचरेण ह।
उत्पादितः प्रजासर्गो गणेश्वरचरेण तु ।। ८.१६७ ।।

उत्पादिता बलवता उदीर्णा यक्षराक्षसाः ।
विक्रान्ताः शौर्यसम्पन्ना नैर्ऋता देवराक्षसाः।

येषामधिपतिर्युक्तो नाम्ना ख्यातो विरूपकः ।। ८.१६८ ।।

तेषां गणशतानेका उद्धतानां महात्मनाम्।
प्रायेणानुचरन्त्येते शङ्करं जगतः प्रभुम् ।। ८.१६९ ।।

दैत्यराजेन कुम्भेन महाकाया महात्मना ।.
उत्पादिता महावीर्या महाबलपराक्रमाः ।। ८.१७० ।।

कपिलेया महावीर्या उदीर्णा दैत्यराक्षसाः।
कम्पनेन च यक्षेण केशिन्यास्ते परे जनाः ।। ८.१७१ ।।

उत्पादिता महावाता उदीर्णा यक्षराक्षसाः।
केशिनीदुहितुश्चैव नीलायाः क्षुद्रमानसाः ।। ८.१७२ ।।

आलम्बेयेन जनिता नैकाः सुरसिकेन हि।
नैला इति समाख्याता दुर्जया घोरविक्रमाः ।। ८.१७३ ।।

चरन्ति पृतिवीं कृत्स्नां तत्र ते देवलौकिकाः।
बहुत्वाच्चैव सर्गस्य तेषां वक्तुं न शक्यते ।। ८.१७४ ।।

तस्यास्त्वपि च नीलाया विकचा नाम राक्षसी।
दुहिता स्वभावविकचा मन्दसत्त्वपराक्रमा ।। ८.१७५ ।।

तस्या अपि विरूपेण नैरृतेनेह च प्रजाः।
उत्पादिताः सुरा घोराः श्रृणु तास्त्वनुपूर्वशः ।। ८.१७६ ।।

दंष्ट्राकरालविकृता महाकर्णा महोदराः।
हारका भीषकाश्चैव तथैव क्रामकाः परे ।। ८.१७७ ।।

वैनकाश्च पिशाचाश्च वाहकाः प्राशकाः परे।
भूमिराक्षसका हयेते मन्दाः पुरुषविक्रमाः ।। ८.१७८ ।।

चरन्त्यदृष्टपूर्वाश्च नानाकारा हयनेकशः।
उत्कृष्ट बलसत्त्वा ये ते च वै खेचराः स्मृताः ।। ८.१७९ ।।

लक्षमात्रेण चाकाशं स्वल्पाः स्वल्पं चरन्ति वै ।
एतैर्व्याप्तमिमं लोकं शतशोऽथ सहस्रशः ।। ८.१८० ।।

भूमी राक्षसकैः सर्वैरनेकैः क्षुद्रराक्षसैः।
नानाप्रकारैराक्रान्ता नानादेशाः समन्ततः ।। ८.१८१ ।।

समासाभिहताश्चैव ह्यष्टौ राक्षसमातरः।
अष्टौ विभागा ह्येषां हि विख्याता अनुपूर्वशः ।। ८.१८२ ।।

भद्रका निकराः केचिद्यज्ञनिष्पत्तिहेतुकाः।
सहस्रसतसङ्ख्याता मर्त्यलोकविचारिणः ।। ८.१८३ ।।

पूतना मातृसामान्यास्तथा भूतभयङ्कराः।
बालानां मानुषे लोके ग्रहा वैमानहेतुकाः ।। ८.१८४ ।।

स्कन्दग्रहादयश्चैव आपकास्त्रासकादयः।
कौमारास्ते तु विज्ञेया बालानां ग्रहवृत्तयः ।। ८.१८५ ।।

स्कन्दग्रहविशेषाणां मायिकानां तथैव च।
पूतनानामभूतानां ये च लोकविनायकाः ।। ८.१८६ ।।

सहस्रशत सङ्ख्यानां मर्त्यलोकविचारिणाम्।
एवं गणशतान्येव चरन्ति पृथिवीमिमाम् ।। ८.१८७ ।।

यक्षाः पुण्यतमा नाम तथा ये केऽपि गुह्यकाः।
यक्षा देवजना श्चैव तथा पुण्यजनाश्च ये ।। ८.१८८ ।।

गुह्यकानाञ्च सर्वेषामगस्त्या ये च राक्षसाः ।
पौलस्त्या राक्षसा ये च विश्वामित्राश्च ये स्मृताः ।। ८.१८९ ।।

यक्षाणां राक्षसानाञ्च पौलस्त्यागस्त्ययश्च ये ।
तेषां राजा महाराजः कुबेरो ह्यलकाधिपः ।। ८.१९० ।।

यक्षा दृष्ट्वा पिबन्तीह नृणां मांसमसृग्वसाम्।
रक्षांस्यनुप्रवेशेन पिशाचाः परिपीडनैः ।। ८.१९१ ।।

सर्वलक्षणसम्पन्नाः समक्षेत्राश्च दैवतैः।
भास्वरा बलवन्तश्च ईश्वराः करामरूपिणः ।। ८.१९२ ।।

अनाभिभक्षा विक्रान्ताः सर्वलोकनमस्कृताः।
सूक्ष्माश्चौजस्विनो मेध्या वरदा यज्ञियाश्च ये ।। ८.१९३ ।।

देवानां तुल्यधर्माणां ह्यसुराः सर्वशः स्मृताः।
त्रिभिः पाधैस्तु गन्धर्वा देवै र्हीनाः प्रभावतः ।। ८.१९४ ।।

गन्धर्वेभ्यस्त्रिभिः पादैर्हीना वै सर्वगुह्यकाः।
प्रभावतुल्या यक्षाणां विज्ञेयाः सर्वराक्षसाः।
ऐश्वर्यहीना यक्षेभ्यः पिशाचास्त्रि गुणं पुनः ।। ८.१९५ ।।

एवं धनेन रूपेण आयुषा च बलेन च।
धर्मैश्वर्येण बुद्ध्या च तपःश्रुतपराक्रमैः ।। ८.१९६ ।।

देवासुरेभ्यो हीयन्ते त्रीन् पादान् वै परस्परम्।
गन्धर्वाद्याः पिशाचान्ताश्चतस्रो देवयोनयः ।। ८.१९७ ।।

।।सूत उवाच।।
अतः श्रृणुत भद्रं वः प्रजाः क्रोधवशत्मकाः ।
क्रोधायां कन्यका जज्ञे द्वादश ह्यात्मसम्भवाः।
ता भार्याः पुलहस्यासन्नामतस्ता निबोधत ।। ८.१९८ ।।

मृगी च मृगमन्दा च हरिभद्रा इरावती।
भूता च कपिशा दंष्ट्रा निशा तिर्या तथैव च।
श्वेता चैव स्वरा चैव सुरसा चेति विश्रुताः ।। ८.१९९ ।।

मृग्यास्तु हरिणाः पुत्रा मृगाश्चान्ये शशास्तथा।
न्यङ्कवः शरभा ये च रुरवः पृषताश्च ये ।। ८.२०० ।।

मृगराजा मृगमन्दाया गवयाश्चापरे तथा।
महिषोष्ट्रवराहाश्च खड्गगौरमुखास्तथा ।। ८.२०१ ।।

हरेस्तु हरयः पुत्रा गोलाङ्गुलतरक्षवः ।
वानराः किन्नराश्चैव व्याघ्राः किम्पुरुषास्तथा।
इत्येवमादयोऽन्येऽपि इरावत्या निबोधत ।। ८.२०२ ।।

सूर्यस्याण्डकपाले द्वे समानीय तु भौवनः।
हस्ताभ्यां परिगृह्याथ रथन्तरमगायत ।। ८.२०३ ।।

साम्ना प्रसूयमानेन सद्य एव गजोऽभवत्।
स प्रायच्छदिरावत्यै पुत्रार्थं स तु भौवनः ।। ८.२०४ ।।

इरावत्याः सुतो यस्मात्तस्मादैरावतः स्मृतः ।
देवराजोपवाह्यत्वात् प्रथमः स मतङ्गराट्।
शुभ्राभ्रभाश्चतुर्द्दंष्ट्रः श्रीमानैरावतो गजः ।। ८.२०५ ।।

अप्सुजस्यैकमूलस्य सुवर्णाभस्य हस्तिनः ।
षड्दन्तस्य हि भद्रस्य औपावाह्यश्च वै बलः ।। ८.२०६ ।।

तस्य पुत्रोऽञ्जनश्चैव सुप्रतीकोऽथ वामनः।
पद्मश्चैव चतुर्थोऽभूद्धस्तिनी चाभ्रमुस्तथा ।। ८.२०७ ।।

दिग्गजांस्तांश्च चत्वारः श्वेताऽजनयताशुगान् ।
भद्रं मृगञ्च मन्दं च सङ्कीर्णं चतुरः सुतान् ।। ८.२०८ ।।

सङ्कीर्णोऽप्यञ्जनो यस्तु उपवाह्यो यमस्य तु।
भद्रो यः सुप्रतीकस्तु हरितः स ह्यपाम्पतेः ।। ८.२०९ ।।

पद्मो मन्दस्तु यो गौरो द्विपो ह्यैलविलस्य सः।
मृगः श्यामस्तु यो हस्ती उपवाह्यः स पावकैः ।। ८.२१० ।।

पद्मोत्तरस्तु यः पद्मौ गजो वै वरुणो गणः।
उपलेपनमेषश्च तस्याष्टौ जज्ञिरे सुताः ।। ८.२११ ।।

उदग्रभावेनोपेता जायन्ते तस्य चान्वये।
श्वेतबालनखाः पिङ्गा वर्ष्मवन्तो मतङ्गजाः।
मतङ्गजान् प्रवक्ष्यामि नागानन्यानपि क्रमात् ।। ८.२१२ ।।

कपिलः पुण्डरीकश्च सुमनाभो रथान्तरः।
जातौ नाम्ना सुतौ ताभ्यां सुप्रतिष्ठप्रमर्द्दनौ ।। ८.२१३ ।।

शूलाः स्थूलाः शिरोदान्ताः शुद्धबालनखास्तथा।
बलिनः शक्तिनश्चैव स्मृतास्त्वाकुलिका गजाः ।। ८.२१४ ।।

पुष्पदन्तो बृहत्सामा षड्दन्तो दन्त पुष्पवान्।
ताम्रवर्णश्च तत्पुत्रः सहचारिविषाणितः ।। ८.२१५ ।।

अन्वये चास्य जायन्ते लम्बोष्ठाश्चारुदर्शिनः।
श्यामाः सुदर्शनाश्चण्डा नानापीडायताननाः ।। ८.२१६ ।।

वामदेवोऽञ्जनश्यामः साम्नो जज्ञेऽथ वामनः।
भार्या चैवाङ्गदा तस्य नीलवल्लक्षणौ सुतौ ।। ८.२१७ ।।

चण्डश्चात्रशिरो ग्रीवा व्यूढोरस्कास्तरस्विनः।
नरैर्बद्धाः कुले तेषां जायन्ते विकृता गजाः ।। ८.२१८ ।।

सुप्रतीकस्तु रूपेण नास्त्यस्य सदृशो गजः ।
तस्य प्रहारी सम्पाती पृथुश्चित्तिसुतास्त्रयः ।। ८.२१९ ।।

पशवो दीर्घताल्वौष्ठाः सुविभक्तशिरोदराः।
जायन्ते मृदुसम्भूता वंशे तस्य मतङ्गजाः ।। ८.२२० ।।

अञ्जनादञ्जना साम्नो विजज्ञे चाञ्जनावती।
एवं माता तयोश्चापि प्रथितायुरजःसुतौ ।। ८.२२१ ।।

महाविभक्तशिरसः स्निग्धजीमूतसन्निभाः।
सुदर्शनाः सुवर्ष्माणः पद्माभाः परिमण्डलाः।
शूनाः पीतायतमुखा गजास्तस्यान्वयेऽभवन् ।। ८.२२२ ।।

जज्ञे चन्द्रमसः साम्नः पिङ्गला कुमुदद्युतिः।
पिङ्गलायाः सुतौ तस्या महापद्मोर्मिमालिनौ ।। ८.२२३ ।।

समायवरदांश्चण्डान् प्रवृद्धबलिनोदरान् ।
हस्तियुद्धे प्रियान्नागान् विद्धि तस्य कुलोद्भवान् ।। ८.२२४ ।।

एतान् देवासुरे युद्धे जयार्थे जगृहुः सुराः।
कृतार्थैश्च विसृष्टास्तैः पूर्वोक्ताः प्रययुर्दिशः ।। ८.२२५ ।।

एतेषामन्वये जातान् विनीतांस्त्रिदशा ददुः ।
अङ्गाय लोमपादाय सूत्रकाराय वै द्विपान् ।। ८.२२६ ।।

द्विरदो द्विरदाभ्याञ्च हस्ताद्धस्ती करात्करी।
वरणाद्वारणो दन्ती दन्ताभ्यां गर्जनाद्गजः ।। ८.२२७ ।।

कुञ्जरः कुञ्जचारित्वान्नागो नगविरोधतः ।
मतङ्गादिति मातङ्गो द्विपो द्वाभ्यामपि स्मृतः।
सामजः सामजातत्वादिति निर्वचनक्रमः ।। ८.२२८ ।।

एषां जिह्वापरावृत्तिरिवाक्तं ह्यग्निशापजम्।
बलस्यानवतो या तु या चैषां गूढमुष्कता।
उभयं दन्तिनामेतत्स्वयम्भूसूरशापजम् ।। ८.२२९ ।।

देवदानवगन्धर्वाः पिशाचोरगराक्षसाः।
कन्यासु जाता दिङ्नागैर्नानासात्त्वास्ततो गजाः ।। ८.२३० ।।

सम्भूतिश्च प्रबूतिश्च नामनिर्वचनं तथा।
एतद्गजानां विज्ञेयं येषां राजा विभावसुः ।। ८.२३१ ।।

कौशिकाद्याः समुद्रात्तु गङ्गायास्तदनन्तरम्।
अञ्जनस्यैकमूलस्य प्राच्यान्नागवनन्तु तत् ।। ८.२३२ ।।

उत्तरा तस्य विन्ध्यस्य गङ्गाया दक्षिणञ्च यत्।
गङ्गोद्भेदात्करूषेभ्यः सुप्रतीकस्य तद्वनम् ।। ८.२३३ ।।

अपरेणोत्कलाच्चैव ह्यावेदिभ्यश्च पञ्चमम्।
एकभूतात्मनोस्यैतद्वामनस्य वनं स्मृतम् ।। ८.२३४ ।।

अपरेण तु लौहित्यमासिन्धोः पश्चिमेन तु।
यमस्यैतद्वनं प्रोक्तमनुपर्वतमेव तत् ।। ८.२३५ ।।

भूतिर्विजज्ञे भूतांश्च रुद्रस्यानुचरान् प्रभोः।
स्थूलान् कृशांश्च दीर्घांश्च वामनान् ह्रस्वकान् समान् ।। ८.२३६ ।।

लम्बकर्णान् प्रलम्बोष्ठान् लम्बजिह्वास्तनोदरान्।
एकरूपान् द्विरूपांश्च लम्बस्फिक्स्थूलपिण्डिकान् ।। ८.२३७ ।।

सरोवरसमुद्रादिनदीपुलिनवासिनः।
कृष्णान् गौरांश्च नीलांश्च श्वेतांश्च लोहितारुणान् ।। ८.२३८ ।।

बभ्रून् वै शबलान् धूम्रान् कद्रून् रासभदारूणान्।
मुञ्जकेशान् हृषीकेशान् सर्पयजोपवीतिनः ।। ८.२३९ ।।

विसृष्टाक्षान् विरूपाक्षान् कृशाक्षानेकलोचनान्।
बहुशीर्षान् विशीर्षांश्च एकशीर्षांश्च शीर्षकान् ।। ८.२४० ।।

चण्डांश्च विकटांश्चैव विरोमान् रोमशांस्तथा।
अन्धांस्व जटिलांश्चैव कुञ्जान् हेषकवामनान् ।। ८.२४१ ।।

सरोवरसमुद्रादिनदीपुलिनसेविनः।
एककर्णान् महाकर्णान् शङ्कुकर्णानकर्णिकान् ।। ८.२४२ ।।

दंष्ट्रिणो नखिनश्चैव निर्द्दन्तांश्च द्विजिह्वकान्।
एकहस्तान् द्विहस्तांश्च त्रिहस्तांश्चाप्यहस्तकान् ।। ८.२४३ ।।

एकपादान् द्विपादांश्च त्रिपादान् बहुपादकान् ।
महायोगान् महासत्त्वान् सुतपक्वान् महाबलान् ।। ८.२४४ ।।

सर्वत्रगानप्रतिघान् ब्रह्मज्ञान् कामरूपिणः ।
घोरान् क्रूरांश्च मेध्यांश्च शिवान् पुण्यान् सवादिनः ।। ८.२४५ ।।

कुशहस्तान् महाजिह्वान् महाकर्णान्महाननान्।
हस्तादांश्च मुखादांश्च शिरोदांश्च कपालिनः ।। ८.२४६ ।।

धन्विनो मुद्गरधरानसिशूलधरांस्तथा।
दीप्तास्यान् दीप्तनेत्रांश्च चित्र माल्यानुलेषनान् ।। ८.२४७ ।।

अन्नादान् पिशितादांश्च बहुरूपान् सुरूपकान् ।
रात्रिसन्ध्याचरान् घोरान् क्वचित्सौम्यान् दिवाचरान्।
नक्तञ्चरान् सुदुष्प्रेक्ष्यान् घोरांस्तान् वै निशाचरान् ।। ८.२४८ ।।

परत्वे च भयं दैव सर्वे ते गतमानसाः।
नैषां भार्याऽस्ति पुत्रो वा सर्वे ते ह्यूर्द्ध्वरेतसः ।। ८.२४९ ।।

शतन्तानि सहस्राणि भूतानामात्मयोगिनाम्।
एते सर्वे महात्मानो भूत्याः पुत्राः प्रकीर्त्तिताः ।। ८.२५० ।।

कपिशा चैव कूष्माण्डीकूष्माण्डाञ्जज्ञिरे पुनः ।
मिथुनानि पिशाचानां वर्णेन कपिशेन च।
कपिशत्वात् पिशाचास्ते सर्वे च पिशिताशनाः ।। ८.२५१ ।।

युग्मानि षोडशान्यानि वर्त्तमानास्तदन्वयाः।
नामतस्तान् प्रवक्ष्यामि पुरुषादांस्तदन्वयान् ।। ८.२५२ ।।

छगलश्छगली चैव वक्रो वक्रमुखी तथा।
षोडशानां गणाश्चैव सूची सूचीमुखस्तथा ।। ८.२५३ ।।

सुम्भपा त्रश्च कुमभी च वज्रदंष्ट्रश्च दुन्दुभिः।
उपचारोपचारश्च उलूखल उलूखली ।। ८.२५४ ।।

अनर्कश्च अनर्का च कुखण्डश्च कुखण्डिका।
पाणिपात्रः पाणिपात्री पांशुः पांशुमती तथा ।। ८.२५५ ।।

नितुण्डश्च नितुण्डी च निपुणा निपुणस्तथा।
छलादोच्छेषणा चैव प्रस्कन्दः स्कन्दिका तथा।
षोडशानां पिशाचानां गणाः प्रोक्तास्तु षोडश ।। ८.२५६ ।।

अजामुखा वक्रमुखाः पूरिणः स्कन्दिनस्तथा।
विपादाङ्गारिकाश्चैव कुम्भपात्राः प्रकुन्दकाः ।। ८.२५७ ।।

उपचारोलूखलिका ह्यनर्काश्च कुखण्डिकाः।
पाणिपात्राश्च नैतुण्डा ऊर्णाशा निपुणास्तथा ।। ८.२५८ ।।

सूचीमुखोच्छेषणादाः कुलान्येतानि षोडश।
इत्येता ह्यभिजातास्तु कूष्माण्डानां प्रकीर्तिताः ।। ८.२५९ ।।

पिशाचास्ते तु विज्ञेयाः सुकल्पा इति जज्ञिरे।
बीभत्सं विकृताचारं पुत्रपौत्रमनन्तकम्।
अतस्तेषां पिशाचानां लक्षणञ्च निबोधत ।। ८.२६० ।।

सर्वाङ्गकेशा वृत्ताख्या दंष्ट्रिणो नखिनस्तथा।
तिर्यङ्गाः पुरुषादाश्च पिशाचास्ते ह्यधोमुखाः ।। ८.२६१ ।।

अकेशका ह्यरोमाणस्त्वग्वसाश्चर्मवाससः।
कूष्माण्डिकाः पिशाचास्ते तिलभक्षाः सदामिषाः ।। ८.२६२ ।।

वक्राङ्गहस्तपादाश्च वक्रशीलागतास्तथा।
ज्ञेया वक्रपिशाचास्ते वक्रगाः कामरूपिणः ।। ८.२६३ ।।

लम्बोदरास्तुण्डनाशा ह्रस्वकायशिरोभुजाः।
नितुन्दकाः पिशाचास्ते तिलतक्षाः प्रियश्रवाः ।। ८.२६४ ।।

वामनाकृतयश्चैव वाचालाः प्लुतगामिनः।
पिशाचानर्कमर्कास्ते वृक्षवासादनप्रियाः ।। ८.२६५ ।।

ऊर्द्ध्वबाहूर्द्ध्वरोमाण ऊर्द्ध्ववृक्षास्तथालयाः।
मुञ्चन्ति पांशूनङ्गेभ्यः पिशाचाः पांशवश्च ते ।। ८.२६६ ।।

धमनीमतकाः शुष्काः श्मश्रुलाश्चीरवाससः।
उपवीराः पिशाचाश्च श्मशानायतनास्तथा ।। ८.२६७ ।।

विष्टब्धाक्षा महाजिह्वा लेलिहाना ह्युदूखलाः।
हस्त्युष्ट्रस्थूलशिरसो विरता बद्धपिण्डकाः ।। ८.२६८ ।।

पिशाचाः सुम्भपात्रास्ते अदृष्टान्नानि भुञ्जते।
सूक्ष्मास्तु रोमशाः पिङ्गा दृष्टादृष्टाश्चरन्ति वै ।। ८.२६९ ।।

अयुक्ताश्च विशन्तीह निपुणास्ते पिशाचकाः.
आकर्ण दारितास्याश्च लम्बश्रूस्थूलनासिकाः ।। ८.२७० ।।

हस्तपादाक्रान्तगणा ह्रस्वकाः क्षितिदृष्टयः।
बालादास्ते पिशाचा वै सूतिकागृहसेविनः ।। ८.२७१ ।।

पृष्ठतः पाणिपादाश्च ह्रस्वका वातरंहसः।
पिशितादाः पिशाचास्ते संग्रामे रुधिराशिनः ।। ८.२७२ ।।

नग्नका ह्यनिकेताश्च लम्बकेशाश्च पिण्डकाः।
पिशाचाः स्कन्दिनस्ते वै अन्या उच्छुसनाशिनः ।
षोडश जातयस्तेषां पिशाचानां प्रकीर्त्तिताः ।। ८.२७३ ।।

एवंविधान्पिशाचांस्तु दीनान्दृष्ट्वानुकम्पया।
तेभ्यो ब्रह्मा वरं प्रादात्कारुण्यादल्पचेतसः।
अन्तर्द्धानं प्रजास्तेषां कामरूपत्वमेव च ।। ८.२७४ ।।

उभयोः सन्द्ययोश्चारं स्थानान्याजीवमेव च।
गृहाणि यानि भग्नानि शून्यान्यल्पजनानि च ।। ८.२७५ ।।

विध्वस्तानि च यानि स्युरनाचारोषितानि च।
असंस्पृष्टोप लिप्तानि संस्कारैर्वर्जितानि च ।। ८.२७६ ।।

राजमार्गोपरथ्याश्च निष्कुण्ठाश्चत्वराणि च।
द्वाराण्यष्टालकाश्चैव निर्ममान्संक्रमांस्तथा ।। ८.२७७ ।।

पथो नद्योऽथ तीर्थानि चैत्यवृक्षान्महापथान् ।
पिशाचा विनिविष्टा वै स्थानेष्वेतेषु सर्वशः ।। ८.२७८ ।।

अधार्मिका जनास्ते वै आजीवा विहिताः सुरैः।
वर्णाश्रमाः सङ्करिकाः कारुशिल्पिजनास्तथा ।। ८.२७९ ।।

अमृतोपमसत्त्वानां चौरविश्वासघातिनाम्।
एतैरन्यैश्च बहुबिरन्यायोपार्ज्जितैर्धनैः ।
आरभन्ते क्रिया यास्तु पिशाचास्तत्र देवताः ।। ८.२८० ।।

मधुमांसौदनैर्दध्ना तिलचूर्णसुरासवैः।
धूपैर्हारिद्रकृशरैस्तैलभद्रगुडौदनैः ।। ८.२८१ ।।

कृष्णानि चैव वासांसि धूपाः सुमनसस्तथा।
एवं युक्ताः सुबलयस्तेषां वै पर्वसन्धिषु।
पिशाचानामनुज्ञाय ब्रह्मा सोऽधिपतिर्ददौ ।। ८.२८२ ।।

सर्वभूतपिशाचानां गिरिशं शूलपाणिनम् ।
दृष्ट्वा त्वजनयन्पुत्रान्व्याघ्रान्सिंहांश्च भामिनी ।। ८.२८३ ।।

द्विपिनश्च सुतास्तस्या व्यालेयाश्चामिषाशिनः।
ऋषयश्चापि कात्स्न्र्येन प्रजासर्गं निबोधत।
तस्या दुहितरः पञ्च तासां नामानि मे श्रृणु ।। ८.२८४ ।।

मीना माता तथा वृत्ता परिवृत्ता तथैव च।
अनुवृत्ता तु विज्ञेया तासां वै श्रृणुत प्रजाः ।। ८.२८५ ।।

सहस्रदन्ता मकराः पाठीनास्तामरोहिताः।
इत्येवमादिर्हि गणो मैनो विस्तीर्ण उच्यते ।। ८.२८६ ।।

ग्राहाश्चतुर्विधा ज्ञेयास्तथानुज्येष्ठका अपि।
निष्कांश्च शिशुमारांश्च मता व्यजनयत्प्रजाः ।। ८.२८७ ।।

वृत्ता कूर्मविकाराणि नैकानि जलचारिणाम्।
तथा शङ्खविकाराणि जनयामास नैकशः ।। ८.२८८ ।।

मण्डूकानां विकाराणि अनुवृत्ता व्यजायत।
ऐणेयानां विकाराणि शम्बूकानां तथैव च ।। ८.२८९ ।।

तथा शुक्तिविकाराणि वराटककृतानि च।
तथा शङ्खविकाराणि परिवृत्ता व्यजायत ।। ८.२९० ।।

कालकूटविकाराणि जलौकविहितानि च ।
इत्येष हि ऋषेर्वंशः पञ्चशाखाः प्रकीर्त्तिताः ।। ८.२९१ ।।

तिर्यगं हेतुकमाद्याद्दुर्बहुलं वंशविस्तरम्।
संस्वेदजविकाराणि यथा येभ्यो भवन्ति ह ।। ८.२९२ ।।

स्वस्तिपिकशरीरेभ्यो जायन्त्युत्पादका द्विजाः।
मनुष्याः स्वेदमलजाः उशना नाम जन्तवः।
नानापिपीलिकगणाः कीटका बद्धपादकाः ।। ८.२९३ ।।

शङ्खोपलविकाराणि कीलकाचारकाणि च।
इत्येवमादिबहुलाः स्वेदजाः पार्थिवा गणाः ।। ८.२९४ ।।

तथा घर्मादितप्ताभ्यस्त्वद्भ्यो वृष्टिभ्य एव च।
नैका मृगशरीरेभ्यो जायन्ते जन्तवस्त्विमे ।। ८.२९५ ।।

मीनकाः पिप्पला दंशास्तथा तित्तिरपुत्रिकाः।
नीलचित्राश्च जायन्ते ह्यलका बहुविस्तराः ।। ८.२९६ ।।

जलजाः स्वेदजाश्चैव जायन्ते जन्तवस्त्विमे।
काशातो यञ्जकाः कीटनलदा बहुपादकाः ।। ८.२९७ ।।

सिहला रोमलाश्चैव पिच्छलाः परिकीर्त्तिताः।
इत्येमादिर्हि गणो जलजः स्वेदजः स्मृतः ।। ८.२९८ ।।

सर्पिभ्यो माषमुद्गानां जायन्ते क्रमशस्तथा।
जम्बुबिल्वाम्रपूगेभ्यः फलेभ्यश्चैव जन्तवः ।। ८.२९९ ।।

मुद्गेभ्यः पनसेभ्यश्च तण्डुलेभ्यस्तथैव च।
तथा कोटरशुष्केभ्यो निहितेभ्यो भवन्ति हि ।। ८.३०० ।।

अन्येभ्योऽपि च जायन्ते न हि तेभ्यश्चिरं सदा।
जन्तवस्तुरगादिभ्यो विषादिभ्यस्तथैव च ।। ८.३०१ ।।

बहून्यहानि निःक्षिप्ते सम्भवन्ति च गोमये।
जायन्ते कृमयो विप्रा काष्ठेभ्यश्च घुणादयः ।। ८.३०२ ।।

क्रमादद्द्रुमाणां जायन्ते विविधा नीलमक्षिकाः।
तथा शुष्कविकारेभ्यः पुत्रिकाः प्रभवन्ति च ।। ८.३०३ ।।

कालिका शतिकेभ्यश्च सर्पा जायन्ति सर्वशः।
संस्वेदजाश्च जायन्ते वृश्चिकाः शुष्कगोमयात् ।। ८.३०४ ।।

गोभ्यो हि महिषेभ्यश्च जायन्ते जन्तवः प्रभो।
मत्स्यादयश्च विविधा अण्डकुक्षौ विशेषतः ।। ८.३०५ ।।

चैवीरिकाश्च जायन्ते तथा गोजाकुलानि च।
तथान्यानि च सूक्ष्माणि जलौकादीनि जातयः ।। ८.३०६ ।।

मक्षिकाणां विकाराणि जायन्ते जात योऽपरे ।
प्रायेण तु वसन्त्यस्मिन्नुच्छिष्टोदककर्द्दमे ।। ८.३०७ ।।

मशकानां विकाराणि भ्रमराणां तथैव च।
तृणेभ्यश्चैव जायन्ते पुत्रिका पुत्रभासकाः ।। ८.३०८ ।।

मणिच्छेदास्तथा व्यालाः पोतजाः परिकीर्त्तिताः।
शतवेरिविकाराणि करीषेभ्यो भवन्तिह ।। ८.३०९ ।।

एवमादिरसङ्ख्यातो गणः संस्वेदजो मया।
समासाभिहितो ह्येष प्राक्कर्मवशजः स्मृतः ।। ८.३१० ।।

तथाऽन्ये नैऋताः सत्वास्ते स्मृता उपसर्गजाः।
पूतास्तु योनिजाः केचित्केचिदौत्पत्तिकाः स्मृताः ।। ८.३११ ।।

प्रायेण देवाः सर्वे वै विज्ञेया ह्युपपत्तिजाः ।
केचित्तु योनिजा देवाः केचिदेवानिमित्ततः ।। ८.३१२ ।।

तूलालाघश्च कोलश्च शिवा कन्या तथैव च।
अपत्यं सरमायास्तु गणा वै सरमादयः ।। ८.३१३ ।।

श्यामश्च शबलश्चैव अर्जुनो हरितस्तथा।
कृष्णो धूम्रारूणश्चैव तूलालाघश्च कद्रुकाः ।। ८.३१४ ।।

सुरसाथ विजज्ञे तु शतमेकं शिरो मतम्।
सर्पाणां तक्षको राजा नागानाञ्चापि वासुकिः । द्र. गरुडपुराणे १.१९७.१२ मध्ये वासुकेः पार्थिवमण्डले एवं तक्षकस्य वायुमण्डले स्थितिः
तमोबहुल इत्येष गणः क्रोधवशात्मकः ।। ८.३१५ ।।

पुलहस्यात्मजा सर्गस्ताम्रायास्तन्निबोधत।
बह्वन्यास्त्वबिविख्यातास्ताम्रायाश्च विजज्ञिरे ।। ८.३१६ ।।

श्येनी भासी तथा क्रौञ्ची धृतराष्ट्री शुकी तथा।
अरुणस्य भार्या श्येनी तु वीर्यवन्तौ महाबलौ।
सम्पातिञ्च जटायुञ्च प्रसूता पक्षिसत्तमौ ।। ८.३१७ ।।

सम्पातिरजनत् पुत्रं कन्यामेकां तथैव च।
जटायुषश्च ये पुत्राः काक गृध्राश्चकर्णिनः ।। ८.३१८ ।।

भार्या गरुत्मतश्चापि भासी क्रौञ्ची तथा शुकी।
धृतराष्ट्री च भद्रा च तास्वपत्यानि वक्ष्यते ।। ८.३१९ ।।

शुकी गरुत्मतः पुत्रान् सुषुवे षट् परिश्रुतान् ।
त्रिशिरं सुमुखञ्चैव बलं पृष्ठं महाबलम् ।। ८.३२० ।।

त्रिशङ्खनेत्रं सुमुखं सुरूपं सुरसं बलम्।
एषां पुत्राश्च पौत्राश्च गरुडानां महात्मनाम् ।। ८.३२१ ।।

चतुर्दश सहस्राणि क्रूराणां पन्नगाशिनाम्।
पुत्रपौत्रविसर्गाच्च तेषां वै वंशविस्तरः ।। ८.३२२ ।।

व्याप्तानि यानि देशानि तानि वक्ष्ये यथाक्रमम्।
शाल्मलिद्वीपमखिलं देवकूटञ्च पर्वतम् ।। ८.३२३ ।।

मणिमन्तञ्च शैलेन्द्रं सहस्रशिखरं तथा।
पर्णमालं सुकेशञ्च शतशृङ्गं तथाचलम् ।। ८.३२४ ।।

कौरजं पञ्चशिखरं हेमकूटञ्च पर्वतम्।
प्रचण्डवायुप्रभवैर्दीपितैः पझरागिभिः ।। ८.३२५ ।।

शैलजालानि व्याप्तानि गारुडैस्तैर्महात्मभिः ।
भासीपुत्राः स्मृता भासा उलूका काककुक्कुटाः ।। ८.३२६ ।।

मयूराः कलविङ्काश्च कपोता लावतित्तिराः।
क्रौञ्ची वार्द्धीणसान् श्येनी कुररान्सारसान्बकान् ।। ८.३२७ ।।

इत्येवमादयोन्येऽपि क्रव्यादा ये च पक्षिणः।
धृतराष्ट्री च हंसांश्च कलहंसांश्च भामिनी ।। ८.३२८ ।।

चक्रवाकांश्च विहगान्सर्वांश्चैवादकान् द्विजान्।
एतानेव विजज्ञेऽथ पुत्रपौत्रमनन्तकम् ।। ८.३२९ ।।

गरुडस्यात्मजाः प्रोक्ता इरायाः श्रृणुत प्रजाः।
इरा प्रजज्ञे कन्या वैतिस्रः कमललोचनाः ।। ८.३३० ।।

वन स्पतीनां वृक्षाणां वीरुधाञ्चैव मातरः।
लता चैवाथ वल्ली च वीरुधा चेति तास्तु वै ।। ८.३३१ ।।

लता वनस्पतीञ्जज्ञे ह्यपुष्पान् पुलिनस्थितान् ।
युक्तान्पुष्पफलैर्वृक्षान् लता वै सम्प्रसूयते ।। ८.३३२ ।।

अथ वल्ली तु गुल्मांश्च त्वक्सारास्तृणजातयः।
वीरुधा तदपत्यानि वंशश्चात्र समाप्यते ।। ८.३३३ ।।

एते कश्यपदायादा व्याख्याताः स्थाणुजङ्गमाः ।
तेषां पुत्राश्च पौत्राश्च यैरिदं पूरितं जगत् ।। ८.३३४ ।।

इति सर्गैकदेशस्य कीर्तितोऽवयवो मया।
मारीचोऽयं प्रजा सर्गः समासेन प्रकीर्तितः।
न शक्यं व्यासतो वक्तुमपि वर्षशतैर्द्विजाः ।। ८.३३५ ।।

अदितिर्धर्मशीला तु बलशीला दितिः स्मृता।
तपःशीला तु सुरभि र्मायाशीला दनुः स्मृता ।। ८.३३६ ।।

क्रूरशीला तथा कद्रुः क्रौञ्च्यथ श्रुतिशालिनी ।
इरा ग्रहणशीला तु दनायुर्भक्षणे रता ।। ८.३३७ ।।

वाहशीला तु विनता ताम्रा वै पाशशालिनी।
स्वभावा लोकमातॄणां शीलान्येतानि सर्वशः ।। ८.३३८ ।।

धर्मतः शीलतो बुद्ध्या क्षमया बलरूपतः।
रजः सत्त्वतमो वृत्ता धार्मिकाधार्मिकास्तु वै ।। ८.३३९ ।।

मातृतुल्याश्चाबिजाताः कश्यपस्यात्मजाः प्रजाः।
देवतासुरगन्धर्वा यक्षराक्षसपन्नगाः।
पिशाचाः पशवश्चैव मृगाः पतङ्गवीरुधः ।। ८.३४० ।।

यस्माद्दाक्षायणीष्वेते जज्ञिरे मानुषीष्विह।
मन्वन्तरेषु सर्वेषु तस्माच्छ्रेष्ठास्तु मानुषाः ।। ८.३४१ ।।

धर्मार्थकाममोक्षाणां मानुषाः साधकास्तु वै।
ततोऽधः स्रोतसस्ते वै उत्पद्यन्ते सुरासुराः ।। ८.३४२ ।।

जायन्ते कार्यसिद्ध्यर्थं मानुषेषु पुनः पुनः।
इत्येवं वंशप्रभवः प्रसङ्ख्यातस्तपस्विनाम् ।। ८.३४३ ।।

सुराणामसुराणाञ्च गन्धर्वाप्सरसां तथा।
यक्षरक्षःपिशाचानां सुपर्णोरगपक्षिणाम् ।। ८.३४४ ।।

व्यालानां शिखिनाञ्चैव ओषधीनाञ्च सर्वशः।
कृमिकीटपतङ्गानां क्षुद्राणां जलजाश्च ये।
पशूनां ब्राह्मणानाञ्च श्रीमतां पुण्यलक्षणम् ।। ८.३४५ ।।

आयुष्यश्चैव धन्यश्च श्रीमान् हितसुखावहः।
श्रोतव्यश्चैव सततं ग्राह्यश्चैवानुसूयता ।। ८.३४६ ।।

इमन्तु वंशं नियमेन यः पठेन्महात्मनां ब्राह्मणवैद्यसंसदि ।
अपत्यलाभं हि लबेत्सुपुष्कलं श्रियं धनं प्रेत्य च शोभनां गतिम् ।। ८.३४७ ।।

इति श्रीमहापुराणे वायुप्रोक्ते कश्यपीयप्रजासर्गो नामाष्टमोऽध्यायः ।। ८ ।। *

।।सूत उवाच।।

एवं प्रजासु सृष्टासु कश्यपे न महात्मना।
प्रतिष्ठितासु सर्वासु स्थावरासु चरासु च ।। ९.१ ।।

अभिषिच्याधिपत्येषु तेषां मुख्यः प्रजापतिः।
ततः क्रमेण राज्यानि व्यादेष्टुमुपचक्रमे ।। ९.२ ।।

द्विजातीनां वीरुधाञ्च नक्षत्राणां ग्रहैः सह।
यज्ञानां तपसाञ्चैव सोमं राज्येऽभ्यषेचयत ।। ९.३ ।।

बृहस्पतिं तु विश्वेषां ददावङ्गिरसां पतिम्।
भृगूणामधिपञ्चैव काव्यं राज्येऽभ्यषेचयत् ।। ९.४ ।।

आदित्यानां पुनर्विष्णुं वसूनामथ पावकम् ।
प्रजापतीनां दक्षञ्च मरुतामथ वासवम् ।। ९.५ ।।

दैत्यानामथ राजानं प्रह्लादं दितिनन्दनम्।
नारायणं तु साध्यानां रुद्राणां वृषभध्वजम् ।। ९.६ ।।

विप्रचित्तिञ्च राजानं दानवानामथादिशत्।
अपां तु वरुणं राज्ये राज्ञां वैश्रवणं पतिम्।
यक्षाणां राक्षसानाञ्च पार्थिवानां धनस्य च ।। ९.७ ।।

वैवस्वतं पितृणाञ्च यमं राज्येऽभ्यषेचयत्।
सर्वभूतपिशाचानां गिरिशं शूलपाणिनम् ।। ९.८ ।।

शैलानां हिमवन्तञ्च नदीनामथ सागरम्।
गन्धर्वाणामधिपतिं चक्रे चित्ररथं तदा ।। ९.९ ।।

उच्चैःश्रवसमश्वानां राजानञ्चाभ्यषेचयत्।
मृगाणामथ शार्दूलं गोवृषञ्च चतुष्पदाम् ।। ९.१० ।।

पक्षिणामथ सर्वेषां गरुडं पततां वरम्।
गन्धानां मातुलञ्चैव भूतानामशरीरिणाम् ।। ९.११ ।।

शब्दाकाशबलानाञ्च वायुं बलवतां वरम्।
सर्वेषां दंष्ट्रिणां शेषं नागानामथ वासुकिम् ।। ९.१२ ।।

सरीसृपाणां सर्पाणां नागानाञ्चैव तक्षकम्।
सागराणां नदीनाञ्च मेघानां व्रषितस्य च।
आदित्यानामन्यतमं पर्जन्यमभिषिक्तवान् ।। ९.१३ ।।

सर्वाप्सरोगणानाञ्च कामदेवं तथैव च।
ऋतूनामथ मासानामार्त्तवानां तथैव च ।। ९.१४ ।।

पक्षाणाञ्च विपक्षाणां मुहूर्त्तानाञ्च पर्वणाम्।
कलाकाष्ठाप्रमाणानां गते रयनयोस्तथा।
गणितस्याथ योगस्य चक्रे संवत्सरं प्रभुम् ।। ९.१५ ।।

प्रजापतिर्वै रजसः पूर्वस्यान्दिशि विश्रुतम्।
पुत्रं नाम्ना सुधामानं राजानं सोऽभ्यषेचयत् ।। ९.१६ ।।

पश्चिमायां दिशि तथा रजसः पुत्रमच्युतम्।
केतुमन्तं महात्मानं राजानं सोऽभ्यषेचयत् ।। ९.१७ ।।

मनुष्याणामधिपतिं चक्रे चैव सुतं मनुम्।
तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना ।
यथाप्रदेशमद्यापि धर्मेण परिपाल्यते ।। ९.१८ ।।

स्वायम्भुवेऽन्तरे पूर्वं ब्रह्मणा तेऽभिषेचिताः।
नृपा ह्येतेऽभिषिच्यन्ते मनवो ये भवन्ति वै ।। ९.१९ ।।

मन्वन्तरेष्वतीतेषु गता ह्येतेषु पार्थिवाः।
एवमन्येऽभिषिच्यन्ते प्राप्ते मन्वन्तरे पुनः।
अतीतानागताः सर्वे स्मृता मन्वन्तरेश्वराः ।। ९.२० ।।

राजसूयेऽभिषिक्तश्च पृथुरेभिर्नरोत्तमैः।
वेददृष्टेन विधिना कृतो राजा प्रतापवान् ।। ९.२१ ।।

एतानुत्पाद्य पुत्रांस्तु प्रजासन्तानकारणात् ।
पुनरेव महाभागः प्रजानां पतिरीश्वरः ।। ९.२२ ।।

कश्यपो गोत्रकामस्तु चचार परमं तपः ।
पुत्रौ गोत्रकरौ मह्यं भवेतामित्यचिन्तयत् ।। ९.२३ ।।

तस्य प्रध्यायमानस्य कश्यपस्य महात्मनः।
ब्रह्मणोंऽशौ सुतौ पश्चात् प्रादुर्भूतौ महौजसौ ।। ९.२४ ।।

वत्सारश्चासितश्चैव तावुभौ ब्रह्मवादिनौ।
वत्साराન्निध्रुवो जज्ञे रैभ्यश्च स महायशाः ।। ९.२५ ।।

रैभ्यस्य रैभ्या विज्ञेया निध्रुवस्य निबोधत।
च्यवनस्य सुकन्यायां सुमेधाः समपद्यत ।। ९.२६ ।।

निध्रुवस्य तु या पत्नी माता वै कुण्डपायिनाम्।
असितस्यैकपर्णायां ब्रह्मिष्ठः समपद्यत ।। ९.२७ ।।

शाण्डिल्यानां वचः श्रुत्वा देवलः सुमहायशाः।
निध्रुवाः शाण्डिल्या रैभ्यास्त्रयः पश्चात्तु कश्यपाः ।। ९.२८ ।।

वरप्रभृतयो देवा देवलस्य प्रजास्त्विमाः।
चतुर्युगे त्वतिक्रान्ते मनोहर्येकादशे प्रजाः।
अथावशिष्टे तस्मिस्तु द्वापरे सम्प्रवर्तते ।। ९.२९ ।।

मानसस्य चरिष्यन्तस्तस्य पुत्रो दमः किल।
मानसस्तस्य दायादस्तृणबिन्दुरिति श्रुतः ।। ९.३० ।।

त्रेतायुगमुखे राजा तृतीये सम्बभूव ह।
तस्य कन्या त्विडविडा रूपेणाप्रतिमाभवत्।
पुलस्त्याय स राजर्षिस्तां कन्यां प्रत्यपादयत् ।। ९.३१ ।।

ऋषिरिडविडायान्तु विश्रवाः समपद्यत।
तस्य पत्न्यश्चतस्रस्तु पौलस्त्यकुलवर्द्धनाः ।। ९.३२ ।।

बृहस्पतेर्बृहत्कीर्त्तिर्देवाचार्यस्य कीर्त्तितः ।
कन्यां तस्योपयेमे स नाम्ना वै देववर्णिनीम् ।। ९.३३ ।।

पुष्पोत्ककटाञ्च वाकाञ्च सुते माल्यवतः स्थितौ।
कैकसीं मालिनः कन्यां तासान्तु श्रृणुत प्रजाः ।। ९.३४ ।।

ज्येष्ठं वैश्रवणं तस्य सुषुवे देववर्णिनी।
दिव्येन विधिना युक्तमार्षेणैव श्रुतेन च।
राक्षसेन च रूपेण आसुरेण बलेन च ।। ९.३५ ।।

त्रिपादं सुमहाकायं स्थूलशीर्षं महातनुम्।
अष्टदंष्ट्रं हरिच्छमश्रुं शङ्कुकर्णं विलोहितम् ।। ९.३६ ।।

ह्रस्व बाहुं प्रबाहुञ्च पिङ्गलं सुविभीषणम्।
वैवर्तज्ञानसम्पन्नं सम्बुद्धं ज्ञानसम्पदा ।। ९.३७ ।।

एवंविधं सुतं दृष्ट्वा विश्वरूपधरं तथा।
पिता दृष्ट्वाब्रवीत्तत्र कुबेरोऽयमिति स्वयम् ।। ९.३८ ।।

कुत्सायां क्वितिशब्दोऽयं शरीरं बेरमुच्यते ।
कुबेरः कुशरीरत्वान्नाम्ना तेन च सोऽङ्कितः ।। ९.३९ ।।

यस्माद्विश्रवसोऽपत्यं सादृश्याद्विश्रवा इव।
तस्माद्वैश्रवणो नाम नाम्ना लोके भविष्यति ।। ९.४० ।।

ऋद्ध्यां कुबेरोऽजनयद्विश्रुतं नलकूबरम्।
रावणं कुम्भकर्णञ्च कन्यां शूर्पणखान्तथा।
विभीषणं चतुर्थांस्तान्कैकस्यजनयेत्सुतान् ।। ९.४१ ।।

शङ्कुकर्णो दशग्रीवः पिङ्गलो रक्तमूर्द्धजः।
चतुष्पाद्विंशतिबुजो महाकायो महा बलः ।। ९.४२ ।।

जात्याञ्जननिभो दंष्ट्रो लोहितग्रीव एव च।
राजसेनो जययुक्तो रूपेण च बलेन च ।। ९.४३ ।।

सत्यबुद्धिर्दृढतनू राक्षसैरेव रावणः ।
निसर्गाद्दारुणः क्रूरो रावणाद्रावणस्तु सः ।। ९.४४ ।।

हिरण्यकशिपुस्त्वासीत्स राजा पूर्वजन्मनि।
चतुर्युगानि राजात्र त्रयोदश स राक्षसः ।। ९.४५ ।।

ताः पञ्चकोट्यो वर्षाणामाख्याताः सङ्ख्यया द्विजैः।
नियुतान्येकषष्टिश्च सङ्ख्याविद्भिरुदाहृता ।। ९.४६ ।।

षष्टिशतसहस्राणि वर्षाणान्तु स रावणः ।
देवतानां ऋषीणाञ्च घोरं कृत्वा प्रजागरम् ।। ९.४७ ।।

त्रेतायुगे चतुर्विंशे रावणस्तपसः क्षयात्।
रामं दाशरथिं प्राप्य सगणः क्षयमीयिवान् ।। ९.४८ ।।

महोदयः प्रहस्तश्च महापांशुखरस्तथा।
पुष्पोत्कटायाः पुत्रास्ते कन्या कुम्भीनसी तथा ।। ९.४९ ।।

त्रिशिरा दूषणश्चैव विद्युज्जिह्वश्च राक्षसः।
कन्या ह्यसलिका चैव वाकायाः प्रसवाः स्मृताः ।। ९.५० ।।

इत्येते क्रूरकर्माणः पौलस्त्या राक्षसा दश।
दारुणाबिजनाः सर्वे देवैरपि दुरासदाः ।। ९.५१ ।।

सर्वे लब्धवराश्चैव पुत्रपौत्रसमन्विताः।
यक्षाणाञ्चैव सर्वेषां पौलस्त्या ये च राक्षसाः ।। ९.५२ ।।

आगस्त्यवैश्वामित्राणां क्रूराणां ब्रह्मरक्षसाम्।
वेदाध्ययनशीलानां तपोव्रतनिषेविणाम् ।। ९.५३ ।।

तेषामैडविडो राजा पौलस्त्यः सव्यपिङ्गलः।
इतरे वै यज्ञमुखास्तेन रक्षोगणास्त्रयः ।। ९.७४ ।।

यातु धाना ब्रह्मधाना वार्त्ताश्चैव दिवाचराः ।
निशाचरगणास्तेषां चत्वारः कविभिः स्मृताः ।। ९.७५ ।।

पौलस्त्या नैरृताश्चैव आगत्स्याः कौशिकास्तथा।
इत्येताः सप्त तेषां वै जातयो राक्षसाः स्मृताः ।। ९.७६ ।।

तेषां रूपं प्रवक्ष्यामि स्वभावेन व्यवस्थितम्।
वृत्ताक्षाः पिङ्गलाश्चैव महाकाया महोदराः ।। ९.७७ ।।

अष्टदंष्ट्रा शङ्कुकर्णा ऊर्द्ध्वरोमाण एव च।
आकर्णदारितास्याश्च मुञ्जधूमोर्द्ध्वमूर्द्धजाः ।। ९.७८ ।।

स्थूलशीर्षाः सिताभाश्च ह्रस्वकाश्च प्रवाहुकाः।
ताम्रास्या लम्बजिह्वौष्ठा लम्बभूस्थूलनासिकाः ।। ९.७९ ।।

नीलाङ्गा लोहितग्रीवा गम्भीराक्षा विबीषणाः ।
महाघोरस्वराश्चैव विकटा बद्धपिण्डिकाः ।। ९.८० ।।

स्थूलाश्च तुङ्गनासाश्च शिलासंहनना दृढाः।
दारुणाभिजनाः क्रूराः प्रायशः क्लिष्टकर्मिणः ।। ९.८१ ।।

सकुण्डलाङ्गदापीडा मुकुटोष्णीषधारिणः।
विचित्र वस्त्राभरणाश्चित्रस्रगनुलेपनाः ।। ९.८२ ।।

अन्नादाः पिशितादाश्च पुरुषादाश्च ते स्मृताः।
इत्येतद्रूपसाधर्म्यं राक्षसानां बुधैः स्मृतम्।
न समस्तबलं बुद्धं यतो मायाकृतं हि तत् ।। ९.८३ ।।

पुलहस्य मृगाः पुत्राः सर्वे व्यालाश्च दंष्ट्रिणः ।
भूताः पिशाचाः सर्पाश्च भ्रमरा हस्तिनस्तथा ।। ९.८४ ।।

वानराः किन्नराश्चैव यमकिम्पुरुषास्तथा।
येऽन्ये चैव परिक्रान्ता मायाक्रोधवशानुगाः ।। ९.८५ ।।

अनपत्यः क्रतुस्तस्मिन् स्मृतो वैवस्वतेऽन्तरे।
न तस्य पुत्रः पौत्रो वा तेजः संक्षिप्य वा स्थितः ।। ९.८६।
अत्रेर्वंशं प्रवक्ष्यामि तृतीयस्य प्रजापतेः।
तस्य पत्न्यश्च सुन्दर्यो दशैवासन्पतिव्रताः ।। ९.८७ ।।

भद्राश्वस्य धृताच्यां वै दशाप्सरसि सूनवः।
भद्रा शूद्रा च मद्रा च शलदा मलदा तथा ।। ९.६८ ।।

वेला खला च सप्तैता या च गोचपला स्मृता ।
तथा मानरसा चैव रत्नकूटा च ता दश ।। ९.६९ ।।

आत्रेयवंशकृत्तासां भर्त्ता नाम्ना प्रभाकरः।
भद्रायां जनयामास सोमं पुत्रं यशस्विनम् ।। ९.७० ।।

स्वर्भानुना हते सूर्ये पतमानो दिवो महीम्।
तमोऽभिभूते लोकेऽस्मिन् प्रभा येन प्रवर्त्तिता ।। ९.७१ ।।

स्वस्ति तेऽस्त्विवति चोक्तः स पतन्निह दिवाकरः।
ब्रह्मर्षेर्वचनात्तस्य न पपात दिवो महीम् ।। ९.७२ ।।

अत्रिश्रेष्ठानि गोत्राणि यश्चकार महातपाः ।
यज्ञेष्वत्रिघनश्चैव सुरैर्यश्च प्रवर्त्तितः ।। ९.७३ ।।

स तास्वजनयत् पुत्रानात्मतुल्याननामकान्।
दश तास्वेव महता तपसा भावितप्रभा ।। ९.७४ ।।

स्वस्त्यात्रेया इति ख्याता ऋषयो वेदपारगाः ।
तेषां विख्यातयशसौ ब्रह्मिष्ठौ सुमहौजसौ ।। ९.७५ ।।

दत्तात्रेयस्तस्य ज्येष्ठो दुर्वासास्तस्य चानुजः ।
यवीयसी सुता तस्या मबला ब्रह्मवादिनी।
अत्राप्युदाहरन्तीमं श्लोकं पौराणिकाः पुरा ।। ९.७६ ।।

अत्रेः पुत्रं महात्मानं शान्तात्मानमकल्मषम्।
दत्तात्रेयं तनुं विष्णोः पुराणज्ञाः प्रचक्षते ।। ९.७७ ।।

तस्य गोत्रान्वये जाताश्चत्वारः प्रथिता भुवि।
श्यामाश्च मुद्गलाश्चैव बलारकगविष्ठिराः।
एते नृणान्तु चत्वारः स्मृताः पक्षा महौजसाम् ।। ९.७८ ।।

कश्यपान्नारदश्चैव पर्वतोऽरुन्धती तथा।
जज्ञिरे च त्वरुन्धत्यास्तान्निबोधत सत्तमाः ।। ९.७९ ।।

नारदस्तु वसिष्ठायारुन्धतीं प्रत्यपादयत्।
ऊर्द्ध्वरेता महातेजा वृक्षशापात्तु नारदः ।। ९.८० ।।

पुरा देवासुरे तस्मिन्संग्राम तारकामये।
अनावृष्ट्या हते लोके व्यग्रे शक्रे सुरैः सह।
वसिष्ठस्तपसा धीमान्धारयामास वै प्रजाः ।। ९.८१ ।।

अत्रौषधं मूलफलमोषधीश्च प्रवर्त्तयन् ।
तास्तेन जीवयामास कारुण्यादोषधेन तु ।। ९.८२ ।।

अरुन्धत्यां वसिष्ठस्तु शक्तिमुत्पादयद्द्विजाः।
सागरञ्जनयच्छक्तेरदृश्यन्ती पराशरम् ।। ९.८३ ।।

काली पराशराज्जज्ञे कृष्णद्वैपायनं प्रभुम्।
द्वैपायनादरण्यां वै शुको जज्ञे गुणान्वितः ।। ९.८४ ।।

उत्पद्यन्ते च पीवर्यां षडिमे शुकसूनवः।
भूरिश्रवाः प्रभुः शम्भुः कृष्णो गौरश्च पञ्चमः ।। ९.८५ ।।

कन्या कीर्तिमती चैव योगमाता दृढव्रता।
जननी ब्रह्मदत्तस्य पत्नी सत्त्वगुहस्य च ।। ९.८६ ।।

श्वेताः कृष्णाश्च गौराश्च श्यामा धूम्राः समूलिकाः।
ऊष्मपा दारकाश्चैव नीलाश्चैव पराशराः।
पराशराणामष्टौ ते पक्षाः प्रोक्ता महात्मनाम् ।। ९.८७ ।।

अत ऊर्द्ध्वं निबोधध्वमिन्द्रप्रतिमसम्भवम्।
वसिष्ठस्य कपिञ्जल्यां घृताच्यां समपद्यत।
कुशीतियः समाख्यात इन्द्रप्रतिम उच्यते ।। ९.८८ ।।

पृथोः सुतायाः सम्भूतः पुत्रस्तस्या भवद्वसुः।
उपमन्युः सुतस्तस्य यस्येमे उपमन्यवः ।। ९.८९ ।।

मित्रावरुणयोश्चैव कुण्डिनो ये परिश्रुताः।
एकार्षेयास्तथैवान्ये वसिष्ठा नाम विश्रुताः।
एते पक्षा वसिष्ठानां स्मृता एकादशेव तु ।। ९.९० ।।

इत्येते ब्रह्मणः पुत्रा मानसा ह्यष्ट विश्रुताः।
भ्रातरः सुमहाभागा तेषां वंशाः प्रतिष्ठिताः ।। ९.९१ ।।

त्रींल्लोकान्धारयन्तीमान्देवर्षिगणसङ्कुलान् ।
तेषां पुत्राश्च पौत्राश्च शतशोऽथ सहस्रशः।
यैर्व्याप्ता पृथिवी सर्वा सूर्य्यस्येव गभस्तिभिः ।। ९.९२ ।।

इति श्रीमहापुराणे वायुप्रोक्ते ऋषिवंशानुकीर्त्तनं नाम नवमोऽध्यायः ।। ९ ।। *

एतच्छ्रुत्वा वचस्तस्य सुतस्य विदितात्मनः।
उत्तरं परिपप्रच्छुः सूतपुत्रं द्विजातयः ।। १०.१ ।।
।।शांशपायन उवाच।।
कथं द्वितीयमुत्पन्ना भवानी प्राक्सती तु या।
आसीद्दाक्षायणी पूर्वमुमा कथम जायत ।। १०.२ ।।
मेनायां पितृकन्यायां जनयामास शैलरुट्।
केचैते पितरश्चैव येषां मेना तु मानसी ।। १०.३ ।।
मैनाकश्चैव दौहित्रो दौहित्री च तथा ह्युमा।
एकपर्णा तथा चैव तथा या चैकपाटला ।। १०.४ ।।
गङ्गा चैव सरिच्छ्रेष्ठा सर्वासां पूर्वजा तथा।
पूर्वमेव मयोद्दिष्टं श्रृणुध्वं मम सर्वशः ।। १०.५ ।।
अनेके पितरश्चैव वर्त्तन्ते व्क च वा पुनः।
श्रोतुमिच्छामि भद्रन्ते श्राद्धस्य च परं विधिम् ।। १०.६ ।।
पुत्राश्च ते स्मृताः केषां कथञ्च पितरस्तु ते ।
पितरः कथमुत्पन्नाः कस्य पुत्राः किमात्मकाः ।। १०.७ ।।
स्वर्गे तु पितरोऽन्ये ये देवानामपि देवताः।
एवं वै श्रोतुमिच्छामि पितॄणां सर्गमुत्तमम्।
यथावद्दत्तमस्माभिः श्राद्धं प्रीणाति वै पितॄन् ।। १०.८ ।।
यदर्थं तेन दृश्यन्ते तत्र किं कारणं स्मृतम्।
स्वर्गे हि के तु वर्त्तन्ते पितरो नरके तु के ।। १०.९ ।।
अभिसन्धाय पितरं पितुश्च पितरं तथा।
पितुः पितामहञ्चैव त्रिषु पिण्डेषु नामतः ।। १०.१० ।।
कानि श्राद्धानि देयानि कथं गच्छन्ति वै पितॄन् ।
कथञ्च शक्तास्ते दातुं नरकस्थाः फलं पुनः ।। १०.११ ।।
के चेह पितरो नाम कान् यजामो वयं पुनः ।
देवा अपि पुतॄन् स्वर्गे यजन्तीति हि नः श्रुतम् ।। १०.१२ ।।
एतदिच्छामि वै श्रोतुं विस्तरेण बहुश्रुत।
स्पष्टाभिधानमर्थं वै तद्भवान्वक्तुमर्हति ।। १०.१३ ।।
ऋषीणान्तु वचः श्रुत्वा सूतस्तत्त्वार्थदर्शिवान्।
आचचक्षे यथाप्रश्नं ऋषीणां मानसं ततः ।। १०.१४ ।।
।।सूत उवाच।।
अत्र वो वर्णयिष्यामि यथाप्रज्ञं यथाश्रुतम्।
मन्वन्तरेषु जायन्ते पितरो देवसूनवः ।। १०.१५ ।।

अतीतानागते ज्येष्ठाः कनिष्ठाः क्रमशस्तु ते।
देवैः सार्द्धं पुरातीताः पितरो येऽन्तरेषु वै।
वर्त्तन्ते साम्प्रतं ये तु तान्वै वक्ष्यामि निश्चयात् ।। १०.१६ ।।
श्राद्धञ्चैषां मनुष्याणां श्राद्धमेव प्रवर्त्तते।
देवानसृजन् ब्रह्मा नायक्षन्निति वै पुनः ।
तमुत्सृज्य तदात्मानमसृजंस्ते फलार्थिनः ।। १०.१७ ।।
ते शप्ता ब्रह्मणा मूढा नष्टसंज्ञा भविष्यथ।
न स्म किञ्चिद्विजानन्ति ततो लोके ह्यमुह्यत ।। १०.१८ ।।
ते भूयः प्रणताः सर्वे याचन्ति स्म पितामहम्।
अनुग्रहाय लोकानां पुनस्तानब्रवीत्प्रभुः ।। १०.१९ ।।
प्रायश्चित्तं चरध्वं वै व्यभिचारो हि यः कृतः ।
पुत्रान्स्वान्परिपृच्छध्वं ततो ज्ञानमवाप्स्यथ ।। १०.२० ।।
ततस्ते स्वान्सुतांश्चैव प्रायश्चित्तजिघृक्षवः।
अपृच्छन् संयतात्मानो विधिवच्च मिथो मिथः ।। १०.२१ ।।
तेभ्यस्ते नियतात्मानः पुत्राः शंसुरनेकधा।
प्रायश्चित्तानि धर्मज्ञा वाङ्मनः कर्म्मजानि तु ।। १०.२२ ।।
ते पुत्रानब्रुवन्प्रीता लब्धसंज्ञा दिवौकसः।
यूयं वै पितरोऽस्माकं ये वयं प्रतिबोधिताः।
धर्मज्ञानञ्च कामश्च को वरो वः प्रदीयताम् ।। १०.२३ ।।
पुनस्तानब्रवीद्ब्रह्मा यूयं वै सत्यवादिनः।
तस्माद्यदुक्तं युष्माभिस्तत्तथा न तदन्यथा ।। १०.२४ ।।
उक्तञ्च पितरोऽस्माकमिति वै तनयाः स्वकाः।
पितरस्ते भविष्यन्ति तेभ्योऽयं दीयतां वरः ।। १०.२५ ।।
तेनैव वचसा पुत्रा ब्रह्मणः परमेष्ठिनः।
पुत्राः पितृत्त्वमाजग्मुः पुत्रत्वं पितरः पुनः ।। १०.२६ ।।
तस्मात्ते पितरः पुत्राः पितृत्वे तेषु तत्स्मृतम् ।
एवं स्मृत्वा पितृन् पुत्रान्पुत्राश्च पितरस्तथा।
व्याजहार पुनर्ब्रह्मा पिदृनात्मविवृद्धये ।। १०.२७ ।।
यो ह्यनिष्ट्वा पितृञ्छ्राद्धे क्रियां काञ्चिचित्करिष्यति।
राक्षसा दानवाश्चैव फलं प्राप्स्यन्ति तस्य तत् ।। १०.२८ ।।
श्राद्धैराप्यायिताश्चैव पितरः सोममव्ययम्।
आप्याय्यमाना युष्माभिर्वर्द्धयिष्यन्ति नित्यशः ।। १०.२९ ।।
श्राद्धैराप्यायितः सोमो लोकानाप्याययिष्यति ।

कृत्स्नं सपर्वतवनं जङ्गमाजङ्गमैर्वृतम् ।। १०.३० ।।
श्राद्धानि पुष्टिकामाश्च ये करिष्यन्ति मानवाः।
तेभ्यः पुष्टिं प्रजाश्चैव दास्यन्ति पितरः सदा ।। १०.३१ ।।
श्राद्धे येभ्यः प्रदास्यन्ति त्रीन् पिण्डान् नामगोत्रतः।
सर्वत्र वर्त्तमानास्ते पितरः प्रपितामहम्।
तेषामाप्याययिष्यन्ति श्राद्धदानेन वै प्रजाः ।। १०.३२ ।।
एवमाज्ञा कृता पूर्वं ब्रह्मणा परमेष्ठिना।
तेनैतत्सर्वथा सिद्धं दानमध्ययनं तपः ।। १०.३३ ।।
ते तु ज्ञानप्रदातारः पितरो वो न संशयः।
इत्येते पितरो देवा देवाश्च पितरः पुनः ।
अन्योन्यं पितरो ह्येते देवाश्च पितरश्च ह ।। १०.३४ ।।
एतद्ब्रह्मवचः श्रुत्वा सूतस्य विहितात्मनः ।
पप्रच्छुर्मुनयो भूयः सूतं तस्माद्यदुत्तरम् ।। १०.३५ ।।
।।ऋषय ऊचुः ।।
कियन्तो वै पितृगणाः कस्मिन्काले च ते गणाः ।
वर्त्तन्ते देवप्रवरा देवानां सोमवर्द्धनाः ।। १०.३६ ।।
।।सूत उवाच।।
एतद्वोऽहं प्रवक्ष्यामि पितृसर्गमनुत्तमम्।
शंयुः पप्रच्छ यत्पूर्वं पितरं वै बृहस्पतिम् ।। १०.३७ ।।
बृहस्पतिमुपासीनं सर्वज्ञानार्थकोविदम्।
पुत्रः शंयुरिमं प्रश्नं पप्रच्छ विनयान्वितः ।। १०.३८ ।।
क एते पितरो नाम कियन्तः के च नामतः।
समुद्भूताः कथञ्चैते पितृत्वं समुपागताः ।। १०.३९ ।।
कस्माच्च पितरं पूर्वं यज्ञे युज्यन्ति नित्यशः।
क्रियाश्च सर्वा वर्त्तन्ते श्राद्धपूर्वा महात्मनाम् ।। १०.४० ।।
कस्मै श्राद्धानि देयानि किञ्च दत्तं महाफलम्।
केषु वाप्यक्षयं श्राद्धं तीर्थेषु च नदीषु च ।। १०.४१ ।।
केषु वै सर्वमाप्नोति श्राद्धं कृत्वा द्विजोत्तमः।
कश्च कालो भवेच्छ्राद्धे विधिः कश्चानुवर्त्तते ।। १०.४२ ।।
एतदिच्छामि भगवन् विस्तरेण यथातथम्।
व्याख्यातुमानुपूर्व्येण यत्र चोदाहृतं मया ।। १०.४३ ।।
बृहस्पतिरिदं सम्यगेवं पृष्टो महामतिः।
व्याजहारानुपूर्व्येण प्रश्नं प्रश्नविदां वरः ।। १०.४४ ।।

।।बृहस्पतिरुवाच।।

कथयिष्यामि ते तात यन्मां त्वं परिपृच्छसि।

विनयेन यथान्यायं गम्भीरं प्रश्नमुत्तमम् ।। १०.४५ ।।

द्यौरन्तरिक्षं पृथिवी नक्षत्राणि दिशस्तथा।

सूर्याचन्द्रमसौ चैव तथाहोरात्रमेव च ।। १०.४६ ।।

न बभूवुस्तदा तात तमोभूतमिदं जगत्।

ब्रह्मैको दुश्चरं तत्र चचार परमं तपः ।। १०.४७ ।।

शंयुस्तमब्रवीद्भूयः पितरं ब्रह्मवित्तमम्।

सर्वदैव व्रतस्नातं सर्वज्ञानविदांवरम् ।। १०.४८ ।।

कीदृशं सर्वभूते शस्तपस्तेपे प्रजापतिः।

एवमुक्तो बृहत्तेजा बृहस्पतिरुवाच तम् ।। १०.४९ ।।

सर्वेषां तपसां युक्तिस्तपोयोगमनुत्तमम्।

ध्यायंस्तदा तद्भगवांस्तेन लोकनवासृजत् ।। १०.५० ।।

भूतभव्यानि ज्ञानानि लोकान्वेदांश्च कृत्स्नशः।

योगमाविश्य तत्सृष्टं ब्रह्मणा योगचक्षुषा ।। १०.५१ ।।

लोकाः सान्तानिका नाम यत्र तिष्ठन्ति भास्वराः।

ते वैराजा इति ख्याता देवानां दिवि देवताः ।। १०.५२ ।।

योगेन तपसा युक्तः पूर्वमेव तदा प्रभुः।

देवानसृजत ब्रह्मा योगं युक्त्वा सनातनम् ।। १०.५३ ।।

आदिदेवा इति ख्याता महासत्त्वा महौजसः।

सर्वकामप्रदाः पूज्या देवदानवमानवैः ।। १०.५४ ।।

तेषां सप्त समाख्याता गणास्त्रैलोक्यपूजिताः ।

अमूर्त्तयस्त्रयस्तेषां चत्वारस्तु सुमूर्त्तयः ।। १०.५५ ।।

उपरिष्टात्रयस्तेषां वर्त्तन्ते भावमूर्त्तयः।

तेषामधस्ताद्वर्त्तन्ते चत्वारः सूक्षममूर्त्तयः ।। १०.५६ ।।

ततो देवास्ततो भूमिरेषा लोकपरम्परा।

लोके वर्त्तन्ति ते ह्यस्मिंस्तेभ्यः पर्जन्यसम्भवः ।

वृष्टिर्भवति तैर्वृष्ट्या लोकानां सम्भवः पुनः ।। १०.५७ ।।

आप्याययन्ति ते यस्मात्सोमञ्चान्नञ्च योगतः।

ऊचुस्तान्वै पितृंस्तस्माल्लोकानां लोकसत्तमाः ।। १०.५८ ।।

मनोजवाः स्वधाभक्षाः सर्वकामपरिच्छदाः।

लोभमोहभयापेता निश्चिताः शोकवर्जिताः ।। १०.५९ ।।

एते योगं परित्यज्य प्राप्ता लोकान्सुदर्शनान्।

दिव्याः पुण्या महात्मानो विपाप्मानो भवन्त्युत ।। १०.६० ।।
ततो युगसहस्रान्ते जायन्ते ब्रह्मवादिनः।
प्रतिलभ्य पुनर्योगं मोक्षं गच्छन्त्यमूर्त्तयः ।। १०.६१ ।।
व्यक्ताव्यक्तं परित्यज्य महायोगबलेन वा ।
नश्यन्त्युल्केव गगने क्षीणविद्युत्प्रभेव च ।। १०.६२ ।।
उत्सृज्य देहजातानि महायोगबलेन च।
निराख्योपाख्यतां यान्ति सरितः सागरे यथा ।। १०.६३ ।।
क्रियया गुरुपूजाभिर्ये च कुर्वन्ति नित्यशः।
ताभिराप्याययन्त्येते पितरो योगवर्द्धनाः ।। १०.६४ ।।
श्राद्धे प्रीताः पुनः सोमं पितरो योगमास्थिताः।
आप्याययन्ति योगेन त्रैलोक्यं येन जीवति ।। १०.६५ ।।
तस्माच्छ्राद्धानि देयानि योगिभ्यो यत्नतः सदा।
पितॄणां हि बलं योगो योगात्सोमः प्रवर्त्तते ।। १०.६६ ।।
सहस्रशस्तु विप्रान्वै भोजयेद्यावदागतान् ।।
एकस्तु योगवित्प्रीतः सर्वानर्हति तच्छृणु ।। १०.६७ ।।
कल्पितानां सहस्रेण स्नातकानां शतेन च।
योगाचार्येण यद्भुक्तं त्रायते महतो भयात् ।। १०.६८ ।।
गृहस्थानां सहस्रेण वानप्रस्थशतेन च।
ब्रह्मचारिसहस्रेण योगी ह्येको विशिष्यते ।। १०.६९ ।।
नास्तिको वा विकर्मा वा सङ्कीर्णस्तस्करोऽपि वा।
नान्यत्र कारणं दानं योगेष्वाह प्रजापतिः ।। १०.७० ।।
पितरस्तस्य तुष्यन्ति सुवृष्टेनेव कर्षकाः।
पुत्रो वाप्यथ वा पौत्रो ध्यानिनं भोजयिष्यति ।। १०.७१ ।।
अलाभे ध्यानिभिक्षूणां भोजयेद्ब्रह्मचारिणौ ।
तदलाभेप्युदासीनं गृहस्थमपि भोजयेत् ।। १०.७२ ।।
यस्तिष्ठेदेकपादेन वायुभक्षः शतं समाः ।
ध्यानयोगी परस्तस्मादिति ब्रह्मानुशासनम् ।। १०.७३ ।।
सिद्धा हि विप्ररूपेण चरन्ति पृथिवीमिमाम्।
तस्मादतिथिमायान्तमभिगच्छेत्कृताञ्जलिः ।। १०.७४ ।।
पूजयेच्चार्घ्यपात्रेण वेश्मना भोजनेन च।
ऊर्वोः सागरपर्यन्तां देवा योगेश्वराः सदा।
नानारूपैश्चरन्त्येते प्रजा धर्मेण पालयन् ।। १०.७५ ।।
तस्माद्दद्याच्च वै दानं विप्रायातिथये नरः।

प्रदानानि प्रवक्ष्यामि फलञ्चैषां तथैव च ।। १०.७६ ।।
अश्वमेधसहस्रेण राजसूयशतेन च।
पुण्डरीकसहस्रेण योगिष्वावसथो वरम् ।। १०.७७ ।।
आद्य एष गणः प्रोक्तः पितृणाममितौजसाम्।
भावयन्सप्तकालान्वै स्थित एष गणस्तदा ।। १०.७८ ।।
अत ऊरद्ध्वं प्रवक्ष्यामि सर्वान् पितृगणान्पुनः ।
सन्ततिं संस्थितिञ्चैव भावनाञ्च यथाक्रमम् ।। १०.७९ ।।
इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धप्रक्रियारम्भो नाम दशमोऽध्यायः ।। १० ।। *

।।सूत उवाच।।
सप्त मेधावतां श्रेष्ठाः स्वर्गे पितृगणाः स्मृताः।
चत्वारो मूर्तिमन्तश्च त्रयस्तेषाममूर्त्तयः।
तेषां लोकविसर्गन्तु कीर्त्तयिष्ये निबोधत ।। ११.१ ।।

या वै दुहितरस्तेषां दोहित्राश्चैव ये स्मृताः।
धर्ममूर्त्तिधरास्तेषां ये त्रयः परमा गणाः ।। ११.२ ।।

नामानि लोकसर्गञ्च तेषां वक्ष्ये समासतः।
लोका विरजसो नाम्ना यत्र तिष्ठन्ति भास्वराः ।। ११.३ ।।

अमूर्त्तयः पितृगणाः पुत्रास्ते वै प्रजापतेः।
विरजस्य द्विजाः श्रेष्ठा वैराजा इति विश्रुताः ।
एष वै प्रथमः कल्पो वैराजानां प्रकीर्त्तितः ।। ११.४ ।।

तेषान्तु मानसी कन्या मेना नाम महागिरेः।
पत्नी हिमवतः शुभ्र यस्यां मैनाक उच्यते ।। ११.५ ।।

जातः सर्वौषधिधरः सर्वरत्नाकरात्मवान्।
पर्वतः प्रवरः पुण्यः क्रौञ्चस्तस्यात्मजोऽभवत् ।। ११.६ ।।

तिस्रः कन्यास्तु मेनायां जनयामास शैलराट्।
अपर्णामेकपर्णाञ्च तृतीयामेकपाटलाम् ।। ११.७ ।।

आश्रिते द्वे ह्यपर्णा तु अनिकेता तपोऽचरत्।
न्यग्रोधमेकपर्णी तु पाटलामेकपाटला।
शतं वर्षसहस्राणि दुश्चरं देवदानवैः ष।। ११.८ ।।

आहारमेकपर्णेन एकपर्णी समाचरत्।
पाटलेनैव चैकेन विदध्यादेकपाटला ।। ११.९ ।।

पूर्णे पूर्णे सहस्रे द्वे आहारं वै प्रजक्रतुः ।
एका तत्र निराहारा तां माता प्रत्यभाषत ।। ११.१० ।।

निषेधयन्ती ह्युमेति माता स्नेहेन दुःखिता।
सा तथोक्ततया देवी मात्रा दुश्चरचारिणी ।। ११.११ ।।

उमेति सा महाभागा त्रिषु लोकेषु विश्रुता ।
तथेति नाम्ना तेनासौ निरुक्ता कर्मणा शुभा ।। ११.१२ ।।

एतत्तु त्रिकुमारीकं जगत्स्यास्यति शाश्वतम्।
एतासां तपसा दृप्तं यावद्भूमिर्द्धरिष्यति ।। ११.१३ ।।

तपःशरीरास्ताः सर्वास्तिस्रो योगबलान्विताः।
देव्यस्ताः सुमहाभागाः सर्व्वाश्च स्थिरयौवनाः ।। ११.१४ ।।

सर्वाश्च ब्रह्मवादिन्यः सर्वा श्चैवोर्द्ध्वरेतसः।
उमा तासां वरिष्ठा च श्रेष्ठा च वरवर्णिनी ।। ११.१५ ।।

महायोगबलोपेता महादेवमुपस्थिता।
दन्तकाण्वोशना तस्याः पुत्रो वै भृगु नन्दनः ।। ११.१६ ।।

असितस्यैकपर्णी तु पत्नी साध्वी दृढव्रता।
दत्ता हिमवता तस्मै योगाचार्याय धीमते।
देवलं सुषुवे सा तु ब्रह्मिष्ठं मानसं सुतम् ।। ११.१७ ।।

या चैतासां कुमारीणां तृतीया त्वेकपाटला।
पुत्रं शतशिलाकस्य जैगीषव्यमुपस्थिता ।। ११.१८ ।।

तस्यापि शङ्खलिखितौ स्मृतौ पुत्रावयोनिजौ।
इत्येता वै महाभागाः कन्या हिमवतः शुभाः ।। ११.१९ ।।

रुद्राणी सा तु प्रवरा स्वगुणैरतिरिच्यते।
अन्योन्यप्रीतिरनयोरुमाशङ्करयोर्यथा ।। ११.२० ।।

श्लेषं संसक्तयोर्ज्ञात्वा शङ्कितः किल वृत्रहा।
ताभ्यां मैथुनसक्ताभ्यामपत्योद्भवभीरुणा।
तयोः सकाशमिन्द्रेण प्रेषितो हव्यवाहनः ।। ११.२१ ।।

अनयो रतिविघ्नञ्च त्वमाचर हुताशन।
सर्वत्र गत एव त्वं न दोषो विद्यते तदा ।। ११.२२ ।।

इत्येवमुक्ते तु तथा वह्निना च तथा कृतम्।
उमादेहं समुत्सृज्य शुक्रं भूमौ विसर्जितम् ।। ११.२३ ।।

ततो रुषितया देव्या शप्तोऽग्निः शांशपायन।
इदं चोक्तवती वह्निं रोषगद्घदया गिरा ।। ११.२४ ।।

यस्मान्मय्यवितृप्तायां रतिविघ्नं हुताशन।
कृतवानस्यकर्त्तव्यं तस्मात्त्वमसि दुर्मते ।। ११.२५ ।।

यदेवं विभृतं गर्भं रौद्रं शुक्रं महाप्रभम्।
गर्भं त्वं धारयस्वैवमेषा ते दण्डधारणा ।। ११.२६ ।।

स शापरोषाद्रुद्राण्या अन्तर्गर्भो हुताशनः।
बहून्वर्षगणान् गर्भं धारयामास वै द्विजाः ।। ११.२७ ।।

स गङ्गामुपगम्याह श्रूयतां सरिदुत्तमे।
सुमहान् परिखेदो मे गर्भधारणकारणात् ।। ११.२८ ।।

मद्धितार्थमिमं गर्भमतो धारय निम्नगे।
मत्प्रसादाच्च खेदो वै मन्दस्तव भविष्यति ।। ११.२९ ।।

तथेत्युक्त्वा तदा सा तु सम्प्रहृष्ट महानदी।
तं गर्भं धारयामास दह्यमानेन चेतसा ।। ११.३० ।।

सापि कृच्छ्रेण महता खिद्यमाना महानदी।
कालं प्रकृष्टं सुमहद्घर्भधारणतत्परा ।। ११.३१ ।।

तया परिगतं गर्भं कुक्षौ हिमवतः शुभे।
शुभं शरवणं नाम चित्रं पुष्पितपादपम्।
तत्र तं व्यसृजद्गर्भं दीप्यमानामिवानलम् ।। ११.३२ ।।

रुद्राग्निगङ्गातनयस्तत्र जातोऽरुणप्रभः ।
आदित्यशतसङ्काशो महातेजाः प्रतापवान् ।। ११.३३ ।।

तस्मिञ्जाते महाभागे कुमारे जाह्नवीसुते।
विमानयानैराकाशं पतत्रिभिरिवावृतम् ।। ११.३४ ।।

देवदुन्दुभयो नेदुराकाशे मधुरस्वराः।
मुमुचुः पुष्पवर्षञ्च खचराः सिद्धचारणाः ।। ११.३५ ।।

जगुर्गन्धर्व्वमुख्याश्च सर्व्वशस्तत्र तत्र ह।
यक्षा विद्याधराः सिद्धाः किन्नराश्चैव सर्वशः ।। ११.३६ ।।

महानाग सहस्राणि प्रवराश्च पतत्रिणः ।
उपतस्थुर्महाभागमाग्नेयं शङ्करात्मजम्।
प्रभावेण तदा तेन दैत्यदानवराक्षसाः ।। ११.३७ ।।

सह सप्तर्षिभार्याभिरादावे वाग्निसम्भवः।
अभिषेकप्रयाताभिर्दृष्टो वर्ज्य त्वरुन्धतीम् ।। ११.३८ ।।

ताभिः स बालार्कनिभो रौद्रः परिवृतः प्रभुः ।
स्निह्यमानाभिरत्यर्थं स्वकाभिरिव मातृभिः ।। ११.३९ ।।

युगपत्सर्वदेवीर्हि दिदृक्षुर्जाह्नवीसुतः।

षप्मुखो व्यसृजच्छ्रीमांस्तासां प्रीत्या महाद्युतिः ।। ११.४० ।।

श्रीमान् कमलपत्राक्षस्तरुणादित्य सन्निभः।
येन जातेन लोकानामाक्षेपस्तेजसा कृतः ।। ११.४१ ।।

तेन जातेन महता देवानामसहिष्णवः।
स्कन्दिता दानवगणास्तस्मात्स्कन्दः प्रतापवान् ।। ११.४२ ।।

कृत्तिकाभिस्तु यस्मात् संवर्द्धितः स पुरातनः।
कार्त्तिकेय इति ख्यातस्तस्मादसुरसूदनः ।। ११.४३ ।।

जृम्भतस्तस्य दैत्यारेर्ज्वालामालाकुलात्तदा।
मुखाद्विनिर्गता तस्य स्वशक्तिरपराजिता ।। ११.४४ ।।

क्रीडार्थञ्चैव स्कन्दस्य विष्णुना प्रभविष्णुना।
गरुडादिति सृष्टौ हि पक्षिणौ हि प्रभद्रकौ ।। ११.४५ ।।

मयूरः कुक्कुटश्चैव पताका चैव वायुना।
यस्य दत्ता सरस्वत्या महावीणा महास्वना।
अजः स्वयम्भुवा दत्तो मेषो दत्तश्च शम्भुना ।। ११.४६ ।।

माया विहरणे विप्रा गिरौ क्रौञ्चे निपातिते।
तारके चासुरवरे समुदीर्णे निपातिते ।। ११.४७ ।।

सेन्द्रोपेन्द्रैर्महाभागैर्देवरैग्निसुतः प्रभुः ।
सेनापत्येन दैत्यारिरभिषिक्तः प्रतापवान् ।। ११.४८ ।।

देवसेनापतिस्त्वेवं पठ्यते नरनायकः।
देवारिस्कन्दनः स्कन्दः सर्वलोकेश्वरः प्रभुः ।। ११.४९ ।।

प्रमथैर्विविधैर्देवैस्तथा भूत गणैरपि ।
मातृभिर्विविधाभिश्च विनायकगणैस्तथा ।। ११.५० ।।

सा त्वपश्यद्विमानानि पतन्ती सा दिवश्च्युता ।
त्रसरेणुप्रमाणानि तेष्वपश्यच्च्युतान् पितृन् ।। ११.५१ ।।

सुसूक्ष्मानपरित्यक्तानग्नीनग्निष्विवाहितान्।
त्रायध्वमित्युवाचाथ पतन्ती तानवाक्शिराः ।। ११.५२ ।।

तैरुक्ता सा तु माभैषीरित्युक्ताधिष्ठिताभवत्।
ततः प्रासादयत्सा वै पितृंस्तान् दीनया गिरा ।। ११.५३ ।।

ऊचुस्ते पितरः कन्यां भ्रष्टैश्वर्यां व्यतिक्रमात्।
भ्रष्टैश्वर्या स्वदोषेण तपसि त्वं शुचिस्मिते ।। ११.५४ ।।

यैः क्रियन्ते च कर्म्माणि शरीरैरिह दैवतैः ।
तैरेव तत्कर्मफलं प्राप्नुवन्तीह देवताः ।। ११.५५ ।।

सद्यः फलन्ति कर्माणि देवत्वे प्रेत्य मानुषे।
तस्मादमावस्वपत्यत्वं प्रेत्य प्राप्स्यसे फलम् ।। ११.५६ ।।

इत्युक्त्या वै पितरः पुनस्ते तु प्रसादिताः।
ध्यात्वा प्रसादं सञ्चक्रुस्तस्यास्ते त्वनुकम्पया ।। ११.५७ ।।

अवश्यम्भाविनं दृष्ट्वा ह्यर्थमूचुस्ततः सुराः ।
सोमपाः पितरः कन्यां राज्ञश्चैव ह्यमावसोः ।। ११.५८ ।।

उत्पन्नस्य पृथिव्यां तु मानुषत्वे महात्मनः।
कन्या भूत्वा त्विमाँल्लोकान्पुनः प्राप्स्यसि स्वानिति ।। ११.५९ ।।

अष्टाविंशे भवित्री त्वं द्वापरे मत्स्ययोनिजा।
अस्यैव राज्ञो दुहिता अद्रिकायां ह्यमावसोः ।। ११.६० ।।

पराशरस्य दायादं ऋषेस्त्वं जनयिष्यसि।
स वेदमेकं विप्रर्षिश्चतुर्धा वै करिष्यति ।। ११.६१ ।।

महाभिषस्य पुत्रौ द्वौ शन्तनोः कीर्त्तिवर्द्धनौ।
विचित्रवीर्य्यं धर्मज्ञं त्वमेवोत्पादयिष्यसि ।। ११.६२ ।।

चित्राङ्गदं चराजानं तेजोबलगुणान्वितम्।
एतानुत्पाद्य पुत्रं स्वं पुनर्लोकानवाप्स्यसि ।। ११.६३ ।।

व्यतिक्रमात्पितॄणां त्वं प्राप्स्यसे जन्म कुत्सितम्।
तस्यैव राज्ञस्त्वं कन्या अद्रिकायां भविष्यसि ।। ११.६४ ।।

कन्या भूत्वा ततश्च त्वमिमान् लोकानवाप्स्यसि।
एवमुक्ता तु दाशेयी जाता सत्यवती तु सा ।। ११.६५ ।।

अद्रिकायां सुता मत्स्यां सुता जाता ह्यमावसोः।
अद्रि कामत्स्यसम्भूता गङ्गायामनुसङ्गमे ।। ११.६६ ।।

तस्य राज्ञो हि सा कन्या राज्ञो वीर्य्ये सदैव हि।
विरजा नाम ते लोका दिवि रोचन्ति ते गणाः ।। ११.६७ ।।

अग्निष्वात्ताः स्मृतास्तत्र पितरो भास्वरप्रभाः ।
तान्दानवगणा यक्षा रक्षोगन्धर्व्वकिन्नराः।
भूतसर्पपिशाचाश्च भावयन्ति फलार्थिनः ।। ११.६८ ।।

एते पुत्राः समाख्याताः पुलहस्य प्रजापतेः।
त्रय एते गणाः प्रोक्ता धर्ममूर्तिधराः शुभाः ।। ११.६९ ।।

एतेषां मानसी कन्या पीवरी नाम विश्रुता।
योगिनी योगपत्नी च योगमाता तथैव च ।। ११.७० ।।

भविता द्वापरं प्राप्य अष्टाविंशन्तु दैवतम्।
पराशरकुलोद्भूतः शुको नाम महातपाः ।। ११.७१ ।।

श्रीमान्योगी महायोगी योगस्तस्माद्द्विजोत्तमः।
व्यासादरण्यां सम्भूतो विधूम इव पावकः ।। ११.७२ ।।

स तस्यां पितृकन्यायां योगाचार्यान्परिश्रुतान् ।
कृष्णं गौरं प्रभुं शम्भुं तथा भूरिश्रुतं ववौ ।। ११.७३ ।।

कन्यां कीर्त्तिमतीञ्चैव योगिनीं योगमातरम् ।
ब्रह्मदत्तस्य जननी महिषी त्वणुहस्य तु ।। ११.७४ ।।

एतानुत्पाद्य धर्मात्मा पुत्रान्योगमवाप्य च।
महायोगतपाश्चैव अपरावर्त्तिनीं गतिम् ।। ११.७५ ।।

आदित्यकिरणोपेतं त्वपुनर्भावमास्थितः।
सर्वव्यापि विनिर्मुक्तो भविष्यति महामुनिः ।। ११.७६ ।।

अमूर्त्तिमन्तः पितरो धर्ममूर्त्तिधरास्तु ये।
त्रय एते गणास्तेषां चत्वारोऽन्ये निबोधत ।। ११.७७ ।।

यान्वक्ष्यामि द्विजश्रेष्ठा मूर्त्तिमन्तो महाप्रभाः।
उत्पन्नास्ते स्वधायास्तु कन्या ह्यग्नेः कवेः सुताः ।। ११.७८ ।।

पितरो देवलोकेषु ज्योतिर्भासिषु भास्वराः।
सर्वकामसमृद्धेषु द्विजा स्तान्भावयन्त्युत ।। ११.७९ ।।

एतेषां मानसी कन्या गौर्नाम दिवि विश्रुता।
दत्तसेना कुमारेण शुक्रस्य महिषी प्रिया ।। ११.८० ।।

एकत्रिंशच्च विख्याता भृगूणां कीर्त्तिवर्द्धनाः।
मरीचिगर्भास्ते लोकाः समावृत्य दिवि स्थिताः ।। ११.८१ ।।

एते ह्यङ्गिरसः पुत्राः साध्यैः सह विवर्द्धिताः।
उपहूताः स्मृतास्ते तु पितरो भास्वरा दिवि।
तान्क्षत्रियगणान्दृष्ट्वा भावयन्ति फलार्थिनः ।। ११.८२ ।।

एतेषां मानसी कन्या यशोदा नाम विश्रुता।
पत्नी सा विश्वमहतः स्नुषा वै विश्वशर्म्मिणः ।। ११.८३ ।।

राजर्षेर्जननी देवी खट्वाङ्गस्य महात्मनः।
यस्य यज्ञे पुरा गीता गाथा गीतैर्महर्षिभिः ।। ११.८४ ।।

अग्नेर्जन्म तथा दृष्ट्वा शाण्डिल्यस्य महात्मनः।
यजमानं दिलीपं ये पश्यन्ति सुसमाहिताः।
सत्यव्रतं महात्मानं ते स्वर्गजयिनोऽमराः ।। ११.८५ ।।

आज्यपा नाम पितरः कर्दमस्य प्रजापतेः ।
समुत्पन्नस्य पुलहादुत्पन्नास्तस्य वै पुनः ।। ११.८६ ।।

लोकेष्वेतेषु वर्त्तन्ते कामगेषु विहङ्गमाः ।
एतान्वैश्यगणाः श्राद्धे भावयन्ति फलार्थिनः ।। ११.८७ ।।

एतेषां मानसी सन्या विरजा नाम विश्रुता ।
ययातेर्जननी साध्वी पत्नी सा नहुषस्य तु ।। ११.८८ ।।

सुकाला नाम पितरो वसिष्ठस्य प्रजापतेः ।
हिरण्यगर्भस्य सुताः शूद्रास्तान्बावयन्त्युत ।। ११.८९ ।।

मानसा नाम ते लोका वहन्ते यत्र ते दिवि।
एतेषां मानसी कन्या नर्मदा सरितां वरा ।। ११.९० ।।

सा भावयति भूतानि दक्षिणापथगामिनी ।
जननी त्रसद्दस्योर्हि पुरुकुत्सपरिग्रहः ।। ११.९१ ।।

एतेषामभ्युपगमान्मातुर्मन्वन्तरेश्वरः ।
मन्वन्त रादौ श्राद्धानि प्रवर्त्तयति सर्वशः ।। ११.९२ ।।

पिदृणामानुपूर्व्येण सर्वेषां द्विजसत्तमाः ।
तस्मादिह स्वधर्मेण श्राद्धं देयन्तु श्रद्धया ।। ११.९३ ।।

सर्वेषां राजतैः पात्रैरपि वा रजतान्वितैः।
दत्तं स्वधां पुरोधाय तथा प्रीणाति वै पितॄन् ।। ११.९४ ।।

सोमस्याप्यायनं कृत्वा ह्यग्नेर्वैवस्वतस्य च।
उद गायनञ्चाग्नौ च अश्वमेधं तदाप्नुयात् ।। ११.९५ ।।

पितॄन् प्रीणाति वै भक्त्या पितरः प्रीणयन्ति तम्।
पितरः पुष्टिकामस्य प्रजाकामस्य वा पुनः।
पुष्टिं प्रजां च स्वर्गं प्रयच्छन्ति न संशयः ।। ११.९६ ।।

देवकार्य्यादपि सदा पितृकार्य्यं विशिष्यते।
देवताभ्यः पितृणां हि पूर्व्वमाप्यायनं स्मृतम् ।। ११.९७ ।।

न हि योगगतिः सूक्ष्मा पितृणामपि तृप्तयः।
तपसा हि प्रसिद्धेन दृश्यन्ते मांसचक्षुषा ।। ११.९८ ।।

इत्येते पितरश्चैव लोका दुहितरश्च वै।
दौहित्रा यजमानाश्च प्रोक्ता ये भावयन्ति तान् ।। ११.९९ ।।

चत्वारो मूर्त्तिमन्तश्च त्रयस्तेषाममूर्त्तयः।
तेभ्यः श्राद्धानि सत्कृत्य देवाः कुर्व्वन्ति यत्नतः ।। ११.१०० ।।

भक्ताः प्राञ्जलयः सर्वे सेन्द्रास्तद्घतमानसाः।
विश्वे च सिकताश्चैव पृश्निजाः श्रृङ्गिणस्तथा ।। ११.१०१ ।।

कृष्णाः श्वेतास्त्वजाश्चैव विधिवत्पूजयन्त्युत।
प्रजास्ता वातरशना दिवाकीर्त्त्यास्तथैव च ।। ११.१०२ ।।

लेखाश्च मरुतश्चैव ब्रह्माद्याश्च दिवौकसः।
अत्रिभृग्वङ्गिराद्याश्च ऋषयः सर्व्व एव च ।। ११.१०३ ।।

यक्षा नागाः सुपर्णाश्च किन्नरा राक्षसैः सह।
पितृंस्त्वपूजयन्सर्वे नित्यमेव फलार्थिनः ।। ११.१०४ ।।

एवमेते महात्मानः श्राद्धे सत्कृत्य पूजिताः।
सर्वान्कामान्प्रयच्छन्ति शतशोऽथ सहस्रशः ।। ११.१०५ ।।

हित्वा त्रैलोक्यसंसारं जरामृत्युभयं तथा।
मोक्षं योगमयैश्वर्य्यं प्रयच्छन्ति पितामहाः ।। ११.१०६ ।।

मोक्षोपायमथैश्वर्य्यं सूक्ष्मदेहाश्च देवताः।
कृत्स्नं वैराग्यमानन्त्यं प्रयच्छन्ति पितामहाः ।। ११.१०७ ।।

ऐश्वर्य्यं विहितं योगमैश्वर्य्यं वित्तमुत्तमम्।
योगैश्वर्य्यदृते मोक्षः कथञ्चिन्नोपपद्यते ।। ११.१०८ ।।

अपक्षस्यैव गमनं गगने पक्षिणो यथा ।
वरिष्ठः सर्वधर्म्माणां मोक्षो धर्म्मः सनातनः ।। ११.१०९ ।।

विमानानां सहस्राणि युक्तान्यप्सरसांगणैः।
सर्वकामप्रसिद्धानि प्रयच्छन्ति पितामहाः ।। ११.११० ।।

प्रज्ञा पुष्टिः स्मृतिर्मेधा राज्यमारोग्यमेव च।
पितृणां हि प्रसादेन प्राप्यते सुमहात्मना ।। ११.१११ ।।

मुक्तावैढूर्य्यवासांसि वाजिनागायुतानि च।
कोटिशश्चापि रत्नानि प्रयच्छन्ति पितामहाः ।। ११.११२ ।।

हंसबर्हिणयुक्तानि मुक्तावैढूर्य्यवन्ति च।
किङ्किणीजालनद्धानि सदा पुष्पफलानि च।
प्रीत्या नित्यं प्रयच्छन्ति मनुष्याणां पितामहाः ।। ११.११३ ।।

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो नामैकादशोऽध्यायः ।। ११ ।। *

।।बृहस्पतिरुवाच।।
सौवर्णं राजतं ताम्रं पितॄणां पात्रमुच्यते।
रजतं रजताक्तं वा पितॄणां पात्रमुच्यते ।। १२.१ ।।

रजतस्य तथा चापि दर्शनं दानमेव च।
अनन्तमक्षयं स्वर्ग्यं पितॄणां दानमुच्यते।
पितॄनेतेन दानेन सत्पुत्रास्तारयन्त्युत ।। १२.२ ।।

राजते हि स्वधा दुग्धा पात्रेऽस्मिन्पितृभिः पुरा।
स्वधादायार्थिभिस्तात तस्मिन्दत्ते तदक्षयम् ।। १२.३ ।।

कृष्णाजिनस्य सान्निध्यं दर्शनं दानमेव वा।
रक्षोघ्नं ब्रह्मवर्च्चस्यं पितॄंस्तत्तद्वितारयेत् ।। १२.४ ।।

काञ्चनं राजतं ताम्रं दौहित्रं कुतपस्तिलाः।
वस्त्रञ्च पावनीयानि त्रिदण्डो योगमेव च ।। १२.५ ।।

श्राद्धकर्मण्ययं श्रेष्ठो विधिर्ब्राह्मयः सनातनः।
आयुः कीर्त्तिः प्रजाश्चैव प्रज्ञासन्ततिवर्द्धनः ।। १२.६ ।।

दिशि दक्षिणपूर्वस्यां विदिक्स्थानं विशेषतः।
सर्वतोरत्निमात्रन्तु चतुरस्रं सुसंहितम् ।। १२.७ ।।

वक्ष्यामि विधिवत्स्थानं पितॄणामनुशासनात्।
धन्यमारोग्यमायुष्यं बलवर्णविवर्द्धनम् ।। १२.८ ।।

तत्र गर्त्तास्त्रयः कार्य्यास्त्रयो दण्डाश्च खादिराः।
रत्निमात्रास्तु ते कार्य्या रजतेन विभूषिताः।
तेवितस्त्यायताः कार्य्याः सर्व्वतश्चतुरङ्गुलाः ।। १२.९ ।।

प्राग्दक्षिणमुखान्भूमौ स्थितानसुषिरंस्तथा।
अद्भिः पवित्रपूताभिः प्लावयेत्सततं शुचिः ।। १२.१० ।।

पयसा ह्याजगव्येन शोधनं वाम्भिरेव तु।
तर्पणात्सततं ह्येवं तृप्तिर्भवति शाश्वती ।। १२.११ ।।

इह चामुत्र च श्रीमान्सर्वकर्मसमन्वितः।
एवं त्रिषवणस्नातो योऽर्चयेत पितॄन्सदा ।
मन्त्रेण विधिवत्सम्यगश्वमेधफलं लभेत् ।। १२.१२ ।।

तत्स्थापयेदमावास्यां गर्त्ते भूचतुरङ्गुले ।
त्रिःसप्तसंज्ञास्ते यज्ञास्त्रैलोक्यं धार्य्यते तु वै ।। १२.१३ ।।

तस्य पुष्टिरथैश्वर्य्यमायुः सन्ततिरेव च।
विचित्रा भजते लक्ष्मीर्मोक्षं च लभते क्रमात् ।। १२.१४ ।।

पाप्मापहं पावनीयमश्वमेधफलं तथा।
अश्वमेधफलं ह्येतद्द्विजैः सत्कृत्य पूजितम्।
मन्त्रं वक्ष्याम्यहं तस्मादमृतं ब्रह्मनिर्मितम् ।। १२.१५ ।।

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च।
नमः स्वधायै स्वाहायै नित्यमेव भवन्त्युत ।। १२.१६ ।।

आद्यावसाने श्राद्धस्य त्रिरावर्त्तं जपेत्सदा।
पिण्डनिर्वपणे चैव जपेदेतत्समाहितः।
पितरः क्षिप्रमायान्ति राक्षसाः प्रद्रवन्ति च ।। १२.१७ ।।

पितृंस्तत्त्रिषु लोकेषु मन्त्रोऽयं तारयत्युत।
पठ्यमानः सदा श्राद्धे नियतं ब्रह्मवादिभिः ।। १२.१८ ।।

राज्यकामो जपेदेनं सदा मन्त्रमतन्द्रितः।
वीर्य्यशौचार्थसत्त्वञ्च श्रीरायुर्बलवर्द्धनम् ।। १२.१९ ।।

प्रीयन्ते पितरो येन जप्येन नियमेन च।
सप्तार्च्चिषं प्रवक्ष्यामि सर्वकामप्रदं शुभम् ।। १२.२० ।।

अमूर्तानां समूर्तानां पितृणां दीप्त तेजसाम्।
नमस्यामि सदा तेभ्यो ध्यानिभ्यो योगचक्षुषा ।। १२.२१ ।।

इन्द्रादीनां जनयितारो भृगुमारीचयोस्तथा।
सप्तर्षीणां पितृणाञ्च तान्नमस्यामि कामदान् ।। १२.२२ ।।

मन्वादीनां सुरेशानां सूर्य्याचन्द्रमसोस्तथा।
तान्नमस्कृत्य सर्वान्वै पितृन्कुशलदायकान् ।। १२.२३ ।।

नक्षत्राणां चरादीनां पितृनथ पितामहान्।
द्यावापृथिव्योश्च तथा नमस्यामि कृताञ्जलिः ।। १२.२४ ।।

देवर्षीणाञ्जनयितृंश्च सर्वलोकनमस्कृतान्।
अभयस्य सदा दातृन्नमस्येऽहं कृताञ्जलिः ।। १२.२५ ।।

प्रजा पतेः कश्यपाय सोमाय वरुणाय च।
योगयोगेश्वरेभ्यश्च नमस्यामि कृताञ्जलिः ।। १२.२६ ।।

पितृगणेभ्यः सप्तभ्यो नमो लोकेषु सप्तसु।
स्वयम्भुवे नमश्चैव ब्रह्मणे योगचक्षुषे ।। १२.२७ ।।

एतदुक्तं ससप्तर्षिब्रह्मर्षिगणपूजितम् ।
पवित्रं परमं ह्येतच्छ्रीमद्रक्षोविनाशनम् ।। १२.२८ ।।

अनेन विधिना युक्तस्त्रीन्वरान् लभते नरः।
अन्नमायुः सुतांश्चैव ददते पितरो भुवि ।। १२.२९ ।।

भक्त्या परमया युक्तः श्रद्दधानो जितेन्द्रियः।
सप्तार्च्चिषं जपेद्यस्तु नित्यमेव समाहितः।
सप्तद्वीपसमुद्रायां पृथिव्यामेकराड्भवेत् ।। १२.३० ।।

यत्किंचित्पच्यते गेहे भक्ष्यं वा भोज्यमेव च।
अनिवेद्य न भोक्तव्यं तस्मिन्नायतने सदा ।। १२.३१ ।।

क्रमशः कीर्त्तयिष्यामि बलिपात्राण्यतः परम्।
येषु यच्च फलं प्रोक्तं तन्मे निगदतः श्रृणु ।। १२.३२ ।।

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो नाम द्वादशोऽध्यायः ।। १२ ।। *

बृहस्पतिरुवाच।।

पालाशं ब्रह्मगवर्चस्यमश्वत्थे राज्यभावना।
सर्वभूताधिपत्यं च प्लक्षे नित्यमुदाहृतम् ।। १३.१ ।।
पुष्टिकामं च न्यग्रोधं बुद्धिं प्रज्ञां धृतिं स्मृतिम्।
रक्षोघ्नं च यशस्यं च काश्मर्य्यं पात्रमुच्यते ।। १३.२ ।।
सौभाग्यमुत्तमं लोके मधुके समुदाहृतम्।
फल्गुपात्रे च कुर्वाणः सर्वान्कामानवाप्नुयात् ।। १३.३ ।।
परा द्युतिरथो कर्त्तुः प्राकाश्यं च विशेषतः ।
बिल्वे लक्ष्मीस्तथा मेधा नित्यमायुष्यमेव च ।। १३.४ ।।
क्षेत्रारामतडागेषु सर्वसस्येषु चैव हि।
वर्षेदजस्रं पर्जन्यो वेणुपात्रेषु कुर्व्वतः ।। १३.५ ।।
एतेष्वेव सुपात्रेषु ये चैवाग्रयणं ददुः।
सकृदप्यत्र यज्ञानां सर्वेषां फलमुच्यते ।। १३.६ ।।
पितृभ्यो यस्तु माल्यानि सुगन्धीनि च सर्वशः ।
सदा दद्याच्छ्रिया युक्तः स विभाति दिवाकरः ।। १३.७ ।।
गुग्गुलादींस्तथा धूपान् पितृभ्यो यः प्रयच्छति।
संयुक्तान्मधुसर्पिभ्र्यां सोऽश्वमेधफलं लभेत् ।। १३.८ ।।
धूपं गन्धगुणोपेतं कान्तं पितृपरायणम्।
लभते स्त्रीष्वपत्यानि इह चामुत्र चोभयोः।
दद्यादेव पितृभ्यस्तु नित्यमेव ह्यतन्द्रितः ।। १३.९ ।।
दीपं पितृभ्यः प्रयतः सदा यस्तु प्रयच्छति।
स लोकेऽप्रतिमं चक्षुः सदा च लभते शूभम् ।। १३.१० ।।
तेजसा यशमा चैव कान्त्या चैव बलेन च।
भुवि प्रकाशो भवति भ्राजते च त्रिविष्टपे।
अप्सरोभिः परिवृतो विमानाग्रे स मोदते ।। १३.११ ।।
गन्धान्पुष्पाणि धूपांश्च दद्यादाज्यादुतीश्च वै।
फलमूलनमस्कारैः पिदृणां प्रयतः शुचिः।
पूर्व कृत्वा द्विजान्पश्वात्पूजयेदन्नसम्पदा ।। १३.१२ ।।
श्राद्धकाले तु सततं वायुभूताः पितामहाः।
आविशन्ति द्विजान्दृष्ट्वा तस्मादेतदब्रवीमि ते ।। १३.१३ ।।
वस्त्रैरन्नैः प्रदानैस्तैर्भक्ष्यपेयैस्तथैव च।
गोभिरश्वैस्तथा ग्रामैः पूजयित्वा द्विजोत्तमान् ।। १३.१४ ।।
भवन्ति पितरः प्रीताः पूजितेषु द्विजातिषु।

तस्मादन्नेन विधिवत् पूजयेद्द्विजसत्तमान् ।। १३.१५ ।।
सव्योत्तराभ्यां पाणिभ्यां कुर्य्यादुल्लेखनं द्विजः।
प्रोक्षणञ्च तथा कुर्याच्छ्राद्धकर्म्मण्यतन्द्रितः ।। १३.१६ ।।
दर्भान्पिण्डांस्तथा भक्ष्यान्पुष्पाणि विविधानि च।
गन्धदानमलङ्कारमेकैकं निर्वपेद्बुधः ।। १३.१७ ।।
पोषयित्वा जनं सम्यग्वैश्वः स्यादुत्तरो द्विजः।
अभ्यङ्ग दर्भपिञ्जालैस्त्रिभिः कुर्याद्यथाविधि ।। १३.१८ ।।
अपसव्यं पितृभ्यश्च दद्यादन्नमनुत्तमम्।
तमुच्चार्य्याथ सर्वेषां वस्त्रार्थं सूत्रमेव च ।। १३.१९ ।।
खण्डनं पोषणं चैव तथैवोल्लेखनं तथा।
सकृदेव हि देवानां पितृणां त्रिभिरुच्यते ।। १३.२० ।।
एकं पवित्रं हस्तेन पितृन्सर्वान्सकृत्सकृत्।
चैलमन्त्रेण पिण्डेभ्यो दत्त्वा दर्शनजं हितम् ।। १३.२१ ।।
सदा सर्पिस्तिलैर्युक्तां स्त्रीन् पिण्डान्निर्वपेद्भुवि।
जानुं कृत्वा तथा सव्यं भूमौ पितृपरायणः ।। १३.२२ ।।
पितृन् पितामहांश्चैव तथैव प्रपितामहान्।
आहूय च पितृन् प्राञ्चान् पितृतीर्थेन यत्नतः।
पिण्डान्परिक्षिपेत्सम्यगपसव्यमतन्द्रितः ।। १३.२३ ।।
अन्नेनाद्भिश्च पुष्पैश्च भक्ष्यैश्चैव पृथग्विधैः।
पृथग् मातामहानान्तु केचिदिच्छन्ति मानवाः ।। १३.२४ ।।
त्रीन् पिण्डानानुपूर्व्व्येण साङ्गुष्ठान्पुष्टिवर्द्धनान् ।
जान्वन्तराभ्यां यत्नेन पिण्डान् दद्याद्यथाक्रमम् ।। १३.२५ ।।
सव्योत्तराभ्यां पाणिभ्यां धर्मे मन्त्रे च पर्य्ययः।
नमो वः पितरः सूक्ष्मैः सदा ह्येवमतन्द्रितः ।। १३.२६ ।।
दक्षिणस्यान्तु पाणिभ्यां प्रथमं पिण्डमुत्सृजेत्।
नमो वः पितरः सौम्याः पठन्नित्यमतन्द्रितः ।। १३.२७ ।।
सव्योत्तराभ्यां पाणिभ्यां धर्मे सर्व्वमतन्द्रितः।
उलूखलस्य लेखाया मुदपात्राच्च सेवनम् ।। १३.२८ ।।
क्षौमसूत्रं नवं दद्याच्छोणं कार्पासिकं तथा।
पत्रोर्णं पितृसूत्रञ्च कौशेयं परिवर्जयेत् ।। १३.२९ ।।
वर्जयेत्तद्दशां यज्ञे यदप्यहतवस्त्रजाम्।
न प्रीणन्ति तथैतानि दातुराप्यायतो भवेत् ।। १३.३० ।।
श्रेष्ठमाहुस्त्रिककुदमञ्जनं नित्यमेव च।

कृष्णेभ्यश्च तिलेभ्यश्च यत्तैलं परिरक्षितम् ।। १३.३१ ।।
चन्दनागुरुणी चोभे तमालोशीरपझकम्।
धूपं च गुग्गुलश्रेष्ठं तुरुष्कं धूपमेव च ।। १३.३२ ।।
शुक्लाः सुमनसः श्रेष्ठास्तथा पझोत्पलानि च।
गन्धवन्त्युपपन्नानि यानि चान्यानि कृत्स्नशः ।। १३.३३ ।।
जवासुमनसो भण्डीरूपकामकुरण्डकाः।
पुष्पाणि वर्जनीयानि श्राद्धकर्मणि नित्यशः ।। १३.३४ ।।
यानि गन्धादपेतानि उपगन्धीनि यानि च।
वर्जनीयानि पुष्पाणि भूतिमन्विच्छता तदा ।। १३.३५ ।।
द्विजातयस्तथान्विष्ठा नियताः स्युरुदङ्मुखाः।
पूजयेद्यजमानस्तु विधिवद्दक्षिणामुखः ।। १३.३६ ।।
तेषामभिमुखो दद्याद्दर्भान्पिण्डांश्च यत्नतः।
अनेन विधिना साक्षादर्च्चयेत् स्वान् पितामहान् ।। १३.३७ ।।
हरिता वै सपिञ्जल्याः पुष्पस्निग्धाः समाहिताः।
रत्निमात्रप्रदानेन पितृतीर्थेन संस्थिताः ।। १३.३८ ।।
उपमूले तथा नीलाः प्रस्तराद्यकुलोद्यमाः ।
तथा श्मामाकनीवारा दुर्वाराः समुदाहृताः ।। १३.३९ ।।
पूर्व्वकीर्त्तितवाञ्छ्रेष्ठो बभूवाथ प्रजापतिः ।
तस्य वाला निपतिता भूमौ चाकाशमार्गतः ।। १३.४० ।।
तस्मान्मेध्या समाकाशाः श्राद्धकर्मणि पूजिताः ।
पिण्डनिर्वपणं तेषु कर्त्तव्यं भूतिमिच्छता ।। १३.४१ ।।
प्रजापुष्टिर्द्युतिः कीर्त्तिः प्रजाकान्तिसमन्विता।
भवन्ति रुचिरा नित्यं विपाप्मानोऽघवर्जिताः ।। १३.४२ ।।
सकृदेवास्तरेद्दर्भान् पिण्डार्थं दक्षिणामुखः।
प्राग्दक्षिणाग्रनियतो विधिञ्चाप्यनुवक्ष्यति ।। १३.४३ ।।
न दीनो वापि वा क्रुद्धो न चैवान्यमना नरः।
एकाग्रमाधाय मनः श्राद्धं कुर्य्यात्सदा बुधः ।। १३.४४ ।।
निहन्मि सर्व्वं यदमेध्यवद्भवेद् हताश्च सर्व्वे सुरदानवा मया।
रक्षांसि यक्षाश्च पिशाचसङ्घा हता मया यातुधानाश्च सर्व्वे ।। १३.४५ ।।
एवं पित्रे दृष्टमन्नं हि यस्य तस्यासुरा वर्जयन्तीह सर्व्वे।
यस्मिन्देशे पठ्यते एष मन्त्रस्तं वै देशं राक्षसा वर्जयन्ति ।। १३.४६ ।।
अनेन विधिना नित्यं श्राद्धं कुर्य्याद्द्विजः सदा।
मनसा काङ्क्षितं यद्यत्तत्तद्दद्युः पितामहाः ।। १३.४७ ।।

पितरो हृष्टमनसो रक्षांसि विमनांसि च।
भवन्त्येव कृते श्राद्धे नित्यमेव प्रयत्नतः ।। १३.४८ ।।
शूद्राः श्राद्धे क्षीरवाशु बल्वजास्तरवस्तथा।
वारणाश्च लवाश्चैव लववर्षाश्च नित्यशः।
एवमादीन्यथान्यानि तृणानि परिवर्जयेत् ।। १३.४९ ।।
अञ्जनाभ्यञ्जनागन्धामानुप्रलयनं तथा ।
काशैः पुनर्भवैः कार्य्यं सर्व्वमेव फलं भवेत् ।। १३.५० ।।
काशाः पुनर्भवा ये च बर्हणा उपबर्हणाः।
अथ ते पितरो देवा देवाश्च पितरः पुनः ।। १३.५१ ।।
पुष्पगन्धादिधूपानामेष मन्त्र उदाहृतः।
आहृत्य दक्षिणायान्तु होमार्थे विप्रयत्नतः ।। १३.५२ ।।
सोमाय वै पितृमते स्वधा अङ्गिरसे नमः।
अस्वर्ग्यं लौकिकं वापि जुहुयात्कर्म्मसिद्धये ।। १३.५३ ।।
अन्तराधाय समिधं तथा होमो विधीयते।।
समाहितेन मनसा प्रयताग्निः प्रयत्नतः ।। १३.५४ ।।
अग्नये कव्यवाहाय स्वधा अङ्गिरसे नमः।
यमाय चैवाङ्गिरसे स्वधा नम इति ब्रुवन् ।। १३.५५ ।।
इत्येते वै होममन्त्रा मन्त्राणामनु पूर्व्वशः।
दक्षिणातोऽग्नये नित्यं सोमायान्तरतस्तथा ।। १३.५६ ।।
एतयोरन्तरं नित्यं जुहुयाद्वै विवस्वते।
उपचारं स्वधाकारं तथैवोल्लेखनञ्च यत् ।। १३.५७ ।।
होमजप्ये नमस्कारः प्रोक्षणञ्च विशेषतः।
अञ्जनाभ्यञ्जने चैव पिण्डसंवपनं तथा ।। १३.५८ ।।
अश्वमेधफलेनैव तत्स्मृतं मन्त्रपूर्व्वकम्।
क्रियाः सर्व्वा यथो द्दिष्टाः प्रयत्नेन समाचरेत् ।। १३.५९ ।।
बहुहव्यत्वमेवाग्नौ सुसमिद्धे विशेषतः।
विधूमे लेलिहाने च होतव्यं कर्मसिद्धये ।। १३.६० ।।
अप्रबुद्धे सधूमे च जुहुयाद्यो हुताशने।
यजमानो भवेदन्धः सोऽपुत्र इति नः श्रुतम् ।। १३.६१ ।।
अल्पेन्धनो वा रूक्षो वा विस्फुलिङ्गश्च सर्व्वशः ।
ज्वाला धूमोपसेव्यश्च स तु वह्निर्न सिद्धये ।। १३.६२ ।।
दुर्गन्धश्चैव नीलश्च कृष्णश्चैव विशेषतः।
भूमिं विगाहते यत्र तत्र विद्यात्पराभवम् ।। १३.६३ ।।

अर्चिष्मान् पिण्डितशिखः सर्पिःकाञ्चनसम्भवः।
स्निग्धः प्रदक्षिणश्चैव वह्निः स्यात्कार्य्यसिद्धये ।। १३.६४ ।।
नरनारीगणेभ्यश्च पूजां प्राप्नोति शाश्वतीम्।
अक्षयाः पूजितास्तेन भवन्ति पितरोऽव्ययाः ।। १३.६५ ।।
स्थाल्युदुम्बरपात्राणि फलानि समिधस्तथा।
श्राद्धे चातिपवित्राणि मेध्यानीति विशेषतः ।। १३.६६ ।।
पवित्रं वा द्विजश्रेष्ठ शुद्धये जन्मकर्म्मसु।
पात्रेषु फलमुद्दिष्टं यन्मया श्राद्धकर्मणि ।। १३.६७ ।।
तदेव कृत्स्नं विज्ञेयं समित्सु च यथाक्रमम्।
कृत्वा समाहितं चित्तमग्रये वै करोम्यहम् ।। १३.६८ ।।
अनुज्ञातः कुरुष्वेति तथैव द्विजसत्तमैः।
पत्नीमादाय पुत्रांश्च जुहुयाद्धव्यवाहनम् ।। १३.६९ ।।
समानप्लक्षन्यग्रोधप्लक्षाश्वत्थविकङ्कताः।
उदुम्बरास्तथा बिल्वचन्दना यज्ञियाश्च ते ।। १३.७० ।।
सरलो देवदारुश्च शालश्च खदिरस्तथा।
समिदर्थं प्रशस्ताः स्युरेते वृक्षा विशेषतः ।। १३.७१ ।।
ग्राम्याः कम्टकिनश्चैव यज्ञिया येन केन च।
पूजिताः समिदर्थे तु पितॄणां वचनं तथा ।। १३.७२ ।।
समिद्भिः कल्कलेयाभिर्ज्जुहुयाद्यो हुताशनम् ।
फलं यत् कर्मणस्तस्य तन्मे निगदतः श्रृणु ।। १३.७३ ।।
आयसं सर्व्वकामीयमश्वमेधफलं हि तत्।
श्लेष्मातको नक्तमालः कपित्थः शाल्मलिस्तथा ।। १३.७४ ।।
नीपो विभी तकश्चैव वल्लीभिश्च तथैव च।
शकुनानां निवासश्च वर्जयेच्च महीरुहान्।
अयज्ञीयाः स्मृता ये च वृक्षांश्चैव तु वर्जयेत् ।। १३.७५ ।।
स्वधेति चैव मन्त्रान्ते पितॄणां वचनं तथा।
स्वाहेति चैव देवानां यज्ञकर्मण्युदाहृतम् ।। १३.७६ ।।
इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो नाम त्रयोदशोऽध्यायः ।। १३ ।। *

।।सूत उवाच।.
देवाश्च पितरश्चैव तेभ्योऽन्ये पितरस्तथा।
आथर्वणविधिहृर्येष प्रत्युवाच बृहस्पतिः ।। १४.१ ।।

पूजयेच्च पितृन् पूर्व्वं देवाश्चापि विशेषतः।
देवेभ्योऽपि पितृन् पूर्वमर्चयन्तीह यत्नतः ।। १४.२ ।।

दक्षस्य दुहिता ख्याता लोके विश्वेति नामतः।
विधिना सा तु धर्म्मज्ञ दत्ता धर्म्माय धर्म्मतः।
तस्याः पुत्रा महात्मानो विश्वेदेवा इति श्रुतिः ।। १४.३ ।।

प्रख्यातास्त्रिषु लोकेषु सर्व्वलोकनमस्कृताः।
समस्तास्ते महात्मानश्चेरुरुग्रं महत्तपः ।। १४.४ ।।

हिमवच्छिखरे रम्ये देवगन्धर्वसेविते।
सर्व्वाप्सरोभिश्चरितं देवगन्धर्व्वसेवितम् ।। १४.५ ।।

शुद्धेन मनसा प्रीताः पितरस्तानथाब्रुवन्।
वरं वृणीध्वं प्रीताःस्म कं कामं करवामहे ।। १४.६ ।।

एवमुक्ते तु पितृभिस्तदा त्रैलोक्यभावनः।
प्रजानामधिपो ब्रह्मा विशवानितीदमब्रवीत् ।। १४.७ ।।

।।ब्रह्मोवाच।।
महातेजा महादेवस्तपसा तैस्तु तापितः।
तपसा तेन सुप्रीतः कं कामं विदधामि वः ।। १४.८ ।।

एवमुक्तास्तदा विश्वे ब्रह्मणा लोककर्तृणा।
ऊचुस्ते सहिताः सर्व्वे ब्रह्माणं लोकभाविनम् ।। १४.९ ।।

श्राद्धेऽस्माकं भवेदंशो ह्येष नः कांक्षितो वरः ।
प्रत्युवाच ततो ब्रह्मा तान्वै त्रिदिवपूजितान् ।। १४.१० ।।

भविष्यत्येवमेवेति कांक्षितो वो वरस्तु यः।
पितृभिस्तु तथेत्युक्त्वा एवमेतन्न संशयः ।। १४.११ ।।

सहास्माभिस्तु वो भाव्यं यत्किञ्चित् क्रियते त्विह।
अस्माकं कल्पिते श्राद्धे युष्मानग्रासनं ह वै ।। १४.१२ ।।

भविष्यति मनुष्येषु सत्यमेतद्ब्रवीमि ते।
माल्यैर्गन्धैस्तथान्नेन युष्मानग्रेर्जयिष्यति ।। १४.१३ ।।

प्रदाता चेति युष्माकमस्माकं दास्यते ततः।
विसर्जनमथास्माकं पूर्व्वं पश्चात्तु देवताः ।। १४.१४ ।।

रक्षणञ्चैव श्राद्धस्य आतिथ्यञ्च विधिद्वयम्।
भूतानां देवतानाञ्च पितॄणां श्राद्ध कर्मणि।
एवं विधिकृतः सम्यक् सर्व्वमेतद्भविष्यति ।। १४.१५ ।।

एवं दत्त्वा वरं तेषां ब्रह्मा पितृगणैः सह।।
भूतानुग्रहकृद्देवः सञ्चचार यथासुखम् ।। १४.१६ ।।

वेदे पञ्च महायज्ञा नराणां समुदाहृताः ।
एतान्पञ्च महायज्ञान्निर्वपेत्सततं नरः ।। १४.१७ ।।

यत्र यास्यन्ति दातारः संस्थानं वै निभोधत।
निर्भयं निरहङ्कारं निःशोकं निर्व्यथक्लमम्।
ब्रह्मस्थानमवाप्नोति सर्वकामपुरस्कृतम् ।। १४.१८ ।।

शूद्रेणापि प्रकर्त्तव्याः पञ्चैते मन्त्रवर्जिताः।
अतोऽन्यथा तु यो भुङ्क्ते स ऋणं नित्यमश्नुते ।। १४.१९ ।।

ऋणञ्च भुङ्क्ते पापात्मा यः पचेदात्मकारणात्।
तस्मान्निर्वर्त्तयेत्पञ्च महायज्ञान्सदा बुधः ।। १४.२० ।।

नैवेद्यं केचिदिच्छन्ति जीवत्यपि प्रयत्नतः।
उदक्पूर्व्वं बलिं कुर्यादुदकुम्भं तथैव च ।। १४.२१ ।।

बलिं सुविदितं कुर्यादुच्चादुच्चतरं क्षिपेत् ।
परश्रृङ्गगवां पूर्व्व बलिं सूक्ष्मं समुत्क्षिपेत् ।। १४.२२ ।।

न विनेद्यो भवेत् पिण्डः पितॄणां यस्तु जीवति।
इष्टेनान्नेन भक्ष्यैश्च भोजयेत यथाविधि।
विधानं वेदविहितमेतद्वक्ष्यामि यत्नतः ।। १४.२३ ।।

देवदेवा महात्मानो ह्येतेपि पितरो ह्युत।
इच्छन्ति किञ्चिदाचार्य्याः पश्चात् पिण्डनिवेदनम् ।। १४.२४ ।।

पूजनञ्चैव विप्राणां सर्व्वमेव हि नित्यशः।
तद्धि धर्मार्थकुशलानित्युवाच बृहस्पतिः ।। १४.२५ ।।

पूर्व्वं निवेदयेत्पिण्डं पश्चाद्विप्रांश्च भोजयेत्।
योगात्मानो महात्मानः पितरो योग सम्भवाः।
सोममाप्याययन्त्येते पितरो योगमास्थिताः ।। १४.२६ ।।

तस्माद्दद्याच्छुचिः पिण्डान् योगिभ्यस्तत्परायणः ।
पितृणां हि भवेदेतत्साक्षादिव हुतं हविः ।। १४.२७ ।।

ब्राह्मणानां सहस्रेभ्यो योगी चाग्रासने यदि।
यजमानञ्च भोक्तृंश्च नौरिवाम्भसि तारयेत् ।। १४.२८ ।।

असतां प्रग्रहो यत्र सताञ्चैव विमानना।
दण्डो देवकृतस्तत्र सद्यः पतति तारुणः ।। १४.२९ ।।

हित्वागमं सधर्माणं बालिशं यत्र भोजयेत्।
आदिकर्म समुत्सृज्य दाता तत्र विनश्यति ।। १४.३० ।।

पिण्डमग्नौ सदा दद्याद्भोगार्थी तु प्रयत्नतः ।
प्रजार्थी पत (त्न)ये दद्यान्मध्यमं तत्र पूर्वकम् ।। १४.३१ ।।

उत्तमां द्युतिमन्विच्छन् गोषु नित्यं प्रयच्छति।
प्रज्ञां पूजां यशः कीर्त्तिं गोषु नित्यं प्रयच्छति ।। १४.३२ ।।

प्रार्थयन्दीर्घमायुश्च वायसेभ्यः प्रयच्छति।
सौकुमार्यमथान्विच्छन् कुक्कुटेभ्यः प्रयच्छति ।। १४.३३ ।।

एवमेतत्समुद्दिष्टं पिण्डनिर्वपणात् फलम्।
आकाशं शमयेद्वापि स्थितौ सुदक्षिणामुखः।
पितृणां स्थानमाकाशं दक्षिणा चैव दिग्भवेत् ।। १४.३४ ।।

एकं विप्राः पुनः प्राहुः पिण्डोद्धरणमग्रतः।
अनुज्ञाते तु तैर्विप्रैर्वानमुद्वियतामिति ।। १४.३५ ।।

पुष्पाणां चफलानां च भक्ष्याणामन्नतस्तथा।
अग्रमुद्धृत्य सर्वेषां जुहुयाज्जातवेदसि ।। १४.३६ ।।

भक्ष्यमन्नं तथा पेयमनुत्तमफलानि च।
हुत्वा चाग्नौ ततः पिण्डान्निर्वपेद्दक्षिणामुखः ।। १४.३७ ।।

स्निग्धैर्भक्ष्यैः सुगन्धैश्च तर्पयेत रसैस्तथा।
एकाग्रः पर्युपासीत प्रयतः प्राञ्जलिः स्थितः।
तत्परः श्रद्दधानश्च कामानाप्नोति मानवः ।। १४.३८ ।।

अक्षुद्रत्वं कृतज्ञत्वं दाक्षिण्यं सत्कृतञ्च यत्।
ततो यज्ञञ्च दानञ्च प्रयच्छन्ति पितामहाः ।। १४.३९ ।।

अतः परं विधिं सौम्यं भुक्तवत्सु द्विजातिषु।
आनुपूर्व्येण विधिना तन्मे निगदतः श्रृणु ।। १४.४० ।।

प्रोक्ष्य भूमिमथोद्धृत्य पूर्वं पितृपरायणः।
ततोऽत्र विकिरं कुर्यात् विधिदृष्टेन कर्मणा ।। १४.४१ ।।

स्वधां वाच्य ततो विप्रा विधिवद्भूरि दक्षिणान्।
अन्नशेषमनुज्ञाप्य सत्कृत्य द्विजसत्तमान् ।
प्राञ्जलिः प्रयतश्चैव अनुगम्य विसर्जयेत् ।। १४.४२ ।।

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो नाम चतुर्दशोऽध्यायः ।। १४ ।। *

।।बृहस्पतिरुवाच।।

सकृदभ्यर्चिताः प्रीता भवन्ति पितरोऽन्ययाः।
योगात्मानो महात्मानो विपाप्मानो महौजसः ।। १५.१ ।।
प्रेत्य च स्वर्गलाभाय कामैश्वर्यं सुविस्तरम् ।
येषां चाप्यनुगृह्णन्ति मोक्षप्राप्तिक्रमेण तु ।। १५.२ ।।
तानि वक्ष्याम्यहं सौम्याः सरांसि सरितस्तथा।
तीर्थानि चैव पुण्यानि देशाञ्जैलांस्तथाश्रमान् ।। १५.३ ।।
पुण्यो यस्त्रिषु लोकेष्वमरकण्टकपर्वतः।
पर्वतः प्रवरः पुण्यः सिद्धचारणसेवितः ।। १५.४ ।।
यत्र वर्षसहस्राणि प्रयुतान्यर्बुदानि च।
तपः सुदुश्चरं तेपे भगवानङ्गिराः पुरा ।। १५.५ ।।
यत्र मृत्योर्गतिर्नास्ति तथैवासुररक्षसाम्।
न भयं चैव वाऽलक्ष्मीर्यावद्भूमिर्धरिष्यति ।। १५.६ ।।
तेजसा यशसा चैव भ्राजते स नगोत्तमः।
श्रृङ्गमाल्यवतो नित्यं वह्निः संवर्तको यथा ।। १५.७ ।।
मृदवश्च सुगन्धाश्च हेमाभाः प्रियदर्शनाः ।
शान्ताः कुशा इति ख्याताः पिबन्दक्षिणनर्मदाम् ।। १५.८ ।।
दृष्टवान् स्वर्गसोपानं भगवानङ्गिराः पुरा।
अग्निहोत्रे महातेजाः प्रस्तरार्थकुशोत्तमान् ।। १५.९ ।।
तेषु दर्भेषु यः पिण्डानमरकण्टकपर्वते।
दद्यात्सकृदपि प्राज्ञस्तस्य वक्ष्यामि यत्फलम् ।। १५.१० ।।
तद्भवत्यक्षयं श्राद्धं पितृणां प्रीतिवर्द्धनम् ।
अन्तर्द्धानं च गच्छन्ति क्षेत्रमासाद्य तत्सदा ।। १५.११ ।।
तत्र ज्वालारसः पुण्यो दृश्यतेऽद्यापि सर्वशः।
सशल्यानां च सत्त्वानां विशल्यकरणी नदी ।। १५.१२ ।।
प्राग्दक्षिणा तु सावर्त्ता वापी सा पर्वतोत्तमे।
कलिङ्गदेशपार्श्वार्द्धे पितृणां प्रीतिवर्द्धनम् ।। १५.१३ ।।
सिद्धक्षेत्रमृषिश्रेष्टा यदुक्तं परमं भुवि।
सम्मतो देवदैत्यानां श्लोकमप्युशना जगौ ।। १५.१४ ।।
धन्यास्ते पुरुषा लोके ये प्राप्यामरकण्टकम्।
पितॄन्सन्तर्पयिष्यन्ति श्राद्धे पितृपरायणाः ।। १५.१५ ।।
अल्पेन तपसा सिद्धिं गमिष्यन्ति न संशयः।
सकृदेवार्चितास्तत्र स्वर्गममरकण्टके ।। १५.१६ ।।

महेन्द्रपर्वते रम्ये पुण्यं शक्रनिषेवितम्।
तत्रारुह्य भवेत् प्रीतिः श्राद्धं चैव महत्फलम् ।। १५.१७ ।।
बिल्वाधःशिखरे युक्ता दिव्यं चक्षुः प्रवर्त्तते।
अदृश्यं चैव भूतानां देववच्चरते महीम् ।। १५.१८ ।।
सप्तगोदावरे चैव गोकर्णे च तपोवने।
अश्वमेधफलं तत्र स्नात्वा च लभतेनरः ।। १५.१९ ।।
धूतपापस्थलं प्राप्य पूतः स्नात्वा भवेन्नरः।
रुद्रस्तत्र तपस्तेपे देवदेवो महेश्वरः ।। १५.२० ।।
गोकर्णे वर्णितं विप्रैर्नस्तिकानां निदर्शनम्।
अब्राह्मणस्य सावित्री पठतः सम्प्रणश्यति ।। १५.२१ ।।
देवर्षिभवने श्रृङ्गे सिद्धचारणसेविते।
आरुह्य तं तु नियमात्ततो यान्ति त्रिविष्टपम् ।। १५.२२ ।।
दिव्यैश्वन्दनवृक्षैश्च पादपैरुपशोभितम्।
आपः स्वादनसम्पृक्ता वहन्ति सततंयतः ।। १५.२३ ।।
नदी प्रवर्त्तते ताभ्यस्ताम्रपर्णीति नामतः।
योषेव समहाखेदा दक्षिणं याति सागरम् ।। १५.२४ ।।
नद्यास्तस्यास्तु या आपो मूर्च्छमाना महोदधौ।
शङ्खा भवन्ति मुक्ताश्च जायन्ते शङ्खमुक्तिकाः ।। १५.२५ ।।
उदकानयनं कृत्वा शङ्खमौक्तिकसंयुतम्।
आधिभिर्व्याधिभिश्चैव मुक्ता यान्त्यमरावतीम् ।। १५.२६ ।।
चन्दनेभ्यः प्रयुक्तानां शङ्खानां मौक्तिकस्य च।
पाप कर्तॄनपि पितॄंश्तारयन्ति यथा श्रुतिः ।। १५.२७ ।।
चन्द्रतीर्थे कुमार्य्यान्तु कावेर्य्यां प्रभवेऽक्षये।
श्रीपर्वतस्य तीर्थेषु वैकृते च तथा गिरौ ।। १५.२८ ।।
एकस्था यत्र दृश्यन्ते वृक्षा हयोशिरपर्वते।
पालाशाः खादिरा बिल्वा प्लक्षाश्वत्थविकङ्कताः ।। १५.२९ ।।
एतद्धि मण्डलं सिद्धं यज्ञीयं द्विजसत्तमाः।
अस्मिन् मुक्त्वा जनोऽङ्गानि क्षिप्रं यात्यमरावतीम् ।। १५.३० ।।
कर्माणि स्वप्रयुक्तानि सिध्यन्ति प्रभवात्यये ।
दुष्प्रसक्तानि पितृषु प्रयुक्तानि भवन्त्युत ।। १५.३१ ।।
पितॄणां दुहिता पुण्या नर्मदा सरितां वरा।
तत्र श्राद्धानि दत्तानि अक्षयाणि भवन्त्युत ।। १५.३२ ।।
माठरस्य वने पुण्ये सिद्धचारणसेविते।

अन्तर्द्धानं न गच्छन्ति सत्त्वास्तस्मिन्महागिरौ ।। १५.३३ ।।

विन्ध्ये चैव गिरौ पुण्ये धर्माधर्मनिदर्शनम्।

पापधारां न पश्यन्ति धारां पश्यन्ति साधवः ।। १५.३४ ।।

तस्यां न दृश्यते पापं केषाञ्चित् पापकर्मणाम्।

स्पष्टा भवति सा धारा प्रायशः शुभकर्मणाम् ।। १५.३५ ।।

कौशलायां मतङ्गस्य वापी पापनिषूदनी।

स्नातास्तस्यां दिवं यान्ति कामचारविहङ्गमाः ।। १५.३६ ।।

कुमारकोशलातीर्थे पर्वते पालपञ्जरे।

पाण्डु कूले समुद्रान्ते पण्डारकवने तथा ।। १५.३७ ।।

विमले च विपापे च सत्कृत्य प्रभवेऽभये।

भीवृक्षे गृध्रकूटे च जम्बूमार्गे च नित्यशः ।। १५.३८ ।।

असितस्य गुरोः पुण्ये योगाचार्यस्य धीमतः।

तत्रापि श्राद्धमानन्त्यमसितायाञ्च नित्यशः ।। १५.३९ ।।

पुष्करेष्वक्षयं श्राद्धं तपश्चैव महाफलम्।

महोदधौ प्रभासे च तस्मादेवं विनिर्द्दिशेत् ।। १५.४० ।।

देविकायां वृषो नाम कूपः सिद्धनिषेवितः।

समुत्पतन्ति तस्यापो गवां शब्देन नित्यशः ।। १५.४१ ।।

योगेश्वरैः सदा जुष्टः सर्वपापबहिष्कृतैः।

दद्याच्छ्राद्धन्तु यस्तस्मिंस्तस्य वक्ष्यामि यत्फलम् ।। १५.४२ ।।

अक्षयं सार्वकामीयं श्राद्धं प्रीणाति वै पितॄन्।

जातवेदः शिला तत्र साक्षादग्नेः सनातनी ।। १५.४३ ।।

यस्त्वाग्निं प्रविशेत्तत्र नाकपृष्ठे स मोदते।

अग्निः शान्तः पुनर्जातस्तस्मिन्दत्तं तदक्षयम् ।। १५.४४ ।।

दशाश्वमदिके तीर्थे तीर्थे पञ्चाश्वमेधिके।

यथोद्दिष्टं फलं तेषां क्रतूनां नात्र संशयः ।। १५.४५ ।।

ख्यातं हयशिरो नाम तीर्थं सद्यो वरप्रदम्।

श्राद्धं तत्र तदाक्षय्यं दत्त्वा स्वर्गे च मोदते ।। १५.४६ ।।

श्राद्धं कुम्भे विमुच्यन्ति ज्ञेयं पापनिषूदनम्।

श्राद्धं तत्राक्षयं प्रोक्तं जप्यहोमतपांसि च ।। १५.४७ ।।

अझतुङ्गे शुभे तीर्थे तर्पयेत्सततं पितॄन्।

दृश्यते पर्वसु च्छाया यत्र नित्यं दिवौकसाम्।

पृथिव्यामक्षयं दत्तं निरुजा यत्र पाण्डवाः ।। १५.४८ ।।

योगेश्वरैः सदा जुष्टं सर्वपापबहिष्कृतैः।

दद्याच्छ्राद्धन्तु यस्तस्मिस्तस्य वक्ष्यामि यत्फलम् ।। १५.४९ ।।
अर्चितास्तेन वै साक्षाद्भवन्ति पितरः सदा।
अस्मिँल्लोके वशी यः स्यात्प्रेत्य स्वर्गे स मोदते ।। १५.५० ।।
प्रायशः प्रवरः पुण्यः शिवो नाम ह्रदस्तथा।
तत्र व्याससरः पुण्यं दिव्यं ब्रह्मसरस्तथा ।। १५.५१ ।।
उज्जन्तः पर्वतः पुण्यो वसिष्ठस्य महात्मनः।
ऋग्यजुःसामशिरसः कापोतः पुष्पसाह्वयः।
आख्यातः पञ्चमो वेदः सृष्ट्वा ह्येतेषु ब्रह्मणा ।। १५.५२ ।।
गत्वैतान् मुच्यते पापाद्द्विजो वह्निः सनातनः ।।
श्राद्धञ्चानन्त्यमेतेषु जप्य होमतपांसि च ।। १५.५३ ।।
पुण्डरीके महातीर्थे पुण्डरीकसमं फलम्।
ब्रह्मतीर्थे महातीर्थे अश्वमेधफलं लभेत् ।। १५.५४ ।।
सिन्धुसागरसम्भेदे तदा पञ्चनदेऽक्षयम् ।
कीरकात्मा ततः पुण्यो मण्डवायां च पर्वते ।। १५.५५ ।।
देयं सप्तह्रदे श्राद्धं मानसे च विशेषतः।
महाकूटे च वन्दे च गिरौ त्रिरौ त्रिककुदे तथा ।। १५.५६ ।।
सन्ध्यायां च महावेद्यां दृश्यते महदद्भुतम्।
अश्रद्दधानान्नाभ्येति साभ्येति च धृतव्रतान् ।। १५.५७ ।।
जातवेदः शिला तत्र साक्षादग्नेः सनातनी।
श्राद्धानि चाग्निकार्यं च तत्र कुर्यात् सदाक्षयम् ।। १५.५८ ।।
संश्रयित्वैकमेकेन सायाह्नं प्रति नित्यशः।
तस्मिन्देयं सदा श्राद्धं पितॄणामक्षयार्थिना ।। १५.५९ ।।
कृतात्मा वाऽकृतात्मा वा यत्र विज्ञायते नरः।
स्वर्ग्यमार्गप्रदं नाम तीर्थं सद्यो वरप्रदम्।
वैराण्युत्सृज्य तस्मिस्तु दिवं सप्तर्षयो गताः ।। १५.६० ।।
अद्यापि तानि दृश्यन्ते वैराण्येव गतानि तु।
स्नात्वा स्वर्गमवाप्नोति तस्मिस्तीर्थोत्तमे नरः ।। १५.६१ ।।
ख्यातमायतनं तत्र नन्दिसिद्ध निषेवितम्।
नन्दीश्वरस्य या मूर्त्तिर्दुराजारैर्न दृश्यते ।। १५.६२ ।।
दृश्यन्ते काञ्चना यूपाः सञ्चिष्ये भास्करोदये।
कृत्वा प्रदक्षिणं ते तु गच्छन्त्यन्तर्हिता दिवम् ।। १५.६३ ।।
सर्वतश्च कुरुक्षेत्रं सुतीर्थञ्च विशेषतः।
पुण्यं सनत्कुमारस्य योगेशस्य महात्मनः।

कीर्त्त्यते च तिलान्दत्त्वा पितृणां वै सदाऽक्षयम् ।। १५.६४ ।।
ओजसे चाक्षयं श्राद्धं धर्मराजनिवेशने।
श्राद्धं दत्तममावस्यां विधिना च यथाक्रमम् ।। १५.६५ ।।
पुनः सन्निहितानां वै कुरुक्षेत्रे विशेषतः।
अर्चयेद्वा पितॄंस्तत्र सत्पुत्रस्त्वनृणो भवेत् ।। १५.६६ ।।
विनशने सरस्वत्यां प्लक्षप्रश्रवणे तथा।
व्यासतीर्थे सरस्वत्यां ब्रह्मक्षेत्रे विशेषतः ।। १५.६७ ।।
देयमोङ्कारपठनैः श्राद्धमक्षयमिच्छता।
सर्वतश्चैव गङ्ग्यां मैनाके च नगोत्तमे ।। १५.६८ ।।
यमुनाप्रभवे चैव सर्वपापैः प्रमुच्यते ।
अत्युष्णाश्चातिशीताश्च आपस्तत्र निदर्शनम् ।। १५.६९ ।।
यमस्य भगिनी पुण्या मार्त्तण्डदुहिता तथा।
तत्राक्षयं तदा श्राद्धं पितृभिः पूर्वकीर्त्तितम् ।। १५.७० ।।
ब्रह्मानुगह्रदे स्नात्वा सद्यो भवति ब्राह्मणः।
तस्मिन् हि श्राद्धमानन्त्यं जपहोमतपांसि च ।। १५.७१ ।।
स्थाणुभूतश्चरंस्तत्र वसिष्ठो वै महातपाः।
अद्यापि यत्र दृश्यन्ते पादपा मणिचर्च्चिताः ।। १५.७२ ।।
तुला तु दृश्यते यत्र धर्माधर्मप्रदर्शिनी।
यया वै तुलितं विप्रैस्तीर्थानां फलमुत्तमम् ।। १५.७३ ।।
पितृणां दुहिता योगा गन्धकालीति विश्रुता।
चतुर्थो ब्रह्मणश्चांशः पराशरकुलोद्वहः ।। १५.७४ ।।
व्यस्य त्वेकं चतुर्द्धा तु वेदं धीमान् महामुनिः।
महायोगं महात्मानं यो व्यासं जनयिष्यति ।। १५.७५ ।।
अच्छोदकं नाम सरो यत्राच्छोदा समुच्छ्रिता ।
मत्स्ययोनौ पुनर्जाता नियोगाद्वारणेन तु ।। १५.७६ ।।
तस्या यत्राश्रमः पुण्यः पुण्यकृद्भिर्निषेवितः।
सकृद्दत्तं तु वै श्राद्धमक्षयं समुदाहृतम्।
तस्यां योग समाधाने दत्तं युगपदुद्भवेत् ।। १५.७७ ।।
कुबेरतुङ्गे व्यामोच्चे व्यासतीर्थे तथैव च।
पुण्यः स ब्राह्मणो दद्याच्छ्राद्धमानन्त्यमक्षयम् ।। १५.७८ ।।
सिद्धैस्तु सेविता नित्यं दृश्यते नाकृतात्मभिः।
अनिवर्त्तनं तु नन्दायां वेद्यां प्रागुत्तरे दिशि ।। १५.७९ ।।
सिद्धक्षेत्रं तु वै जुष्टं यत्प्राप्य न निवर्त्तते।

महालये पदं न्यस्तं महादेवेन धीमता ।। १५.८० ।।
देव्यालये तपस्तप्त्वा एकपादेन ईश्वरः।
नीहारश्च युगं दिव्यमुमातुङ्गे स्थितं जलम् ।। १५.८१ ।।
उमा तुङ्गे भृगोस्तुङ्गे ब्रह्मतुङ्गे महालये।
काद्रवत्यां च शाण्डिल्यां गुहायां वामनस्य च ।। १५.८२ ।।
गत्वा चैतानि पूतः स्याच्छ्राद्धमक्षयमेव च।
जपो होमस्तथा ध्यानं यत्किचित्सुकृतं भवेत् ।। १५.८३ ।।
ब्रह्मचर्यं यजन्ते वै गुरुभक्ताः शतं समाः ।
एवमादीनि सद्यस्तां स्नात्वा प्राप्नोति सत्फल्म् ।। १५.८४ ।।
कुमारधारा तत्रैव दृष्टा पापप्रणाशनी।
यानासनं च तत्रैव सद्यः स्याद्यत् प्रदृश्यते ।। १५.८५ ।।
शैलकीर्त्तिपुराभ्याशे कामानाप्नोति पुष्कलान्।
अदृश्यः सर्वभूतानां देववच्चरते महीम् ।। १५.८५ ।।
काश्यपस्य महातीर्थं कालसर्पिरिति श्रुतम्।
तत्र श्राद्धानि देयानि नित्यमक्षयमिच्छता ।। १५.८६ ।।
काश्यपस्य महातीर्थं कालसर्पिरिति श्रुतम्।
तत्र श्राद्धानि देयानि नित्यमक्षयमिच्छता ।। १५.८७ ।।
अक्षयं तु भवेच्छ्राद्धं शालग्रामसमन्ततः।
दृष्ट्या न दृश्यते तत्र प्रत्यक्षमकृतात्मना ।। १५.८८ ।।
प्रत्यादेशो ह्यशिष्टानां शिष्टानां च निवेशनम् ।
तत्र चैव ह्रदे पुण्ये दिव्यो वै नागराड् यतः ।। १५.८९ ।।
पिण्डं गृह्णाति हिसतां न गृह्णात्यसतां हि सः।
अतिप्रदीप्तैर्भुजगैर्भोक्तुमन्नं न शक्यते ।। १५.९० ।।
प्रत्यक्षं दृश्यते धर्मस्तीर्थयोरनयोर्द्वयोः।
देवदारुवने चापि चारयेस्तं निदर्शनम् ।। १५.९१ ।।
विधूतानि तु पापानि दृश्यन्ते सुकृतात्मना ।
भागीरथ्यां प्रयागे च नित्यमक्षय्यमुच्यते ।। १५.९२ ।।
कालञ्जरे दशार्णायां नैमिषे कुरुजाङ्गले।
वाराणस्यां नगर्यां तु देयं श्राद्धं तु यत्नतः ।। १५.९३ ।।
तस्यां योगेश्वरो नित्यं तत्तस्यां दत्तमक्षयम्।
दत्त्वा चैतेषु पूतः स्याच्छ्राद्धमानन्त्यमेव च ।। १५.९४ ।।
तपो होमस्तथा ध्यानं यत् किञ्चित्सुकृतं भवेत्।
लौहित्ये वैतरण्यां वै स्वर्णवेद्यां तथैव च ।। १५.९५ ।।

सकृदेव समुद्रान्ते दृश्यते पुण्यकर्मभिः।
गयायां धर्मपृष्ठे च सरसि ब्रह्मणस्तथा ।। १५.९६ ।।
गयायां गृध्रकूटे च श्राद्धं दत्तं महाफलम्।
हिमञ्च पतते तत्र समन्तात् पञ्चयोजनम् ।। १५.९७ ।।
भरतस्याश्रमे पुण्येऽरण्यं पुण्यतमं स्मृतम् ।
मतङ्गस्य पदं तत्र दृश्यते मांस चक्षुषा ।। १५.९८ ।।
ख्यापितं धर्म्मसर्व्वस्वं लोकस्यास्य निदर्शनम्।
एवं पञ्चवनं पुण्यं पुण्यकृद्भिर्निषेवितम्।
यस्मिन्पाण्डुविशालेति तीर्थं सद्यो निदर्शनम् ।। १५.९९ ।।
तुलामानैस्तथा चापैः शास्त्रैश्च विविधैस्तथा।
उन्मज्जन्ति तथा लग्ने ये वै पापकृतो जनाः ।। १५.१०० ।।
तृतीयायां तथा पादे निःस्वरे पावमण्डले।
महाह्रदे वै कौशिक्यां दत्तं श्राद्धं महाफलम् ।। १५.१०१ ।।
मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता।
बहून्दवेयुगांस्तप्त्वा तपस्तीव्रं सुदुश्चरम् ।। १५.१०२ ।।
अल्पेनाप्यत्र कालेन नरो धर्म्मपरायणः।
पाप्मानमुत्सृजत्याशु जीर्णत्वचमिवोरगः ।। १५.१०३ ।।
सिद्धानां प्रीतिजननैः पापा नाञ्च भयङ्करैः।
लेलिहानैर्महाभोगै रक्षितन्तु दिवानिशम् ।। १५.१०४ ।।
नाम्ना कनकनन्दीति तीर्थं त्रैलोक्यविश्रुतम्।
उदीच्यां मुण्डपृष्ठस्य देवर्षि गणसेवितम्।
तत्र स्नात्वा दिवं यान्ति कामचारा विहङ्गमाः ।। १५.१०५ ।।
दत्तं चापि तथा श्राद्धमक्षयं समुदाहृतम्।
ऋणैस्त्रिभिस्तदा स्नात्वा निक्षिणोति नरोत्तमः ।। १५.१०६ ।।
तीरे तु सरसस्तत्र देवस्यायतनं महत्।
आरुह्य तज्जपंस्तत्र सिद्धो याति दिवं ततः ।। १५.१०७ ।।
उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ।
तत्र गत्वा पुरश्रेष्ठं दृश्यते महदद्भुतम् ।। १५.१०८ ।।
तस्मिन्निर्वर्त्तयेच्छ्राद्धं यथाशक्ति यथाबलम्।
कामान् स लभते दिव्यान् मोक्षोपायं च नित्यशः ।। १५.१०९ ।।
मानसे सरसि श्रेष्ठे दृश्यते महदद्भुतम्।
दिवश्च्युता महाभागा ह्यन्तरिक्षे विराजते ।। १५.११० ।।
गङ्गा त्रिपथगा देवी सोमपादाच्च्युता भुवि।

आकाशे दृश्यते तत्र तोरणं सूर्य्यसन्निभम् ।। १५.१११ ।।
जाम्बूनदमयं दिव्यं स्वर्गद्वारमिवायतम्।
यतः प्रवर्त्तते भूयः पूर्व्वसागरमन्तिमम् ।। १५.११२ ।।
पावनी सर्व्वभूतानां धर्मज्ञानां विशेषतः।
चन्द्रभागा च सिन्धुश्च उभौ मानससन्निभौ।
सागरं पश्चिमं याति दिव्यसिन्धुर्नदीवरः ।। १५.११३ ।।
पर्व्वतो हिमवान्नाम नानाधातुविभूषितः।
योजनानां सहस्राणि आयतोऽशीतिरुच्यते ।। १५.११४ ।।
सिद्धचारणसङ्कीर्णः सिद्धचारणसेवितः।
तत्र पुष्करिणी रम्या सुषुम्ना नाम विश्रुता ।। १५.११५ ।।
दशवर्षसहस्राणि तत्र जातस्तु जीवति।
श्राद्धं भवति चानन्त्यं तस्यां दत्तं महोदयम्।
तारयेच्च यदा श्राद्धं दशपूर्व्वान्दशापरान् ।। १५.११६ ।।
सर्व्वं पुण्यं हिमवतो गङ्गा पुण्या च सर्व्वतः।
समुद्रगाः समुद्राश्च सर्व्वे पुण्याः समन्ततः ।। १५.११७ ।।
एवमादिषु सर्व्वेषु श्राद्धं निर्वर्त्तयेद्बुधः ।
पूतो भवति स्नात्वा नु दत्त्वा दत्त्वा तथैव च ।। १५.११८ ।।
शैलसानुषु तुङ्गेषु कन्दरेषु गुहासु च।
उपह्वरनितम्बेषु तथा प्रस्रवणेषु च ।। १५.११९ ।।
पुलिनेष्वापगानां च तथैव प्रभवे युगे।
महोदधौ गवां गोष्ठे सङ्गमेषु वनेषु च ।। १५.१२० ।।
असंसृष्टोपलिप्तासु हृद्यासु सुरभीषु च।
गोमयेनोपलिप्तेषु विविक्तेषु गृहेषु च ।। १५.१२१ ।।
कुर्य्याच्छ्राद्धमथैतेषु नित्यमेव यथाविधि।
प्रदक्षिणं दिशं गत्वा सर्व्वकामचिकीर्षवः ।। १५.१२२ ।।
एवमेतेषु सर्व्वेषु श्राद्धं कुर्य्यादतन्द्रितः।
एवमेव तु मेधावी ब्राह्मीं सिद्धिमवाप्नुयात् ।। १५.१२३ ।।
त्रैवर्ण्ये विहिते स्थाने धर्म्मवर्णाश्रमे तथा।
कोपस्थानस्य संत्यागात्प्राप्यते पितृपूजनम् ।। १५.१२४ ।।
तीर्थान्यनुसरन् धीरः श्रद्दधानो जितेन्द्रियः।
कृतपापश्च शुद्ध्येत किं पुनः शुभकर्म्मकृत् ।। १५.१२५ ।।
तिर्यग्योनिं न गच्छेच्च कुदेशे न च जायते।
स्वर्गी भवति वै विप्रो मोक्षोपायं च विन्दति ।। १५.१२६ ।।

अश्रद्दधानाः पाप्मानो नास्तिकाः स्थितसंशयाः।
हेतुद्रष्टा च पञ्चैते न तीर्थफलमश्नुते ।। १५.१२७ ।।
गुरुतीर्थे परा सिद्धिस्तीर्थानां परमं पदम् ।
ध्यानं तीर्थपरं तस्माद्ब्रह्मतीर्थं सनातनम् ।। १५.१२८ ।।
उपवासात्परं ध्यानमिन्द्रियाणां निवर्त्तनम्।
उपवासनिबद्धा हि प्राणैरिह पुनः पुनः ।। १५.१२९ ।।
प्राणापानौ समौ कृत्वा विषयाणीन्द्रियाणि च ।
बुद्धिं मनसि संयम्य सर्व्वेषां तु निवर्त्तनम् ।। १५.१३० ।।
प्रत्याहारं पुनर्विद्धि मोक्षोपायमसंशयम्।
इन्द्रियाणां मनो घोरं बुद्ध्यादीनां प्रवर्त्तनम् ।। १५.१३१ ।।
अनाहारात्क्षयं याति विद्यादनशनं तपः।
निग्रहाद्बुद्धिमनसो रम्या बुद्धिस्तु जायते ।। १५.१३२ ।।
क्षीणेषु सर्व्वपापेषु क्षीणेष्वेवेन्द्रियेषु च।
परिनिर्वाति शुद्धात्मा यथा वह्निर्निरिन्धनः ।। १५.१३३ ।।
कारणेभ्यो गुणेभ्योऽथ व्यक्ताव्यक्तस्य कृत्स्नशः।
वियोजयति क्षेत्रज्ञं तेभ्यो योगेन योगवित् ।। १५.१३४ ।।
तस्य नास्ति गतिस्थानं व्यक्ताव्यक्तं न संशयः।
आसन्नः सदसन्नैव नैव किञ्चित् स्थित इति ।। १५.१३५ ।।
इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे तीर्थयात्रा नाम पञ्चदशोऽध्यायः ।। १५ ।। *

।।बृहस्पतिरुवाच।।
अतः परं प्रवक्ष्यामि दानानि च फलानि च।
श्राद्धकर्म्माणि मेध्यानि वर्जनीयानि यानि च ।। १६.१ ।।

हिमप्रपतने कुर्य्यादाहरेद्वा हिमन्ततः।
अग्निहोत्रमतः पुण्यं परमं हि ततः स्मृतम् ।। १६.२ ।।

नक्तन्तु वर्जयेच्छ्राद्धं राहोरन्यत्र दर्शनात्।
सर्व्वस्वेनापि कर्त्तव्यं क्षिप्रं वै राहुदर्शने ।। १६.३ ।।

उपरागे न कुर्य्याद्यः पङ्के गौरिव सीदति।
कुर्वाणस्तूद्धरेत्पापान्मग्नान्नौरिव सागरे ।। १६.४ ।।

विश्वदेवञ्च सौम्यञ्च बहुमांसपरं हविः ।
विषाणं वर्जयेत्खाड्गमसूयानाशनाय वै ।। १६.५ ।।

त्वष्टा वै वार्य्यमाणस्तु देवेशेन महात्मना।
पिबञ्छचीपतेः सोमं पृथिव्यामपतत्पुरा ।। १६.६ ।।

श्यामाकास्तु तथोत्पन्नाः पित्रर्थमपि पूजिताः।
विप्रुषस्तस्य नासाभ्यामसक्ताभ्यां तथैव च ।। १६.७ ।।

श्लेष्माणः शीतला हृद्या मधुराश्च तथेक्षवः।
श्यामाकैरिक्षुभिश्चैव पितृणां सार्व्वकामिकम्।
कुर्य्यादाग्रयणं यस्तु स शीघ्रं सिद्धिमाप्नुयात् ।। १६.८ ।।

श्यामाका हस्तिनामा च पटोलं बृहतीफलम्।
अगस्त्यस्य शिखा तीव्रा कषायाः सर्व्व एव च ।। १६.९ ।।

एवमातीनि चान्यानि स्वादूनि मधुराणि च ।
नागरं चात्र वै देयं दीर्घमूलकमेव च ।। १६.१० ।।

वंशीकरीराः सुरसाः सर्ज्जकं भूस्तृणानि च।
वर्जनीयानि वक्ष्यामि श्राद्धकर्म्मणि नित्यशः ।। १६.११ ।।

लशुनं गृञ्जनञ्चैव पलाण्डुः पिण्डमूलकम्।
करम्भाद्यानि चान्यानि हीनानि रसगन्धतः ।। १६.१२ ।।

श्राद्धकर्म्मणि वर्ज्यानि कारणञ्चात्र वक्ष्यते।
पुरा देवासुरे युद्धे निर्जितस्य बलेः सुरैः ।। १६.१३ ।।

व्रणेभ्यो विस्फुरन्तो वै पतिता रक्तबिन्दवः।

तत एतानि वर्ज्यानि श्राद्धकर्म्मणि नित्यशः ।। १६.१४ ।।

अथ वेदोक्तनिर्यासान् लवणान्यूषरणानि च।
श्राद्ध कर्म्मणि वर्ज्यानि याश्च नार्यो रजस्वलाः ।। १६.१५ ।।

दुर्गन्धं फेनिलं चैव तथा वै पल्वलोदकम्।
न लभेद्यत्र गौस्तृप्तिं नक्तं यच्चैव गृह्यते ।। १६.१६ ।।

आविकं मार्गमौष्ट्रं च सर्व्वमेकशफं च यत्।
माहिषञ्चामरञ्चैव पयो वर्ज्यं विजानता ।। १६.१७ ।।

अतः परं प्रवक्ष्यामि वर्ज्यान् देशान् प्रयत्नतः।
न द्रष्टव्यं च यैः श्राद्धं शौचाशौचं च कृत्स्नशः ।। १६.१८ ।।

वन्यमूलफलाहारैः श्राद्धं कुर्य्यात्तु श्रद्धया।
राष्ट्रमिष्टमवाप्नोति स्वर्गं मोक्षं यशस्करम् ।। १६.१९ ।।

अनिष्ट शब्दसङ्कीर्णं जन्तुव्याप्तमथापि वा।
पूतिगन्धां तथा भूमिं श्राद्धकर्म्मणि वर्जयेत् ।। १६.२० ।।

नद्यः सागरपर्य्यन्ता द्वारं दक्षिणपूर्व्वतः ।
त्रिशङ्कुं वर्जयेद् देशं सर्व्वं द्वादशयोजनम् ।। १६.२१ ।।

उत्तरेण महानद्या दक्षिणेन च कैकटात्।
देशस्त्रैशङ्कवो नाम वर्जितः श्राद्धकर्म्मणि ।। १६.२२ ।।

कारङ्कराः कलिङ्गाश्च सिन्धोरुत्तरमेव च।
प्रनष्टाश्रमधर्म्माश्च वर्ज्या देशाः प्रयत्नतः ।। १६.२३ ।।

नग्नादयो न पश्येयुः श्राद्धमेव व्ययस्थितम्।
गच्छन्ति तैस्तैर्दृष्टानि न पितॄन्न पितामहान् ।। १६.२४ ।।

।।शंयुरुवाच।।
नग्नादीन् भगवन् सम्यङ्ममाद्य परिपृच्छतः।
कथय द्विजमुख्याग्र विस्तरेण यथातथम् ।। १६.२५ ।।

एवमुक्तो महातेजा बृहस्पतिरुवाच तम्।
सर्वेषामेव भूतानां त्रयीसंवरणं स्मृतम् ।। १६.२६ ।।

परित्यजति यो मोहात्ते वै नग्ना द्विजोत्तमाः।
प्रलीयते नरो यः स्यान्निरालम्बश्च यो वृषः ।। १६.२७ ।।

वृषं यश्च परित्यज्य मोक्षमन्यत्र मार्गति ।
वृषो वेदसमस्तस्मिन् यो वै सम्यङ्न पश्यति ।। १६.२८ ।।

ब्राह्मणाः क्षत्रिया वैश्या वृषलाश्चैव सर्व्वशः।
पुरा देवासुरे युद्धे निर्जितैरसुरैस्तदा ।। १६.२९ ।।

पाषण्डवैकृतस्थाने नैषा सृष्टिः स्वयम्भुवा।
द्विश्राद्धकश्च निर्ग्रन्थाः शाक्या पुष्टिकलंशकाः ।। १६.३० ।।

ये धर्म्मं नानुवर्त्तन्ते ते वै नग्नादयो जनाः।
वृथाजटी वृथामुद्री वृथानग्नश्च यो द्विजः ।। १६.३१ ।।

वृथाव्रती वृथा जापी ते वै नग्नादयो जनाः।
कुलन्धमा निषादाश्च तथा पुष्टिविनाशकाः ।। १६.३२ ।।

कृतकर्म्माक्षितास्त्वेते कुपथाः परिकीर्त्तिताः।
एभिर्निर्वृत्तं दृष्टं वा श्राद्धं गच्छन्ति मानवाः ।। १६.३३ ।।

ब्रह्मघ्नश्च कृतघ्नश्च नास्तिका गुरुतल्पगाः।
दस्यवश्च नृशंसाश्च दर्शनेनैव वर्जिताः ।। १६.३४ ।।

ये चान्ये पाप कर्म्माणः सर्व्वांस्तान् परिवर्जयेत्।
देवदेवर्षिनिन्दायां रतांश्चैव विशेषतः ।। १६.३५ ।।

असुरान् यातुधानांश्च दृष्टमेभिर्व्रजन्त्युत।
ब्राह्मं कृतयुगं प्रोक्तं त्रेता तु क्षत्रियं स्मृतम् ।। १६.३६ ।।

वैश्यं द्वापरमित्याहुः शूद्रं कलियुगं स्मृतम् ।।

।।पितर ऊचुः ।।

वेदाः कृतयुगे पूज्यास्त्रेतायां तु सुरास्तथा ।। १६.३७ ।।

युद्धानि द्वापरे नित्यं पाषण्डाश्च कलौ युगे।
अपमानापवित्रश्च कुक्कुटो ग्रामसूकरः ।। १६.३८ ।।

श्वा चैव दर्शनादेव हन्ति श्राद्धं न संशयः।
शावसूतकसंस्पृष्टो दीर्घरोगिभिरेव च ।। १६.३९ ।।

मलिनैः पतितैश्चैव न द्रष्टव्यं कथञ्चन।
अन्नं पश्येयुरेते वै नैतत्स्याद्धव्यकव्ययोः ।। १६.४० ।।

तत्संस्पृष्टं प्रधानार्थं संस्कारश्वापदो भवेत्।

हविषां संहतानां तु पूर्व्वमेव विवर्जितम्।
मृत्संयुक्ताभिरद्भिश्च प्रोक्षणं च विधीयते ।। १६.४१ ।।

सिद्धार्थकैः कृष्णतिलैः कार्य्यं वाप्यवकीरणम्।
गुरुसूर्य्याग्निवस्तूनां दर्शनं वापि यत्नतः ।। १६.४२ ।।

आसनारूढमानेषु पादोपहतमेव च।
अमेध्यैर्जङ्गमैर्दृष्टं शुष्कं पर्युषितं च यत् ।। १६.४३ ।।

असितं परिदुष्टं च तथैवाग्रावलेहितम्।
शर्कराकेशपाषाणैः कीटैर्यच्चाप्युपद्रुतम् ।। १६.४४ ।।

पिण्याकमथितं चैव तथा तिलयवादिषु।
सिद्धाक्षताश्च ये भक्ष्याः प्रत्यक्षलवणीकृताः ।। १६.४५ ।।

वाससा चावधूतानि वर्ज्यानि श्राद्धकर्मणि।
सन्ति वेदविरोधेन केचिद्विज्ञानमानिनः ।। १६.४६ ।।

अजज्ञपतयो नाम ते श्राद्धस्य यथा रजः।
दधि शाकं तथाऽभक्ष्याः शुक्तं चैव विवर्जितम् ।। १६.४७ ।।

वार्ताकुं वर्जयेद्दद्यात्सर्वानभिषवानपि।
सैन्धवं लवणं यच्च तथा मानससम्भवम् ।। १६.४८ ।।

पवित्रं परमं ह्येतत् प्रत्यक्षमपि वर्त्तते।
अग्नौ निक्षिप्य बध्नीयाद्धस्तौ प्रक्षिप्य यत्नतः ।। १६.४९ ।।

गमयेन्मस्तकं चैव ब्रह्मतीर्थं हि तत्स्मृतम्।
द्रव्याणां प्रोक्षणं कार्य्यं तथैवावपनं पुनः ।। १६.५० ।।

निधाय चाद्भिः सिञ्चेत तथैवाप्सु निवेशनम्।
अरिष्टतुमुले बिल्वं त्विङ्गुदश्वदनान्यपि ।। १६.५१ ।।

विदलानाञ्च सर्व्वेषां धर्मवच्छौचमिष्यते।
तथा दन्तास्थिदारूणां श्रृङ्गाणाञ्चावलेखनम् ।। १६.५२ ।।

सर्वेषां मृन्मयानान्तु पुनर्दाह उदाहृतः।
मणिवज्रप्रवालानां मुक्ताशङ्खमणेस्तथा ।। १६.५३ ।।

सिद्धार्थकानां कल्केन तिलकल्केन वा पुनः ।
स्याच्छौचं सर्ववालानामाविकानाञ्च सर्वशः ।। १६.५४ ।।

आवि कानाञ्च सर्व्वेषां मृद्भिरद्भिर्विधीयते।
आद्यन्तयोस्तु शौचानामद्भिः प्रक्षालनं पुनः ।। १६.५५ ।।

तथा कार्प्पासिकानाञ्च भस्मना समुदाहृतम्।
फलपुष्प शलाकानां प्लावनञ्चाद्भिरिष्यते ।। १६.५६ ।।

संमार्जनं प्रोक्षणञ्च भूमेश्चैवोपलेपनम्।
निष्क्रम्य बाह्यतो ग्रामाद्वायुपूता वसुन्धरा ।। १६.५७ ।।

धनुष्मत्पक्षिणाञ्चैव मृद्भिः शौचं विधीयते।
एवमेष समुद्दिष्टः शौचानां विधिरुत्तमः।
अतः परं प्रवक्ष्यामि तन्मे निगदतः श्रृणु ।। १६.५८ ।।

प्रातर्गृहात्पश्चिमदक्षिणेन इषुक्षेपञ्चाक्षमात्रं पदञ्च।
कुर्य्यात्पुरीषं शिरोवगुण्ठ्य न च स्पृशेत्तत्र शिरः करेण ।। १६.५९ ।।

शुष्कैस्तृणैर्वा काष्ठैर्वा पत्रैर्वेणुदलेन वा।
मृण्मयैर्भाजनैर्वापि तिरोधाय वसुन्धराम् ।। १६.६० ।।

उद्धृतोदकमादाय मृत्तिकाञ्चैव वाग्यतः।
दिवा उदङ्मुखः कुर्य्याद्रात्रौ वै दक्षिणामुखः ।। १६.६१ ।।

दक्षिणेन च हस्तेन गृह्णीयाद्वै कमण्डलुम्।
शौचञ्च वामहस्तेन गुदे तिस्रस्तु मृत्तिकाः ।। १६.६२ ।।

दश चापि पुनर्दद्याद्वामहस्तक्रमेण तु ।
द्वाभ्यां वापि पुनर्दद्याद्धस्तानां पञ्च मृत्तिकाः ।। १६.६३ ।।

मृदा प्रक्षाल्य पादौ च आचम्य च यथाविधि।
आपस्त्याज्यास्त्रयश्चैव सूर्य्याग्निपवनाम्भसाम् ।। १६.६४ ।।

कुर्य्यात् सन्निहितं नित्यं प्राज्ञस्तीर्थे कमण्डलुम्।
असत्कार्यं कार्यमेतैर्यथावत्पादधावनम् ।। १६.६५ ।।

आचमनं द्वितीयेन देवकार्यं ततः परम्।
उपवास स्त्रिरात्रन्तु दुष्टहस्ते ह्युदाहृतः ।। १६.६६ ।।

विप्रकृष्टेन कृच्छ्रेण प्रायश्चित्तमुदाहृतम्।
स्पृष्ट्वा श्वानं श्वपाकं वा तप्तकृच्छ्रं समाचरेत् ।। १६.६७ ।।

मानुषास्थीनि संस्पृश्य उपोष्यं शुद्धिकारणम् ।
त्रिरात्रमुक्तं सस्नेहमेकरात्रमतोऽन्यथा ।। १६.६८ ।।

कारस्कराः पुलिन्दाश्च तथान्धशबरादय।
पीत्वा चापोभूतिलये गत्वा चैव युगन्धराम् ।। १६.६९ ।।

सिन्धोरुत्तरपर्य्यन्तं तथा दिव्यन्तरे शतम्।
पापदेशाश्च ये केचित्पापरध्युषिता जनैः ।। १६.७० ।।

शिष्टैश्च वर्जिता ये च ब्राह्मणैर्वेदपारगैः।
गत्वा देशानपुण्यांस्तु कृत्स्नं पापं समश्नुते ।। १६.७१ ।।

मनोव्यक्तिरथाग्निश्च काले चैवोपलेपनम्।
विख्यापनञ्च शौचानां नित्यमज्ञानमेव च ।। १६.७२ ।।

अतोन्यथा तु यः कुर्य्यान्मोहाच्छौचस्य सङ्करम्।
पिशाचान् यातुधानांश्च फलं गच्छत्यसंशयम् ।। १६.७३ ।।

शौचमश्रद्दधानश्च म्लेच्छजातिषु जायते।
अयज्ञाश्चैव पापो वा तिर्य्यग्योनिगतोऽपि वा ।। १६.७४ ।।

शौचेन मोक्षं कुर्वाणः स्वर्गवासी भवेन्नरः।
शुचिकामा हि देवा वै देवैरेतदुदाहृतम् ।। १६.७५ ।।

बीभत्समशुचिञ्चैव वर्जयन्ति सुराः सदा।
त्रीणि शौचानि कुर्वन्ति न्यायतः शुभकर्मणः ।। १६.७६ ।।

ब्रह्मण्यायातिथेयाय शौचयुक्ताय धीमते।
पितृभक्ताय दान्ताय सानुक्रोशाय च द्विजाः ।। १६.७७ ।।

तैस्तैः प्रीताः प्रयच्छन्ति पितरो योगवर्द्धनाः।
मनसा कांक्षितान् कामांस्त्रैलोक्यप्रभवानिति ।। १६.७८ ।।

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पो नाम षोडशोऽध्यायः ।। १६ ।। *

।।ऋषय ऊचुः।।
अहो धीमंस्त्वया सूत श्राद्धकल्पस्तु कीर्तितः।
श्रुतो नः श्राद्धकल्पो वै ऋषिभिः परिकीर्तितः ।। १७.१ ।।

अतीव विस्तरो यस्य विशेषेण प्रकीर्तितः।
वद शेषं महाप्राज्ञ ऋषेस्तस्य यथामतम् ।। १७.२ ।।

।।सूत उवाच।।
कीर्तयिष्यामि ते विप्रा ऋषेस्तस्य मतन्तु तत्।
श्राद्धं प्रति महाभागास्तन्मे श्रृणुत विस्तरात् ।। १७.३ ।।

उक्तं श्राद्धं मया पूर्वं विधिश्च श्राद्धकर्म्मणि।
परिशिष्टं प्रवक्ष्यामि ब्राह्मणानां यथाक्रमम् ।। १७.४ ।।

न मीमांस्याः सदा विप्राः पवित्रं ह्येतदुत्तमम्।
दैवे पित्र्ये च सततं श्रूयते वै परीक्षणम् ।। १७.५ ।।

यस्मिन् दोषाः प्रदृश्येरन् सद्भिर्वा वर्जितस्तु यः।
जानीयाद्वापि संवासाद्वर्ज्जयेत्तं प्रयत्नतः ।। १७.६ ।।

अविज्ञातं द्विजं श्राद्धे परीक्षेत सदा बुधः ।
सिद्धा हि विप्ररूपेण चरन्ति पृथिवीमिमाम् ।। १७.७ ।।

तस्मादतिथिमायान्तमभिगच्छेत् कृताञ्जलिः।
पूजयेच्चापि पाद्येन पादाभ्यञ्जनभोजनैः ।। १७.८ ।।

उर्वीं सागरपर्यन्तां देवा योगेश्वरास्तथा।
नाना रूपैश्चरन्त्येते प्रजा धर्म्मेण पालयन् ।। १७.९ ।।

अर्चयित्वा ततो दद्याद्विप्रायातिथये नरः।
व्यञ्जनानि च भक्ष्याणि फलं तेषां तथैव च ।। १७.१० ।।

आग्निष्टोमं तु पयसा प्राप्नुयाद्वै तथाश्रुतम्।
सर्पिषा तु शुभं चक्षुः षोडशाहफलं लभेत्।
मधुना त्वतिरात्रस्य फलं च समवाप्नुयात् ।। १७.११ ।।

तत्प्राप्नुयाच्छ्रद्दधानो नरो वै सर्वैः कामैर्भोजयेद्यस्तु विप्रान्।
सर्वार्थदः सर्वविप्रातिथौ यः फलं भुङ्क्ते सर्वमेधस्य नित्यम् ।। १७.१२ ।।

यस्तु श्राद्धेऽतिथिं प्राप्य दैवे वाप्यवमन्यते।
तं वै देवा विश्वयन्ति होता यद्वत् परां वसुम् ।। १७.१३ ।।

देवाश्च पितरश्चैव वह्निश्चैव हि तान् द्विजान् ।
आविश्य भुञ्जते तद्वै लोकानुग्रहकारणात् ।। १७.१४ ।।

अपूजिता दहन्त्येते दद्युः कामांश्च पूजिताः।
सर्वस्वेनापि तस्माद्वै पूजयेदतिथीन् सदा ।। १७.१५ ।।

वानप्रस्थो गृहस्थश्च गृहमभ्यागतोऽथवा।
बालाः खिन्ना यतिश्चैव जानीयादतिथीन् सदा ।। १७.१६ ।।

अभ्यागतो याचकः स्यादतिथिः स्यादयाचकः।
अतिथेरतिथिः श्रेष्ठः सोऽतिथिर्योग उच्यते ।। १७.१७ ।।

न घोरो नापि सङ्कीर्णो नाविद्यो न विशेषवित्।
न च सन्तो न समृद्धो न सेवी नाचरोऽतिथिः ।। १७.१८ ।।

पिपासिताय श्रान्ताय भ्रान्तायातिबुभुक्षते।
तस्मै सत्कृत्य दातव्यं यज्ञस्य फलमिच्छता ।। १७.१९ ।।

आरुह्य भृगुतुङ्गोषु गत्वा पुण्यां सरस्वतीम्।
आपगां तु नदी पुण्यां गङ्गा देवी महानदी ।। १७.२० ।।

हिमवत्प्रभवा नद्यो याश्चान्या ऋषिपूजिताः ।
सरस्तीर्थाभिसंवेद्या नदी नववहास्तथा ।। १७.२१ ।।

गत्वैतान् मुच्यते पापैः स्वर्गे नित्यं महीयते।
दशरात्रमशौचन्तु प्रोक्तं वै मृतसूतके ।। १७.२२ ।।

ब्राह्मणस्य विशेषेण क्षत्रिये द्वादश स्मृतम्।
अर्द्धं मासन्तु वैश्यस्य मासाच्छूद्रस्तु शुध्यति ।। १७.२३ ।।

उदक्या सर्ववर्णानां त्रिरात्रेण तु शुद्धयति।
उदक्यां सूतिकाञ्चैव श्वानमन्त्यावसायिनम् ।। १७.२४ ।।

नग्नादीन् मृतहारांश्च स्पृष्ट्वाऽशौचं विधीयते।
स्नात्वा सचैलो मृद्भिस्तु द्वादशभिस्तु शुध्यति ।। १७.२५ ।।

एतदेव भवेच्छौचं मैथुने नवभिस्तथा।
मृदा प्रक्षाल्य हस्तौ तु कुर्याच्छौचविधिन्नरः ।। १७.२६ ।।

प्रक्षाल्य चाद्भिर्हस्तौ च स्नात्वा चैव मृदा पुनः।
मृदं गुह्ये ततो द्विस्तु पुनरेव मृदं बुधः ।। १७.२७ ।।

एवं शौच विधिर्दृष्टः सर्ववर्णेषु नित्यदा।
परिदद्यान्मृदस्तिस्रो हस्तपादावसेचनम् ।। १७.२८ ।।

आरण्यं शौचमेतत्तु ग्राम्यं वक्ष्याम्यतः परम्।
मृदस्तिस्रः पादयोस्तु हस्तयोस्तिस्र एव च ।। १७.२९ ।।

मृदः पञ्चदशामेध्ये हस्तादीनां विभागशः।
अनिर्णिक्ते मृदं दद्यान्मृदन्ते त्वद्भिरेव तु ।। १७.३० ।।

कण्ठं शिरो वा प्रावृत्य रथ्या पादगतस्तु वा।
अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ।। १७.३१ ।।

प्रक्षाल्य पात्रं निःक्षिप्य आचम्याभ्युक्षणं पुनः।
द्रव्यस्यान्यस्य तु तथा कुर्यादभ्युक्षणं पुनः ।। १७.३२ ।।

पुष्पादीनां तृणानाञ्च प्रोक्षणं हविषान्तथा।
पराहृतानां द्रव्याणां निधायाभ्युक्षणं तथा ।। १७.३३ ।।

प्रोक्षितन्तु हरेत् किञ्चि च्छ्राद्धे दैव तथा पुनः।
उत्तरेण हरेद्वेद्यां दक्षिणेन विसर्जयेत् ।। १७.३४ ।।

विच्छिन्नं स्याद्विपर्यासे दैवे पित्र्ये तथैव च।
दक्षिणेन तु हस्तेन दक्षिणां वेदिमालिखेत् ।। १७.३५ ।।

कराभ्यामेव देवानां पितृणां विकरं शुभम्।
क्षुभितस्वप्नयोश्चैव तथा मूत्रपुरीषयोः ।। १७.३६ ।।

निष्ठीविते यथा व्यक्ते भुक्त्वा विपरिधाय च।
उच्छिष्टस्य च संस्पर्शे तथा पादावसेचने ।। १७.३७ ।।

उत्सृष्टस्य सुमम्भाषे ह्यशुचिं प्रयतस्य च।
सन्देहेषु च सर्वेषु शिखां मुक्त्वा तथैव च ।। १७.३८ ।।

विना यज्ञोपवीतेन मोहात्तु यद्युपस्पृषेत्।
औष्ठस्य दन्तसंस्पर्शे दर्शने चान्त्यवासिनाम् ।। १७.३९ ।।

जिङ्वया चैव संस्पृश्य दन्तासक्तं तथैव च।
सशब्दमङ्गुलीभिश्च प्रणतश्चावलो कयन् ।। १७.४० ।।

यश्चाधर्मे स्थितो मोहादायान्तोऽप्यशुचिर्भवेत्।
उपविश्य शुचौ देशे प्रणतः प्रागुदङ्मुखः ।। १७.४१ ।।

पादौ प्रक्षाल्य हस्तौ तु अन्तर्जानुरुप स्पृशेत्।
प्रसन्नास्त्रिः पिबेच्चापः प्रयतः सुसमाहितः ।। १७.४२ ।।

द्विरेव मार्जनं कुर्यात्सकृदभ्युक्षणं ततः।
खानि मूर्द्धानमात्मानं हस्तौ पादौ तथैव च ।। १७.४३ ।।

अभ्युक्षणं तथा तस्य यद्यमीमांसितं भवेत्।
एवमाचमनं तस्य वेदा यज्ञास्तपांसि च ।। १७.४४ ।।

दानानि ब्रह्मचर्यञ्च भवन्ति सफलास्तथा।
क्रियां यः कुरुते मोहादनाचम्यैव नास्तिकः ।। १७.४५ ।।

भवन्ति च वृथा तस्य क्रिया ह्येता न संशयः।
वाग्भावशुद्धनिर्णिक्तमदुष्टं वाप्यनिन्दितम् ।। १७.४६ ।।

मेध्यान्येतानि ज्ञेयानि दुष्टमेभ्यो विपर्ययः।
न वक्तव्यः सदा विप्रः क्षुधितो नास्ति किञ्चन ।। १७.४७ ।।

तस्मै सत्कृत्य यो दद्यादयूपो यज्ञ उच्यते।
अप्लुष्टान्नं श्रृतान्नन्तु कृशवृत्तिमयाचकम् ।। १७.४८ ।।

एकान्तशीलं ह्रीमन्तं सदा श्राद्धेषु भोजयेत् ।
यो ददात्यान्तिमभ्येश्च स ब्रह्मघ्नो दुरात्मवान् ।। १७.४९ ।।

अपि जातिशतं गत्वा न स मुच्येत किल्बिषात्।
विषमं भोजयेद्विप्रानेकपंक्त्या च यो नरः ।। १७.५० ।।

नियुक्तो वाऽनियुक्तो वा पंक्त्या हरति दुष्कृतम्।
पापेन गृह्यते क्षिप्रमिष्टापूर्तं च नश्यति ।। १७.५१ ।।

यतिस्तु सर्व्वविप्राणां सर्व्वेषामग्र्य उत्सवे।
इतिहासपञ्चमान् वेदान् यः पठेत्तु द्विजोत्तमः ।। १७.५२ ।।

अनन्तरं यथायोग्यं नियोक्तव्यो विजानता।
त्रिवेदोऽनन्तरस्तस्य द्विवेदस्तदनन्तरः ।। १७.५३ ।।

एकवेदस्तथा पश्चान्न्यायाध्यायी ततः परम्।
पावनायैव पंक्त्या वै तान् प्रवक्ष्ये निबोधत ।। १७.५४ ।।

य एते पूर्व्वनिर्द्दिष्टाः सर्व्वे ते ह्यनुपूर्व्वशः।
षडङ्गी विनयी योगी सर्व्वतन्त्रस्तथैव च ।। १७.५५ ।।

यायावरश्च पञ्चैते विज्ञेयाः पङ्क्तिपावनाः ।
अष्टादशानां विद्यानामेकस्मिन् पारगोऽपि यः ।। १७.५६ ।।

यथावद्वर्त्तमानश्च सर्वे ते पङ्क्तिपावनाः।
त्रिणाचिकेतास्त्रैविद्यो यश्च धर्म्मान् पठेद्द्विजः ।। १७.५७ ।।

बार्हस्पत्ये तथा शास्त्रे पारं यश्च द्विजो गतः।
सर्व ते पावना विप्राः पङ्क्तीनां समुदाहृताः ।। १७.५८ ।।

आमन्त्रितस्तु यः श्राद्धे योषितं सेवते द्विजः।
पितरस्तस्य तं मासं तस्य रेतसि शेरते ।। १७.५९ ।।

श्राद्धं दत्त्वा च भुक्त्वा च मैथुनं यो निषेवते।
पितरस्तस्य तं मासं रेतःस्था नात्र संशयः ।। १७.६० ।।

तस्मादतिथये देयं भोजयेद्ब्रह्मचारिणम्।
ध्याननिष्ठाय दातव्यं सानुक्रोशाय धार्मिकम् ।। १७.६१ ।।

यतिं वा वालखिल्यान् वा भोजयेच्छ्राद्धकर्म्मणि।
वानप्रस्थोपकुर्व्वाणः पूजामात्रेण तोषितः ।। १७.६२ ।।

गृहस्थं भोजयेद्यस्तु विश्वेदेवास्तु पूजिताः।
वानप्रस्थेन ऋषयो वालखिल्यैः पुरन्दरः ।। १७.६३ ।।

यतीनां पूजने चापि साक्षाद्ब्रह्मा तु पूजितः।
आश्रमाः पावनाः पञ्च उपधाभिरनाश्रमाः ।। १७.६४ ।।

चत्वार आश्रमाः पूज्याः श्राद्धे दैवे तथैव च।
चतुराश्रमबाह्येभ्यः श्राद्धं नैव प्रदापयेत् ।। १७.६५ ।।

स तिष्ठेद्वा बुभुक्षुस्तु चतुराश्रमबाह्यतः।
अयति मोक्षवादी च उभौ तौ पङ्क्तिदूषकौ ।। १७.६६ ।।

वृथामुण्डाश्च जटिलाः सर्वे कार्प्पटिकास्तथा।
निर्घृणान् भिन्नवृत्तांश्च सर्वभक्षान् विवर्जयेत् ।। १७.६७ ।।

कारुकादीननाचारान् सर्ववेदबहिष्कृतान्।
गायनान् देववृत्तांश्च हव्यकव्येषु वर्जयेत् ।। १७.६८ ।।

द्विजेष्वपि कृतं नित्यं श्राद्धकर्म्मणि वर्जयेत् ।। १७.६९ ।।

एतेषु वर्त्तते यश्च कृत्स्ववर्णं स गच्छति।

योऽश्नाति सह शूद्रेण सर्वे ते पङ्क्तिदूषकाः ।। १७.७० ।।

व्यापादनं शक्तिनिबर्हणं कृषिर्वाणिज्यकार्य्यं पशुपालनं च।
शुश्रूषणं वाप्यगुरो रहो वा कार्य्यं नैतद्विद्यते ब्राह्मणस्य ।। १७.७१ ।।

ये तु विप्राः स्थिता नित्यं ज्ञानिनो ध्यानिनस्तथा।
मिथ्यासङ्कल्पिनः सर्वे दुर्वृत्ता वा द्विजातयः ।। १७.७२ ।।

मिथ्यातत्त्वविदो वर्ज्ज्यास्तथा दम्भविषूचकाः।
उपपातकसंयुक्ताः पातकैश्च विशेषतः ।। १७.७३ ।।

वेदे नियोगदातारो लोभमोहफलार्थिनः।
ब्रह्मविक्रयिणश्चैव श्राद्धकर्म्मणि वर्जिताः ।। १७.७४ ।।

न नियोगोऽस्ति वेदानां यो नियुङ्क्ते स पापकृत्।
भोक्ता वेदफलाद्भ्रश्येद्दाता दानफलात्तथा ।। १७.७५ ।।

भृतोऽध्यापयते यस्तु भृतकाध्यापितस्तु यः ।
नार्हतस्तावपि श्राद्धं ब्रह्मणः क्रियविक्रयी ।। १७.७६ ।।

क्रयविक्रयिणौ चैव जीवितार्थं विगर्हितौ।
वृत्तिरेषा तु वैश्यस्य ब्राह्मणस्य तु पातकम् ।। १७.७७ ।।

प्राहुर्वेदान् वेदविदो वेदान् यश्चोपजीवति।।
उभौ तौ नार्हतः श्राद्धं पुत्रिकापतिरेव च ।। १७.७८ ।।

वृथा दारांश्च यो गच्छेद्यो यजेत वृथाध्वरे।
नार्हतस्तावपि श्राद्धं द्विजो यश्चैव नास्तिकः ।। १७.७९ ।।

आत्मार्थं यः पचेदन्नं न देवातिथिकारकः।
नार्हतस्तावपि श्राद्धं पतितौ ब्रह्मराक्षसौ ।। १७.८० ।।

स्त्रियो नक्तंपरा येषां परदाररताश्च ये।
अर्थकाम रताश्चैव न तान् श्राद्धेषु भोजयेत् ।। १७.८१ ।।

वर्णाश्रमाणां धर्म्मेषु विरुद्धाः श्राद्धकर्म्मणि।
स्तेनश्च सर्वयाजी च सर्वे ते पङ्क्तिदूषकाः ।। १७.८२ ।।

यश्च सूकरवद्भुङ्क्ते यश्च पाणितले द्विजः।
न तदश्नन्ति पितरो यश्च वामं समश्नुते ।। १७.८३ ।।

स्त्रीशूद्रायानुपेताय श्राद्धोच्छिष्टं न दापयेत्।

यो दद्या द्रागमोहात्तु न तद्गच्छेत्पितॄन्सदा ।। १७.८४ ।।

तस्मान्न देयमुच्छिष्टमन्नाद्यं श्राद्धकर्म्मणि।
अन्यत्र दधिसर्पिर्भ्यां शिष्ये पुत्राय नान्यथा ।। १७.८५ ।।

अनुच्छिष्टन्तु दातव्यमन्नाद्यं वै विशेषतः।
पुष्पमूलफलैर्वापि तुष्टिं गच्छन्ति चान्नतः ।। १७.८६ ।।

यावन्त्यन्नानि पूतानि यावदुष्णं न मुञ्चति।
तावदश्नन्ति पितरो यावदश्नन्ति वाग्यताः ।। १७.८७ ।।

दानं प्रतिग्रहो होमो भोजनं बलिरेव च।
साङ्गुष्ठेन तथा कार्य्यं नासुरेभ्यो यथा भवेत् ।। १७.८८ ।।

एतान्येव च सर्व्वाणि दानादीनि विशेषतः।
अन्तर्जान्वविशेषेण तद्वदाचमनं भवेत् ।। १७.८९ ।।

मुण्डाञ्जटिलकाषायान् श्राद्धकालेऽपि वर्ज्जयेत्।
शिखिभ्यो वा त्रिदण्डिभ्यः श्राद्धं यत्नात् प्रदापयेत् ।। १७.९० ।।

ये तु व्रते स्थिता नित्यं ज्ञानिनो ध्यानिनस्तथा।
देवभक्ता महात्मानः पुनीयुर्दर्शनादपि ।। १७.९१ ।।

सर्व्वं योगेश्वरैर्व्याप्तं त्रैलोक्यं वै निरन्तरम् ।
तस्मात् पश्यन्ति ते सर्वे यत्किञ्चिज्जगतीगतम् ।। १७.९२ ।।

व्यक्ताव्यक्तं वशीकृत्य सर्व्वस्यापि च यत्परम्।
सदसच्चेति यैर्दृष्टं सदसच्च महात्मनाम् ।। १७.९३ ।।

सर्व्वज्ञानानि दृष्टानि मोक्षादीनि महात्मनाम्।
तस्मात्तेषु सदासक्तः प्राप्नोत्यनुत्तमं शुभम् ।। १७.९४ ।।

ऋचो हि यो वेद स वेद वेदान् यजूंषि यो वेद स वेद यज्ञम्।
सामानि यो वेद स वेद ब्रह्म यो मानसं वेद स वेद सर्व्वम् ।। १७.९५ ।।

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे ब्राह्मणपरीक्षा नाम सप्तदशोऽध्यायः ।। १७ ।। *

बृहस्पतिरुवाच।।

अतः परं प्रवक्ष्यामि दानानि च फलानि च।
तारणं सर्व्वभूतानां स्वर्गमार्गं सुखावहम् ।। १८.१ ।।

लोके श्रेष्ठतमं स्वर्ग्यमात्मन् श्चापि यत् प्रियम्।
सर्व्वं पितॄणां दातव्यं तेषामेवाक्षयार्थिना ।। १८.२ ।।

जाम्बूनदमयं दिव्यं विमानं सूर्य्यसन्निभम्।
दिव्याप्सरोभिः सङ्कीर्णमन्नदो लभते फलम् ।। १८.३ ।।

आच्छादनन्तु यो दद्यादाहतं श्राद्धकर्म्मणि।
आयुः प्रकाममैश्वर्य्यं रूपञ्च लभते सुतम् ।। १८.४ ।।

उपवीतन्तु यो दद्याच्छ्राद्धकालेषु धर्मवित् ।
पानञ्च सर्वविप्राणां ब्रह्मदानस्य यत् फलम् ।। १८.५ ।।

कृतं विप्रेषु यो दद्याछ्राद्धकाले कमण्डलुम्।
मधुक्षीरस्रवा धेनुर्दातारमुपतिष्ठति ।। १८.६ ।।

चक्राविद्धं तु यो दद्याच्छ्राद्धकाले कमण्डलुम्।
धेनुं स लभते दिव्यां पयोदां काम्यदोहिनीम् ।। १८.७ ।।

पूर्णसय्यां तु यो दद्यात् पुष्पमालाविभूषिताम्।
प्रासादो ह्युत्तमो भूत्वा गच्छन्तमनुगच्छति ।। १८.८ ।।

भवनं रत्नसम्पूर्णं सशय्यासनभोजनम्।
श्राद्धे दत्त्वा यतिभ्यस्तु नाकपृष्ठे स मोदते ।। १८.९ ।।

मुक्ता वैढूर्य्यवासांसि रत्नानि विविधानि च।
वाहनानि च दिव्यानि अयुतान्यर्ब्बुदानि च ।। १८.१० ।।

सुमहज्ज्वलनप्रख्यं रत्नकामसमन्वितम् ।
सूर्य्यचन्द्र प्रभं दिव्यं विमानं लभतेऽक्षयम् ।। १८.११ ।।

अप्सरोभिः परिवृतं कामगं तु मनोजवम्।
वसते स विमानाग्रे स्तूयमानः समन्ततः ।। १८.१२ ।।

दिव्यैर्गन्धैः प्रसिञ्चन्ति पुष्पवृष्टिभिरेव च।
गन्धर्वाप्सरसस्तत्र गायन्ते वादयन्ति च ।। १८.१३ ।।

कन्या युवतयो मुख्याः सहिताश्चाप्सरोगणैः।
सुस्वरैस्तं विबुध्यन्ते सततं हि मनोरमैः ।। १८.१४ ।।

अश्वदानसहस्रेण रथदानशतेन च।
दन्तिनां च सहस्रेण योगिन्या वसते नरः ।। १८.१५ ।।

दद्यात् पितृभ्यो योगिभ्यो यस्तूज्ज्वलनमम्भसि।
अथ निष्कसहस्राणां फलं प्राप्नोति मानवः ।। १८.१६ ।।

जीवितस्य प्रदानाद्धि नान्यद्दानं विशिष्यते।
तस्मात् सर्वप्रयत्नेन देयं प्राणाभिरक्षणम् ।। १८.१७ ।।

अहिंसा सर्व्वदेवेभ्यः पवित्रा सर्व्वदायिनी।
दानं हि जीवितस्याहुः प्राणिनां परमं बुधाः ।। १८.१८ ।।

लक्षणानि सुवर्णानि श्राद्धे पात्राणि दापयेत्।
रसास्तमुपतिष्ठन्ति गवां पुष्टिस्तथैव च ।। १८.१९ ।।

पात्रं वै तैजसं दद्यान्मनोज्ञं श्राद्धभोजने।
पात्रं भवति कामानां रूपस्य च धनस्य च ।। १८.२० ।।

राजतं काञ्चनं वापि दद्याच्छ्राद्धे तु कर्म्मणि।
दत्त्वा तु लभते दाता प्रकामं धर्म्ममेव च ।। १८.२१ ।।

धेनुं श्राद्धे तु यो दद्यात् वृष्टि कुम्भोपदोहनाम्।
गावस्तमुपतिष्ठन्ति गवां पुष्टिस्तथैव च ।। १८.२२ ।।

शिशिरेषु तथा त्वग्निं बहुकाष्ठं तथैव च।
इन्धनानि तु यो दद्याद्द्विजेभ्यः शिशि रागमे ।। १८.२३ ।।

नित्यं जयति संग्रामे श्रिया युक्तश्चदीप्यते।
सुरभीणि च माल्यानि गन्धवन्ति तथैव च ।। १८.२४ ।।

पूजयित्वा तु पात्राणि श्राद्धे सत्कृत्य दापयेत्।
गन्धवाहा महानद्यः सुखानि विविधानि च ।। १८.२५ ।।

दातारमुपतिष्ठन्ति युवत्यश्च मनोरमाः।
शयनासनानि रम्याणि भूमयो वाहनानि च ।। १८.२६ ।।

श्राद्धेऽप्येतानि यो दद्यादश्वमेधफलं लभेत्।
श्राद्धकालेनिवेद्यं च दर्शश्राद्ध उपस्थिते ।। १८.२७ ।।

विप्राणां गुणयुक्तानां स्मृतिं मेधां च विन्दति।
सर्पिष्पूर्णानि पात्राणि श्राद्धे सत्कृत्य दापयेत् ।। १८.२८ ।।

कुम्भदोहनधेनूनां बह्वीनां च फलं लभेत्।
अस्मिंस्तु मोदते लोके स्यन्दनैश्च सुवाहनैः ।। १८.२९ ।।

श्राद्धे यथेप्सितं दत्त्वा पुण्डरीकस्य यत्फलम्।
रम्यमावसथं दत्त्वा राजसूयफलं लभेत् ।। १८.३० ।।

वनं पुष्पफलोपेतं दत्त्वा सौरभमश्नुते।
कूपारामतडागानि क्षेत्रघोषगृहाणि च ।। १८.३१ ।।

दत्त्वैतान् मोदते स्वर्गे नित्यमाचन्द्रतारकम्।
आस्तीर्णशयनं दत्त्वा श्राद्धे रत्नविभूषितम् ।। १८.३२ ।।

पितरस्तस्य तुष्यन्ति स्वर्गं चानन्त्यमश्नुते।
राजभिः पूज्यते चापि धनधान्यैश्च वर्द्धते ।। १८.३३ ।।

ऊर्णाकौशेयवस्त्राणि तथा प्रवरकम्बलौ।
अजिनं काञ्चनं पट्टं प्रवेणी मृगलोमकम् ।। १८.३४ ।।

दानान्यतानि विप्रेभ्यो भोजयित्वा यथाविधि।
प्राप्नोति श्रद्दधानस्तु वाजपेयशतं फलम् ।। १८.३५ ।।

बह्वयो नार्य्यः सुरूपास्तु पुत्रा भृत्याश्च किङ्कराः।
वशे तिष्ठन्ति भूतानि अस्मिँल्लोके त्वनामयम् ।। १८.३६ ।।

कौशेयं क्षौमकार्पासं दुकूलसहितं तथा।
श्राद्धेष्वेतानि यो दद्यात् कामानाप्नोति पुष्कलान् ।। १८.३७ ।।

अलक्ष्मीं विनुदत्याशु तमः सूर्य्योदये यथा।
भ्राजते स विमानाग्रे नक्षत्रेष्विव चन्द्रमाः ।। १८.३८ ।।

वासो हि सर्वदैवत्यं सर्वदेवैस्त्वभिष्टुतम्।
वस्त्राभावे क्रिया नास्ति यज्ञा वेदास्तपांसि च ।। १८.३९ ।।

तस्माद्वस्त्राणि देयानि श्राद्धकाले विशेषतः।
तानि सर्वाण्यवाप्नाप्नोति यज्ञवेदतपांसि च ।। १८.४० ।।

नित्यं श्राद्धेषु यो दद्यात् प्रयतस्तत्परायणः ।
सर्वान् कामानवाप्नोति सर्वं राज्यं तथैव च ।। १८.४१ ।।

सर्वकामसमृद्धस्य यज्ञस्य फलमश्नुते।
भक्ष्यान् धानाः करम्भांश्च पिष्टकान् घृतशर्कराः ।। १८.४२ ।।

कृशरान्मधु कर्कञ्च पयः पायसमेव च।
स्निग्धांश्च पूपान् यो दद्यादग्निष्टोमस्य यत् फलम् ।। १८.४३ ।।

दधि गव्यमसंसृष्टं भक्ष्या नानाविधास्तथा।
तदन्नं शोचति श्राद्धे वर्षासु च मघासु च ।। १८.४४ ।।

घृतेन भोजयेद्विप्रान् घृतं भूमौ समुत्सृजेत्।
गयायां हस्तिनश्चैव दत्त्वा श्राद्धे न शोचति ।। १८.४५ ।।

ओदनं पायसं सर्पिर्मधुमूलफलानि च।
भक्ष्यांश्च विविधान्दत्त्वा प्रेत्य चेह च मोदते ।। १८.४६ ।।

शर्कराक्षीरसंयुक्तं पृथुकं नित्यमक्षयम्।
यश्च संवत्सरं प्रीत्या कृसरैर्मसुरेण च ।। १८.४७ ।।

सक्तुलाजास्तथा पूपाः कुल्माषव्यञ्जनैस्तथा।
सार्पेःस्निग्धानि हृद्यानि दध्ना सक्तूंस्तु भोजयेत्।
श्राद्धेष्वेतानि यो दद्यात् पझानि लभते निधिम् ।। १८.४८ ।।

नवसस्यानि यो दद्याच्छ्राद्धे सत्कृत्य यत्नतः।
सर्वभोगानवाप्नोति पूज्यते च दिवं गतः ।। १८.४९ ।।

भक्ष्यभोज्यानि चोष्याणि पेयलेह्यवराणि च।
सर्वश्रेष्ठानि यो दद्यात् सर्व्वश्रेष्ठो भवेन्नरः ।। १८.५० ।।

वैश्वदेवं च सौम्यं च खाड्गमांसं परं हविः।
विषाणं वर्ज्जयेत् खाड्गमसूयां नाशयामहे ।। १८.५१ ।।

भोजनेऽग्रासनं दद्यादतिथिभ्यः कृताञ्जलिः ।
सर्वयज्ञक्रियाणां स फलं प्राप्नोत्यनुत्तमम् ।। १८.५२ ।।

क्षिप्रमत्युष्ण मक्लिष्टं दद्याच्चान्नं बुभुक्षते।
वयञ्जनं च तथा स्निग्धं भक्त्या सत्कृत्य यत्नतः ।। १८.५३ ।।

तरुणादित्यसङ्काशं विमानं हंसवाहनम्।
अन्नदो लभते तिस्रः कल्पकोटीस्तथैव च ।। १८.५४ ।।

अन्नदानात्परं दानं विद्यते नेह किञ्चन।
अन्नाद्भूतानि जायन्ते जीवन्ति च न संशयः ।। १८.५५ ।।

जीवदानात् परं दानं न किञ्चिदिह विद्यते।
अन्नैर्जीवति त्रैलोक्यमन्नस्यैव हि तत्फलम् ।। १८.५६ ।।

अन्ने लोकाः प्रतिष्ठन्ति लोकदानस्य तत्फलम् ।
अन्नं प्रजापतिः साक्षात्तेन सर्व्वमिदं ततम्।
तस्मादन्नसमं दानं न भूतं न भविष्यति ।। १८.५७ ।।

यानि रत्नानि मेदिन्यां वाहनानि स्त्रियस्तथा।
क्षिप्रं प्राप्नोति तत् सर्वं पितृभक्तो हि मानवः ।। १८.५८ ।।

प्रतिश्रयं सदा दद्यादतिथिभ्यः कृताञ्जलिः।
देवास्ते संप्रतीक्षन्ते दिव्यातिथ्यैः सहस्रशः ।। १८.५९ ।।

सर्वाण्येतानि यो दद्यात् पृथिव्यामेकराड् भवेत्।
त्रिभिर्द्वाभ्यामथैकेन दानेन तु सुखी भवेत् ।। १८.६० ।।

दानानि परमो धर्म्मः सद्भिः सत्कृत्य पूजितः।
त्रैलोक्यस्याधिपत्यं हि दानादेव व्यवस्थितम् ।। १८.६१ ।।

राजा तु लभते राज्यमधनश्चोत्तमं धनम्।
क्षीणायुर्लभते चायुः पितृभक्तः सदा नरः।
यान् कामान् मनसाऽर्थेत तांस्तस्य पितरो विदुः ।। १८.६२ ।।

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे दानफलं नामाष्टादशोऽध्यायः ।। १८ ।। *

बृहस्पतिरुवाच।।
अत ऊर्द्ध्वं प्रवक्ष्यामि श्राद्धकर्म्मणि पूजितम्।
काम्यनैमित्तिकाजस्रं श्राद्धकर्म्मणि नित्यशः ।। १९.१ ।।

पुत्र दारधनमूला अष्टकास्तिस्र एव च।
पूर्वपक्षो वरिष्ठो हि पूर्वा चित्री उदाहृता ।। १९.२ ।।

प्राजापत्या द्वितीया स्यात् तृतीया वैश्वदेविकी।
आद्या पूपैःसदा कार्या मासैरन्या भवेत्सदा ।। १९.३ ।।

शाकैरन्या तृतीया स्यादेवं द्रव्यगतो विधिः ।
अन्वष्टका पितृणां वै नित्यमेव विधीयते ।। १९.४ ।।

यद्यन्या च चतुर्थी स्यात्ताञ्च कुर्य्याद्विशेषतः।
तासु श्राद्धं बुधः कुर्य्यात् सर्व्वस्वेनापि नित्यशः ।। १९.५ ।।

परत्रेह च सर्व्वेषु नित्यमेव सुखी भवेत् ।
पूजकानां सदोत्कर्षो नास्तिका नामधो गतिः ।। १९.६ ।।

पितरः सर्व्वकालेषु तिथिकालेषु देवताः।
सर्व्वे पुरुषमायान्ति निपानमिव धेनवः ।। १९.७ ।।

मा स्म ते प्रतिगच्छेयुरष्टकाः सुरपूजिताः ।
मोघस्तस्य भवेल्लोको लब्धं चास्य विनश्यति ।। १९.८ ।।

देवांस्तु दायिनो यान्ति तिर्य्यग्गच्छन्त्यदायिनः।
प्रजां पुष्टिं स्मृतिं मेधां पुत्रानैश्वर्य्यमेव च ।। १९.९ ।।

कुर्व्वाणः पौर्णमास्यां च पूर्व्वं पूर्णं समश्नुते।
प्रतिपद्धनलाभाय लब्धं चास्य न नश्यति ।। १९.१० ।।

द्वितीयायां तु यः कुर्य्याद्द्विपदाधिपतिर्भवेत्।
वरार्थिना तृतीया तु शत्रुघ्नी पापनाशिनी ।। १९.११ ।।

चतुर्थ्यां कुरुते श्राद्धं शत्रोश्छिद्राणि पश्यति।
पञ्चम्यां वै प्रकुर्वाणः प्राप्नोति महतीं श्रियम् ।। १९.१२ ।।

षष्ठ्यां श्राद्धानि कुर्वाणं द्विजास्तं पूजयन्त्युत।
कुरुते यस्तु सप्तम्यां श्राद्धानि सततं नरः ।। १९.१३ ।।

महासत्रमवाप्नोति गणानामधिपो भवेत्।
सम्पूर्णामृद्धिमाप्नोति योऽष्टम्यां कुरुते नरः ।। १९.१४ ।।

श्राद्धं नवम्यां कुर्वाण ऐश्वर्य्यं कांक्षितां स्त्रियम्।
कुर्वन् दशम्यां तु नरो ब्राह्मीं श्रियमवाप्नुयात् ।। १९.१५ ।।

वेदांश्चैवाप्नुयात् सर्वान् प्रणाशमेनसस्तथा।
एकादश्यां परं दानमैश्वर्य्यं सततं तथा ।। १९.१६ ।।

द्वादश्यां राष्ट्रलाभं तु जयमाहुर्वसूनि च ।
प्रजां बुद्धिं पशून् मेधां स्वातन्त्र्यं पुष्टिमुत्तमाम् ।
दीर्घमायुरथैश्वर्य्यं कुर्वाणस्तु त्रयोदशीम् ।। १९.१७ ।।

युवानश्च मृता यस्य गृहे तेषां प्रदापयेत्।
शस्त्रेण तु हता ये वै तेषां दद्याच्चतुर्दशीम् ।। १९.१८ ।।

तथा विषमजातानां यमलानां तु सर्वशः ।
अमावास्यां प्रयत्नेन श्राद्धं कुर्य्याच्छुचिः सदा ।। १९.१९ ।।

सर्व्वान् कामानवाप्नोति स्वर्गमानन्त्यमश्नुते ।
ऋतं दद्यादमावास्यां सोममाप्यायनं महत् ।। १९.२० ।।

एवमाप्यायितः सोमस्त्रीँल्लोकान् धारयिष्यति।
सिद्धचारणगन्धर्व्वैः स्तूयमानस्तु नित्यशः ।। १९.२१ ।।

स्तवैः पुष्पैर्मनोज्ञैश्च सर्व्वकामपरिच्छदैः।
नृत्य वादित्रगीतैश्च ह्यप्सरोभिः सहस्रशः ।। १९.२२ ।।

उपक्रीडैर्व्विमानैस्तु पितृभक्तं दृढव्रतम्।
स्तुवन्ति देवगन्धर्व्वाः सिद्धसङ्घाश्च तं सदा ।। १९.२३ ।।

पितृभक्तस्त्वमावस्यां सर्वान् कामानवाप्नुयात्।
प्रत्यक्षमर्चितास्तेन भवन्ति पितरः सदा ।। १९.२४ ।।

पितृदेवा मघा यस्मात् तस्मात्तास्वक्षयं स्मृतम्।
पित्र्यं कुर्व्वन्ति तस्यां तु विशेषेण विचक्षणः ।। १९.२५ ।।

तस्मान्मघां वै वाञ्छन्ति पितरो नित्यमेव हि ।
पितृदैवतभक्ता ये तेऽपि यान्ति परां गतिम् ।। १९.२६ ।।

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे तिथिविशेषे श्राद्धफलवर्णनं नामोनविंशोऽध्यायः ।। १९ ।। *

बृहस्पतिरुवाच।।
यमस्तु यानि श्राद्धानि प्रोवाच शश(शिव)बिन्दवे।
तानि मे श्रृणु कात्स्न्र्येन नक्षत्रेषु पृथक् पृथक् ।। २०.१ ।।

श्राद्धं यः कृत्तिकायोगे करोति सततं नरः।
अग्नीनाधाय सापत्यो जायते स गतज्वरः ।। २०.२ ।।

अपत्यकामो रोहिण्यां सौम्येनौजस्विता भवेत् ।
प्रायशः क्रूरकर्म्मा तु चार्द्रायां श्राद्धमाचरेत् ।। २०.३ ।।

क्षेत्रभागी भवेत् पुत्री श्राद्धं कुर्व्वन् पुनर्व्वसौ।
धनधान्यसमाकीर्णः पुत्रपौत्रसमाकुलः ।। २०.४ ।।

तुष्टिकामः पुनस्तिष्ये श्राद्धं कुर्वीत मानवः।
आश्लेषासु पितॄनार्च्य वीरान् पुत्रानवाप्नुयात् ।। २०.५ ।।

श्रेष्ठो भवति ज्ञातीनां मघासु श्राद्धमाचरन्।
फल्गुनीषु पितॄनार्च्य सौभाग्यं लभते नरः ।। २०.६ ।।

प्रधानशीलः सापत्य उत्तरासु करोति यः।
स सत्सु मुख्यो भवति हस्ते यस्तर्पयेत्पितॄन् ।। २०.७ ।।

चित्रायां चैव यः कुर्यात् पश्येद्रूपवतः सुतान्।
स्वातिना चैव यः कुर्याद्विद्वाँल्लाभमवाप्नुयात् ।। २०.८ ।।

पुत्रार्थन्तु विशाखासु श्राद्धमीहेत मानवः।
अनुराधासु कुर्व्वाणो नरश्चक्रं प्रवर्त्तयेत् ।। २०.९ ।।

आधिपत्यं लभेच्छ्रैष्ठ्यं ज्येष्ठायां सततं तु यः।
मूलेनारोग्यमिच्छन्ति आषाढासु महद्यशः ।। २०.१० ।।

आषाढाभिश्चोत्तराभिर्वीतशोको भवेन्नरः।
श्रवणायां सुलोकेषु प्राप्नुयात् परमां गतिम् ।। २०.११ ।।

राज्यभाग्वै धनिष्ठासु प्राप्नुयाद्विपुलं धनम्।
श्राद्धं त्वभिजिता कुर्वन् विन्दतेऽजाविकं फलम् ।। २०.१२ ।।

नक्षत्रे वारुणे कुर्व्वन् भिषक्सिद्धिमवाप्नुयात्।
पूर्व्वे प्रोष्ठपदे कुर्व्वन् विन्दतेऽजाविकं फलम् ।। २०.१३ ।।

उत्तरास्वनतिक्रम्य विन्देद्घा वै सहस्रशः।
बहुरूपकृतं द्रव्यं विन्देत् कुर्व्वंस्तु रेवतीम्।

अश्वांश्चैवाश्विनीयुक्तो भरण्यामायुरुत्तमम् ।। २०.१४ ।।

इमं श्राद्धविधिं कुर्वञ्छशबिन्दुर्महीमिमाम्।
कृत्स्नां तु लेभे स कृत्स्नां लब्धा च प्रशशंस तम् ।। २०.१५ ।।

इति श्रीमहापुराणे वायुप्रोक्ते नक्षत्रविशेषे श्राद्धफलवर्णनं नाम विंशोऽध्यायः ।। २० ।। *

शंयुरुवाच।।
किञ्चिद्दत्तं पितॄणां तु धिनोति वदतां वर ।
किं हि स्विच्चिररात्राय किञ्चानन्त्याय कल्पते ।। २१.१ ।।

बृहस्पतिरुवाच।
हवींषि श्राद्धकाले तु यानि श्राद्धविदो विदुः।
तानि मे श्रृणु सर्वाणि फलं चैषां यथाबलम् ।। २१.२ ।।

तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन च।
दत्तेन मासं प्रीयन्ते श्राद्धेन तु पितामहाः ।। २१.३ ।।

मत्स्यैः प्रीणन्ति द्वौ मासौ त्रीन्मासान्हारिणेन तु।
शाशन्तु चतुरो मासान् पञ्च प्रीणाति शाकुनम् ।। २१ .४ ।।

वाराहेण तु षण्मासाञ्छागलं साप्तमासिकम्।
अष्टमासिकमित्युक्तं यच्च पार्षतकं भवेत् ।। २१.५ ।।

रौरवेण तु प्रीयन्ते नवमासान् पितामहाः।
गवयस्य तु मांसेन तृप्तिः स्याद्दशमासिकी ।। २१.६ ।।

कूर्मस्य चैव मांसेन मासानेकादशैव तु ।
श्राद्धमेव विजानीयाद्गव्यं संवत्सरं भवेत् ।। २१.७ ।।

तथा गव्यसमायुक्तं पायसं मधुसर्पिषा।
वध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ।। २१.८ ।।

आनन्त्याय भवेद्युक्तं खाड्गमांसैः पितृक्षये।
कृष्णच्छागस्तथा गोधा आनन्त्यायैव कल्पते ।। २१.९ ।।

अत्र गाथाः पितृगीताः कीर्त्तयन्ति पुराविदः।
तास्तेऽहं संप्रवक्ष्यामि यथावत्सन्निबोधत ।। २१.१० ।।

अपि नः स्वकुले जायाद्योऽन्नं दद्यात्त्रयोदशीम्।
पायसं मधुसर्पिर्भ्यां छायायां कुञ्जरस्य तु ।। २१.११ ।।

आजेन सर्वलोहेन वर्षासु च मघासु च।
एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
गौरीं वाप्युद्वहेद्भार्य्यां नीलं वा वृषमुत्सृजेत् ।। २१.१२ ।।

शंयुरुवाच।।
गयादीनां फलं तात प्रब्रूहि समपृच्छतः।
पितृणां चैव यत्पुण्यं निखिलेन ब्रवीहि मे ।। २१.१३ ।।

बृहस्पतिरुवाच।।
गयायामक्षयं श्राद्धं जपहोमतपांसि च।
पितृङ्याहे ते पुत्र तस्मात्तत्राक्षयं स्मृतम् ।। २१.१४ ।।

पुनीयादेकविंशन्तु गौर्यामुत्पादितः सुतः।
मातामहांस्तु षड्भूय इति तस्याः फलं स्मृतम् ।। २१.१५ ।।

फलं वृषस्य वक्ष्यामि गदतो मे निबोधत।
वृषोत्स्रष्टा पुनात्येव दशातीतान् दशावरान् ।। २१.१६ ।।

यत्किञ्चित् स्पृश्यते तोयैरुत्तीर्णेन जलान्महीम्।
वृषोत्सर्गे पितृणां तु ह्यक्षयं स मुदाहृतम् ।। २१.१७ ।।

यद्यद्धि संस्पृशेत्तोयं लांगूलादिभिरन्ततः।
सर्वं तदक्षयं तस्य पितृणां नात्र संशयः ।। २१.१८ ।।

श्रृङ्गैः खुरैर्वा यद्भूमिमिल्लिखत्य निशं वृषः।
मधुकुल्याः पितृंस्तस्य अक्षयास्ता भवन्ति वै ।। २१.१९ ।।

सहस्रनल्वमात्रेण तडागेन यथा श्रुतिः।
तृप्तिस्तृप्तिः पितृणां वै तद्वृषस्याधिकोच्यते ।। २१.२० ।।

यो ददाति गुढैर्मिश्रांस्तिलान् वै श्राद्धकर्मणि।
मधुना मधुमिश्रान् वा अक्षयं सर्वमेव तत् ।। २१.२१ ।।०
बृहस्पतिरुवाच।।
न ब्राह्मणान् परीक्षेत सदा देये तु मानवः।
दैवे कर्मणि पित्र्ये च श्रूयते वै परीक्षणम् ।। २१.२२ ।।

सर्ववेदव्रतस्नाताः पङ्क्तीनां पावना द्विजाः।
ये च भाष्य विदो मुख्या ये च व्याकरणे रताः ।। २१.२३ ।।

अधीयते पुराणं च धर्म्मशास्त्रं तथैव च।
त्रिणाचिकेतपञ्चाग्निस्त्रिसुपर्णः षडङ्गवित् ।। २१.२४ ।।

ब्रह्मदेय सुतश्चैव छन्दोगो ज्येष्ठसामगः।
पुण्येषु येषु तीर्थेषु अभिषेककृतव्रताः ।। २१.२५ ।।

मुख्येषु येषु सत्रेषु भवन्त्यवभृथश्रुताः।
ये च सद्योव्रता नित्यं स्वकर्मनिरताश्च ये ।। २१.२६ ।।

अक्रोधनाः शान्तिपरास्तान् वै श्राद्धे निमन्त्रयेत्।

ये चापि नित्यं दशसु सुकृतेषु व्यवस्थिताः ।। २१.२७ ।।

एतेषु दत्तमक्षय्यमेते वै पङ्क्तिपावनाः।
श्रद्धेया ब्राहमणा ये तु योगधर्म्ममनुव्रताः ।। २१.२८ ।।

धर्माश्रमवरिष्ठास्ते हव्यकव्येषु ते वराः।
त्रयोऽपि पूजितास्तेन ब्रहमविष्णु महेश्वराः ।। २१.२९ ।।

पितृभिः सह लोकाश्च यो हयेतान् पूजयेन्नरः।
पवित्राणा पवित्रञ्च मङ्गलानां च मङ्गलम् ।। २१.३० ।।

प्रथमः सर्वधर्माणां योगधर्मो निगद्यते ।
अपाङ्क्तेयांस्तु वक्ष्यामि गदतो मे निबोधत ।। २१.३१ ।।

कितवो मद्यपो यक्ष्मी पशुपालो निराकृतिः।
ग्रामप्रेष्यो वार्द्धुषिको गायनो वणिजस्तथा ।। २१.३२ ।।

अगारदाही गरदः कुण्डाशी सोमविक्रयी।
समुद्रयायी दुश्चर्मा तैलिकः कूटकारकः ।। २१.३३ ।।

पित्रा विवदमानश्च यस्य चोपपतिर्गृहे।
अभिशस्तस्तथा स्तेनः शिल्पैर्यश्चोपजीवति ।। २१.३४ ।।

सूजकः पर्वकारी च यस्तु मित्रेषु द्रुहयति।
गणयाचनकश्चैव नास्तिको वेदवर्जितः ।। २१.३५ ।।

उन्मत्तः षण्डकशठौ भ्रूणहा गुरुतल्पगः ।
भिषक्जीवः प्रैषणिकः परस्त्रीं यश्च गच्छति ।। २१.३६ ।।

विक्रीणाति च यो ब्रहम व्रतानि च तपांसि च।
नष्टं स्यान्नास्तिके दत्तं कृतघ्ने चैव शंसके ।। २१.३७ ।।

यच्च वाणिजके चैव नेह नामुत्र तद्भवेत्।
निक्षेपहारिणे चैव कितवे वेदनिन्दके ।। २१.३८ ।।

तथा वाणिजके चैव कारुके धर्म्मवर्जिते।
निन्दन् क्रीणाति पण्यानि विक्रीणंश्च प्रशंसति ।। २१.३९ ।।

अनृतस्य समावासो न वणिक् श्राद्धमर्हति।
भस्म नीव हुतं हव्यं दत्तं पौनर्भवे द्विजे ।। २१.४० ।।

षष्टिं काणः शतं षण्डः श्वित्री यावत् प्रपश्यति।

पापरोगी सहस्रस्य दातुर्नाशयते फलम् ।। २१.४१ ।।

भ्रश्यते सत्फलात्तस्माद्दाता यस्य तु बालिशः।
यो वेष्टितशिरा भुङ्क्ते यो भुङ्क्ते दक्षिणामुखः ।। २१.४२ ।।

सोपानत्कश्च यो भुङ्क्ते यच्च दद्यात्तिरस्कृतम् ।
सर्वं तदसुरेन्द्राणां ब्रह्मा भागमकल्पयत् ।। २१.४३ ।।

श्वानश्च यातुधानाश्च नावेक्षेरन् कथञ्चन।
तस्मात्परिवृतिं दद्यात्तिलैश्चान्ववकीरयन् ।। २१.४४ ।।

राक्षसानां तिलाः प्रोक्ताः शुनां परिवृतिस्तथा।
दर्शनात्सूकरो हन्ति पक्षपातेन कुक्कुटः ।। २१.४५ ।।

रजस्वलानुस्पर्शेन क्रुद्धो यश्च प्रयच्छति।
यस्य मित्रप्रदे यानि श्राद्धानि च हवींषि च।
न प्रीणाति पितॄन् देवान् स्वर्गं न च स गच्छति ।। २१.४६ ।।

नदीतीरेषु रम्येषु सरित्सु च सरस्सु च।
विविक्तेषु च प्रीयन्ते दत्तेनेह पितामहाः ।। २१.४७ ।।

न चाश्रुं पातयेज्जातु न युक्तो वाचमीरयेत्।
न च कुर्वीत भुञ्जानो ह्यन्योऽन्यं मत्सरस्तदा ।। २१.४८ ।।

अपसव्ये कृते तेन विधिवद्दर्भपाणिना ।
पित्र्यमानिधनं कार्यमेवं प्रीणाति वै पितॄन् ।। २१.४९ ।।

अनुमत्यादितो विप्रानग्नौ कुर्याद्यथाविधि।
पितॄणां निर्व्वपेद्भूमौ शूर्पे वा दर्भसंस्तरे ।। २१.५० ।।

शुक्लपक्षस्य पूर्वाह्ने श्राद्धं कुर्याद्विचक्षणः।
कृष्णपक्षेऽपराह्ने तु रौहिणं न विलङ्घयेत् ।। २१.५१ ।।

एवमेते महात्मानो महा योगा महौजसः।
सदा वै पितरः पूज्या द्रष्टारो देशकालयोः ।। २१.५२ ।।

पितृभक्तिरतो नित्यं योगं प्राप्नोत्यनुत्तमम्।
ध्यानेन मोक्षं गच्छन्ति हित्वा कर्म शुभाशुभम् ।। २१.५३ ।।

यज्ञहेतोर्यदुद्धृत्य मोहयित्वा जगत्तदा।
गुहायां निहतं योगं कश्यपेन महात्मना ।। २१.५४ ।।

अमृतं गुह्यमृद्धृत्य योगं योगविदां वर।
प्रोक्तं सनत्कुमारेण महत्तद्धर्म्मशाश्वतम् ।। २१.५५ ।।

देवानां परमं गुह्यमृषीणां च परायणम्।
पितृभक्त्या प्रयत्नेन पितृभक्तैश्च नित्यशः ।। २१.५६ ।।

तञ्च योगं समासेन पितृभक्तस्तु कृत्स्नशः।
प्रयत्नात्प्राप्नुयात्तत्र सर्वमेव न संशयः ।। २१.५७ ।।

यस्मै श्राद्धानि देयानि यच्च दत्तं महाफलम्।
येषु वाप्यक्षयं श्राद्धं तीर्थेषु च नदीषु च ।
येषु च स्वर्गमाप्नोति तत्ते प्रोक्तं ससंग्रहम् ।। २१.५८ ।।

बृहस्पतिरुवाच।।
श्रुत्वैवं श्राद्धकल्पं तु योऽसूयां कुरुते नरः।
स मज्जेन्नरके घोरे नास्तिकस्तमसावृतः ।। २१.५९ ।।

महारोगावसायस्तु स यः संयतमानसः।
वेदाश्रमान्मुक्तचित्तः कुम्भीका नधिगच्छति।
जिह्वाच्छेदं स्तेनमेत्य प्राप्नुयुस्तेन चैव ह ।। २१.६० ।।

सीदन्ति ते सागरे लोष्टभूता योगद्विषः स्थास्यन्ते यावदुर्व्वी ।
तस्माच्छ्राद्धे धर्म्म उद्दिष्ट एष नित्यं कार्यः श्रद्दधानेन पुंसा ।। २१.६१ ।।

परिवादो न कर्त्तव्यो योगिनां च विशेषतः।
परिवादात् कृमिर्भूत्वा तत्रैव परिवर्त्तते ।। २१.६२ ।।

योगं परिवदेद्यस्तु ध्यानिनां मोक्षकारणम्।
स गच्छेन्नरकं घोरं श्रोता यश्च न संशयः ।। २१.६३ ।।

आवृतं तमसा सर्वं नरकं घोरदर्शनम्।
योगीश्वरपरी वादान्निश्चयं याति मानवः ।। २१.६४ ।।

योगेश्वराणामाक्रोशं श्रृणुयाद्यो यतात्मनाम्।
स हि कालं चिरं मज्जेत् कुम्भीपाके न संशयः ।। २१.६५ ।।

मनसा कर्मणा वाचा द्वेषं योगिषु वर्ज्जयेत्।
प्रेत्यान्यं तत्फलं भुङ्क्ते इह चैव न संशयः ।। २१.६६ ।।

न पारगो विन्दति पारमात्मनस्त्रिलोकमध्ये चरति स्वकर्मभिः।
ऋचो यजुःसामतदङ्गपारगो विकारमेव ह्यनवाप्य सीदति ।। २१.६७ ।।

विकारपारः प्रकृतेश्च पारगस्त्रयी गुणानां त्रिगुणान्तपारगा।
तत्त्वञ्चतुर्विंशतियो गपारगं स पारगो यस्त्वयनान्तपारगः ।। २१.६८ ।।

कृत्स्नं यथा तत्त्वविसर्गमात्मनस्तथैव भूयः प्रलयं सदात्मनः।
प्रत्याहरेद्योगबलेन योगवित् स सर्वपारक्रमयानगोचरः ।। २१.६९ ।।

वेदस्य वेदिता यो वै वेद्यं विन्दति योगवित्।
तं वै वेदविदं प्राहुस्तं प्राहुर्वेदपारगम् ।। २१.७० ।।

वेद्यं च वेदितव्यं च विदित्वा वै यथाविधि।
एवं वेदविदं प्राहुस्ततोऽन्ये वेदचिन्तकाः ।। २१.७१ ।।

यज्ञान् वेदांस्तथा कामाञ्ज्ञानानि विविधानि च।
प्राप्नोत्यायुः प्रजाश्चैव पितृभक्तो धनानि च ।। २१.७२ ।।

श्राद्धे यः श्राद्धकल्पं वै पश्चिमं नियतं पठेत्।
सर्वाप्येतान्यवाप्नोति तीर्थे दानफलानि च ।। २१.७३ ।।

स पङ्क्तिपावनश्चैव द्विजानामग्रभुग् भवेत्।
अध्याप्य वा द्विजान् सर्वान् सर्वान् कामानवाप्नुयात् ।। २१.७४ ।।

यश्चैव श्रृणुयान्नित्यमानन्त्यं स्वर्गमश्नुते।
अनसूयो जितक्रोधो लोभमोहविवर्जितः ।। २१.७५ ।।

तीर्थानां च फलं कृत्स्नं दानादीनां तथैव च।
मोक्षोपायो ह्ययं श्रेष्ठः स्वर्गोपायो ह्ययं परः ।
इह चापि परा तुष्टिस्तस्मात्कुर्वीत यत्नतः ।। २१.७६ ।।

इमं विधिं यो हि पठेदतन्द्रितः समाहितः संसदि पर्वसन्धिषु ।
अपत्यभाग्भवति परेण तेजसा दिवौ कसां स व्रजते सलोकताम् ।। २१.७७ ।।

येन प्रोक्तस्त्वयं कल्पो नमस्तस्मै स्वयम्भुवे।
महायोगेश्वरेभ्यश्च सदा च प्रणतो ह्यहम् ।। २१.७८ ।।

इत्येतेपितर स्तात देवानामपि देवताः।
सप्तस्वेतेषु ते नित्यं स्थानेषु पितरोऽव्यथाः ।। २१.७९ ।।

प्रजापतिसुता ह्येते सर्वे चैव महात्मनः।
आद्यो गणस्तु योगानां स नित्यो योगवर्द्धनः ।। २१.८० ।।

द्वितीयो देवतानां तु तृतीयो देवताऽरिणाम्।
शेषास्तु वर्णिनां ज्ञेया इति सर्वे प्रकीर्तिताः ।। २१.८१ ।।

देवास्त्वेतान् यजन्ते वै सर्वेष्वेतेष्ववस्थिताः।
आश्रमास्तु यजन्त्येतांश्चत्वारस्तु यथाक्रमम् ।। २१.८२ ।।

वर्णाश्चापि यजन्त्येतांश्चत्वारस्तु यथाविधि।
तथा सङ्करजाताश्च म्लेच्छाश्चैव यजन्ति वै ।। २१.८३ ।।

पितॄंश्च यो यजेद्भक्त्या पितरः पूजयन्ति तम्।
पितरः पुष्ठिकामस्य प्रजाकामस्य वा पुनः।
पुष्ठिं प्रजाश्च स्वर्गं च प्रयच्छन्ति पितामहाः ।। २१.८४ ।।

देवकार्यादपि सूनोः पितृकार्यं विशिष्यते।
देवतानां हि पितरः पूर्वमाप्यायनं स्वयम् ।। २१.८५ ।।

न हि योगगतिः सूक्ष्मा पितॄणां च परा गतिः।
तपसा विप्रकृष्टेन दृश्यते मांसचक्षुषा ।। २१.८६ ।।

सर्वेषां राजतं पात्रमथवा रजतान्वितम्।
पावनं ह्युत्तमं प्रोक्तं देवानां पितृभिः सह ।। २१.८७ ।।

येषां दास्यन्ति पिण्डांस्त्रीन् बान्धवा नामगोत्रतः।
भूमौ कुशोत्तरायाञ्च अपसव्यविधानतः ।। २१.८८ ।।

सर्वत्र वर्त्तमानास्ते पिण्डाः प्रीणन्ति वै पितॄन्।
यदाहारो भवेज्जन्तुराहारः सोऽस्य जायते ।। २१.८९ ।।

यथा गोष्ठे प्रनष्टां वै वत्सो विन्दति मातरम् ।
तथा तं नयते मन्त्रो जन्तुर्यत्रावतिष्ठते ।। २१.९० ।।

मान गोत्रं च मन्त्रश्च दत्तमन्नं नयन्ति तम्।
अपि योनिशतं प्राप्तां स्तृप्तिस्ताननुगच्छति ।। २१.९१ ।।

एवमेषा स्थिता संस्था ब्रह्मणा परमेष्ठिना ।
पितॄणामादिसर्गस्तु लोकानामक्षयार्थिनाम् ।। २१.९२ ।।

इत्येते पितरो देवा देवाश्च पितरः पुनः।
दौहित्रा यजमानाश्च प्रोक्ताश्चैव मयाऽनघाः ।। २१.९३ ।।

लोका दुहितरश्चैव दौहित्राश्च सुतास्तथा।
दानानि सह शौचेन तीर्थानि च फलानि च ।। २१.९४ ।।

अक्षयत्वं द्विजाश्चैव यायावरविधिस्तथा ।

प्रोक्तं सर्वं यथान्यायं यथा ब्रह्माऽब्रवीत् पुरा ।। २१.९५ ।।

बृहस्पतिरुवाच।।
इत्येतदङ्गिराः प्राह ऋषीणां श्रृण्वतां तदा।
पृष्टस्तु संशयं सर्वं पितॄणां प्राह संसदि ।। २१.९६ ।।

सत्रे वै वितते पूर्वं तदा वर्षसहस्रिके ।
यस्मिन् गृहपतिर्ह्यासीद्ब्रह्मा वै देवता प्रभुः ।। २१.९७ ।।

संवत्सरशतान्यं च तत्रोपेता इति श्रुतिः।
श्लोकाश्चात्र पुरा गीता ऋषिभिर्ब्रह्मवादिभिः ।। २१.९८ ।।

दीक्षितस्य तदा सत्रे ब्रह्मणः परमात्मनः।
तत्रैव जातमत्युग्रं पितॄणामक्षयार्थिना।
लोकानां च हितार्थाय ब्रह्मणा परमेष्टिना ।। २१.९९ ।।

सूत उवाच।।
एवं बृहस्पतिः पूर्वं पृष्टः पुत्त्रेण धीमता।
प्रोवाच पितृवंशन्तु यत्तद्वैसमुदाहृतम् ।
अत ऊर्द्ध्वं प्रवक्ष्यामि वरुणस्य निबोधत ।। २१.१०० ।।

इति श्रीमहापुराणे वायुप्रोक्ते श्राद्धकल्पे भिन्नकालिकतृप्तिसाधनद्रव्यविशेषगया श्राद्धादिफलब्राह्मणपरीक्षादिकथनं नामैकविंशोऽध्यायः ।। २१ ।। *

ऋषयश्चैवमुक्तास्तु परं हर्षमुपागताः।
परं शुश्रूषवो भूयः पप्रच्छुस्तदनन्तरम् ।। २२. १ ।।

ऋषय ऊचुः ।।

वंशानामानुपूर्व्येण राज्ञाञ्चामिततेजसाम्।
स्थितिञ्चैषां प्रभावञ्च ब्रूहि नः परिपृच्छताम् ।। २२.२ ।।

एवमुक्तस्ततः सूतस्तथाऽसौ लोमहर्षणः।
शुश्रूषामुत्तराख्याने ऋषीणां वाक्यकोविदः ।। २२.३ ।।

आख्यानकुशलो भूयः परं वाक्यमुवाच ह ।
ब्रुवतो मे निबोधस्व ऋषिराह यथा मम ।। २२.४ ।।

वंशानामानुपूर्व्येण राज्ञाञ्चामिततेजसाम्।
स्थितिं चैषां प्रभावञ्च ब्रुवतो मे निबेधत ।। २२.५ ।।

वरुणस्य पत्नी सामुद्री शुनोदेवीत्युदाहृता ।
तस्याः पुत्रौ कलिर्वैद्यः सुता च सुरसुन्दरी ।। २२.६ ।।

कलि पुत्रौ महावीर्यौ जयश्च विजयश्च ह।
वैद्यपुत्रौ घृणिश्चैव मुनिश्चैव महाबलौ ।। २२.७ ।।

प्रजानामत्तुकामानामन्योन्यस्य प्रभक्षिणौ।
भक्षयित्वा तावन्योन्यं विनाशं समवापतुः ।। २२.८ ।।

कलिः सुरायां सञ्जज्ञे तस्य पुत्रो मदः स्मृतः ।
त्वाष्ट्री हिंसा कलेर्भार्य्या ज्येष्ठा या निकृतिः स्मृता ।। २२.९ ।।

असूतान्यान् कलेः पुत्रांश्चतुरः पुरुषादकान्।
नाकं विघ्नं च विख्यातं सद्रमं विधमन्तथा ।। २२.१० ।।

अशिरस्कस्तयोर्विघ्नो नाकश्चैवाशरीरवान्।
सद्रमश्चैक हस्तोऽभूद्विधमश्चैकपात्स्मृतः ।। २२.११ ।।

सद्रमस्य तथा पत्नी तामसी पूतना स्मृता ।
रेवती विधमस्यापि तयोः पुत्राः सहस्रशः ।। २२.१२ ।।

नाकस्य शकुनिः पत्नी विघ्नस्य च अयोमुखी।
राक्षसास्तु महाशीर्षाः सन्ध्याद्वयविचारिणः ।। २२.१३ ।।

रेवतीपूतनापुत्रा नैर्ऋता नामतः स्मृताः।

ग्रहास्ते राक्षसाः सर्वे बालानान्तु विशेषतः।
स्कन्दस्तेषामधिपतिर्ब्रह्मणोऽनुमते प्रभुः ।। २२.१४ ।।

बृहस्पतेर्या भगिनी वरस्त्री ब्रह्मचारिणी।
योगसिद्धा जगत्कृत्स्नमसक्ता चरते सदा ।। २२.१५ ।।

प्रभासस्य तु सा भार्या वसूनामष्टमस्य तु।
विश्वकर्मा सुतस्तस्या जातः शिल्पिप्रजापतिः ।। २२.१६ ।।

त्वष्टा विराजो रूपाणां धर्म्मपौत्र उदारधीः।
कर्त्ता शिल्पसहस्राणां त्रिदशानाञ्च वास्तुकृत् ।। २२.१७ ।।

यः सर्वेषां विमानानि देवतानाञ्चकार ह।
मानुषाश्चोपजीवन्ति यस्य शिल्पं महात्मनः ।। २२.१८ ।।

प्रह्लादी विश्रुता तस्य त्वष्टुः पत्नी विरोचना।
विरोचनस्य भगिनी माता त्रिशिरसस्तु सा ।। २२.१९ ।।

देवाचार्यस्य महतो विश्वकर्मस्य धीमतः।
विश्वकर्मात्मजश्चैव विश्वकर्ममयः स्मृतः ।। २२.२० ।।

सुरेणुरिति विख्याता स्वसा तस्य यवीयसी।
त्वाष्ट्री सा सवितुर्भार्य्या पुनः संज्ञेति विश्रुता ।। २२.२१ ।।

असूत तपसा सा तु मनुं ज्येष्ठं विवस्वतः।
यमौ पुनरसूतासौ यमञ्च यमुनाञ्च ह ।। २२.२२ ।।

सा तु गत्वा कुरून् देवी वडवारूपधारिणी।
सवितुश्चाश्वरूपस्य नासिकाभ्यां तु तौ स्मृतौ ।। २२.२३ ।।

असूत सा महाभागा त्वन्तरिक्षेऽश्विनौ किल।
नासत्यञ्चैव दस्रञ्च मार्त्तण्डस्यात्मजावुभौ ।। २२.२४ ।।

ऋषय ऊचुः।।
कस्मान्मार्त्तण्ड इत्येष विवस्वानुच्यते बुधैः।
किमर्थं साऽश्वरूपा वै नासिकाभ्यामसूयत।
एतद्वेदितुमिच्छामस्तत्त्वं विब्रूहि पृच्छताम् ।। २२.२५ ।।

सूत उवाच।।
चिरोत्पन्नमतिर्भिन्नमण्डं त्वष्ट्रा विदारितम्।
दृष्ट्वा गर्भवधाद्भीतः कश्यपो दुःशितोऽभवत् ।। २२.२६ ।।

अण्डे द्विधाकृते त्वण्डं दृष्ट्वा त्वष्टारमब्रवीत्।
नैतदण्डं भवान्नूनं मार्त्तण्डस्त्वं भवानघ ।। २२.२७ ।।

न खल्वयं मृतोऽण्डे च इति स्नेहात् पिताऽब्रवीत्।
तस्य तद्वचनं श्रुत्वा नामान्वर्थमुदाहरत् ।। २२.२८ ।।

यन्मार्त्तण्डो भवेत्युक्तः पित्राऽण्डे वै द्विधा कृते।
तस्माद्विवस्वान्मार्त्तण्डः पुराणज्ञैर्विभाष्यते ।। २२.२९ ।।

ततः प्रजाः प्रवक्ष्यामि मार्त्तण्डस्य विवस्वतः।
विजज्ञे सवितुः संज्ञाभार्यायान्तु त्रयं पुरा ।। २२.३० ।।

मनुर्यवीयान् सावर्णिः संज्ञायाञ्च तथाश्विनौ।
शनैश्चरश्च सप्तैते मार्त्तण्डस्यात्मजाः स्मृताः ।। २२.३१ ।।

विवस्वान् कश्यपाज्जज्ञे दाक्षायण्यां महायशाः।
तस्य भार्याऽभवत्त्वाष्ट्री महादेवी विवस्वतः।
सुरेणुरिति विख्याता पुनः संज्ञेति विश्रुता ।। २२.३२ ।।

सा तु भार्या भगवतो मार्त्तण्डस्यातितेजसः।
नातुष्यद्भर्तृरूपेण रूपयौवनशालिनी ।। २२.३३ ।।

आदित्यस्य हि तद्रूपं मार्त्तण्डस्य हि तेजसा।
गोत्रेषु प्रतिरुद्धं वै नाति कान्तमिवाभवत् ।। २२.३४ ।।

न खल्वयं मृतो ह्यण्डे इति स्नेहात्तमब्रवीत् ।
अज्ञानः कश्यपः स्नेहान्मार्त्तण्ड इति चोच्यते ।। २२.३५ ।।

तेजस्त्वभ्यधिकं तस्य नित्यमेव विवस्वतः।
येनापि तापयामास त्रील्लोँकान् कश्यपात्मजः ।। २२.३६ ।।

त्रीण्यपत्यानि संज्ञायां जनयामास वै रविः ।
द्वौ सुतौ तु महावीर्यौ कन्यां कालिन्दिमेव च ।। २२.३७ ।।

मनुर्विवस्वतो ज्येष्ठः श्राद्धदेवः प्रजापतिः।
ततो यमो यमी चैव यमजौ संबभूवतुः ।। २२.३८ ।।

शान्तवर्णन्तु तद्रूपं दृष्ट्वा संज्ञा विवस्वतः।
असहन्ती स्वकां जायां सवर्णां निर्ममे पुनः ।। २२.३९ ।।

महीमयी तु सा नारी तस्याश्छायासमुद्गता।
प्राञ्जलिः प्रयता भूत्वा पुनः संज्ञामभाषत ।। २२.४० ।।

वदस्व किं मया कार्यं सा संज्ञा तामथाब्रवीत्।
अहं यास्यामि भद्रन्ते स्वमेव भवनं पितुः ।। २२.४१ ।।

त्वयेह भवने मह्यं वस्तव्यं निर्विशङ्कया।
इमौ च बालकौ मह्यं कन्या च वरवर्णिनी ।। २२.४२ ।।

भर्त्रे वै नैवमाख्येयमिदं भगवते त्वया।
एवमुक्ताब्रवीत् संज्ञां संज्ञायाः पार्थिवी तु सा ।। २२.४३ ।।

आकाशग्रहणाद्देवि आशयं नैव कर्हिचित्।
आख्यास्यामि मतं तुभ्यं गच्छ देवि स्वमालयम् ।। २२.४४ ।।

समाधाय च तां संज्ञा तथेत्युक्ता तया च सा।
त्वष्टुः समीपमगमद्व्रीडितेव तपस्विनी ।। २२.४५ ।।

पिता तामागतां दृष्ट्वा क्रुद्धः संज्ञामथाब्रवीत्।
भर्तुः समीपं गच्छ त्वं मा जुगुप्स दिवाकरम् ।। २२.४६ ।।

सैवमुक्ता तदा पित्रा नियुक्ता च पुनः पुनः।
वर्षाणान्तु सहस्रं वै वसति स्म पितुर्गृहे ।। २२.४७ ।।

भर्तुः समीपं गच्छ त्वं नियुक्ता च पुनः पुनः।
अगमद्वडवा भूत्वाच्छाद्य रूपमनिन्दिता।
उत्तरान् सा कुरून् गत्वा तृणान्यथ चचार सा ।। २२.४८ ।।

द्वितीयायान्तु संज्ञायां संज्ञेयमिति चिन्त्यताम्।
आदित्यो जनयामास पुत्रावादित्यवर्चसौ ।। २२.४९ ।।

पूर्वजस्य मनोस्तुल्यौ सादृश्येन तु तौ प्रभू ।
श्रुतश्रवं तु धर्म्मज्ञं श्रुतकर्म्माणमेव च ।। २२.५० ।।

श्रुतश्रवा मनुः सोऽपि सावर्णिर्वैभविष्यति।
श्रुतकर्म्मा तु विज्ञेयो ग्रहो वै यः शनैश्चरः ।। २२.५१ ।।

मनुरेवाभवत्सो वै सावर्ण्य इति बुध्यते।
संज्ञा तु पार्थिवी सा वै स्वस्य पुत्रस्य वै तदा ।। २२.५२ ।।

चकाराभ्यधिकं स्नेहं न तथा पूर्वजेषु वै।
मनुस्तच्चाक्षमत्सर्वं यमस्तद्वै न चाक्षमत् ।। २२.५३ ।।

बहुशो यस्यमानस्तु सापत्न्यादतिदुःखितः।

तां वै रोषाच्च बाल्याच्च भाविनोऽर्थस्य वै बलात् ।। २२.५४ ।।

पदा सन्तर्जयामास संज्ञां चैव स्वतो यमः।
सा शशाव ततः क्रोधात् सवर्णा जननी यमम् ।। २२.५५ ।।

पदा तर्जयसे यस्मात् पितृभार्यां यशस्विनीम्।
तस्मात्तवैष चरणः पतिष्यति न संशयः ।। २२.५६ ।।

यमस्तु तेन शापेन भृशं पीडितमानसः।
मनुना सह धर्म्मात्मा पितुः सर्व्वं न्यवेदयत् ।। २२.५७ ।।

भृशं शापभयोद्विग्नः संज्ञावाक्यैर्विनिर्जितः।
बाल्याद्वा यदि वा मोहान्मां भवांस्त्रातुमर्हति ।। २२.५८ ।।

शप्तोऽहमस्मिँल्लोकेश जनन्या तपतां वर।
तव प्रसादो नस्त्रातुं ह्येतस्मान्महतो भयात् ।। २२.५९ ।।

विवस्वानेवमुक्तस्तु यमं प्रोवाच वै प्रभुः।
असंशयं पुत्र महद्भविष्यं तत्र कारणम् ।। २२.६० ।।

येन त्वामाविशत्क्रोधो धर्म्मज्ञं सत्यवादिनम्।
न शक्यमेतन्मिथ्या तु कर्त्तुं मातुर्वचस्तव ।। २२.६१ ।।

कृमयो मांसमादाय यास्यन्ति तु महीं तव।
ततः पादं महाप्राज्ञ पुनः संप्राप्स्यसे सुखम् ।। २२.६२ ।।

कृतमेवं वचः सत्यं मातुस्तव भविष्यति।
शापस्य परिहारेण त्वं च त्राता भविष्यसि ।। २२.६३ ।।

आदित्यस्त्वब्रवीत् संज्ञां किमर्थं तनयेषु वै।
तुल्येष्वप्यधिकः स्नेह एकस्मिन् क्रियते त्वया ।। २२.६४ ।।

सा तत्परिहरन्ती वै नाचचक्षे विवस्वतः।
आत्मना स समाधाय योगन्तथ्यमपश्यत ।। २२.६५ ।।

तां शप्तुकामो भगवान् नाशाय कुपितः प्रभुः ।
सा तत्सर्वं यथातत्त्वमाचचक्षे विवस्वतः ।। २२.६६ ।।

विवस्वानथ तच्छ्रुत्वा क्रुद्धस्त्वष्टारमभ्ययात्।
त्वष्टा तु तं यथान्यायमर्चयित्वा विभावसुम् ।। २२.६७ ।।

निर्द्दग्धुकामं रोषेण सान्त्वयामास वै शनैः।

तवातितेजसा युक्तमिदं रूपं न शोभते ।। २२.६८ ।।

असहन्ती तु तत् संज्ञा वने चरति शाद्वले।
द्रक्ष्यते तां भवानद्य स्वां भार्यां शुभचारिणीम् ।। २२.६९ ।।

श्लाघ्यां यौवनसम्पन्नां योगमास्थाय गोपते।
अनुकूलं भवेदेवं यदि स्यात् समयो मतः ।। २२.७० ।।

रूपं विवर्त्तयेदन्ते आद्यं श्रेष्ठमरिन्दम।
रूपं विवस्वतस्त्वासीत्तिर्यगूर्ध्वमधस्तथा ।। २२.७१ ।।

तेनासौ व्रीडितो देवो रूपेण तु दिवस्पतिः।
तस्मात्त्वष्टा स चक्रं तु बहुमेने महातपाः ।। २२.७२ ।।

अनुज्ञातस्ततस्त्वष्टा रूपनिर्वर्त्तनाय तु।
ततोऽभ्युपगमात्त्वष्टा मार्त्तण्डस्य विवस्वतः ।। २२.७३ ।।

भ्रमिमारोप्य तत्तेजः शातयामास तस्य वै।
तत्तु निर्भासितन्तेजस्तेजसापहृतेन तु ।। २२.७४ ।।

कान्तात् कान्ततरं द्रष्टुमशुभं शुशुभे ततः।
ददर्श योगमास्थाय स्वाम्भार्यां वडवां तथा ।। २२.७५ ।।

अदृश्यां सर्वभूतानां तेजसा नियमेन च।
अश्वरूपेण मार्त्तण्डस्तां मुखे समभावयत् ।। २२.७६ ।।

मैथुनाय विचेष्टन्ती परपुंसोपशङ्कया।
सा तन्निरधमच्छुक्रं नासिकाभ्यां विवस्वतः ।। २२.७७ ।।

देवौ तस्मादजायेतामश्विनौ भिषजां वरौ ।
नासत्यश्चैव दस्रश्च स्मृतौ द्वावश्विनाविति ।। २२.७८ ।।

मार्त्तण्डस्य सुतावेतावष्टमस्य प्रजापतेः।
तान्तु रूपेण कान्तेन दर्शयामास भास्करः ।। २२.७९ ।।

सा तं दृष्ट्वात्तदा भार्या तुतोष च मुमोह च।
यमस्तु तेन शापेन भृशम्पीडितमानसः ।। २२.८० ।।

धर्म्मेण रञ्जयामास धर्म्मराजस्ततस्तु सः ।
सोऽलभत् कर्मणा तेन शुभेन परमद्युतिः ।। २२.८१ ।।

पितृणामाधिपत्यञ्च लोकपालत्वमेव च।

मनुः प्रजापतिश्चैव सावर्णिः स महायशाः ।। २२.८२ ।।

भाव्यसौ नागते तस्मिन् मनुः सावर्णिकेऽन्तरे।
मेरुपृष्ठे सुरम्ये वै अद्यापि चरते प्रभुः ।। २२.८३ ।।

भ्राता शनैश्चरस्तत्र ग्रहत्वं स तु लब्धवान्।
त्वष्टाऽनु तेन रूपेण विष्णोश्चक्रमकल्पयत्।
महाऽप्रतिहतं युद्धे दानव प्रतिवारणे ।। २२.८४ ।।

यवीयसी तयोर्या तु यमुना च यशस्विनी।
अभवत् सा सरिच्छ्रेष्ठा यमुना लोकभाविनी ।। २२.८५ ।।

यस्तु ज्येष्ठो महातेजाः सर्गो यस्य तु साम्प्रतम्।
विस्तरं तस्य वक्ष्यामि मनोर्वैवस्वतस्य ह ।। २२.८६ ।।

इदं तु जन्म देवानां श्रृणुयाद्वा पठेत वा।
वैवस्वतस्य पुत्राणां सप्तानान्तु महौजसाम्।
आपदं प्राप्य मुच्येत प्राप्नुयाच्च महद्यशः ।। २२.८७ ।।

इति श्रीमहापुराणऐ वायुप्रोक्ते श्राद्धकल्पे वरुणवंशवर्णनं नाम द्वाविंशोऽध्यायः ।। २२ ।। *

सूत उवाच।।

ततो मन्वन्तरेऽतीते चाक्षुषे दैवतैः सह।
वैवस्वताय महते पृथिवीराज्यमादिशत् ।। २३.१ ।।

तस्य वैवस्वतो वक्ष्ये साम्प्रतस्य महात्मनः।
आनुपूर्व्येण वै विप्राः कीर्त्त्यमानं निबोधत ।। २३.२ ।।

मनोर्वैवस्वतस्येह सर्गमादाय साम्प्रतम् ।
मनोः प्रथमजस्यासन् नवपुत्रास्तु तत्समाः ।। २३.३ ।।

इक्ष्वाकुर्नहुषश्चैव धृष्टः शर्यातिरेव च।
नरिष्यन्तस्तथा प्रांशु र्नाभागोऽरिष्ट एव च।
करूषश्च पृषध्रश्च नवैते मानवाः स्मृताः ।। २३.४ ।।

ब्रह्मणा तु मनुः पूर्वं चोदितस्तु निबोधत।
स्रष्टुं प्रचक्रमे कामं निष्फलं समवर्त्तत ।। २३.५ ।।

अथाकरोत्पुत्रकामः परामिष्टिं प्रजापतिः।
मित्रावरुणयोरंशे मनुराहुतिमावपत् ।। २३.६ ।।

तत्र दिव्याम्बरधरा दिव्याभरणभूषिता।
दिव्यसन्नहना चैव इडा जज्ञे इति श्रुतिः ।। २३.७ ।।

तामिलेत्यथ होवाच मनुर्द्दण्डधरः स्मृतः।
अनुगच्छामि भद्रन्ते तमिला प्रत्युवाच ह ।। २३.८ ।।

धर्म्मयुक्तमिदं वाच्यं पुत्रकामं प्रजापतिम्।
मित्रावरुणयोरंशे जातास्मि वदतां वर ।। २३.९ ।।

तयोः सकशं यास्यामि मा नो धर्मो हतोऽवधीत्।
सैवमुक्त्वा पुनर्द्देवी तयोरन्तिकमागमत् ।। २३.१० ।।

गत्वान्तिकं वरारोहा प्राञ्जलिर्वाक्यमब्रवीत् ।
अंशेऽस्मिन्युवयोर्जाता देवौ किं करवाणि च ।। २३.११ ।।

मनुनैवाहमुक्तास्मि अनुगच्छस्व मामिति।
तथा तु वदतीं साध्वीमिडामाश्रित्य तावुभौ ।। २३.१२ ।।

देवौ च मित्रावरुणाविदं वचनमूचतुः ।
अनेन तव धर्मज्ञे प्रश्रयेण दमेन च ।। २३.१३ ।।

सत्येन चैव सुश्रोणि प्रीतौ स्वो वरवर्णिनि।

आवयोस्त्वं महाभागे ख्यातिं कन्या प्रयास्यसि ।। २३.१४ ।।

सुद्युम्न इति विख्यातस्त्रिषु लोकेषु पूजितः।
जगत्प्रियो धर्म्मशीलो मनोर्वंश विवर्द्धनः ।। २३.१५ ।।

मानवः स तु सुद्युम्नः स्त्रीभावमगमत् प्रभुः।
सा तु देवी वरं लब्ध्वा निवृत्ता पितरं प्रति ।। २३.१६ ।।

बुधेनान्तरमासाद्य मैथुनायोपमन्त्रिता।
सोमपुत्राद्बुधाच्चास्या ऐलो जज्ञे पुरूरवाः ।। २३.१७ ।।

बुधात् सा जनयित्वा तु सुद्युम्नं पुनरागता।
सुद्युम्नस्य च दायादास्त्रयः परमधार्म्मिकाः ।। २३.१८ ।।

उत्कलश्च गयश्चैव विनताश्वस्तथैव च।
उत्कलस्योत्कलं राष्ट्रं विनताश्वस्य पश्चिमम् ।
दिक्षु वातस्य राजर्षेर्गयस्य तु गया पुरी ।। २३.१९ ।।

प्रविसृष्टे मनौ तस्मिन् प्रजाः सृष्ट्वा दिवाकरः।
दशधा तद्दधत् क्षेत्रमकरोत् पृथिवीमिमाम् ।। २३.२० ।।

इक्ष्वाकुरेव दायादानन्यान् दश समाप्नुयात्।
कन्याभावात्तु सुद्युम्नो नैनं भागमवाप्नुयात् ।। २३.२१ ।।

वसिष्ठवचनाच्चासीत् प्रतिष्ठानो महाद्युतिः।
प्रतिष्ठा धर्मराजस्य सुद्युम्नस्य महात्मनः ।। २३.२२ ।।

तत् पुरूरवसे प्रादाद्राष्ठ्रं प्राप्य महायशाः।
मानवेभ्यो महाभागा स्त्रीपुंसोर्लक्षणं प्रति।
मानवः स तु सुद्युम्नः स्त्रीभावमगमत् पुनः ।। २३.२३ ।।

एतच्छ्रुत्वा तु ॠषयः पप्रच्छुस्तदनन्तरम् ।
मानवः स तु सुद्युम्नः स्त्रीभावमगमत् कथम् ।। २३.२४ ।।

सूत उवाच।।
प्रोवाच वचनं देवी प्रियहेतोः प्रियं प्रिया ।
स मे ममाश्रमे देव यः पुमान् संप्रवेक्ष्यति।
भविष्यति ध्रुवं नारी सा तुल्याप्सरसां शुभा ।। २३.२५ ।।

तत्र सर्वाणि भूतानि पिशाचाः पशवश्च ये।
स्त्रीभूताः सह रुद्रेण क्रीडन्त्यप्सरसो तथा ।। २३.२६ ।।

उमावनं प्रविष्टस्तु स राजा मृगयां गतः।
सह पिशाचैर्भूतैस्तु रुद्रैः स्त्रीभावमास्थितः ।। २३.२७ ।।

तस्मात् स राजा सुद्युम्नः स्त्रीभावं लब्धवान् पुनः ।
महादेवप्रसादाच्च गाणपत्य मवाप्नुयात् ।। २३.२८ ।।

इति श्रीमहापुराणे वायुप्रोक्ते वैवस्वतमनोः सृष्टिकथनं नाम त्रयोविंशोऽध्यायः ।। २३ ।। *

सूत उवाच।।

निसर्गं मनु पुत्राणां विस्तरेण निबोधत।
पृषध्रो हिसयित्वा तु गुरोर्गावमभक्षयत् ।। २४.१ ।।

शापाच्छूद्रत्वमापन्नश्च्यवनस्य महात्मनः।
करूषस्य तु कारूषः क्षत्रियो युद्धदुर्मदः ।। २४.२ ।।

सहस्रक्षत्रियगणविक्रान्तः संबभूव ह।
नाभागारिष्टपुत्रस्तु विद्वानासीद्भलन्दनः ।। २४.३ ।।

भलन्दनस्य पुत्रोऽभूत् प्रांशुर्नाम महाबलः।
प्रांशोरेकोऽभवत् पुत्रः प्रजानिरिति विश्रुतः ।। २४.४ ।।

प्रजानेरभवत् पुत्रः खनित्रो नाम वीर्यवान्।
तस्य पुत्रोऽभवच्छ्रीमान् क्षुपो नाम महायशाः ।। २४.५ ।।

क्षुपस्य विंशः पुत्रस्तु प्रतिमा न बभूव ह।
विंशपुत्रस्तु कल्याणो विविंशो नाम धार्मिकः ।। २४.६ ।।

विविंशपुत्रो धर्मात्मा खनिनेत्रः प्रतापवान्।
करन्धमस्तस्य पुत्रस्त्रेतायुगमुखेऽभवत् ।। २४.७ ।।

करन्धमसुतश्चापि आविक्षिन्नाम वीर्यवान्।
आविक्षितो व्यतिक्रामत् पितरं गुणवत्तया ।। २४.८ ।।

मरुत्तो नाम धर्मात्मा चक्रवर्त्तिसमो नृपः।
संवर्त्तेन दिवं नीतः ससुहृत् सह बान्धवैः ।। २४.९ ।।

विवादोऽत्र महानासीत् संवर्त्तस्य बृहस्पतेः।
ऋद्धिं दृष्ट्वा तु यज्ञस्य क्रुद्धस्तस्य बृहस्पतिः ।। २४.१० ।।

संपर्त्तेन हृते यज्ञे चुकोप सुभृशन्तदा।
लोकानां स हि नाशय दैवतैर्हि प्रसादितः ।। २४.११ ।।

मरुत्तश्चक्रवर्त्ती स नरिष्यन्तमवाप्तवान्।
नरिष्यन्तस्य दायादो राजा दण्डधरो दमः ।। २४.१२ ।।

तस्य पुत्रस्तु विक्रान्तो राजासीद्राष्ट्रवर्द्धनः ।
सुधृती तस्य पुत्रस्तु नरः सुधृतिनः सुतः ।। २४.१३ ।।

केवलस्तस्य पुत्रस्तु बन्धुमान् केवलात्मजः।

अथ बन्धुमतः पुत्रो धर्मात्मा वेगवान् नृपः ।। २४.१४ ।।

बुधो वेगवतः पुत्र स्तृणबिन्दुर्बुधात्मजः।
त्रेतायुगमुखे राजा तृतीये संबभूव ह ।। २४.१५ ।।

कन्या तु तस्य द्रविडा माता विश्रवसो हि सा।
पुत्रश्चास्य विशालोऽभूद् राजा परमधार्मिकः ।। २४.१६ ।।

विशालस्य समुत्पन्ना विशाला नयनिर्मिता।
विशालस्य सुतो राजा हेमचन्द्रो महाबलः ।। २४.१७ ।।

सुचन्द्र इति विख्यातो हेमचन्द्रादनन्तरम्।
सुचन्द्रतनयो राजा धूम्राश्च इति विश्रुतः ।। २४.१८ ।।

धूम्राश्वतनयो विद्वान् सृञ्जयः समपद्यत।
सृञ्जयस्य सुतः श्रीमान् सहदेवः प्रतापवान् ।। २४.१९ ।।

कृशाश्वः सहदेवस्य पुत्रः परमधार्मिकः।
कृशाश्वस्य महातेजाः सोमदत्तः प्रतापवान् ।। २४.२० ।।

सोमदत्तस्य राजर्षेः सुतोभूज्जनमेजयः।
जनमेजयात्मजश्चैव प्रमतिर्नाम विश्रुतः ।। २४.२१ ।।

तृणबिन्दुप्रसादेन सर्वे वैशालका नृपाः ।
दीर्घायुषो महात्मानो वीर्यवन्तः सुधार्मिकाः ।। २४.२२ ।।

शर्यातेर्मिथुनं त्वासीदानार्तो नाम विश्रुतः।
पुत्रः सुकन्या कन्या न भार्याया च्यवनस्य तु ।। २४.२३ ।।

आनार्त्तस्य तु दायादो रेवो नाम्ना तु वीर्यवान्।
आनर्त्तो विषयो यस्य पुरी चापि कुशस्थली ।। २४.२४ ।।

रेवस्य रैवतः पुत्रः ककुझी नाम धार्मिकः।
ज्येष्ठो भ्रातृशतस्यासीद्राजा प्राप्य कुशस्थलीम् ।। २४.२५ ।।

कन्यया सह श्रुत्वा च गन्धर्वं ब्रह्मणोऽन्तिके।
मुहूर्त्तं देवदेवस्य मार्त्यं बहुयुगं विभोः ।। २४.२६ ।।

आजगाम युवा चैव स्वां पुरीं यादवैर्वृताम्।
कृतां द्वारवतीं नाम बहुद्वारां मनोरमाम् ।। २४.२७ ।।

भोजवृष्ट्यन्धकैर्गुप्तां वसुदेवपुरोगमैः।

ताङ्कथां रैवतः श्रुत्वा यथातत्त्वमरिन्दमः ।। २४.२८ ।।

कन्या तु बलदेवाय सुव्रतां नाम रेवतीम्।
दत्त्वा जगाम शिखरं मेरोस्तपसि संस्थितः ।। २४.२९ ।।

रेमे रामश्च धर्मात्मा रेवत्या सहितः किल।
तां कथामृषयः श्रुत्वा पप्रच्छुस्तदनन्तरम् ।। २४.३० ।।

ऋष्य ऊचुः ।।

कथं बहुयुगे काले व्यतीते सूतनन्दन।
न जरां रेवती प्राप्ता पलितञ्च कुतः प्रभो ।। २४.३१ ।।

मेरुं गतस्य वा तस्य शर्य्यातेः सन्ततिः कथम्।
स्थिता पृथिव्यामद्यापि श्रोतुमिच्छामि तत्त्वतः ।। २४.३२ ।।

कियन्तो वा सुरगणा गन्धर्व्वास्तत्र कीदृशाः।
यच्छ्रुत्वा रैवतः कालान् मुहूर्त्तमिव मन्यते ।। २४.३३ ।।

सूत उवाच।।

न जरा क्षुत्पिपासा वा न च मृत्युभयं ततः।
न च रोगः प्रभवति ब्रह्मलोकगतस्य हि ।। २४.३४ ।।

गान्धर्व्वं प्रति यच्चापि पृष्टस्तु मुनिसत्तमाः।
ततोऽहं संप्रवक्ष्यामि याथातथ्येन सुव्रताः ।। २४.३५ ।।

सप्त स्वरास्त्रयो ग्रामा मूर्च्छनास्त्वेकविंशतिः।
तालाश्चैकोनपञ्चाशदित्येतत् स्वरमण्डलम् ।। २४.३६ ।।

षड्जर्षभौ च गान्धारो मध्यमः पञ्चमस्तथा।
धैवतश्चापि विज्ञेयस्तथा चापि निषादवान् ।। २४.३७ ।।

सौवीरी मध्यमग्रामो हरिणास्या तथैव च।
स्यात्कलोपबलोपेता चतुर्थी शुद्धमध्यमा ।। २४.३८ ।।

शार्ङ्गी च पावनी चैव दृष्टाका च यथाक्रमम्।
म्ध्यमग्रामिकीः ख्याताः षड्जग्रामं निबोधत ।। २४.३९ ।।

उत्तरमन्द्रा रजनी तथा या चोत्तरायता।
शुद्धषड्जा तथा चैव जानीयात् सप्तमां च ताम् ।। २४.४० ।।

गान्धारग्रामि कांश्चान्यान् कीर्त्यमानान् निबोधत।

आग्निष्टोमिकमाद्यन्तु द्वितीयं वाजपेयिकम् ।। २४.४१ ।।

तृतीयं पौण्ड्रकं प्रोक्तं चतुर्थं चाश्वमेधिकम्।
पञ्चमं राजसूयं व षष्ठं चक्रसुवर्णकम् ।। २४.४२ ।।

सप्तमं गोसवं नाम महावृष्टिकमष्टमम्।
ब्रह्मदानञ्च नवमं प्राजापत्यमनन्तरम् ।। २४.४३ ।।

नागपक्षाश्रयं विद्याद्गोतरञ्च तथैव च।
हयक्रान्तं मृगक्रान्तं विष्णुक्रान्तं मनोहरम् ।। २४.४४ ।।

सूर्य्यक्रान्तं वरेण्यञ्च मत्तकोकिलवादिनम्।
सावित्रमर्द्धसावित्रं सर्व्वतो मद्रमेव च ।। २४.४५ ।।

सुवर्णञ्च सुतन्द्रञ्च विष्णुवैष्णुवरावुभौ।
सागरं विजयञ्चैव सर्वभूतमनोहरम् ।। २४.४६ ।।

हंसं ज्येष्ठं विजानीमस्तुम्बुरुप्रियमेव च।
मनोहरमधात्र्यञ्च गन्धर्वानुगतश्च यः ।। २४.४७ ।।

अलम्बुषेष्टश्च तथा नारदप्रिय एव च।
कथितो भीमसेनेन नागराणां यथा प्रियः ।। २४.४८ ।।

करोपनीत विनता श्रीराख्यो भार्गवप्रियः।
विंशतिर्मध्यमग्रामः षड्जग्रामश्चतुर्द्दश ।। २४.४९ ।।

तथा पञ्चदशेच्छन्ति गान्धारग्रामसंस्थितान् ।
ससौवीरा तु गान्धारी ब्रह्मणा ह्युपगीयते ।। २४.५० ।।

उत्तरादिस्वरस्यैव ब्रह्मा वै देवताऽत्र च।
हरिदेशसमुत्पन्ना हरिणास्या व्यजायत।
मूर्च्छना हरिणास्यैव अस्या इन्द्रोऽधिदैवतम् ।। २४.५१ ।।

करोपनीतवितता मरुद्भिः स्वरमण्डले।
सा कलोपनता तस्मान्मारुतश्चात्र दैवतम् ।। २४.५२ ।।

मनुदेशसमुत्पन्ना मूर्च्छना शुद्धमध्यम्।
मध्यमोऽत्र स्वरः शुद्धो गन्धर्व्वश्चात्र देवता ।। २४.५३ ।।

मृगैः सह सञ्चरते सिद्धानां मार्गदर्शने।
यस्मात्तस्मात् स्मृता मार्गी मृगेन्द्रोऽस्याश्च देवता ।। २४.५४ ।।

सा चाश्रमसमायुक्ता अनेकान् पौरवान् रवान्।
मूर्च्छना योजना ह्येषा रजसा रजनी ततः ।। २४.५५ ।।

ताल उत्तरमन्द्रांशः षड्जदैवतकां विदुः।
तस्मादुत्तरतालञ्च प्रथमं स्वायतं विदुः।
तस्मादुत्तरमन्द्रोऽयं देवतास्य ध्रुवो ध्रुवम् ।। २४.५६ ।।

अपानादुत्तरत्वाच्च धैवतस्योत्तरायणः।
स्यादियं मूर्च्छना ह्येवं पितरः श्राद्धदेवताः ।। २४.५७ ।।

शुद्धषड्जस्वरं कृत्वा यस्मादग्निं महर्षयः।
उपतिष्ठन्ति तस्मात्तं जानीयाच्छुद्धषड्जिकम् ।। २४.५८ ।।

यः सतां मूर्च्छनां कृत्वा पञ्चमस्वरको भवेत् ।
यक्षीणां मूर्च्छना सा तु याक्षिका मूर्च्छना स्मृता ।। २४.५९ ।।

नागदृष्टिर्विषा गीता नोपसर्पन्ति मूर्च्छनाम्।
भवन्तीव हृता ह्येते ब्रह्मणा नागदेवताः।
अहीनां मूर्च्छना ह्येषा वरुणश्चात्र देवता ।। २४.६० ।।

शकुन्तकानां कृत्वा च उपमां यान्ति किन्नराः ।
उत्तमां मूर्च्छना तस्मात् पक्षिराजोऽत्र देवता ।। २४.६१ ।।

गान्धाररागशब्देन गां च धारयतेऽर्थतः।
तस्माद्विशुद्धगान्धारी गन्धर्वश्चाधिदैवतम् ।। २४.६२ ।।

गान्धारानन्तरं गत्वा सृष्टेयं मूर्च्छना यतः।
तस्मादुत्तरगान्धारी वसवश्चात्र देवताः ।। २४.६३ ।।

सेयं खलु महाभूता पितामह मुपस्थिता।
षड्जेयं मूर्च्छना तस्मात् स्मृता ह्यनलदेवता ।। २४.६४ ।।

दिव्येयं चायता तेन मन्दषष्ठा च मूर्च्छने।
निवृत्तगुणनामानं पञ्चमञ्चात्र धैवतम् ।। २४.६५ ।।

पूर्णाः सप्तस्वरा ह्येवं मूर्च्छनाः संप्रकीर्त्तिताः।
नानासाधारणाश्चैव षडेवानुविदस्तथा ।। २४.६६ ।।

इति श्रीमहापुराणे वायुप्रोक्ते वैवस्वत मनुवंशगान्धर्व्वमूर्च्छनालक्षणकथनं नाम चतुर्विंशोऽध्यायः ।। २४ ।। *

पूर्व्वाचार्य्यमतं बुद्ध्वा प्रवक्ष्याम्यनुपूर्व्वशः।
त्रिंशतं वै अलङ्कारांस्तान् मे निगदतः श्रृणु ।। २५.१ ।।

अलङ्कारास्तु वक्तव्याः स्वैःस्वैर्वर्णैः प्रहेतवः।
संस्थानयोगैश्च तथा पादानां चान्ववेक्षया ।। २५.२ ।।

वाक्यार्थपदयोगार्थैरलङ्कारस्य पूरणम्।
पदानि गीतकस्याहुः पुरस्तात् पृष्ठतोऽथवा ।। २५.३ ।।

स्थानानि त्रीणि जानीयादुरःकण्ठशिरस्तथा।
एतेषु त्रिषु स्थानेषु प्रवृत्तो विधिरुत्तमः ।। २५.४ ।।

चत्वारः प्रकृतौ वर्णाः प्रविचारश्चतुर्विधः।
विकल्पमष्टधा चैव देवाः षोडशधा विदुः ।। २५.५ ।।

स्थायी वर्णः प्रसंचारी तृतीयमवरोहणम्।
आरोहणं चतुर्थन्तु वर्णं वर्णविदो विदुः ।। २५.६ ।।

तत्रैकः संचरस्थायी सचरास्तचरीभवन्।
अथ रोहणवर्णानामवरोहं विनिर्दिशेत् ।। २५.७ ।।

आरोहणेन चारोहवर्णं वर्णविदो विदुः।
एतेषामेव वर्णानामलङ्कारान्निबोधत ।। २५.८ ।।

अलङ्कारास्तु चत्वारः स्थापनी क्रमरेजिनः।
प्रमादश्चाप्रमादश्च तेषां वक्ष्यामि लक्षणम् ।। २५.९ ।।

विस्वरोष्ट्रकलाश्चैव स्थानादेकान्तरं गताः।
आवर्त्तस्याक्रमोत्पत्ती द्वे कार्य्ये परिमाणतः ।। २५.१० ।।

कुमारमपरं विद्याद्विस्तरं वमनं गतम्।
एष वै चाप्यपाङ्गस्तु कुतारेकः कलाधिकः ।। २५.११ ।।

श्येनस्त्वेकान्तरे जातः कलामात्रान्तरे स्थितः।
तस्मिंश्चैव स्वरे वृद्धिस्तिष्ठते तद्विलक्षणा ।। २५.१२ ।।

श्येनस्तु अपरोहस्तु उत्तरः परिकीर्त्तितः।
कलाकलप्रमाणाच्च स बिन्दुर्नाम चायते ।। २५.१३ ।।

बिन्दुरेककला कार्या वर्णान्तस्थायिनी भवेत्।
विपर्ययस्वरोऽपि स्यादयस्य दुर्घटितोऽपि न ।। २५.१४ ।।

एकान्तरा तु वाद्यन्तु षड्जतः परमः स्वरः।
आक्षेपास्कन्दनं कार्य्यं काकस्येवोच्चपुष्कलम् ।। २५.१५ ।।

सन्तारौ तौ तु सञ्चार्यौ कार्यं वा कारणं तथा।
आक्षिप्तमवरोह्यापि प्रोक्षमद्यन्तथैव च ।। २५.१६ ।।

द्वादशञ्च कलास्थानमेकान्तरगतन्ततः।
प्रेङ्खोलितमलङ्कारमेवं स्वरसमन्वितम् ।। २५.१७ ।।

स्वरसंक्रामकाच्चैव ततः प्रोक्तन्तु पुष्कलम्।
प्रक्षिप्तमेव कलया पादानीतरयोर्भवेत् ।। २५.१८ ।।

द्विकलं वा यथा भूतं यत्तद् ह्रासितमुच्यते।
उच्चाराद्विस्वरारूढा तथा चाष्टस्वरान्तरम् ।। २५.१९ ।।

यस्तु स्यादवरोहो वा तारतो मन्द्रतोऽपि वा।
एकान्तरहिता ह्येते तमेव स्वरमन्ततः ।। २५.२० ।।

मक्षिप्रच्छेदनो नाम चतुष्कलगणः स्मृतः।
अलङ्कारा भवन्त्येते त्रिंशद्ये वै प्रकीर्त्तिताः।
वर्णस्थानप्रयोगेण कलामात्रा प्रमाणतः ।। २५.२१ ।।

संस्थानञ्च प्रमाणं च विकारो लक्षणन्तथा।
चतुर्विधमिदं ज्ञेयमलङ्कारप्रयोजनम् ।। २५.२२ ।।

यथात्मनो ह्यलङ्कारो विपर्यस्तोऽतिगर्हितः।
वर्णमेवाप्यलंकर्त्तुं विषमं ह्यात्मसम्भवात् ।। २५.२३ ।।

नानाभरणसंयोगाद्यथा नार्या विभूषणम्।
वर्णस्य चैवालङ्कारो विपर्यस्तोऽतिगर्हितः ।। २५.२४ ।।

न पादे कुण्डले दृष्टे न कण्ठे रसना यथा।
एवमेव ह्यलङ्कारो विपर्यस्तो विगर्हितः ।। २५.२५ ।।

क्रियमाणोऽप्यलङ्कारो रागं यश्चैव दर्शयेत्।
यथोद्दिष्टस्य मार्गस्य कर्त्तव्यस्य विधीयते ।। २५.२६ ।।

लक्षणं पर्य्यवस्थापि वर्णिकाभिः प्रवर्त्तनम्।
याथातथ्येन वक्ष्यामि मासेद्भवमुखोद्भवे ।। २५.२७ ।।

त्रयोविंशत्यशीतिस्तु तेषामेतद्विपर्ययः।
षड्जपक्षोऽपि तत्त्वादौ मध्यो हीनस्वरो भवेत् ।। २५.२८ ।।

षड्जमध्यमयोश्चैव ग्रामयोः पर्य्यपस्तथा।
मानोयोत्तरमन्द्रस्य षडेवात्राविकस्य च ।। २५.२९ ।।

स्वरालंप्रत्ययश्चैव सर्व्वेषां प्रत्ययः स्मृतः।
अनुगम्य बहिर्गीतं विज्ञातं पञ्चदैवतम् ।। २५.३० ।।

गोरूपाणां पुरस्तात्तु मध्यमांशस्तु पर्य्ययः।
तयोर्विभागो गीतानां लावण्यमार्गसंस्थितः ।। २५.३१ ।।

अनुषङ्गं मयोद्दिष्टं स्वसारञ्च स्वरान्तरम्।
पर्य्ययः संप्रवर्त्तेत सप्तस्वरपदक्रमम् ।। २५.३२ ।।

गान्धारांशेन गीयन्ते चत्वारि मन्द्रकाणि च।
पञ्चमो मध्यमश्चैव धैवते तु निषादजैः।
षड्जर्षभैश्च जानीमो मन्द्रकेष्वेव नान्तरे ।। २५.३३ ।।

द्वे चापरान्तिके विद्याद्धयशुल्लाष्टकस्य तु।
प्राकृते वैणवैश्चैव गान्धारांशे प्रयुज्यते ।। २५.३४ ।।

पदस्य तु त्रयं रूपं सप्तरूपन्तु कौशिकम्।
गान्धारांशेन कात्स्न्र्येन पर्ययस्य विधिः स्मृतः ।
एवञ्चैव क्रमोद्दिष्टो मध्यमांशस्य मध्यमः ।। २५.३५ ।।

यानि गीतानि प्रोक्तानि रूपेण तु विशेषतः।
तत्तु सप्तस्वरं कार्य्यं सप्तरूपञ्च कौशिकम् ।। २५.३६ ।।

अङ्गदर्शनमित्याहुर्माने द्वे समके तथा।
द्वितीयभावाचरणा मात्रा नाभिप्रतिष्ठिता ।। २५.३७ ।।

उत्तरे च प्रकृत्येवं मात्रा तल्लीयते तथा ।
हन्तारः पिण्डको यत्र मात्रायां नातिवर्त्तते ।। २५.३८ ।।

पादेनैकेन मात्रायां पादोनामति वीरणा।
संख्यायाश्चोपहननं तत्र यानमिति स्मृतम् ।। २५.३९ ।।

द्वितीयं पादभङ्गञ्च ग्रहेणाभिप्रतिष्ठितम्।
पूर्व्वमष्टतृतीये तु द्वितीयं चापरीतके ।। २५.४० ।।

अर्द्धेन पादसाम्यस्य पादभागाच्च पञ्चके।
पादभागं सपादं तु प्रकृत्यामपि संस्थितम् ।। २५.४१ ।।

चतुर्थमुत्तरे चैव मद्रवत्यां च मद्रके।
मद्रके दक्षिणस्यापि यथोक्ता वर्त्तते कला ।। २५.४२ ।।

पूर्व्वमेवानुयोगन्तु द्वितीया बुद्धिरिष्यते।
पादौ चाहरणं चास्मत् पारं नात्र विधीयते ।। २५.४३ ।।

एकत्वमुपयोगस्य द्वयोर्यद्धि द्विजोत्तम।
अनेकसमवायस्तु पताकाहरिणं स्मृतम् ।। २५.४४ ।।

तिसृणां चैव वृत्तीनां वृत्तौ वृत्ता च दक्षिणा।
अष्टौ तु समवायास्ते सौवीरा मूर्च्छना तथा।
कुशत्यनुत्तरः सत्यं सप्त सत्त्वस्वरं तु यः ।। २५.४५ ।।

इति श्रीमहापुराणे वायुप्रोक्ते गीतालङ्कारनिर्द्देशो नाम पंचविंशोऽध्यायः ।। २५ ।। *

सूत उवाच।।
ककुझिनस्तु तं लोकं रैवतस्य गतस्य ह।
हताः पुण्यजनैः सर्व्वा राक्षसैः सा कुशस्थली ।। २६.१ ।।

तद्वै भ्रातृशतं तस्य धार्म्मिकस्य महात्मनः।
निबध्यमाना रक्षोभिर्दिशः संप्राद्रवन् भयात् ।। २६.२ ।।

तेषान्तु ते भया क्रान्ताः क्षत्रियास्तत्र तत्र हि।
अन्ववायस्तु सुमहान् महांस्तत्र द्विजोत्तमाः ।। २६.३ ।।

प्रयता इति विख्याता दिक्षु सर्व्वासु धार्म्मिकाः।
धृष्टस्य धार्ष्टकं क्षत्रं रणधृष्टं बभूव ह ।। २६.४ ।।

त्रिसाहस्रन्तु सगणं क्षत्रियाणां महात्मनाम्।
नभगस्य च दायादो नाभागो नाम वीर्य्यवान् ।। २६.५ ।।

अम्बरीषस्तु नाभागिर्विरूपस्तस्य चात्मजः।
पृषदश्वो विरूपस्य तस्य पुत्रो रथीतरः ।। २६.६ ।।

एते क्षत्रप्रसूता वै पुनश्चाङ्गिरसः स्मृताः ।
रथीतराणां प्रवराः क्षात्रोपेता द्विजातयः ।। २६.७ ।।

क्षुवतस्तु मनोः पूर्व्वमिक्ष्याकुरभिनिःसृतः ।
तस्य पुत्रशतं त्वासीदिक्ष्वाकोर्भूरिदक्षिणम् ।। २६.८ ।।

तेषां ज्येष्ठो विकुक्षिश्च नेमिर्दण्डश्च ते त्रयः।
शकुनिप्रमुखास्तस्य पुत्राः पंचाशतस्तु ते ।। २६.९ ।।

उत्तरापथदेशस्य रक्षितारो महीक्षितः।
चत्वारिंशत्तथाष्टौ च दक्षिणस्याञ्च ते दिशि ।। २६.१० ।।

विंशतिप्रमुखास्ते तु दक्षिणापथरक्षिणः।
इक्ष्वाकुस्तु विकुक्षिं वै अष्टकायामथादिशेत् ।। २६.११ ।।

राजोवाच।।
मांसमानय श्राद्धेयं मृगान् हत्वा महाबल।
श्राद्धमद्य नु कर्तव्यमष्टकायां न संशयः ।। २६.१२ ।।

स गतस्तु मृगव्यां वै वचनात्तस्य धीमतः।
मृगान् सहस्रशो हत्वा परिश्रान्तश्च वीर्य्यवान्।
भक्षयच्छशकन्तत्र विकुक्षिर्मृगयाङ्गतः ।। २६.१३ ।।

आगते स विकुक्षौ तु समांसे सहसैनिके।
वसिष्ठञ्चोदयामास मांसं प्रोक्षयतामिति ।। २६.१४ ।।

तथेति चोदितो राज्ञा विधिवत्समुपस्थितः।
स दृष्ट्वोपहतं मांसं क्रुद्धो राजानमब्रवीत् ।। २६.१५ ।।

शूद्रेणोपहतं मांसं पुत्रेण तव पार्थिव।
शशभक्षादभोज्यं वै तव मांसं महाद्युते ।। २६.१६ ।।

शशो दुरात्मना पूर्वमरण्ये भक्षितोऽनघ।
तेन मांसमिदं दुष्टं पितॄणां नृपसत्तम ।। २६.१७ ।।

इक्ष्वाकुस्तु ततः क्रुद्धो विकुक्षिमिदमब्रवीत्।
पितृकर्म्मणि निर्द्दिष्टो मया त्वं मृगयाङ्कतः।
शशं भक्षयसेऽरण्ये निर्घृणः पूर्व्वमद्य नु ।। २६.१८ ।।

तस्मात्परित्यजामि त्वां गच्छ त्वं स्वेन कर्म्मणा।
एवमिक्ष्वाकुना त्यक्तो वसिष्ठवचनात् सुतः ।। २६.१९ ।।

इक्ष्वाकौ संस्थिते तस्मिञ्छशी स पृथिवीमिमाम् ।
प्राप्तः परमधर्म्मात्मा स चायोध्याधिपोऽभवत् ।। २६.२० ।।

तदाकरोत्स राज्यं वै वसिष्ठपरिनोदितः।
ततः स्तेनेन सा पूर्णो राज्यावस्था महीपतेः ।। २६.२१ ।।

कालेन गतवांस्तत्र स च न्यूनतराङ्गतिम्।
ज्ञात्वैवमेतदाख्यानं ना विधिर्भक्षयेत्तु वै ।। २६.२२ ।।

मां सभक्षयितामुत्र यस्य मांसमिहाज्यहम्।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ।। २६.२३ ।।

शशादस्य तु दायादः ककुत्स्थो नाम वीर्य्यवान्।
इन्द्रस्य वृषभूतस्य ककुत्स्थो जायते पुरा ।। २६.२४ ।।

पूर्व्वमाडीबके युद्धे ककुत्स्थस्तेन स स्मृतः ।
अनेनास्तु ककुत्स्थस्य पृथुरोमा च स स्मृतः ।। २६.२५ ।।

वृषदश्वः पृथोः पुत्रस्तस्मादन्ध्रस्तु वीर्य्यवान् ।
आन्ध्रस्तु यवनाश्वस्तु श्रावस्तस्तस्य चात्मजः ।। २६.२६ ।।

जज्ञे श्रावस्तको राजा श्रावस्ती येन निर्मिता।

श्रावस्तस्य तु दायादो बृहदश्वो महायशाः ।। २६.२७ ।।

बृहदश्वसुतश्चापि कुबलाश्च इति श्रुतिः।
यः स धुन्धुवधाद्राजा धुन्धुमारत्वमागतः ।। २६.२८ ।।

ऋषय ऊचुः ।।

धुन्धुवधं महाप्राज्ञ श्रोतुमिच्छमि विस्तरात्।
यदर्थं कुबलाश्वः स धुन्धुमारत्वमागतः ।। २६.२९ ।।

सूत उवाच।।
बृहदश्वस्य पुत्राणां सहस्राण्येकविंशतिः ।
सर्वे विद्यासु निष्णाता बलवन्तो दुरासदाः ।। २६.३० ।।

बभूवुर्द्धार्मिकाः सर्वे यज्वानो भूरिदक्षिणाः।
कुबलाश्वं महावीर्यं शूरमुत्तमधार्मिकम् ।। २६.३१ ।।

बृहदश्वोऽभ्यषिञ्चत्तं तस्मिन् राष्ट्रे नराधिपः।
पुत्रसंक्रामितश्रीस्तु वनं राजा विवेश ह ।। २६.३२ ।।

बृहदश्वं महाराजं शूरमुत्तमधार्म्मिकम् ।
प्रयातं तमुत्तङ्कस्तु ब्रह्मर्षिः प्रत्यवारयत् ।। २६.३३ ।।

उत्तङ्क उवाच।।
भवतो रक्षणं कार्य्यं तत्तावत् कर्तुमर्हति।
निरुद्विग्नस्तपः कर्तुं न हि शक्नोमि पार्थिव ।। २६.३४ ।।

ममाश्रमसमीपेषु समेषु मरुधन्वसु।
समुद्रो वालुकापूर्णस्तत्र तिष्ठति भूपते ।। २६.३५ ।।

देवतानामवध्यस्तु महाकायो महाबलः।
अन्तर्भूमिगतस्तत्र वालुकान्तर्हितो महान् ।। २६.३६ ।।

स मनोस्तनयः क्रूरो धुन्धुर्नाम सुदारुणः।
शतं लोकविनाशाय तप आस्थाय दारुणम् ।। २६.३७ ।।

संवत्सरस्य पर्य्यन्ते स निःश्वासं प्रमुञ्चति।
यदा तदा मही तत्र चलिता स्म सकानना ।। २६.३८ ।।

तस्य निःश्वासवातेन रज उद्धूयते महत्।
आदित्यपथमावृत्य सप्ताहं भूमिकम्पनम् ।। २६.३९ ।।

सविस्फुलिङ्गं सज्वालं सधूममतिदारुणम् ।
तेन राजन्न शक्नोमि तस्मिन् स्थातुं स्व आश्रमे ।। २६.४० ।।

तं वारय महाबाहो लोकानां हितकाम्यया।
तेजस्ते सुमहाविष्णुस्तेजसाप्यायियिष्यति ।। २६.४१ ।।

लोकाः स्वस्था भवन्त्वद्य तस्मिन् विनिहतेऽसुरे ।
त्वं हि तस्य वधायाद्य समर्थः पृथिवीपते ।। २६.४२ ।।

विष्णुना च वरो दत्तो मम पूर्व्वं ततोऽनघ।
न हि धुन्धुर्महावीर्य्यस्तेजसाल्पेन शक्यते ।। २६.४३ ।।

निर्द्दग्धुं पृथिवीपाल अपि वर्ष शतैरिह।
वीर्य्यं हि सुमहत्तस्य देवैरपि दुरासहम् ।। २६.४४ ।।

एवमुक्तस्तु राजर्षिरुत्तङ्केन महात्मना।
कुबलाश्वं सुतं प्रादात्तस्मिन् धुन्धुनिवारणे ।। २६.४५ ।।

राजा संन्यस्तशस्त्रोऽहमयन्तु तनयो मम।
भविष्यति द्विजश्वेष्ठ धुन्धुमारो न संशयः ।। २६.४६ ।।

स तं व्यादिश्य तनयं धुन्धुमारणमुद्यतम्।
जगाम पर्व्वतायैव तपसे शंसितव्रतः ।। २६.४७ ।।

कुबलाश्वस्तु धर्म्मात्मा पितुर्वचनमास्थितः।
सहस्रैरेकविंशत्या पुत्राणां सह पार्थिवः।
प्रायादुत्तङ्क सहितो धुन्धोस्तस्य निवारणे ।। २६.४८ ।।

तमाविशत्ततो विष्णुर्भगवान् स्वेन तेजसा।
उत्तङ्कस्य नियोगात्तु लोकानां हितकाम्यया ।। २६.४९ ।।

तस्मिन् प्रयाते दुर्द्धर्षे दिवि शब्दो महानभूत्।
अद्यप्रभृत्येष नृपो धुन्धुमारो भविष्यति ।। २६.५० ।।

दिव्यैः पुष्पैश्च तं देवाः सममंसत अद्भुतम्।
सगत्वा पुरुष व्याघ्रस्तनयैः सह वीर्य्यवान् ।। २६.५१ ।।

समुद्रं खनयामास वालुकार्णवमव्ययम्।
नारायणेन राजर्षिस्तेजसाप्यायितो हि सः ।। २६.५२ ।।

बभूवातिबलो भूय उत्तङ्कस्य वशे स्थितः।
तस्य पुत्रैः खनद्भिश्च वालुकान्तर्हितस्तदा ।। २६.५३ ।।

धुन्धुरासादितस्तत्र दिशमाश्रित्य पश्चिमाम्।
मुखजेनाग्निना क्रुद्धो लोकानुद्वर्त्तयन्निव ।। २६.५४ ।।

वारि शुश्राव योगेन महोदधिरिवोदये।
सोमस्य सोमपश्रेष्ठ धारोर्मिकलिलो महान् ।। २६.५५ ।।

तस्य पुत्रास्तु निर्द्दग्धास्त्रिभिरूनास्तु राक्षसाः।
ततः स राजातिबलो धुन्धुबन्धुनिबर्हणः ।। २६.५६ ।।

तस्य वारिमयं वेगमपिबत् स नराधिपः।
योगी योगेन वह्निं वा शमयामास वारिणा ।। २६.५७ ।।

निरस्यत्तं महाकायं बलेनोदकराक्षसम्।
उत्तङ्कं दर्शयामास कृतकर्म्मा नराधिपः ।। २६.५८ ।।

उत्तङ्कश्च वरं प्रादात्तस्मै राज्ञे महात्मने।
अदात्तस्याक्षयं वित्तं शत्रुभिश्चाप्यधृष्यताम् ।। २६.५९ ।।

धर्म्मे रतिञ्च सततं स्वर्गे वासं तथाक्षयम्।
पुत्राणां चाक्षयाँल्लोकान् स्वर्गे ये राक्षसा हताः ।। २६.६० ।।

तस्य पुत्रास्त्रयः शिष्टा दृढाश्वो ज्येष्ठ उच्यते।
भद्राश्वः कपिलाश्वश्च कनीयासौ तु तौ स्मृतौ ।। २६.६१ ।।

धौन्धुमारिर्दृढाश्वस्तु हर्यश्वस्तस्य चात्मजः।
हर्यश्वस्य निकुम्भोऽभूत् क्षत्रधर्मरतः सदा ।। २६.६२ ।।

संहताश्वो निकुम्भस्य श्रुतो रणविशारदः ।
कृशाश्वश्चाक्षयाश्वश्च संहताश्च सुतावुभौ ।। २६.६३ ।।

तस्य पत्नी हैमवती सतां मतिदृषद्वती।
विख्याता त्रिषु लोकेषु पुत्रस्तस्याः प्रसेनजित् ।। २६.६४ ।।

युवनाश्वः सुतस्तस्य त्रिषु लोकेष्वतिद्युतिः।
अत्यन्तधार्मिको गौरी तस्य पत्नी पतिव्रता ।। २६.६५ ।।

अभिशस्ता तु सा भर्त्रा नदी सा बाहुदा कृता ।
तस्यास्तु गौरिकः पुत्र श्चक्रवर्त्ती बभूव ह ।। २६.६६ ।।

मान्धाता यौवनाश्वो वै त्रैलोक्यविजयी नृपः।
अत्राप्युदाहरन्तीमौ श्लोकौ पौराणिकी द्विजाः ।। २६.६७ ।।

यावत्सूर्य उदयति यावच्च प्रतितिष्ठति।
सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ।। २६.६८ ।।

अत्राप्युदाहरन्तीमं श्लोकं वंशविदो जनाः ।
यौवनाश्वं महात्मानं यज्वान ममितौजसम्।
मान्धाता तु तनुर्विष्णोः पुराणज्ञाः प्रजक्षते ।। २६.६९ ।।

तस्य चैत्ररथी भार्य्या शशबिन्दोः सुताऽभवत्।
साध्वी बिन्दुमती नाम रूपेणाप्रतिमा भुवि ।। २६.७० ।।

पतिव्रता च ज्येष्ठा च भ्रातृणामयुतस्य सा।
तस्यामुत्पादयामास मान्धाता त्रीन् सुतान् प्रभुः ।। २६.७१ ।।

पुरुकुत्समम्बरीषं मुचुकुन्दञ्च विश्रुतम्।
अम्बरीषस्य दायादो युवनाश्वोऽपरः स्मृतः ।। २६.७२ ।।

हरितो युवनाश्वस्य हारिताः शूरयः स्मृताः ।
एते ह्यङ्गिरसः पुत्राः क्षात्रोपेता द्विजातयः ।। २६.७३ ।।

पुरुकुत्सस्य दायादस्त्रसद्दस्युर्महायशाः।
नर्मदायां समुत्पन्नः सम्भूतस्तस्य चात्मजः ।। २६.७४ ।।

सम्भूतस्यात्मजः पुत्रो ह्यनरण्यः प्रतापवान्।
रावणेन हतो येन त्रिलोकीविजये पुरा ।। २६.७५ ।।

त्रसदश्वोऽनरण्यस्य हर्य्यश्वस्तस्य चात्मजः ।
हर्य्यश्वात्तु दृषद्वत्यां जज्ञे वसुमतो नृपः ।। २६.७६ ।।

तस्य पुत्रोऽभवद्राजा त्रिधन्वा नाम धार्म्मिकः।
आसीत् त्रैधन्वनश्चापि विद्वांस्त्रय्यां रणप्रभुः ।। २६.७७ ।।

तस्य सत्यव्रतो नाम कुमारोऽभून्महाबलः।
तेन भार्य्या विदर्भस्य हृता हत्वा दिवौकसः ।। २६.७८ ।।

पाणिग्रहणमन्त्रेषु निष्ठां सम्प्रापितोष्विह।
विष्णुवृद्धः सुतस्तस्य विष्णु वृद्धो यतः स्मृतः ।
एते ह्यङ्गिरसः पुत्राः क्षात्रोपेताः समाश्रिताः ।। २६.७९ ।।

कामाद्बलाच्च मोहाच्च सङ्कर्षणबलेन च।
भाविनोऽर्थस्य च बलात् तत्कृतं तेन धीमता ।। २६.८० ।।

तमधर्म्मेण संयुक्तं पिता त्रयीगुणोऽत्यजत्।

अपध्वंसेति बहुशोऽवदत् क्रोधसमन्वितः ।। २६.८१ ।।

पितरं सोऽब्रवीदेकः क्व गच्छामीति वै मुहुः।
पिता चैनमथोवाच श्वपाकैः सह वर्त्तय ।। २६.८२ ।।

नाहं पुत्रेण पुत्रार्थी त्वयाद्य कुलपांसन।
इत्युक्तः स निराक्रामन्नगराद्वचनाद्विभो ।। २६.८३ ।।

न चैनं धारयामास वसिष्ठो भगवानृषिः।
स तु सत्यव्रतो धीमाञ्छ्वपाकावसथान्तिकम्।
पित्रा मुक्तोऽवसद्वीरः पिता चास्य वनं ययौ ।। २६.८४ ।।

तस्मिंस्तु विषये तस्य नावर्षत् पाकशासनः।
समा द्वादश संपूर्णास्तेनाधर्म्मेण वै तदा ।। २६.८५ ।।

दारांस्तु तस्य विषये विश्वामित्रो महातपाः।
संन्यस्य सागरानूपे चचार विपुलं तपः ।। २६.८६ ।।

तस्य पत्नी गले बद्ध्वा मध्यमं पुत्रमौरसम्।
शिखया भरणार्थाय व्यक्रीणाद्घोशतेन वै ।। २६.८७ ।।

तं तु बद्धं गले दृष्ट्वा विक्रीतं तं नरोत्तमः।
महर्षिपुत्रं धर्म्मात्मा मोक्षयामास सुव्रतः ।। २६.८८ ।।

सत्यव्रतो महाबुद्धिर्भरणं तस्य चाकरोत् ।
विश्वामित्रस्य तुष्ट्यर्थमनुकम्पार्थमेव च ।। २६.८९ ।।

सोऽभवद्घालवो नाम गले बद्धो महातपाः।
महर्षिः कौशिकस्तातस्तेन वीर्येण मोक्षितः ।। २६.९० ।।

तस्य व्रतेन भक्त्या च कृपया च प्रतिज्ञया।
विश्वामित्रकलत्रञ्च बभार विनये स्थितः ।। २६.९१ ।।

हत्वा मृगान् वराहांश्च महिषांश्च वनेचरान्।
विश्वामित्राश्रमाभ्याशे तन्मांसमपचत्ततः ।। २६.९२ ।।

उपांशुव्रतमास्थाय दीक्षां द्वादशवार्षिकीम्।
पितुर्नियोगातभजन्नृपे तु वनमास्थिते ।। २६.९३ ।।

अयोध्याञ्चैव राज्यञ्च तथैवान्तःपुरं मुनिः।
याज्योपाध्यायसंयोगाद्वसिष्ठः परिरक्षितः ।। २६.९४ ।।

सत्यव्रतस्तु बाल्यात्तु भाविनोऽर्थस्य वै बलात्।
वसिष्ठेऽभ्याधिकं मन्युं धारयामास मन्युना ।। २६.९५ ।।

पित्रा रुदंस्तदा राष्ट्रात् परित्यक्तं स्वमात्मजम्।
न वारयामास मुनिर्वसिष्ठः कारणेन वै ।। २६.९६ ।।

पाणिग्रहणमन्त्राणां निष्ठा स्यात् सप्तमे पदे।
एवं सत्यव्रतस्तान् वै कृतवान् सप्तमे पदे ।। २६.९७ ।।

जानन् धर्म्मान् वसिष्ठस्तु न च मन्त्रानिहेच्छति।
इति सत्यव्रते रोषं वसिष्ठो मनसाकरोत् ।। २६.९८ ।।

गुरुर्बुद्ध्या तु भगवान् वसिष्ठः कृतवांस्तदा।
न तु सत्यव्रतो बुद्ध्या उपांशुव्रतमस्य वै ।। २६.९९ ।।

तस्मिंश्चोपरते यो यत्पितुरासीन्महामनाः।
तेन द्वादशवर्षाणि नावर्षत् पाकशासनः ।। २६.१०० ।।

तेन त्विदानीं बहुधा दीक्षां तां दुर्बलां भुवि।
कुलस्य निष्कृतिः स्वस्य कृतेयञ्च भवेदिति ।। २६.१०१ ।।

ततो वसिष्ठो भगवान् पित्रा त्यक्तं न्यवारयत्।
अभिषेक्ष्याम्यहं राज्ये पश्चादेनमिति प्रभुः ।। २६.१०२ ।।

स तु द्वादशवर्षाणि दीक्षान्तामुद्वहन् बली।
अविद्यमाने मांसे तु वसिष्ठस्य महात्मनः ।। २६.१०३ ।।

सर्व्वकामदुघां धेनुं संददर्श नृपात्मजः।
तां वै क्रोधाच्च मोहाच्च श्रमाच्चैव क्षुधान्वितः ।। २६.१०४ ।।

दस्युधर्म्मं गतो दृष्ट्वा जघान बलिनां वरः।
स तु मांसं स्वयं चैव विश्वामित्रस्य चात्मजान् ।। २६.१०५ ।।

भोजयामास तच्छ्रुत्वा वसिष्ठस्तं तदात्यजत्।
प्रोवाच चैव भगवान् वसिष्ठस्तं नृपात्मजम् ।। २६.१०६ ।।

पातये क्रूर हे क्रूर तव शंकुमयोमयम् ।
यदि ते त्रीणि शंकूनि न स्युर्हि पुरुषाधम ।। २६.१०७ ।।

पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च।
अप्रोषितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः ।। २६. १०८ ।।

एवं स त्रीणि शंकूनि दृष्ट्वा तस्य महा तपाः।
त्रिशङ्कुरिति होवाच त्रिशङ्कुस्तेन स स्मृतः ।। २६.१०९ ।।

विश्वामित्रस्तु दाराणामागतो भरणे कृते।
ततस्तस्मै वरं प्रादात्तदा प्रीतस्त्रिशङ्कवे ।। २६.११० ।।

छन्द्यमानो वरेणाथ गुरुं व्रवे नृपात्मजः।
अनावृष्टिभये तस्मिन् गते द्वादशवार्षिके ।। २६.१११ ।।

अभिषिच्य राज्ये पित्र्ये याजयामास तं मुनिः।
मिषतां दैवतानाञ्च वसिष्ठस्य च कौशिकः।
सशरीरं तदा तं वै दिवमारोपयत् प्रभुः ।। २६.११२ ।।

मिषतस्तु वसिष्ठस्य तदद्भुतमिवाभवत्।
अत्राप्युदाहरन्तीमौ श्लोकौ पौराणिका जनाः ।। २६.११३ ।।

विश्वामित्रप्रसादेन त्रिशङ्कुर्दिवि राजते ।
देवै सार्द्धं महातेजानुग्रहात्तस्य धीमतः ।। २६.११४ ।।

शनैर्यात्यबला रम्या हेमन्ते चन्द्रमण्डिता।
अलंकृता त्रिभिर्भावैस्त्रिशङ्कुग्रहभूषिता ।। २६.११५ ।।

तस्य सत्यरता नाम भार्य्या केकयवंशजा।
कुमारं जनयामास हरिश्चन्द्रमकल्मषम् ।। २६.११६ ।।

स तु राजा हरिश्चन्द्रस्त्रैशङ्कव इति श्रुतः ।
आहर्त्ता राजसूयस्य सम्राडिति परिश्रुतः ।। २६.११७ ।।

हरिश्चन्द्रस्य तु सुतो रोहितो नाम वीर्य्यवान्।
हरितो रोहितस्याथ चंचुहारीत उच्यते ।। २६.११८ ।।

विजयश्च सुदेवश्च चंचुपुत्रौ बभूवतुः।
जेता सर्व्वस्य क्षत्रस्य विजयस्तेन स स्मृतः ।। २६.११९ ।।

रुरुकस्तनयस्तत्र राजा धर्म्मार्थकोविदः।
रुरुकाद्धृतकः पुत्रस्तस्माद्बाहुश्च जज्ञिवान् ।। २६.१२० ।।

हैहयैस्तालजङ्घैश्च निरस्तो व्यसनी नृपः।
शकैर्यवनकाम्बोजैः पारदैः पह्लवैस्तथा ।। २६.१२१ ।।

नात्यर्थं धार्म्मिकोऽभूत् स धर्म्म्ये सत्ययुगे तथा।
सगरस्तु सुतो बाहोर्जज्ञे सह गरेण वै।

भृगोराश्रममासाद्य तुर्वेण परिरक्षितः ।। २६.१२२ ।।

आग्नेयमस्त्रं लब्ध्वा तु भार्गवात् सगरो नृपः।
जघान पृथिवीङ्गत्वा तालजंघान् सहैहयान् ।। २६.१२३ ।।

शकानां पह्लवानाञ्च धर्म्मान्निरसदच्युतः।
क्षत्रियाणां तथा तेषां पारदानाञ्च धर्म्मवित् ।। २६.१२४ ।।

ऋषय ऊचुः।।
कथं स सगरो राजा गरेण सह जज्ञिवान्।
किमर्थञ्च शकादीनां क्षत्रियाणां महौजसाम्।
धर्म्मान् कुलोचितान् क्रुद्धो राजा निरसदच्युतः ।। २६.१२५ ।।

सूत उवाच।।
बाहोर्व्यसनिनस्तस्य हृतं राज्यं पुरा किल।
हैहयैस्तालजंवैश्च शकैः सार्द्धं समागतैः ।। २६.१२६ ।।

यवनाः पारदाश्चैव काम्बोजाः पह्लवास्तथा।
हैहयार्थं पराक्रान्ता एते पञ्चगणास्तदा ।। २६.१२७ ।।

हृतं राज्यं बलीयोभिरेभिः क्षत्रियपुङ्गवैः ।
हृतराज्यस्तदा बाहुः संन्यस्य नु तदा नृपः।
वनं प्रविश्य धर्म्मात्मा सह पत्न्या तपोऽचरत् ।। २६.१२८ ।।

कस्यचित्त्वथ कालस्य तोयार्थं प्रस्थितो नृपः।
वृद्धत्वाद्दुर्ब्बलत्वाच्च अन्तरा स ममार च ।। २६.१२९ ।।

पत्नी तु यादवी तस्य सगर्भा पृष्ठतोऽन्वगात् ।
सपत्न्या तु गरस्तस्यै दत्तो गर्भजिघांसया ।। २६.१३० ।।

सा तु भर्तुश्चितां कृत्वा वह्नौ तं समरोहयत्।
और्वस्तां भार्गवो दृष्ट्वा कारुण्याद्विन्यवर्त्तयत् ।। २६.१३१ ।।

तस्याश्रमे तु तङ्गर्भं सागरेण तदा सह।
व्यजायत महाबाहुं सगरं नाम धार्मिकम् ।। २६.१३२ ।।

और्वस्तु जातकर्मादीन् कृत्वा तस्य महात्मनः।
अध्याप्य वेदशास्त्राणि ततोऽस्त्रं प्रत्यपादयत् ।। २६.१३३ ।।

जामदग्न्यात्तदाग्नेयमसुरैरपि दुःसहम्।
स तेनास्त्रबलेनैव बलेन च समन्वितः ।
जघान हैहयान् क्रुद्धो रुद्रः पशुगणानिव ।। २६.१३४ ।।

ततः शकान् सयवनान् काम्बोजान् पारदांस्तथा।
पह्लवांश्चैव निःशेषान् कर्तुं व्यवसितो नृपः ।। २६.१३५ ।।

ते वध्यमाना वीरेण सगरेण महात्मना।
वसिष्ठं शरणं सर्व्वे प्रपन्नाः शरणैषिणः ।। २६.१३६ ।।

वसिष्ठस्तान् तथेत्युक्त्वा समयेन महामुनिः ।
सगरं वारयामास तेषान्दत्त्वाऽभयन्तदा ।। २६.१३७ ।।

सगरः स्वाम्प्रतिज्ञाञ्च गुरोर्वास्यं निशम्य च।
धर्म्मं जघान तेषां वै वेषान्यत्वं चकार ह ।। २६.१३८ ।।

अर्द्धं शकानां शिरसो मुण्डयित्वा व्यसर्जयत्।
यवनानां शिरः सर्वं काम्बोजानान्तथैव च।। २६.१३९ ।।

पारदा मुक्तकेशाश्च पह्लवाः श्मश्रु धारिणः।
निःस्वाध्यायवषट्काराः कृतास्तेन महात्मना ।। २६.१४० ।।

शका यवनकाम्बोजाः पह्लवाः पारदैः सह।
केलिस्पर्शा माहिषिका दार्वाश्चोलाः खसास्तथा ।। २६.१४१ ।।

सर्व्वे ते क्षत्रियगणा धर्म्मस्तेषां निराकृतः।
वसिष्ठवचनात्पूर्वं सगरेण महात्मना ।। २६.१४२ ।।

स धर्मविजयी राजा विजित्येमां वसुन्धराम्।
अश्वं विचारयामास वाजिमेधाय दीक्षितः ।। २६.१४३ ।।

तस्य चारयतः सोऽश्वः समुद्रे पूर्वदक्षिणे।
वेलासमीपेऽपहृतो भूमिञ्चैव प्रवेशितः ।। २६.१४४ ।।

स तन्देशं सुतैः सर्वैः खनयामास पार्थिवः।
आसेदुश्च ततस्तस्मिंस्तदन्तस्ते महार्णवे ।। २६.१४५ ।।

तमादिपुरुषं देवं हरिं कृष्णं प्रजापतिम्।
विष्णुं कपिलरूपेण हंसं नारायणं प्रभुम् ।। २६.१४६ ।।

तस्य चक्षुः समासाद्य तेजस्तत् प्रतिपद्यते।
दग्धाः पुत्रास्तदा सर्वे चत्वारस्त्ववशेषिताः ।। २६.१४७ ।।

बर्हिकेतुः सकेतुश्च तथा धर्म्मरतस्त्रयः।
शूरः पञ्चवनश्चैव तस्य वंशकराः प्रभो ।। २६.१४८ ।।

प्रादाच्च तस्य भगवान् हरिर्नारायणो वरान्।
अक्षयत्वं स्ववंशस्य वाजिमेधशतं तथा।
विभुं पुत्रं समुद्रञ्च स्वर्गे वासं तथाक्षयम् ।। २६.१४९ ।।

स समुद्रोऽश्वमादाय वन्ददे (?) सरितांपतिः।
सागरत्वं च लेभे स कर्मणा तेन तस्य वै ।। २६.१५० ।।

तं चाश्वमेधिकं सोऽश्वं समुद्रात् प्राप्य पार्थिवः।
आजहाराश्वमेधानां शतं चैव पुनः पुनः ।। २६.१५१ ।।

षष्टिपुत्रसहस्राणि दग्धान्यश्वानुसारिणाम्।
तेषां नारायणं तेजः प्रविष्टानां महात्मनाम्।
पुत्राणान्तु सहस्राणि षष्टिस्तु इति नः श्रुतम् ।। २६.१५२ ।।

ऋषय ऊचुः।.
सगरस्यात्मजा राज्ञः कथं जाता महाबलाः।
विक्रान्ताः षष्टिसाहस्रा विधिना केन वा वद ।। २६.१५३ ।।

सूत उवाच।।
द्वे पत्न्यौ सगरस्यास्तां तपसा दग्धकिल्बिषे।
ज्येष्ठा विदर्भदुहिता केशिनी नाम नामतः ।। २६.१५४ ।।

कनीयसी तु या तस्य पत्नी परमधर्मिणी।
अरिष्टनेमिदुहिता रूपेणाप्रतिमा भुवि ।। २६.१५५ ।।

और्वस्ताभ्यां वरं प्रादात् तपसाराधितः प्रभुः।
एका जनिष्यते पुत्रं वंशकर्त्तारमीप्सितम्।
षष्टिपुत्रं सहस्राणि द्वितीया जनयिष्यति ।। २६.१५६ ।।

मुनेस्तु वचनं श्रुत्वा केशिनी पुत्रमेककम्।
वंशस्य कारणं श्रेष्ठा जग्राह नृपसंसदि ।। २६.१५७ ।।

षष्टिपुत्रसहस्राणि सुपर्णभगिनी तथा।
महात्मनस्तु जग्राह सुमतिः पोषणे नृपः ।। २६.१५८ ।।

अथ काले गते ज्येष्ठा ज्येष्ठं पुत्रं व्यजायत।
असमञ्ज इति ख्यातं काकुत्स्थं सगरात्मजम् ।। २६.१५९ ।।

सुमतिस्त्वपि जज्ञे वै गर्भन्तुम्बं यशस्विनी।
षष्टिपुत्रसहस्राणि तुम्बमध्याद्विनिःसृताः ।। २६.१६० ।।

घृतपूर्णेषु कुम्भेषु तान् गर्भान् न्यदधत्ततः।

धात्रीश्चैकैकशः प्रादात् तावतीः पोषणे नृपः ।। २६.१६१ ।।

ततो नवसु मासेषु समुत्तस्थुर्यथासुखम्।
कुमारास्ते महाभागाः सगरप्रीतिवर्द्धनाः ।। २६.१६२ ।।

कालेन महता चैव चौवनं प्रतिपेदिरे।
षष्टिपुत्रसहस्राणि तेषामश्वानुसारिणाम् ।। २६.१६३ ।।

स तु ज्येष्ठो नरव्याघ्रः सगरस्यात्मसम्भवः।
असमञ्ज इति ख्यातो बर्हिकेतुर्महाबलः ।। २६.१६४ ।।

पौराणामहिते युक्तः पित्रा निर्वासितः पुरा।
तस्य पुत्रोंऽशुमान्नाम असमञ्जस्य वीर्यवान् ।। २६.१६५ ।।

तस्य पुत्रस्तु धर्मात्मा दिलीप इति विश्रुतः।
दिलीपात्तु महातेजा वीरो जातो भगीरथः ।। २६.१६६ ।।

येन गङ्गा सरिच्छ्रेष्ठा विमानैरुपशोभिता ।
ईजाऽनेन समुद्राद्वै दुहितृत्वेन कल्पिता।
अत्राप्युदाहरन्तीमं श्लोकं पौराणिका जनाः ।। २६.१६७ ।।

भगीरथस्तु तां गङ्गामानयामास कर्मभिः ।
तस्माद्भागीरथी गङ्गा कथ्यते वंशवित्तमैः ।। २६.१६८ ।।

भगीरथसुतश्चापि श्रुतो नाम बभूव ह।
नाभागस्तस्य दायादो नित्यं धर्मपरायणः ।। २६.१६९ ।।

अम्बरीषः सुतस्तस्य सिन्धुद्वीपस्ततोऽभवत्।
एवं वंशपुराणज्ञा गायन्तीति परिश्रुतम् ।। २६.१७० ।।

नाभागेरम्बरीषस्य भुजाभ्यां परिपालिता।
बभूव वसुधात्यर्थं तापत्रयविवर्जिता ।। २६.१७१ ।।

अयुतायुः सुतस्तस्य सिन्धुद्वीपस्य वीर्यवान्।
अयुतायोस्तु दायाद ऋतुपर्णो महायशाः ।। २६.१७२ ।।

दिव्याक्षहृदज्ञोऽसौ राजा नलसखो बली।
नलौ द्वाविति विख्यातौ पुराणेषु दृढव्रतौ ।। २६.१७३ ।।

वीरसेनात्मजश्चैव यश्चेक्ष्वाकुकुलोद्वहः।
ऋतुपर्णस्य पुत्रोऽभूत् सर्व्वकामो जनेश्वरः ।। २६.१७४ ।।

सुदासस्तस्य तनयो राजा हंसमुखोऽभवत्।
सुदासस्य सुतः प्रोक्तः सौदासो नाम पार्थिवः ।। २६.१७५ ।।

ख्यातः कल्माषपादो वै नाम्ना मित्रसहश्च सः ।
वसिष्ठस्तु महातेजाः क्षेत्रे कल्माषपादके।
अश्मकं जनयामास इक्ष्वाकुकुलवृद्धये ।। २६.१७६ ।।

अश्मकस्योरकामस्तु मूलकस्तत्सुतोऽभवत्।
अत्राप्युदाहरन्तीमं मूलकं वै नृपं प्रति ।। २६.१७७ ।।

स हि रामभयाद्राजा स्त्रीभिः परिवृतोऽवसत्।
विवस्त्रस्त्राणमिच्छन् वै नारीकवचमीश्वरः ।। २६.१७८ ।।

मूलकस्यापि धर्मात्मा राजा शतरथः स्मृतः।
तस्माच्छतरथाज्जज्ञे राजा चैडिविडो बली ।। २६.१७९ ।।

आसीत्त्वैडिविडः श्रीमान् कृतशर्मा प्रतापवान्।
पुत्रो विश्वमहत्तस्य पुत्रीकस्य व्यजायत ।। २६.१८० ।।

दिलीपस्तस्य पुत्रोऽभूत् खट्वाङ्ग इति विश्रुतः।
येन स्वर्गादिहागम्य मुहूर्त्तं प्राप्य जीवितम्।
त्रयोऽभिसंहिता लोका बुद्ध्या सत्येन चैव हि ।। २६.१८१ ।।

दीर्गबाहुः सुतस्तस्य रघुस्तस्मादजायत।
अजः पुत्रो रघोश्चापि तस्माज्जज्ञे स वीर्यवान्।
राजा दशरथो नाम इक्ष्वाकुकुलनन्दनः ।। २६.१८२ ।।

रामो दाशरथिर्वीरो धर्मज्ञो लोकविश्रुतः।
भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महाबलः ।। २६.१८३ ।।

माधवं लवणं हत्वा गत्वा मधुवनञ्च तत्।
शत्रुघ्नेन पुरी तस्य मथुरा सन्निवेशिता ।। २६.१८४ ।।

सुबाहुः शूरसेनश्च शत्रुघ्नसहितावुभौ।
पालयामासतुः सूनू वैदेह्यौ मथुरां पुरीम् ।। २६.१८५ ।।

अङ्गदश्चान्द्रकेतुश्च लक्ष्मणस्यात्मजावुभौ।
हिमवत्पर्वताभ्याशे स्फीतौ जनपदौ तयोः ।। २६.१८६ ।।

अह्गदस्याङ्गदीया तु देशे कारपथे पुरी।
चन्द्रकेतोस्तु मल्लस्य चन्द्रवक्ता पुरी शुभा ।। २६.१८७ ।।

भरतस्यात्मजौ वीरौ तक्षः पुष्कर एव च।
गान्धारविषये सिद्धे तयोः पुर्यौ महात्मनोः ।। २६.१८८ ।।

तक्षस्य दिक्षु विख्याता रम्या तक्षशिला पुरी।
पुष्करस्यापि वीरस्य विख्याता पुष्करावती ।। २६.१८९ ।।

गाथां चैवात्र गायन्ति ये पुराणविदो जताः।
रामे निबद्धास्सत्त्वार्था माहात्म्यात्तस्य धीमतः ।। २६.१९० ।।

श्यामो युवा लोहिताक्षो दीप्तास्यो मितभाषितः।
आजानुबाहुः सुमुखः सिंहस्कन्धो महाभुजः ।। २६.१९१ ।।

दशवर्षसहस्राणि रामो राज्यमकारयत्।
ऋक्सामयजुषां घोषो ज्याघोषश्च महास्वनः ।। २६.१९२ ।।

अविच्छिन्नोऽभवद्राष्ट्रे दीयतां भुज्यतामिति।
जनस्थाने वसन् कार्यं त्रिदशानाञ्चकारसः ।। २६.१९३ ।।

तमागस्कारिणं पूर्वं पौलस्त्यं मनुजर्षभः।
सीतायाः पदमन्विच्छन् निजघान महायशाः ।। २६.१९४ ।।

सत्त्ववान् गुणसम्पन्नो दीप्यमानः स्व तेजसा।
अतिसूर्यञ्च वह्निञ्च रामो दाशरथिर्बभौ ।। २६.१९५ ।।

एवमेव महाबाहुरिक्ष्वाकुकुलनन्दनः ।
रावणं सगणं हत्वा दिवमाचक्रमे विभुः ।। २६.१९६ ।।

श्रीरामस्यात्मजो जज्ञे कुश इत्यभिधीयते।
लवश्चान्यो महावीर्यस्तयोर्देशौ निबोधत ।। २६.१९७ ।।

कुशस्य कोशला राज्यं पुरी वापि कुशस्थली।
रम्या निवेशिता तेन विन्ध्यपर्वतसानुषु ।। २६.१९८ ।।

उत्तराकोशले राज्यं लवस्य च महात्मनः।
श्रावस्ती लोकविख्याता कुशवंशं निबोधत ।। २६.१९९ ।।

कुशस्य पुत्रो धर्मात्मा ह्यतिथिः सुप्रियातिथिः।
अतिथेरपि विख्यातो निषधो नाम पार्थिवः ।। २६.२०० ।।

निषधस्य नलः पुत्रो नभः पुत्रो नलस्य तु।
नभसः पुण्डरीकस्तु क्षेमधन्वा ततः स्मृतः ।। २६.२०१ ।।

क्षेमधन्वसुतो राजा देवानीकः प्रतापवान्।
आसीदहीनगुर्नाम देवानी कात्मजः प्रभुः ।। २६.२०२ ।।

अहीनगोस्तु दायादः पारियात्रो महायशाः।
दलस्तस्यात्मजश्चापि तस्माज्जज्ञे बलो नृपः ।। २६.२०३ ।।

औङ्को नाम स धर्मात्मा बलपुत्रो बभूव ह।
वज्रनाभः सुतस्तस्य शङ्खणस्तस्य चात्मजः ।। २६.२०४ ।।

शंखणस्य सुतो विद्वान् ध्युषिताश्च इति श्रुतः ।
ध्युषिताश्च सुतश्चापि राजा विश्वसहः किल ।। २६.२०५ ।।

हिरण्यनाभः कौशल्यो वसिष्ठस्तत्सुतोऽभवत्।
पौत्रस्य जैमिनेः शिष्यः स्मृतः सर्वेषु शर्मसु ।। २६.२०६ ।।

शतानि संहितानान्तु पञ्च योऽधीतवांस्ततः।
तस्मादधिगतो योगो याज्ञवल्क्येन धीमता ।। २६.२०७ ।।

पुष्यस्तस्य सुतो विद्वान् ध्रुवसन्धिश्च तत्सुतः।
सुदर्शनस्तस्य सुतो अग्निवर्णः सुदर्शनात् ।। २६.२०८ ।।

अग्निवर्णस्य शीघ्रस्तु शीघ्रकस्य मनुः स्मृतः।
मनुस्तु योगमास्थाय कलापग्राममास्थितः।
एकोनविंशप्रयुगे क्षत्रप्रावर्त्तकः प्रभुः ।। २६.२०९ ।।

प्रसुश्रुतो मनोः पुत्रः सुसन्धिस्तस्य चात्मजः।
सुसन्धेश्च तथामर्षः सहस्वान्नाम नामतः ।। २६.२१० ।।

आसीत्सहस्वतः पुत्रो राजा विश्रुतवानिति।
तस्यासीद्विश्रुतवतः पुत्रो राजा बृहद्बलः ।। २६.२११ ।।

एते इक्ष्वाकुदायादा राजानः प्रायशः स्मृताः।
वंशे प्रधाना ये तेऽस्मिन् प्राधान्येन तु कीर्त्तिताः ।। २६.२१२ ।।

पठन् सम्यगिमां सृष्टिमादित्यस्य विवस्वतः।
प्रजावानेति सायुज्यं मनोर्वैवस्वतस्य सः ।। २६.२१३ ।।

श्राद्धदेवस्य देवस्य प्रजानां पुष्टिदस्य च।
विपाप्मा विरजाश्चैव आयुष्मान् भवतेऽच्युतः ।। २६.२१४ ।।

इति श्रीमहापुराणे वायुप्रोक्ते वैवस्वतमनुवंशवर्णनं नाम षड्विंशोध्यायः ।। २६ ।। *

।।सूत उवाच।।

अनुजस्य विकुक्षेस्तु निमेर्वंशं निबोधत।
योऽसौ निवेशयामास पुरन्देवपुरोपमम् ।। २७.१ ।।

जयन्तमितिविख्यातं गौतमस्याश्रमाभितः।
यस्यान्ववाये यज्ञे वै जनकादृषिसत्तमात् ।। २७.२ ।।

नेमिर्नाम सुधर्मात्मा सर्वसत्वनमस्कृतः।
आसीत् पुत्रो महाप्राज्ञ इक्ष्वाकोर्भूरितेजसः ।। २७.३ ।।

स शापेन वसिष्ठस्य विदेहः समपद्यत।
तस्य पुत्रो मिथिर्नाम जनितः पर्वभिस्त्रिभिः ।। २७.४ ।।

अरण्यां मथ्यमानायां प्रादुर्भूतो महायशाः।
नाम्ना मिथिरिति ख्यातो जननाज्जनकोऽभवत् ।। २७.५ ।।

मिथिर्नाम महावीर्यो येनासौ मिथिलाभवत्।
राजासौ जनको नाम जनकाच्चाप्युदावसुः ।। २७.६ ।।

उदावसोः सुधर्मात्मा जनितो नन्दिवर्द्धनः।
नन्दिवर्द्धनतः शूरः सुकेतुर्नाम धार्मिकः ।। २७.७ ।।

सुकेतोरपि धर्मात्मा देवरातो महाबलः।
देवरातस्य धर्मात्मा बृहदुच्छ इति श्रुतिः ।। २७.८ ।।

बृहदुच्छस्य तनयो महावीर्यः प्रतापवान् ।
महावीर्यस्य धृतिमान् सुधृतिस्तस्य चात्मजः ।। २७.९ ।।

सुधृतेरपि धर्मात्मा धृष्टकेतुः परन्तपः।
धृष्टकेतु सुतश्चापि हर्यश्वो नाम विश्रुतः ।। २७.१० ।।

हर्यश्वस्य मरुः पुत्रो मरोः पुत्रः प्रतित्वकः।
प्रतित्वकस्य धर्मात्मा राजा कीर्त्तिरथः सुतः ।। २७.११ ।।

पुत्रः कीर्त्तिरथस्यापि देवमीढ इति श्रुतः ।
देवमीढस्य विबुधो विबुधस्य सुतो धृतिः ।। २७.१२ ।।

महाधृतिसुतो राजा कीर्त्तिराजः प्रतापवान् ।
कीर्त्ति राजात्मजो विद्वान् महारोमेति विश्रुतः ।। २७.१३ ।।

महारोम्णस्तु विख्यातः स्वर्णरोमा व्यजायत।
स्वर्णरोमात्मजश्चापि ह्रस्वरोमाभवनृपः ।। २७.१४ ।।

ह्रस्वरोमात्मजो विद्वान् सीरध्वज इति श्रुतिः।
उद्भिन्ना कृषता येन सीता राज्ञा यशस्विनी।
रामस्य महिषी साध्वी सुव्रतातिपतिव्रता ।। २७.१५ ।।

शांशपायन उवाच।।
कथं सीता समुत्पन्ना कृष्यमाणा यशस्विनी।
किमर्थञ्चाकृषद्राजा क्षेत्रं यस्मिन् बभूव ह ।। २७.१६ ।।

सूत उवाच।।
अग्निक्षेत्रे कृष्यमाणे अश्वमेधे महात्मनः।
विधिना सुप्रयुक्तेन तस्मात्सा तु समुत्थिता ।। २७.१७ ।।

सीरध्वजात्तु जातस्तु भानुमान्नाम मैथिलः।
भ्राता कुशध्वजस्तस्य स काश्यधिपतिर्नृपः ।। २७.१८ ।।

तस्य भानुमतः पुत्रः प्रद्युम्नश्च प्रतापवान्।
मुनिस्तस्य सुतश्चापि तस्मादूर्जवहः स्मृतः ।। २७.१९ ।।

ऊर्जवहात् सुतद्वाजः शकुनिस्तस्य चात्मजः।
स्वागतः शकुनेः पुत्रः सुवर्च्चास्तत्सुतः स्मृतः ।। २७.२० ।।

श्रुतो यस्तस्य दायादः सुश्रुतस्तस्य चात्मजः।
सुश्रुतस्य जयः पुत्रो जयस्य विजयः सुतः ।। २७.२१ ।।

विजयस्य ऋतः पुत्र ऋतस्य सुनयः स्मृतः।
सुनयाद्वीतहव्यस्तु वीतहव्यात्मजो धृतिः ।। २७.२२ ।।

धृतेस्तु बहुलाश्वोऽभूद्बहुलाश्वसुतः कृतिः।
तस्मिन् सन्तिष्टते वंशो जनकानां महात्मनाम्।
इत्येते मैथिलाः प्रोक्ताः सोमस्यापि निबोधत ।। २७.२३ ।।

इति श्रीमहापुराणे वायुप्रोक्ते वैवस्वतमनुवंशकीर्त्तनं नाम सप्तविंशोऽध्यायः ।। २७ ।।

वायूमहापुराणम् -
उत्तरार्द्धम् - २८
।।सूत उवाच ।।

पिता सोमस्य वैविप्रा जज्ञेऽत्रिर्भगवानृषिः।
सोऽति तस्थौ सर्वलोकान्भगवान्त्स्वेन तेजसा ।। २८.१ ।।

कर्मणा मनसा वाचा शुभान्येव समाचरन्।

काष्ठकुड्यशिलाभूत ऊर्द्ध्वबाहुर्महाद्युतिः ।। २८.२ ।।

सुदुश्चरं नाम तपो येन तप्तं महत्पुरा।
त्रीणि वर्षसहस्राणि दिव्यानीति हि नः श्रुतम् ।। २८.३ ।।

तस्योर्द्ध्वरेतसस्तत्र स्थितस्यानिमिषस्पृहम्।
सोमत्वन्तनुरापेदे महाबुद्धिः स वै द्विजः ।। २८.४ ।।

ऊर्द्ध्वमाचक्रमे तस्य सोमत्वं भावितात्मनः।
सोमः सुस्राव नेत्राभ्यां दश वा द्योतयन् दिशः ।। २८.५ ।।

तं गर्भं विधिनादिष्टा दश देव्यो दधुस्तदा।
समेत्य धारयामासुर्न च ताः समशक्नुवन् ।। २८.६ ।।

स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः।
यथावभासयंल्लोकाञ्शीतांशुः सर्वभावनः ।। २८.७ ।।

यदा न धारणे शक्तास्तस्य गर्भस्य ताः स्त्रियः।
ततः स ताभिः शीतांशुर्निपपात वसुन्धराम् ।। २८.८ ।।

पतन्तं सोममालोक्य ब्रह्मा लोकपितामहः।
रथमारोपयामास लोकानां हितकाम्यया ।। २८.९ ।।

स हि देवमयो विप्रा धर्म्मार्थी सत्यसङ्गरः।
युक्तो वाजिसहस्रेण सितेनेति हि नः श्रुतम् ।। २८.१० ।।

तस्मिन्निपतिते देवाः पुत्रेऽत्रेः परमात्मनि।
तुष्टुवुर्ब्रह्मणः पुत्राः मानसाः सप्त विश्रुताः ।। २८.११ ।।

तत्रैवाङ्गिरसस्तस्य भृगोश्चैवात्मजस्तथा।
ऋग्भिर्यजुर्भिर्बहुभिरथर्वाङ्गिरसैरपि ।। २८.१२ ।।

ततः संस्तूयमानस्य तेजः सोमस्य भास्वतः।
आप्यायमानं लोकांस्त्रीन् भावयामास सर्व्वशः ।। २८.१३ ।।

समेन रथमुख्येन सागरान्तां वसुन्धराम्।
त्रिःसप्तकृत्वो विपुल श्चकाराभिप्रदक्षिणम् ।। २८.१४ ।।

तस्य यच्चापि तत्तेजः पृथिवीमन्वपद्यत।
ओषध्यस्ताः समुद्भूतास्तेजसा संज्वलन्त्युत ।। २८.१५ ।।

ताभिर्धार्यत्ययं लोकान् प्रजाश्चापि चतुर्विधाः।

पोष्टा हि भगवान् सोमो जगतो हि द्विजोत्तमाः ।। २८.१६ ।।

स लब्धतेजास्तपसा संस्तवैस्तैश्च कर्म्मभिः।
तपस्तेपे महाभागः पझानां दशतीर्दश ।। २८.१७ ।।

हिरण्यवर्णा या देव्यो धारयन्त्यात्मना जगत्।
विभुस्तासाम्भवेत्सोमः प्रख्यातः स्वेन कर्म्मणा ।। २८.१८ ।।

ततस्तस्मै ददौ राज्यं ब्रह्मा ब्रह्मविदां वरः।
बीजौषधिषु विप्राणामपाञ्च द्विजसत्तमाः ।। २८.१९ ।।

सोऽभिषिक्तो महातेजा महाराज्येन राजराट् ।
लोकानां भावयामास स्वभावात्तपतां वरः ।। २८.२० ।।

सप्तविंशतिरिन्दोस्तु दाक्षायण्यो महाव्रताः।
ददौ प्राचेतसो दक्षो नक्षत्राणीति या विदुः ।। २८.२१ ।।

स तत्प्राप्य महद्राजयं सोमः सोमवतां प्रभुः।
समाजज्ञे राजसूयं सहस्रशतदक्षिणम् ।। २८.२२ ।।

हिरण्यगर्भश्चोद्गाता ब्रह्मा ब्रह्मत्वमेयिवान्।
सदस्यस्तत्र भगवान् हरिर्नारायणः प्रभुः ।
सनत्कुमारप्रमुखैराद्यैर्ब्रह्मर्षिभिर्वृतः ।। २८.२३ ।।

दक्षिणामददत्सोमस्त्रील्लोँकानिति नः श्रुतम्।
तेभ्यो ब्रह्मर्षिमुख्येभ्यः सदस्येभ्यश्च वै द्विजाः ।। २८.२४ ।।

तं सिनी च कुहूश्चैव वपुः पुष्टिः प्रभावसुः।
कीर्त्तिर्धृतिश्च लक्ष्मीश्च नव देव्यः सिषेविरे ।। २८.२५ ।।

प्राप्यावभृथमव्यग्रः सर्व्वदेवर्षिपूजितः।
अतिराजातिराजेन्द्रो दशधातापयद्दिशः ।। २८.२६ ।।

तदा तत् प्राप्य दुष्प्रापमैश्वर्यमृषिसंस्तुतम्।
स विभ्रममतिर्विप्रा विनये विनयो हतः ।। २८.२७ ।।

बृहस्पतेः स वै भार्यान्तारां नाम यशस्विनीम्।
जहार सहसा सर्व्वानवमत्याङ्गिरःसुतान् ।। २८.२८ ।।

स याच्यमानो देवैश्च तथा देवर्षिभिश्च ह।
नैव व्यसर्जयत्तारां तस्मायाङ्गिरसे तदा ।। २८.२९ ।।

उशनास्तस्य जग्राह पार्ष्णिमङ्गिरसो द्विजाः।
स हि शिष्यो महातेजाः पितुः पूर्वं बृहस्पतेः ।। २८.३० ।।

तेन स्नेहेन भगवान् रुद्रस्तस्य बृहस्पतेः।
पार्ष्णिग्राहोऽभवद्देवः प्रगृह्याजगवन्धनुः ।। २८.३१ ।।

तेन ब्रह्मर्षिमुख्येभ्यः परमास्त्रं महात्मना।
उद्दिश्य देवानुत्सृष्टं येनैषां नाशितं यशः ।। २८.३२ ।।

तत्र तद्युद्धमभवत् प्रत्यक्षन्तारकामयम्।
देवानां दानवानाञ्च लोकक्षयकरं महत् ।। २८.३३ ।।

तत्र शिष्टास्त्रयो देवास्तुषिताश्चैव ये स्मृताः।
ब्रह्माणं शरणं जग्मुरादिदेवं पितामहम् ।। २८.३४ ।।

ततो निवार्योशनसं रुद्रं ज्येष्ठञ्च शङ्करम्।
ददावाङ्गिरसे तारां स्वयमेव पितामहः ।। २८.३५ ।।

अन्तर्वत्नीं च तां दृष्ट्वा तारान्ताराधिपाननाम्।
गर्भमुत्सृजसे न त्वं विप्रः प्राह बृहस्पतिः ।। २८.३६ ।।

मदीयायां तनौ योनौ गर्भो धार्यः कथञ्चन।
अथो नावसृजत्तन्तु कुमारं दस्युहन्तमम् ।। २८.३७ ।।

ईषिकास्तम्बमासाद्य ज्वलन्तमिव पावकम्।
जातमात्रोऽथ भगवान् देवानामाक्षिपद्वपुः ।। २८.३८ ।।

ततः संशयमापन्नास्तारामकथयन् सुराः।
सत्यं ब्रूहि सुतः कस्य सोमस्याथ बृहस्पतेः ।। २८.३९ ।।

ह्रीयमाणा यदा देवान्नाह सा साध्वसाधु वा ।
तदा तां शप्तुमारब्धः कुमारो दस्युहन्तमः ।। २८.४० ।।

सन्निवार्य तदा ब्रह्मा तारां चन्द्रस्य संशयः।
यदत्र तथ्यन्तद्ब्रूहि तारे कस्य सुतस्त्वयम् ।। २८.४१ ।।

सा प्राञ्जलिरुवाचेदं ब्रह्माणं वरदं प्रभुम्।
सोमस्येति महात्मानं कुमारन्दस्युहन्तमम् ।। २८.४२ ।।

ततः स तमुपाघाय सोमो दाता प्रजापतिः।
बुध इत्यकरोन्नाम तस्य पुत्रस्य धीमतः ।। २८.४३ ।।

प्रतिपूर्व्वञ्च गमने समभ्युत्तिष्ठते बुधैः।
उत्पादयामास तदा पुत्रं वै राजपुत्रिका ।। २८.४४ ।।

तस्य पुत्रो महातेजा बभूवैलः पुरूरवाः ।
उर्वश्यां जज्ञिरे तस्य पुत्राः षट् सुमहौजसः ।। २८.४५ ।।

प्रसह्य धर्षितस्तत्र विवशो राजयक्ष्मणा ।
ततो यक्ष्माभिभूतस्तु सोमः प्रक्षीणमण्डलः ।
जगाम शरणायाथ पितरं सोऽत्रिमेव तु ।। २८.४६ ।।

तस्य तत्पापशमनं चकारात्रिर्महायशाः।
स राजयक्ष्मणा मुक्तः श्रिया जज्वाल सर्व्वशः ।। २८.४७ ।।

एतत्सोमस्य वै जन्म कीर्त्तितं द्विजसत्तमाः।
वंशन्तस्य द्विजश्रेष्ठाः कीर्त्यमानं निबोधत ।। २८.४८ ।।

धन्यमारोग्यमायुष्यं पुण्यं कल्मषशोधनम्।
सोमस्य जन्म श्रुत्वैव सर्वपापैः प्रमुच्यते ।। २८.४९ ।।

इति श्रीमहापुराणे वायुप्रोक्ते शोमोत्पत्तिर्नामाष्टाविंशोऽध्यायः ।। २८ ।। *

वायूमहापुराणम् -

उत्तरार्द्धम् - २९

सूत उवाच ।।

सोमस्य तु बुधः पुत्रो बुधस्य तु पुरूरवाः।
तेजस्वी दानशीलश्च यज्वा विपुलदक्षिणः ।। २९.१ ।।

ब्रह्मवादी पराक्रान्तः शत्रुभिर्युधि दुर्जयः।
आहर्त्ता चाग्निहोत्रस्य यज्वनाञ्च ददौ महीम् ।। २९.२ ।।

सत्यवाक् कर्म्मबुद्धिश्च कान्तः संवृतमैथुनः।
अतीव पुत्रो लोकेषु रूपेणाप्रतिमोऽभवत् ।। २९.३ ।।

तं ब्रह्मवादिनं दान्तं धर्मज्ञं सत्यवादिनम्।
उर्वशी वरयामास हित्वा मानं यशस्विनी ।। २९.४ ।।

तया सहावसद्राजा दशवर्षाणि चाष्ट च।
सप्त षट् सप्त चाष्टौ च दश चाष्टौ च वीर्यवान् ।। २९.५ ।।

वने चैत्ररथे रम्ये तथा मन्दाकिनीतटे।
अलकायां विशालायां नन्दने च वनोत्तमे ।। २९.६ ।।

गन्धमादनपादेषु मेरुश्रृङ्गे नगोत्तमे।
उत्तरांश्च कुरून् प्राप्य कलापग्राममेव च ।। २९.७ ।।

एतेषु वनसुख्येषु सुरैराचरितेषु च।
उर्वश्या सहितो राजा रेमे परमया मुदा ।। २९.८ ।।

ऋषय ऊचुः।।
गन्धर्वा चोर्वशी देवी राजानं मानुषं कथम्।
देवानुत्सृज्य सम्प्राप्ता तन्नो ब्रूहि बहुश्रुत ।। २९.९ ।।

सूत उवाच।।
ब्रह्मशापाभिभूता सा मानुषं समुपस्थिता।
ऐलं तु तं वरारोहा समयेन व्यवस्थिता ।। २९.१० ।।

आत्मनः शापमोक्षार्थं नियमं सा चकार तु ।
अनग्नदर्शनञ्चैव अकामात सह मैथुनम् ।। २९.११ ।।

द्वौ मेषौ शयनाभ्याशे स तावद् व्यवतिष्ठते।
घृतमात्रं तथाहारः कालमेकन्तु पार्थिव ।। २९.१२ ।।

यद्येष समयो राजन् यावत्कालञ्च ते दृढम्।
तावत्कालन्तु वत्स्यामि एष नः समयः कृतः ।। २९.१३ ।।

तस्यास्तं समयं सर्वं स राजा पर्यपालयत्।
एवं सा चावसत् तस्मिन् पुरूरवसि भामिनी ।। २९.१४ ।।

वर्षाण्यथ चतुःषष्टिं तद्भक्त्या शापमोहिता।
उर्वशी मानुषं प्राप्ता गन्धर्व्वा श्चिन्तयान्विताः ।। २९.१५ ।।

गन्धर्व्वा ऊचुः।
चिन्तयध्वं महाभागा यथा सा तु वराङ्गना।
आगच्छेत्तु पुनर्द्देवानुर्वशी स्वर्गभूषणा ।। २९.१६ ।।

ततो विश्वावसुर्नाम तत्राह वदतां वरः।
तया तु समयस्तत्र क्रियमाणो मतोऽनघः ।। २९.१७ ।।

समयन्व्युत्क्रमात् सा वै राजानं त्यक्ष्यते यथा।
तदहं वच्मि वः सर्वं यथा त्यक्ष्यति सा नृपम् ।। २९.१८ ।।

सहसा योगमेष्यामि युष्माकं कार्यसिद्धये।
एवमुक्त्वा गतस्तत्र प्रतिष्ठानं महायशाः ।। २९.१९ ।।

स निशायामथागम्य मेषमेकं जहार वै।
मातृवद्वर्त्तते सा तु मेषयोश्चारुहासिनी ।। २९.२० ।।

गन्धर्वागमनं ज्ञात्वा शयनस्था यशस्विनी।
राजानमब्रवीत्सा तु पुत्रो मे ह्रियतेति वै ।। २९.२१ ।।

एवमुक्तो विनिश्चित्य नग्नस्तिष्ठति वै नृपः ।
नग्नं द्रक्ष्यति मां देवी समयो वितथो भवेत् ।। २९.२२ ।।

ततो भूयस्तु गन्धर्व्वा द्वितीयं मेषमाददुः।
द्वितीयेऽपहृते मेषे ऐलं देवी तमब्रवीत् ।। २९.२३ ।।

पुत्रौ मम हृतौ राजन्ननाथाया इव प्रभो।
एवमुक्तस्तदोत्थाय नग्नो राजा प्रधावितः ।। २९.२४ ।।

मेषाबभ्यां पदवीं राजन् गन्धर्व्वैर्व्युत्थितामथ।
उत्पादिता तु महती माया तद्भवनं महत् ।। २९.२५ ।।

प्रकाशितन्तु सहसा ततो नग्नमवेक्ष्य सा।
नग्नं दृष्ट्वा तिरोऽभूत्सा अप्सरा कामरूपिणी ।। २९.२६ ।।

तिरोभूतान्तु तां ज्ञात्वा गन्धर्वास्तत्र तावुभौ।
मेषौ त्यक्त्वा च ते सर्वे तत्रैवान्तर्हिताभवन् ।। २९.२७ ।।

उत्सृष्टावुरणौ दृष्ट्वा राजा गृह्यागतः प्रभुः।
अपश्यंस्तां तु वै राजा विललाप सुदुःखितः ।। २९.२८ ।।

चचार पृथिवीं चैव मार्गमाणस्ततस्ततः।
अथापश्यच्च तां राजा कुरुक्षेत्रे महाबलः ।। २९.२९ ।।

प्लक्षतीर्थे पुष्करिण्यां विगाढेनाम्बुनाप्लुताम्।
क्रीडन्तीमप्सरोभिश्च पञ्चभिः सह शोभनाम् ।। २९.३० ।।

अपश्यत्सा ततः सुभ्रू राजानमविदूरतः।
उर्वशी ताः सखीः प्राह अयं स पुरुषोत्तमः ।। २९.३१ ।।

यस्मिन्नहमवात्सं हि दर्शयामास तं नृपम् ।
तत आविर्बभूवुस्ताः पञ्चचूडाप्सरास्तु ताः ।। २९.३२ ।।

दृष्ट्वा तु राजा तां प्रीतः प्रलापान् कुरुते बहून्।
आयाहि तिष्ठ मनसा घोरे वचसि तिष्ठ हे ।। २९.३३ ।।

एवमादीनि सूक्ष्माणि परस्परमभाषत।
उर्व्वशी त्वब्रवीच्चैलं सगर्भाहं त्वया प्रभो ।। २९.३४ ।।

संवत्सरात् कुमारस्ते भविता नव संशयः।
निशामेकान्तु वै राजा ह्यवसत्तु तया सह ।। २९.३५ ।।

सम्प्रहृष्टो जगामाथ स्वपुरन्तु महायशाः।
गते संवत्सरे राजा उर्व्वशीं पुनरागमत् ।। २९.३६ ।।

उषित्वा तु तया सार्द्धमेकरात्रं महामनाः।
कामार्त्तश्चा ब्रवीद्दीनो भव नित्यं ममेति वै ।। २९.३७ ।।

उर्व्वश्यथाब्रवीच्चैलं गन्धर्वास्ते वरं ददुः।
तं वृणीष्व महाराज ब्रूहि चैतांस्त्वमेव हि ।। २९.३८ ।।

वृणे नित्यं हि सालोक्यं गन्धर्वाणां महात्मनाम्।
तथेत्युक्त्वा वरं वव्रे गन्धर्वाश्च तथास्त्विति ।। २९.३९ ।।

स्थालीमग्नेः पूरयित्वा गन्धर्व्वाश्च तमब्रुवन्।
अनेन इष्ट्वा लोकन्तं प्राप्स्यसि त्वं नराधिप ।। २९.४० ।।

तमादाय कुमारन्तु नगरायोपचक्रमे।
निःक्षिप्य तमरण्याञ्च स पुत्रन्तु गृहं ययौ ।। २९.४१ ।।

पुनरादाय दृश्याग्निमश्वत्थं तत्र दृष्टवान्।
समीपतस्तु तं दृष्ट्वा ह्यश्वत्थं तत्र विस्मितः ।। २९.४२ ।।

गन्धर्व्वेभ्यस्तथाख्यातुमग्निना गां गतस्तु सः ।
श्रुत्वा तमर्थमशिलमरणिं तु समादिशत् ।। २९.४३ ।।

अश्वत्थादरणिं कृत्वा मथित्वाग्निं यथाविधि।
तेनेष्ट्वा तु सलोकं नः प्राप्स्यसि त्वं नराधिप।
मथित्वाग्निं त्रिधा कृत्वा ह्ययजत्स नराधिपः ।। २९.४४ ।।

इष्ट्वा यज्ञैर्बहुविधैर्गतस्तेषां सलोकताम्।
वासाय च स गन्धर्व्वस्त्रेतायां स महारथः।
एकोऽग्निः पूर्वमासीद्वै ऐलस्त्रींस्तानकल्पयत् ।। २९.४५ ।।

एवंप्रभावो राजासीदैलस्तु द्विजसत्तमाः।
देशे पुण्यतमे चैव महर्षिभिरलंकृते ।। २९.४६ ।।

राज्यं स कारयामास प्रयागे पृथिवी पतिः।

उत्तरे यामुने तीरे प्रतिष्ठाने महायशाः ।। २९.४७ ।।

तस्य पुत्रा बभूवुर्हि षडिन्द्रोपमतेजसः।
गन्धर्व्वलोके विदिता आयुर्द्धीमानमावसुः ।। २९.४८ ।।

विश्वायुश्च शतायुश्च गतायुश्चोर्वशीसुताः।
अमावसोस्तु वै जातो भीमो राजाथ विश्वजित् ।। २९.४९ ।।

श्रीमान् भीमस्य दायादो राजासीत्काञ्चनप्रभः।
विद्वांस्तु काञ्चनस्यापि सुहोत्रोऽभून्महाबलः ।। २९.५० ।।

सुहोत्रस्याभज्जह्नुः केशिकागर्भसम्भवः।
प्रतिगत्य ततो गङ्गा विततो यज्ञकर्म्मणि ।। २९.५१ ।।

प्लावयामास तं देशं भाविनोऽर्थस्य दर्शनात्।
गङ्गया प्लावितं दृष्ट्वा यज्ञवाटं समन्ततः ।। २९.५२ ।।

सौहोत्रिर्वरदः क्रुद्धो गङ्गां संरक्तलोचनः।
अस्य गङ्गेऽवलेपस्य सद्यः फलमवाप्नुहि ।। २९.५३ ।।

एतत्ते विफलं सर्व्वं पीतमम्भः करोम्यहम्।
राजर्षिणा ततः पीतां गङ्गां दृष्ट्वा सुरर्षयः ।। २९.५४ ।।

उपनिन्युर्महाभागा दुहितृत्वेन जाह्नवीम्।
यौवनाश्वस्य पौत्रीन्तु कावेरीञ्जह्नुरावहत् ।। २९.५५ ।।

युवनाश्वस्य शापेन गङ्गा येन विनिर्ममे ।
कावेरीं सरितां श्रेष्ठां जह्नुभार्य्यामनिन्दिताम् ।। २९.५६ ।।

जह्नुश्च दयितं पुत्रं सुहोत्रं नाम धार्मिकम्।
कावेर्य्यां जनयामास अजकस्तस्य चात्मजः ।। २९.५७ ।।

अजकस्य तु दायादो बलाकाश्वो महायशाः।
बभूवुश्च गयः शीलः कुशस्तस्यात्मजः स्मृतः ।। २९.५८ ।।

कुशपुत्रा बभूवुश्च चत्वारो वेदवर्चसः।
कुशाश्वः कुशनाभश्च अमूर्त्तारयशोवसुः ।। २९.५९ ।।

कुशस्तम्बस्तपस्तेपे पुत्रार्थी राजसत्तमः।
पूर्णे वर्षसहस्रे वै शतक्रतुमपश्यत ।। २९.६० ।।

तमुग्रतपसं दृष्ट्वा सहस्राक्षः पुरन्दरः।

समर्थः पुत्रजनने स्वयमेवास्य शाश्वतः ।। २९.६१ ।।

पुत्रत्वं कल्पयामास स्वयमेव पुरन्दरः।
गाधिर्नामाभवत्पुत्रः कौशिकः पाकशासनः ।। २९.६२ ।।

पौरुकुत्साभवद्भार्या गाधिस्तस्यामजायत।
पूर्व्वं कन्यां महाभागां नाम्ना सत्यवतीं शुभाम्।
तां गाधिपुत्रः काव्याय ऋचीकाय ददौ प्रभुः ।। २९.६३ ।।

तस्यां पुत्रस्तु वै भर्त्ता भार्गवो भृगुनन्दनः।
पुत्रार्थे साधयामास चरुं गाधेस्तथैव च ।। २९.६४ ।।

तथा चाहूय सुधृतिऋचीको भार्गवस्तदा।
उपयोज्यश्चरुरयं त्वया मात्रा च तेशुभे ।। २९.६५ ।।

तस्यां जनिष्यते पुत्रो दीप्तिमान् क्षत्रियर्षभः।
अजेयः क्षत्रियैर्युद्धे क्षत्रियर्षभसूदनः ।। २९.६६ ।।

तवापि पुत्रं कल्याणि धृतिन्तं तपोधनम्।
शमात्मकं द्विजश्रेष्ठं चरुरेष विधास्यति ।। २९.६७ ।।

एवमुक्त्वा तु तां भार्य्यामृचीको भृगुनन्दनः।
तपस्याभिरतो नित्यमरण्यं प्रविवेश ह ।। २९.६८ ।।

गाधिः सदारस्तु तदा ऋचीकाश्रममभ्यगात्।
तीर्थयात्राप्रसङ्गेन सुतां द्रष्टुं नरेश्वरः ।। २९.६९ ।।

चरुद्वयं गृहीत्वा तु ऋषेः सत्यवती सदा।
भर्त्तुर्वचनमव्यग्रा हृष्टा मात्रे न्यवेदयत् ।। २९.७० ।।

माता तु तस्यै दैवेन दुहित्रे स्वं चरुं ददौ ।
तस्याश्चरुमथाज्ञानादात्मनः सा चकार ह ।। २९.७१ ।।

अथ सत्यवती गर्भं क्षत्रियान्तकरं शुभम्।
धारयामास दीप्तेन वपुषा घोरदर्शना ।। २९.७२ ।।

तमृचीकस्ततो दृष्ट्वा योगेनाप्यनुमृश्य च।
तदाब्रवीद्द्विजश्रेष्ठः स्वां भार्य्यां वरवर्णिनीम् ।। २९.७३ ।।

मातुः सिद्ध्यति ते भद्रे चरुव्यत्यासहेतुना।
जनिष्यति हि पुत्रस्ते क्रूरकर्मातिदारुणः ।। २९.७४ ।।

माता जनिष्यते वापि तथाभूतं तपोधनम् ।
विश्वं हि ब्रह्म तपसा मया तत्र समर्पितम् ।। २९.७५ ।।

एवमुक्ता महाभागा भर्त्रा सत्यवती तदा।
प्रसादयामास पतिं सुतो मे नेदृशो भवेत्।
ब्राह्मणापसदस्त्वन्य इत्युक्तो मुनिरब्रवीत् ।। २९.७६ ।।

नैष सङ्कल्पितः कामो मया भद्रे तथा त्वया ।
उग्रकर्मा भवेत् पुत्रः पितुर्मातुश्च कारणात् ।। २९.७७ ।।

पुनः सत्यवती वाक्यमेवमुक्ताब्रवीदिदम्।
इच्छँल्लोकानपि मुने सृजेथाः किं पुनः सुतम् ।। २९.७८ ।।

शमात्मकमृजुं भर्त्तः पुत्रं मे दातुमर्हसि।
काममेवंविधः पुत्रो मम स्यात्तु वद प्रभो ।। २९.७९ ।।

मय्यन्यथा न शक्यं वै कर्तुमेव द्विजोत्तम।
ततः प्रसादमकरोत् स तस्यास्तपसो बलात् ।। २९.८० ।।

पुत्रे नास्ति विशेषो मे पौत्रे वा वरवर्णिनि।
त्वया यथोक्तं वचनं तथा भद्रे भविष्यति ।। २९.८१ ।।

तस्मात् सत्यवती पुत्रं जनयामास भार्गवम्।
तपस्यभिरतन्दान्तं जमदग्निः शमात्मकम् ।। २९.८२ ।।

भृगोश्चरुविपर्यासे रौद्रवैष्णवयोः पुरा।
यमनाद्वैष्णवस्याग्नेर्जमदग्निरजायत ।। २९.८३ ।।

विश्वामित्रं तु दायादं गाधिः कुशिकनन्दनः।
प्राप्य ब्रह्मर्षिसहितो (सविता) जगाम ब्रह्मणावृतः ।। २९.८४ ।।

सा हि सत्यवती पुण्या सत्यव्रतपरायणा।
कौशिकीति समाख्याता प्रवृत्तेयं महानदी ।। २९.८५ ।।

परिस्रुता महाभागा कौशिकी सरितां वरा।
इक्ष्वाकुवंशे त्वभवत्सुवेणुर्नाम पार्थिवः ।। २९.८६ ।।

तस्य कन्या महाभागा कामली नाम रेणुका।
रेणु कायान्तु कामल्यां तपोधृतिसमन्वितः।
आर्चीको जनयामास जमदग्निः सुदारुणम् ।। २९.८७ ।।

सर्वविद्यान्तगं श्रेष्ठं धनुर्वेदस्य पारगम्।

रामं क्षत्रिय हन्तारं प्रदीप्तमिव पावकम् ।। २९.८८ ।।

और्व्वस्यैवमृचीकस्य सत्यवत्यां महामनाः।
जमदग्निस्ततो वीर्य्याज्जज्ञे ब्रह्मविदां वरः।
मध्यमश्च शुनःशेफः शुनःपुच्छः कनिष्ठकः ।। २९.८९ ।।

विश्वामित्रस्तु धर्मात्मा नाम्ना विश्वरथः स्मृतः ।
जज्ञे भृगुप्रसादेन कौशिकाद्वंशवर्द्धनः ।। २९.९० ।।

विश्वामित्रस्य पुत्रस्तु शुनःशेफोऽभवन्मुनिः।
हरिश्चन्द्रस्य यज्ञे तु पशुत्वे नियुतः सवै।
देवैर्दत्तः स वै यस्माद्देवरातस्ततोऽभवत् ।। २९.९१ ।।

विश्वामित्रस्य पुत्राणां शुनः शेफोऽग्रजः स्मृतः।
मधुच्छन्दो नयश्चैव कृतदेवौ ध्रुवाष्टकौ ।। २९.९२ ।।

कच्छपः पूरणश्चैव विश्वामित्रसुतास्तु वै।
तेषां गोत्राणि बहुधा कौशिकानां महात्मनाम् ।। २९.९३ ।।

पार्थिवा देवराताश्च याज्ञवल्क्या समर्षणाः ।
उदुम्बरा उदुम्लानास्तारका यममुञ्चताः ।। २९.९४ ।।

लोहिण्यो रेणवश्चैव तथा कारीषवः स्मृताः।
बभ्रवः पाणिनश्चैव ध्यावजप्यास्तथैव च ।। २९.९५ ।।

शालावत्या हिरण्याक्षाः स्यङ्कृता गालवाः स्मृताः ।
देवला यामदूताश्च शालङ्कायनबाष्कलाः ।। २९.९६ ।।

ददाति बादराश्चान्ये विश्वामित्रस्य धीमतः।
ऋष्यन्तरविवाङ्यास्ते बहवः शौशिकाः स्मृताः ।। २९.९७ ।।

कौशिकासोश्रुमाश्चैव तथान्ये सैधवायनाः।
पौरोरवस्य पुण्यस्य ब्रह्मर्षेः कौशिकस्य तु ।। २९.९८ ।।

दृषद्वतीसुतश्चापि विश्वामित्रात्तथाष्टकः।
अष्टकस्य सुतो यो हि प्रोक्तो जह्नुगणोमया ।। २९.९९ ।।

ऋषय ऊचुः ।।

किं लक्षणेन धर्मेण तपसेह श्रुतेन वा।
ब्राह्मण्यं समनुप्राप्तं विश्वामित्रादिभिर्नृपैः ।। २९.१०० ।।

येन योनाभिधा नेन ब्राह्मण्यं क्षत्रिया गताः ।
विशेषं ज्ञातुमिच्छामि तपसा दानतस्तथा ।। २९.१०१ ।।

एवमुक्तस्ततो वाक्यमब्रवीदिदमर्थवत्।
अन्यायोपगतैर्द्रव्यैराहृत्य यजने धिया।
धर्माभिकांक्षी यजते न धर्मफलमश्नुते ।। २९.१०२ ।।

धर्म्मं चैतं समाख्याय पापात्मा पुरुषाधमः।
ददाति दानं विप्रेभ्यो लोकानां दम्भकारणात् ।। २९.१०३ ।।

जपं कृत्वा तथा तीव्रं धनलोभान्निरङ्कुशः।
रागमोहान्वितो ह्यन्ते पावनार्थं ददाति यः ।। २९.१०४ ।।

तेन दत्तानि दानानि अफलानि भवन्त्युत।
तस्य धर्म्मप्रवृत्तस्य हिंसकस्य दुरात्मनः ।। २९.१०५ ।।

एवं लब्ध्वा धनं मोहाद्ददतो यजतश्च ह।
सक्लिष्टकर्मणो दानं न तिष्ठति दुरात्मनः ।। २९.१०६ ।।

न्यायागतानां द्रव्याणां तीर्थे सम्प्रतिपादनम्।
कामाननभिसन्धाय यजते च ददाति च ।। २९.१०७ ।।

स दानफलमाप्नोति तच्च दानं सुखोदयम्।
दानेन भोगानाप्नोति स्वर्गं सत्येन गच्छति ।। २९.१०८ ।।

तपसा तु सुतप्तेन लोकान् विष्टभ्य तिष्ठति ।
विष्टभ्य स तु तेजस्वी लोकेष्वानन्त्यमश्नुते ।। २९.१०९ ।।

दानाच्छ्रेयांस्तथा यज्ञो यज्ञाच्छ्रेयस्तथा तपः।
संन्यासस्तपसः श्रेयांस्तस्माज्ज्ञानं गुरुः स्मृतम् ।। २९.११० ।।

श्रृयन्ते हि तपःसिद्धाः क्षात्रोपेता द्विजातयः।
विश्वामित्रो नरपतिर्मान्धाता संकृतिः कपिः ।। २९.१११ ।।

कपेश्च पुरुकुत्सश्च सत्यश्चानृहवानृथुः
आर्ष्टिषेणोऽमीढश्च भागान्योन्यस्तथैव च ।। २९.११२ ।।

कक्षीवश्चैव शिजयस्तथान्ये च महारथाः।
रथीतरश्च रुन्दश्च विष्णुवृद्धादयो नृपाः ।। २९.११३ ।।

क्षात्रोपेताः स्मृता ह्येते तपसा ऋषिताङ्गताः ।
एते राजर्षयः सर्व्वे सिद्धिं सुमहतीङ्गताः।

अत ऊर्द्ध्वं प्रवक्ष्यामि अयोर्वंशं महात्मनः ।। २९.११४ ।।

इति श्रीमहापुराणे वायुप्रोक्ते चन्द्रवंशकीर्तनं नामोनत्रिंशोऽध्यायः ।। २९ ।। *

उत्तरार्द्धम् - २८

।।सूत उवाच ।।

पिता सोमस्य वैविप्रा जज्ञेऽत्रिर्भगवानृषिः।
सोऽति तस्थौ सर्वलोकान्भगवान्त्स्वेन तेजसा ।। २८.१ ।।

कर्मणा मनसा वाचा शुभान्येव समाचरन्।
काष्ठकुड्यशिलाभूत ऊर्द्ध्वबाहुर्महाद्युतिः ।। २८.२ ।।

सुदुश्चरं नाम तपो येन तप्तं महत्पुरा।
त्रीणि वर्षसहस्राणि दिव्यानीति हि नः श्रुतम् ।। २८.३ ।।

तस्योर्द्ध्वरेतसस्तत्र स्थितस्यानिमिषस्पृहम्।
सोमत्वन्तनुरापेदे महाबुद्धिः स वै द्विजः ।। २८.४ ।।

ऊर्द्ध्वमाचक्रमे तस्य सोमत्वं भावितात्मनः।
सोमः सुस्राव नेत्राभ्यां दश वा द्योतयन् दिशः ।। २८.५ ।।

तं गर्भं विधिनादिष्टा दश देव्यो दधुस्तदा।
समेत्य धारयामासुर्न च ताः समशक्नुवन् ।। २८.६ ।।

स ताभ्यः सहसैवाथ दिग्भ्यो गर्भः प्रभान्वितः।
यथावभासयंल्लोकाञ्शीतांशुः सर्वभावनः ।। २८.७ ।।

यदा न धारणे शक्तास्तस्य गर्भस्य ताः स्त्रियः।
ततः स ताभिः शीतांशुर्निपपात वसुन्धराम् ।। २८.८ ।।

पतन्तं सोममालोक्य ब्रह्मा लोकपितामहः।
रथमारोपयामास लोकानां हितकाम्यया ।। २८.९ ।।

स हि देवमयो विप्रा धर्म्मार्थी सत्यसङ्गरः।
युक्तो वाजिसहस्रेण सितेनेति हि नः श्रुतम् ।। २८.१० ।।

तस्मिन्निपतिते देवाः पुत्रेऽत्रेः परमात्मनि।
तुष्टुवुर्ब्रह्मणः पुत्राः मानसाः सप्त विश्रुताः ।। २८.११ ।।

तत्रैवाङ्गिरसस्तस्य भृगोश्चैवात्मजस्तथा।
ऋग्भिर्यजुर्भिर्बहुभिरथर्वाङ्गिरसैरपि ।। २८.१२ ।।

ततः संस्तूयमानस्य तेजः सोमस्य भास्वतः।
आप्यायमानं लोकांस्त्रीन् भावयामास सर्व्वशः ।। २८.१३ ।।

समेन रथमुख्येन सागरान्तां वसुन्धराम्।
त्रिःसप्तकृत्वो विपुल श्चकाराभिप्रदक्षिणम् ।। २८.१४ ।।

तस्य यच्चापि तत्तेजः पृथिवीमन्वपद्यत।
ओषध्यस्ताः समुद्भूतास्तेजसा संज्वलन्त्युत ।। २८.१५ ।।

ताभिर्धार्यत्ययं लोकान् प्रजाश्चापि चतुर्विधाः।
पोष्टा हि भगवान् सोमो जगतो हि द्विजोत्तमाः ।। २८.१६ ।।

स लब्धतेजास्तपसा संस्तवैस्तैश्च कर्म्मभिः।
तपस्तेपे महाभागः पद्मानां दशतीर्दश ।। २८.१७ ।।

हिरण्यवर्णा या देव्यो धारयन्त्यात्मना जगत्।
विभुस्तासाम्भवेत्सोमः प्रख्यातः स्वेन कर्म्मणा ।। २८.१८ ।।

ततस्तस्मै ददौ राज्यं ब्रह्मा ब्रह्मविदां वरः।
बीजौषधिषु विप्राणामपाञ्च द्विजसत्तमाः ।। २८.१९ ।।

सोऽभिषिक्तो महातेजा महाराज्येन राजराट् ।
लोकानां भावयामास स्वभावात्तपतां वरः ।। २८.२० ।।

सप्तविंशतिरिन्दोस्तु दाक्षायण्यो महाव्रताः।
ददौ प्राचेतसो दक्षो नक्षत्राणीति या विदुः ।। २८.२१ ।।

स तत्प्राप्य महद्राजयं सोमः सोमवतां प्रभुः।
समाजज्ञे राजसूयं सहस्रशतदक्षिणम् ।। २८.२२ ।।

हिरण्यगर्भश्चोद्गाता ब्रह्मा ब्रह्मत्वमेयिवान्।
सदस्यस्तत्र भगवान् हरिर्नारायणः प्रभुः ।
सनत्कुमारप्रमुखैराद्यैर्ब्रह्मर्षिभिर्वृतः ।। २८.२३ ।।

दक्षिणामददत्सोमस्त्रील्लोँकानिति नः श्रुतम्।
तेभ्यो ब्रह्मर्षिमुख्येभ्यः सदस्येभ्यश्च वै द्विजाः ।। २८.२४ ।।

तं सिनी च कुहूश्चैव वपुः पुष्टिः प्रभावसुः।
कीर्त्तिर्धृतिश्च लक्ष्मीश्च नव देव्यः सिषेविरे ।। २८.२५ ।।

प्राप्यावभृथमव्यग्रः सर्व्वदेवर्षिपूजितः।
अतिराजातिराजेन्द्रो दशधातापयद्दिशः ।। २८.२६ ।।

तदा तत् प्राप्य दुष्प्रापमैश्वर्यमृषिसंस्तुतम्।
स विभ्रममतिर्विप्रा विनये विनयो हतः ।। २८.२७ ।।

बृहस्पतेः स वै भार्यान्तारां नाम यशस्विनीम्।
जहार सहसा सर्व्वानवमत्याङ्गिरःसुतान् ।। २८.२८ ।।

स याच्यमानो देवैश्च तथा देवर्षिभिश्च ह।
नैव व्यसर्जयत्तारां तस्मायाङ्गिरसे तदा ।। २८.२९ ।।

उशनास्तस्य जग्राह पार्ष्णिमङ्गिरसो द्विजाः।
स हि शिष्यो महातेजाः पितुः पूर्वं बृहस्पतेः ।। २८.३० ।।

तेन स्नेहेन भगवान् रुद्रस्तस्य बृहस्पतेः।
पार्ष्णिग्राहोऽभवद्देवः प्रगृह्याजगवन्धनुः ।। २८.३१ ।।

तेन ब्रह्मर्षिमुख्येभ्यः परमास्त्रं महात्मना।
उद्दिश्य देवानुत्सृष्टं येनैषां नाशितं यशः ।। २८.३२ ।।

तत्र तद्युद्धमभवत् प्रत्यक्षन्तारकामयम्।
देवानां दानवानाञ्च लोकक्षयकरं महत् ।। २८.३३ ।।

तत्र शिष्टास्त्रयो देवास्तुषिताश्चैव ये स्मृताः।
ब्रह्माणं शरणं जग्मुरादिदेवं पितामहम् ।। २८.३४ ।।

ततो निवार्योशनसं रुद्रं ज्येष्ठञ्च शङ्करम्।
ददावाङ्गिरसे तारां स्वयमेव पितामहः ।। २८.३५ ।।

अन्तर्वत्नीं च तां दृष्ट्वा तारान्ताराधिपाननाम्।
गर्भमुत्सृजसे न त्वं विप्रः प्राह बृहस्पतिः ।। २८.३६ ।।

मदीयायां तनौ योनौ गर्भो धार्यः कथञ्चन।
अथो नावसृजत्तन्तु कुमारं दस्युहन्तमम् ।। २८.३७ ।।

ईषिकास्तम्बमासाद्य ज्वलन्तमिव पावकम्।
जातमात्रोऽथ भगवान् देवानामाक्षिपद्वपुः ।। २८.३८ ।।

ततः संशयमापन्नास्तारामकथयन् सुराः।
सत्यं ब्रूहि सुतः कस्य सोमस्याथ बृहस्पतेः ।। २८.३९ ।।

ह्रीयमाणा यदा देवान्नाह सा साध्वसाधु वा ।
तदा तां शप्तुमारब्धः कुमारो दस्युहन्तमः ।। २८.४० ।।

सन्निवार्य तदा ब्रह्मा तारां चन्द्रस्य संशयः।
यदत्र तथ्यन्तद्ब्रूहि तारे कस्य सुतस्त्वयम् ।। २८.४१ ।।

सा प्राञ्जलिरुवाचेदं ब्रह्माणं वरदं प्रभुम्।
सोमस्येति महात्मानं कुमारन्दस्युहन्तमम् ।। २८.४२ ।।

ततः स तमुपाघाय सोमो दाता प्रजापतिः।
बुध इत्यकरोन्नाम तस्य पुत्रस्य धीमतः ।। २८.४३ ।।

प्रतिपूर्व्वञ्च गमने समभ्युत्तिष्ठते बुधैः।
उत्पादयामास तदा पुत्रं वै राजपुत्रिका ।। २८.४४ ।।

तस्य पुत्रो महातेजा बभूवैलः पुरूरवाः ।
उर्वश्यां जज्ञिरे तस्य पुत्राः षट् सुमहौजसः ।। २८.४५ ।।

प्रसह्य धर्षितस्तत्र विवशो राजयक्ष्मणा ।
ततो यक्ष्माभिभूतस्तु सोमः प्रक्षीणमण्डलः ।
जगाम शरणायाथ पितरं सोऽत्रिमेव तु ।। २८.४६ ।।

तस्य तत्पापशमनं चकारात्रिर्महायशाः।
स राजयक्ष्मणा मुक्तः श्रिया जज्वाल सर्व्वशः ।। २८.४७ ।।

एतत्सोमस्य वै जन्म कीर्त्तितं द्विजसत्तमाः।
वंशन्तस्य द्विजश्रेष्ठाः कीर्त्यमानं निबोधत ।। २८.४८ ।।

धन्यमारोग्यमायुष्यं पुण्यं कल्मषशोधनम्।
सोमस्य जन्म श्रुत्वैव सर्वपापैः प्रमुच्यते ।। २८.४९ ।।

इति श्रीमहापुराणे वायुप्रोक्ते शोमोत्पत्तिर्नामाष्टाविंशोऽध्यायः ।। २८ ।। *

सूत उवाच ।।

सोमस्य तु बुधः पुत्रो बुधस्य तु पुरूरवाः।
तेजस्वी दानशीलश्च यज्वा विपुलदक्षिणः ।। २९.१ ।।

ब्रह्मवादी पराक्रान्तः शत्रुभिर्युधि दुर्जयः।
आहर्त्ता चाग्निहोत्रस्य यज्वनाञ्च ददौ महीम् ।। २९.२ ।।

सत्यवाक् कर्म्मबुद्धिश्च कान्तः संवृतमैथुनः।
अतीव पुत्रो लोकेषु रूपेणाप्रतिमोऽभवत् ।। २९.३ ।।

तं ब्रह्मवादिनं दान्तं धर्मज्ञं सत्यवादिनम्।
उर्वशी वरयामास हित्वा मानं यशस्विनी ।। २९.४ ।।

तया सहावसद्राजा दशवर्षाणि चाष्ट च।
सप्त षट् सप्त चाष्टौ च दश चाष्टौ च वीर्यवान् ।। २९.५ ।।

वने चैत्ररथे रम्ये तथा मन्दाकिनीतटे।
अलकायां विशालायां नन्दने च वनोत्तमे ।। २९.६ ।।

गन्धमादनपादेषु मेरुश्रृङ्गे नगोत्तमे।
उत्तरांश्च कुरून् प्राप्य कलापग्राममेव च ।। २९.७ ।।

एतेषु वनसुख्येषु सुरैराचरितेषु च।
उर्वश्या सहितो राजा रेमे परमया मुदा ।। २९.८ ।।

ऋषय ऊचुः।।
गन्धर्वा चोर्वशी देवी राजानं मानुषं कथम्।
देवानुत्सृज्य सम्प्राप्ता तन्नो ब्रूहि बहुश्रुत ।। २९.९ ।।

सूत उवाच।।
ब्रह्मशापाभिभूता सा मानुषं समुपस्थिता।
ऐलं तु तं वरारोहा समयेन व्यवस्थिता ।। २९.१० ।।

आत्मनः शापमोक्षार्थं नियमं सा चकार तु ।
अनग्नदर्शनञ्चैव अकामात सह मैथुनम् ।। २९.११ ।।

द्वौ मेषौ शयनाभ्याशे स तावद् व्यवतिष्ठते।
घृतमात्रं तथाहारः कालमेकन्तु पार्थिव ।। २९.१२ ।।

यद्येष समयो राजन् यावत्कालञ्च ते दृढम्।
तावत्कालन्तु वत्स्यामि एष नः समयः कृतः ।। २९.१३ ।।

तस्यास्तं समयं सर्वं स राजा पर्यपालयत्।
एवं सा चावसत् तस्मिन् पुरूरवसि भामिनी ।। २९.१४ ।।

वर्षाण्यथ चतुःषष्टिं तद्भक्त्या शापमोहिता।
उर्वशी मानुषं प्राप्ता गन्धर्व्वा श्चिन्तयान्विताः ।। २९.१५ ।।

गन्धर्व्वा ऊचुः।
चिन्तयध्वं महाभागा यथा सा तु वराङ्गना।
आगच्छेत्तु पुनर्द्देवानुर्वशी स्वर्गभूषणा ।। २९.१६ ।।

ततो विश्वावसुर्नाम तत्राह वदतां वरः।
तया तु समयस्तत्र क्रियमाणो मतोऽनघः ।। २९.१७ ।।

समयन्युत्क्रमात् सा वै राजानं त्यक्ष्यते यथा।
तदहं वच्मि वः सर्वं यथा त्यक्ष्यति सा नृपम् ।। २९.१८ ।।

सहसा योगमेष्यामि युष्माकं कार्यसिद्धये।
एवमुक्त्वा गतस्तत्र प्रतिष्ठानं महायशाः ।। २९.१९ ।।

स निशायामथागम्य मेषमेकं जहार वै।
मातृवद्वर्त्तते सा तु मेषयोश्चारुहासिनी ।। २९.२० ।।

गन्धर्वागमनं ज्ञात्वा शयनस्था यशस्विनी।
राजानमब्रवीत्सा तु पुत्रो मे ह्रियतेति वै ।। २९.२१ ।।

एवमुक्तो विनिश्चित्य नग्नस्तिष्ठति वै नृपः ।
नग्नं द्रक्ष्यति मां देवी समयो वितथो भवेत् ।। २९.२२ ।।

ततो भूयस्तु गन्धर्व्वा द्वितीयं मेषमाददुः।
द्वितीयेऽपहृते मेषे ऐलं देवी तमब्रवीत् ।। २९.२३ ।।

पुत्रौ मम हृतौ राजन्ननाथाया इव प्रभो।
एवमुक्तस्तदोत्थाय नग्नो राजा प्रधावितः ।। २९.२४ ।।

मेषाबभ्यां पदवीं राजन् गन्धर्व्वैर्व्युत्थितामथ।
उत्पादिता तु महती माया तद्भवनं महत् ।। २९.२५ ।।

प्रकाशितन्तु सहसा ततो नग्नमवेक्ष्य सा।
नग्नं दृष्ट्वा तिरोऽभूत्सा अप्सरा कामरूपिणी ।। २९.२६ ।।

तिरोभूतान्तु तां ज्ञात्वा गन्धर्वास्तत्र तावुभौ।

मेषौ त्यक्त्वा च ते सर्वे तत्रैवान्तर्हिताभवन् ।। २९.२७ ।।

उत्सृष्टावुरणौ दृष्ट्वा राजा गृह्यागतः प्रभुः।
अपश्यंस्तां तु वै राजा विललाप सुदुःखितः ।। २९.२८ ।।

चचार पृथिवीं चैव मार्गमाणस्ततस्ततः।
अथापश्यच्च तां राजा कुरुक्षेत्रे महाबलः ।। २९.२९ ।।

प्लक्षतीर्थे पुष्करिण्यां विगाढेनाम्बुनाप्लुताम्।
क्रीडन्तीमप्सरोभिश्च पञ्चभिः सह शोभनाम् ।। २९.३० ।।

अपश्यत्सा ततः सुभ्रू राजानमविदूरतः।
उर्वशी ताः सखीः प्राह अयं स पुरुषोत्तमः ।। २९.३१ ।।

यस्मिन्नहमवात्सं हि दर्शयामास तं नृपम् ।
तत आविर्बभूवुस्ताः पञ्चचूडाप्सरास्तु ताः ।। २९.३२ ।।

दृष्ट्वा तु राजा तां प्रीतः प्रलापान् कुरुते बहून्।
आयाहि तिष्ठ मनसा घोरे वचसि तिष्ठ हे ।। २९.३३ ।।

एवमादीनि सूक्ष्माणि परस्परमभाषत।
उर्व्वशी त्वब्रवीच्चैलं सगर्भाहं त्वया प्रभो ।। २९.३४ ।।

संवत्सरात् कुमारस्ते भविता नव संशयः।
निशामेकान्तु वै राजा ह्यवसत्तु तया सह ।। २९.३५ ।।

सम्प्रहृष्टो जगामाथ स्वपुरन्तु महायशाः।
गते संवत्सरे राजा उर्व्वशीं पुनरागमत् ।। २९.३६ ।।

उषित्वा तु तया सार्द्धमेकरात्रं महामनाः।
कामार्त्तश्चा ब्रवीद्दीनो भव नित्यं ममेति वै ।। २९.३७ ।।

उर्व्वश्यथाब्रवीच्चैलं गन्धर्वास्ते वरं ददुः।
तं वृणीष्व महाराज ब्रूहि चैतांस्त्वमेव हि ।। २९.३८ ।।

वृणे नित्यं हि सालोक्यं गन्धर्वाणां महात्मनाम्।
तथेत्युक्त्वा वरं वव्रे गन्धर्वाश्च तथास्त्विति ।। २९.३९ ।।

स्थालीमग्नेः पूरयित्वा गन्धर्व्वाश्च तमब्रुवन्।
अनेन इष्ट्वा लोकन्तं प्राप्स्यसि त्वं नराधिप ।। २९.४० ।।

तमादाय कुमारन्तु नगरायोपचक्रमे।

निःक्षिप्य तमरण्याञ्च स पुत्रन्तु गृहं ययौ ।। २९.४१ ।।

पुनरादाय दृश्याग्निमश्वत्थं तत्र दृष्टवान्।
समीपतस्तु तं दृष्ट्वा ह्यश्वत्थं तत्र विस्मितः ।। २९.४२ ।।

गन्धर्व्वेभ्यस्तथाख्यातुमग्निना गां गतस्तु सः ।
श्रुत्वा तमर्थमशिलमरणिं तु समादिशत् ।। २९.४३ ।।

अश्वत्थादरणिं कृत्वा मथित्वाग्निं यथाविधि।
तेनेष्ट्वा तु सलोकं नः प्राप्स्यसि त्वं नराधिप।
मथित्वाग्निं त्रिधा कृत्वा ह्ययजत्स नराधिपः ।। २९.४४ ।।

इष्ट्वा यज्ञैर्बहुविधैर्गतस्तेषां सलोकताम्।
वासाय च स गन्धर्व्वस्त्रेतायां स महारथः।
एकोऽग्निः पूर्वमासीद्वै ऐलस्त्रींस्तानकल्पयत् ।। २९.४५ ।।

एवंप्रभावो राजासीदैलस्तु द्विजसत्तमाः।
देशे पुण्यतमे चैव महर्षिभिरलंकृते ।। २९.४६ ।।

राज्यं स कारयामास प्रयागे पृथिवी पतिः।
उत्तरे यामुने तीरे प्रतिष्ठाने महायशाः ।। २९.४७ ।।

तस्य पुत्रा बभूवुर्हि षडिन्द्रोपमतेजसः।
गन्धर्व्वलोके विदिता आयुर्द्धीमानमावसुः ।। २९.४८ ।।

विश्वायुश्च शतायुश्च गतायुश्चोर्वशीसुताः।
अमावसोस्तु वै जातो भीमो राजाथ विश्वजित् ।। २९.४९ ।।

श्रीमान् भीमस्य दायादो राजासीत्काञ्चनप्रभः।
विद्वांस्तु काञ्चनस्यापि सुहोत्रोऽभून्महाबलः ।। २९.५० ।।

सुहोत्रस्याभज्जह्नुः केशिकागर्भसम्भवः।
प्रतिगत्य ततो गङ्गा विततो यज्ञकर्म्मणि ।। २९.५१ ।।

प्लावयामास तं देशं भाविनोऽर्थस्य दर्शनात्।
गङ्गया प्लावितं दृष्ट्वा यज्ञवाटं समन्ततः ।। २९.५२ ।।

सौहोत्रिर्वरदः क्रुद्धो गङ्गां संरक्तलोचनः।
अस्य गङ्गेऽवलेपस्य सद्यः फलमवाप्नुहि ।। २९.५३ ।।

एतत्ते विफलं सर्व्वं पीतमम्भः करोम्यहम्।
राजर्षिणा ततः पीतां गङ्गां दृष्ट्वा सुरर्षयः ।। २९.५४ ।।

उपनिन्युर्महाभागा दुहितृत्वेन जाह्नवीम्।
यौवनाश्वस्य पौत्रीन्तु कावेरीञ्जह्नुरावहत् ।। २९.५५ ।।

युवनाश्वस्य शापेन गङ्गा येन विनिर्ममे ।
कावेरीं सरितां श्रेष्ठां जह्नुभार्य्यामनिन्दिताम् ।। २९.५६ ।।

जह्नुश्च दयितं पुत्रं सुहोत्रं नाम धार्मिकम्।
कावेर्य्यां जनयामास अजकस्तस्य चात्मजः ।। २९.५७ ।।

अजकस्य तु दायादो बलाकाश्वो महायशाः।
बभूवुश्च गयः शीलः कुशस्तस्यात्मजः स्मृतः ।। २९.५८ ।।

कुशपुत्रा बभूवुश्च चत्वारो वेदवर्चसः।
कुशाश्वः कुशनाभश्च अमूर्त्तारयशोवसुः ।। २९.५९ ।।

कुशस्तम्बस्तपस्तेपे पुत्रार्थी राजसत्तमः।
पूर्णे वर्षसहस्रे वै शतक्रतुमपश्यत ।। २९.६० ।।

तमुग्रतपसं दृष्ट्वा सहस्राक्षः पुरन्दरः।
समर्थः पुत्रजनने स्वयमेवास्य शाश्वतः ।। २९.६१ ।।

पुत्रत्वं कल्पयामास स्वयमेव पुरन्दरः।
गाधिर्नामाभवत्पुत्रः कौशिकः पाकशासनः ।। २९.६२ ।।

पौरुकुत्साभवद्भार्या गाधिस्तस्यामजायत।
पूर्व्वं कन्यां महाभागां नाम्ना सत्यवतीं शुभाम्।
तां गाधिपुत्रः काव्याय ऋचीकाय ददौ प्रभुः ।। २९.६३ ।।

तस्यां पुत्रस्तु वै भर्त्ता भार्गवो भृगुनन्दनः।
पुत्रार्थे साधयामास चरुं गाधेस्तथैव च ।। २९.६४ ।।

तथा चाहूय सुधृतिऋचीको भार्गवस्तदा।
उपयोज्यश्चरुरयं त्वया मात्रा च तेशुभे ।। २९.६५ ।।

तस्यां जनिष्यते पुत्रो दीप्तिमान् क्षत्रियर्षभः।
अजेयः क्षत्रियैर्युद्धे क्षत्रियर्षभसूदनः ।। २९.६६ ।।

तवापि पुत्रं कल्याणि धृतिन्तं तपोधनम्।
शमात्मकं द्विजश्रेष्ठं चरुरेष विधास्यति ।। २९.६७ ।।

एवमुक्त्वा तु तां भार्य्यामृचीको भृगुनन्दनः।

तपस्याभिरतो नित्यमरण्यं प्रविवेश ह ।। २९.६८ ।।

गाधिः सदारस्तु तदा ऋचीकाश्रममभ्यगात्।
तीर्थयात्राप्रसङ्गेन सुतां द्रष्टुं नरेश्वरः ।। २९.६९ ।।

चरुद्वयं गृहीत्वा तु ऋषेः सत्यवती सदा।
भर्त्तुर्वचनमव्यग्रा हृष्टा मात्रे न्यवेदयत् ।। २९.७० ।।

माता तु तस्यै दैवेन दुहित्रे स्वं चरुं ददौ ।
तस्याश्चरुमथाज्ञानादात्मनः सा चकार ह ।। २९.७१ ।।

अथ सत्यवती गर्भं क्षत्रियान्तकरं शुभम्।
धारयामास दीप्तेन वपुषा घोरदर्शना ।। २९.७२ ।।

तमृचीकस्ततो दृष्ट्वा योगेनाप्यनुमृश्य च।
तदाब्रवीद्द्विजश्रेष्ठः स्वां भार्य्यां वरवर्णिनीम् ।। २९.७३ ।।

मातुः सिद्ध्यति ते भद्रे चरुव्यत्यासहेतुना।
जनिष्यति हि पुत्रस्ते क्रूरकर्मातिदारुणः ।। २९.७४ ।।

माता जनिष्यते वापि तथाभूतं तपोधनम् ।
विश्वं हि ब्रह्म तपसा मया तत्र समर्पितम् ।। २९.७५ ।।

एवमुक्ता महाभागा भर्त्रा सत्यवती तदा।
प्रसादयामास पतिं सुतो मे नेदृशो भवेत्।
ब्राह्मणापसदस्त्वन्य इत्युक्तो मुनिरब्रवीत् ।। २९.७६ ।।

नैष सङ्कल्पितः कामो मया भद्रे तथा त्वया ।
उग्रकर्मा भवेत् पुत्रः पितुर्मातुश्च कारणात् ।। २९.७७ ।।

पुनः सत्यवती वाक्यमेवमुक्ताब्रवीदिदम्।
इच्छँल्लोकानपि मुने सृजेथाः किं पुनः सुतम् ।। २९.७८ ।।

शमात्मकमृजुं भर्त्तः पुत्रं मे दातुमर्हसि।
काममेवंविधः पुत्रो मम स्यात्तु वद प्रभो ।। २९.७९ ।।

मय्यन्यथा न शक्यं वै कर्तुमेव द्विजोत्तम।
ततः प्रसादमकरोत् स तस्यास्तपसो बलात् ।। २९.८० ।।

पुत्रे नास्ति विशेषो मे पौत्रे वा वरवर्णिनि।
त्वया यथोक्तं वचनं तथा भद्रे भविष्यति ।। २९.८१ ।।

तस्मात् सत्यवती पुत्रं जनयामास भार्गवम्।
तपस्यभिरतन्दान्तं जमदग्निः शमात्मकम् ।। २९.८२ ।।

भृगोश्चरुविपर्यासे रौद्रवैष्णवयोः पुरा।
यमनाद्वैष्णवस्याग्नेर्जमदग्निरजायत ।। २९.८३ ।।

विश्वामित्रं तु दायादं गाधिः कुशिकनन्दनः।
प्राप्य ब्रह्मर्षिसहितो (सविता) जगाम ब्रह्मणावृतः ।। २९.८४ ।।

सा हि सत्यवती पुण्या सत्यव्रतपरायणा।
कौशिकीति समाख्याता प्रवृत्तेयं महानदी ।। २९.८५ ।।

परिस्रुता महाभागा कौशिकी सरितां वरा।
इक्ष्वाकुवंशे त्वभवत्सुवेणुर्नाम पार्थिवः ।। २९.८६ ।।

तस्य कन्या महाभागा कामली नाम रेणुका।
रेणु कायान्तु कामल्यां तपोधृतिसमन्वितः।
आर्चीको जनयामास जमदग्निः सुदारुणम् ।। २९.८७ ।।

सर्वविद्यान्तगं श्रेष्ठं धनुर्वेदस्य पारगम्।
रामं क्षत्रिय हन्तारं प्रदीप्तमिव पावकम् ।। २९.८८ ।।

और्व्वस्यैवमृचीकस्य सत्यवत्यां महामनाः।
जमदग्निस्ततो वीर्य्याज्जज्ञे ब्रह्मविदां वरः।
मध्यमश्च शुनःशेफः शुनःपुच्छः कनिष्ठकः ।। २९.८९ ।।

विश्वामित्रस्तु धर्मात्मा नाम्ना विश्वरथः स्मृतः ।
जज्ञे भृगुप्रसादेन कौशिकाद्वंशवर्द्धनः ।। २९.९० ।।

विश्वामित्रस्य पुत्रस्तु शुनःशेफोऽभवन्मुनिः।
हरिश्चन्द्रस्य यज्ञे तु पशुत्वे नियुतः सवै।
देवैर्दत्तः स वै यस्माद्देवरातस्ततोऽभवत् ।। २९.९१ ।।

विश्वामित्रस्य पुत्राणां शुनः शेफोऽग्रजः स्मृतः।
मधुच्छन्दो नयश्चैव कृतदेवौ ध्रुवाष्टकौ ।। २९.९२ ।।

कच्छपः पूरणश्चैव विश्वामित्रसुतास्तु वै।
तेषां गोत्राणि बहुधा कौशिकानां महात्मनाम् ।। २९.९३ ।।

पार्थिवा देवराताश्च याज्ञवल्क्या समर्षणाः ।
उदुम्बरा उदुम्लानास्तारका यममुञ्चताः ।। २९.९४ ।।

लोहिण्यो रेणवश्चैव तथा कारीषवः स्मृताः।
बभ्रवः पाणिनश्चैव ध्यावजप्यास्तथैव च ।। २९.९५ ।।

शालावत्या हिरण्याक्षाः स्यङ्कृता गालवाः स्मृताः ।
देवला यामदूताश्च शालङ्कायनबाष्कलाः ।। २९.९६ ।।

ददाति बादराश्चान्ये विश्वामित्रस्य धीमतः।
ऋष्यन्तरविवाङ्यास्ते बहवः शौशिकाः स्मृताः ।। २९.९७ ।।

कौशिकासोश्रुमाश्चैव तथान्ये सैधवायनाः।
पौरोरवस्य पुण्यस्य ब्रह्मर्षेः कौशिकस्य तु ।। २९.९८ ।।

दृषद्वतीसुतश्चापि विश्वामित्रात्तथाष्टकः।
अष्टकस्य सुतो यो हि प्रोक्तो जह्नुगणोमया ।। २९.९९ ।।

ऋषय ऊचुः ।।

किं लक्षणेन धर्मेण तपसेह श्रुतेन वा।
ब्राह्मण्यं समनुप्राप्तं विश्वामित्रादिभिर्नृपैः ।। २९.१०० ।।

येन योनाभिधा नेन ब्राह्मण्यं क्षत्रिया गताः ।
विशेषं ज्ञातुमिच्छामि तपसा दानतस्तथा ।। २९.१०१ ।।

एवमुक्तस्ततो वाक्यमब्रवीदिदमर्थवत्।
अन्यायोपगतैर्द्रव्यैराहृत्य यजने धिया।
धर्माभिकांक्षी यजते न धर्मफलमश्नुते ।। २९.१०२ ।।

धर्म्मं चैतं समाख्याय पापात्मा पुरुषाधमः।
ददाति दानं विप्रेभ्यो लोकानां दम्भकारणात् ।। २९.१०३ ।।

जपं कृत्वा तथा तीव्रं धनलोभान्निरङ्कुशः।
रागमोहान्वितो ह्यन्ते पावनार्थं ददाति यः ।। २९.१०४ ।।

तेन दत्तानि दानानि अफलानि भवन्त्युत।
तस्य धर्म्मप्रवृत्तस्य हिंसकस्य दुरात्मनः ।। २९.१०५ ।।

एवं लब्ध्वा धनं मोहाद्ददतो यजतश्च ह।
सक्लिष्टकर्मणो दानं न तिष्ठति दुरात्मनः ।। २९.१०६ ।।

न्यायागतानां द्रव्याणां तीर्थे सम्प्रतिपादनम्।
कामाननभिसन्धाय यजते च ददाति च ।। २९.१०७ ।।

स दानफलमाप्नोति तच्च दानं सुखोदयम्।
दानेन भोगानाप्नोति स्वर्गं सत्येन गच्छति ।। २९.१०८ ।।

तपसा तु सुतप्तेन लोकान् विष्टभ्य तिष्ठति ।
विष्टभ्य स तु तेजस्वी लोकेष्वानन्त्यमश्नुते ।। २९.१०९ ।।

दानाच्छ्रेयांस्तथा यज्ञो यज्ञाच्छ्रेयस्तथा तपः।
संन्यासस्तपसः श्रेयांस्तस्माज्ज्ञानं गुरुः स्मृतम् ।। २९.११० ।।

श्रूयन्ते हि तपःसिद्धाः क्षात्रोपेता द्विजातयः।
विश्वामित्रो नरपतिर्मान्धाता संकृतिः कपिः ।। २९.१११ ।।

कपेश्च पुरुकुत्सश्च सत्यश्चानृहवानृथुः
आर्ष्टिषेणोऽमीढश्च भागान्योन्यस्तथैव च ।। २९.११२ ।।

कक्षीवश्चैव शिजयस्तथान्ये च महारथाः।
रथीतरश्च रुन्दश्च विष्णुवृद्धादयो नृपाः ।। २९.११३ ।।

क्षात्रोपेताः स्मृता ह्येते तपसा ऋषिताङ्गताः ।
एते राजर्षयः सर्व्वे सिद्धिं सुमहतीङ्गताः।
अत ऊर्द्ध्वं प्रवक्ष्यामि अयोर्वंशं महात्मनः ।। २९.११४ ।।

इति श्रीमहापुराणे वायुप्रोक्ते चन्द्रवंशकीर्तनं नामोनत्रिंशोऽध्यायः ।। २९ ।। *

सूत उवाच।।

एते पुत्रा महात्मानः पञ्चैवासन् महाबलाः।
स्वर्भानुतनया विप्राः प्रभायां जज्ञिरे नृपाः ।। ३०.१ ।।

नहुषः प्रथमस्तेषां पुत्रधर्म्मा ततः स्मृतः।
धर्म्मवृद्धात्मजश्चैव सुतहोत्रो महायशाः ।। ३०.२ ।।

सुतहोत्रस्य दायादास्त्रयः परमधार्म्मिकाः।
काशः शलश्च द्वावेतौ तथा गृत्समदः प्रभुः ।। ३०.३ ।।

पुत्रो गृत्समदस्यापि शुनको यस्य शौनकः।
ब्राह्मणाः क्षत्रियाश्चैव वैश्याः शूद्रास्तथैव च ।। ३०.४ ।।

एतस्य वंशे सम्भूता विचित्रैः कर्म्मभिर्द्विजाः।
शलात्मजो ह्यार्ष्टिषेणश्चरन्तस्तस्य चात्मजः ।। ३०.५ ।।

शौनकाश्चार्ष्टिषेणाश्च क्षात्रोपेता द्विजातयः।
काशस्य काशयो राष्टः पुत्रो दीर्घतपास्तथा ।। ३०.६ ।।

धर्म्मश्च दीर्घतपसो विद्वान् धन्वन्तरिस्ततः।
तपसा सुमहातेजा जातो वृद्धस्य धीमतः।
अथैनमृषयः प्रोचुः सूतं वाक्यमिमं पुनः ।। ३०.७ ।।

ऋषय ऊचुः ।।

कथं धन्वन्तरिर्द्देवो मानुषेष्विह जज्ञिवान्।
एतद्वेदितुमिच्छामस्ततो ब्रूहि प्रियं तथा ।। ३०.८ ।।

सूत उवाच।।

धन्वन्तरेः सम्भवोऽयं श्रूयतामिह वै द्विजाः।
स सम्भूतः समुद्रान्ते मथ्यमानेऽमृते पुरा ।। ३०.९ ।।

उत्पन्नः सकलात् पूर्व्वं सर्व्वतश्च श्रियावृतः।
सर्व्वसंसिद्धकायं तं दृष्ट्वा विष्टम्भितः स्थितः।
अजस्त्वमिति होवाच तस्मादजस्तु सः स्मृतः ।। ३०.१० ।।

अजः प्रोवाच विष्णुं तं तनयोऽस्मि तव प्रभो।
विधत्स्व भागं स्थानञ्च मम लोके सुरोत्तम ।। ३०.११ ।।

एवमुक्तः सुदृष्ट्वा तु तथा प्रोवाच स प्रभुः ।
कृतो यज्ञविभागस्तु यज्ञियैर्हि सुरैस्तथा ।। ३०.१२ ।।

वेदेषु विधियुक्तञ्च विधिहोत्रं महर्षिभिः।
न शक्यमिह होमो वै तुल्यं कर्त्तुं कदाचन ।। ३०.१३ ।।

अर्वाक्सुतोऽसि हे देव नाममन्त्रोऽसि वै प्रभो।
द्वितीयायान्तु सम्भूत्यां लोके ख्यातिङ्गमिष्यसि ।। ३०.१४ ।।

अणिमादियुता सिद्धिर्गर्भस्थस्य भविष्यति।
तेनैव च शरीरेण देवत्वं प्राप्स्यसि प्रभो।
चारुमन्त्रैर्घृतैर्गन्धैर्यक्ष्यन्ति त्वां द्विजातयः ।। ३०.१५ ।।

अथ च त्वं पुनश्चैव आयुर्वेदं विधास्यसि।
अवश्यम्भावी ह्यर्थोऽयं प्राग्दिष्टस्त्वब्जयोनिना ।। ३०.१६ ।।

द्वितीयं द्वापरं प्राप्य भविता त्वं न संशयः।
तस्मात् तस्मै वरं दत्त्वा विष्णुरन्तर्दधे ततः ।। ३०.१७ ।।

द्वितीये द्वापरे प्राप्ते सौनहोत्रः स काशिराट्।
पुत्रकाम स्तपस्तेपे नृपो दीर्घतपास्तथा ।। ३०.१८ ।।

अजं देवन्तु पुत्रार्थे ह्यारिराधयिषुर्नृपः।
वरेण च्छन्दयामास प्रीतो धन्वन्तरिर्नृपम् ।। ३०.१९ ।।

नृप उवाच।।
भगवन् यदि तुष्टस्त्वं पुत्रो मे धृतिमान् भव।
तथेति समनुज्ञाय तत्रैवान्तरधीयत ।। ३०.२० ।।

तस्य गेहे समुत्पन्नो देवो धन्वन्तरिस्तदा।
काशिराजो महाराजः सर्व्वरोगप्रणाशनः ।। ३०.२१ ।।

आयुर्वेदं भरद्वाजश्चकार सभिषक्क्रियम्।
तमष्टधा पुनर्व्यस्य शिष्येभ्यः प्रत्यपादयत् ।। ३०.२२ ।।

धन्वन्तरिसुतश्चापि केतुमानिति विश्रुतः।
अथ केतुमतः पुत्रो विभो भीमरथो नृपः।
दिवोदास इति ख्यातो वाराणस्यधिपोऽभवत् ।। ३०.२३ ।।

एतस्मिन्नेव काले तु पुरीं वाराणसीं पुरा।
शून्यां विवेशयामास क्षेणको नाम राक्षसः ।। ३०.२४ ।।

शप्ता हि सा पुरी पूर्व्वं निकुम्भेन महात्मना।
शून्या वर्षसहस्रं वै भवित्रीति पुनः पुनः ।। ३०.२५ ।।

तस्यान्तु शप्तमात्रायां दिवोदासः प्रजेश्वरः।
विषयान्ते पुरीं रम्यां गोमत्यां सन्न्यवेशयत् ।। ३०.२६ ।।

ऋष ऊचुः।।
वाराणसीं किमर्थन्तां निकुम्भः शप्तवान् पुरा।
निकुम्भश्चापि धर्म्मात्मा सिद्धक्षेत्रं शशाप यः ।। ३०.२७ ।।

सूत उवाच।।
दिवोदासस्तु राजर्षिर्नगरीं प्राप्य पार्थिवः।
वसते स महातेजाः स्फीतायां वै नराधिपः ।। ३०.२८ ।।

एतस्मिन्नेव काले तु कृतदारो महेश्वरः।
देव्याः स प्रियकामस्तु वसानश्च सुरान्तिके ।। ३०.२९ ।।

देवाज्ञया पारिषदा विश्वरूपास्तपोधनाः।
पूर्वोक्तै रूपविशेषस्तोषयन्ति महेश्वरीम् ।। ३०.३० ।।

हृष्यति तैर्महादेवो मेना नैव तु हृष्यति।
जुगुप्सते सा नित्यञ्च देवं देवीं तथैव च ।। ३०.३१ ।।

मम पार्श्वे त्वनाचारस्तव भर्त्ता महेश्वरः।
दरिद्रः सर्व एवेह अक्लिष्टं लडतेऽनघे ।। ३०.३२ ।।

मात्रा तथोक्ता वचसा स्त्रीस्वबावान्नचाक्षमत्।
स्मितं कृत्वा तु वरदा हरपार्श्वमथागमत् ।। ३०.३३ ।।

विषण्णवदना देवी महादेवमभाषत।
नेह वत्स्याम्यहं देव नय मां स्वं निवेशनम् ।। ३०.३४ ।।

तथोक्तस्तु महादेवः सर्वांल्लोकानवेक्ष्य ह।
वासार्थं रोचयामास पृथिव्यां तु द्विजोत्तमाः।
वाराणसीं महातेजाः सिद्धक्षेत्रं महेश्वरः ।। ३०.३५ ।।

दिवो दासेन तां ज्ञात्वा निविष्टान्नगरीं भवः।
पार्श्वास्थं स समाहूय गणेशं क्षेमकं ब्रवीत् ।। ३०.३६ ।।

गणेश्वर पुरीङ्गत्वा सून्यां वाराणसीं कुरु।
मृदुना चाब्युपायेन अतिवीर्यः स पार्थिवः ।। ३०.३७ ।।

ततो गत्वा निकुम्भस्तु पुरीं वाराणसीं पुरा ।
स्वप्ने सन्दर्शयामास मङ्कनं नाम नापितम् ।। ३०.३८ ।।

श्रेयस्तेऽहं करिष्यामि स्थानं मे रोचयानघ।
मद्रूपां प्रतिमां कृत्वा नगर्य्यन्ते निवेशय ।। ३०.३९ ।।

तथा स्वप्ने यथा दृष्टं सर्वं कारितवान् द्विजाः।
नगरीद्वार्यनुज्ञाप्य राजानन्तु यथाविधि ।। ३०.४० ।।

पूजा तु महती चैव नित्यमेव प्रयुज्यते।
गन्धैर्धूपैश्च माल्यैश्च प्रेक्षणीयैस्तथैव च ।। ३०.४१ ।।

अन्नप्रदानयुक्तैश्च अत्यद्भुतमिवाभवत्।
एवं सम्पूज्यते तत्र नित्यमेव गणेश्वरः ।। ३०.४२ ।।

ततो वरसहस्राणि नगराणां प्रयच्छति ।
पुत्रान् हिरण्यमायूंषि सर्व्वकामांस्तथैव च ।। ३०.४३ ।।

राज्ञस्तु महिषी श्रेष्ठा सुयशा नाम विश्रुता।
पुत्रार्थमागता साध्वी राज्ञा देवी प्रचोदिता ।। ३०.४४ ।।

पूजान्तु विपुलां कृत्वा देवी पुत्रानयाचत।
पुनः पुनरथागम्य बहुशः पुत्रकारणात् ।। ३०.४५ ।।

न प्रयच्छति पुत्रांस्तु निकुम्भः कारणेन तु।
राजा यदि तत् क्रुध्येत ततः किञ्चित् प्रवर्त्तते ।। ३०.४६ ।।

अथ दीर्घेण कालेन क्रोधो राजानमाविशत्।
भूतं त्विदं महाद्वारि नगराणां प्रयच्छति ।। ३०.४७ ।।

प्रीत्या वरांश्च शतशो न किञ्चित्तु प्रवर्त्तते।
मामकैः पूज्यते नित्यं नगर्यां मम चैव तु ।। ३०.४८ ।।

तत्रार्च्चितश्च बहुशो देव्या मे तत्र कारणात् ।
न ददाति च पुत्रं मे कृतघ्नो बहुभोजनः ।। ३०.४९ ।।

अतो नार्हति पूजान्तु मत्सकाशात् कथञ्चन।
तस्मात्तु नाशयिष्यामि तस्य स्थानं दुरात्मनः ।। ३०.५० ।।

एवं तु सविनिश्चित्य दुरात्मा राज किल्बिषी।
स्थानं गणपतेस्तस्य नाशयामास दुर्मतिः ।। ३०.५१ ।।

भग्नमायतनं दृष्ट्वा राजानमगमत् प्रभुः।
यस्माद्दृतेऽपराधं मे त्वया स्थानं विना शितम् ।। ३०.५२ ।।

अकस्मात् तु पुरी शून्या भवित्री ते नराधिप।
ततस्तेन तु शापेन शून्या वाराणसी तथा ।। ३०.५३ ।।

शप्तां पुरीं निकुम्भस्तु महादेवमथानयत्।
शून्यां पुरीं महादेवो निर्म्ममे परमात्मना ।। ३०.५४ ।।

तुल्यां देवविभूत्यास्तु देव्याश्चैव महात्मनः।
रमते तत्र वै देवी रममाणे महेश्वरः ।। ३०.५५ ।।

न रतिं तत्र वै देवी लभते गृहविस्मयात्।
देव्याः क्रीडार्थमीशानो देवो वाक्यमथाब्रवीत् ।। ३०.५६ ।।

नाहं वेश्म विमोक्ष्यामि अविमुक्तं हि मे गृहम्।
प्रहस्यैनामथोवाच अविमुक्तं हि मे गृहम् ।। ३०.५७ ।।

नाहं देवि गमिष्यामि गच्छस्वेह रमाम्यहम्।
तस्मात्तदविमुक्तं हि प्रोक्तं देवेन वै स्वयम् ।। ३०.५८ ।।

एवं वाराणसी शप्ता अविमुक्तं च कीर्त्तितम्।
यस्मिन् वसति वै देवः सर्वदेवनमस्कृतः।
युगेषु त्रिषु धर्मात्मा सह देव्या महेश्वरः ।। ३०.५९ ।।

अन्तर्द्धानं कलौ याति तत्पुरन्तु महात्मनः।
अन्तर्हिते पुरे तस्मिन् पुरी सा वसते पुनः ।। ३०.६० ।।

एवं वाराणसी शप्ता निवेशं पुनरागता।
भद्रश्रेण्यस्य पुत्राणां शतमुत्तमधन्विनाम् ।। ३०.६१ ।।

हत्वा निवेशयामास दिवोदासो नराधिपः।
भद्रश्रेण्यस्य राज्यन्तु हृतन्तेन बलीयसा ।। ३०.६२ ।।

भद्रश्रेण्यस्य पुत्रस्तु दुर्दमो नाम नामतः।
दिवोदासेन बालेति घृणया स विवर्जितः ।। ३०.६३ ।।

दिवोदासादृषद्वत्यां वीरो जज्ञे प्रतर्द्दनः।
तेन पुत्रेण बालेन प्रहृतं तस्य वै पुनः ।। ३०.६४ ।।

वैरस्यान्तं महाराज्ञा तदा तेन विधत्सता।
प्रतर्द्दनस्य पुत्रौ द्वौ वत्सो गर्गश्च विश्रुतः ।। ३०.६५ ।।

वत्सपुत्रो ह्यलर्कस्तु सन्नतिस्तस्य चात्मजः ।
अलर्कं प्रति राजर्षिर्गीतश्लोकौ पुरातनौ ।। ३०.६६ ।।

षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च।
युवा रूपेण सम्पन्नो ह्यलर्कः काशिसत्तमः ।। ३०.६७ ।।

लोपामुद्रा प्रसादेन परमायुरवाप्तवान् ।। ३०.६८ ।।

शापस्यान्ते महाबाहुर्हत्वा क्षेमकराक्षसम्।
रम्यामावासयामास पुरीं वाराणसीं नृपः ।। ३०.६९ ।।

सन्नतेरपि दायादः सुनीथो नाम धार्मिकः।
सुनीथस्य तु दायादः सुकेतुर्नाम धार्म्मिकः ।। ३०.७० ।।

सुकेतुतनयश्चापि धर्मकेतुरिति श्रुतिः।
धर्मकेतोस्तु दायादः सत्यकेतुर्महारथः ।। ३०.७१ ।।

सत्यकेतुसुतश्चापि विभुर्नाम प्रजेश्वरः।
सुविभुस्तु विभोः पुत्रः सुकुमारस्ततः स्मृतः ।। ३०.७२ ।।

सुकुमारस्य पुत्रस्तु धृष्टकेतुः स धार्म्मिकः।
धुष्टकेतोस्तु दायादो वेणुहोत्रः प्रजेश्वरः ।। ३०.७३ ।।

वेणुहोत्रसुतश्चापि गार्ग्यो वै नाम विश्रुतः।
गार्ग्यस्य गर्गभूमिस्तु वात्स्यो वत्सस्य धीमतः ।। ३०.७४ ।।

ब्राह्मणाः क्षत्रियाश्चैव तयोः पुत्राः सुधार्म्मिकाः।
विक्रान्ता बलवन्तश्च सिंहतुल्यपराक्रमाः ।। ३०.७५ ।।

इत्येते काश्यपाः प्रोक्ता रजेरपि निबोधत।
रजेः पुत्रशतान्यासन् पञ्च वीर्यवतो भुवि।
राजेयमिति विख्यातं क्षत्रमिन्द्रभयावहम् ।। ३०.७६ ।।

तदा दैवासुरे युद्धे समुत्पन्ने सुदारुणे।
देवाश्चैवासुराश्चैव पितामहमथाब्रुवन् ।। ३०.७७ ।।

आवयोर्भगवान् युद्धे विजेता को भविष्यति।
ब्रूहि नः सर्व्वलोकेश श्रोतुमिच्छामहे वयम् ।। ३०.७८ ।।

ब्रह्मोवाच।।
येषामर्थाय संग्रामे रजिरात्तायुधः प्रभुः।
योत्स्यते ते विजेष्यन्ति त्रील्लोँकान्नात्र संशयः ।। ३०.७९ ।।

रजिर्यतस्ततो लक्ष्मीर्यतो लक्ष्मीस्ततो धृतिः।

यतो धृतिस्ततो धर्मो यतो धर्मस्ततो जयः ।। ३०.८० ।।

तद्देवा दानवाः सर्वे ततः श्रुत्वा रजेर्जयम्।
अभ्ययुर्जयमिच्छन्तः स्तुवन्तो राजसत्तमम् ।। ३०.८१ ।।

ते हृष्टमनसः शर्वे राजानं देवदानवाः।
ऊचुरस्मज्जयाय त्वं गृहाण वरकार्मुकम् ।। ३०.८२ ।।

रजिरुवाच।।
अहञ्जेष्यामि नो युद्धे देवान् शक्रपुरोगमान्।
इन्द्रो भवामि धर्मात्मा ततो योत्स्यामि संयुगे ।। ३०.८३ ।।

दानवा ऊचुः।।
अस्माकमिन्द्रः प्रह्लादस्तस्यार्थे विजयामहे।
अस्मिस्तु समये राजंस्तिष्ठेथादेव नोऽदितेः ।। ३०.८४ ।।

स तथेति ब्रुवन्नेव देवैरप्यभिचोदितः।
भविष्यसीन्द्रो जित्वेति देवैरपि निमन्त्रितः ।। ३०.८५ ।।

जघान दानवान् सर्व्वान् समक्षं वज्रपाणिनः।
स विप्रनष्टां देवानां परमश्रीः श्रियं वशी ।। ३०.८६ ।।

निहत्य दानवान् सर्व्वान् व्याजहार रजिः प्रभुः।
तं तथा तु रझिं तत्र देवैस्सह शतक्रतुः ।। ३०.८७ ।।

रजिपुत्रोऽहमित्युक्त्वा पुनरेवाब्रवीद्वचः।
ईन्द्रोऽसि राजन् देवानां सर्वेषान्नात्र संशयः।
यस्याहमिन्द्रपुत्रस्ते ख्यातिं यास्यामि शत्रुहन् ।। ३०.८८ ।।

स तु शक्रवचः श्रुत्वा वञ्चितस्तेन मायया।
तथेत्येवाब्रवीद्राजा प्रीयमाणः शतक्रतुम् ।। ३०.८९ ।।

तस्मिंस्तु देवसदृशे दिवं प्राप्ते महीपतौ।
दायाद्यमिन्द्रादाजह्रुराचारं तनया रजेः ।। ३०.९० ।।

तानि पुत्रशतान्यस्य तच्च स्थानं शचीपतेः।
समक्रामन्त बहुधा स्वर्गलोकं त्रिविष्टपम् ।। ३०.९१ ।।

ततः काले बहुतिथे सतीते महाबलः।
हृतराज्योऽब्रवीच्छक्रो हृतभागो बृहस्पतिम् ।। ३०.९२ ।।

बदरीफलमात्रं वै पुरोडाशं विधत्स्व मे।

ब्रह्मर्षे येन तिष्ठेयं तेजसाप्यायितस्ततः ।। ३०.९३ ।।

ब्रह्मन् कृशोऽयं विमना हृतराज्यो हृताशनः।
हतौजा दुर्बलो मूढो रजिपुत्रैः प्रसीद मे ।। ३०.९४ ।।

बृहस्पतिरुवाच।।
यद्येवं चोदितः शक्र त्वया स्यां पूर्व्वमेव हि।
नाभविष्यत् त्वत्प्रियार्थं नाकर्त्तव्यं ममानघ ।। ३०.९५ ।।

प्रयतिष्यामि देवेन्द्र तद्धितार्थं महाद्युते।
यथा भागञ्च राज्यञ्च अचिरात् प्रतिपत्स्यसे ।। ३०.९६ ।।

तथा शक्र गमिष्यामि माभूत्ते विक्लवं मनः।
ततः कर्म्म चकारास्य तेजःसंवर्द्धनं महत् ।। ३०.९७ ।।

तेषाञ्च बुद्धिसंमोहमकरोद्बुद्धिसत्तमः।
ते यदा ससुता मूढा रागोत्पन्न विधर्म्मिणः ।। ३०.९८ ।।

ब्रह्मद्विषश्च संवृत्ता हतवीर्य्यपराक्रमाः।
ततो लेभे सुरैश्वर्यमैन्द्रस्थानं तथोत्तमम् ।। ३०.९९ ।।

हत्वा रजिसुतान् सर्वान्कामक्रोधपरायणान्।
य इदं पावनं स्थानं प्रतिष्ठानं शतक्रतोः।
श्रृणुयाद्वा रजेर्वापि न स दौरात्म्यमाप्नुयात् ।। ३०.१०० ।।

इति श्रीमहापुराणे वायुप्रोक्ते रजियुद्धं नाम त्रिंशोऽध्यायः ।। ३० ।। *

।।ऋषयः ऊचुः।।
मरुतेन कथं कन्या राज्ञे दत्ता महात्मना।
किंवीर्याश्च महात्मानो जाता मरुतकन्यकाः ।। ३१.१ ।।

।।सूत उवाच।।
आहवन् तं मरुत्सोममन्नकामः प्रजेश्वरम्।
मासि मासि महातेजाः षष्टिसंवत्सरान्नृपः ।। ३१.२ ।।

तेन ते मरुतस्तस्य मरुत्सोमेन तोषिताः।
अक्षय्यान्नं ददुः प्रीताः सर्वकामपरिच्छदम् ।। ३१.३ ।।

अन्नं तस्य सकृत्पक्वमहोरात्रे न क्षीयते।
कोटिशो दीयमानं च सूर्य्यस्योदयनादपि ।। ३१.४ ।।

मित्राज्योतिस्तु कन्यायां मरुतस्य च धीमतः।
तस्माज्जाता महासत्त्वा धर्मज्ञा मोक्षदर्शिनः ।। ३१.५ ।।

संन्यस्य गृहधर्माणि वैराग्यं समुपस्थिताः।
यतिधर्ममवाप्येह ब्रह्मभूयाय ते गताः ।। ३१.६ ।।

अनपायस्ततो जातस्तदा धर्मप्रदत्तवान्।
क्षत्रधर्मस्ततो जातः प्रतिपक्षो महातपाः ।। ३१.७ ।।

प्रतिपक्षसुतश्चापि सञ्जयो नाम विश्रुतः।
सञ्जयस्य जयः पुत्रो विजयस्तस्य जग्मिवान् ।। ३१.८ ।।

विजयस्य जयः पुत्रस्तस्य हर्यन्द्वतः स्मृतः ।
हर्यन्दुतस्ततो राजा सहदेवः प्रतापवान् ।। ३१.९ ।।

सहदेवस्य धर्मात्मा अदीन इति विश्रुतः।
अदीनस्य जयत्सेनस्तस्य पुत्रोऽथ संकृतिः ।। ३१.१० ।।

संकृतेरपि धर्मात्मा कृतधर्मा महायशाः।
इत्येते क्षत्र धर्माणो नहुषस्य निबोधत ।। ३१.११ ।।

नहुषस्य तु दायादाः षडिन्द्रोपमतेजसः।
उत्पन्नाः पितृकन्यायां विरजायां महौजसः ।। ३१.१२ ।।

यतिर्ययातिः संयातिरायातिः पञ्च तुद्वयः।
यतिर्ज्येष्ठस्तु तेषां वै ययातिस्तु ततोऽवरः ।। ३१.१३ ।।

काकुत्स्थकन्यां गां नाम लेभे पत्नीं यतिस्तदा।

संयातिर्मो क्षमास्थाय ब्रह्मभूतोऽभवन्मुनिः ।। ३१.१४ ।।

तेषां मध्ये तु पञ्चानां ययातिः पृथिवीपतिः।
देवयानिमुशनसः सुतां भार्यामवाप ह ।। ३१.१५ ।।

शर्मिष्ठा मासुरीं चैव तनयां वृषपर्वणः।
यदुं च तुर्वसुं चैव देवयानिर्व्यजायत ।। ३१.१६ ।।

द्रुह्युञ्चानुञ्च पूरुञ्च शर्मिष्ठा वार्षपर्वणी ।
अजीजनन्महावीर्यान् सुतान्देवसुतोपमान् ।। ३१.१७ ।।

रथन्तस्मै ददौ रुद्रः प्रीतः परमभास्वरम्।
असङ्गं काञ्चनं दिव्यमक्षयौ च महेषुधी ।। ३१.१८ ।।

युक्तं मनो जवैरश्वैर्येन कन्यां समुद्वहत्।
स तेन रथमुख्येन जिगाय च ततो महीम् ।। ३१.१९ ।।

ययातिर्युधि दुर्द्धर्षो देवदानवमानवैः ।
पौरवाणां नृपाणाञ्च सर्वेषां सोऽभवद्रथः ।। ३१.२० ।।

योवत्सुदेशप्रभवः कौरवो जनमेजयः।
कुरोः पुत्रस्य राज्ञस्तु राज्ञः पारिक्षितस्य ह।
जगाम स रथो नाशं शापाद्गार्ग्यस्य धीमतः ।। ३१.२१ ।।

गार्ग्यस्य हि सुतं बालः स राजा जनमेजयः।
दुर्बुद्धिर्हिंसयामास लोहगन्धं नराधिपम् ।। ३१.२२ ।।

स लोहगन्धो राजर्षिः परिधावन्नितस्ततः।
पौरजानपदैस्त्यक्तो न लेभे शर्म कर्हिचित् ।। ३१.२३ ।।

ततः स दुःखसन्तप्तो नालभत्संविदं क्वचित्।
शशाप हेतुकमृषिं शरण्यं व्यथितस्तदा ।। ३१.२४ ।।

ईन्द्रोतो नाम विख्यातो योऽसौ मुनिरुदारधीः।
योजयामास चेन्द्रोतः शौनको जनमेजयम्।
अश्वमेधेन राजानं पावनार्थं द्विजोत्तमः ।। ३१.२५ ।।

स लोहगन्धो व्यनशत्तस्यावसथमेत्य ह।
स च दिव्यो रथस्तस्माद्वसोश्चेदिपतेस्तथा ।। ३१.२६ ।।

ततः शक्रेण तुष्टेन लेभे तस्माद्बृहद्रथः।
ततो हत्वा जरासन्धं भीमस्तं रथमुत्तमम्।

प्रददौ वासुदेवाय प्रीत्या कौरवनन्दनः ।। ३१.२७ ।।

स जरां प्राप्य राजर्षिर्ययातिर्नहुषात्मजः।
पुत्रं ज्येष्ठं वरिष्ठञ्च यदुमित्यब्रवीद्वचः ।।३१.२८ ।।

जरावली च मां तात पलितानि च पर्यगुः ।
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने ।। ३१.२९ ।।

त्वं यदो प्रतिपद्यस्व पाप्मानं जरया सह।
जरां मे प्रतिगृह्णीष्व तं यदुः प्रत्युवाच ह ।। ३१.३० ।।

अनिर्दिष्टा मया भिक्षा ब्राह्मणस्य प्रतिश्रुता ।
सा च व्यायामसाध्या वै न ग्रहीष्यामि ते जराम् ।। ३१.३१ ।।

जराया बहवो दोषा पानभोजनकारिणः।
तस्माज्जरान्न ते राजन् ग्रहीतुमहमुत्सहे ।। ३१.३२ ।।

सितश्मश्रुधरो दीनो जरया शिथिलीकृतः।
बली सन्नतगात्रश्च दुर्द्दशो दुर्बलाकृतिः ।। ३१.३३ ।।

अशक्तः कार्यकरणे परिभूतस्तु यौवने।
महोपभीतिभिश्चैव तां जरान्नाभिकामये ।। ३१.३४ ।।

सन्ति ते बहवः पुत्रा मत्तः प्रियतरा नृप।
प्रतिगृह्णन्तु धर्मज्ञ पुत्रमन्यं वृणीष्व वै ।। ३१.३५ ।।

स एवमुक्तो यदुना तीव्रकोपसमन्वितः।
उवाच वदतां श्रेष्छो ज्येष्ठं तं गर्हयन् सुतम् ।। ३१.३६ ।।

आश्रमः कश्च वान्योऽस्ति को वा धर्मविधिस्तव।
मामनादृत्य दुर्बुद्धे यदात्थ नवदेशिक ।। ३१.३७ ।।

एवमुक्त्वा यदुं राजा शशापैनं स मन्युमान् ।
यस्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।। ३१.३८ ।।

तस्मान्न राज्यभाग् मूढ प्रजा ते वै भविष्यति।
तुर्वसो प्रतिपद्यस्व पाप्मानं जरया सह ।। ३१.३९ ।।

तुर्वसुरुवाच।।
न कामये जरां तात सामभोगप्रणाशिनीम्।
जराया बहवो दोषाः पानभोजनकारिणः।
तस्माज्जरां न ते राजन् ग्रहीतुमहमुत्सहे ।। ३१.४० ।।

ययातिरुवाच।।
यस्त्वं मे हृदयाज्जातो वयः स्वन्न प्रयच्छसि।
तस्मात् प्रजा समुच्छेदं तुर्वसो तव यास्यति ।। ३१.४१ ।।

असङ्कीर्णा च धर्मेण प्रतिलोमवरेषु च।
पिशितादिषु चान्येषु मूढ राजा भविष्यसि ।। ३१.४२ ।।

गुरु दारप्रसक्तेषु तिर्यग्योनिगतेषु वा।
पशुधर्मेषु म्लेच्छेषु भविष्यति न संशयः ।। ३१.४३ ।।

सूत उवाच।
एवन्तु तुर्वसुं शप्त्वा ययातिः सुतमात्मनः।
शर्मिष्ठायाः सुतं द्रुह्युमिदं वचनमब्रवीत् ।। ३१.४४ ।।

द्रुह्यो त्वं प्रतिपद्यस्व वर्णरूपविनाशिनीम्।
जरां वर्षसहस्रं वै यौवनं स्वन्ददस्व मे ।। ३१.४५ ।।

पूर्णे वर्षसहस्रे ते प्रतिदास्यामि यौवनम्।
स्वञ्चादास्यामि बूयोऽहं पाप्मानं जरया सह ।। ३१.४६ ।।

द्रुह्युरुवाच।।
न गजं न रथं नाश्वं जीर्णो भुङ्क्ते न च स्त्रियम् ।।

न सङ्गश्चास्य भवति न जरां तेन कामये ।। ३१.४७ ।।

ययातिरुवाच।।
यस्त्वं मे हृदयाज्जातो वयः स्वन्न प्रयच्छसि।
तस्माद् द्रुह्यो प्रियः कामो न ते सम्पत्स्यते क्वचित् ।। ३१.४८ ।।

नौप्लवोत्तरसञ्चारस्तत्र नित्यं भविष्यति।
अराजभ्राजवंशस्त्वं तत्र नित्यं भविष्यसि ।। ३१.४९ ।।

अनो त्वं प्रतिपद्यस्व पाप्मानं जरया सह।
एवं वर्षसहस्रन्तु चरेयं यौवनेन ते ।। ३१.५० ।।

अनुरुवाच।।
जीर्णः शिशुवरं दत्ते जरया ह्यशुचिः सदा।।
न जुहोति स कालेऽग्निं तां जरान्नाबिकामये ।। ३१.५१ ।।

ययातिरुवाच।।
यस्त्वं मे हृदयाज्जातो वयः स्वन्न प्रयच्छसि।

जरादोषस्त्वयोक्तोऽयं तस्मात्ते प्रतिपत्स्यते ।। ३१.५२ ।।

प्रजा च यौवनं प्राप्ता विनशिष्यत्यतस्तव।
अग्निप्रस्कन्दनपरस्त्वं चाप्येव भविष्यसि ।। ३१.५३ ।।

पूरो त्वं प्रतिपद्यस्व पाप्मानञ्जरया सह।
जरावली च मान्तात पलितानि च पर्यगुः ।। ३१.५४ ।।

काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने।
कञ्चित्कालञ्जरेयं वै विषयान् वयसा तव ।। ३१.५५ ।।

पूर्णे वर्षसहस्रे ते प्रतिदास्यामि यौवनम्।
स्वञ्चैव प्रतिपत्स्यामि पाप्मानञ्जरया सह ।। ३१.५६ ।।

सूत उवाच।।
एवमुक्तः प्रत्युवाच पुत्रः पितरमञ्जसा।
यथानुमन्यसे तात करिष्यामि तथैव च ।। ३१.५७ ।।

प्रतिपत्स्यामि ते राजन् पाप्मानं जरया सह।
गृहाण यौवनं मत्तश्चर कामान् यथेप्सितान् ।। ३१.५८ ।।

जरयाहं प्रतिच्छन्नो वयोरूपधरस्तव।
यौवनं भवते दत्त्वा चरिष्यामि यथार्तवत् ।। ३१.५९ ।।

ययातिरुवाच।।
पूरो प्रीतोऽस्मि भद्रन्ते प्रीतश्चेदं ददामि ते।
सर्वकामसमृद्धा ते प्रजा राज्ये भविष्यति ।। ३१.६० ।।

सूत उवाच।।
पूरोरनुमतो राजा ययातिः स्वां जरान्ततः।
संक्रामयामास तदा प्रसादाद्भार्गवस्य तु ।। ३१.६१ ।।

यौवनेनाथ वयसा ययातिरनहुषात्मजः ।
प्रीतियुक्तो नरश्रेष्ठश्चचार विषयान् स्वकान् ।। ३१.६२ ।।

यथाकामं यथोत्साहं यथाकालं यथासुखम्।
धर्म्माविरोधाद्राजेन्द्रो यथार्हति स एव हि ।। ३१.६३ ।।

देवानतर्पयद्यज्ञैः पितॄञ्छ्राद्धैस्तथैव च।
दीनांश्चानुग्रहैरिष्टैः कामैश्च द्विजसत्तमान् ।। ३१.६४ ।।

अतिथीनन्नपानैश्च वैश्यांश्च परिपालनैः।

आनृशंस्येन शूद्रांश्च दस्यून् संनिग्रहेण च ।। ३१.६५ ।।

धर्म्मेण च प्रजाः सर्व्वा यथावदनुरञ्जयन्।
ययातिः पालयामास साक्षादिन्द्र इवापरः ।। ३१.६६ ।।

स राजा सिंहविक्रान्तो युवा विषयगोचरः।
अविरोधेन धर्मस्य चचार सुखमुत्तमम् ।। ३१.६७ ।।

स मार्गमाणः कामानामन्तर्दोषनिदर्शनात्।
विश्वासहेतो रेमे वै वैभ्राजे नन्दने वने ।। ३१.६८ ।।

अपश्यत्स यदा तां वै वर्द्धमानां नृपस्तदा।
गत्वा पूरोः सकाशं वै स्वां जरा प्रत्यपद्यत ।। ३१.६९ ।।

स सम्प्राप्य तु तान् कामांस्तृप्तः खिन्नश्च पार्थिवः।
कालं वर्षसहस्रं वै सस्मार मनुजाधिपः। ।। ३१.७० ।।

परिसङ्ख्याय कालञ्च कलाकाष्ठास्तथैव च।
पूर्णं मत्त्वा ततः कालं पूरुं पुत्रमुवाच ह ।। ३१.७१ ।।

यथासुखं यथोत्साहं यथाकालमरिंदम।
सेविता विषयाः पुत्र यौवनेन मया तव ।। ३१.७२ ।।

पूरो प्रीतोऽस्मि भद्रं ते गृहाण त्वं स्वयौवनम्।
राष्ट्रञ्च नृपं पूरुं पुत्रं कनीयसम्।
ब्राह्मणप्रमुखा वर्णा इदं वचनमब्रुवन् ।। ३१.७३ ।।

प्रतिपेदे जरां राजा ययातिर्नहुषात्मजः।
यौवनं प्रतिपेदे च पूरुः स्वं पुनरात्मनः ।। ३१.७४ ।।

अभिषेक्तुकामञ्च नृपं पूरुं पुत्रं कनीयसम्।
ब्राह्मणप्रमुखा वर्णा इदं वचनमब्रुवन् ।। ३१.७५ ।।

कथं शुक्रस्य नप्तारं देवयान्याः सुतं प्रभो।
श्रेष्ठं यदुमतिक्रम्य पूरो राज्यं प्रदास्यसि ।। ३१.७६ ।।

यदुर्ज्येष्ठस्तव सुतो जातस्तमनु तुर्वसुः।
शर्मिष्ठायाः सुतो द्रुह्युस्तनोऽनुः पूरुरेव च ।। ३१.७७ ।।

कथं ज्येष्ठानतिक्रम्य कनीयान् राज्यमर्हति ।
अतः सम्बोधयामि त्वां धर्म्मं समनुपालय ।। ३१.७८ ।।

ययातिरुवाच।।

ब्राह्मणप्रमुखा वर्णाः सर्वे श्रृण्वन्तु मे वचः।
ज्येष्टं प्रति यथा राष्ट्रं न देयं मे कथञ्चन ।। ३१.७९ ।।

माता पित्रोर्वचनकृत्स हि पुत्रः प्रशस्यते ।
मम ज्येष्ठेन यदुना नियोगो नानुपालितः ।। ३१.८० ।।

प्रतिकूलं पितुर्यश्च न स पुत्रः सतां मतः।
स पुत्रः पुत्रवद् यश्च वर्त्तते पितृमातृषु ।। ३१.८१ ।।

यदुनाहमवज्ञातस्तथा तुर्वसुनापि च।
द्रुह्युणा चानुना चैवमप्यवज्ञा कृता भृशम् ।। ३१.८२ ।।

पूरुणा तु कृतं वाक्यं मानितश्च विशेषतः।
कनीयान् मम दायादो जरा येन धृता मम।
सर्वकामः सर्वकृतः पूरुणा पुत्रकारिणा ।। ३१.८३ ।।

शुक्रेण च वरो दत्तः काव्ये नोशनसा स्वयम्।
पुत्रो यस्त्वानुवर्त्तेत स राजा ते महामते ।। ३१.८४ ।।

भवतोऽनुमतोप्येवं पूरु राष्ट्रेऽभिषिच्यताम् ।
यःपुत्रो गुणसम्पन्नो मातापित्रोर्हितः सदा।
सर्वमर्हति कल्याणं कनीयानपि स प्रभुः ।। ३१.८५ ।।

अर्हः पूरुरिदं राष्ट्रं यः प्रियः प्रियकृत्तव।
वरदानेन शुक्रस्य न शक्यं वक्तुमुत्तरम् ।। ३१.८६ ।।

पौरजानपदैस्तुष्टैरित्युक्तो नाहुषस्तदा।
अभिषिच्य ततः पूरुं स्वराष्ट्रे सुतमात्मनः ।। ३१.८७ ।।

दिशि दक्षिणपूर्वस्यां तुर्वसुं तु न्यवेशयत्।
दक्षिणापरतो राजा यदुं श्रेष्ठं न्यवेशयत् ।। ३१.८८ ।।

प्रतीच्यामुत्तरस्याञ्च द्रुह्युञ्चानुञ्च तावुभौ।
सप्तद्वीपां ययातिस्तु जित्त्वा पृथ्वीं ससागराम्।
व्यभजत् पञ्चधा राजा पुत्रेभ्यो नाहुषस्तदा ।। ३१.८९ ।।

तैरियं पृथिवी सर्वा सप्तद्वीपा सपत्तना।
यथाप्रदेशं धर्मज्ञैर्धर्म्मेण प्रतिपाल्यते ।। ३१.९० ।।

एवं विसृज्य पृथिवीं पुत्रेभ्यो नाहुषस्तदा।
पुत्रसंक्रामितश्रीस्तु प्रीतिमानभवन्नृपः ।। ३१.९१ ।।

धनुर्न्यस्य पृषत्कांश्च राज्यञ्चैव सुतेषु तु।
प्रीतिमानभवद्राजा भारमावेश्य बन्धुषु ।। ३१.९२ ।।

अत्र गाथा महाराज्ञा पुरा गीता ययातिना।
योऽभिप्रेत्याहरन् कामान् कूर्मोङ्गानीव सर्वशः ।। ३१.९३ ।।

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते ।। ३१.९४ ।।

यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति पश्यन्न मुह्यति ।। ३१.९५ ।।

यदा तु कुरुते भावं सर्व्वभूतेषु पावकम्।
कर्म्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ।। ३१.९६ ।।

यदा परान्न बिभेति यदा त्वस्मान्न बिभ्यति।
यदा नेच्छति न द्वेष्टि ब्रह्म सम्पद्यते तदा ।। ३१.९७ ।।

या दुस्त्यजा दुर्म्मतिभिर्या न जीर्यति जीर्य्यतः।
दोषाप्राणान्तिको रागस्तां तृष्णान्त्यजतः सुखम् ।। ३१.९८ ।।

जीर्य्यन्ति जीर्यतः कोशा दन्ता जीर्यन्ति जर्यितः।
जीविताशा धनाशा च जीर्य्यतोपि न जीर्यति ।। ३१.९९ ।।

यच्चाकामसुखं लोके यच्च दिव्यं महत् सुखम्।
तृष्णास्य च सुखस्यैव कलां नार्हति षोडशीम् ।। ३१.१०० ।।

एवमुक्त्वा स राजर्षिः सदारः प्रस्थितो वनम्।
भृगुतुङ्गे तपस्तप्त्वा तत्रैव च महायशाः।
पालयित्वा व्रतशतं तत्रैव स्वर्गमाप्नुयात् ।। ३१.१०१ ।।

तस्य वंशास्तु पञ्चैते पुण्या देवर्षिसत्कृताः।
यैर्व्याप्ता पृथिवी कृत्स्ना सूर्यस्येव गभस्तिभिः ।। ३१.१०२ ।।

धन्यः प्रजावानायुष्मान् कीर्तिमांश्च भवेन्नरः।
ययातेश्चरितं सर्वं पठञ्छृण्वन् द्विजोत्तमः ।। ३१.१०३ ।।

इति श्रीमहापुराणे वायुप्रोक्ते चन्द्र वंशकीर्त्तनं नामैकत्रिंशोऽद्यायः ।। ३१ ।।*

।।सूर्य उवाच।।
यदोर्वंशं प्रवक्ष्यामि श्रेष्ठस्योत्तमतेझसः।
विस्तरेणानुपूर्व्येण गदतो मे निबोधत ।। ३२.१ ।।

यदोः पुत्रा बभूवुर्हि पञ्च देवसुतोपमाः।
सहस्रजिदथ श्रेष्ठः क्रोष्टुर्नीलो जितो लघुः ।। ३२.२ ।।

सहस्रजित्सुतः श्रीमाञ्छतजिन्नाम पार्थिवः।
सतजित्सुता विख्या तास्त्रयः परमधार्मिकाः ।। ३२.३ ।।

हैहयश्च हयश्चैव राजा वेणुहयश्च यः।
हैहयस्य तु दायादो धर्म्मतत्त्व इति श्रुतिः ।। ३२.४ ।।

धर्म्मतन्त्रस्तु कीर्त्तिस्तु संज्ञेयस्तस्य चात्मजः।
संज्ञेयस्य तु दायादो महिष्मान्नाम पार्थिवः ।। ३२.५ ।।

आसीन्महिष्मतः पुत्रो भद्रश्रेण्यः प्रतापवान्।
वाराणस्यधिपो राजा कथितः पूर्व एव हि ।। ३२.६ ।।

भद्रश्रेण्यस्य दायादो दुर्मदो नाम पार्थिवः।
दुर्मदस्य ततो धीमान् कन्को नाम विश्रुतः ।। ३२.७ ।।

कनकस्य तु दायादाश्चत्वारो लोकविश्रुताः।
कृत वीर्यः कार्तवीर्यः कृतवर्मा तथैव च ।। ३२.८ ।।

कृतो जातश्चतुर्थोऽभूत्कृतविर्यात्ततोऽर्जुनः।
जज्ञे बाहुसहस्रेण सप्तद्वीपेश्वरो नृपः ।। ३२.९ ।।

स हि वर्षायुतं तप्त्वा तपः परमदुश्चरम्।
दत्तमाराधयामास कार्त्तवीर्योऽत्रिसम्भवम् ।। ३२.१० ।।

तस्मै दत्तो वरान् प्रादाच्चतुरो भूरितेजसः।
पूर्व्वं बाहुसहस्रन्तु स वव्रे प्रथमं वरम् ।। ३२.११ ।।

अधर्म्मे दीयमानस्य सद्भिस्तस्मान्निवारणम्।
धर्म्मेण पृथिवीञ्जित्वा धर्म्मेणैवानुपालनम् ।। ३२.१२ ।।

संग्रामांस्तु बहून् जित्त्वा हत्वा चारीन् सहस्रशः।
संग्रामे युद्धयमानस्य वधः स्यादधिकाद्रणे ।। ३२.१३ ।।

तेनेयं पृथिवी कृत्स्ना सप्तद्वीपा सपत्तना ।
सप्तोदधिपरिक्षिप्ता क्षात्रेण विधिना जनाः ।। ३२.१४ ।।

तस्य बाहुसहस्रन्तु युद्ध्यतः किल धीमतः।
यौद्धो ध्वजो रथश्चैव प्रादुर्भवति मायया ।। ३२.१५ ।।

दशयज्ञसहस्राणि तेषु द्वीपेषु सप्तसु।
निरर्गलाः स्म निर्वृत्ताः श्रूयन्ते तस्य धीमतः ।। ३२.१६ ।।

सर्वे यज्ञा महाबाहोस्तस्यासन् भूरितेजसः।
सर्वे काञ्चनवेदीकाः सर्वे यूपैश्च काञ्चनैः ।। ३२.१७ ।।

सर्वे देवैर्म्महाभागैर्विमानस्थैरलंकृताः।
गन्धर्व्वैरप्सरोभिश्च नित्यमेवोपशोभिताः ।। ३२.१८ ।।

तस्य राज्ञो जगौ गाथां गन्धर्वो नारदस्तथा।
चरितं तस्य राजर्षेर्महिमानं निरीक्ष्य च ।। ३२.१९ ।।

न नूनं कार्त्तवीर्यस्य गतिं यास्यन्ति मानवाः।
यज्ञैर्दानैस्तपोभिश्च विक्रमेण श्रुतेन च ।। ३२.२० ।।

द्वीपेषु सप्तसु स वै खड्गी वरशरासनी।
रथी राजाप्यनुचरोऽन्योऽगाच्चैवानुदृश्यते ।। ३२.२१ ।।

अनष्टद्रव्यश्चैवासीन्न शोको न च विभ्रमः।
प्रभावेण महाराज्ञः प्रजा धर्म्मेण रक्षतः ।। ३२.२२ ।।

पञ्चाशीतिसहस्राणि वर्षाणां स नराधिपः।
सप्त सप्त वारान् सम्राट् चक्रवर्त्ती बभूव ह ।। ३२.२३ ।।

स एव पशुपालोऽभूत् क्षेत्रपालस्तथैव च।
स एव वृष्ट्या पर्जन्यो योगित्वादर्ज्जुनोऽभवत् ।। ३२.२४ ।।

स वै बाहुसहस्रेण ज्याघातकठिनेन च ।
भाति रश्मिसहस्रेण शारदेनेव भास्करः ।। ३२.२५ ।।

स हि नागसहस्रेण माहिष्मत्यां नराधिपः।
कर्कोटकसभाञ्जित्वा पुरीं तत्र न्यवेशयत् ।। ३२.२६ ।।

स वै वेगे समुद्रस्य प्रावृट्कालाम्बुजेक्षणः ।
क्रीडन्निव सुखोद्विग्नः प्रावृट्कालञ्चकार ह ।। ३२.२७ ।।

लुलिता क्रीडता तेन हेमस्रग्दाममालिनी।
ऊर्म्मिभ्रूकुटिसन्नादा शङ्किताभ्येति नर्मदा ।। ३२.२८ ।।

पुरा स तामनुसरन्नवगाढो महार्णवम्।
चकारोद्धृत्त्य वेलान्तं स कालः प्रावृणोद्वनम् ।। ३२.२९ ।।

तस्य बाहु सहस्रेण क्षोभ्यमाणे महादधौ।
भवन्ति लीना निश्चेष्टाः पातालस्था महासुराः ।। ३२.३० ।।

चूर्णीकृतमहावीचिलीनमीनमहाविषाः।
पतिता विद्धफेनौघमावर्त्तक्षिप्तदुस्सहम् ।। ३२.३१ ।।

चकार क्षोभयन्राजा दोःसहस्रेण सागरम्।
देवासुरपरिक्षिप्तं क्षीरोदमिव सागरम् ।। ३२.३२ ।।

मन्दरक्षोभणकृता ह्यमृतोदकशङ्कि ताः।
सहसोत्पादिता भीता भीमं दृष्ट्वा नृपोत्तमम् ।। ३२.३३ ।।

नतनिश्चलमूर्द्धानो बभूवुश्च महोरगाः।
सायाह्ने कदलीषण्डा निर्वातस्तिमिता इव ।। ३२.३४ ।।

स वै बद्ध्वा धनुर्यान उत्सिक्तः पञ्चभिः शतैः।
लङ्कायां मोहयित्वा तु सबलं रावणं बलात्।
निर्जित्य बद्ध्वा चानीय माहिष्मत्यां बबन्ध तम् ।। ३२.३५ ।।

ततो गत्वा पुलस्त्यस्तु अर्जुनं च प्रसादयत्।
मुमोच राजा पौलस्त्यं पुलस्त्येनानुपालितम् ।। ३२.३६ ।।

तस्य बाहुसहस्रस्य बभूव ज्यातलस्वनः।
युगान्तेऽम्बुदवृक्षस्य स्फुटितस्याशनेरिव ।। ३२.३७ ।।

अहो मृधे महावीर्यं भार्गवो यस्य सोऽच्छिनत्।
मृधे सहस्रं बाहूनां हेमतालवनं यथा ।। ३२.३८ ।।

तृषितेन कदाचित्स भिक्षितश्चित्रभानुना।
सप्त द्वीपांश्चित्रभानोः प्रादाद्भिक्षां विशाम्पतिः ।। ३२.३९ ।।

पुराणि घोषान् ग्रामांश्च पत्तनानि च सर्व्वशः।।
जज्वाल तस्य बाणेषु चित्रभानुर्दिधक्षया ।। ३२.४० ।।

स तस्य पुरुषेन्द्रस्य प्रभावेण महायशाः।
ददाह कार्तवीर्यस्य शैलांश्चापि वनानि च ।। ३२.४१ ।।

स शून्यमाश्रमं सर्वं वरुणस्यात्मजस्य वै।
ददोह सवनद्वीपांश्चित्रभानुः सहैहयः ।। ३२.४२ ।।

संलेभे वरुणः पुत्रं पुरा भास्विनमुत्तमम्।
वसिष्ठनामा स मुनिः ख्यातश्चापः श्रितः श्रुतः ।। ३२.४३ ।।

तत्रापदस्तदा क्रोधादर्जुनं शप्तवान्विभुः।
यस्मान्न वर्जितमिदं वनं ते मम हैहय ।। ३२.४४ ।।

तस्मात् ते दुष्करं कर्म्म कृतमन्यो हनिष्यति।
अर्जुनो नाम कौन्तेयो न च राजा भविष्यति ।। ३२.४५ ।।

अर्जुन त्वां महावीर्यो रामः प्रहरतां वरः।
छित्त्वा बाहुसहस्रं वै प्रमथ्य तरसा बलीं ।। ३२.४६ ।।

तपस्वी ब्राह्मणश्चैव वधिष्यति महाबलः।
तस्य रामस्तदा ह्यासीन्मृत्युशापेन धीमतः ।। ३२.४७ ।।

राज्ञा तेन वरश्चैव स्वयमेव वृतः पुरा।
तस्य पुत्रशतं ह्यासीत् पञ्च तत्र महारथाः ।। ३२.४८ ।।

कृतास्त्रा बलिनः शूरा धर्म्मात्मानो यशस्वनः ।
शूरश्च शूरसेनश्च वृष्ट्याद्यं वृष एव च ।। ३२.४९ ।।

जयध्वजश्च वै पुत्रा अवन्तिषु विशांपतेः।
जयध्वजस्य पुत्रस्तु तालजङ्घः प्रतापवान् ।। ३२.५० ।।

तस्य पुत्रशतं ह्येव तालजङ्घा इति श्रुतम्।
तेषां पञ्च गणाः ख्याता हैहयानां महात्मनाम् ।। ३२.५१ ।।

वीरहोत्रा ह्यसङ्ख्याता भोजाश्चावर्तयस्तथा।
तुण्डिकेराश्च विक्रान्तास्तालजङ्घास्तथैव च ।। ३२.५२ ।।

वीरहोत्रसुतश्चापि अनन्तो नाम पार्थिवः।
दुर्जयस्तस्य पुत्रस्तु बभूवामित्रदर्शनः ।। ३२.५३ ।।

अनष्टद्रव्यता चैव तस्य राज्ञो बभूव ह।
प्रभावेण महाराजः प्रजास्ताः पर्य्यपालयत् ।। ३२.५४ ।।

न तस्य वित्तनाशश्च नष्टं प्रतिलभेत सः।
कार्तवीर्यस्य यो जन्म कथयेदिह धीमतः ।। ३२.५५ ।।

वित्तवान् भवत्यत्रैव धर्म्मश्चास्य विवर्द्धते।
यथा त्वष्टा यथा दाता तथा स्वर्गे महीयते ।। ३२.५६ ।।

इति श्रीमहापुराणे वायुप्रोक्ते कार्त्तवीर्य्यार्जुनोत्पत्तिविवरणं नाम द्वात्रिंशोऽध्यायः ।। ३२ ।।

ऋषय ऊचुः।।

किमर्थं भुवनं दग्धमपवस्यं महात्मनाम्।
कार्तवीर्येण विक्रम्य तन्नः प्रब्रूहि पृच्छताम् ।। ३३.१ ।।

रक्षिता स तु राजर्षिः प्रजानामिति नः श्रुतम्।
कथं स रक्षिता भूत्वानाशयत्तत्तपोवनम् ।। ३३.२ ।।

सूत उवाच।।

आदित्यो विप्ररूपेण कार्तवीर्यमुपस्थितः।
तृप्तिकामः प्रयच्छान्नमादित्योऽहं न संशयः ।। ३३.३ ।।

राजोवाच।।

भगवन् केन ते तुष्टिर्भवेद्ब्रूहि दिवाकर।
कीदृशं भोजनं दद्मि श्रुत्वा च विदधाम्यहम् ।। ३३.४ ।।

सूर्य उवाच।।

स्थावरं देहि मे सर्वमाहारं ददतां वर।
तेन तृप्तो भवेयं वै न तुष्येऽन्येन पार्थिव ।। ३३.५ ।।

राजोवाच ।।

न शक्यं स्थावरं सर्व्वं तेजसा मानुषेण तु।
निर्द्दग्धुं तपतां श्रेष्ठ त्वामेव प्रणमाम्यहम् ।। ३३.६ ।।

आदित्य उवाच।।

तुष्टस्तेऽहं शरान् दद्मि अक्षयान् सर्वतः सुखान्।
प्रक्षिप्ताः प्रज्वलिष्यन्ति मम तेजःसमन्विताः ।। ३३.७ ।।

आदिष्टं तेजसा मेघसागरं शोषयिष्यति।
शुष्कं भस्म करिष्यामि तेन प्रीतो नराधिप ।। ३३.८ ।।

ततः शरानथादित्यस्त्वर्जुनाय प्रयच्छति।
ततः संप्राप्य सुमहत्स्थावरं सर्व्वमेव हि ।। ३३.९ ।।

आश्रमानथ ग्रामांश्च घोषांश्च नगराणि च।
तपोवनानि रम्याणि वनान्युपवनानि च ।। ३३.१० ।।

एवं प्राचीनमदहत्ततः सूर्य्यप्रदक्षिणम्।
निर्वृक्षा निस्तृणा भूमिर्दग्धा सूर्येण तेजसा ।। ३३.११ ।।

एतस्मिन्नेव काले तु अपो निलयमाश्रितः।
दशवर्षसहस्राणि जलवासा महानृषिः ।। ३३.१२ ।।

पूर्णे व्रते महातेजा उदतिष्ठत्तपोधनः।
सोऽपश्यदाश्रमं दग्धमर्जुनेन महानृषिः।
क्रोधाच्छशाप राजर्षिं कीर्त्तितं वो यथा मया ।। ३३.१३ ।।

सूत उवाच।।
क्रोष्टोः श्रृणुत राजर्षेर्वंशमुत्तमपूरुषम्।
यस्यान्ववाये संभूतो वृष्णिर्वृष्णिकुलोद्वहः ।। ३३.१४ ।।

क्रोष्टोरेकोऽभवत् पुत्रो वृजिनीवान् महायशाः।
वार्जिनीवतमिच्छन्ति स्वाहिं स्वाहोवतां वरम् ।। ३३.१५ ।।

स्वाहेः पुत्रोऽभवद्राजा रशादुर्ददतां वरः।
घृतम्प्रसूतमिच्छन्ति रशादोरग्र्यमात्मजम् ।। ३३.१६ ।।

महाक्रतुभिरीजे स विविधैराप्तदक्षिणैः।
चित्रैश्चित्ररथस्तस्य पुत्र कर्म्मभिरन्वितः ।। ३३.१७ ।।

एवं चित्ररथो वीरो यज्ञान् विपुलदक्षिणान्।
शशबिन्दुः परं वृत्तो राजर्षीणामनुष्ठितः ।। ३३.१८ ।।

चक्रवर्त्ती महासत्त्वो महावीर्यो बहुप्रजः।
तत्रानुवंशश्लोकोऽयं यस्मिन् गीतः पुराविदैः ।। ३३.१९ ।।

शशबिन्दोस्तु पुत्राणां शतानामभवच्छतम्।
धीमतामनुरूपाणां भूरिद्रविणतेजसाम् ।। ३३.२० ।।

तेषां षट् च प्रधानास्तु पृथुषाट्का महाबलाः।
पृथुश्रवा पृथुयशाः पृथुधर्म्मा पृथुञ्जयः ।। ३३.२१ ।।

पृथुकीर्त्तिः पृथुन्दाता राजानः शाशिबिन्दवाः।
शंसन्ति च पुराणानि पार्थश्रवसमन्तरम्।
अन्तरः स पुरा यस्तु यज्ञस्य तनयोऽभवत् ।। ३३.२२ ।।

उशना सुतधर्म्मात्मा अवाप्य पृथिवीमिमाम्।
आजहाराश्वमेधानां शतमुत्तमधार्म्मिकः ।। ३३.२३ ।।

मरुत्तस्तस्य तनयो राजर्षीणामनुष्ठितः।
वीरः कम्बलबर्हिस्तु मरुत्ततनयः स्मृतः ।। ३३.२४ ।।

पुत्रस्तु रुक्मकवचो विद्वान् कम्बलवर्हिषः।
निहत्य रुक्मकवचः पुरा कवचिनो रणे ।। ३३.२५ ।।

धन्विनो निशितैर्बाणैरवाप श्रियमुत्तमाम्।
ब्राह्मणेभ्यो ददौ वित्तमश्वमेधमहायशाः ।। ३३.२६ ।।

राज्ञस्तु रुक्मकवचादपरावृत्त्य वीरहाः।
जज्ञिरे पञ्च पुत्रास्तु महासत्त्वा महाबलाः ।। ३३.२७ ।।

रुक्मेषुः पृथुरुक्मश्च ज्यामघः परिघो हरिः।
परिघञ्च हरिञ्चैव विदेहे स्थापयत्पिता ।। ३३.२८ ।।

ब्रह्मेषुरभवद्राजा पृथुरुक्मस्तदाश्रयः।
तेभ्यः प्रव्रजितो राज्या ज्ज्यामघोऽभवदाश्रमे ।। ३३.२९ ।।

प्रशान्तस्तु वने घोरे ब्राह्मणेनावबोधितः।
जगाम धनुरादाय देशमध्यं रथी ध्वजी ।। ३३.३० ।।

नर्म्मदानूप एकाकी मेकलावृत्तिका अपि।
ऋक्षवन्तं गिरिं गत्वा शुक्तिमन्यामथाविशत् ।। ३३.३१ ।।

ज्यामघस्याभवद्भार्या शैभ्या बलवती भृशम्।
अपुत्रोऽपि स वै राजा भार्यामन्यां न विन्दति ।। ३३.३२ ।।

तस्यासीद्विजयो युद्धे ततः कन्यामवाप सः।
भार्यामुवाच राजा स स्नुषेति तु नरेश्वरः ।। ३३.३३ ।।

एवमुक्ताब्रवीदेवं काम्ये यन्ते स्नुषेति सा।
यस्ते जनिष्यते पुत्रस्तस्य भार्या भविष्यति ।। ३३.३४ ।।

तस्य सा तपसोग्रेण शैब्या वैशं प्रसूयत ।
पुत्रं विदर्भं सुभगा शैब्या परिणता सती ।। ३३.३५ ।।

राजपुत्रौ तु विद्वांसौ स्नुषायां क्रथुकौशिकौ।
पुत्रौ विदर्भोऽजनयच्छूरौ रणविशारदौ ।। ३३.३६ ।।

लोमपादं तृतीयन्तु पश्चाज्जज्ञे सुधार्मिकः।
लोम पादात्मजोवस्तुराहृतिस्तस्य चात्मजः ।। ३३.३७ ।।

कौशिकस्य चिदिः पुत्रस्तस्माच्चैद्या नृपाः स्मृताः ।
क्रथोर्विदर्भपुत्रस्तु कुन्तिस्तस्यात्मजोऽभवत् ।। ३३.३८ ।।

कुन्तेर्धृष्टसुतो जज्ञे पुरोधृष्टः प्रतापवान् ।
धृष्टस्य पुत्रो धर्मात्मा निर्वृतिः परवीरहा ।। ३३.३९ ।।

तस्य पुत्रो दशार्हस्तु महाबलपराक्रमः।
दशर्हस्य सुतो व्योमा ततो जीमूत उच्यते ।। ३३.४० ।।

जीमूतपुत्रो विकृतिस्तस्य भीमरथः सुतः.
अथ भीमरथस्यासीत् पुत्रो रथवरः किल ।। ३३.४१ ।।

दाता धर्म्मरतो नित्यं शीलसत्यपरायणः।
तस्य पुत्रो नवरथस्ततो दशरथः स्मृतः ।। ३३.४२ ।।

तस्य चैकादशरथः शकुनिस्तस्य चात्मजः।
तस्मात् करम्भको धन्वी देवरातोऽभवत्ततः ।। ३३.४३ ।।

देवक्षत्रोऽभवद्राजा देवरातिर्म्महायशाः।
देवक्षत्रसुतो जज्ञे देवनः क्षत्रनन्दनः ।। ३३.४४ ।।

देवनात् स मधुर्जज्ञे यस्य मेधार्थसम्भवः।
मधोश्चापि महातेजा मनुर्मनुवशस्तथा ।। ३३.४५ ।।

नन्दनश्च महातेजा महापुरुवशस्तथा।
आसीत् पुरुवशात् पुत्रः पुरुद्वान् पुरुषोत्तमः ।। ३३.४६ ।।

जज्ञे पुरुद्वतः पुत्रो भद्रवत्यां पुरूद्वहः।
ऐक्षाकी त्वभवद्भार्या सत्त्वस्तस्यामजायत।
सत्त्वात् सत्त्वगुणो पेतः सात्त्वतः कीर्तिवर्द्धनः ।। ३३.४७ ।।

इमां विसृष्टिं विज्ञाय ज्यामघस्य महात्मनः।
प्रजावानेति सायुज्यं राज्ञः सोमस्य धीमतः ।। ३३.४८ ।।

इति श्रीमहा पुराणे वायुप्रोक्ते ज्यामघवृत्तान्तकथनं नाम त्रयस्त्रिंशोऽध्यायः ।। ३३ ।। *

सूत उवाच।।
सात्वती रूपसम्पन्नं कौशल्या सुषुवे सुतम्।
भजिनं भजमानं च दिव्यं देवावृधं नृपम् ।। ३४.१ ।।

अन्धकञ्च सहाभोजं वृष्णिञ्च यदुनन्दनम्।
तेषां हि सर्गाश्चत्वारः श्रृणुध्वं विस्तरेण वै ।। ३४.२ ।।

भजमानस्य श्रृञ्जय्यां बाह्यश्चोपरि बाह्यकः।
श्रृञ्जयस्य सुते द्वे तु बाह्यकस्ते उदावहत् ।। ३४.३ ।।

तस्य भार्ये भगिन्यौ ते प्रासूतेति सुतान् बहून्।
निमिश्च पणवश्चैव वृष्णिः परपुरञ्जयः ।। ३४.४ ।।

ये बाह्यकार्य्यश्रृञ्जय्यां भजमानाद्विजज्ञिरे।
अयुतायुतसाहस्र शतजिदथ वामकः ।। ३४.५ ।।

बाह्यकार्य्याभगिन्यां ये भजमाना द्विजज्ञिरे।
तेषां देवावृधो राजा चचार परमं तपः ।। ३४.६ ।।

पुत्रः सर्वगुणोपेतो मम भूयादिति स्म ह।
संयोज्यात्मानमेवं सवर्णा सा जलमस्पृशत् ।। ३४.७ ।।

सा चोपस्पर्शनात्तस्य चकार ऋषिमापगा।
कल्याणञ्च नरपतेस्तस्य सा निम्नगोत्तमा ।। ३४.८ ।।

चिन्तयाभिपरीताङ्गा जगामाथ विनिश्चयम्।
नाधिगच्छामि तां नारीं यस्यामेवंविधः सुतः ।। ३४.९ ।।

भवेत्सर्वगुणोपेतो राज्ञो देवावृधस्य हि।
तस्मादस्य स्वयं चाहं भवाम्यद्य सहव्रता।
जज्ञे तस्याः स्वयं हस्तो भावस्तस्य यथेरितः ।। ३४.१० ।।

अथ भूत्वा कुमारी तु सावित्री परमं वचः।
चिन्तयामास राजानं तामियेष स पर्थिवः ।। ३४.११ ।।

तस्यामाधत्त गर्भं स तेजस्विनमुदारधीः।
अथ सा नवमे मासि सुषुवे सरितांवरा ।। ३४.१२ ।।

पुत्रं सर्वगुणोपेतं यथा देवावृधेप्सितः।
तत्र वंशे पुराणज्ञा गाथां गायन्ति वै द्विजाः ।। ३४.१३ ।।

गुणान् देवावृधस्यापि कीर्त्तयन्तो महात्मनः।

यथैव श्रृणुते दूरात् संपश्यति तथान्तिकात् ।। ३४.१४ ।।

बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः।
पुरुषाः पञ्चषष्टिश्च सहस्राणि च सप्ततिः।
येऽमृतत्वमनुप्राप्ता बभ्रुर्देवावृधादपि ।। ३४.१५ ।।

यज्वा दानपतिर्वीरो ब्रह्मण्यः सत्य वाग् बुधः।
कीर्त्तिमांश्च महाभागः सात्त्वतानां महारथः ।। ३४.१६ ।।

तस्यान्ववाये सुमहाभोजयेमार्तिकावलाः।
गान्धारी चैव माद्री च वृष्णेर्भार्य्ये बभूवतुः ।। ३४.१७ ।।

गान्धारी जनयामास सुमित्रं मित्रनन्दनम्।
माद्री युधाजितं पुत्रं सा तु वै देवमीढुषम् ।। ३४.१८ ।।

अनमित्रं सुतञ्चैव तावुभौ पुरुषोत्तमौ।
अनमित्रसुतो निघ्नो निघ्नस्य द्वौ बभूवतुः ।। ३४.१९ ।।

प्रसेनश्च महाभागः शक्रजिच्च सुतावुभौ।
तस्य शक्रजितः पूर्वः सखा प्राणसमोऽभवत् ।। ३४.२० ।।

स कदाचिन्निशापाये रथेन रथिनांवरः।
तोयकूलादपः स्प्रष्टुमुपस्थातुं ययौ रविम् ।। ३४.२१ ।।

तस्योपतिष्ठतः सूर्यो विवस्वानग्रतः स्थितः।
अस्पष्टमूर्तिर्भगवां स्तेजोमण्डलवान् विभुः ।। ३४.२२ ।।

अथ राजा विवस्वन्तमुवाच स्थितमग्रतः।
यथैव व्योम्नि पश्यामि त्वामहं ज्योतिषाम्पते ।। ३४.२३ ।।

तेजोमण्डलिनञ्चैव तथैवाप्यग्रतः स्थितम्।
को विशेषो विवस्वंस्ते साक्षादुपगतेन वै ।। ३४.२४ ।।

एतच्छ्रुत्वा स भगवान् मणिरत्नं स्यमन्तकम्।
स्वकण्ठादवमुच्याथ बबन्ध नृपतेस्तदा ।। ३४.२५ ।।

ततो विग्रहवन्तं तं ददर्श नृपतिस्तदा।
प्रतिमामथ तां दृष्ट्वा मुहूर्त्तं कृतवांस्तथा ।। ३४.२६ ।।

तमतिप्रस्थितं भूयो विवस्वन्तं स शक्रजित्।
प्रोवाचाग्निसवर्णं त्वं येन लोकान् प्रयास्यति।
तदैव मणिरत्नं तन्मां भवान् दातुमर्हति ।। ३४.२७ ।।

स्यमन्तकं नाम मणिं दत्तवांस्तस्य भास्करः।
स तमाबद्ध्य नगरं प्रविवेश महीपतिः ।। ३४.२८ ।।

तं जनाः पर्यधावन्त सूर्योऽयं गच्छतीति ह।
सभां विस्माययित्वाथ पुरीमन्तःपुरं तथा ।। ३४.२९ ।।

तं प्रसेनिजिते दिव्यं मणिरत्नं स्यमन्तकम्।
ददौ भ्रात्रे नरपतिः प्रेम्णा शक्रजिदुत्तमम् ।। ३४.३० ।।

स्यमन्तको नाम मणिर्यस्य राष्ट्रे स्थितो भेवत् ।
कालवर्षी च पर्जन्यो न च व्याधिभयं तदा ।। ३४.३१ ।।

लिप्सां चक्रे प्रसेनात्तु मणिरत्नं स्यमन्तकम्।
गोविन्दो न च तं लेभे शक्तोऽपि न जहार च ।। ३४.३२ ।।

कदा चिन्मृगयां यातः प्रसेनस्तेन भूषितः।
स्यमन्तककृते सिंहाद्वधं प्राप्तः सुदारुणम् ।। ३४.३३ ।।

जाम्बवानृक्षराजस्तु तं सिंहं निजघान वै ।
आदाय च मणिं दिव्यं स्वं बिलं प्रविवेश ह ।। ३४.३४ ।।

तत्कर्म कृष्णस्य ततो वृष्ण्यन्धकमहत्तराः।
मणौगृध्नुन्तु मन्वानास्तमेव विशशङ्किरे ।। ३४.३५ ।।

मिथ्याभिशस्तिं तेभ्यस्तां बलवानरिसूदनः।
अमृष्यमाणो भगवान् वनं स विचचार ह ।। ३४.३६ ।।

स तु प्रसेनमृगयामचरत्तत्र चाप्यथ।
प्रसेनस्य पदं गृह्य पुरुषै राप्तकारिभिः ।। ३४.३७ ।।

ऋक्षवन्तं गिरिवरं विन्ध्यञ्च नगमुत्तमम्।
अन्वेषणपरिश्रान्तः स ददर्श महामनाः ।। ३४.३८ ।।

साश्वं हतं प्रसेनं तं नाविन्दत्तत्र वै मणिम्।
अथ सिंहः प्रसेनस्य शरीरस्याविदूरतः ।। ३४.३९ ।।

ऋक्षेण निहतो दृष्टः पादैऋक्षस्य सूचिताम्।
पदैरन्वेषयामास गुहामृक्षस्य यादवः ।। ३४.४० ।।

महत्यतिबिले वाणीं शुश्राव प्रमदेरिताम्।
धात्र्या कुमारमादाय सुतं जाम्बवतो द्विजाः।

प्रीतिमत्याथ मणिना मारोदीरित्युदीरिताम् ।। ३४.४१ ।।

।।धात्र्युवाच।।
प्रसेनमवधीत् सिंहः सिंहो जाम्बवता हतः।
सुकुमारक मारोदीस्तव ह्येष स्यमन्तकः ।। ३४.४२ ।।

व्यक्तीकृतञ्च शब्दं तं तूर्णं सोऽपि ययौ बिलम्।
अपश्यच्च विलाभ्याशे प्रसेनमवदारितम्।। ३४.४३ ।।

प्रविश्य चापि भगवास्तदृक्षबिलमञ्जसा।
ददर्श ऋक्षराजानं जाम्बवन्तमुदारधीः ।। ३४.४४ ।।

युयुधे वासुदेवस्तु बिले जाम्बवता सह।
बाहुभ्यामेव गोविन्दो दिवसानेकविंशतिम् ।। ३४.४५ ।।

प्रविष्टे च बिलं कृष्णे वासुदेव पुरःसराः ।
पुनर्द्वारवतीमेत्य हतं कृष्णं न्यवेदयन् ।। ३४.४६ ।।

वासुदेवस्तु निर्जित्य जाम्बवन्तं महाबलम्।
लेभे जाम्बवतीं कन्यामृक्षराजस्य सम्मताम् ।। ३४.४७ ।।

भगवत्तेजसा ग्रस्तो जाम्बवान् प्रसभं मणिम्।
सुतां जाम्बवतीमाशु विष्वक्सेनाय दत्तवान् ।। ३४.४८ ।।

मणिं स्यमन्तकं चैव जग्राहात्म विशुद्धये।
अनुनीय ऋक्षराजं निर्ययौ च तदा बिलात् ।। ३४.४९ ।।

एवं स मणिमादाय विशोद्ध्यात्मानमात्मना।
ददौ सत्राजिते तं वै मणिं सात्वतसन्निधौ ।। ३४.५० ।।

कन्यां पुनर्जाम्बवतीमुवाच मधुसूदनः।
तस्मान्मिथ्याभिशापात् स व्यमुच्यत जनार्दनः ।। ३४.५१ ।।

इमां मिथ्याभिशस्तिं यः कृष्णस्येह व्यपोहिताम्।
वेद मिथ्याभिशस्तेः स नाभिशस्यति कर्हिचित् ।। ३४.५२ ।।

दश स्वसृभ्यो भार्य्याभ्यः शत्रजित्तः शतं सुताः।
ख्यातिमन्तस्त्रयस्तेषां भङ्गकारस्तु पूर्व्वजः।
वीरो व्रतपतिश्चैव हयपस्वान्तश्च सुप्रियः ।। ३४.५३ ।।

अथ द्वारवती नाम भङ्गकारस्य सुप्रजा।
सुषुवे सा कुमारीस्तु तिस्रो रूपगुणान्विताः ।। ३४.५४ ।।

सत्य भामोत्तमा स्त्रीणां व्रतिनीव दृढव्रता।
तथा तपस्विनी चैव पिता कृष्णस्य तां ददौ ।। ३४.५५ ।।

यत्तत् सत्राजिते कृष्णो मणिरत्नं स्यमन्तकम्।
प्रादात्तदाहरद्रत्नं भोजेन शतधन्वना ।। ३४.५६ ।।

तदा हि प्रार्थयामास सत्यभामामनिन्दिताम्।
अक्रूरो रत्नमन्विच्छन् मणिञ्चैव स्यमन्तकम् ।। ३४.५७ ।।

भद्रकारं ततो हत्वा शतधन्वा महाबलः।
रात्रौ तं मणिमादाय ततोऽक्रूराय दत्तवान् ।। ३४.५८ ।।

अक्रूरस्तु तदा रत्नमादाय स नरर्षभः।
समयं कारणं चक्रे बोध्यो नान्यैस्त्वयेत्युत ।। ३४.५९ ।।

वयमभ्युपपत्स्यामः कृष्णेन त्वं प्रधर्षितः।
मम च द्वारकाः सर्वा वशे तिष्टन्त्यसंशयम् ।। ३४.६० ।।

हते पितरि दुःशार्त्ता सत्यभामा यशस्विनी।
प्रययौ रथमारुह्य नगरं वारणावतम् ।। ३४.६१ ।।

सत्यभामा तु तद्वृत्तं भोजस्य शतधन्वनः।
भर्तुर्निवेद्य दुःखार्त्ता पार्श्वस्थाश्रूण्यवर्तयत् ।। ३४.६२ ।।

पाण्डवानान्तु दग्धानां हरिः कृत्वोदकक्रियाम् ।
तुल्यार्थे चैव भ्रातृणां नियोजयति सात्यकिम् ।। ३४.६३ ।।

तत स्त्वरितमागम्य द्वारकां मधुसूदनः।
पूर्व्वजं हलिनं श्रीमानिदं वचनमब्रवीत् ।। ३४.६४ ।।

हतः प्रसेनः सिंहेन सत्राजिच्छतधन्वना।
स्यमन्तकमहं मार्गे तस्य प्रहर हे प्रभो ।। ३४.६५ ।।

तदारोह रथं शीघ्रं भोजं हत्वा महाबलम्।
स्यमन्तको महाबाहो तदास्माकं भविष्यति ।। ३४.६६ ।।

ततः प्रवृत्ते युद्धे तु तुमुले भोजकृष्णयोः।
शतधन्वा न चाक्रूरमवैक्षत् सर्वतो दिशि ।। ३४.६७ ।।

अनष्टाश्वावरोहन्तु कृत्वा भोजजनार्दनौ।
शक्तोऽपि साध्याद्वार्द्धक्यान्नाक्रूरोऽभ्युपपद्यत ।। ३४.६८ ।।

अपयाने ततो बुद्धिं भूयश्चक्रे भयान्वितः।
योजनानां शतं साग्रं यया च प्रत्यपद्यत ।। ३४.६९ ।।

विज्ञातहृदया नाम शतयोजनगामिनी।
भोजस्य वढवादित्यो यया कृष्णमयोधयत् ।। ३४.७० ।।

प्रवृद्धवेगा वडवा त्वध्वनां शतयोजनम्।
दृष्टा रथगतिस्तस्य शतधन्वानमर्द्दयत् ।। ३४.७१ ।।

ततस्तस्य हयास्ते तु श्रमात् खेदाच्च वै द्विजाः।
खमुत्पेतू रथप्राणाः कृष्णो राममथाब्रवीत् ।। ३४.७२ ।।

तिष्ठस्वेह महाबाहो दृष्टदोषा मया हयाः।
पद्य्भां गत्वा हरिष्यामि मणिरत्नं स्यमन्तकम् ।। ३४.७३ ।।

पद्भ्यामेव ततो गत्वा शतधन्वानमच्युतः।
मिथिलाधिपतिं तं वै जघान परमास्त्रवित् ।। ३४.७४ ।।

स्यमन्तकं न चापश्यद्धत्वा भोजं महाबलम्।
निवृत्तं चाब्रवीत् कृष्णं रत्नं देहीति लाङ्गली ।। ३४.७५ ।।

नास्तीति कृष्णश्चोवाच ततो रामो रुषान्वितः।
धिक्छब्दमसकृत् पूर्व्वं प्रत्युवाच जनार्द्दनम् ।। ३४.७६ ।।

भ्रातृत्वान्मर्षयाम्येष स्वस्ति तेऽस्तु व्रजाम्यहम्।
कृत्यं न मे द्रारकया न त्वया न च वृष्णिभिः ।। ३४.७७ ।।

प्रविवेश ततो रामो मिथिलामरिमर्द्दनः।
सर्व्वकामैरुपहृतैर्मैथिलेनैव पूजितः ।। ३४.७८ ।।

एतस्मिन्नेव काले तु बभ्रुर्मतिमतांवरः।
नानारूपान् क्रतून् सर्व्वानाजहार निरर्गलान् ।। ३४.७९ ।।

दीक्षामयं सकवचं रक्षार्थं प्रविवेश ह।
स्यमन्तककृते राजा गाधिपुत्रो महायशाः ।। ३४.८० ।।

अर्थान् रत्नानि चाग्र्याणि द्रव्याणि विविधानि च ।
षष्टिवर्षगते काले यज्ञेषु विन्ययोजयत् ।। ३४.८१ ।।

अक्रूरयज्ञ इत्येते ख्यातास्तस्य महात्मनः।
बह्वन्नदक्षिणाः सर्व्वे सर्व्वकामप्रदायिनः ।। ३४.८२ ।।

अथ दुर्य्योधनो राजा गत्वाऽथ मिथिलां प्रभुः।
गदाशिक्षां ततो दिव्यां बलभद्रादवाप्तवान् ।। ३४.८३।
प्रसाद्य तु ततो विप्रा वृष्ण्यन्धकमहारथैः।
आनीतो द्वारकामेव कृष्णेन च महात्मना ।। ३४.८४ ।।

अक्रूरमन्धकैः सार्द्धमुपायात् पुरुषर्षभः।
युद्धे हत्वा तु शत्रुघ्नं सह बन्धुमता बली ।। ३४.८५ ।।

श्वफल्कतनयायान्तु नरायां नरसत्तमौ।
भङ्गकारस्य तनयो विश्रुतौ सुमहाबलौ ।। ३४.८६ ।।

जज्ञातेऽन्धकमुख्यस्य शत्रुघ्नो बन्धुमांश्च तौ।
वधार्थं भङ्गकारस्य कृष्णो न प्रीतिमान् भवेत् ।। ३४.८७ ।।

ज्ञाति भेदभयाद्भीतः समुपेक्षितवांस्तथा।
अपयाते तथाक्रूरे नावर्षत्पाकशासनः ।। ३४.८८ ।।

अनावृष्ट्या हतं राष्ट्रमभवत्तद्वघोद्यतम्।
ततः प्रसादयामासुरक्रूरं कुकुरान्धकाः ।। ३४.८९ ।।

पुनर्द्वारवतीं प्राप्ते तदा दानपतौ तथा।
प्रववर्ष सहस्राक्षः कुक्षौ जलनिधेस्ततः ।। ३४.९० ।।

कन्याञ्च वासुदेवाय स्वसारं शीलसम्मताम्।
अक्रूरः प्रददौ श्रीमान् प्रीत्यर्थं यदुपुङ्गवः ।। ३४.९१ ।।

अत विज्ञाय योगेन कृष्णो बभ्रुगतं मणिम्।
सभामध्ये तदा प्राह तमक्रूरं जनार्दनः ।। ३४.९२ ।।

यच्च रत्नं मणिवरं तव हस्तगतं प्रभो।
तत्प्रयच्छस्व मानार्ह विमतिञ्चात्र मा कृथाः ।। ३४.९३ ।।

षष्टिवर्षगते काले यद्रोषोऽभूत्तदा मम।
सुसंरूढः सकृत् प्राप्तस्तत्कालाश्रित्य स महान् ।। ३४.९४ ।।

ततः कृष्णस्य वचनात् सर्व्वसात्वतसंसदि।
प्रददौ तं मणिं बभ्रुरक्लेशेन महामतिः ।। ३४.९५ ।।

तत आर्ज्जवसंप्राप्तबभ्रुहस्तादरिन्दमः।
ददौ प्रहृष्टमनसा तं मणिं बभ्रवे पुनः ।। ३४.९६ ।।

स कृष्णहस्तात् संप्राप्य मणिरत्नं स्यमन्तकम्।

आबद्ध्य गान्दिनीपुत्रो विरराजांशुमानिव ।। ३४.९७ ।।

इमां मिथ्याभिशस्तिं यो विशुद्धामपि चोत्तमाम् ।
वेद मिथ्याभि शस्तिं स न व्रजेच्च कथञ्चन ।। ३४.९८ ।।

अनिमित्राच्छिनिर्जज्ञे कनिष्ठाद्वृष्णिनन्दनात् ।। ३४.९९ ।।

सत्यवाक् सत्यसम्पन्नः सत्यकस्तस्य चात्मजः।
सात्यकिर्युयुधानस्य तस्य भूतिः सुतोऽभवत् ।। ३४.१०० ।।

भूतेर्युगन्धरः पुत्र इति भौत्याः प्रकीर्त्तिताः।
जज्ञाते तनयौ पृश्नेः श्वफल्कश्चित्रकश्च यः ।। ३४.१०१ ।।

श्वफल्कस्तु महाराजो धर्मात्मा यत्र वर्त्तते।
नास्ति व्याधिभयं तत्र न चावृष्टिभयं तथा ।। ३४.१०२ ।।

कदाचित् काशिराजस्य विभोस्तु द्विजसत्तमाः।
त्रीणि वर्षाणि विषये नावर्षत्पाकशासनः ।। ३४.१०३ ।।

स तत्र वासयामास श्वफल्कं परमार्चितम्।
श्वफल्कपरिवासेन प्रावर्षत्पाकशासनः ।। ३४.१०४ ।।

श्वफल्कः काशिराजस्य सुतां भार्यामनिन्दिताम्।
गान्दिनीं नाम गां सा हि ददौ विप्राय नित्यशः ।। ३४.१०५ ।।

सा मातुरुदरस्था वै बहुवर्ष शतान् किल।
वसति स्म न वै जज्ञे सर्भस्थान्तां पिताब्रवीत् ।। ३४.१०६ ।।

जायस्व शीघ्रं भद्रन्ते किमर्थं चापि तिष्ठसि।
प्रोवाच चैनं गर्भ स्था सा कन्या गौर्दिने दिने ।। ३४.१०७ ।।

यदि दत्ता तदा स्यां हि यदि स्यामीहतां पितः।
तथेत्युवाच तां तस्याः पिता काममपूपुरत् ।। ३४.१०८ ।।

दाता यज्वा च शूरश्च श्रुतवानतिथिप्रियः।
तस्याः पुत्रः स्मृतोऽक्रूरः श्वफल्को भूरिदक्षिणः ।। ३४.१०९ ।।

उपमङ्गुस्तथा मङ्गुर्मृदुरश्चारिमेजयः।
गिरिरक्षस्तता यक्षः शत्रुघ्नो वारिमर्द्दनः ।। ३४.११० ।।

धर्मभृच्च श्रृष्टचयो वर्गमोचस्तथापरः।
आवाहप्रतिवाहौ च वसुदेवा वराङ्गना ।। ३४.१११ ।।

अक्रूरादुग्रसेन्यान्तु सुतौ द्वौ कुलनन्दिनौ।
देवश्चानुपदेवश्च जज्ञाते देवसंमितौ ।। ३४.११२ ।।

चित्रकस्याभवन् पुत्राः पृथुर्विपृथुरेव च।
अश्वग्रीवोऽश्वबाहुश्च सुपार्श्वकगवेषणौ ।। ३४.११३ ।।

अरिष्टनेमिरश्वश्च सुवर्मा वर्मचर्मभृत् ।
अभूमिर्बहुभूमिश्च श्रविष्ठाश्रवणे स्त्रियौ ।। ३४.११४ ।।

सत्यकात् काशिदुहिता लेभे सा चतुरः सुतान्।
ककुदं भजमानञ्च शमीकबलबर्हिषौ ।। ३४.११५ ।।

ककुदस्य सुतो वृष्टिर्वृष्टेस्तु तनयोऽभवत्।
कपोतरोमा तस्याथ रेवतोऽभवदात्मजः ।। ३४.११६ ।।

तस्यासीत्तुम्बुरुसखा विद्वान् पुत्रोऽभवत्किल।
ख्यायते यस्य नाम्ना स चन्दनोदकदुन्दुभिः ।। ३४.११७ ।।

तस्माच्चाभिजितः पुत्र उत्पन्नस्तु पुनर्वसुः।
अश्वमेधन्तु पुत्रार्थे आजहार नरोत्तमः ।। ३४.११८ ।।

तस्य मध्येऽतिरात्रस्य सदोमध्यात्समुत्थितम्।
ततस्तु विद्वान् धर्मज्ञो दाता यज्वा पुनर्वसुः ।। ३४.११९ ।।

तस्यापि पुत्रमिथुनं बाहुबाणाजितः किल।
आहुकश्चाहुकी चैव ख्यातौ मतिमतांवरौ ।। ३४.१२० ।।

इमांश्चोदाहरन्त्यत्र श्लोकान् प्रति तमाहुकम्।
सोपासङ्गानुकर्षाणां सध्वजानां वरूथिनाम् ।। ३४.१२१ ।।

रथानां मेघघोषाणां सहस्राणि दशैव तु।
नासत्यवादी त्वासीत्तु नायज्वा नासहस्रदः ।। ३४.१२२ ।।

नाशुचिर्नाप्यधर्मात्मा नाविद्वान्न कृशोऽभवत्।
आहुकस्य धृतिः पुत्र इत्येवमनु शुश्रुमः ।। ३४.१२३ ।।

श्वेतेन परिचारेण किशोरप्रतिमान् हयान्।
अशीतियुक्तनियुतान्याहुकप्रतिमोऽव्रजत् ।। ३४.१२४ ।।

पूर्वस्यान्दिशि नागानां भोजस्य प्रतिरेजिरे।
रूप्यकाञ्चनकक्षाणां सहस्राण्येकविंशतिः ।। ३४.१२५ ।।

तावन्त्येव सहस्राणि उत्तरस्यान्तथा दिशि।
भूमिपालस्य भोजस्य उत्तिष्ठेत् किङ्किणी किल ।। ३४.१२६ ।।

आहुकश्चाहुकान्धाय स्वसारं त्वाहुकीन्ददौ।
आहुकान्धस्य दुहिता द्वौ पुत्रौ सम्बभूवतुः ।। ३४.१२७ ।।

देवकश्चोग्रसेनश्च देवगर्भसमावुभौ ।
देवकस्य सुता वीरा जज्ञिरे त्रिदशोपमाः ।। ३४.१२८ ।।

देवानामपि देवश्च सुदेवो देवरञ्जिता।
तेषां स्वसारः सप्तासन् वसुदेवाय संददौ ।। ३४.१२९ ।।

वृकदेवोपदेवा च तथान्या देवरक्षिता।
श्रीदेवा शान्तिदेवा च महादेवा तथापरा ।। ३४.१३० ।।

सप्तमी देवकी तासां सुनामा चारुदर्शना।
नवोग्रसेनस्य सुताः कंसस्तेषान्तु पूर्वजः ।। ३४.१३१ ।।

न्यग्रोधश्च सुनामा च कद्वशंकुश्च भूमयः।
सूतनू राष्ट्रपालश्च युद्धतुष्टः सुपुष्टिमान् ।। ३४.१३२ ।।

तेषां स्वसारः पञ्चैव कर्मधर्मवती तथा।
शताङ्क्रू राष्ट्रापाला च कङ्वा चैव वराङ्गना ।। ३४.१३३ ।।

उग्रसेनो महापत्यो विख्यातः कुकुरोद्भवः।
कुकुराणामिमं वंशं धारयन्नमितौजसाम्।
आत्मनो विपुलं वंशं प्रजावांश्च भवेन्नरः ।। ३४.१३४ ।।

भजमानस्य पुत्रस्तु रथिमुख्यो विदूरथः।
राज्याधिदेवः शूरश्च विदुरश्च सुतोऽभवत् ।। ३४.१३५ ।।

तस्य शूरस्य तु सुता जज्ञिरे बलवत्तराः ।
वातश्चैव निवातश्च शोणितः श्वेतवाहनः ।। ३४.१३६ ।।

शमी च गदवर्मा च निदातः शक्रशक्रजित्।
शमिपुत्रः प्रतिक्षिप्तः प्रतिक्षिप्तस्य चात्मजः ।। ३४.१३७ ।।

स्वयम्भोजः स्वयम्भोजाद्धृदिकः सम्बभूव ह।
हृदिकस्य सुतास्त्वासन् दश भीमपराक्रमाः ।। ३४.१३८ ।।

कृतवर्मा कृतस्तेषां शतधन्वा तु मध्यमः।
देवार्हश्च वनार्हश्च भिषग् द्वैतरथश्च यः ।। ३४.१३९ ।।

सुदान्तश्च धियान्तश्च नकवान् कनकोद्भवः।
देवार्हस्य सुतो विद्वान् जज्ञे कम्बलबर्हिषः ।। ३४.१४० ।।

असमौजाः सुतस्तस्य सुमहौजाश्च विश्रुतः।
अजावपुत्राय ततः प्रददावसमौजसे।
सुदंष्ट्रञ्च सुरूपञ्च कृष्ण इत्यन्धकाः स्मृताः ।। ३४. १४१ ।।

अन्धकानामिमं वंशं कीर्त्तयानस्तु नित्यशः।
आत्मानो विपुलं वंशं लभते नात्र संशयः ।। ३४.१४२ ।।

अस्मक्यां जनयामास शूरो वै देवमानुषिम्।
माष्यान्तु जनयामास शूरो वै देवमीढुषम् ।। ३४.१४३ ।।

भाष्यान्तु जज्ञिरे शूराद्भोजायां पुरुषा दश।
वसुदेवो महाबाहुः पूर्वमानकदुन्दुभिः ।। ३४.१४४ ।।

जज्ञे तस्य प्रसूतस्य दुन्दुभिः प्राणदद्दिवि।
आनकानाञ्च संह्लादः सुमहानभवद्दिवि ।। ३४.१४५ ।।

पपात पुष्पवर्षञ्च शूरस्य भवने महत्।
मनुष्यलोके कृत्स्नेऽपि रूपे नास्ति समो भुवि ।। ३४.१४६ ।।

यस्यासीत् पुरुषाग्र्यस्य कीर्त्तिश्चन्द्रमसो यथा।
देवभागस्ततो जज्ञे ततो देवश्रवाः पुनः ।। ३४.१४७ ।।

अनादृष्टिकडश्चैव नन्दनश्चैव भृञ्जिनः।
श्यामः शमीको गण्डूषः चतस्रस्तु वराङ्गनाः ।। ३४.१४८ ।।

पृथा च श्रुतवेदा च श्रुतकीर्त्तिः श्रुतश्रवाः।
राजाधिदेवी च तथा पञ्चैता वीरमातरः ।। ३४.१४९ ।।

पृथां दुहितरं चक्रे कुन्ति स्तां पाण्डुरावहत्।
अनपत्याय वृद्धाय कुन्तिभोजाय तां ददौ ।। ३४.१५० ।।

तस्मात् कुन्तीति विख्याता कुन्तीभोजात्मजा पृथा।
कुरुवीरः पाण्डुमुख्यस्तस्माद्भार्यामविन्दत ।। ३४.१५१ ।।

पृथा जज्ञे ततः पुत्रान् त्रीनग्निसमतेजसः।
लोकेऽप्रतिरथान् वीरान् शक्रतुल्यपराक्रमान् ।। ३४.१५२ ।।

धर्माद्युधिष्ठिरं पुत्रं मारुताच्च वृकोदरम्।

ईन्द्राद्धनञ्जयञ्चैव पृथा पुत्रानजीजनत् ।। ३४.१५३ ।।

माद्रवत्यान्तु जनितावाश्विनाविति विश्रुतम्।
नकुलः सहदेवश्च रूपसत्त्वगुणान्वितौ ।। ३४.१५४ ।।

जज्ञे च श्रुतदेवायां तनयो वृद्धशर्मणः।
करूषाधिपतिर्वीरो दन्तवक्रो महाबलः ।। ३४.१५५ ।।

कैकेयां श्रुतकीर्त्यान्तु जज्ञे सन्तर्दनः पुनः।
चेकितानबृहत्क्षत्रौ तथैवान्यौ महाबलौ ।। ३४.१५६ ।।

विन्दानुविन्दावावन्त्यौ भ्रातरौ सुमहाबलौ।
श्रुतश्रवायां चैद्यस्तु शिशुपालो बभूव ह ।। ३४.१५७ ।।

दमघोषस्य राजर्षेः पुत्रो विख्यातपौरुषः।
यः पुरासीद्दशग्रीवः संबभूवारिमर्दनः ।। ३४.१५८ ।।

यदुश्रवानुजस्तस्य रुजकन्योऽनुजस्तथा।
पत्न्यस्तु वसुदेवस्य त्रयोदश वराङ्गनाः ।। ३४.१५९ ।।

पौरवी रोहिणी चैव मदिरा चापरा तथा।
तथैव भद्रा वैशाखी देवकी सप्तमी तथा ।। ३४.१६० ।।

सुगन्धिर्वनराजी च द्वे चान्ये परिचारिके।।
रोहिणी पौरवी चैव वाल्मीकस्यात्मजाभवत् ।। ३४.१६१ ।।

ज्येष्ठा पत्नी महाभागा दयितानकदुन्दुभेः ।
ज्येष्ठं लेभे सुतं रामं सारणं निशवं तथा ।। ३४.१६२ ।।

दुर्द्दमं दमनं शुभ्रं पिण्डारककुशीतकौ।
चित्रां नाम कुमारीञ्च रोहिण्यष्टौ व्यजायत ।। ३४.१६३ ।।

पौत्रौ रामस्य जज्ञाते विज्ञातौ निशितोत्सुकौ।
पार्श्वी च पार्श्वनन्दी च शिशुः सत्यधृतिस्तथा ।। ३४.१६४ ।।

मन्दबाह्योऽथ रामाणगिरिकौ गिर एव च।
शुक्लगुल्मेति गुल्मश्च दरिद्रान्तक एव च ।। ३४.१६५ ।।

कुमार्यश्चापि पञ्चाद्या नामतस्ता निबोधत।
अर्चिष्मती सुनन्दा च सुरसा सुवचास्तथा ।। ३४.१६६ ।।

तथा शतबला चैव सारणस्य सुतास्त्विमाः।

भद्राश्वो भद्रगुप्तिश्च भद्रविघ्नस्तथैव च ।। ३४.१६७ ।।

भद्रबाहुर्भद्ररथो भद्रकल्पस्तथैव च।
सुपार्श्वकः कीर्त्तिमांश्च रोहिताश्वश्च भद्रजः ।। ३४.१६८ ।।

दुर्म्मदश्चाभिभूतश्च रोहिण्याः कुलजाः स्मृताः ।
नन्दोपनन्तदौ मित्रश्च कुक्षिमित्रस्तथाचलः ।। ३४.१६९ ।।

चित्रोप चित्रे कन्ये च स्थितः पुष्टिरथापरः।
मदिरायाः सुता ह्येते सुदेवोऽथ विजज्ञिरे ।। ३४.१७० ।।

उपबिम्बोऽथ बिम्बश्च सत्त्वदन्तमहौजसौ।
चत्वार एते विख्याता भद्रापुत्रा महाबलाः ।। ३४.१७१ ।।

वैशाख्यां समदाच्छौरिः पुत्रं कौशिकमुत्तमम्।
देवक्यां जज्ञिरे शौरिः सुषेणः कीर्तिमानपि ।। ३४.१७२ ।।

तदयो भद्रसेनश्च यजुदायश्च पञ्चमः।
षष्ठो भद्रविदेकश्च कंसः सर्वाञ्जघान तान् ।। ३४.१७३ ।।

अथ तस्यामवस्थायामायुष्मान् संबभूव ह।
लोक नाथः पुनर्विष्णुः पूर्वकृष्णः प्रजापतिः ।। ३४.१७४ ।।

अनुजाताऽभवत् कृष्णा सुभद्रा भद्रभाषिणी।
कृष्णा सुभद्रेति पुनर्व्याख्याता वृष्णिनन्दिनी ।। ३४.१७५ ।।

सुभद्रायां रथी पार्थादभिमन्युरजायत।
वसुदेवस्य भार्यासु महाभागासु सप्तसु।
ये पुत्रा जज्ञिरेशूरा नामतस्तान्निबोधत ।। ३४.१७६ ।।

अतोऽस्य सह देवायां शूरो जज्ञेऽभयासखः।
शार्ङ्गदेवाजनत्तम्बुं शौरी जज्ञे कुलोद्वहम् ।। ३४.१७७ ।।

उपसङ्गं वसुञ्चापि तनयौ देवरक्षितौ।
एवं दश सुतास्तस्य कंसस्तानप्यघातयत् ।। ३४.१७८ ।।

विजयं रोजनञ्चैव वर्द्धमानं तथैव च।
एतान् सर्व्वान् महाभागानुपदेवा व्यजायत ।। ३४.१७९ ।।

स्वगाहवं महात्मानं वृक देवी त्वजायत ।
आगाही च स्वसा चैव सुरूपा शिशिरायिणी ।। ३४.१८० ।।

सप्तमं देवकीपुत्रं सुनासा सुषुवे भुवम्।
गवेषणं महाभागं सङ्ग्रामे चित्र योधिनम् ।। ३४.१८१ ।।

श्राद्धदेवं पुरा येन वने विरचिता द्विजाः।
शैब्यायामददच्छौरिः पुत्रं कौशिकमव्ययम् ।। ३४.१८२ ।।

सुगन्धी वनराजी च शौरेरास्तां परिग्रहः।
पुण्ड्रश्च कपिलश्चैव वसुदेवात्मजौ हि तौ।
तयो राजाऽभवत् पुण्ड्रः कपिलस्तु वनं ययो ।। ३४.१८३ ।।

तस्यां समभवद्वीरो वसुदेवात्मजो बली।
राजा नाम निषादोऽसौ प्रथमः स धनुर्द्धरः ।। ३४.१८४ ।।

विख्यातो देवरातस्य महाभागः सुतोऽभवत्।
पण्डितानां मतं प्राहुर्देवश्रवसमुद्भवम् ।। ३४.१८५ ।।

अस्मक्यां लभते पुत्रमनादृष्टिं यशस्विनम्।
निवर्त्तः शक्रशत्रुघ्नं श्राद्धदेवं महाबलम् ।। ३४.१८६ ।।

अजायत श्राद्धदेवो निषधादिर्यतः श्रुतः।
एकलव्यो महावीर्यो निषादैः परिवर्द्धितः ।। ३४.१८७ ।।

गण्डूषायानपत्याय कृष्णस्तुष्टोऽददत् सुतौ।
चारुदेष्णञ्च साम्बञ्च कृतास्त्रौ शस्तलक्षणौ ।। ३४.१८८ ।।

तन्तिजस्तन्तिमालश्च स्वपुत्रौ कनकस्य तु।
वस्तावनेस्त्वपुत्राय वसुदेवः प्रतापवान्।
सौतिर्ददौ सुतं वीरं शौरिं कौशिकमेव च ।। ३४.१८९ ।।

तपाश्च कोधनुश्चैव विरजाः श्यामसृञ्जिमौ।
अनपत्योऽभवच्छ्यामः श्यामकस्तु वनं ययौ।
जुगुप्समानो भोजत्वं राजर्षित्वमवाप्नुयात् ।। ३४.१९० ।।

य इदं जन्म कृष्णस्य पठते नियतव्रतः।
श्रावयेद्ब्राह्मणञ्चापि सुमहत्सुखमाप्नुयात् ।। ३४.१९१ ।।

देवदेवो महातेजाः पूर्व्वं कृष्णः प्रजापतिः ।
विहारार्थं मनुष्येषु जज्ञे नारायणः प्रभुः ।। ३४.१९२ ।।

देवक्यां वसुदेवेन तपसा पुष्करेक्षणः।
चतुर्बाहुः स विज्ञेयो दिव्यरूपः श्रियान्वितः ।। ३४.१९३ ।।

प्रकाशो भगवान् योगी कृष्णो मानुषमागतः।
अव्यक्तोऽव्यक्तलिङ्गस्थः स एव भगवान् प्रभुः ।। ३४.१९४ ।।

नारायणो यतश्चक्रे प्रभवं चाव्ययो हि सः।
देवो नारायणो भूत्वा हरिरासीत्सनातनः ।। ३४.१९५ ।।

योऽसृजच्चादिपुरुषं पुरा चक्रे प्रजापतिम्।
अदितेरपि पुत्रत्वमेत्य यादवनन्दनः।
देवो विष्णुरिति ख्यातः शक्रादवरजोऽभवत् ।। ३४.१९६ ।।

प्रसादजं यस्य विभोरदित्याः पुत्रकारणम्।
वधार्थं सुरशत्रूणां दैत्यदानवरक्षसाम् ।। ३४.१९७ ।।

ययातिवंशजस्याथ वसुदेवस्य धीमतः।
कुलं पुण्यं यतः कर्म भेजे नारायणः प्रभुः ।। ३४.१९८ ।।

सागराः समकम्पन्त चेलुश्च धरणीधराः।
जज्वलुश्चाग्निहोत्राणि जायमाने जनार्दने ।। ३४.१९९ ।।

शिवाश्च प्रववुर्वाताः प्रशान्तिमभवद्रजः।
ज्योतींष्यभ्यधिकं रेजुर्जायमाने जनार्दने ।। ३४.२०० ।।

अभिजिन्नाम नक्षत्रं जयन्ती नाम शर्वरी।
मुहूर्त्तो विजयो नाम यत्र जातो जनार्दनः ।। ३४.२०१ ।।

अव्यक्तः शाश्वतः कृष्णो हरिर्नारायणः प्रभुः।
जायते स्मैव भगवान् नयनैर्मोहयन् प्रजाः ।। ३४.२०२ ।।

आकाशात् पुष्पवृष्टीश्च ववर्ष त्रिदशेश्वरः।
गीर्भिर्मङ्गलयुक्ताभिः स्तुवन्तो मधुसूदनम्।
महर्षयः सगन्धर्वा उपतस्थुः सहस्रशः ।। ३४.२०३ ।।

वसुदेवस्तु तं रात्रौ जातं पुत्रमधोक्षजम्।
श्रीवत्सलक्षणं दृष्ट्वा दिवि दिव्यैः सुलक्षणैः।
उवाच वसुदेवः स्वं रूपं संहर वै प्रभो ।। ३४.२०४ ।।

भीतोऽहं कंसतस्तात एतदेव ब्रवीम्यहम्।
मम पुत्रा हतास्तेन ज्येष्ठास्तेऽद्भुतदर्शनाः ।। ३४.२०५ ।।

वसुदेववचः श्रुत्वा रूपं स हृतवान् प्रभुः।
अनुज्ञातः पिता त्वेनं नन्दगोपगृहं गतः।
उग्रसेनमते तिष्ठन् यशोदायै तदा ददौ ।। ३४.२०६ ।।

तुल्यकालन्तु गर्भिण्यौ यशोदा देवकी तथा।
यशोदा नन्दगोपस्य पत्नी सा नन्दगोपतेः ।। ३४.२०७ ।।

यामेव रजनीं कृष्णो जज्ञे वृष्णिकुलप्रभुः।
तामेव रजनीं कन्यां यशोदापि व्यजायत ।। ३४.२०८ ।।

तं जातं रक्षमाणस्तु वसुदेवो महायशाः।
प्रादात् पुत्रं यशोदायै कन्यान्तु जगृहे स्वयम् ।। ३४.२०९ ।।

दत्त्वैनं नन्दगोपस्य रक्षमामिति चाब्रवीत्।
सुतस्ते सर्व्वकल्याणो यादवानां भविष्यति।
अयं स गर्भो देवक्या अस्मत्क्लेशान् हनिष्यति ।। ३४.२१० ।।

उग्रसेनात्मजायाञ्च कन्यामानकदुन्दुभेः।
निवेदयामास तदा कन्येति शुभलक्षणा ।। ३४.२११ ।।

स्वासायां तनयं कंसो जातं नैवावधारयत्।
अथ तामपि दुष्टात्मा ह्युत्ससर्ज मुदान्वितः ।। ३४.२१२ ।।

हता वै या यदा कन्या जपत्येष वृथामतिः।
कन्या सा ववृधे तत्र वृष्णिसद्मनि पूजिता ।। ३४.२१३ ।।

पुत्रवत्परिपाल्यन्तो देवा देवान् यथा तदा ।
तामेव विधिनोत्पन्नामाहुः कन्यां प्रजापतिम् ।। ३४.२१४ ।।

एकादशा तु जज्ञे वै रक्षार्थं केशवस्य ह।
तां वै सर्वे सुमनसः पूजयिष्यन्ति यादवाः।
देवदेवो दिव्यवपुः कृष्णः संरक्षितोऽनया ।। ३४.२१५ ।।

ऋषय ऊचुः ।।

किमर्थं वसुदेवस्य भोजः कंसो नराधिपः।
जघान पुत्रान् बालान् वै तन्नो व्याख्यातुमर्हसि ।। ३४.२१६ ।।

सूत उवाच।।
श्रृणुध्वं वै यथा कंसः पुत्रानानकदुन्दुभेः।
जाताञ्जाताञ्चिशून् सर्व्वान् निष्पिपेष वृथामतिः ।। ३४.२१७ ।।

भयाद्यथा महाबाहुर्जातः कृष्णो विवासितः।
तथा च गोषु गोविन्दः संवृद्ध- पुरुषोत्तमः ।। ३४.२१८ ।।

उक्तं हि किल देवक्या वसुदेवस्य धीमतः ।
सारथ्यं कृतवान् कंसो युवराजस्तदाऽभवत् ।। ३४.२१९ ।।

ततोऽन्तरिक्षे वागासीद्दिव्या भूतस्य कस्यचित्।
कंसो यया सदा भीतः पुष्कला लोकसाक्षिणी ।। ३४.२२० ।।

यामेतां वहसे कंस रथेन परकारणात्।
अस्या यः सप्तमो गर्भः स ते मृत्युर्भविष्यति ।। ३४.२२१ ।।

तां श्रुत्वा व्यथितो वाणीं तदा कंसो वृथामतिः।
निष्क्रम्य खड्गं तां कन्यां हन्तुकामोऽभवत्तदा ।। ३४.२२२ ।।

तमुवाच महाबाहुर्वसुदेवः प्रतापवान्।
उग्रसेनात्मजं कंसं सौहृदात्प्रणयेन च ।। ३४.२२३ ।।

नस्त्रियं क्षत्रियो जातु हन्तुमर्हति कश्चन।
उपायः परिदृष्टोऽत्र मया यादवनन्दन ।। ३४.२२४ ।।

योऽस्याः सम्भवते गर्भः सप्तमः पृथिवी पते।
तमहन्ते प्रयच्छामि तत्र कुर्य्या यथाक्रमम् ।। ३४.२२५ ।।

त्वं त्विदानीं यथेष्टत्वं वर्तेथा भूरिदक्षिण।
सर्वानस्यास्तु वै गर्भान् सत्यं नेष्यामि ते वशम् ।। ३४.२२६ ।।

एवं मिथ्या नरश्रेष्ठ वागेषा न भविष्यति।
एवमुक्तोऽनुनीतः स जग्राह तनयांस्तदा ।। ३४.२२७ ।।

वसुदेवश्च तां भार्य्यामवाप्य मुदितोऽभवत्।
कंसश्चास्यावधीत् पुत्रान् पापकर्म्मा वृथामतिः ।। ३४.२२८ ।।

ऋषय ऊचुः ।।

क एष वसुदेवश्च देवकी च यशस्विनी।
नन्दगोपस्तु कस्त्वेष यशोदा च महायशाः।
यो विष्णुं जनयामास या चैनं चाभ्यवर्द्धयत् ।। ३४.२२९ ।।

सूत ऊवाच।।
पुरुषाः कश्यपस्यासन्नादित्यास्तु स्त्रियास्तथा।
अथ कामान् महाबाहुर्देवक्याः समवर्द्धयत् ।। ३४.२३० ।।

अचरत् स महीं देवः प्रविष्टो मानुषीं तनुम्।
मोहयन् सर्वभूतानि योगात्मा योगमायया ।। ३४.२३१ ।।

नष्टे धर्म्मे तदा जज्ञे विष्णुर्वृष्णिकुले स्वयम्।
कर्तुं धर्म्मव्यवस्थानमसुराणां प्रणाशनम् ।। ३४.२३२ ।।

आहृता रुक्मिणी कन्या सत्या नग्नजितस्तदा।
सात्राजिती सत्यभामा जाम्बवत्यपि रोहिणी ।। ३४.२३३ ।।

शैब्या सुदेवी माद्री च सुशीला नाम चापरा।
कालिन्दी मित्रविन्दा च लक्ष्मणा जालवासिनी ।। ३४.२३४ ।।

एवमादीनि देवानां सहस्राणि च षोडश।
चतुर्द्दश तु ये प्रोक्ता गणाश्चाप्सरसां दिवि ।
विचिन्त्य देवैः शक्रेण विशिष्टास्त्विह प्रेषिताः ।। ३४.२३५ ।।

पत्न्यर्थं वासुदेवस्य उत्पन्ना राजवेश्मसु।
एताः पत्न्यो महाभागा विंष्वक्सेनस्य विश्रुताः ।। ३४.२३६ ।।

प्रद्युम्नश्चारुदेष्णश्च सुदेष्णः शरभस्तथा।
चारुश्च चारुभद्रश्च भद्रचारुस्तथाऽपरः ।। ३४.२३७ ।।

चारुविन्ध्यश्च रुक्मिण्यां कन्या चारुमती तथा।
सानुर्भानुस्तथाक्षश्च रोहितो मन्त्रयस्तथा ।। ३४.२३८ ।।

जरान्धकस्ताम्रवक्षा भौमरिश्च जरन्धमः।
चतस्रो जज्ञिरे तेषां स्वसारो गरुडध्वजात् ।। ३४.२३९ ।।

भानुर्भौमरिका चैव ताम्रपर्णी जरन्धमा।
सत्यभामासुतानेताञ्जाम्बवत्याः प्रजाः श्रृणु ।। ३४.२४० ।।

भद्रश्च भद्रगुप्तश्च भद्रविन्द्रस्तथैव च।
सप्तबाहुश्च विख्यातः कन्या भद्रावती तथा।
सम्बोधनी च विख्याता ज्ञेया जाम्बवतीसुताः ।। ३४.२४१ ।।

संग्रामजिच्च शतजित् त न च सहस्रजित्।
एते पुत्राः सुदेव्याश्च विष्वक्सेनस्य कीर्त्तिताः ।। ३४.२४२ ।।

वृको वृकाश्वो वृकजिद्वृजिनी च सुराङ्गना।
मित्रबाहुः सुनीथश्च नाग्नजित्याः प्रजास्त्विह ।। ३४.२४३ ।।

एवमादीनि पुत्राणां सह स्राणि निबोधत।
प्रयुतन्तु समाख्यातं वासुदेवस्य ये सुताः ।। ३४.२४४ ।।

अयुतानि तथाष्टौ च शूरा रणविशारदाः।
जनार्दनस्य वंशो वः कीर्त्तितोऽयं यथातथम् ।। ३४.२४५ ।।

बृहती नर्तकोन्नेयी सुनये सङ्गता तथा ।
कन्या सा बृहदुच्छस्य शौनेयस्य महात्मनः ।। ३४.२४६ ।।

तस्याः पुत्रास्तु विख्याता स्त्रयः समितिशोभनाः ।
अङ्गदः कुमुदः श्वेतः कन्या श्वेता तथैव च ।। ३४.२४७ ।।

अवगाहश्च चित्रश्च शूरश्चित्रवरश्च यः।
चित्रसेनः सुतश्चास्य कन्या चित्रवती तथा ।। ३४.२४८ ।।

तुम्बश्च तुम्बबाणश्च जनस्तम्बश्च तावुभौ।
उपाङ्गस्य स्मृतौ द्वौ तु वज्रारः क्षिप्र एव च ।। ३४.२४९ ।।

भूरीन्द्रसेनो भूरिश्च गवेषस्य सुतावुभौ ।
युधिष्ठिरस्य कन्या तु सुतनुर्नाम विश्रुता ।। ३४.२५० ।।

तस्यामश्वसुतो जज्ञे वज्रो नाम महायशाः।
वज्रस्य प्रतिबाहुस्तु सुचारुस्तस्य चात्मजः ।। ३४.२५१ ।।

काश्मा सुपार्श्वं तनयं जज्ञे साम्बा तरस्विनम्।
तिस्रः कोट्यस्तु पुत्राणां यादवानां महात्मनाम् ।। ३४.२५२ ।।

षष्टिंशतसहस्राणि वीर्य्यवन्तो महाबलाः।
देवांशाः सर्व्व एवेह उत्पन्नास्ते महौजसः ।। ३४.२५३ ।।

दैवासुरे हता ये च असुरा वै महातपाः।
इहोत्पन्ना मनुष्येषु बाधन्ते सर्व्वमानवान् ।
तेषामुत्सादनार्थन्तु उत्पन्ना यादवे कुले ।। ३४.२५४ ।।

कुलानि दश चैकञ्च यादवानां महात्मनाम्।
सर्व्वमककुलं यद्वद्वर्त्तते वैष्णवे कुले ।। ३४.२५५ ।।

विष्णुस्तेषां प्रमाणे च प्रभुत्वे च व्यवस्थितः ।
निदेशस्थायिभिस्तस्य बद्ध्यन्ते सर्वमानुषाः ।। ३४.२५६ ।।

इति प्रसूतिर्वृष्णीनां समासव्यासयोगतः।
कीर्त्तिता कीर्त्तनाच्चैव कीर्त्तिसिद्धिमभीप्सिताम् ।। ३४.२५७ ।।

इति श्रीमहापुराणे वायुप्रोक्ते विष्णुवंशानुकीर्त्तनं नाम चतुस्त्रिंशोऽध्यायः ।। ३४ ।। *

मनुष्यप्रकृतीन् देवान् कीर्त्यमानान्निबोधत ।
सङ्कर्षणो वासुदेवः प्रद्युम्नः साम्ब एव च ।। ३५.१ ।।
अनिरुद्धश्च पञ्चैते वंशवीराः प्रकीर्त्तिताः।
सप्तर्षयः कुबेरश्च यक्षो मणिवरस्तथा ।। ३५.२ ।।
शालकी बदरश्चैव विद्वान् धन्वन्तरिस्तथा।
नन्दिनश्च महादेवः शालङ्कायन उच्यते।
आदिदेवस्तदा जिष्णुरेभिश्च सह दैवतैः ।। ३५.३ ।।
।।ऋषय ऊचुः ।।
विष्णुः किमर्थं सम्भूतः स्मृताः सम्भूतयः कति।
भविष्याः कति वान्ये तु प्रादुर्भावा महात्मनः ।। ३५.४ ।।
ब्रह्मक्षेत्रे युगान्तेषु किमर्थमिह जायते ।
पुनः पुनर्म्मनुष्येषु तन्नः प्रब्रूहि पृच्छताम् ।। ३५.५ ।।
विस्तरेणैव सर्वाणि कर्म्माणि रिपुघातिनः।
श्रोतुमिच्छामहे सम्यग् देहैः कृष्णस्य धीमतः ।। ३५.६ ।।
कर्म्मणामानुपूर्व्यञ्च प्रादुर्भावाश्च ये प्रभो ।
या चास्य प्रकृतिः सूत ताश्चास्मान् वक्तुमर्हसि ।। ३५.७ ।।
कथं स भगवान् विष्णुः सुरेष्वरिनिषूदनः।
वसुदेवकुले धीमान् वासुदेवत्वमागतः ।। ३५.८ ।।
अमरैः सूत किं पुण्यं पुण्यकृद्भिरलंकृतम्।
देवलोकं समुत्सृज्य मर्त्यलोकमिहागतः ।। ३५.९ ।।
देवमानुषयोर्नेता भूर्भुवःप्रसवो हरिः।
किमर्थं दिव्यमात्मानं मानुषे समवेशयत् ।। ३५.१० ।।
यश्चक्रं वर्तयत्येको मनुष्याणां मनोमयम्।
मनुष्ये स कथं बुद्धिं चक्रे चक्रभृतां वरः ।। ३५.११ ।।
गोपायनं यः कुरुते जगतां सार्व्वलौकिकम्।
स कथं गां गतो विष्णुर्गोपमन्वकरोत्प्रभुः ।। ३५.१२ ।।
महाभूतानि भूतात्मा यो ददार चकार ह।
श्रीगर्भः स कथं गर्भे स्त्रिया भूचरया धृतः ।। ३५.१३ ।।
येन लोकान् क्रमैर्जित्त्वा त्रिभिस्त्रींस्त्रिदशेप्सया।
स्थापिता जगतो मार्गास्त्रिवर्गप्रवरास्त्रयः ।। ३५.१४ ।।
योऽन्तकाले जगत्पीत्वा कृत्वा तोयमयं वपुः।
लोकमेकार्णवं चक्रे दृश्यादृश्येन वर्त्मना ।। ३५.१५ ।।
यः पुराणे पुराणात्मा वाराहं वपुरास्थितः।

ददौ जित्वा वसुमतीं सुराणां सुरसत्तमः ।। ३५.१६ ।।
येन सैंहं वपुः कृत्वा द्विधाकृत्वा च यत्पुनः।
पूर्व्वदैत्यो महावीर्य्यो हिरण्यकशिपुर्हतः ।। ३५.१७ ।।
यः पुरा ह्यनलो भूत्वा और्व्वः संवर्त्तको विभुः।
पातालस्थोऽर्णवगतः पपौ तोयमयं हविः ।। ३५.१८ ।।
सहस्रचरणं देवं सहस्रांशुं सहस्रशः।
सहस्रशिरसं देवं यमाहुर्वै युगे युगे ।। ३५.१९ ।।
नाभ्यारण्याः समुद्भूतं यस्य पैतामहं गृहम्।
एकार्णवगते लोके तत्पङ्कजमपङ्कजम् ।। ३५.२० ।।
येन ते निहता दैत्याः संग्रामे तारकामये।
सर्व्वदेवमयं कृत्वा सर्वायुधधरं वपुः ।। ३५.२१ ।।
गरुडस्थेन चोत्सिक्तः कालनेमिर्निपातितः।
उत्तरांशे समुद्रस्य क्षीरोदस्यामृतोदधेः।
यः शेते शाश्वतं योगमास्थाय तिमिरं महत् ।। ३५.२२ ।।
पुराणी गर्भमधत्त दिव्यं तपःप्रकर्षाददितिः पुरा यम्।
शक्रञ्च यो दैत्यगणावरुद्धं गर्भावमानेन भृशं चकार ।। ३५.२३ ।।
यदानिलो लोकपदानि हृत्वा चकार दैत्यान् सलिलेशयांस्तान् ।
कृत्वादिदेवस्त्रिदिवस्य देवांश्चक्रे सुरेशं पुरुहूतमेव ।। ३५.२४ ।।
गार्हपत्येन विधिना अन्वाहार्य्येण कर्म्मणा।
अग्निमाहवनीयञ्च वेदिञ्चैव कुशस्रवम् ।। ३५.२५ ।।
प्रोक्षणीयं स्रुवञ्चैव अवभृथं तथैव च।
अथ त्रीनिह यश्चक्रे हव्यभाग प्रदान्मखे ।। ३५.२६ ।।
हव्यादांश्च सुरांश्चक्रे कव्यादांश्च पितृनपि।
भोगार्थं यज्ञविधिना यो यज्ञो यज्ञकर्म्मणि ।। ३५.२७ ।।
यूपान् समित्स्रुवं सोमं पवित्रं परिधीनपि।
यज्ञियानि च द्रव्याणि यज्ञीयांश्च तथानलान् ।। ३५.२८ ।।
सदस्यान् यजमानांश्च अश्वमेधान् क्रतूत्तमान्।
विबभ्राज पुरा यश्च पारमेष्ठ्येन कर्म्मणा ।। ३५.२९ ।।
युगानुरूपं यः कृत्वा त्रील्लोँकान् हि यथाक्रमम्।
क्षणा निमेषाः काष्ठाश्च कलास्त्रैकालमेव च ।। ३५.३० ।।
मुहूर्त्तास्तिथयो मासा दिनसंवत्सरास्तथा।
ॠतवः कालयोगाश्च प्रमाणं त्रिविधन्तथा ।। ३५.३१ ।।
आयुः क्षेत्राण्युपचयं लक्षणं रूपसौष्ठवम्।

मेधा वित्तं च शौर्य्यञ्च शास्त्रस्यैव च पारणम् ।। ३५.३२ ।।
त्रयो वर्णास्त्रयो लोकास्त्रैविद्यं पावकास्त्रयः।
त्रैकाल्यं त्रीणि कर्म्माणि तिस्रो मायास्त्रयो गुणाः ।। ३५.३३ ।।
सृष्टा लोकाः सुराश्चैव येनात्यन्तेन कर्म्मणा।
सर्व्वभूतगणाः सृष्टाः सर्व्वभूतगणात्मना ।। ३५.३४ ।।
नृणामिन्द्रियपूर्व्वेण योगेन रमते च यः ।
गतागतानां यो नेता सर्व्वत्र विविधेश्वरः ।। ३५.३५ ।।
यो गतिर्धर्मयुक्तानामगतिः पापकर्म्मणाम्।
चातुर्वर्ण्यस्य प्रभवश्चातुर्वर्ण्यस्य रक्षिता ।। ३५.३६ ।।
चातुर्विद्यस्य यो वेत्ता चतुराश्रमसंश्रयः।
दिगन्तरं नभो भूमिरापो वायुर्विभावसुः ।। ३५.३७ ।।
चन्द्रसूर्य्यद्वयं ज्योतिर्युगेशः क्षणदाचरः।
यः परः श्रूयते देवो यः परं श्रूयते तपः ।। ३५.३८ ।।
यः परन्तपसः प्राहुर्यः परम्परमात्मवान्।
आदित्यादिस्तु यो देवो यश्च दैत्यान्तको विभुः ।। ३५.३९ ।।
युगान्तेष्वन्तको यश्च यश्च लोकान्तकान्तकः।
सेतुर्यो लोकसेतूनां मेध्यो यो मेध्यकर्म्मणाम् ।। ३५.४० ।।
वेद्यो यो वेदविदुषां प्रभुर्यः प्रभवात्मनाम्।
सोमभूतस्तु भूतानामग्निभूतोऽग्निवर्चसाम् ।। ३५.४१ ।।
मनुष्याणां मनोभूतस्तपोभूतस्तपस्विनाम् ।
विनयो नयतृप्तानां तेजस्तेजस्विनामपि ।। ३५.४२ ।।
विग्रहो विग्रहाणां यो गतिर्गतिमतामपि।
आकाश प्रभवो वायुर्वायुप्राणा हुताशनः ।। ३५.४३ ।।
दिवा हुताशनप्राणाः प्राणोऽग्नेर्मधुसूदनः।
रसोऽभवच्छोणितं वै शोणितान्मांसमुच्यते ।। ३५.४४ ।।
मांसात्तु मेदसो जन्म मेदसोऽस्थि निरूप्यते।
अस्थ्ना मज्जा समभवन्मज्जातः शुक्रसम्भवः ।। ३५.४५ ।।
शुक्राद्घर्भः समभवद्रसमूलेन कर्म्मणा।
तत्रापि प्रथमञ्चापस्ताः सौम्यराशिरुच्यते ।। ३५.४६ ।।
गर्भोष्मसम्भवो ज्ञेयो द्वितीयो राशिरुच्यते।
शुक्रं सोमात्मकं विद्यादार्त्तवं पावकात्मकम् ।। ३५.४७ ।।
भावौ रसानुगावेतौ वीर्य्ये च शशिपावकौ।
कफवर्गेऽभवच्छुक्रं पित्तवर्गे च शोणितम् ।। ३५.४८ ।।

कफस्य हृदयं स्थानं नाभ्यां पित्तं प्रतिष्ठितम्।
देहस्य मध्ये हृदयं स्थानन्तु मनसः स्मृतम् ।। ३५.४९ ।।
नाबिकोष्ठान्तरं यत्तु तत्र देवो हुताशनः।
मनः प्रजापतिर्ज्ञेयं कफः सोमो विभाव्यते ।। ३५.५० ।।
पित्तमग्निः स्मृतावेतावग्निसोमात्मकं जगत्।
एवं प्रवर्त्तितो गर्भो वर्त्ततेऽम्बुदसन्निभः ।। ३५.५१ ।।
वायुः प्रवेशनं चक्रे सङ्गतः परमात्मना।
स पञ्चधा शरीरस्थो विद्यते वर्द्धयेत् पुनः ।। ३५.५२ ।।
प्राणापानौ समानश्च उदानो व्यान एव च।
प्राणोऽस्य परमात्मानं वर्द्धयन् परिवर्त्तते ।। ३५.५३ ।।
अपानः पश्चिमं कायमुदानोर्द्ध्वशरीरगः।
व्यानो व्यानस्यते येन समानः सर्व्वसन्धिषु ।। ३५.५४ ।।
भूतावाप्तिस्ततस्तस्य जायतेन्द्रियगोचरा।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।। ३५.५५ ।।
सर्व्वेन्द्रिया निविष्टास्तं स्वं स्वं योगं प्रचक्रिरे।
पार्थिवं देहमाहुस्तं प्राणात्मानं च मारुतम् ।। ३५.५६ ।।
छिद्राण्याकाशयोनीनि जलास्रावं प्रवर्त्तते ।
तेजश्चक्षुःष्विता ज्योत्स्ना तेषां यन्नामतः स्मृतम्।
सङ्ग्रामा विषयाश्चैव यस्य वीर्य्यात्प्रवर्त्तिताः ।। ३५.५७ ।।
इत्येतान् पुरुषः सर्व्वान् सृजँल्लोकान् सनातनः।
नैधनेऽस्मिन् कथं लोके नरत्वं विष्णुरागतः ।। ३५.५८ ।।
एष नः संशयो धीमन्नेष वै विस्मयो महान् ।
कथं गतिर्गतिमतामापन्नो मानुषीं तनुम् ।। ३५.५९ ।।
श्रोतुमिच्छामहे विष्णोः कर्म्माणि च यथाक्रमम्।
आश्चर्य्याणि परं विष्णुर्वेददेवैश्च कथ्यते ।। ३५.६० ।।
विष्णोरुत्पत्तिमाश्चर्य्यं कथयस्व महामते।
एतदाश्चर्य्यमाख्यानं कथ्यतां वै सुखावहम् ।। ३५.६१ ।।
प्रख्यातबलवीर्य्यस्य प्रादुर्भावा महात्मनः।
कर्म्मणाश्चर्य्यभूतस्य विष्णोः सत्त्वमिहोच्यताम् ।। ३५.६२ ।।
।।सूत उवाच।।
अहञ्च कीर्त्तयिष्यामि प्रादुर्भावं महात्मनः।
यथा स भगवाञ्जातो मानुषेषु महातपाः ।। ३५.६३ ।।
सप्तसप्ततपः प्रोक्ता भृगुशापेन मानुषे।

जायते च युगान्तेषु देवकार्य्यर्थसिद्धये ।। ३५.६४ ।।
तस्य दिव्यतनुं विष्णोर्गदतो मे निबोधत।
युगधर्म्मे परावृत्ते काले च शिथिले प्रभुः ।। ३५.६५ ।।
कर्तुं धर्म्मव्यवस्थानं जायते मानुषेष्विह।
भृगोः शापनिमित्तेन देवासुरकृतेन च ।। ३५.६६ ।।

।।ऋषय ऊचुः।।

कथं देवासुरकृते अध्याहारमवाप्नुयात्।
एतद्वेदितुमिच्छामो वृत्तं दैवासुरं कथम् ।। ३५.६७ ।।

।।सूत उवाच।।

दैवासुरं यथावृत्तं ब्रुवतस्तन्निबोधत।
हिरण्यकशिपुर्दैत्यस्त्रैलोक्यं प्राक् प्रशासति ।। ३५.६८ ।।
बलिनाधिष्ठितं राष्ट्रं पुनर्लोकत्रये क्रमात्।
सख्यमासीत्परं तेषां देवानामसुरैः सह ।। ३५.६९ ।।
युगं वै दशसङ्कीर्णमासीदव्याहतं जगत्।
निदेशस्थायिनश्चैव तयोर्देवासुराभवन् ।। ३५.७० ।।
बलवान् वै विवादोऽयं संप्रवृत्तः सुदारुणः।
देवासुराणां च तदा घोरक्षयकरो महान् ।। ३५.७१ ।।
तेषां दायनिमित्तं वै संग्राणा बहवोऽभवन्।
वाराहेऽस्मिन् दश द्वौ च षण्डामार्कोत्तराः स्मृता ।। ३५.७२ ।।
नामतस्तु समासेन श्रृणुध्वं तान् विवक्षतः।
प्रथमो नारसिंहस्तु द्वितीयश्चापि वामनः ।। ३५.७३ ।।
तृतीयः स तु वाराहश्चतुर्थोऽमृतमन्धनः।
संग्रामः पञ्चमश्चैव सुघोरस्तारकामयः ।। ३५.७४ ।।
षष्ठो ह्याडीबकस्तेषां सप्तमस्त्रैपुरः स्मृतः।
अन्धकारोऽष्टमस्तेषां ध्वजश्च नवमः स्मृतः ।। ३५.७५ ।।
वार्त्तश्च दशमो ज्ञेयस्ततो हाला हलः स्मृतः।
स्मृतो द्वादशमस्तेषां घोरकोलाहलोऽपरः ।। ३५.७६ ।।
हिरण्यकशिपुर्दैत्यो नरसिंहेन सूदितः।
वामनेन बलिर्वद्धस्त्रैलोक्याक्रमणे कृते ।। ३५.७७ ।।
हिरण्याक्षो हतो द्वन्द्वे प्रतिवादे तु दैवतैः।
महाबलो महासत्त्वः संग्रामेष्वपराजितः ।। ३५.७८ ।।
दंष्ट्रायान्तु वराहेण समुद्राद्भूर्यदा कृता ।
प्राह्लादो निर्जितो युद्धे इन्द्रेणामृतमन्थने ।। ३५.७९ ।।

विरोचनस्तु प्राह्लादिर्नित्यमिन्द्रवधोद्यतः।
इन्द्रेणैव स विक्रम्य निहतस्तारकामये ।। ३५.८० ।।
भवादवध्यतां प्राप्य विशेषास्त्रादिभिस्तु यः।
सञ्जभो निहतः षष्ठे शक्राविष्टेन विष्णुना ।। ३५.८१ ।।
अशक्नुवन्तो देवेषु पुरं गोप्तुं त्रिदैवतम् ।
निहता दानवाः सर्वे त्रिपुरस्त्र्यम्बकेण तु ।। ३५.८२ ।।
अष्टमे त्वसुराश्चैवं राक्षसाश्चान्धकारकाः।
जितदेवमनुष्यैस्तु पितृभिश्चैव सङ्गतान् ।। ३५.८३ ।।
संवृतान् दानवांश्चैव सङ्गतान् कृत्स्नशश्च तान् ।
तथा विष्णुसहायेन महेन्द्रेण निबर्हिताः ।। ३५.८४ ।।
हतो ध्वजो महेन्द्रेण मायाच्छन्नश्च योधयन्।
ध्वजे लक्ष्यं समाविश्य विप्रवर्त्तिर्महाभुजः ।। ३५.८५ ।।
दैत्यांश्च दानवांश्चैव संहतान् कृत्स्नशश्च तान्।
रजिः कोलाहले सर्वान् देवैः परिवृतोऽजयत्।
यज्ञामृतेन विजितौ षण्डामार्कौ तु दैवतैः ।। ३५.८६ ।।
एते दैवासुरा वृत्ताः संग्रामा द्वादशैव तु।
देवासुरक्षयकराः प्रजानामशिवाय च ।। ३५.८७ ।।
हिरण्यकशिपू राजा वर्षाणामर्बुदं बभौ।
तथा शतसहस्राणि ह्यधिकानि द्विसप्ततिः ।
अशीतिं च सहस्राणि त्रैलोक्यस्येश्वरोऽभवत् ।। ३५.८८ ।।
पर्याये तस्य राजाऽनु बलिर्वर्षार्बुदं पुनः ।
षष्टिं चैव सहस्राणि त्रिंशतं नियुतानि च ।। ३५.८९ ।।
बले राज्याधिकारस्तु यावत्कालं बभूव ह।
प्रह्लादेन गृहीतोऽभूत्तावत्कालं तदासुरैः ।। ३५.९० ।।
इन्द्रास्त्रयस्ते विख्याता असुराणां महौजसः ।
दैत्यसंस्थमिदं सर्वमासीद्दशयुगं किल ।। ३५.९१ ।।
असपत्नं ततः सर्वं राष्ट्रं दशयुगं पुरा।
त्रैलोक्यमव्ययमिदं महेन्द्रेण तु पाल्यते ।। ३५.९२ ।।
प्रह्लादस्य ततश्चादस्त्रैलोक्यं कालपर्ययात् ।
पर्यायेण च संप्राप्ते त्रैलोक्ये पाकशासनः ।। ३५.९३ ।।
ततोऽसुरान् परित्यज्य यज्ञे देवा उपागमन् ।
यज्ञे देवानथ गते काव्यं ते ह्यसुराब्रुवन् ।। ३५.९४ ।।
कृतं नो मिषतां राष्ट्रं त्यक्त्वा यज्ञं पुनर्गताः।

स्थातुं न शक्नुमो ह्यद्य प्रविशामो रसातलम् ।। ३५.९५ ।।
एवमुक्तोऽब्रवीदेतान् विषण्णः सान्त्वयन् गिरा।
माभैष्ट धारयिष्यामि तेजसा स्वेन चासुराः ।। ३५.९६ ।।
वृष्टिरोषधयश्चैव रसा वसु च यद्वयम्।
कृत्स्ना मयि च तिष्ठन्ति पादस्तेषां सुरेषु वै।
युष्मदर्थं प्रदास्यामि तत्सर्वं धार्यते मया ।। ३५.९७ ।।
ततो देवासुरान् दृष्ट्वा धृतान् काव्येन धीमता।
अमन्त्रयंस्तदा ते वै संविग्ना विजिगीषया ।। ३५.९८ ।।
एष काव्य इदं सर्वं व्यावर्त्तयति नो बलात् ।
साधु गच्छामहे तूर्णं क्षीणान्नाप्याययस्व तान् ।
प्रसह्य हत्वा शिष्टान् वै पातालं प्रापयामहे ।। ३५.९९ ।।
ततो देवाः सुसंरब्धा दानवानभिसृत्य वै।
जघ्नुस्तै र्वध्यमानास्ते काव्यमेवाभिदुद्रुवुः ।। ३५.१०० ।।
ततः काव्यस्तु तान्दृष्ट्वा तूर्णं देवैरभिद्रुतान्।
समरेऽक्त्रक्षतार्त्तांस्तान् देवेभ्यस्तान् दितेः सुतान् ।। ३५.१०१ ।।
काव्यो दृष्ट्वा स्थितान् देवान् तत्र देवोऽभ्यचिन्तयत्।
तानुवाच ततो ध्यात्वा पूर्ववृत्तमनुस्मरन् ।। ३५.१०२ ।।
त्रैलोक्यं विजितं सर्वं वामनेन त्रिभिः क्रमैः ।
बलिर्बद्धो हतो जम्भो निहतश्च विरोचनः ।। ३५.१०३ ।।
महार्हेषु द्वादशसु संग्रामेषु सुरैर्हताः।
तैस्तैरुपायैर्भूयिष्ठा निहता ये प्रधानतः ।। ३५.१०४ ।।
किञ्चिच्छिष्टास्तु वै यूयं युद्धेष्वन्त्येषु वै स्वयम्।
नीतिं वो हि विधास्यामि कालः कश्चित्प्रतीक्ष्यताम् ।। ३५.१०५ ।।
यास्याम्यहं महादेवं मन्त्रार्थे विजयाय वः।
अग्निमाप्याययेद्धोता मन्त्रैरेव बृहस्पतिः ।। ३५.१०६ ।।
ततो यास्याम्यहं देवं मन्त्रार्थे नीललोहितम्।
युष्माननुग्रहीष्यामि पुनः पश्चादिहागतः ।। ३५.१०७ ।।
यूयं तपश्चरध्वं वै संवृता वल्कलैर्वने।
न वै देवा वधिष्यन्ति यावदागमनं मम ।। ३५.१०८ ।।
अप्रतीपांस्ततो मन्त्रान् देवात् प्राप्य महेश्वरात्।
योत्स्यामहे पुनर्देवांस्ततः प्राप्स्यथ वै जयम् ।। ३५.१०९ ।।
ततस्ते कृतसंवादा देवानूचुस्ततोऽसुराः।
न्यस्तवादा वयं सर्वे लोकान् यूयं क्रमन्तु वै ।। ३५.११० ।।

वयं तपश्चरिष्यामः संवृता वल्कलैर्वने।
प्रह्लादस्य वचः श्रुत्वा सत्यव्याहरणं तु तत् ।। ३५.१११ ।।
ततो देवा निवृत्ता वै विज्वरा मुदिताश्च ह।
न्यस्तशस्त्रेषु दैत्येषु स्वान् वै जग्मुर्यथागतान् ।। ३५.११२ ।।
ततस्तानब्रवीत्काव्यः कञ्चित्कालमुपास्यताम्।
निरुत्सुकैस्तपोयुक्तैः कालं कार्यार्थसाधकैः।
पितुर्ममाश्रमस्था वै सर्वे देवाः सवासवाः ।। ३५.११३ ।।
स सन्दिश्यासुरान् काव्यो महादेवं प्रपद्य च।
प्रणम्येनसुवाचाथ जगत्प्रभवमीश्वरम् ।। ३५.११४ ।।
मन्त्रानिच्छाम्यहं देव मे नसन्ति बृहस्पतौ।
पराभवाय देवानामसुरेष्वभयावहान् ।। ३५.११५ ।।
एवमुक्तोऽब्रवीद्देवो मन्त्रानिच्छसि वै द्विज।
व्रतं चर मयो द्दिष्टं ब्रह्मचारी समाहितः ।। ३५.११६ ।।
पूर्णं वर्षसहस्रं वै कुण्डधूममवाक्शिराः।
यद्युपास्यसि भद्रन्ते मत्तो मन्त्रमवाप्स्यसि ।। ३५.११७ ।।
तथोक्तो देव देवेन स शुक्रस्तु महातपाः।
पादौ संस्पृश्य देवस्य बाढमित्यभ्यभाषत ।। ३५.११८ ।।
व्रतं चराम्यहं शेषं यथोद्दिष्टोऽस्मि वै प्रभो।
ततो नियुक्तो देवेन कुण्डधारोऽस्य धूमकृत् ।। ३५.११९ ।।
असुराणां हितार्थाय तस्मिञ्छुक्रे गते तदा।
मन्त्रार्थं तत्र वसति ब्रह्मचर्ये महेश्वरः ।। ३५.१२० ।।
तद्बुद्ध्वा नातिपूर्वन्तु राज्यं न्यस्तं तदासुरैः।
तस्मिञ्छिद्रे तदामर्षा देवास्तान् समभिद्रवन्।
निशितात्तायुधाः सर्वे बृहस्पतिपुरोगमाः ।। ३५.१२१ ।।
दृष्ट्वासुरगणा देवान् प्रगृहीतायुधान् पुनः।
उत्पेतुः सहसा सर्वे सन्त्रस्तास्ते ततोऽभवन् ।। ३५.१२२ ।।
न्यस्तशस्त्रे जये दत्ते आचार्यव्रतमास्थिते।
सन्त्यज्य. समयं देवास्ते सपत्नजिघांसवः ।। ३५.१२३ ।।
अनाचार्यास्तु भद्रं वो विश्वस्तास्तपसि स्थिताः।
चीरवल्काजिनधरा निष्क्रिया निष्परिग्रहाः ।। ३५.१२४ ।।
रणे विजेतुं देवान् वै नशक्ष्यामः कथञ्चन।
अशुद्धेन प्रपद्यामः शरणं काव्यमातरम् ।। ३५.१२५ ।।
ज्ञापयामस्ततमिदं यावदागमनं गुरोः।

विनिवृत्ते ततः काव्ये योत्स्यामो युधि तान् सुरान् ।। ३५.१२६ ।।
एवमुक्त्वा सुरान् योग्यं शरणं काव्यमातरम्।
प्रापद्यन्त ततो भीतास्तदा चैव तदाऽभयम् ।। ३५.१२७ ।।
दत्तन्तेषान्तु भीतानां दैत्या नामभयार्थिनाम्।
न भेतव्यं न भेतव्य भयन्त्यजत दानवाः ।। ३५.१२८ ।।
मत्सन्निधौ वर्ततां वो न भीर्भवितुमर्हति।
भयाच्चाप्यभिपन्नांस्तान् दृष्ट्वा देवासुरांस्तदा ।। ३५.१२९ ।।
अभिजग्मुः प्रसह्यैतानविचार्य बलाबलम्।
तांस्त्रस्तान् वध्यमानांश्च देवैर्दृष्ट्वासुरांस्तदा ।। ३५.१३० ।।
देवी क्रुद्धाब्रवीदेनाननिन्द्रत्वं करोम्यहम्।
संस्तभ्य शीघ्रं संरम्भादिन्द्रं साऽभ्यचरत्ततः ।। ३५.१३१ ।।
ततः संस्तम्भितं दृष्ट्वा शक्रंदेवास्तु यूपवत्।
व्यद्रवन्त ततो भीता दृष्ट्वा शक्रं वशीकृतम् ।। ३५.१३२ ।।
गतेषु सुरसङ्घेषु विष्णुरिन्द्रमभाषत।
मांत्वं प्रविश भद्रन्ते नेष्यामि त्वां सुरेश्वर ।। ३५.१३३ ।।
एवमुक्तस्ततो विष्णुं प्रविवेश पुरन्दरः।
विष्णुना रक्षितं दृष्ट्वा देवी क्रुद्धा वचोऽवदत् ।। ३५.१३४ ।।
एषा त्वां विष्णुना सार्द्धं दहामि मघवानिव।
मिषतां सर्वभूतानां दृश्यतां मे तपोबलम् ।। ३५.१३५ ।।
तयाभिभूतौ तौ देवाविन्द्रविष्णू जजल्पतुः।
कथं मुच्येव सहितौ विष्णुरिन्द्रमभाषत ।। ३५.१३६ ।।
इन्द्रोऽब्रवीज्जहि ह्येनां यावन्नौ न दहेद्विभो।
विशेषेणाभिभूतोऽहमतस्त्वञ्च हि मा चिरम् ।। ३५.१३७ ।।
ततः समीक्ष्य तां विष्णुः स्त्रीवधं कर्त्तुमास्थितः।
अभिध्याय ततश्चक्रमापन्नः सत्वरं प्रभुः ।। ३५.१३८ ।।
तस्याः सत्वरमाणायाः शीघ्रकारी सुरारिहा।
स्त्रिया विष्णुस्ततो देव्या क्रूरं बुद्ध्वा चिकीर्षितम्।
क्रुद्धस्तदस्त्रमाविद्ध्य शिरश्चिच्छेद माधवः ।। ३५.१३९ ।।
तं दृष्ट्वा स्त्रीवधं घोरं चुकोप भृगुरीश्वरः।
ततोऽभिशस्तो भृगुणा विष्णुर्भार्यावधे तदा ।। ३५.१४० ।।
यस्मात्ते जानता धर्मानवध्या स्त्री निषूदिता।
तस्मात्त्वं सप्तकृत्वो वै मानुषेषु प्रपत्स्यसि ।। ३५.१४१ ।।
ततस्तेनाभिशापेन नष्टे धर्मे पुनः पुनः।

लोके सर्वहितार्थाय जायते मानुषेष्विह ।। ३५.१४२ ।।
अनुव्याहृत्य विष्णुं स तदादाय शिरः स्वयम्।
समानीय ततः काये अपो गृह्येदमब्रवीत् ।। ३५.१४३ ।।
एष त्वां विष्णुना सत्ये हतां संजीवयाम्यहम् ।
यदि कृत्स्नो मया धर्मश्चरितो ज्ञायतेऽपि वा।
तेन सत्येन जीवस्व यदि सत्यं ब्रवीम्यहम् ।। ३५.१४४ ।।
सत्याभिव्याहृता तस्या देवी संजीविता तदा।
तदा तां प्रोक्ष्य शीताभिरद्भिर्जीवेति सोऽब्रवीत् ।। ३५.१४५ ।।
ततस्तां सर्वभूतानि दृष्ट्वा सुप्तोत्थितामिव।
साधु साध्वित्यदृश्यानां वाचस्ताः सस्वरुर्दिशः ।। ३५.१४६ ।।
दृष्ट्वा सञ्जीवितामेवं देवीं तां भृगुणा तदा।
मिषतां सर्वभूतानां तदद्भुतमिवाभवत् ।। ३५.१४७ ।।
असंभ्रान्तेन भृगुणा पत्नीं सञ्जीवितां ततः।
दृष्ट्वा शक्रो न लेभेऽथ शर्म काव्यभयात्ततः ।। ३५.१४८ ।।
प्रजागरे ततश्चेन्द्रो जयन्तीमात्मनः सुताम्।
प्रोवाच मतिमान् वाक्यं स्वां कन्यां पाकशासनः ।। ३५.१४९ ।।
एष काव्यो ह्यनिन्द्राय चरते दारुणं तपः।
तेनाहं व्याकुलः पुत्रि कृतो धृतिमता दृढम् ।। ३५.१५० ।।
गच्छ सम्भावयस्वैनं श्रमापनयनैः शुभैः।
तैस्तैर्मनोनुकूलैश्च ह्युपचारैरतन्द्रिता ।। ३५.१५१ ।।
देवी सा हीन्द्रतुहिता जयन्ती शुभचारिणी।
युक्तध्यानञ्च शाम्यं तं दुर्बलं धृतिमास्थितम् ।। ३५.१५२ ।।
पित्रा यथोक्तं काव्यं सा काव्ये कृतवती तदा।
गीर्भिश्चैवानुकूलाभिः स्तुवती वल्गुभाषिणी ।। ३५.१५३ ।।
गात्रसंवाहनैः काले सेवमाना सुखावहैः ।
शुश्रूषन्त्यनुकूला च उवास बहुलाः समाः ।। ३५.१५४ ।।
पूर्णे धूमव्रते चापि घोरे वर्षसहस्रिके ।
वरेण च्छन्दयामास काव्यं प्रीतोऽभवत्तदा ।। ३५.१५५ ।।
एवं ब्रुवंस्त्वयैकेन चीर्णं नान्येन केनचित्।
तस्मात्त्वं तपसा बुद्ध्या श्रुतेन च बलेन च ।। ३५.१५६ ।।
तेजसा चापि विबुधान् सर्वानभिभविष्यसि।
यच्च किञ्चिन्मम ब्रह्मन् विद्यते भृगुनन्दन ।। ३५.१५७ ।।
साङ्गञ्च सरहस्यञ्च यज्ञोपनिषदान्तथा।

प्रतिभास्यति ते सर्वं तच्चाद्यन्तं न कस्यचित् ।। ३५.१५८ ।।
सर्वाभिभावी तेन त्वं द्विजश्रेष्ठो भविष्यसि।
एवं दत्त्वा वरांस्तस्मै भार्गवाय पुनः पुनः ।। ३५.१५९ ।।
अजेयत्वं धनेशत्वमवध्यत्वं च वै ददौ।
एतान् लब्ध्वा वरान् काव्यः सम्प्रहृष्टतनूरुहः ।। ३५.१६० ।।
हर्षात् प्रादुर्बभौ तस्य देवस्तोत्रं महेश्वरम्।
तदा तिर्यक्स्थितस्त्वेवं तुष्टुवे नीललोहितम् ।। ३५.१६१ ।।
नमोऽस्तु शितिकण्ठाय सुरापाय सुवर्चसे।
रिरिहाणाय लोपाय वत्सराय जगत्पते ।। ३५.१६२ ।।
कपर्दिने ह्यूर्द्ध्वरोम्णे हयाय करणाय च।
संस्कृताय सुतीर्थाय देवदेवाय रंहसे ।। ३५.१६३ ।।
उष्णीषिणे सुवक्राय सहस्राक्षाय मीढुषे।
वसुरेताय रुद्राय तपसे चीरवाससे ।। ३५.१६४ ।।
ह्रस्वाय मुक्तकेशाय सेनान्ये रोहिताय च ।। ३५.१६५ ।।
कवये राजवृद्धाय तक्षकक्रीडनाय च।
गिरिशायार्कनेत्राय यतिने जाम्बवाय च।
सुवृत्ताय सुहस्ताय धन्विने भार्गवाय च ।। ३५.१६६ ।।
सहस्रबाहवे चैव सहस्रामलचक्षुषे।
सहस्रकुक्षये चैव सहस्रचरणाय च ।। ३५.१६७ ।।
सहस्रशिरसे चैव बहुरूपाय वेधसे।
भवाय विश्वरूपाय श्वेताय पुरुषाय च ।। ३५.१६८ ।।
निषङ्गिणे कवचिने सूक्ष्माय क्षपणाय च।
ताम्राय चैव भीमाय उग्राय च शिवाय च ।। ३५.१६९ ।।
बभ्रवे च पिशङ्गाय पिङ्गलायारुणाय च।
महादेवाय शर्व्वाय विश्वरूपशिवाय च ।। ३५.१७० ।।
हिरण्याय च शिष्टाय श्रेष्ठाय मध्यमाय च ।
पिनाकिने चेषुमते चित्राय रोहिताय च ।। ३५.१७१ ।।
दुन्दुभ्यायैकपादाय अर्हाय बुद्धये तथा।
मृगव्याधाय सर्पाय स्थाणवे भीषणाय च ।। ३५.१७२ ।।
बहुरूपाय चोग्राय त्रिनेत्रायेश्वराय च।
कपिलायैकवीराय मृत्यवे त्र्यम्बकाय च ।। ३५.१७३ ।।
वास्तोष्पते विनाकाय शङ्कराय शिवाय च।
आरण्याय गुहस्थाय यतिने ब्रह्मचारिणे ।। ३५.१७४ ।।

साङ्ख्याय चैव योगाय ध्यानिने दीक्षिताय च।
अन्तर्हिताय शर्व्वाय मान्याय मालिने तथा ।। ३५.१७५ ।।
बुद्धाय चैव पुण्याय धार्मिकाय शुभाय च।
रोधसे चेकितानाय ब्रह्मिष्ठाय महर्षये ।। ३५.१७६ ।।
चतुष्पादाय मेध्याय धर्मिणे शीघ्रगाय च।
शिखण्डिने कपालाय दंष्ट्रिणे विश्वमेधसे ।। ३५.१७७ ।।
अप्रतीघाताय दीप्ताय भास्कराय सुमेधसे।
क्रूराय विकृतायैव बीभत्साय शिवाय च ।। ३५.१७८ ।।
सौम्याय चैव पुण्याय धार्मिकाय शुभाय च।
अवध्याय मृताङ्गाय नित्याय शाश्वताय च ।। ३५.१७९ ।।
साद्याय शरभायैव शूलिने च त्रिचक्षुषे।
सोमपायाज्यपायैव धूमपायोष्मपाय च ।। ३५.१८० ।।
शुचये रेरिहाणाय सद्योजाताय मृत्यवे।
पिशिताशाय खर्वाय मेधाय वैद्युताय च ।। ३५.१८१ ।।
व्याश्रिताय श्रविष्टाय भारतायान्तरिक्षये।
क्षमाय सह मानाय सत्याय तपनाय च ।। ३५.१८२ ।।
त्रिपुरघ्नाय दीप्ताय चक्राय रोमशाय च।
तिग्मायुधाय मेध्याय सिद्धाय च पुलस्तये ।। ३५.१८३ ।।
रोचमानाय खण्डाय स्फीताय ऋषभाय च।
भोगिने पुञ्जमानाय शान्तायैवोर्द्ध्वरेतसे ।। ३५.१८४ ।।
अघघ्नाय मखघ्नाय मृत्यवे यज्ञियाय च।
कृशानवे प्रचेताय वह्नये किशलाय च ।। ३५.१८५ ।।
सिकत्याय प्रसन्नाय वरेण्यायैव चक्षुषे।
क्षिप्रेगवे सुधन्वाय प्रमेध्याय प्रियाय च ।। ३५.१८६ ।।
रक्षोघ्नाय पशुघ्नाय विघ्नाय शयनाय च।
विभ्रान्ताय महन्ताय अन्तये दुर्गमाय च ।। ३५.१८७ ।।
दक्षाय च जघन्याय लोकानामीश्वराय च।
अनामयाय चोर्द्ध्वाय संहत्याधिष्ठिताय च ।। ३५.१८८ ।।
हिरण्यबाहवे चैव सत्याय शमनाय च।
असिकल्याय माघाय रीरिण्यायैकचक्षुषे ।। ३५.१८९ ।।
श्रेष्ठाय वामदेवाय ईशानाय च धीमते।
महाकल्पाय दीप्ताय रादेनाय हसाय च ।। ३५.१९० ।।
वृतधन्वने कविचिने रथिने च वरूथिने।

भृगुनाथाय शुक्राय वह्निरिष्टाय धीमते ।। ३५.१९१ ।।
अघाय अघशंसाय विप्रियाय प्रियाय च ।
दिग्वासःकृत्तिवासाय भगघ्नाय नमोऽस्तु ते ।। ३५.१९२ ।।
पशूनां पतये चैव भूतानां पतये नमः।
प्रणने ऋग्यजुःसाम्ने स्वधायै च सुधाय च ।। ३५.१९३ ।।
वषट्कारतमायैव तुभ्यमन्तात्मने नमः ।
स्रष्ट्रे धात्रे तथा होत्रे हर्त्रे च क्षपणाय च ।। ३५.१९४ ।।
भूतभव्यभवायैव तुभ्यं कालात्मने नमः।
वसवे चैव साध्याय रुद्रादित्याश्विनाय च ।। ३५.१९५ ।।
विश्वाय मरुते चैव तुभ्यन्देवात्मने नमः।
अग्निसोमर्त्विगिज्याय पशुमन्त्रौषधाय च ।। ३५.१९६ ।।
दक्षिणावभृथायैव तुभ्यं यज्ञात्मने नमः ।
तपसे चैव सत्याय त्यागाय च शमाय च ।। ३५.१९७ ।।
अहिंसायाप्यलोभाय सुवेशायातिशाय च।
सर्वभूतात्मभूताय तुभ्यं योगात्मने नमः ।। ३५.१९८ ।।
पृथिव्यै चान्तरिक्षाय दिवाय च महाय च।
जनस्तपाय सत्याय तुभ्यं लोकात्मने नमः ।। ३५.१९९ ।।
अव्यक्तायाथ महते भूतायैवोन्द्रियाय च ।
तन्मात्राय महान्ताय तुभ्यं तत्त्वात्मने नमः ।। ३५.२०० ।।
नित्याय चार्थलिङ्गाय सूक्ष्माय चेतनाय च।
शुद्धाय विभवे चैव तुभ्यं नित्यात्मने नमः ।। ३५.२०१ ।।
नमस्ते त्रिषु लोकेषु स्वरान्तेषु भवादिषु।
सत्यान्तेषु महान्तेषु चतुर्षु च नमोऽस्तु ते ।। ३५.२०२ ।।
नमःस्तोत्रे मया ह्यस्मिन् सदसद्व्याहृतं विभो।
मद्भक्त इति ब्रह्मण्य सर्वन्तत् क्षन्तुमर्हसि ।। ३५.२०३ ।।
इति श्रीमहापुराणे वायुप्रोक्ते विष्णुमाहात्म्ये शम्भुस्तवकीर्त्तनं नाम पञ्चत्रिंशोऽध्यायः ।। ३५ ।। *

सूत उवाच।।
एवमाराध्य देवेशमीशानं नीललोहितम्।
ब्रह्मेति प्रणतस्तस्मै प्राञ्जलिर्वाक्यमब्रवीत् ।। ३६.१ ।।
काव्यस्य गात्रं संस्पृश्य हस्तेन प्रीतिमान् भवः।
निकामं दर्शनं दत्त्वा तत्रैवान्तरधीयत ।। ३६.२ ।।
ततः सोऽन्तर्हिते तस्मिन् देवेशानुचरे तदा।
तिष्ठन्तीं प्राञ्जलिर्भूत्वा जयन्तीमिदमब्रवीत् ।। ३६.३ ।।
कस्य त्वं सुभगे का वा दुःखिते मयि दुःखिता।
महता तपसा युक्तं किमर्थं माञ्जुगोपसि ।। ३६.४ ।।
अनया सततं भक्त्या प्रश्रयेण दमेन च।
स्नेहेन चैव सुश्रोणि प्रीतोऽस्मि वरवर्णिनि ।। ३६.५ ।।
किमिच्छसि वरारेहे कस्ते कामः समृध्यताम्।
तं ते संपूरयाम्यद्य यद्यपि स्यात् सुदुर्लभम् ।। ३६.६ ।।
एवमुक्ताऽऽब्रवीदनं तपसा ज्ञातुमर्हसि।
चिकीर्षितं मे ब्रह्निष्ठत्वं हि वेत्थ यथातथम् ।। ३६.७ ।।
एवमुक्तेऽब्रवीदेनां दृष्ट्वा दिव्येन चक्षुषा।
माहेन्द्री त्वं वरारोहे मद्धितार्थमिहागता ।। ३६.८ ।।
मया सह त्वं सुश्रोणि दश वर्षाणि भामिनि।
अदृश्यं सर्वभूतैस्तु संप्रयोगमिहेच्छसि ।। ३६.९ ।।
देवेन्द्रानलवर्णाभे वरारोहे सुलोचने।
इमं वृणीष्व कामं ते मत्तो वै वल्गुभाषिणि ।। ३६.१० ।।
एवं भवतु गच्छामो गृहान् वै मत्तकाशिनि ।
ततः स्वगृहमागम्य जयन्त्या सहितः प्रभुः ।। ३६.११ ।।
स तया सं व सद्देव्या दश वर्षाणि भागशः।
अदृश्यः सर्वभूतानां मायया संवृतस्तदा ।। ३६.१२ ।।
कृतार्थमागतं दृष्ट्वा काव्यं सर्वे दितेः सुताः ।
अभिजग्मुर्गृहं तस्य मुदितास्ते दिदृक्षवः ।। ३६.१३ ।।
गता यदा न पश्यन्तो जयन्त्या संवृतं गुरुम्।
दाक्षिण्यं तस्य तद्बुध्वा प्रतिजग्मुर्यथागतम् ।। ३६.१४ ।।
बृहस्पतिस्तु संरुद्धं ज्ञात्वा काव्यं चकार ह।
पित्रर्थे दश वर्षाणि जयन्त्या हितकाम्यया ।। ३६.१५ ।।
बुद्ध्वा तदन्तरं सोऽथ दैत्यानामिव चोदितः।
काव्यस्य रूपमास्थाय सोऽसुरान्समभाषत ।। ३६.१६ ।।

ततः समागतान् दृष्ट्वा बृहस्पतिरुवाच तान्।
स्वागतं मम याज्यानां संप्राप्तोऽस्मि हिताय च ।। ३६.१७ ।।
अहं वोऽध्यापयिष्यामि प्राप्ता विद्या मया हि सा।
ततस्ते हृष्टमनसो विद्यार्थमुपपेदिरे ।। ३६.१८ ।।
पूर्णकामस्तदा तस्मिन् समये दशवार्षिके।
ययौ च समकालं स सद्योत्पन्नमतिस्तदा ।। ३६.१९ ।।
समयान्ते देवयानी सद्यो जाता सुता तदा।
बुद्धिं चक्रे ततश्चापि याज्यानां प्रत्यवेक्षणे ।। ३६.२० ।।
।।शुक्र उवाच।।
देवि गच्छामहे द्रष्टुं तव याज्यान् शुचिस्मिते।
विभ्रान्तप्रेक्षिते साध्वि त्रिवर्णायतलोचने ।। ३६.२१ ।।
एवमुक्ताऽब्रवीद्देवी भज भक्तान् महाव्रत।
एष ब्रह्मन् सतां धर्मो न धर्मं लोपयामि ते ।। ३६.२२ ।।
।।सूत उवाच।।
ततो गत्वासुरान् दृष्ट्वा देवाचार्येण धीमता।
वाञ्चितान् काव्यरूपेण वेधसाऽसुरमब्रवीत् ।। ३६.२३ ।।
काव्यं मां तात जानीध्वं एष ह्याङ्गिरसो भुवि।
वञ्चिता बत यूयं वै मयि शक्ते तु दानवाः ।। ३६.२४ ।।
श्रुत्वा तथा ब्रुवाणन्तं सम्भ्रान्ता दितिजास्ततः।
प्रेक्षन्ते स्म ह्युभौ तत्र सितासितशुचिस्मितौ ।। ३६.२५ ।।
सम्प्रमूढाः स्थिताः सर्वे प्रापद्यन्त न किञ्चन।
ततस्तेषु प्रमूढेषु काव्यस्तान् पुनरब्रवीत् ।। ३६.२६ ।।
आचार्य्यो वो ह्यहं काव्यो देवाचार्योऽयमङ्गिराः।
अनुगच्छत मां सर्वे त्यजतैनं बृहस्पतिम् ।। ३६.२७ ।।
एवमुक्तासुराः सर्वे तावृभौ समवैक्षत।
तदाऽसुरा विशेषन्तु न व्यजानंस्तयोर्द्वयोः ।। ३६.२८ ।।
बृहस्पतिरुवाचैतानसम्भ्रान्तोऽयमङ्गिराः।
काव्योऽहं यो गुरुर्दैत्या मद्रूपोऽयं बृहस्पतिः ।। ३६.२९ ।।
स मोहयति रूपेण मामकेनैष वोऽसुराः।
श्रुत्वा तस्य ततस्ते वै संमन्त्र्यार्थवचोऽब्रुवन् ।। ३६.३० ।।
अयन्नो दश वर्षाणि सततं शास्ति वै प्रभुः।
एष वै गुरुरस्माकमन्तरेप्सुरयं द्विजः ।। ३६.३१ ।।
ततस्ते दानवाः सर्वे प्रणिपत्याभिवाद्य च।

वचनं जगृहुस्तस्य चिराभ्यासेन मोहिताः ।। ३६.३२ ।।
ऊचुस्तमसुराः सर्वे क्रुद्धाः संरक्तलोचनाः.
अयङ्गुरुर्हितेऽस्माकं गच्छ त्वं नासि नो गुरुः ।। ३६.३३ ।।
भार्गवोऽङ्गिरसो वायं भवत्वेवैष नोगुरुः।
स्थिता वयं निदेशेऽस्य गच्छत्वं साधु मा चिरम् ।। ३६.३४ ।।
एवमुक्त्वासुराः सर्वे प्रापद्यन्त बृहस्पतिम्।
यदा न प्रतिपद्यन्ते तेनोक्तं तन्महद्धितम् ।। ३६.३५ ।।
चुकोप भार्गवस्तेषामवलेपेन वै तदा।
बोधिता हि मया यस्मान्न मां भजत दानवाः ।। ३६.३६ ।।
तस्मात् प्रनष्ट संज्ञां वै पराभवङ्गमिष्यथ।
इदि व्याहृत्य तान् काव्यो जगामाथ यथागतम् ।। ३६.३७ ।।
ज्ञात्वाऽभिशस्तानसुरान् काव्येन तु बृहस्पतिः।
कृतार्थः स तदा हृष्टः स्वं रूपं प्रत्यपद्यत।
बुद्ध्वाऽसुरांस्तदा भ्रष्टान् कृतार्थोऽन्तरधीयत ।। ३६.३८ ।।
ततः प्रनष्टे तस्मिंस्ते विभ्रान्ता दानवास्तदा।
अहो धिग् वञ्चिताः स्मेह परस्परमथाब्रुवन् ।। ३६.३९ ।।
पृष्ठतो विमुखाश्चैव ताडिता वेधसा वयम्।
दग्धाश्चैवोपयोगाच्च स्वेस्वे चार्थेषु मायया ।। ३६.४० ।।
ततोऽसुराः परित्रस्ता देवेभ्यस्त्वरिता ययुः।
प्रह्लादमग्रतः कृत्वा काव्यस्यानुगमं पुनः ।। ३६.४१ ।।
ततः काव्यं समासाद्य अभितस्थु रवाङ्मुखाः।
तानागतान् पुनर्दृष्ट्वा काव्यो याज्यानुवाच ह ।। ३६.४२ ।।
मयापि बोधिताः काले यतो मां नाभिनन्दथ।
ततस्तेनावलेपेन गता यूथं पराभवम् ।। ३६.४३ ।।
प्रह्लादस्तमथोवाच मानं त्वं त्यज भार्गव।
स्वान् याज्यान् भजमानांश्च भक्तांश्चैव विशेषतः ।। ३६.४४ ।।
त्वया पृष्टा वयं तेन देवाचार्येण मोहिताः।
भक्तानर्हसि नस्त्रातुं ज्ञात्वा दीर्घेण चक्षुषा ।। ३६.४५ ।।
यदि नस्त्वं न कुरुषे प्रसादं भृगुनन्दन।
अपध्याता स्त्वया ह्यद्य प्रवेक्ष्यामो रसातलम् ।। ३६.४६ ।।
सूत उवाच।।
ज्ञात्वा काव्यो यथातत्त्वं कारुण्येनानुकम्पया ।
एवमुक्तोऽनुनीतः स स्तुतः कोपं न्ययच्छत ।। ३६.४७ ।।

उवाचेदन्न भेतव्यं न गन्तन्यं रसातलम्।

अवश्यम्भावी ह्यर्थोऽयं प्राप्तो वो मयि जाग्रति ।। ३६.४८ ।।

न शक्यमन्यथा कर्तुं दृष्टं हि बलवत्तरम् ।

संज्ञा प्रनष्टा या वोऽद्य कामं तां प्रतिलप्स्यथ ।। ३६.४९ ।।

प्राप्तः पर्य्यायकालो व इति ब्रह्माऽभ्यभाषत।

मत्प्रसादाच्च युष्माभिर्भुक्तं त्रैलोक्यमूर्ज्जितम् ।। ३६.५० ।।

युगाख्यो दश संपूर्णो देवानाक्रम्य मूर्द्धनि।

तावन्तमेव कालं वै ब्रह्मा राज्यमभाषत ।। ३६.५१ ।।

सावर्णिके पुनस्तुभ्यं राज्यं किल भविष्यति।

लोकानामीश्वरो भावी पौत्रस्तव पुनर्बलिः ।। ३६.५२ ।।

एवं किलमहं प्रोक्तः पौत्रस्ते ब्रह्मणा स्वयम्।

तथाहृतेषु लोकेषु तपोऽस्य न किलाभवत् ।। ३६.५३ ।।

यस्मात् प्रवृत्तयश्चास्य न कामानभिसन्धिताः।

तस्मादजेन प्रीतेन दत्तं सावर्णिकेऽन्तरे ।। ३६.५४ ।।

देवराज्यं बलेर्भाव्यमिति मामीश्वरोऽब्रवीत्।

तस्माददृश्यो भूतानां कालाकाङ्क्षी स तिष्ठति ।। ३६.५५ ।।

प्रीतेन चामरत्वं वै दत्तं तुब्यं स्वयम्भुवा।

तस्मान्निरुत्सु कस्त्वं वै पर्य्यायं सह माकुलः ।। ३६.५६ ।।

न च शक्यं मया तुभ्यं पुरस्ताद्वै विसर्पितुम् ।

ब्रह्मणा प्रतिषिद्धोऽस्मि भविष्यं जानता प्रभो ।। ३६.५७ ।।

इमौ च शिष्यौ द्वौ मह्यं तुल्यावेतौ बृहस्पतेः ।

दैवतैः सह संरब्धान् सर्व्वान् वो धारयिष्यतः ।। ३६.५८ ।।

एवमुक्तस्तु दैतेयाः काव्येनाक्लिष्टकर्म्मणा।

ततस्ताभ्यां ययुः सार्द्धं प्रह्लादप्रमुखास्तदा ।। ३६.५९ ।।

अवश्यम्भावमर्थत्वं श्रुत्वा शुक्राच्च दानवाः।

सकृदाशंसमानास्ते जयं काव्येन भाषितम् ।। ३६.६० ।।

दंशिताः सायुधाः सर्वे ततो देवान् समाह्वयन्।

अथ देवासुरान् दृष्ट्वा संग्रामे समुपस्थितान् ।। ३६.६१ ।।

ततः संवृत्तसन्नाहा देवास्तान् समयोधयन्।

दैवासुरे ततस्तस्मिन् वर्त्तमाने शतं समाः।

अजयन्नसुरा देवान् भग्ना देवा अमन्त्रयन् ।। ३६.६२ ।।

।।देवा ऊचुः ।।

षण्डामार्कप्रभावं न जानीमस्त्व सुरैर्वयम्।

तस्माद्यज्ञं समुद्दिश्य कार्य्यं चात्महितञ्च यत् ।। ३६.६३ ।।
तज्ज्ञानापहृतावेतौ कृत्वा जेष्यामहेऽसुरान् ।
अथोपामन्त्रयन् देवाः षण्डामार्कौ तु तावुभौ ।। ३६.६४ ।।
यज्ञे समाह्वयिष्यामस्त्यजतमसुरान् द्विजौ ।
ग्रहं तं वा ग्रहीष्यामो ह्यनुजित्य तु दानवान् ।। ३६.६५ ।।
एवं तत्यजतुस्तौ तु षण्डामार्कौ तदासुरान् ।
ततो देवा जयं प्राप्ता दानवाश्च पराभवम् ।। ३६.६६ ।।
देवासुरान् पराभाव्य षण्डामार्कावुपागमन्।
काव्यशापाभिभूताश्च ह्यनाधाराश्च ते पुनः ।। ३६.६७ ।।
वध्यमानास्तदा देवैर्विविशुस्ते रसातलम्।
एवं निरुद्यमास्ते वै कृताः शक्रेण दानवाः।
ततः प्रभृति शापेन भृगुनैमित्तिकेन च ।। ३६.६८ ।।
जज्ञे पुनः पुनर्विष्णुर्यज्ञे च शिथिले प्रभुः।
कर्त्तुं धर्म्मव्यवस्थानमधर्म्मस्य च नाशनम् ।। ३६.६९ ।।
प्रह्लादस्य निदेशे तु येऽसुरा न व्यवस्थिताः।
मनुष्यवध्यांस्तान् सर्व्वान् ब्रह्मा व्याहारयत् प्रभुः ।। ३६.७० ।।
धर्म्मान्नारायणस्तस्मान् सम्भूतश्चाक्षुषेऽन्तरे।
यज्ञं प्रवर्तयामास चैत्ये वैवस्वतेऽन्तरे ।। ३६.७१ ।।
प्रादुर्भावे तदान्यस्य ब्रह्मैवासीत् पुरोहितः।
चतुर्थ्यान्तु युगाख्यायामापन्नेष्वसुरेष्वथ ।। ३६.७२ ।।
सम्भूतः स समुद्रान्तर्हिरण्यकशिपोर्वधे।
द्वितीयो नरसिंहोऽभूद्रुद्रः सुरपुरस्सरः ।। ३६.७३ ।।
बलिसंस्थेषु लोकेषु त्रेतायां सप्तमे युगे।
दैत्यैस्त्रैलोक्य आक्रान्ते तृतीयो वामनोऽभवत् ।। ३६.७४ ।।
संक्षिप्यात्मानमङ्गेषु बृहस्पतिपुरस्सरम्।
यजमानन्तु दैत्येन्द्रमदित्याः कुलनन्दनः।
द्विजो भूत्वा शुभे काले बलिं वैरोचनम्पुरा ।। ३६.७५ ।।
त्रैलोक्यस्य भवान् राजा त्वयि सर्व्वं प्रतिष्ठितम्।
दातुमर्हसि मे राजन् विक्रमांस्त्रीनिति प्रभुः ।। ३६.७६ ।।
ददामीत्येव तं राजा बलिर्वैरोचनोऽब्रवीत्।
वामनन्तं च विज्ञाय ततोऽनुमुदितः स्वयम् ।। ३६.७७ ।।
स वामनो दिवं खं च पृथिवीं च द्विजोत्तमाः।
त्रिभिः क्रमैर्विश्वमिदं जगदाक्रामत प्रभुः ।। ३६.७८ ।।

अत्यरिच्यत भूतात्मा भास्करं स्वेन तेजसा।
प्रकाशयन् दिशः सर्व्वाः प्रदिशश्च महायशाः ।। ३६.७९ ।।
शुशुभे स महाबाहुः सर्व्वलोकान् प्रकाशयन्।
आसुरीं श्रियमाहृत्य त्रींल्लोकांश्च जनार्दनः।
सपुत्रपौत्रानसुरान् पातालतलमानयत् ।। ३६.८० ।।
नमुचिः शम्बरश्चैव प्रह्लादश्चैव विष्णुना।
क्रूरा हता विनिर्द्धूता दिशः संप्रतिपेदिरे ।। ३६.८१ ।।
महाभूतानि भूतात्मा सविशेषाणि माधवः।
कालञ्च सकलं विप्रांस्तत्राद्भुतमदर्शयत् ।। ३६.८२ ।।
तस्य गात्रे जगत्सर्वमात्मानमनुपश्यति ।
न किञ्चिदस्ति लोकेषु यदव्याप्तं महात्मना ।। ३६.८३ ।।
तद्वै रूपमुपेन्द्रस्य देवदानवमानवाः।
दृष्ट्वा सम्मुमुहुः सर्वे विष्णुतेजोविमोहिताः ।। ३६.८४ ।।
बलिः सिलो महापाशैः सबन्धुः ससुहृद्गणः।
विरोचन कुलं सर्वं पाताले सन्निवेशितम् ।। ३६.८५ ।।
ततः सर्वामरैश्वर्यं दत्त्वेन्द्राय महात्मने।
मानुषेषु महाबाहुः प्रादुरासीज्जनार्दनः ।। ३६.८६ ।।
एतास्तिस्रः स्मृतास्तस्य दिव्याः सम्भूतयः शुभाः।
मानुष्याः सप्त यास्तस्य शापजांस्तान्निबोधत ।। ३६.८७ ।।
त्रेतायुगे तु दशमे दत्तात्रेयो बभूव ह।
नष्टे धर्मे चतुर्थश्च मार्कण्डेयपुरःसरः ।। ३६.८८ ।।
पञ्चमः पञ्चदश्यां तु त्रेतायां सम्बभूव ह।
मान्धातुश्चक्रवर्त्तित्वे तस्थौ तथ्यपुरःसरः ।। ३६.८९ ।।
एको नविंशे त्रेतायां सर्व्वक्षत्रान्तकोऽभवत्।
जामदग्न्यस्तथा षष्ठो विश्वामित्रपुरःसरः ।। ३६.९० ।।
चतुर्विंशे युगे रामो वसिष्ठेन पुरोधसा।
सप्तमो राव णस्यार्थे जज्ञे दशरथात्मजः ।। ३६.९१ ।।
अष्टमो द्वापरे विष्णुरष्टाविंशे पराशरात् ।
वेदव्यासस्ततो जज्ञे जातूकर्णपुरःसरः ।। ३६.९२ ।।
तथैव नवमो विष्णुरदित्याः कश्यपात्मजः।
देवक्यां वसुदेवात्तु ब्रह्नगार्ग्यपुरःसरः ।। ३६.९३ ।।
अप्रमेयो नियोज्यश्च यत्र कामचरो वशी।
क्रीजते भगवाँ ल्लोके बालः क्रीजनकैरिव ।। ३६.९४ ।।

न प्रमातुं महाबाहुः शक्योऽसौ मधुसूदनः।
परं परममेतस्माद्विश्वरूपान्न विद्यते ।। ३६.९५ ।।
अष्टाविंश तिमे तद्वद्द्वापरस्यांशसङ्क्षये।
नष्टे धर्मे तदा जज्ञे विष्णुर्वृष्णिकुले प्रभुः ।। ३६.९६ ।।
कर्त्तुं धर्मव्यवस्थानमसुराणां प्रणाशनम्।
मोहयन् सर्वभूतानि योगात्मा योगमायया ।। ३६.९७ ।।
प्रविष्टो मानुषीं योनिं प्रच्छन्नश्चरते महीम्।
विहारार्थं मनुष्येषु सान्दीपनिपुरःसरम् ।। ३६.९८ ।।
यत्र कंसञ्च शाल्वञ्च द्विविदञ्च महासुरम्।
अरिष्टं वृषभञ्चैव पूतनां केशिनं हयम् ।। ३६.९९ ।।
नागं कुवलयापीडं मल्लराजगृहाधिपम्।
दैत्यान् मानुषदेहस्थान् सूदयामास वीर्यवान् ।। ३६.१०० ।।
छिन्नं बाहुसहस्रञ्च बाणस्याद्भुतकर्मणः ।
नरकश्च हतः सङ्खये यवनश्च महाबलः ।। ३६.१०१ ।।
हृतानि च महीपानां सर्वरत्नानि तेजसा।
दुराचारा श्च निहताः पार्थिवा ये रसातले ।। ३६.१०२ ।।
एते लोकहितार्थाय प्रादुर्भावा महात्मनः।
अस्मिन्नेव युगे क्षीणे सन्ध्या श्लिष्टे भविष्यति ।। ३६.१०३ ।।
कल्किर्विष्णुयशा नाम पाराशर्यः प्रतापवान्।
दशमो भाव्यसम्भूतो याज्ञवल्क्यपुरःसरः ।। ३६.१०४ ।।
अनुकर्षन् सर्वसेनां हस्त्यश्वरथसङ्कुलाम्।
प्रगृहीतायुधौर्विप्रैर्वृतः शतसहस्रशः ।। ३६.१०५ ।।
नात्यर्थं धार्मिका ये च ये च धर्मद्विषः क्वचित्।
ईदीच्यान्मध्यदेशांश्च तथा विन्ध्यापरान्तिकान् ।। ३६.१०६ ।।
तथैव दाक्षिणात्यांश्च द्रविजान् सिंहलैः सह।
गान्धारान् पारदांश्चैव पह्लवान् यवनाञ्छकान् ।। ३६.१०७ ।।
तुषारान् बर्बरांश्चैव पुलिन्दान् दरदान् खसान् ।
लम्पाकानन्धकान् रुद्रान् किरातांश्चैव स प्रभुः ।। ३६.१०८ ।।
प्रवृत्तचक्रोबलवान् म्लेच्छानामन्तकृद्बली।
अदृश्यः सर्वभूतानां पृथिवीं विचरिष्यति ।। ३६.१०९ ।।
मानवः स तु संजज्ञे देवस्यांशेन धीमतः ।
पूर्वजन्मनि विष्णुर्यः प्रमितिर्नाम वीर्यवान् ।। ३६.११० ।।
गात्रेण वै चन्द्रसमः पूर्णे कलियुगेऽभवत्।

इत्येतास्तस्य देवस्य दश सम्भूतयः स्मृताः ।। ३६.१११ ।।
तं तं कालञ्च कार्यञ्च तत्तदुद्दिश्य कारणम्।
अंशेन त्रिषु लोकेषु तास्ता योनीः प्रपत्स्यते ।। ३६.११२ ।।
पञ्चविंशोत्थिते कल्पे पञ्चविंशति वै समाः।
विनिघ्नन् सर्व्वभूतानि मानुषानेव सर्व्वशः ।। ३६.११३ ।।
कृत्वा बीजावशेषान्तु महीं क्रूरेण कर्म्मणा।
संशातयित्वा वृषलान् प्रायशस्तानधार्म्मिकान् ।। ३६.११४ ।।
ततः स वै तदा कल्किश्चरितार्थः ससैनिकः।
कर्मणा निहता ये तु सिद्धास्ते तु पुनः स्वयम् ।। ३६.११५ ।।
अकस्मात् कुपितान्योन्यं भविष्यन्ति च मोहिताः ।
क्षपयित्वा तु तान् सर्वान् बाविनार्थेन चोदितान् ।। ३६.११६ ।।
गङ्गायमुनयोर्मध्ये निष्ठां प्राप्स्यति सानुगः।
ततो व्यतीते कल्कौ तु सामान्यैः सह सैनिकैः ।। ३६.११७ ।।
नृपेष्वथ विनष्टेषु तदा त्वप्रग्रहाः प्रजाः।
रक्षणे विनिवृत्ते तु हत्वा चान्योन्यमाहवे ।। ३६.११८ ।।
परस्परहृताश्वासा निराक्रन्दाः सुदुःखिताः।
पुराणि हित्वा ग्रामांश्च तुल्यास्ता निष्परिग्रहाः ।। ३६.११९ ।।
प्रनष्टश्रुतिधर्माश्च नष्टधर्माश्रमास्तथा।
ह्रस्वा अल्पायुषश्चैव वनौकस इमे स्मृताः ।। ३६.१२० ।।
सरित्पर्वतसेविन्यः पत्रमूलफलाशनाः।
चीर पत्राजिनधराः सङ्करं घोरमास्थिताः ।। ३६.१२१ ।।
अल्पायुषो नष्टवार्त्ता बह्वाबाधाः सुदुःखिताः।
एवं कष्टमनुप्राप्ताः कलिसन्ध्यंशके तदा ।। ३६.१२२ ।।
प्रजाः क्षयं प्रयास्यन्ति सार्द्धं कलियुगेन तु ।
क्षीणे कलियुगे तस्मिन् प्रवृत्ते च कृते पुनः ।। ३६.१२३ ।।
प्रपत्स्यन्ते यथान्यायं स्वभावादेव नान्यता।
इत्येतत् कीर्तितं सर्वं देवासुरविचेष्टितम् ।। ३६.१२४ ।।
यदुवंशप्रसङ्गेन महद्वो वैष्णवं यशः ।
तुर्वसोस्तु प्रवक्ष्यामि पूरोर्द्रुह्योरनोस्तथा ।। ३६.१२५ ।।
इति श्रीमहापुराणे वायुप्रोक्ते विष्णुमाहात्म्यकथनं नाम षट्त्रिंशोऽध्यायः ।। ३६ ।।*

।।सूत उवाच।।
तुर्वसोस्तु सुतो वह्निर्वह्नेर्गोभानुरात्मजः।
गोभानोस्तु सुतो वीरस्त्रिसानुरपराजितः ।। ३७.१ ।।
करन्धमस्त्रिसानोस्तु मरुत्तस्य न चात्मजः।
अन्यस्त्ववीक्षितो राजा मरुत्तः कथितः पुरा ।। ३७.२ ।।
अनवत्यो मरुत्तस्तु स राजासीदिति श्रुतम्।
दुष्कृतं पौरवं चापि सर्वे पुत्रमकल्पयन् ।। ३७.३ ।।
एवं ययादिशापेन जरायाः संक्रमेण तु ।
तुर्वसोः पौरवं वंशं प्रविवेश पुरा किल ।। ३७.४ ।।
दुष्कृतस्य तु दायादः शरूथो नाम पार्थिवः।
शरूथात्तु जनापीडश्चत्वारस्तस्य चात्मजाः ।। ३७.५ ।।
पाण्ड्यश्च केरलश्चैव चोलः कुल्यस्तथैव च।
तेषां जनपदाः कुल्याः पाण्ड्याश्चोलाः सकेरलाः ।। ३७.६ ।।
द्रुह्योस्तु तनयौ वीरौ बभ्रुः सेतुश्च विश्रुतौ।
अरुद्धः सेतुपुत्रस्तु बाभ्रवो रिपुरुच्यते ।। ३७.७ ।।
यौवनाश्वेन समिति कृच्छ्रेण निहतो बली।
युद्धं सुमहदासीत्तु मासान् परि चतुर्दश ।। ३७.८ ।।
अरुद्धस्य तु दायादो गान्धारो नाम पार्थिवः।
ख्यायते यस्य नाम्ना तु गान्धारविषयो महान् ।। ३७.९ ।।
गान्धारदेशजाश्चापि तुरगा वाजिनां वराः।
गान्धारपुत्रो धर्म्मस्तु घृतस्तस्य सुतोऽभवत् ।। ३७.१० ।।
घृतस्य दुर्दमो जज्ञे प्रचेतास्तस्य चात्मजः ।
प्रचेतसः पुत्रशतं राजानः सर्व एव ते ।। ३७.११ ।।
म्लेच्छराष्ट्राधिपाः सर्वे ह्युदीचीं दिशमाश्रिताः।
अनोः पुत्रा महात्मानस्त्रयः परमधार्म्मिकाः ।। ३७.१२ ।।
सभानरश्च पक्षश्च परपक्षस्तथैव च।
सभानरस्य पुत्रस्तु विद्वान् कालानलो नृपः ।। ३७.१३ ।।
कालानलस्य धर्म्मात्मा सृञ्जयो नाम धार्मिकः ।
सृञ्जयस्याभवत् पुत्रो वीरो राजा पुरञ्जयः ।। ३७.१४ ।।
जनमेजयो महा सत्वः पुरञ्जयसुतोऽभवत्।

जनमेजयस्य राजर्षेर्महाशालोऽभवभृपः ।। ३७.१५ ।।
आसीदिन्द्रसमो राजा प्रतिष्ठितयशा दिवि।
महामनाः सुतस्तस्य महा शालस्य धार्मिकः ।। ३७.१६ ।।
सप्तद्वीपेश्वरो राजा चक्रवर्त्ती महायशाः।
महामनास्तु पुत्रौ द्वौ जनयामास विश्रुतौ ।। ३७.१७ ।।
उशीनरञ्च धर्मज्ञं तितिक्षुञ्चैव धार्मिकम्।
उशीनरस्य पत्न्यस्तु पञ्च राजर्षिवंशजाः ।। ३७.१८ ।।
मृगा कृमी नवा दर्वा पञ्चमी च दृषद्वती।
उशीनरस्य पुत्रास्तु पञ्च तासु कुलोद्वहाः।
तपसा ते सुमहता जातवृद्धाश्च धार्मिकाः ।। ३७.१९।
मृगायास्तु मृगः पुत्रो नवाया नव एव तु।
कृम्याः कृमिस्तु दर्वायाः सुव्रतो नाम धार्मिकः ।। ३७.२० ।।
दृषद्वतीसुतश्चापि शिविरौशीनरो द्विजाः।
शिवेः शिवपुरं ख्यातं यौधेयन्तु मृगस्य तु ।। ३७.२१ ।।
नवस्य नवराष्ट्रन्तु कृमेस्तु कृमिला पुरी।
सुव्रतस्य तथा वृष्टा शिविपुत्रान्निबोधत ।। ३७.२२ ।।
शिवेस्तु शिवयः पुत्राश्चत्वारो लोकसम्मताः।
वृषदर्भः सुवीरस्तु केकयो मद्रकस्तथा ।। ३७.२३ ।।
तेषाञ्जनपदाः स्फीताः केकया माद्रकास्तथा।
वृषदर्भाः सूचिदर्भास्तितिक्षोः श्रृणुत प्रजाः ।। ३७.२४ ।।
तैतिक्षुरभवद्राजा पूर्वस्यान्दिशि विश्रुतः।
उशद्रथो महाबाहुस्तस्य हेमः सुतोऽभवत् ।। ३७.२५ ।।
हेमस्य सुतपा जज्ञे सुतः सुतयशा बली ।
जातो मनुष्ययोन्यां वै क्षीणे वंशे प्रजेप्सया ।। ३७.२६ ।।
महायोगी स तु बलिर्बद्धो यः स महामनाः।
पुत्रानुत्पादयामास चातुर्वर्ण्यकरान् भुवि ।। ३७.२७ ।।
अङ्गं स जनयामास वङ्गं सुह्लं तथैव च।
पुण्ड्रं कलिङ्गञ्च तथा बालेयं क्षत्रमुच्यते ।। ३७.२८ ।।
बालेया ब्राह्मणाश्चैव तस्य वंशकराः प्रभोः।
बलेस्तु ब्रह्मणा दत्ता वराः प्रीतेन धीमते ।। ३७.२९ ।।

महायोगित्वमायुश्च कल्पायुःपरिमाणकम्।
संग्रामे चाप्यजेयत्वं धर्मे चैव प्रभावना ।। ३७.३० ।।
त्रैलोक्यदर्शनञ्चैव प्राधान्यं प्रसवे तथा।
बले चाप्रति मत्वं वै धर्मतत्त्वार्थदर्शनम् ।। ३७.३१ ।।
चतुरो नियतान् वर्णान् त्वं वै स्थापयितेति च।
इत्युक्तो विभुना राजा बलिः शान्तिम्परां ययौ ।। ३७.३२ ।।
कालेन महता विद्वान् स्वं वै स्थानमुपागतः।
तेषां जनपदाः स्फीता वङ्गाङ्गसुह्लकास्तथा ।। ३७.३३ ।।
पुण्ड्राः कलिङ्गाश्च तथा तेषां वंशं निबेधत।
तस्य ते तनयाः सर्वे क्षेत्रजा मुनिसम्भवाः।
सम्भूता दीर्घतमसः सुदेष्णायां महौजसः ।। ३७.३४ ।।

ऋषय ऊचुः।

कथं बलेः सुताः पञ्च जनिताः क्षेत्रजाः प्रभो।
ऋषिणा दीर्घतमसा एतन्नो ब्रूहि पृच्छताम् ।। ३७.३५ ।।

सूत उवाच।।

अशिजो नाम विख्यात आसीद्धीमा नृषिः पुरा।
भार्या वै समता नाम बभूवास्य महात्मनः ।। ३७.३६ ।।
अशिजस्य कनीयांस्तु पुरोधा यो दिवौकसाम्।
बृहस्पतिर्बृहत्तेजा ममतां सोऽभ्यपद्यत ।। ३७.३७ ।।
उवाच ममता तन्तु बृहस्पतिमनिच्छती।
अन्तर्वत्न्यस्मि ते भ्रातुर्ज्येष्ठस्याष्टमिता इति ।। ३७.३८ ।।
अयं हि मे महागर्भो रोदतेऽति बृहस्पते।
अशिजं ब्रह्मचाभ्यस्य षडङ्गं वेदमुद्गिरन् ।। ३७.३९ ।।
अमोघरेतास्त्वञ्चापि न मां भजितमर्हसि।
अस्मिन्नेव गते काले यथा वा मन्यसे प्रभो ।। ३७.४० ।।
एवमुक्तस्तया सम्यग् बृहत्तेजा बृहस्पतिः।
कामात्मानं महात्मा च नात्मानं सोऽभ्यधारयत् ।। ३७.४१ ।।
सम्बभूवैव धर्मात्मा तया सार्द्धं बृहस्पतिः।
उत्सृजन्तं तदा रेतो गर्भस्थः सोऽभ्यभाषत ।। ३७.४२ ।।
नो स्नातको न्यसेद्ध्यस्मिन् द्वयोर्नेहास्ति सम्भवः।

अमोघरेतास्त्वञ्चापि पूर्वञ्चाहमिहागतः ।। ३७.४३ ।।
शशाप तं तदा क्रुद्ध एवमुक्तो बृहस्पतिः।
आशिजन्तं सुतं भ्रातुर्गर्भस्थं भगवानृषिः ।। ३७.४४ ।।
यस्मात्त्वमीदृशे काले सर्वभूतेप्सिते सति।
मामेवमुक्तवान् मोहात्तमो दीर्घं प्रवेक्ष्यसि ।। ३७.४५ ।।
ततो दीर्घतमा नाम शापादृषिरजायत।
अथाशिजो बृहत्कीर्त्तिर्बृहस्पतिरिवौजसा ।। ३७.४६ ।।
ऊर्द्ध्वरेतास्ततश्चापि न्यवसद्भ्रातुराश्रमे।
गोधर्मं सौरभेयात्तु वृषभाच्छ्रुतवान् प्रभो ।। ३७.४७ ।।
तस्य भ्राता पितृव्यस्तु चकार भवनं तदा।
तस्मिन् हि तत्र वसति यदृच्छाभ्यागतो वृषः ।। ३७.४८ ।।
दर्शार्थमाहृतान् दर्भांश्चचार सुरभीवृतः।
जग्राह तं दीर्घतमा विस्फुरन्तञ्च शृङ्गयोः ।। ३७.४९ ।।
स तेन निगृहीतस्तु न चचाल पदात्पदम्।
ततोऽब्रवीद्वृषस्तं वै मुञ्च मां बलिनां वर ।। ३७.५० ।।
न मयासादितस्तात बलवंस्त्वद्विधः क्वचित्।
त्र्यम्बकं वहता देवं यतो जातोऽस्मि भूतले ।। ३७.५१ ।।
मुञ्च मां बलिनां श्रेष्ठ प्रीतस्तेऽहं वरं वृणु।
एवमुक्तोऽब्रवीदेनं जीवस्त्वं मे क्व यास्यसि ।। ३७.५२ ।।
तेन त्वाहं न मोक्ष्यामि परस्वाहं चतुष्पदम्।
ततस्तं दीर्घतमसं स वृषः प्रत्युवाच ह ।। ३७.५३ ।।
नास्माकं विद्यते तात पातकं स्तेयमेव वा।
भक्ष्याभक्ष्यं न जानीमः पेयापेयञ्च सर्वशः ।। ३७.५४ ।।
कार्याकार्यं न वै विज्ञो गम्यागम्यं तथैव च।
न पाप्मानो वयं विप्र धर्मो ह्येषां गवां स्मृतः ।। ३७.५५ ।।
गवां नाम स वै श्रुत्वा संभ्रान्तस्त्वनुमुच्य तम्।
भक्त्या चानुश्रविकया गोषु तं वै प्रसाद यत् ।। ३७.५६ ।।
प्रसादिते गते तस्मिन् गोधर्मं भक्तितस्तु तम्।
मनसैव तदादत्ते तन्निष्ठस्तत्परायणः ।। ३७.५७ ।।
ततो यवीयसः पत्नीमौतथ्यस्याभ्यमन्यत।

विचेष्टमानां रुदतीं दैवात् स मूढचेतनः ।। ३७.५८ ।।
अवलेपन्तु तं मत्वा शरद्वांस्तस्य नाक्षमत्।
गोधर्मंवै बलं कृत्वा स्नुषां स सममन्यत ।। ३७.५९ ।।
विपर्ययन्तु तं दृष्ट्वा शरद्वान् प्रत्यचिन्तयत्।
भविष्यमर्थं ज्ञात्वा च महात्मा च न मृत्युताम् ।। ३७.६० ।।
प्रोवाच दीर्घतमसं क्रोधात् संरक्त लोचनः।
गम्यागम्यं न जीनीषे गोधर्मात् प्रार्थयत् स्नुषाम् ।। ३७.६१ ।।
दुर्वृत्तस्त्वं त्यजाम्येव गच्छ त्वं स्वेन कर्मणा।
यस्मात्त्वमन्धो वृद्धश्च भर्त्तव्यो दुरनुष्ठितः।
तेनासि त्वं परित्यक्तो दुराचारोऽसि मे मतिः ।। ३७.६२ ।।
सूत उवाच।।
कर्मण्यस्मिस्ततः क्रूरे तस्य बुद्धिरजायत।
निर्भत्स्य चैव बहुशो बाहुभ्यां परिगृह्य च।
कोष्ठे समुद्रे प्रक्षिप्य गङ्गाम्भसि समुत्सृजत् ।। ३७.६३ ।।
उह्यमानः समुद्रस्तु सप्ताहं स्रोतसा तदा।
तं सस्त्रीको बलिर्नाम राजा धर्मार्थतत्त्ववित्।
अपश्यन्मज्जमानन्तु स्रोतसाभ्याशमागतम् ।। ३७.६४ ।।
तं गृहीत्वा स धर्मात्मा बलिर्वैरोचनस्तदा।
अन्तःपुरे जुगोपैनं भक्ष्यैर्भोज्यैश्च तर्पयन् ।। ३७.६५ ।।
प्रीतः स वै वरेणाथ च्छन्दयामास वै बलिम्।
स च तस्माद्वरं वव्रे पुत्रार्थं दानवर्षभः ।। ३७.६६ ।।
।।बलिरुवाच।।
सन्तानार्थं महाभाग भार्यया मम मानद।
पुत्रान् धर्मार्थसंयुक्तानुत्पादयितुमर्हसि ।। ३७.६७ ।।
एवमुक्तस्तु तेनर्षिस्तथास्त्वित्युक्तवान् हि तम् ।
सुदेष्णां नाम बार्यां वै राजास्मै प्राहिणोत्तदा ।। ३७.६८ ।।
अन्धं वृद्धञ्च तं दृष्ट्वा न सा देवी जगाम ह ।
स्वाञ्च धात्रेयकीं तस्मै भूषयित्वा व्यसर्जयत् ।। ३७.६९ ।।
कक्षीवचक्षुषौ तस्यां शूद्रयोन्यामृषिर्वशी।
जनयामास धर्मात्मा पुत्रावेतौ महोजसौ ।। ३७.७० ।।

कक्षिवचक्षुषौ तौ तु दृष्ट्वा राजा बलिस्तदा।
प्राधीतौ विधिवत्सम्यगीश्वरौ ब्रह्मवादिनौ ।। ३७.७१ ।।
सिद्धौ प्रत्यक्षधर्माणौ बुद्धौ श्रेष्ठतमावपि।
ममैताविति होवाच बलिर्वैरोचनस्त्वृषिम् ।। ३७.७२ ।।
नेत्युवाच ततस्तन्तु ममैताविति चाब्रवीत्।
उत्पन्नौ शूद्रयोनौ तु भवच्छद्मा सुरोत्तमौ ।। ३७.७३ ।।
अनधं बृद्धं च मां मत्वा सुदेष्णा महिषी तव।
प्राहिणोदवमानाय शूद्रां धात्रेयकीं मम ।। ३७.७४ ।।
ततः प्रसादयामास पुनस्तमृषिसत्तमम्।
बलिर्भार्यां सुदेष्णां च भर्त्सयामास वै प्रभुः ।। ३७.७५ ।।
पुनश्चैनामलंकृत्य ऋषये प्रत्यपादयत्।
तां स दीर्घतमा देवीमब्रवीद्यदि मां शुभे ।। ३७.७६ ।।
दध्ना लवणमिश्रेण स्वब्य(व्य)क्तं नग्नकं तथा।
लिहिष्यस्यजुगुप्सन्ती ह्यापादतलमस्तकम् ।। ३७.७७ ।।
ततस्त्वं प्राप्स्यसे देवि पुत्रांश्च मनसेप्सितान्।
तस्य सा तद्वचो देवी सर्वं कृतवती तथा ।। ३७.७८ ।।
अपानञ्च समासाद्य जुगुप्सन्ती न्यवर्जयत्।
तामुवाच ततः सर्षिर्यत्ते परिहृतं शुभे।
विनापानं कुमारं त्वं जनयिष्यसि पूर्वजम् ।। ३७.७९ ।।
ततस्तं दीर्घतमसं सा देवी प्रत्युवाच ह।
नार्हसि त्वं महाभाग पुत्रं दातुं ममेदृशम् ।। ३७.८० ।।
।।ऋषिरुवाच।।
तवापराधो देव्येष नान्यथा भवितानु वै ।
देवी दानीञ्च ते पुत्रमहं दास्यामि सुव्रते ।। ३७.८१ ।।
तस्यापानं विना चैव योग्याभावो भविष्यति।
तां स दीर्घतमाश्चैव कुक्षौ स्पृष्ट्वेदमब्रववीत् ।। ३७.८२ ।।
प्राशितं दधि यत्तेऽद्य ममाङ्गाद्वै शुचिस्मिते ।
तेन ते पूरितो गर्भः पौर्णमास्यामिवोदधिः ।। ३७.८३ ।।
भविष्यन्ति कुमारास्ते पञ्च देवसुतोपमाः।
तेजस्विनः पराक्रान्ता यज्वानो धार्मिकास्तथा ।। ३७.८४ ।।

ततोङ्गस्तु सुदेष्णाया ज्येष्ठपुत्रो व्यजायत।
वङ्गस्तस्मात्कलिङ्गस्तु पुण्ड्रो ब्रह्मस्तथैव च ।। ३७.८५ ।।
वंशभाजस्तु पञ्चैते बलेः क्षेत्रेऽभवंस्तदा।
इत्येते दीर्घतमसा बलेर्दत्ताः सुताः पुरा ।। ३७.८६ ।।
प्रजास्त्वपहतास्तस्य ब्रह्मणा कारणं प्रति।
अपत्या मात्यदारेषु स्वेषु मा भून्महात्मनः ।। ३७.८७ ।।
ततो मनुष्ययोन्यां वै जनयामास स प्रजाः।
सुरभिर्दीर्घतमसमथ प्रीतो वचोऽब्रवीत् ।। ३७.८८ ।।
विचार्य यस्माद्गोधर्म्मं त्वमेवं कृतवानसि ।
तेन न्यायेन मुमुचे ह्यहं प्रीतोस्मि तेन ते ।। ३७.८९ ।।
तस्मात्तव तमो दीर्घं निस्तुदाम्यद्य पश्य वै।
बार्हस्पत्यञ्च यत्तेऽन्यत्पापं सन्तिष्ठते तनौ ।। ३७.९० ।।
जरामृत्युभयञ्चैव आघ्राय प्रणुदामि ते।
ह्याघ्रातमात्रः सोऽपश्यत सद्यस्तमसि नाशिते ।। ३७.९१ ।।
आयुष्मांश्च युवा चैव चक्षुष्मांश्च ततोऽभवत्।
गवा दीर्घतमाः सोऽथ गौतमः समपद्यत ।। ३७.९२ ।।
कक्षीवांस्तु ततो गत्वा सह पित्रा गिरिप्रजाम्।
यथोद्दिष्टं हि पित्रर्थे चचार विपुलं तपः ।। ३७.९३ ।।
ततः कालेन महता तमसा भावितः सवै।
विधूय मनुजो दोषान् ब्रह्मण्यं प्राप्तवान् प्रभुः ।। ३७.९४।
ततोऽब्रवीत् पिता चैनं पुत्रवानस्म्यहं प्रभो।
सत्पुत्रेण त्वया तात कृतार्थोऽस्मि यशस्विना ।। ३७.९५ ।।
युक्तात्मा हि ततः सोऽथ प्राप्तवान् ब्रह्मणा क्षयम्।
ब्रह्मण्यं प्राप्य कक्षीवान् सहस्रमसृजत् सुतान् ।। ३७.९६ ।।
कृष्णाङ्गा गौतमास्ते वै स्मृताः कक्षीवतः सुताः।
इत्येष दीर्घतमसो बलेर्वैरोचनस्य वै ।। ३७.९७ ।।
समागमः समाख्यातः सन्तानञ्चोभयोस्तयोः।
बलिस्तानबिषिच्येह पञ्च पुत्रानकल्मषान् ।। ३७.९८ ।।
कृतार्थः सोऽपि योगात्मा योगमाश्रित्य च प्रभुः।
अदृश्यः सर्वभूतानां कालाकाङ्क्षी चरत्युत ।। ३७.९९ ।।

तत्राङ्गस्य तु राजर्षे राजासीद्दधिवाहनः।
सापराधसुदेष्णाया अनपानोऽभवनृपः ।। ३७.१०० ।।
अनपानस्य पुत्रस्तु राजा दिविरथः स्मृतः।
पुत्रो दिविरथस्यासीद्विद्वान् धर्मरथो नृपः ।। ३७.१०१ ।।
स वै धर्मरथः श्रीमान् येन विष्णुपदे गिरौ।
सोमः शक्रेण सह वै यज्ञे पीतो महात्मना ।। ३७.१०२ ।।
श्रृणु धर्म्मरथस्यापि राजा चित्ररथोऽभवत्।
लोमपाद इति ख्यातो यस्य शान्ता सुताऽभवत् ।। ३७.१०३ ।।
जज्ञे वै चण्डिकस्तस्य वारणः शक्रवारणः।
आनयामास स महीं मन्धोर्वाहनमुत्तमम् ।। ३७.१०४ ।।*(पाठभेदः)
हर्य्यङ्गस्य तु दायादो राजा भद्ररथः किल।
अथ भद्ररथस्यासीद्बृहत्कर्मा प्रजेश्वरः ।। ३७.१०५ ।।
बृहद्रथः सुतस्तस्य तस्माज्जज्ञे बृहन्मनाः।
बृहन्मनास्तु राजेन्द्रं जनयामास वै सुतम् ।। ३७.१०६ ।।
नाम्ना जयद्रथं नाम तस्माद्दृढरथो नृपः।
आसीद्दृढरथस्यापि विश्वजिज्जनमेजयः ।। ३७.१०७ ।।
दायादस्तस्य चाङ्गेभ्यो यस्मात् कर्णोऽभवन्नृपः।
कर्णस्य शूरसेनस्तु द्विज स्तस्यात्मजः स्मृतः ।। ३७.१०८ ।।

।।ऋषय ऊचुः ।।

सूतात्मजः कथं कर्णः कथं चाङ्गस्य वंशजः।
एतदिच्छामहे श्रोतुमत्यर्थं कुशलो ह्यसि ।। ३७.१०९ ।।

।।सूत उवाच।।

बृहद्भानोः सुतो जज्ञे नाम्ना राजा बृहन्मनाः।
तस्य पत्नीद्वयं चासीच्चैद्यस्योभे च ते सुते ।। ३७.११० ।।
यशोदेवी च सत्या च ताभ्यां वंशस्तु भिद्यते।
जयद्रथस्तु राजेन्द्रो यशोदेव्यां व्यजायत ।। ३७.१११ ।।
ब्रह्मक्षत्रान्तरः सत्याविजयो नाम विश्रुतः।
विजयस्य धृतिः पुत्र स्तस्य पुत्रो धृतव्रतः ।। ३७.११२ ।।
धृतव्रतस्य पुत्रस्तु सत्यकर्मा महायशाः।
सत्यकर्मसुतश्चापि सूतस्त्वधिरथस्तु वै ।। ३७.११३ ।।

स कर्णं परिजग्राह तेन कर्णस्तु सूतजः।
एतद्वः कथितं सर्वं कर्णे यद्वै प्रचोदितम् ।। ३७.११४ ।।
एतेऽङ्गवंशजाः सर्वे राजानः कीर्त्तिता मया।
विस्तरेणानुपूर्व्या च पूरोस्तु श्रृणुत प्रजाः ।। ३७.११५ ।।
सूत उवाच।।
पूरोः पुत्रो महाबाहू राजासीज्जनमेजयः।
अविद्धस्तु सुतस्तस्य यः प्राचीमजयद्दिशम् ।। ३७.११६ ।।
अविद्धतः प्रवीरस्तु मनस्युरभवत्सुतः।
राजाथो जयदो नाम मनस्योरभवत्सुतः ।। ३७.११७ ।।
दायादस्तस्य चाप्यासीद्धुन्धुर्नाम महीपतिः।
धुन्धोर्बहु गवी पुत्रः सञ्जातिस्तस्य चात्मजः ।। ३७.११८ ।।
सञ्जातेरथ रौद्राश्वस्तस्य पुत्रान्निबोधत।
रौद्राश्वस्य घृताच्यां वै दशाप्सरसि सूनवः ।। ३७.११९ ।।
रजेयुश्च कृते युश्च वक्षेयुः स्थण्डिलेयु च।
घृतेयुश्च जलेयुश्च स्थलेयुश्चैव सप्तमः ।। ३७.१२० ।।
धर्मेयुः सन्नतेयुश्च वनेयुर्द्दशमस्तु सः।
रुद्रा शूद्रा च मद्रा च शुभा जामलजा तथा ।। ३७.१२१ ।।
तला खला च सप्तैता या च गोपजला स्मृता।
तथा ताम्ररसा चैव रत्नकूटी च तादृशी ।। ३७.१२२ ।।
आत्रेयो वंशतस्तासां भर्त्ता नाम्ना प्रभाकरः।
अनादृष्टस्तु राजर्षी रिवेयुस्तस्य चात्मजः ।। ३७.१२३ ।।
रिवेयोर्ज्वलना नाम भार्या वै तक्षकात्मजा।
यस्यां देव्यां स राजर्षी रन्तिं नाम त्वजीजनत् ।। ३७.१२४ ।।
रन्तिर्नारः सरस्वत्यां पुत्रानजनयच्छुभान्।
त्रसुं तथा प्रतिरथं ध्रुवञ्चैवातिधार्मिकम् ।। ३७.१२५ ।।
गौरी कन्या च विख्याता मान्धातुर्जननी शुभा।
धुर्यः प्रतिरथस्यापि कण्ठस्तस्याभवत् सुतः ।। ३७.१२६ ।।
मेधातिथिः सुरस्तस्य यस्मात् काण्ठायना द्विजाः।
इतिनानुयमस्यासीत् कन्या साजनयत्सुतान् ।। ३७.१२७ ।।
त्रसुः सुदयितंपुत्रं मलिनं ब्रह्मवादिनम्।

उपदातं ततो लेभे चतुरस्त्विति सात्मजान् ।। ३७.१२८ ।।
सुष्मन्तमथ दुष्यन्तं प्रवीरमनघन्तथा।
चक्रवर्त्ती ततो जज्ञे दौष्यन्तिर्नृपसत्तमः ।। ३७.१२९ ।।
शकुन्तलायां भरतो यस्य नाम्ना तु भारतम्।
दुष्यन्तं प्रति राजानं वागुवाचाशरीरिणी ।। ३७.१३० ।।
माता भस्त्रा पितुः पुत्रो येन जातः स एव सः।
भरस्व पुत्रं दुष्यन्तं सत्यमाह शकुन्तला ।। ३७.१३१ ।।
रेतोधाः पुत्रं नयति नरदेव यमक्षयात्।
त्वञ्चास्य धाता गर्भस्य मावमंस्थाः शकुन्तलाम् ।। ३७.१३२ ।।
भरतस्त्रिसृषु स्त्रीषु नव पुत्रानजीजनत्।
नाभ्यनन्दच्च तान् राजा नानुरूपान्ममेत्युत ।। ३७.१३३ ।।
ततस्ता मातरः क्रुद्धाः पुत्रान्निन्युर्यमक्षयम्।
ततस्तस्य नरेन्द्रस्य विततं पुत्रजन्म तत् ।। ३७.१३४ ।।
ततो मरुद्भिरानीय पुत्रस्तु स बृहस्पतेः।
सङ्क्रामितो भरद्वाजो मरुद्भिः क्रतुभिर्विभुः ।। ३७.१३५ ।।
तत्रैवोदारहन्तीदं भरद्वाजस्य धीमतः।
जन्मसङ्क्रमणञ्चैव मरुद्भिर्भरताय वै ।। ३७.१३६ ।।
पत्न्यामासन्नगर्भायामशिजः संस्थितः किलः।
भ्रातुर्भार्यां स दृष्ट्वाथ बृहस्पतिरुवाच ह।
अलंकृत्य तनुं स्वान्तु मैथुनं देहि मे शुभे ।। ३७.१३७ ।।
एवमुक्ताऽब्रवीदेन मन्तर्वत्नी ह्यहं विभो।
गर्भः परिणतश्चायं ब्रह्म व्याहरते गिरा ।। ३७.१३८ ।।
अमोघरेतास्त्वञ्चापि धर्मश्चैव विगर्हितः।
एवमुक्तोऽब्रवीदेनां स्मयमानो बृहस्पतिः ।। ३७.१३९ ।।
विनयो नोपदेष्टव्यस्त्वया मम कथञ्चन।
हर्षमाणः प्रसह्यैनां मैथुनायोपचक्रमे ।। ३७.१४० ।।
ततो बृहस्पतिं गर्भो हर्षमाणमुवाच ह।
सन्निविष्टो ह्यहं पूर्वमिह तात बृहस्पते ।। ३७.१४१ ।।
अमोघरेताश्च भवान्नावकाशोऽस्ति च द्वयोः।
एवमुक्तः स गर्भेण कुपितः प्रत्युवाच ह ।। ३७.१४२ ।।

यस्मान्मामीदृशे काले सर्वभूतेप्सिते सति।
प्रतिषेधसितत्तस्मात् तमो दीर्घं प्रवेक्ष्यसि ।। ३७.१४३ ।।
पादाभ्यान्तेन तच्छन्नं मातुर्द्वारं बृहस्पतेः।
तद्रेतस्तु तयोर्मध्ये निवार्यः शिशुकोऽभवत् ।। ३७.१४४ ।।
सद्यो जातं कुमारन्तं दृष्ट्वाऽथ ममताऽब्रवीत्।
गमिष्यामि गृहं स्वं वै भरद्वाजं बृहस्पते ।। ३७.१४५ ।।
एवमुक्त्वा गतायां स पुत्रन्त्यजति तत्क्षणात्।
भरस्व बाढमित्युक्तो भरद्वाजस्ततोऽभवत् ।। ३७.१४६ ।।
मातापितृभ्यां संत्यक्तं दृष्ट्वाथ मरुतः शिशुम्।
गृहीत्वैनं भरद्वाजं जग्मुस्ते कृपया ततः ।। ३७.१४७ ।।
तस्मिन् काले तु भरतो मरुद्भिः क्रतुभिः क्रमात्।
काम्यनैमित्तिकैर्यज्ञैर्यजते पुत्रलिप्सया ।। ३७.१४८ ।।
यदा स यजमानो वै पुत्रान्नासादयत् प्रभुः ।
यज्ञं ततो मरुत्सोमं पुत्रार्थे पुनराहरत् ।। ३७.१४९ ।।
तेन ते मरुतस्तस्य मरुत्सोमेन तोषिताः।
भरद्वाजं ततः पुत्रं बार्हस्पत्यं मनीषिणम् ।। ३७.१५० ।।
भरतस्तु भरद्वाजं पुत्रं प्राप्य तदाब्रवीत्।
प्रजायां संहृतायां वै कृतार्थोऽहं त्वया विभो ।। ३७.१५१ ।।
पूर्वन्तु वितथं तस्य कृतं वै पुत्रजन्म हि।
ततः स वितथो नाम भरद्वाजस्तथाऽभवत् ।। ३७.१५२ ।।
तस्माद्दिव्यो भरद्वाजो ब्राह्मण्यात् क्षत्रियोऽभवत्।
द्विमुख्यायननामा स स्मृतो द्विपितृकस्तु वै ।। ३७.१५३ ।।
ततोऽथ वितथे जाते भरतः स दिवं ययौ।
वितथस्य तु दायादो भुवमन्युर्बभूव ह ।। ३७.१५४ ।।
महाभूतोपमाश्चासंश्चत्वारो भुवमन्युजाः।
बृहत्क्षत्रो महावीर्यो नरो गाग्रश्च वीर्यवान् ।। ३७.१५५ ।।
नरस्य सांकृतिः पुत्रस्तस्य पुत्रौ महौजसौ।
गुरुवीर्यस्त्रिदेवश्च सांकृत्याववरौ स्मृतौ ।। ३७.१५६ ।।
दायादाश्चापि गाग्रस्य शिनिबद्धात् बभूव ह।
स्मृताश्चैते ततो गाग्र्याः क्षात्रोपेता द्विजातयः ।। ३७.१५७ ।।

महावीर्यसुतश्चापि भीमस्तस्मादुभक्षयः।
तस्य भार्या विशाला तु सुषुवे वै सुतांस्त्रयः ।। ३७.१५८ ।।
त्रय्यारुणिं पुष्करिणं तृतीयं सुषुवे कपिम्।
कपेः क्षत्रवरा ह्येते तयोः प्रोक्ता महर्षयः ।। ३७.१५९ ।।
गाग्राः सांकृतयो वीर्याः क्षात्रोपेता द्विजातयः।
संश्रिताङ्गिरसं पक्षं बृहत्क्षत्रस्य वक्ष्यति ।। ३७.१६० ।।
बृहत्क्षत्रस्य दायादः सुहोत्रो नाम धार्मिकः।
सुहोत्रस्यापि दायादो हस्ती नाम बभूव ह।
तेनेदं निर्मितं पूर्वं नाम्ना वै हास्तिनं पुरम् ।। ३७.१६१ ।।
हस्तिनश्चापि दायादास्त्रयः परमधार्मिकाः।
अजमीढो द्विमीढश्च पुरुमीढस्तथैव च ।। ३७.१६२ ।।
अजमीढस्य पुत्रास्तु शभाः शुभकुलोद्वहाः।
तपसोऽन्ते सुमहतो राज्ञो वृद्धस्य धार्मिकाः ।। ३७.१६३ ।।
भरद्वाजप्रसादेन श्रृणुध्वं तस्य विस्तरम्।
अज मीढस्य केशिन्यां कण्ठः समभवत्किल ।। ३७.१६४ ।।
मेधातिथिः सुतस्तस्य तस्मात् कण्ठायना द्विजाः।
अजमीढस्य धूमिन्यां जज्ञे बृहद्वसुर्नृपः ।। ३७.१६५ ।।
बृहद्वसोर्बृहद्विष्णुः पुत्रस्तस्य महाबलः।
बृहत्कर्मा सुतस्तस्य पुत्रस्तस्य बृहद्रथः ।। ३७.१६६ ।।
विश्वजित्तनयस्तस्य सेनजित्तस्य चात्मजः।
अथ सेनजितः पुत्राश्चत्वारो लोकविश्रुताः ।। ३७.१६७ ।।
रुचिराश्वश्च काव्यश्च रामो दृढधनुस्तथा।
वत्सश्चावन्तको राजा यस्य ते परिवत्सराः ।। ३७.१६८ ।।
रुचिराश्वस्य दायादः पृथुषेणो महायशाः।
पृथुषेणस्य पारस्तु पारान्नीपोऽथ जज्ञिवान् ।। ३७.१६९ ।।
यस्य चैकशतञ्चासीत् पुत्राणामिति नः श्रुतम्।
नीपा इति समाख्याता राजानः सर्व एव ते ।। ३७.१७० ।।
तेषां वंशकरः श्रीमान् राजासीत्कीर्त्तिवर्द्धनः।
काम्पिल्ये समरो नाम स चेष्टसमरोऽभवत् ।। ३७.१७१ ।।
समरस्य परः पारः सत्वदश्च इति त्रयः।

पुत्राः सर्वगुणोपेताः पारपुत्रो वृषुर्बभौ ।। ३७.१७२ ।।

वृषोस्तु सुकृतिर्नाम सुकृतेनेह कर्मणा।

जज्ञे सर्वगुणोपेतो विभ्राजस्तस्य चात्मजः ।। ३७.१७३ ।।

विभ्राजस्य तु दायादस्त्वणुहो नाम पार्थिवः।

बभूव शुकजामाता ऋचीभर्त्ता महायशाः ।। ३७.१७४ ।।

अणुहस्य तु दायादो ब्रह्मदत्तो महातपाः।

योगसूनुः सुतस्तस्य विष्वक्सेनोऽभवनृपः ।। ३७.१७५ ।।

विभ्राजपुत्रा राजानः कुकृतेनेह कर्म्मणा।

विष्वक्सेनस्य पुत्रस्तु उदक्सेनो बभूव ह ।। ३७.१७६ ।।

भल्लाटस्तस्य दायादो येन राजा पुराहतः।

भल्लाटस्य तु दायादो राजासीज्जनमेजयः।

उग्रायुधेन तस्यार्थे सर्वे नीपाः प्रणाशिताः ।। ३७.१७७ ।।

।।ऋषय ऊचुः ।।

उग्रायुधः कस्य सुतः कस्मिन् वंशे च कीर्त्यते।

किमर्थञ्चैव नीपास्ते तेन सर्वे प्रणाशिताः ।। ३७.१७८ ।।

।।सूत उवाच।।

द्विमीढस्य तु दायादो विद्वान् जज्ञे यवीनरः।

धृतिमांस्तस्य पुत्रस्तु तस्य सत्यधृतिः सुतः ।। ३७.१७९ ।।

अथ सत्यधृतेः पुत्रो दृढनेमिः प्रतापवान् ।

दृढनेमिसुतश्चापि सुवर्मा नाम पार्थिवः ।। ३७.१८० ।।

आसीत्सुवर्म्मणः पुत्रः सार्वभौमः प्रतापवान्।

सार्वभौम इति ख्यातः पृथिव्यामेकराड्बभौ ।। ३७.१८१ ।।

तस्यान्वये च महति महत्पौरवनन्दनः।

महत्पौरवपुत्रस्तु राजा रुक्मरथः स्मृतः ।। ३७.१८२ ।।

अथ रुक्मरथस्यापि सुपार्श्वो नाम पार्थिवः।

सुपार्श्वतनयश्चापि सुमतिर्नाम धार्मिकः ।। ३७.१८३ ।।

सुमतेरपि धर्म्मात्मा राजा सन्नतिमान् प्रभुः।

तस्यासीत्सनतिर्नाम कृतस्तस्य सुतोऽभवत् ।। ३७.१८४ ।।

शिष्यो हिरण्यनाभेस्तु कौथुमस्य महात्मनः।

चतुर्विंशतिधा तेन प्रोक्तास्ताः सामसंहिताः ।। ३७.१८५ ।।

स्मृतास्ते प्राच्यनामानः कार्त्ताः साम्नान्तु सामगः ।
कार्तिरुग्रायुधः सोऽथ वीरः पौरवनन्दनः ।। ३७.१८६ ।।
बभूव येन विक्रम्य पृषतस्य पितामहः।
नीलो नाम महाबाहुः पञ्चालाधिपतिर्हतः ।। ३७.१८७ ।।
उग्रायुधस्य दायादः क्षेमो नाम महायशाः।
क्षेमात्सु वीरः संजज्ञे सुवीरस्य नृपञ्जयः।
नृपञ्जयाद्वीररथो इत्येते पौरवाः स्मृताः ।। ३७.१८८ ।।
अजमीढस्य नीलिन्यां नीलः समभवन्नृपः।
नीलस्य तपसोग्रेण सुशान्तिरभ्यजायत ।। ३७.१८९ ।।
पुरुजानुः सुशान्तेस्तु रिक्षस्तु पुरुजानुजः।
ततस्तु रिक्षदायादा भेदाश्च तनयास्त्विमे ।। ३७.१९० ।।
मुद्गलः सृञ्जयश्चैव राजा बृहदिषुस्तथा ।
यवीयांश्चापि विक्रान्तः कम्पिल्यश्चैव पञ्चमः ।। ३७.१९१ ।।
पञ्चानां रक्षणार्थाय पितैतानभ्यभाषत।
पञ्चानां विद्धि पञ्चैतान् स्फीता जनपदा युताः ।। ३७.१९२ ।।
अलं संरक्षणे तेषां पञ्चाला इति विश्रुताः।
मुद्गलस्यापि मौद्गल्याः क्षात्रोपेतद्विजातयः ।। ३७.१९३ ।।
एते ह्यङ्गिरसः पक्षे संश्रिताः कण्ठमुद्घलाः ।
मुद्घलस्य सुतो ज्येष्ठो ब्रह्मिष्ठः सुमहायशाः ।। ३७.१९४ ।।
इन्द्रसेना यतो गर्भं बध्यश्वं प्रत्यपद्यत।
बध्यश्वान्मिथुनं जज्ञे मेनका इति नः श्रुतिः ।। ३७.१९५ ।।
दिवोदासश्च राजर्षिरहल्या च यशस्विनी।
शारद्वतस्तु दायादमहल्या समसूयत ।। ३७.१९६ ।।
शतानन्दमृषिश्रेष्ठं तस्यापि सुमहायशाः।
पुत्रः सत्यधृतिर्नाम धनुर्वेदस्य पारगः ।। ३७.१९७ ।।
अथ सत्यधृतेः शुक्रं दृष्ट्वाप्सरसमग्रतः।
प्रचस्कन्दे शरस्तम्बे मैथुनं समपद्यत ।। ३७.१९८ ।।
कृपया तच्च जग्राह शन्तनुर्मृगयां गतः।
कृपः स्मृतः स वै तस्माद्गौतमी च कृपी तथा ।। ३७.१९९ ।।
एते शारद्वताः प्रोक्ताः ऋतथ्यो गौतमान्वयः।

अत ऊर्द्ध्वं प्रवक्ष्यामि दिवोदासस्य सन्ततिम् ।। ३७.२०० ।।
दिवोदासस्य दायादो ब्रह्मिष्ठो मित्रयुर्नृपः।
मैत्रेयस्तु ततो जज्ञे स्मृता एतेऽपि संश्रिताः ।। ३७.२०१ ।।
एतेऽपि संश्रिताः पक्षं क्षात्रोपेतास्तु भार्गवाः।
राजापि च्यवनो विद्वांस्ततः प्रतिरथोऽभवत् ।। ३७.२०२ ।।
अथ वै च्यवनाद्धीमान् सुदासः समपद्यत।
सौदासः सहदेवश्च सोमकस्तस्य चात्मजः ।। ३७.२०३ ।।
अजमीढः पुनर्जातः क्षीणे वंशे स सोमकः।
सोमकस्य सुतो जन्तुर्हते तस्मिञ्छतं विभो ।। ३७.२०४ ।।
पुषाणामजमीढस्य सोमकत्वे महात्मनः।
तेषां यवीयान् पृषतो द्रुपदस्य पितामहः ।। ३७.२०५ ।।
धृष्टद्युम्नः सुतस्तस्य धृष्टकेतुश्च तत्सुतः।
महिषी चाजमीढस्य धूमिनी पुत्रगर्धिनी ।। ३७.२०६ ।।
पुनर्भवे तपस्तेपे शतं वर्षाणि दुश्चरम्।
हुताग्न्यनिद्रा ह्यभवत् पवित्रमितभोजना ।। ३७.२०७ ।।
अहोरात्रं कुशेष्वेव सुष्वाप सुमहाव्रता।
तस्यां वै धूम्रवर्णायामजमीढश्च वीर्यवान् ।। ३७.२०८ ।।
ऋक्षं संजनयामास धूम्रवर्णं सिताग्रजम्।
ऋक्षात् संवरणो जज्ञे कुरुः संवरणादभूत् ।। ३७.२०९ ।।
यः प्रयागं पदाक्रम्य कुरुक्षेत्रञ्चकार ह।
कृष्ट्वैनं सुमहातेजा वर्षाणि सुबहून्यथ ।। ३७.२१० ।।
कृष्यमाणे तदा शक्रस्तत्रास्य वरदो बभौ।
पुण्यञ्च रमणीयञ्च पुण्यकृद्भिर्निषेवितम् ।। ३७.२११ ।।
तस्यान्ववायजाः ख्याताः कुरवो नृपसत्तमाः।
कुरोस्तु दयिताः पुत्राः सुधन्वा जह्नुरेव च ।। ३७.२१२ ।।
परिक्षितो महाराजः पुत्रकश्चारिमर्दनः।
सुधन्वनस्तु दायादः सुहोत्रो मतिमान् स्मृतः ।। ३७.२१३ ।।
च्यवनस्तस्य पुत्रस्तु राजा धर्मार्थकोविदः।
च्यवनस्य कृतः पुत्र इष्ट्वा यज्ञैर्महातपाः ।। ३७.२१४ ।।
विश्रुतं जनयामास पुत्रमिन्द्रसखं नृपः।

विद्योपरिचरं वीरं वसुं नामान्तरिक्षगम् ।। ३७.२१५ ।।
विद्योपरिचराज्जज्ञे गिरिका सप्त सूनवः।
महारथो भगधरो विश्रुतो यो बृहद्रथः ।। ३७.२१६ ।।
प्रत्यग्रहः कुशश्चैव यमाहुर्मणिवाहनम्।
माथैल्यश्च ललित्थश्च मत्स्यकालश्च सप्तमः ।। ३७.२१७ ।।
बृहद्रथस्य दायादः कुशाग्रो नाम विश्रुतः।
कुशाग्रस्यात्मजश्चैव ऋषभो नाम वीर्यवान् ।। ३७.२१८ ।।
ऋषभस्यापि दायादः पुष्पवान्नाम धार्मिकः।
विक्रान्तस्तस्य दायादो राजा सत्यहितः स्मृतः ।। ३७.२१९ ।।
तस्य पुत्रः सुधन्वा च तस्मादूर्ज्जः प्रतापवान्।
ऊर्ज्जस्य नभसः पुत्रस्तस्माज्जज्ञे स वीर्यवान् ।। ३७.२२० ।।
शकले द्वे स वै जातो जरया सन्धितस्तु सः।
जरासन्धो महाबाहुर्जरया सन्धितस्तु सः ।। ३७.२२१ ।।
सर्वक्षत्रस्य जेताऽसौ जरासन्धो महाबलः।
जरासन्धस्य पुत्रस्तु सहदेवः प्रतापवान् ।। ३७.२२२ ।।
सहतेवात्मजः श्रीमान् सोमाधिः सुमहातपाः।
श्रुतश्रुवस्तु सोमाधेर्मागधः परिकीर्तितः ।। ३७.२२३ ।।
।।सूत उवाच।।
परिक्षितस्य दायादो बभूव जनमेजयः।
श्रुतसेनस्य दायादो भीमसेनोऽपि नामतः ।। ३७.२२४ ।।
जह्नुस्त्वजनयत्पुत्रं सुरथं नाम भूमिपम्।
सुरथस्य तु दायादो वीरो राजा विदूरथः ।। ३७.२२५ ।।
विदूरथसुतश्चापि सार्वभौम इति श्रुतिः।
सार्वभौमा ज्जयत्सेन आराधिस्तस्य चात्मजः ।। ३७.२२६ ।।
आराधितो महासत्त्व अयुतायुस्ततः स्मृतः ।
अक्रोधनोऽयुतायोऽस्तु तस्माद्देवातिथिः स्मृतः ।। ३७.२२७ ।।
देवातिथेस्तु दायाद ऋक्ष एव बभूव ह।
भीमसेनस्तथा ऋक्षाद्दिलीपस्तस्य चात्मजः ।। ३७.२२८ ।।
दिलीपसूनुः प्रतिपस्तस्य पुत्रास्त्रयः स्मृताः।
देवापिः शन्तनुश्चैव बाह्लीकश्चैव ते त्रयः ।। ३७.२२९ ।।

बाह्लीकस्य तु विज्ञेयः सप्तबाह्लीश्वरो नृपः।
बाह्लीकस्य सुतश्चैव सोमदत्तो महायशाः ।। ३७.२३० ।।
जज्ञिरे सोमदत्तात्तु भूरिर्भूरिश्रवाः शलः ।
देवापिस्तु प्रवव्राज वनं धर्म्मपरीप्सया ।। ३७.२३१ ।।
उपाध्यायस्तु देवानां देवापिरभवन्मुनिः।
च्यवनोऽस्य हि पुत्रस्तु इष्टकश्च महात्मनः ।। ३७.२३२ ।।
शन्तनुस्त्वभवद्राजा विद्वान् वै स महाभिषः ।
इमं चोदाहरन्त्यत्र श्लोकं प्रति महाभिषम् ।। ३७.२३३ ।।
यं यं राजा स्पृशति वै जीर्णं समयतो नरम्।
पुनर्युवा स भवति तस्मात्ते शन्तनुं विदुः ।। ३७.२३४ ।।
ततोऽस्य शन्तनुत्वं वै प्रजास्विह परिश्रुतम्।
स उपयेमे धर्म्मात्मा शन्तनु र्जाह्नवीं नृपः ।। ३७.२३५ ।।
तस्यां देवव्रतं भीष्मं पुत्रं सोऽजनयत्प्रभुः ।
स च भीष्म इति ख्यातः पाण्डवानां पितामहः ।। ३७.२३६ ।।
काले विचित्रवीर्यन्तु शन्तनु र्जनयत्सुतम्।
शन्तनोर्दयितं पुत्रं प्रजाहितकरम्प्रभुम्।
कृष्णद्वैपायनश्चैव क्षेत्रे वैचित्रवीर्यके ।। ३७.२३७ ।।
धृतराष्ट्रञ्च पाण्डुञ्च विदुरञ्चाप्यजीजनत्।
धृतराष्ट्रात्तु गान्धारी पुत्राणां सुषुवे शतम् ।। ३७.२३८ ।।
तेषां दुर्योधनो ज्येष्ठः सर्व्वक्षत्रस्य स प्रभुः।
माद्री राज्ञी पृथा चैव पाण्डोर्भार्ये बभूवतुः ।। ३७.२३९ ।।
देवदत्ताः सुतास्ताभ्यां पाण्डोरर्थे विजज्ञिरे।
धर्म्माद्युधिष्ठिरो जज्ञे वायोर्जज्ञे वृकोदरः ।। ३७.२४० ।।
इन्द्राद्धनञ्जयो जज्ञे शक्रतुल्यपराक्रमः।
अश्विभ्यां सह देवश्च नकुलश्चापि माद्रिजौ ।। ३७.२४१ ।।
पञ्चैव पाण्डवेभ्यश्च द्रौपद्यां जज्ञिरे सुताः।
द्रौपद्यजनयज्ज्येष्ठं श्रुतिविद्धं युधिष्ठिरात् ।। ३७.२४२ ।।
हिडम्बा भीमसेनात्तु जज्ञे पुत्रं घटोत्कचम्।
काश्याः पुनर्भीमसेनाज्जज्ञे सर्व्ववृकं सुतम् ।। ३७.२४३ ।।
सुहोत्रं विजया माद्री सहदेवादजायत।

करेमत्यान्तु वैद्यायां निरमित्रस्तु लाङ्गलिः ।। ३७.२४४ ।।
सुभद्रायां रथी पार्थादभिमन्युरजायत।
उत्तरायान्तु वैराट्यां परिक्षिदभिमन्युजः ।। ३७.२४५ ।।
परिक्षितस्तु दायादो राजासीज्जनमेजयः।
ब्राह्मणान् स्थापयामास स वै वाजसनेयिकान् ।। ३७.२४६ ।।
असपत्नं तदामर्षाद्वैशम्पायन एव तु।
न स्थास्यतीह दुर्बुद्धे तवैतद्वचनं भुवि ।। ३७.२४७ ।।
यावत्स्था स्याम्यहं लोके तावन्नैतत्प्रशस्यते।
अभितः संस्थितश्चापि ततः स जनमेजयः ।। ३७.२४८ ।।
पौर्णमास्येन हविषा देवमिष्ट्वा प्रजापतिम्।
विज्ञाय संस्थितोऽपश्यत्तद्वधीष्टां विभोर्मखे ।। ३७.२४९ ।।
परिक्षित्तनयश्वापि पौरवो जनमेजयः ।
द्विरश्वमेधमाहृत्य ततो वाजसनेयकम् ।
प्रवर्त्तयित्वा तद्ब्रह्म त्रिखर्व्वी जनमेजयः ।। ३७.२५० ।।
खर्व्वमश्वकमुख्यानां खर्व्वमङ्गनिवासिनाम्।
सर्व्वञ्च मध्यदेशानां त्रिखर्व्वी जनमेजयः ।
विषादाद्ब्राह्मणैः सार्द्धमभिशस्तः क्षयं ययौ ।। ३७.२५१ ।।
तस्य पुत्रः शतनीको बलवान् सत्यविक्रमः ।
ततः सुतं शतानीकं विप्रास्तमभ्यषेचयत् ।। ३७.२५२ ।।
पुत्रोऽश्वमेध दत्तोऽभूच्छतानीकस्य वीर्य्यवान्।
पुत्रोऽश्वमेधदत्ताद्वै जातः परपुरंजयः ।। ३७.२५३ ।।
अधिसामकृष्णो धर्मात्मा साम्प्रतोऽयं महायशाः।
यस्मिन् प्रशासति महीं युष्माभिरिदमाहृतम् ।। ३७.२५४ ।।
दुरापं दीर्घसत्रं वै त्रीणि वर्षाणि दुश्चरम्।
वर्षद्वयं कुरुक्षेत्रे दृषद्वत्यां द्विजोत्तमाः ।। ३७.२५५ ।।
ऋषय ऊचुः ।।
श्रोतुं भविष्यमिच्छामः प्रजानां वै महामते ।
सूत सार्द्धं नृपैर्भाव्यं व्यतीतं कीर्त्तितं त्वया ।। ३७.२५६ ।।
यत्तु संस्थास्यते कृत्यमुत्पत्स्यन्ति चे ये नृपाः।
वर्षाग्रतोऽपि प्रब्रूहि नामतश्चैव तान्नृपान् ।। ३७.२५७ ।।

कालं युगप्रमाणञ्च गुणदोषान् भविष्यतः।
सुखदुःखे प्रजानाञ्च धर्मतः कामतोऽर्थतः ।। ३७.२५८ ।।
एतत्सर्वं प्रसङ्ख्याय पृच्छतां ब्रूहि तत्वतः।
स एवमुक्तो मुनिभिः सूतो बुद्धिमतां वरः।
आचचक्षे यथावृत्तं यथादृष्टं यथाश्रुतम् ।। ३७.२५९ ।।
।।सूत उवाच।।
यथा मे कीर्त्तितं सर्वं व्यासेनाद्भुतकर्म्मणा।
भाव्यं कलियुगञ्चैव तथा मन्वन्तराणि तु ।। ३७.२६० ।।
अनागतानि सर्वाणि ब्रुवतो मे निबोधत।
अत ऊर्द्ध्वं प्रवक्ष्यामि भविष्यन्ति वृपास्तु ये ।। ३७.२६१ ।।
ऐलांश्चैव तथेक्ष्वाकून् सौद्युम्नांश्चैव पार्थिवान्।
येषु संस्थाप्यते क्षेत्रणैक्ष्वाकवमिदं शुभम् ।। ३७.२६२ ।।
तान् सर्वान् कीर्त्तयिष्यामि भविष्ये पठितान्नृपान्।
तेभ्यः परे च ये चान्ये उत्पत्स्यन्ते महीक्षितः ।। ३७.२६३ ।।
क्षत्राः पारशवाः शूद्रास्तथा ये च द्विजातयः।
अन्धाः शकाः पुलिन्दाश्च तूलिका यवनैः सह ।। ३७.२६४ ।।
कैवर्त्ताभीरशबरा ये चान्ये म्लेच्छजातयः।
वर्षाग्रतः प्रवक्ष्यामि नामतश्चैव तान्नृपान् ।। ३७.२६५ ।।
अधिसामकृष्णः सोऽयं साम्प्रतं पौरवान्नृपः।
तस्यान्ववाये वक्ष्यामि भविष्ये तावतो नृपान् ।। ३७.२६६ ।।
अधिसामकृष्णपुत्रो निर्वक्रे भविता किल।
गङ्गयापहृते तस्मिन्नगरे नागसाह्वये।
त्यक्त्वा च तं सुवासञ्च कौशाम्ब्यां स निवत्स्यति ।। ३७.२६७ ।।
भविष्यदुष्णस्तत्पुत्र उष्णाच्चित्ररथः स्मृतः।
शुचिद्रथश्चित्ररथाद्वृतिमांश्च शुचिद्रथात् ।। ३७.२६८ ।।
सुषेणो वै महावीर्यो भविष्यति महायशाः।
तस्मात्सुषेणाद्भविता सुतीर्थो नाम पार्थिवः ।। ३७.२६९ ।।
रुचः सुतीर्थाद्भविता त्रिचक्षो भविता ततः।
त्रिचक्षस्य तु दायादो भविता वै सुखीबलः ।। ३७.२७० ।।
सुखीबलसुतश्चापि भाव्यो राजा परिप्लुतः।

परिप्लुतसुतश्चापि भविता सुनयो नृपः ।। ३७.२७१ ।।
मेधावी सुनयस्याथ भविष्यति नराधिपः।
मेधाविनः सुतश्चापि दण्डपाणिर्भविष्यति ।। ३७.२७२ ।।
दण्डपाणेर्निरामित्रे निरामित्राच्च क्षेमकः।
पञ्चविंशनृपा ह्येते भविष्याः पूर्ववंशजाः ।। ३७.२७३ ।।
अत्रानुवंशश्लोकोऽयं गीतो विप्रैः पुराविदैः।
ब्रह्मक्षत्रस्य यो योनिर्वंशो देवर्षिसत्कृतः ।। ३७.२७४ ।।
क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ।
इत्येष पौरवो वंशो यथावदनुकीर्त्तितः ।। ३७.२७५ ।।
धीमतः पाण्डुपुत्रस्य ह्यर्जुनस्य महात्मनः।
अत ऊर्द्ध्वं प्रवक्ष्यामि इक्ष्वाकूणां महात्मनाम् ।। ३७.२७६ ।।
बृहद्रथस्य दायादो वीरो राजा बृहत्क्षयः ।
ततः क्षयः सुतस्तस्य वत्सव्यूहस्ततः क्षयात् ।। ३७.२७७ ।।
वत्सव्यूहात्प्रतिव्यूहस्तस्य पुत्रो दिवाकरः।
यश्च सांप्रतमध्यास्त अयोध्यां नगरीं नृपः ।। ३७.२७८ ।।
दिवाकरस्य भविता सहदेवो महायशाः।
सहदेवस्य दायादो बृहदश्वो भविष्यति ।। ३७.२७९ ।।
तस्य भानुरथो भाव्यः प्रतीताश्वश्च तत्सुतः।
प्रतीताश्वसुतश्चापि सुप्रतीतो भविष्यति ।। ३७.२८० ।।
सहदेवः सुतस्तस्य सुनक्षत्रश्च तत्सुतः ।। ३७.२८१ ।।
किन्नरस्तु सुनक्षत्राद्भविष्यति परंतपः।
भविता चान्तरिक्षस्तु किन्नरस्य सुतो महान् ।। ३७.२८२ ।।
अन्तरिक्षात्सुपर्णस्तु सुपर्णाच्चाप्यमित्रजित्।
पुत्रस्तस्य भरद्वाजो धर्मी तस्य सुतः स्मृतः।
पुत्रः कृतञ्जयो नाम धर्मिणः स भविष्यति।
कृतञ्जयसुतो व्रातो तस्य पुत्रो रणञ्जयः ।। ३७.२८३ ।।
भविता सञ्जयश्चापि वीरो राजा रणञ्जयात्।
सञ्जयस्य सुतः शाक्यः शाक्याच्छुद्धोदनोऽभवत् ।। ३७.२८४ ।।
शुद्धोदनस्य भविता शाक्यार्थे राहुलः स्मृतः।
प्रसेनजित्ततो भाव्यः क्षुद्रको भविता ततः ।। ३७.२८५ ।।

क्षुद्रकात्क्षुलिको भाव्यः क्षुलिकात्सुरथः स्मृतः।
सुमित्रः सुरथस्यापि अन्त्यश्च भविता नृपः ।। ३७.२८६ ।।
एते ऐक्ष्वाकवाः प्रोक्ता भवितारः कलौ युगे।
बृहद्बलान्वये जाता भवितारः कलौ युगे।
शूराश्च कृतविद्याश्च सत्यसन्धा जितेन्द्रियाः ।। ३७.२८७ ।।
अत्रानुवंशश्लोकोऽयं भविष्यज्ञैरुदाहृतः।
इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति।
सुमित्रं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ।
इत्येतन्मानवं क्षेत्रमैलञ्च समुदाहृतम् ।। ३७.२८८ ।।
अत ऊर्द्ध्वं प्रवक्ष्यामि मागधेयान्बृहद्रथान्।
जरासन्धस्य ये वंशे सहदेवान्वये नृपाः ।। ३७.२८९ ।।
अतीता वर्त्तमानाश्च भविष्याश्च तथा पुनः।
प्राधान्यतः प्रवक्ष्यामि गदतो मे निबोधत ।। ३७.२९० ।।
संग्रामे भारते तस्मिन् सहदेवो निपातितः।
सोमाधिस्तस्य तनयो राजर्षिः सगिरिव्रजे ।। ३७.२९१ ।।
पञ्चाशतं तथाष्टौ च समा राज्यमकारयत्।
श्रुतश्रवाः चतुःषष्टिसमास्तस्य सुतोऽभवत्।
अयुतायुस्तु षड्विंशं राज्यं वर्षाण्यकारयत्।
समाः शतं निरामित्रो महीं भुक्त्वा दिवङ्गतः ।। ३७.२९२ ।।
पञ्चाशतं समाः षट् च सुकृत्तः प्राप्तवान्महीम्।
त्रयोविंशं बृहत्कर्मा राज्यं वर्षाण्यकारयत् ।। ३७.२९३ ।।
सेनाजित्साम्प्रतं चापि एतां वै भुज्यते समाः।
श्रुतञ्जयस्तु वर्षाणि चत्वारिंशद्भविष्यति ।। ३७.२९४ ।।
महाबाहुर्महाबुद्धिर्महाभीमपराक्रमः।
पञ्चत्रिंशत्तु वर्षाणि महीं पालयिता नृपः ।। ३७.२९५ ।।
अष्टपञ्चा शतं चाब्दान् राज्ये स्थास्यति वै शुचिः।
अष्टाविंशत्समाः पूर्णाः क्षेमो राजा भविष्यति ।। ३७.२९६ ।।
भुवतस्तु चतुःषष्टीराज्यं प्राप्स्यति वीर्य्यवान्।
पञ्चवर्षाणि पूर्णानि धर्मनेत्रो भविष्यति ।। ३७.२९७ ।।
भोक्ष्यते नृपतिश्चैव ह्यष्टपञ्चाशतं समाः।

अष्टात्रिंशत्समा राज्यं सुव्रतस्य भविष्यति ।। ३७.२९८ ।।
चत्वारिंशद्दशाष्टौ च दृढसेनो भविष्यति।
त्रयस्त्रिंशत्तु वर्षाणि सुमतिः प्राप्स्यते ततः ।। ३७.२९९ ।।
द्वाविंशतिसमा राज्यं सुचलो भोक्ष्यते ततः।
चत्वारिंशत्समा राजा सुनेत्रो भोक्ष्यते ततः ।। ३७.३०० ।।
सत्यजित्पृथिवीराज्यं त्र्यशीतिं भोक्ष्यते समाः।
प्राप्येमां वीरजिच्चापि पञ्चत्रिंशद्भविष्यति ।। ३७.३०१ ।।
अरीञ्जयस्तु वर्षाणि पञ्चाशत्प्राप्स्यते महीम्।
द्वात्रिंशच्च नृपा ह्येते भवितारो बृहद्रथाः ।। ३७.३०२ ।।
पूर्णं वर्षसहस्रं वै तेषां राज्यं भविष्यति।
बृहद्रथेष्वतीतेषु वीतहोत्रेषु वर्तिषु ।। ३७.३०३ ।।
मुनिकः स्वामिनं हत्वा पुत्रं समभिषेक्ष्यति।
मिषतां क्षत्रियाणां हि प्रद्योतो मुनिको बलात् ।। ३७.३०४ ।।
स वै प्रणतसामन्तो भविष्ये नयवर्ज्जितः ।
त्रयोविंशत्समा राजा भविता स नरोत्तमः ।। ३७.३०५ ।।
चतुर्विंशत्समा राजा पालको भविता ततः।
विशाखयूपो भविता नृपः पञ्चाशतीं समाः ।। ३७.३०६ ।।
एकत्रिंशत्समा राज्यमजकस्य भविष्यति।
भविष्यति समा विंशत्तत्सुतो वर्त्तिवर्द्धनः ।। ३७.३०७ ।।
अष्टात्रिंशच्छतं भाव्याः प्राद्योताः पञ्च ते सुताः।
हत्वा तेषां यशः कृत्स्नं शिशुनाको भविष्यति ।। ३७.३०८ ।।
वाराणस्यां सुतस्तस्य संप्राप्स्यति गिरिव्रजम्।
शिशुनाकस्य वर्षाणि चत्वारिंशद्भविष्यति ।। ३७.३०९ ।।
शकवर्णः सुतस्तस्य षट्त्रिंशच्च भविष्यति।
ततस्तु विंशतिं राजा क्षेमवर्मा भविष्यति ।। ३७.३१० ।।
अजातशत्रूर्भविता पञ्चविंशत्समा नृपः।
चत्वारिंशत्समा राज्यं क्षत्रौजाः प्राप्स्यते ततः ।। ३७.३११ ।।
अष्टाविंशत्समा राजा विविसारो भविष्यति।
पञ्चविंशत्समा राजा दर्शकस्तु भविष्यति ।। ३७.३१२ ।।
उदायी भविता तस्मात्त्रयस्त्रिंशत्समा नृपः।

स वै पुरवरं राजा पृथिव्यां कुसुमाह्वयम्।
गङ्गाया दक्षिणे कूले चतुर्थेऽब्दे करिष्यति ।। ३७.३१३ ।।
द्वाचत्वारिंशत्समा भाव्यो राजा वै नन्दिवर्द्धनः।
चत्वारिंशत्त्रयञ्चैव महा नन्दी भविष्यति ।। ३७.३१४ ।।
इत्येते भवितारौ वै शैशुनाका नृपा दश।
अतानि त्रीणि वर्षाणि द्विषष्ट्यभ्यधिकानि तु ।। ३७.३१५ ।।
शैशुनाका भविष्यन्ति तावत्कालं नृपाः परे।
एतैः सार्द्धं भविष्यंति राजानः क्षत्रबान्धवाः ।। ३७.३१६ ।।
ऐक्ष्वाकवाश्चतुर्विंशत्पाञ्चालाः पञ्चविंशतिः।
कालकास्तु चतुर्व्विंशच्चतुर्व्विंशत्तु हैहयाः ।। ३७.३१७ ।।
द्वात्रिंशद्वै कलिङ्गास्तु पञ्चविंशत्तथा शकाः।
कुरवश्चापि षड्विंशदष्टाविंशति मैथिलाः ।। ३७.३१८ ।।
शूरसे नास्त्रयोविंशद्वीतिहोत्राश्च विंशतिः।
तुल्यकालं भविष्यन्ति सर्व एव महीक्षितः ।। ३७.३१९ ।।
महानन्दिसुतश्चापि शूद्रायां कालसंवृतः।
उत्पत्स्यते महापद्मः सर्वक्षत्रान्तरे नृपः ।। ३७.३२० ।।
ततःप्रभृति राजानो भविष्याः शूद्रयोनयः।
एकराट् स महापद्म एकच्छत्रो भविष्यति ।। ३७.३२१ ।।
अष्टा विंशतिवर्षाणि पृथिवीं पालयिष्यति।
सर्वक्षत्रहृतोद्धृत्य भाविनोऽर्थस्य वै बलात् ।। ३७.३२२ ।।
सहस्रास्तत्सुता ह्यष्टौ समा द्वादश ते नृपाः।।
महापद्मस्य पर्याये भविष्यन्ति नृपाः क्रमात् ।। ३७.३२३ ।।
उद्धरिष्यति तान् सर्वान् कौटिल्यो वै द्विरष्टभिः।
भुक्त्वा महीं वर्षशतं नन्देन्दुः स भविष्यति ।। ३७.३२४ ।।
चन्द्रगुप्तं नृपं राज्ये कौटिल्यः स्थापयिष्यति।
चतुर्विंशत्समा राजा चन्द्रगुप्तो भविष्यति ।। ३७.३२५ ।।
भविता भद्र सारस्तु पञ्चविंशत्समा नृपः।
षड्विंशत्तु समा राजा ह्यशोको भविता नृषु ।। ३७.३२६ ।।
तस्य पुत्रः कुनालस्तु वर्षाण्यष्टौ भविष्यति।
कुनाल सूनुरष्टौ च भोक्ता वै बन्धुपालितः ।। ३७.३२७ ।।

बन्धुपालितदायादो दशमानीन्द्रपालितः।
भविता सप्तवर्षाणि देववर्म्मा नराधिपः ।। ३७.३२८ ।।
राजा शतधरश्चाष्टौ तस्य पुत्रो भविष्यति।
बृहदश्वश्च वर्षाणि सप्त वै भविता नृपः ।। ३७.३२९ ।।
इत्येते नव भूपा ये भोक्ष्यन्ति च वसुन्धराम्।
सप्तत्रिंशच्छतं पूर्णं तेभ्यस्तु गौर्भविष्यति ।। ३७.३३० ।।
पुष्पमित्रस्तु सेनानीरुद्धृत्य वै बृहद्रथम्।
कारयिष्यति वै राज्यं समाः षष्टिं सदैव तु ।। ३७.३३१ ।।
पुष्पमित्रसुताश्चाष्टौ भविष्यन्ति समा नृपाः।
भविता चापि तज्ज्येष्ठः सप्तवर्षाणि वै ततः ।। ३७.३३२ ।।
वसुमित्रः सुतो भाव्यो दशवर्षाणि पार्थिवः।
ततो ध्रुकः समा द्वे तु भविष्यति सुतश्च वै ।। ३७.३३३ ।।
भविष्यन्ति समास्तस्मात्तिस्र एव पुलिन्दकाः।
राजा घोषसुतश्चापि वर्षाणि भविता त्रयः ।। ३७.३३४ ।।
ततो वै विक्रमित्रस्तु समा राजा ततः पुनः।
द्वात्रिंशद्भविता चापि समा भागवतो नृपः ।। ३७.३३५ ।।
भविष्यति सुतस्तस्य क्षेमभूमिः समा दश।
दशैते तुङ्गराजानो भोक्ष्यन्तीमां वसुन्धरम् ।। ३७.३३६ ।।
शतं पूर्णं दश द्वे च तेभ्यः किं वा गमिष्यति।
अपार्थिवसुदेवन्तु बाल्याद्व्यसनिनं नृपम् ।। ३७.३३७ ।।
देवभूमिस्ततोऽन्यश्च श्रृङ्गेषु भविता नृपः।
भविष्यति समा राजा नव कण्ठायनस्तु सः ।। ३७.३३८ ।।
भूतिमित्रः सुतस्तस्य चतुर्व्विंशद्भविष्यति।
भविता द्वादश समास्तस्मान्नारायणो नृपः ।। ३७.३३९ ।।
सुशर्म्मा तत्सुतश्चापि भविष्यति समा दश।
चतुरस्तुङ्गकृत्यास्ते नृपाः कण्ठायना द्विजाः ।। ३७.३४० ।।
भाव्याः प्रणतसामन्ताश्चत्वारिंशच्च पञ्च च।
तेषां पर्य्यायकाले तु तरन्धा तु भविष्यति ।। ३७.३४१ ।।
कण्ठायनमथोद्धृत्य सुशर्म्माणं प्रसह्य तम्।
श्रृङ्गाणां चापि यच्छिष्टं क्षययित्वा बलं तदा।

सिन्धुको ह्यन्ध्रजातीयः प्राप्स्यतीमां वसुन्धराम् ।। ३७.३४२ ।।
त्रयोविंशत्समा राजा सिन्धुको भविता त्वथ।
अष्टौ भ्रातश्च वर्षाणि तस्माद्दश भविष्यति ।। ३७.३४३ ।।
श्रीसातकर्णिर्भविता तस्य पुत्रस्तु वै महान्।
पञ्चाशतं समाः षट् च सातकर्णिर्भविष्यति ।। ३७.३४४ ।।
आपादबद्धो दश वै तस्य पुत्रो भविष्यति।
चतुर्व्विंशत्तु वर्षाणि षट् समा वै भविष्यति ।। ३७.३४५ ।।
भविता नेमिकृष्णस्तु वर्षाणां पञ्चविंशतिम्।
ततः संवत्सरं पूर्णं हालो राजा भविष्यति ।। ३७.३४६ ।।
पञ्च सप्तक राजानो भविष्यन्ति महाबलाः।
भाव्यः पुत्रिकषेणस्तु समाः सोऽप्येकविंशतिम् ।। ३७.३४७ ।।
सातकर्णिर्वर्षमेकं भविष्यति नराधिपः।
अष्टाविंशत्तु वर्षाणि शिवस्वामी भविष्यति ।। ३७.३४८ ।।
राजा च गौतमीपुत्र एकविंशत्समा नृषु।
एकोनविंशतिं राजा यज्ञश्रीः सातकर्ण्यथ ।। ३७.३४९ ।।
षडेव भविता तस्माद्विजयस्तु समा नृपः।
दण्डश्रीः सातकर्णी च तस्य पुत्रः समास्त्रयः ।। ३७.३५० ।।
पुलोवापि समाः सप्त अन्येषाञ्च भविष्यति ।
इत्येते वै नृपास्त्रिंशदन्ध्रा भोक्ष्यन्ति ये महीम् ।। ३७.३५१ ।।
समाः शतानि चत्वारि पञ्च षड्वै तथैव च।
अन्ध्राणां संस्थिताः पञ्च तेषां वंशाः समाः पुनः ।। ३७.३५२ ।।
सप्तैव तु भविष्यन्ति दशाभीरास्ततो नृपाः।
सप्त गर्दभिनश्चापि ततोऽथ दश वै शकाः ।। ३७.३५३ ।।
यवनाष्टौ भविष्यन्ति तुषारास्तु चतुर्दश।
त्रयोदश मरुण्डाश्च मौना ह्यष्टादशैव तु ।। ३७.३५४ ।।
अन्ध्रा भोक्ष्यन्ति वसुधां शते द्वे च शतं च वै।
शतानि त्रीण्यशीतिञ्च भोक्ष्यन्ति वसुधां शकाः ।। ३७.३५५ ।।
अशीतिञ्चैव वर्षाणि भोक्तारो यवना महीम्।
पञ्चवर्षशतानीह तुषाराणां मही स्मृता ।। ३७.३५६ ।।
शतान्यर्द्धचतुर्थानि भवितारस्त्रयोदश।

मरुण्डा वृषलैः सार्द्धं भाव्यान्या म्लेच्छजातयः ।। ३७.३५७ ।।
शतानि त्रीणि भोक्ष्यन्ति म्लेच्छा एकादशैव तु।
तच्छन्नेन च कालेन ततः कोलिकिला वृषाः ।। ३७.३५८ ।।
ततः कोलिकिलेभ्यश्च विन्ध्यशक्तिर्भविष्यति।
समाः षण्णवतिं त्रात्वा पृथिवीं च समेष्यति ।। ३७.३५९ ।।
वृषान् वै दिशकांश्चापि भविष्याश्च निबोधत।
शेषस्य नागराजस्य पुत्रः स्वरपुरञ्जयः ।। ३७.३६० ।।
भोगी भविष्यते राजा नृपो नागकुलोद्वहः।
सदाचन्द्रस्तु चन्द्रांशो द्वितीयो नखवांस्तथा ।। ३७.३६१ ।।
धनधर्मा ततश्चापि चतुर्थो विंशजः स्मृतः।
भूतिनन्दस्ततश्चापि वैदेशे तु भविष्यति ।। ३७.३६२ ।।
अङ्गानां नन्दनस्यान्ते मधुनन्दिर्भविष्यति।
तस्य भ्राता यवीयांस्तु नाम्ना नन्दियशाः किल ।। ३७.३६३ ।।
तस्यान्वये भविष्यन्ति राजानस्ते त्रयस्तु वै।
दोहित्रः शिशुको नाम पुरिकायां नृपोऽभवत् ।। ३७.३६४ ।।
विन्ध्यशक्तिसुतश्चापि प्रवीरो नाम वीर्यवान् ।
भोक्ष्यन्ति च समाः षष्टिं पुरीं काञ्चनकाञ्च वै ।। ३७.३६५ ।।
यक्ष्यन्ति वाजपेयैश्च समाप्तवरदक्षिणैः।
तस्य पुत्रास्तु चत्वारो भविष्यन्ति नराधिपाः ।। ३७.३६६ ।।
विन्ध्यकानां कुलेऽतीते नृपा वै बाह्लिका स्त्रयः।
सुप्रतीको नभीरस्तु समा भोक्ष्यति त्रिंशतिम् ।। ३७.३६७ ।।
शक्यमा नाम वै राजा माहिषीनां महीपतिः।
पुष्पमित्रा भविष्यन्ति पट्टमित्रास्त्रयोदश ।। ३७.३६८ ।।
मेकलायां नृपाः सप्त भविष्यन्ति च सत्तमाः।
कोमलायान्तु राजानो भविष्यन्ति महाबलाः ।। ३७.३६९ ।।
मेघा इति समाख्याता बुद्धिमन्तो नवैव तु।
नैषधाः पार्थिवाः सर्व्वे भविष्यन्त्यामनुक्षयात् ।। ३७.३७० ।।
नलवंशप्रसूतास्ते वीर्यवन्तो महाबलाः।
मागधानां महावीर्यो विश्वस्फानिर्भविष्यति ।। ३७.३७१ ।।
उत्साद्य पार्थिवान् सर्व्वान्सोऽन्यान् वर्णान् करिष्यति।

कैवर्त्तान् पञ्चकांश्चैव पुलिन्दान् ब्राह्मणांस्तथा ।। ३७.३७२ ।।
स्थापयिष्यन्ति राजानो नानादेशेषु तेजसा।
विश्वस्फानिर्महासत्त्वो युद्धे विष्णुसमो बली ।। ३७.३७३ ।।
विश्वस्फानिर्नरपतिः क्लीबा कृतिरिवोच्यते।
उत्सादयित्वा क्षत्रन्तु क्षत्रमन्यत् करिष्यति ।। ३७.३७४ ।।
देवान् पितृंश्च विप्रांश्च तर्पयित्वा सकृत्पुनः।
जाह्नवीतीरमासाद्य शरीरं यस्यते बली ।। ३७.३७५ ।।
संन्यस्य स्वशरीरन्तु शक्रलोकं गमिष्यति।
नवनाकास्तु भोक्ष्यन्ति पुरीं चम्पावतीं नृपाः ।। ३७.३७६ ।।
मथुराञ्च पुरीं रम्यां नागा भोक्ष्यन्ति सप्त वै।
अनुगङ्गं प्रयागञ्च साकेतं मगधांस्तथा।
एताञ्जनपदान् सर्व्वान् भोक्ष्यन्ते गुप्तवंशजाः ।। ३७.३७७ ।।
निषधान् यदुकांश्चैव शैशी तान् कालतोपकान्।
एताञ्जनपदान् सर्व्वान् भोक्ष्यन्ति मणिधान्यजाः ।। ३७.३७८ ।।
कोशलांश्चान्ध्रपौण्ड्रांश्च ताम्रलिप्तान् ससागरान्।
चम्पां चैव पुरीं रम्यां भोक्ष्यन्ति देवरक्षिताम् ।। ३७.३७९ ।।
कालिङ्गा महिषाश्चैव महेन्द्रनिलयाश्च ये।
एताञ्जनपदान् सर्व्वान् पालयिष्यति वै गुहः ।। ३७.३८० ।।
स्त्रीराष्ट्रं भक्ष्यकांश्चैव भोक्ष्यते कनकाह्वयः।
तुल्यकालं भविष्यन्ति सर्वे ह्येते महीक्षितः ।। ३७.३८१ ।।
अल्पप्रसादा ह्यनृता महाक्रोधाः ह्यधार्मिकाः।
भविष्यन्तीह यवना धर्मतः कामतोऽर्थतः ।। ३७.३८२ ।।
नैव मूर्द्धाभिषिक्तास्ते भविष्यन्ति नराधिपाः।
युगदोषदुराचारा भविष्यन्ति नृपास्तु ते ।। ३७.३८३ ।।
स्त्रीणां बलवधेनैव हत्वा चैव परस्परम्।
भोक्ष्यन्ति कलिशेषे तु वसुधां पार्थिवास्तथा ।। ३७.३८४ ।।
उदितोदितवंशास्ते उदितास्तमितास्तथा ।
भविष्यन्तीह पर्याये कालेन पृथिवीक्षितः ।। ३७.३८५ ।।
विहीनास्तु भविष्यन्ति धर्म्मतः कामतोऽर्थतः।
तैर्विमिश्रा जनपदा म्लेच्छाचाराश्च सर्वशः ।। ३७.३८६ ।।

विपर्य्ययेन वर्त्तन्ते नाशयिष्यन्ति वै प्रजाः।
लुब्धानृतरताश्चैव भवितारस्तदा नृपाः ।। ३७.३८७ ।।
तेषां व्यतीते पर्याये बहुस्त्रीके युगे तदा।
लवाल्लवं भ्रश्यमाना आयूरूपबलश्रुतैः ।। ३७.३८८ ।।
तथा गतास्तु वै काष्ठां प्रजासु जगतीश्वराः ।
राजानः सम्प्रणश्यन्ति कालेनोपहतास्तदा ।। ३७.३८९ ।।
कल्किनोपहताः सर्वे म्लेच्छा यास्यन्ति सर्वशः।
अधार्मिकाश्च तेऽत्यर्थं पाषण्डाश्चैव सर्वशः ।। ३७.३९० ।।
प्रनष्टे नृपशब्दे च सन्ध्याश्लिष्टे कलौ युगे।
किंञ्चिच्छिष्टाः प्रजास्ता वै धर्म्मे नष्टेऽपरिग्रहाः ।। ३७.३९१ ।।
असाधना हताश्वासा व्याधिशोकेन पीडिताः।
अनावृष्टिहताश्चैव परस्परवधेन च ।। ३७.३९२ ।।
अनाथा हि परित्रस्ता वार्त्तामुत्सृज्य दुःखिताः।
त्यक्त्वा पुराणि ग्रामांश्च भविष्यन्ति वनौकसः ।। ३७.३९३ ।।
एवं नृपेषु नष्टेषु प्रजास्त्यक्त्वा गृहाणि तु।
नष्टे स्नेहे दुरापन्ना भ्रष्टस्नेहाः सुहृज्जनाः ।। ३७.३९४ ।।
वर्णाश्रमपरिभ्रष्टाः सङ्करं घोरमास्थिताः।
सरित्पर्वतसेविन्यो भविष्यन्ति प्रजास्तदा ।। ३७.३९५ ।।
सरितः सागरानूपान् सेवन्ते पर्वतानि च।
अङ्गान् कलिङ्गान् वङ्गांश्च काश्मीरान् काशिकोशलान् ।। ३७.३९६ ।।
ऋषिकान्तगिरिद्रोणीः संश्रयिष्यन्ति मानवाः।
कृत्स्नं हिमवतः पृष्ठं कूलं च लवणाम्भसः ।। ३७.३९७ ।।
अरण्यान्यभिपत्स्यन्ति ह्यार्य्या म्लेच्छजनैः सह।
मृगैर्मीनैर्विहङ्गैश्च श्वापदैस्तक्षुभिस्तथा।
मधुशाकफलैर्मूलैर्वर्त्तयिष्यन्ति मानवाः ।। ३७.३९८ ।।
चीरं पर्णञ्च विविधं वल्कलान्यजिनानि च।
स्वयं कृत्वा विवत्स्यन्ति यथा मुनिजनास्तथा ।। ३७.३९९ ।।
बीजान्नानि तथा निम्नेस्वीहन्तः काष्ठशङ्कुभिः।
अजैडकं खरोष्ट्रञ्च पालयिष्यन्ति यत्नतः ।। ३७.४०० ।।
नदीर्वत्स्यन्ति तोयार्थे कूलमाश्रित्य मानवाः।

पार्थिवान् व्यवहारेण विबाधन्तः परस्परम् ।। ३७.४०१ ।।
बहुमन्याः प्रजाहीनाः शौचाचारविवर्जिताः।
एवं भविष्यन्ति नरास्तदाधर्म्मे व्यवस्थिताः ।। ३७.४०२ ।।
हीनाद्धीनांस्तथा धर्म्मान् प्रजाः समनुवर्त्तते।
आयुस्तदा त्रयोविंशं न कश्चिदतिवर्त्तते ।। ३७.४०३ ।।
दुर्बला विषयग्लाना जरया संपरिप्लुताः।
पत्रमूलफलाहाराश्चीरकृष्णाजिनाम्बराः ।। ३७.४०४ ।।
वृत्त्यर्थमभिलिप्सन्तश्चरिष्यन्ति वसुन्धराम्।
एतत्कालमनुप्राप्ताः प्रजाः कलियुगान्तके ।। ३७.४०५ ।।
क्षीणे कलियुगे तस्मिन् दिव्ये वर्षसहस्रके।
निःशेषास्तु भविष्यन्ति सार्द्धं कलियुगेन तु।
ससन्ध्यांशे तु निःशेषे कृतं वै प्रतिपत्स्यते ।। ३७.४०६ ।।
यदा चन्द्रश्च सूर्य्यश्च तथा तिष्यबृहस्पती।
एकरात्रे भरिष्यन्ति तदा कृतयुगं भवेत् ।। ३७.४०७ ।।
एष वंशक्रमः कृत्स्नं कीर्तितो वो यथाक्रमम्।
अतीता वर्त्तमानाश्च तथैवानागताश्च ये ।। ३७.४०८ ।।
महादेवाभिषेकात्तु जन्म यावत्परिक्षितः।
एतद्वर्षसहस्रन्तु ज्ञेयं पञ्चादशदुत्तरम् ।। ३७.४०९ ।।
प्रमाणं वै तथा चोक्तं महापद्मान्तरं च यत्।
अन्तरं तच्छतान्यष्टौ षट्त्रिंशच्च समाः स्मृताः ।। ३७.४१० ।।
एतत्कालान्तरं भाव्या अन्ध्रान्ता ये प्रकीर्त्तिताः।
भविष्यैस्तत्र सङ्ख्याताः पुराणज्ञैः श्रुतर्षिभिः ।। ३७.४११ ।।
सप्तर्षयस्तदा प्राहुः प्रतीपे राज्ञि वै शतम्।
सप्तविंशैः शतैर्भाव्या अन्ध्राणां ते त्वया पुनः ।। ३७.४१२ ।।
सप्तविंशतिपर्य्यन्ते कृत्स्ने नक्षत्रमण्डले।
सप्तर्षयस्तु तिष्ठन्ति पर्यायेण शतं शतम्।
सप्तर्षीणां युगं ह्येतद्दिव्यया सङ्ख्यया स्मृतम् ।। ३७.४१३ ।।
सा सा दिव्या स्मृता षष्टिर्दिव्याह्नाश्चैव सप्तभिः ।
तेभ्यः प्रवर्त्तते कालो दिव्यः सप्तर्षिभिस्तु तैः ।। ३७.४१४ ।।
सप्तर्षीणान्तु ये पूर्वा दृश्यन्ते उत्तरादिशि।

ततो मध्येन च क्षेत्रं दृश्यते यत्समं दिवि ।। ३७.४१५ ।।
तेन सप्तर्षयो युक्ता ज्ञेया व्योम्नि शतं समाः।
नक्षत्राणामृषीणाञ्च योगस्यैतन्निदर्शनम् ।। ३७.४१६ ।।
सप्तर्षयो मघायुक्ताः काले पारिक्षिते शतम्।
अन्ध्रांशे स चतुर्व्विंशे भविष्यन्ति मते मम ।। ३७.४१७ ।।
इमास्तदा तु प्रकृतिर्व्यापत्स्यन्ति प्रजा भृशम्।
अनृतोपहताः सर्वा धर्मतः कामतोऽर्थतः ।। ३७.४१८ ।।
श्रौतस्मार्त्ते प्रशिथिले धर्मे वर्णाश्रमे तदा।
शङ्करं दुर्बलात्मानः प्रतिपत्स्यन्ति मोहिताः ।। ३७.४१९ ।।
संसक्ताश्च भविष्यन्ति शूद्राः सार्द्धं द्विजातिभिः।
ब्राह्मणाः शूद्रयष्टारः शूद्रा वै मन्त्रयोनयः ।। ३७.४२० ।।
उपस्थास्यन्ति तान् विप्रास्तदा वै वृत्तिलिप्सवः ।
लवं लवं भ्रस्यमानाः प्रजाः सर्वाः क्रमेण तु ।। ३७.४२१ ।।
क्षयमेव गमिष्यन्ति क्षीणशेषा युगक्षये।
यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदा दिने ।। ३७.४२२ ।।
प्रतिपन्नः कलियुगस्तस्य सङ्ख्यां निबोधत।
सहस्राणां शतानीह त्रीणि मानुषसङ्ख्यया।
षष्टिं चैव सहस्राणि वर्षाणामुच्यते कलिः ।। ३७.४२३ ।।
दिव्ये वर्षसहस्रन्तु तत्सन्ध्यांशं प्रकीर्त्तितम्।
निःशेषे च तदा तस्मिन् कृतं वै प्रतिपत्स्यते ।। ३७.४२४ ।।
ऐल इक्ष्वाकुवंशश्च सह भेदैः प्रकीर्त्तितौ।
इक्ष्वाकोस्तु स्मृतः क्षत्रः सुमित्रान्तं विवस्वतः ।। ३७.४२५ ।।
ऐलं क्षत्रं क्षेमकान्तं सोमवंशविदो विदुः।
एते विवस्वतः पुत्राः कीर्त्तिताः कीर्त्तिवर्द्धनाः ।। ३७.४२६ ।।
अतीता वर्त्तमानाश्च तथैवानागताश्च ये।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैवान्वये स्मृताः ।। ३७.४२७ ।।
युगे युगे महात्मानः समतीताः सहस्रशः।
बहुत्वान्नामधेयानां परिसंख्या कुले कुले ।। ३७.४२८ ।।
पुनरुक्ता बहुत्वाच्च न मया परिकीर्त्तिता।
वैवस्वतेऽन्तरे ह्यस्मिन् निमिवंशः समाप्यते ।। ३७.४२९ ।।

एवायान्तु युगाख्यायां यतः क्षत्रं प्रपत्स्यते ।
तथा हि कथयिष्यामि गदतो मे निबोधत ।। ३७.४३० ।।
देवापिः पौरवो राजा इक्ष्वाकोश्चैव यो मतः।
महायोगबलोपेतः कलापग्राममास्थितः ।। ३७.४३१ ।।
सुवर्च्चाः सोमपुत्रस्तु इक्ष्वाकोस्तु भविष्यति।
एतौ क्षत्रप्रणेतारौ चतुर्विंशे चतुर्युगे ।। ३७.४३२ ।।
न च विंशे युगे सोमवंशस्यादिर्भविष्यति।
देवापिरसपत्नस्तु ऐलादिर्भविता नृपः ।। ३७.४३३ ।।
क्षत्रप्रापर्त्तकौ ह्येतौ भविष्येते चतुर्युगे।
एवं सर्वत्र विज्ञेयं सन्तानार्थे तु लक्षणम् ।। ३७.४३४ ।।
क्षीणे कलियुगे तस्मिन् भविष्ये तु कृते युगे।
सप्तर्षिभिस्तु तैः सार्द्धमाद्ये त्रेतायुगे पुनः ।। ३७.४३५ ।।
गोत्राणां क्षत्रियाणाञ्च भविष्येते प्रवर्त्तकौ।
द्वापरांशे न तिष्ठन्ति क्षत्रिया ऋषिभिः सह ।। ३७.४३६ ।।
काले कृतयुगे चैव क्षीणे त्रेतायुगे पुनः।
बीजार्थन्ते भविष्यन्ति ब्रह्मक्षत्रस्य वै पुनः ।। ३७.४३७ ।।
एवमेव तु सर्वेषु तिष्ठन्तीहान्तरेषु वै ।
सप्तर्षयो नृपैः सार्द्धं सन्तानार्थं युगे युगे ।। ३७.४३८ ।।
क्षत्रस्यैव समुच्छेदः सम्बन्धो वै द्विजैः स्मृतः।
मन्वन्तराणां सप्तानां सन्तानाश्च श्रुताश्च ते ।। ३७.४३९ ।।
परम्परा युगानाञ्च ब्रह्मक्षत्रस्य चोद्भवः।
यथा प्रवृत्तिस्तेषां वै प्रवृत्तानां तथा क्षयः ।। ३७.४४० ।।
सप्तर्षयो विदुस्तेषां दीर्घायुष्ट्वाक्षयन्तु ते।
एतेन क्रमयोगेन ऐलेक्ष्वाक्वन्वया द्विजाः ।। ३७.४४१ ।।
उत्पद्यमानास्त्रेतायां क्षीयमाणे कलौ पुनः।
अनुयान्ति युगाख्यां तु यावन्मन्वन्तरक्षयः ।। ३७.४४२ ।।
जामदग्न्येन रामेण क्षत्रे निरवशेषिते।
कृते वंशकुलाः सर्वाः क्षत्रियैर्वसुधाधिपैः।
द्विवंशकरणाश्चैव कीर्त्तयिष्ये निबोधत ।। ३७.४४३ ।।
ऐलस्येक्ष्वाकुनन्दस्य प्रकृतिः परिवर्त्तते।

राजानः श्रेणिबद्धास्तु तथान्ये क्षत्रिया नृपाः ।। ३७.४४४ ।।
ऐलवंशस्य ये ख्यातास्तथैवैक्ष्वाकवा नृपाः ।
तेषामेकशतं पूर्णं कुलानामभिषेकिनाम् ।। ३७.४४५ ।।
तावदेव तु भोजानां विस्तारो द्विगुणः स्मृतः ।
भजते त्रिंशकं क्षत्रं चतुर्धा तद्यथादिशम् ।। ३७.४४६ ।।
तेष्वतीताः समाना ये ब्रुवतस्तान्निबोधत।
शतं वै प्रतिविन्ध्यानां शतं नागाः शतं हयाः ।। ३७.४४७ ।।
धृतराष्ट्राश्चैकशतमशीतिर्जनमेजयाः।
शतञ्च ब्रह्मदत्तानां शीरिणां वीरिणां शतम् ।। ३७.४४८ ।।
ततः शतं पुरोमानां श्वेतकाशकुशादयः ।
ततोऽपरे सहस्रं वै येऽतीताः शतबिन्दवः ।। ३७.४४९ ।।
ईजिरे चाश्वमेधैस्ते सर्वे नियुतदक्षिणैः ।
एवं राजर्षयोऽतीताः शतशोऽथ सहस्रशः ।। ३७.४५० ।।
मनोर्वैवस्वतस्यास्मिन् वर्त्तमानेऽन्तरे तु ये ।
तेषां निबोधतोत्पन्ना लोके सन्ततयः स्मृताः ।। ३७.४५१ ।।
नु शक्यं विस्तरं तेषां सन्तानानां परम्परा।
तत्पूर्वापरयोगेन वक्तुं वर्षशतैरपि ।। ३७.४५२ ।।
अष्टाविंशद्युगाख्यास्तु गता वैवस्वतेऽन्तरे।
एता राजर्षिभिः सार्द्धं शिष्टा यास्ता निबोधत ।। ३७.४५३ ।।
चत्वारिंशच्च ये चैव भविष्याः सह राजभिः।
युगाख्यानां विशिष्टास्तु ततो वैवस्वतक्षये ।। ३७.४५४ ।।
एतद्वः कथितं सर्व्वं समासव्यासयोगतः।
पुनरुक्तं बहुत्वाच्च न शक्यन्तु युगैः सह ।। ३७.४५५ ।।
एते ययातिपुत्राणां पञ्चविंशा विशां हिताः।
कीर्त्तिताश्चामिता ये मे लोकान् वै धारयन्त्युत ।। ३७.४५६ ।।
लभते च वरेण्यञ्च दुर्लभानिह लौकिकान्।
आयुः कीर्त्तिं धनं पुत्रान् स्वर्गं चानन्त्यमश्नुते ।। ३७.४५७ ।।
धारणाच्छ्रवणाच्चैव ते लोकान् धारयन्त्युत।
इत्येष वो मयो पादस्तृतीयः कथितो द्विजाः।
विस्तरेणानुपूर्व्वी च किम्भूयो वर्त्तयाम्यहम् ।। ३७.४५८ ।।

इति श्रीमहापुराणे वायुप्रोक्ते अनुषङ्गपादो नाम सप्तत्रिंशोऽध्यायः ।। ३७ ।। इत्यनुषङ्गपादः ।।*

श्रुत्वा पादं तृतीयन्तु क्रान्तं सूतेन धीमता।
ततश्चतुर्थं पप्रच्छुः पादं वै ऋषिसत्तमाः ।। ३८.१ ।।

ऋषय ऊचुः।।
पादः क्रान्तस्तृतीयोऽयमनुषङ्गेण यस्त्वया।
चतुर्थं विस्तरात्पादं संहारं परिकीर्त्तय ।। ३८.२ ।।

मन्वन्तराणि सर्वाणि पूर्वाण्येवापरैः सह।
सप्तर्षीणामथैतेषां साम्प्रतस्यान्तरे मनोः ।। ३८.३ ।।

विस्तरावयवञ्चैव निसर्गस्य महात्मनः।
विस्तरेणानुपूर्व्या च सर्वमेव ब्रवीहि मे ।। ३८.४ ।।

सूत उवाच।।
भवतां कथयिष्यामि सर्वमेतद्यथातथम्।
पादं त्विमं ससंहारं चतुर्थं मुनिसत्तमाः ।। ३८.५ ।।

मनोर्वैवस्वतस्येमं सांप्रतस्य महात्मनः।
विस्तरेणानुपूर्व्या च निसर्गं श्रृणुत द्विजाः ।। ३८.६ ।।

मन्वन्तराणां संक्षेपं भविष्यैः सह सप्तभिः।
प्रलयञ्चैव लोकानां ब्रुवतो मे निबोधत ।। ३८.७ ।।

एतान्युक्तानि वै सम्यक् सप्तसप्तसु वै मया।
मन्वन्तराणि संक्षेपाच्छृणुतानागतानि मे ।। ३८.८ ।।

सावर्णस्य प्रवक्ष्यामि मनोर्वैवस्वतस्य ह।
भविष्यस्य भविष्यन्ति समासात्तु निबोधत ।। ३८.९ ।।

अनागताश्च सप्तैव स्मृतास्त्विह महर्षयः।
कौशिको गातवश्चैव जामदग्न्यश्च भार्गवः ।। ३८.१० ।।

द्वैपायनो वसिष्ठश्च कृपः शारद्वतस्तथा।
आत्रेयो दीप्तिमांश्चैव ऋष्यश्रृङ्गस्तु काश्यपः ।। ३८.११ ।।

भारद्वाजस्तथा द्रौणिरश्वत्थामा महायशाः।
एते सप्त महात्मानो भविष्याः परमर्षयः ।। ३८.१२ ।।

सुतपा श्चामिताभाश्च सुखाश्चैव गणास्त्रयः।
तेषां गणास्तु देवानां एकैको विंशकः स्मृतः ।। ३८.१३ ।।

नामतस्तु प्रवक्ष्यामि निबोधध्वं समाहिताः।

रितस्तपश्च शुक्रश्च द्युतिर्ज्योतिः प्रभाकरौ ।। ३८.१४ ।।

प्रभासो भासकृद्धर्म्मस्तेजोरश्मिऋतुर्विराट्।
अर्चिष्मान् द्योतनो भानुर्यशकीर्त्तिर्बुधो धृतिः।
विंशतिः सुतपा ह्येते नामभिः परिकीर्तिताः ।। ३८.१५ ।।

प्रभुर्विभुर्विभासश्च जेता हन्ताऽरिहा रितुः।
सुमतिः प्रमतिर्दीप्तिः समाख्यातो महोमहान् ।। ३८.१६ ।।

देहो मुनिर्नयो ज्येष्ठः समः सत्यश्च विश्रुतः।
इत्येते ह्यमिताभास्तु विंशतिः परिकीर्त्तिताः ।। ३८.१७ ।।

दमो दाता विदः सोमो वित्तवैद्यौ यमो निधिः।
होमं हव्यं हुतं दानं देयं दाता तपः शमः ।। ३८.१८ ।।

ध्रुवं स्थानं विधानञ्च नियमश्चेति विंशतिः।
मुख्या ह्येते समाख्याताः सावर्णे प्रथमेऽन्तरे ।। ३८.१९ ।।

मारीचस्यैव ते पुत्राः कश्यपस्य महात्मनः।
साम्प्रतस्य भविष्यन्ति सावर्णस्यान्तरे मनोः ।। ३८.२० ।।

तेषामिन्द्रो भविष्यस्तु बलिर्वैरोचनः पुरा।
वीरवांश्चावरीयांश्च निर्मोहः सत्यवाक् कृती ।। ३८.२१ ।।

चरिष्णुराज्यो विष्णुश्च वाचः सुमतिरेव च।
सावर्णस्य मनोः पुत्रा भविष्यन्ति नवैव तु ।। ३८.२२ ।।

नव चान्येषु वक्ष्यामि सावर्णेश्चान्तरेषु वै।
सावर्णमनवश्चान्ये भविष्या ब्रह्मणः सुताः ।। ३८.२३ ।।

मेरुसावर्णिनस्ते वै दृष्टा ये दिव्यदृष्टिभिः।
दक्षस्य ते हि दौहित्राः प्रियाया दुहितुः सुताः ।। ३८.२४ ।।

महता तपसा युक्ता मेरुपृष्ठे महौजसः।
ब्रह्मादिभिस्ते जनिता दक्षेणैव च धीमता ।। ३८.२५ ।।

महर्लोकगतावृत्य भविष्या मेरुमाश्रिताः।
महाभावात्तु ते पूर्वं जज्ञिरे चाक्षुषेऽन्तरे ।। ३८.२६ ।।

ऋषय ऊचुः।।

दक्षेण जनिताः पुत्राः कन्यायामात्मनः कथम्।
भवेत्तु ब्रह्मणश्चैव धर्मेण च महात्मनः ।। ३८.२७ ।।

सूत उवाच।।

अतो भविष्यान् वक्ष्यामि सावर्णमनवस्तु ये।
तेषां जन्म प्रभावञ्च नमस्कृत्य प्रचेतसे ।। ३८.२८ ।।

वैवस्वते ह्युपस्पृष्टे किञ्चिच्छिष्टे च चाक्षुषे।
जज्ञिरे मनवस्ते हि भविष्यानागतान्तरे ।। ३८.२९ ।।

प्राचेतसस्य दक्षस्य दौहित्रा मनवस्तु ये।
सावर्णा नामतः पञ्च चत्वारः परमर्षिजाः ।। ३८.३० ।।

संज्ञापुत्रस्तु सावर्ण एको वैवस्वतस्तथा।
ज्येष्ठः संज्ञासुतो नाम मनुर्वैवस्वतः प्रभुः ।। ३८.३१ ।।

वैवस्वतेऽन्तरे प्राप्ते समुत्पत्तिस्तयोः शुभा।
चतुर्द्दशैते मनवः कीर्त्तिताः कीर्त्तिवर्द्धनाः ।। ३८.३२ ।।

वेदे श्रुतौ पुराणे च सर्वे ते प्रभविष्णवः।
प्रजानां पतयः सर्वे भूतानां पतयः स्थिताः ।। ३८.३३ ।।

तैरियं पृथिवी सर्वा सप्तद्वीपा सपर्वता।
पूर्णं युगसहस्रं वै परिपाल्या नरेश्वरैः ।। ३८.३४ ।।

प्रजाभिस्तपसा चैव विस्तरं तेषु वक्ष्यते।
चतुर्द्दशैव ते ज्ञेयाः सर्गाः स्वायम्भुवादयः ।। ३८.३५ ।।

मन्वन्तराधिकारेषु वर्तन्ते च सकृत् सकृत्।
विनिवृत्ताधिकारास्ते महर्लोकं समाश्रिताः ।। ३८.३६ ।।

समतीतास्तु ये तेषामष्टौ षष्ठास्तथापरे।
पूर्वेषु साम्प्रतश्चायं शान्तिर्वैवस्वतः प्रभुः ।। ३८.३७ ।।

ये शिष्टास्तान् प्रवक्ष्यामि सह देवर्षिदानवैः।
सह प्रजानिसर्गेण सर्व्वांस्त्वनागतान् द्विजान् ।। ३८.३८ ।।

वैवस्वतनिसर्गेण तेषां ज्ञेयस्तु विस्तरः।
अन्यूना नातिरिक्तास्ते यस्मात् सर्व्वे विवस्वतः ।। ३८.३९ ।।

पुनरुक्ता बहुत्वात्तु वक्ष्ये न तेषु विस्तरम्।
मन्वन्तरेषु भाव्येषु भूतेष्वपि तथैव च ।। ३९.४० ।।

कुले कुले निसर्गास्तु तस्माद्भूयो विभागशः ।

तेषामेव हि शिष्टार्थं विस्तरेण क्रमेण च ।। ३९.४१ ।।

दक्षस्य कन्या धर्मिष्ठा सुव्रता नाम विश्रुता।
सर्वकन्यावशिष्टा तु श्रेष्ठा धर्मपरा सुता।
गृहीत्वा तां पिता कन्यां जगाम ब्रह्मणोऽन्तिके ।। ३९.४२ ।।

वैराजस्तमुपासीनं धर्मेण च भवेन च।
भवधर्मसमीपस्थं दक्षं ब्रह्माब्यभाषत ।। ३९.४३ ।।

दक्ष कन्या तवेयं वै जनयिष्यति सुव्रता।
चतुरो वै मनून् पुत्रांश्चातुर्वर्ण्यकराञ्छुभान् ।। ३८.४४ ।।

ब्रह्मणो वचनं श्रुत्वा दक्षो धर्मो भवस्तदा।
तां कन्यां मनसा जग्मुस्त्रयस्ते ब्रह्मणा सह ।। ३८.४५ ।।

सत्याभिध्यायिनां तेषां सद्यः कन्या व्यजायत।
सदृशानुरूपांस्तेषां चतुरो वै कुमारकान् ।। ३८.४६ ।।

संसिद्धाः कार्यकरणे सम्भूतास्ते श्रियान्विताः।
उपभोगसमर्थैश्च सद्योजातैः शरीरकैः ।। ३८.४७ ।।

ते दृष्ट्वा तान् स्वयम्बुद्ध्वा ब्रह्मा व्याहाहिणस्तदा।
संरब्धा वै व्यकर्षन्त मम पुत्रो ममेत्युत ।। ३८.४८ ।।

अभिध्यानान्मनोत्पन्नानूचुर्वै ते परस्परम्।
यो यस्य वपुषा तुल्यो भजतां स तु तं सुतम् ।। ३८.४९ ।।

यस्य यः सदृशश्चापि रूपे वीर्य च नामतः।
तं गृह्णातु सुभद्रं वो वर्णतो यस्य यः समः ।। ३८.५० ।।

ध्रुवं रूपं पितुः पुत्रः सोऽनुरुध्यति सर्वदा।
तस्मादात्मसमः पुत्रः पितुर्मातुश्च जायते ।। ३८.५१ ।।

एवं ते समयं कृत्वा सवर्णान् जगृहुः सुतान्।
यस्मात् सवर्णास्तेषां वै ब्रह्मादीनां कुमारकाः ।। ३८.५२ ।।

सवर्णा मनवस्तस्मात् सवर्णत्वं हि ते यतः।
मननान्माननाच्चैव तस्मात्ते मनवः स्मृताः ।। ३८.५३ ।।

चाक्षुषस्यान्तरेऽतीते प्राप्ते वैवस्वतस्य ह।
रुचेः प्रजापतेः पुत्रो रौच्यो नामाभवत्सुतः ।। ३८.५४ ।।

भूत्यामुत्पादितो यस्तु भौत्यो नामाभवत्सुतः।
वैवस्वतेऽन्तरे राजा द्वौ मनू तु विवस्वतोः ।। ३८.५५ ।।

वैवस्वतो मनुर्यश्च सावर्णो यश्च विश्रुतः।
ज्येष्ठः संज्ञासुतो विद्वान् मनुर्वैवस्वतः प्रभुः ।। ३८.५६ ।।

सवर्णायाः सुतश्चान्यः स्मृतो वैवस्वतो मनुः ।
सवर्णा मनवो ये च चत्वारस्तु महर्षिजाः ।। ३८.५७ ।।

तपसा सम्भृतात्मानः स्वेषु मन्वन्तरेषु वै।
भविष्येषु भविष्यन्ति सर्वकार्यार्थसाधकाः ।। ३८.५८ ।।

प्रथमं मेरुसावर्णेर्दक्षपुत्रस्य वै मनोः।
पुत्रा मरीचिगर्भाश्च सुशर्माणश्च ते त्रयः ।
सम्भूताश्च महात्मानः सर्वे वैवस्वतेऽन्तरे ।। ३८.५९ ।।

दक्षपुत्रस्य पुत्रास्ते रोहितस्य प्रजापतेः।
भविष्यस्य भविष्यस्तु एकैको द्वादशो गणः ।। ३८.६० ।।

ऐश्वर्यसंग्राहो राहो बाहुवशस्तथैव च।
पारा द्वादश विज्ञेया उत्तरांस्तु निबोधत ।। ३८.६१ ।।

वाजियो वाजिजिच्चैव प्रभृतिश्च ककुद्यथ।
दधिक्रावायपक्वाश्च प्रणीतो विजयो मधुः ।। ३८.६२ ।।

तेजस्मान्नथवो द्वौ तु द्वादशैते मरीचयः।
सुशर्म्माणस्तु वक्ष्यामि नामतस्तु निबोधत ।। ३८.६३ ।।

वर्णस्तथाप्यङ्गविश्वौ मुरण्यो व्रजनो मतः।
अमितो द्रवकेतुश्च जम्भोस्थाजस्रशक्रकाः ।। ३८.६४ ।।

सुनेमिर्द्युतपाश्चैव सुशर्म्माणः प्रकीर्त्तिताः।
तेषामिन्द्रस्तदा भाव्यो ह्यद्भुतो नाम नामतः ।। ३८.६५ ।।

स्कन्दः सोमप्रतीकाशः कार्तिकेयस्तु पावकः।
माघातिथिश्च पौलस्त्यो वसुः काश्यप एव च ।। ३८.६६ ।।

ज्योतिष्मान् भार्गवश्चैव द्युतिमानङ्गिरास्तथा।
वसितश्चैव वासिष्ठ आत्रेयो हव्यवाहनः ।। ३८.६७ ।।

सुतपाः पौलवश्चैव सप्तैते रोहितान्तरे।
धृतिकेतुदीप्तिकेतुशापहस्ता निरामयः ।। ३८.६८ ।।

पृथुश्रवास्तथा नाको भूरिद्युम्नो बृहद्रथः।
प्रथमस्य तु सावर्णेर्नव पुत्राः प्रकीर्तिताः ।। ३८.६९ ।।

दशमे त्वथ पर्याये धर्मपुत्रस्य वै मनोः।
द्वितीयस्य तु सावर्णेर्भाव्यस्यैवान्तरे मनोः ।। ३८.७० ।।

सुखामना विरुद्धाश्च द्वावेव तु गणौ स्मृतौ।
त्विषिवन्तश्च ते सर्वे शतसङ्ख्याश्च ते समाः ।। ३८.७१ ।।

प्राणा नायच्छतः प्रोक्त ऋषिभिः पुरुषेषु वै।
देवास्ते वै भविष्यन्ति धर्मपुत्रस्य वै मनोः ।। ३८.७२ ।।

तेषामिन्द्रस्तथा विद्वान् भविष्यः शान्तिरुच्यते।
हविष्मान् पौलहः श्रीमान् सुकीर्तिश्चापि भार्गवः ।। ३८.७३ ।।

आपोमूर्तिस्तथात्रेयो वसिष्ठश्चापि यः स्मृतः।
पौलस्त्यः प्रतिपश्चापि नाभागश्चैव काश्यपः।
अभिमन्युश्चाङ्गिरसः सप्तैते परमर्षयः ।। ३८.७४ ।।

सुक्षेत्रश्चोत्तमौजाश्च भूरिषेणश्च वीर्यवान्।
शतानीको निरामित्रो वृषसेनो जयद्रथः ।। ३८.७५ ।।

भूरिद्युम्नः सुवर्च्चाश्च दशैते मानवाः स्मृताः।
एकादशे तु पर्य्याये सावर्णे वै तृतीयके ।। ३८.७६ ।।

निर्म्माणरतयो देवाः कामजा वै मनोजवाः।
गणास्त्वेते त्रयः ख्याता देवतानां महात्मनाम् ।। ३८.७७ ।।

एकैकं त्रिंशतस्तेषां गणास्तु त्रिदिवौकसाम्।
मासस्याहानि त्रिंशत्तु यानि वै कवयो विदुः ।। ३८.७८ ।।

निर्म्माणरतयो देवा रात्रयस्तु विहङ्गमाः।
गणास्ते वै त्रयः प्रोक्ता देवतानां भविष्यति ।। ३८.७९ ।।

मनोजवा मुहूर्त्तास्तु इति देवाः प्रकीर्त्तिताः ।
एते हि ब्रह्मणः पुत्रा भविष्या मनवः स्मृताः ।। ३८.८० ।।

तेषामिन्द्रो वृषो नाम भविष्यः सुरराट् ततः।
तेषां सप्तर्षयश्चापि कीर्त्त्यमानान्निबोधत ।। ३८.८१ ।।

हविष्मान् काश्यपश्चापि वपुष्मान् यश्च भार्गवः।

वारुणिश्चैव चात्रेयो वासिष्ठो भग एव च ।। ३८.८२ ।।

पुष्टिश्चाङ्गिरसो ज्ञेयः पौलस्त्यो निश्चरस्तथा।
पौलहो ह्यग्नितेजाश्च देवा ह्येकादशेऽन्तरे ।। ३८.८३ ।।

सर्व्ववेगः सुधर्म्मा च देवानीकः पुरोवहः।
क्षेमधर्मा गृहेषुश्च ह्यादर्शः पौण्ड्रको मनः ।। ३८.८४ ।।

सावर्णस्य तु ते पुत्राः प्राजापत्यस्य वै मनोः।
द्वादशे त्वथ पर्यायें रुद्रपुत्रस्य वै मनोः ।। ३८.८५ ।।

चतुर्थे ऋतुसावर्णे देवास्तस्यान्तरे श्रृणु।
पञ्चैव तु गणाः प्रोक्ता देवतानामनागताः ।। ३८.८६ ।।

हरिता रोहिताश्चैव देवाः सुमनसस्तथा।
सुकर्म्माणः सुपाराश्च पञ्च देवगणाः स्मृताः ।। ३८.८७ ।।

ब्रह्मणो मानसा ह्येते एकैको दशको गणः।
अरुन्तिजो हरिश्चैव विद्वान् यश्च सहस्रशः ।। ३८.८८ ।।

पर्वतानुचरश्चैव ह्यपोंऽशुश्च मनोजवः।
उर्ज्जा स्वाहा स्वधा तारा दशैते रोहिताः स्मृताः ।। ३८.८९ ।।

तपोजानिर्भृतिश्चैव वाचा बन्धुश्च यः स्मृतः ।
रजश्चैव तु राजश्च स्वर्णपादस्तथैव च ।। ३८.९० ।।

व्युष्टिर्विधिश्च वै देवो दशैते रोहिताः स्मृताः ।
उषितादयास्तु ये देवास्त्रयस्त्रिशत्प्रकीर्तिताः ।। ३८.९१ ।।

देवान् सुमनसो विद्धि सुकर्माणो निबोधत।
सुपर्वा वृषभः पृष्टः कृपिद्युम्नौ विपश्चितः ।। ३८.९२ ।।

विक्रमश्च क्रमश्चैव निभृतः कान्त एव च।।
एते सुकर्मणो देवाः सुतांश्चैषां निबोधत ।। ३८.९३ ।।

वर्य्योदितस्तथा जिष्टो वर्चस्वी द्युतिमान् हविः।
शुभो हविकृतात्प्राप्तिर्व्यापृथो दशमस्तथा ।। ३८.९४ ।।

सुपारा मानसास्त्वेते देवा वै सम्प्रकीर्त्तिताः।
तेषामिन्द्रस्तु विज्ञेय ऋतधामा महायशाः ।। ३८.९५ ।।

कृतिर्वसिष्ठपुत्रस्तु ह्यात्रेयः सुतपास्तथा।

तपोमूर्तिश्चाङ्गिरसस्तपस्वी काश्यपस्तथा ।। ३८.९६ ।।

तपोऽशयानः पौलस्त्यः पुलहश्च तपोरतिः।
भार्गवः सप्तमस्त्वेषां विज्ञेयस्तु तपोमतिः ।। ३८.९७ ।।

एते सप्तर्षयः सिद्धा अन्ये सावर्णिकेऽन्तरे।
देववानुपदेवश्च देवश्रेष्ठो विदूरथः ।। ३८.९८ ।।

मित्रवान् मित्रबिन्दुश्च मित्रसेनो ह्यमित्रहा।
मित्रबाहुः सुवर्चाश्च द्वादशैते मनोः सुताः ।। ३८.९९ ।।

त्रयो दशे तु पर्याये भाव्या रौच्यान्तरे पुनः।
त्रय एव गणाः प्रोक्ता देवानान्तु स्वयम्भुवा ।। ३८.१०० ।।

ब्रह्मणो मानसाः पुत्रास्ते हि सर्वे महात्मनः।
सुत्रामाणः सुधर्म्माणः सुकर्म्माणश्च ते त्रयः ।। ३८.१०१ ।।

त्रिदशानां गणाः प्रोक्ता भविष्याः सोमपायिनः।
त्रयस्त्रिंशद्देवता याः प्राभविष्यन्त याज्ञिकैः ।। ३८.१०२ ।।

आज्येन पृषदाज्येन ग्रहश्रेष्ठेन चैव हि।
देवैर्देवास्त्रयस्त्रिंशत्पृथक्त्वेन निबोधत ।। ३८.१०३ ।।

सुत्रामाणः प्रयाज्यास्तु ह्याद्याज्यास्तु साम्प्रतम्।
सुकर्मणोऽनुयाज्यास्तु पृषदाज्याशिनस्तु ये ।। ३८.१०४ ।।

उपयाज्याः सुधर्माण इति देवाः प्रकीर्त्तिताः ।
दिवस्पतिर्महासत्त्वस्तेषामिन्द्रो भविष्यति ।। ३८.१०५ ।।

पुलहात्मजपुत्रास्ते विज्ञेयास्तु रुचेः सुताः ।
अङ्गिराश्चैव धृतिमान् पौलस्त्यः पथ्यवांस्तु सः ।। ३८.१०६ ।।

पौलहस्तत्त्व दर्शी च भार्गवश्च निरुत्सकः।
निष्प्रकम्पस्तथात्रेयो निर्मोहः कश्यपस्तथा ।। ३८.१०७ ।।

स्वरूपश्चैव वासिष्ठः सप्तैते तु त्रयोदशे।
चित्रसेनो विचित्रश्च तपो धर्मधृतो भवः ।। ३८.१०८ ।।

अनेकक्षत्रबद्धश्च सुरसो निर्भयः पृथः।
रौच्यस्यैते मनोः पुत्रा ह्यन्तरे तु त्रयोदशे ।। ३८.१०९ ।।

चतुर्द्दशे तु पर्याये भौतस्याप्यन्तरे मनोः ।

देवतानां गणाः पञ्च प्रोक्ता येतु भविष्यति ।। ३८.११० ।।

चाक्षुषाश्च कनिष्ठाश्च पवित्रा भाजरास्तथा।
वाचावृद्धाश्च इत्येते पञ्च देवगणाः स्मृताः ।। ३८.१११ ।।

सप्तैव तांस्तान् भागांश्च विद्धि चाक्षुषसंज्ञकान्।
बृहदाद्यानि सामानि कनिष्ठान् सप्त तान् विदुः।
सप्त लोकाः परित्रास्ते भाजिराः सप्त सिन्धवः ।। ३८.११२ ।।

वाचावृद्धानृषीन् विद्धि मनोः स्वायम्भुवस्य वै।
सर्वे मन्वन्तरेन्द्राश्च विज्ञेयास्तुल्यलक्षणाः ।। ३८.११३ ।।

तेजसा तपसा बुद्ध्या बलश्रुतपराक्रमैः।
त्रैलोक्ये यानि सत्त्वानि गतिमन्ति ध्रुवाणि च।
सर्वशः स्वैर्गुणैस्तानि इन्द्रास्तेऽभिभवन्ति वै ।। ३८.११४ ।।

भूतापवादिनो हृष्टा मध्यस्था भूतवादिनः।
भूतानुवादिनः सक्तास्त्रयो वेदाः प्रवादिनाम् ।। ३८.११५ ।।

अग्निध्रः काश्यपश्चैव पौलस्त्यो मागधश्च यः।
भार्गवो ह्यग्निबाहुश्च शुचिराङ्गिरसस्तथा।
ओजस्वी सुबलश्चैव भौत्यस्यैते मनोः सुताः ।। ३८.११६ ।।

सवर्णा मनवो ह्येते चत्वारो ब्रह्मणः सुताः।
एको वैवस्वतश्चैव सावर्णो मनुरुच्यते ।। ३८.११७ ।।

रौच्यो भौत्यश्च यौ तौ तु मनोः पौलहभार्गवौ।
भौत्यस्यैवाधिपत्ये तु पूर्णः कल्पस्तु पूर्य्यते ।। ३८.११८ ।।

सूत उवाच।।
निःशेषेषु च सर्वेषु तदा मन्वन्तरेष्विह।
अन्तेऽनेकयुगे तस्मिन् क्षीणे संहार उच्यते ।। ३८.११९ ।।

सप्तैते भार्गवा देवा अन्ते मन्वन्तरे तदा।
भुक्त्वा त्रैलोक्यमध्यस्था युगाख्यां ह्येकसप्ततिम् ।। ३८.१२० ।।

पितृभिर्मनुभिश्चैव सार्द्धं सप्तर्षिभिस्तु ये।
यज्वानश्चैव तेऽप्यन्ये तद्भाक्ताश्चैव तैः सह ।। ३८.१२१ ।।

महर्लोकं गमिष्यन्ति त्यक्त्वा त्रैलोक्यमीश्वराः।
ततस्तेषु गतेषूर्द्ध्वं क्षीणे मन्वन्तरे तदा।
अनाधारमिदं सर्वं त्रैलोक्यं वै भविष्यति ।। ३८.१२२ ।।

ततः स्थानानि शून्यानि स्थानिनां तानि वै द्विजाः।
प्रभ्रश्यन्ति विमुक्तानि ताराऋक्षग्रहैस्तथा ।। ३८.१२३ ।।

ततस्तेषु व्यतीतेषु त्रैलोक्यस्येश्वरेष्विह।
सेन्द्राष्टेषु महर्लोकं यस्मिंस्ते कल्पवासिनः ।। ३८.१२४ ।।

जितादयाश्च गणा ह्यत्र चाक्षुषान्ताश्चतुर्दश।
मन्वन्तरेषु सर्व्वेषु देवास्ते वै महौजसः ।। ३८.१२५ ।।

ततस्तेषु गतेषूर्द्ध्वं सायोज्यं कल्पवासिनाम्।
समेत्य देवास्ते सर्वे प्राप्ते संकलने तदा ।। ३८.१२६ ।।

महर्लोकं परित्यज्य गणास्ते वै चतुर्द्दश।
सशरीराश्च श्रूयन्ते जनलोकं सहानुगाः ।। ३८.१२७ ।।

एवं देवेष्वतीतेषु महर्लोकाज्जनं प्रति।
भूतादिष्ववशिष्टेषु स्थावरान्तेषु चाप्युत ।। ३८.१२८ ।।

शून्येषु लोकस्थानेषु महान्तेषु भूरादिषु।
देवेषु च गतेषूर्द्ध्वं सायोज्यं कल्पवासिनाम् ।। ३८.१२९ ।।

संहृत्य तांस्ततो ब्रह्मा देवर्षिपितृदानवान्।
संस्थापयति वै सर्गं महदृष्ट्या युगक्षये ।। ३८.१३० ।।

तत्र युगसहस्रान्तमहर्यद्ब्रह्मणो विदुः।
रात्रिं युगसहस्रान्तामहोरात्रविदो जनाः ।। ३८.१३१ ।।

नैमित्तिकः प्राकृतिको यश्चैवात्यन्तिकोऽर्थतः।
त्रिविधः सर्व्वभूतानामित्येष प्रतिसञ्चरः ।। ३८.१३२ ।।

ब्राह्मो नैमित्तिकस्तस्य कल्पदाहः प्रसंयमः।
प्रतिसर्गे तु भूतानां प्राकृतः करणक्षयः ।। ३८.१३३ ।।

ज्ञानाच्चात्यन्तिकः प्रोक्तः कारणानामसम्भवः ।
ततः संहृत्य तान् ब्रह्मा देवांस्त्रैलोक्यवासिनः ।। ३८.१३४ ।।

अहरन्ते प्रकुरुते सर्गस्य प्रलयं पुनः।
सुषुप्सुर्भगवान् ब्रह्मा प्रजाः संहरते तदा ।। ३८.१३५ ।।

ततो युगसहस्रान्ते संप्राप्ते च युगक्षये।
तत्रात्मस्थाः प्रजाः कर्त्तुं प्रपेदे स प्रजापतिः ।। ३८.१३६ ।।

तदा भवत्यनावृष्टिस्तदा सा शत वार्षिकी।
तथा यान्यल्पसाराणि सत्त्वानि पृथिवीतले ।। ३८.१३७ ।।

तान्येवात्र प्रलीयन्ते भूमित्वमुपयान्ति च।
सप्तरश्मिरथो भूत्वा ह्युदतिष्ठद्विभावसुः ।। ३८.१३८ ।।

असह्यरश्मिर्भगवान् पिबन्नम्भो गभस्तिभिः।
हरिता रश्मयस्तस्य दीप्यमानास्तु सप्तभिः ।। ३८.१३९ ।।

भूय एव विवर्तन्ते व्याप्नुवन्तो वनं शनैः।
भौमं काष्ठं धनं तेजो भृशमद्भिस्तु दीप्यते ।। ३८.१४० ।।

तस्मादुदकं सूर्य्यस्य तपतोऽति हि कथ्यते।
नावृष्ट्या तपते सूर्यो नावृष्ट्या परिविष्यते ।। ३८.१४१ ।।

नावृष्ट्या परिचिन्वन्ति वारिणा दीप्यते रविः।
तस्मादपः पिबन् या वै दीप्यते रविरम्बरे ।। ३८.१४२ ।।

तस्य ते रश्मयः सप्त पिबन्त्यम्भो महार्णवात्।
तेनाहारेण सन्दीप्तः सूर्य्यः सप्त भवत्युत ।। ३८.१४३ ।।

ततस्ते रश्मयः सप्त सूर्य्यभूताश्चतुर्दिशम्।
चतुर्लोकमिमं सर्वं दहन्ति शिखिनस्तदा ।। ३८.१४४ ।।

प्राप्नुवन्ति च भाभिस्तु ह्यूर्द्ध्वं चाधश्च रश्मिभिः।
दीप्यन्ते भास्कराः सप्त युगान्ताग्निः प्रतापिनः ।। ३८.१४५ ।।

ते वारिणा च संदीप्ता बहुसाहस्ररश्मयः।
खं समावृत्य तिष्ठन्ति निर्दहन्तो वसुन्धराम् ।। ३८.१४६ ।।

ततस्तेषां प्रतापेन दह्यमाना वसुन्धरा।
साद्रिनद्यर्णवा पृथ्वी विस्नेहा समपद्यत ।। ३८.१४७ ।।

दीप्ताभिः सन्तताभिश्च चित्राभिश्च समन्ततः।
अधश्चोर्ध्वश्च तिर्यक् च संरुद्धं सूर्यरश्मिभिः ।। ३८.१४८ ।।

सूर्य्यग्नीनां प्रवृद्धानां संसृष्टानां परस्परम्।
एकत्वमुपयातानामेकज्वालं भवत्युत ।। ३८.१४९ ।।

सर्वलोकप्रणाशञ्च सोऽग्निर्भूत्वा तु मण्डली।
चतुर्लोकमिदं सर्वं निर्दहत्याशु तेजसा ।। ३८.१५० ।।

ततः प्रलीयते सर्व्वं जङ्गमं स्थावरं तदा।
निर्वृक्षा निस्तृणा भूमिः कूर्मपृष्ठसमा भवेत् ।। ३८.१५१ ।।

अम्बरीषमिवाभाति सर्वं मारिषितं जगत्।
सर्वमेव तदार्चिर्भिः पूर्णं जज्वाल्यते नभः ।। ३८.१५२ ।।

पाताले यानि भूतानि महोतधिगतानि च ।
ततस्तानि प्रलीयन्ते भूमित्वमुपयान्ति च ।। ३८.१५३ ।।

द्वीपाश्च पर्वताश्चैव वर्षाण्यथ महोदधिः।
सर्व्वं तद्भस्मसाच्चक्रे सर्व्वात्मा पावकस्तु सः ।। ३८.१५४ ।।

समुद्रेभ्यो नदीभ्यश्च पातालेभ्यश्च सर्वतः।
पिबन्नपः समिद्धोऽग्निः पृथिवीमाश्रितो ज्वलन् ।। ३८.१५५ ।।

ततः संवर्त्तकः शैलानतिक्रम्य महांस्तथा।
लोकान् संहरते दीप्तो घोरः संवर्त्तकोऽनलः ।। ३८.१५६ ।।

ततः स पृथिवीं भित्त्वा रसातलमशोषयत्।
निर्दह्य तांस्तु पातालान्नागलोकमथादहत् ।। ३८.१५७ ।।

अधस्तात्पृथिवीं दग्ध्वा ह्यूर्द्ध्वं स दहते दिवम्।
योजनानां सहस्राणि ह्ययुतान्यर्बुदानि च ।। ३८.१५८ ।।

उदतिष्ठञ्छिखास्तस्य बह्वयः संवर्त्तकस्य तु।
गन्धर्वांश्च पिशाचांश्च समहोरगराक्षसान् ।
तदा दहति सन्दीप्तो गोलकं चैव सर्व्वशः ।। ३८.१५९ ।।

भूर्लोकन्तु भुवर्लोकं स्वर्लोकञ्च महस्तथा।
घोरं दहति कालाग्निरेवं लोकचतुष्टयम् ।। ३८.१६० ।।

व्याप्तेषु तेषु लोकेषु तिर्यगूर्द्ध्वमथाग्निना।
तत्तेजः समनुप्राप्तं कृत्स्नं जगदिदं शनैः।
अयोगुडनिभं सर्व्वं तदा ह्येवं प्रकाशते ।। ३८.१६१ ।।

ततो गजकुलाकारास्तडिद्भि समलंकृताः।
उत्तिष्ठन्ति तदा घोरा व्योम्नि संवर्त्तका घनाः ।। ३८.१६२ ।।

केचिन्नीलोत्पलश्यामाः केचित्कुमुदसन्निभाः।
केचिद्वैढूर्यसंकाशा इन्द्रनीलनिभाऽपरे ।। ३८.१६३ ।।

शङ्खकुन्दनिभाश्चान्ये जात्यञ्जननिभास्तथा ।

धूम्र वर्णा घनाः केचित्केचित्पीताः पयोधराः ।। ३८.१६४ ।।

केचिद्रासभवर्णाभा लाक्षारक्तनिभास्तथा।
मनःशिलाभास्त्वपरे कपोताभास्तथाम्बुदाः ।। ३८.१६५ ।।

इन्द्रगोपनिभाः केचिदुत्तिष्ठन्ति घना दिवि।
केचित्पुरधराकाराः केचिद्गजकुलोपमाः ।। ३८.१६६ ।।

के चित्पर्वतसंकाशाः केचित्स्थलनिभा घनाः।
कुण्डागारनिभाः केचित्केचिन्मीनकुलोपमाः ।। ३८.१६७ ।।

बहुरूपा घोररूपा घोरस्वरनिनादिनः।
तदा जलधराः सर्वे पूरयन्ति नभःस्थलम् ।। ३८.१६८ ।।

ततस्ते जलदा घोरा नवीना भास्करात्मिकाः।
सप्तधा संवृतात्मानस्तमग्निं शमयन्त्युत ।। ३८.१६९ ।।

ततस्ते जलदा वर्षं मुञ्चन्ति च महोद्यमम्।
सुघोरमशिवं सर्व्वं नाशयन्ति च पावकम् ।। ३८.१७० ।।

प्रवृष्टैश्च तथात्यर्थं वारिभिः पूर्य्यते जगत्।
अद्भिस्तेजोऽभिभूतञ्च तदाग्निः प्राविशत्यपः ।। ३८.१७१ ।।

नष्टे चाग्नौ वर्षशते पयोदाः पाकसम्भवाः।
प्लावयन्ति जगत्सर्वं बृहज्जालपरिस्रवैः ।। ३८.१७२ ।।

धाराभिः पूरयन्तीमं चोद्यमानाः स्वयम्भुवा।
अन्ये तु सलिलौघैस्तु वेलामभिभवन्त्यपि।
साद्रिर्द्वीपान्तरं पृथ्वी ह्यद्भिः संछाद्यते तदा ।। ३८.१७३ ।।

तस्य वृष्ट्या च तोयं तत्सर्व्वं हि परिमण्डितम्।
प्रविशत्युदधौ विप्राः पीतं सूर्य्यस्य रश्मिभिः ।। ३८.१७४ ।।

आदित्यरश्मिभिः पीतं जलमभ्रेषु तिष्ठति।
पुनः पतति तद्भूमौ तेन पूर्य्यन्ति चार्णवाः ।। ३८.१७५ ।।

ततः समुद्राः स्वां वेलां परिक्रामन्ति सर्व्वशः।
पर्व्वताश्च विशीर्य्यन्ते मही चाप्सु निमज्जति ।। ३८.१७६ ।।

ततस्तु सहसोद्भ्रान्तः पयोदांस्तान्नभस्तले।
संवेष्टयति घोरात्मा दिवि वायुः समन्ततः ।। ३८.१७७ ।।

तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे।
पूर्णे युगसहस्रे वै निःशेषः कल्प उच्यते ।। ३८.१७८ ।।

अथाम्भसा वृते लोके प्राहुरेकार्णवं बुधाः।
अथ भूमितलं खञ्च वायुश्चैकार्णवे तदा।
नष्टे भावेऽवलीनं तत्प्राज्ञायत न किञ्चन ।। ३८.१७९ ।।

पार्थिवास्त्वथ सामुद्रा आपो हैमाश्च सर्व्वशः।
प्रसरन्त्यो व्रजन्त्येकं सलिलाख्यां भजन्त्युत ।। ३८.१८० ।।

आगतागतिकं चैव तदा तत्सलिलं स्मृतम्।
प्रच्छाद्य तिष्ठति महीमर्णवाख्यं च तज्जलम् ।। ३८.१८१ ।।

आभान्ति यस्मात्ता भाभिर्भाशब्दव्याप्तिदीप्तिषु।
भस्म सर्व्वमनुप्राप्य तस्मादम्भो निरुच्यते ।। ३८.१८२ ।।

नानात्वे चैव शीघ्रे च धातुर्वै अर उच्यते।
एकार्णवे तदा यो वै न शीघ्रास्तेन ता नराः ।। ३८.१८३ ।।

तस्मिन् युगसहस्रान्ते दिवसे ब्रह्मणो गते।
तावन्तं कालमेवं तु भवत्येकार्णवं जगत्।
तदा तु सर्व्वव्यापारा निवर्त्तन्ते प्रजापतेः ।। ३८.१८४ ।।

एवमेकार्णवे तस्मिन्नष्टे स्थावर जङ्गमे।
तदा स भवति ब्रह्मा सहस्राक्षः सहस्रपात् ।। ३८.१८५ ।।

सहस्रशीर्षा सुमनाः सहस्रपात् सहस्रचक्षुर्वदनः सहस्रवाक्।
सहस्रबाहुः प्रथमः प्रजापतिस्त्रीयपथे यः पुरुषो निरुच्यते ।। ३८.१८६ ।।

आदित्यवर्णो भुवनस्य गोप्ता हयपूर्व्व एकः प्रथमस्तुराषाट् ।
हिरण्यगर्भः पुरुषो महान् वै संपद्यते वै तमसः परस्तात् ।। ३८.१८७ ।।

चतुर्युगसहस्रान्ते सर्वतः सलिलप्लुते।
सुषुप्सुरप्रकाशां स्वां रात्रिं तु कुरुते प्रभुः ।। ३८.१८८ ।।

चतुर्विधा यदा शेते प्रजाः सर्व्वाण्डमण्डिताः।
पश्यन्ते तं महात्मानं कालं सप्त महर्षयः ।। ३८.१८९ ।।

जनलोकविवर्त्तन्तस्तपसा लब्धचक्षुषः।
भृग्वादयो महात्मानः पूर्व्वे व्याख्यातलक्षणाः ।। ३८.१९० ।।

सत्यादीन् सप्तलोकान् वै ते हि पश्यन्ति चक्षुषा।

ब्रह्माणं ते तु पश्यन्ति महाब्राह्मीषु रात्रिषु ।। ३८.१९१ ।।

सप्तर्षयः प्रपश्यन्ति सप्तकालं स्वरात्रिषु।
कल्पानां परमेष्ठित्वात्तस्मादाद्यः स पठ्यते ।। ३८.१९२ ।।

स यष्टा सर्वभूतानां कल्पादिषु पुनः पुनः।
एवमावेशयित्वा तु स्वात्मन्येव प्रजापतिः ।। ३८.१९३ ।।

अथात्मनि महातेजाः सर्वमादाय सर्वकृत्।
ततस्ते वसते रात्रिं तमस्येकार्णवे जले ।। ३८.१९४ ।।

ततो रात्रिक्षये प्राप्ते प्रतिबुद्धः प्रजापतिः।
मनः सिसृक्षया युक्तं सर्गाय निदधे पुनः ।। ३८.१९५ ।।

एवं सलोके निर्वृत्ते उपशान्ते प्रजापतौ।
ब्रह्मनैमित्तिके तस्मिन् कल्पिते वै प्रसंयमे ।। ३८.१९६ ।।

देहैर्वियोगः सत्वानां तस्मिन् वै कृत्स्नशः स्मृतः।
ततो दग्धेषु भूतेषु सर्व्वेष्वादित्यरश्मिभिः।
देवर्षिमनुवर्य्येषु तस्मिन् सङ्कलने तदा ।। ३८.१९७ ।।

गन्धर्वादीनि सत्वानि पिशाचान्तानि सर्व्वशः।
कल्पादावप्रतप्तानि जनमेवाश्रयन्ति वै ।। ३८.१९८ ।।

तिर्यग्योनीनि सत्वानि नारकेयानि यान्यपि।
तदा तान्यपि दग्धानि धुतपापानि सर्व्वशः।
जने तान्युपपद्यन्ते यावत्संप्लवते जगत् ।। ३८.१९९ ।।

व्युष्टायान्तु रजन्यां तु ब्रह्मणेऽव्यक्तयोनये।
जायन्ते हि पुनस्तानि सर्व्वभूतानि कृत्स्नशः ।। ३८.२०० ।।

ऋषयो मनवो देवाः प्रजाः सर्व्वश्चतुर्विधाः।
तेषामपीह सिद्धानां निधनोत्पत्तिरुच्यते ।। ३८.२०१ ।।

यथा सूर्यस्य लोकेऽस्मिन्नुदयास्तमनं स्मृतम्।
तथा जन्मनिरोधश्च भूतानामिह दृश्यते ।। ३८.२०२ ।।

आभूतसंप्लवात्तस्माद्भवः संसार उच्यते ।
यथा सर्व्वाणि भूतानि जायन्ते हि वर्षास्विह ।। ३८.२०३ ।।

स्थावरादीनि सत्त्वानि कल्पे कल्पे तथा प्रजाः।
यथार्त्तावृतुलिङ्गानि नानारूपाणि पर्य्यये ।। ३८.२०४ ।।

दृश्यन्ते तानि तान्येव तथा ब्रह्मात्तरात्रिषु ।
प्रत्याहारे च सर्गे च गतिमन्ति ध्रुवाणि च ।। ३८.२०५ ।।

निष्क्रमन्ते विशन्ते च प्रजाकारं प्रजापतिम्।
ब्रह्माणं सर्वभूतानि महायोगं महेश्वरम् ।। ३८.२०६ ।।

संस्रष्टा सर्वभूतानां कल्पादिषु पुनः पुनः।
व्यक्ता व्यक्तो महादेवस्तस्य सर्वमिदं जगत् ।। ३८.२०७ ।।

येनैव सृष्टाः प्रथमं प्रयाता आपो हि मार्गेण महीतलेऽस्मिन्।
पूर्वप्रयातेन तथा ह्यपोऽन्यास्तेनैव तेनैव तु संव्रजन्ति ।। ३८.२०८ ।।

यथा शूभेन त्वशुभेन चैव तत्रैव तत्रैव विवर्त्तमानाः।
मर्त्यास्तु देहान्तरभाविततत्वाद्रवेर्वशादूर्द्ध्वमधश्चरन्ति ।। ३८.२०९ ।।

ये चापि देवा मनवः प्रजेशा अन्येऽपि ये स्वर्गगताश्च सिद्धाः।
सद्भाविताख्यातिवशाच्च धर्म्म्याः पुनर्निसर्गेण भवन्ति सत्त्वाः ।। ३८.२१० ।।

अत ऊर्द्ध्वं प्रवक्ष्यामि कालमाभूतसंप्लवम्।
मन्वन्तराणि यानि स्युर्व्याख्यातानि मया द्विजाः।
सह प्रज्ञानिसर्गेण सह देवैश्चतुर्द्दश ।। ३८.२११ ।।

स युगाख्या सहस्रं तु सर्वाण्येवान्तराणि वै ।
अस्याः सहस्रे द्वे पूर्णे निःशेषः कल्प उच्यते ।। ३८.२१२ ।।

एतद्ब्राह्ममहो ज्ञेयं तस्य संख्यां निबोधत।
निमेषस्तुल्य मात्रा हि कृतो लघ्वक्षरेण तु ।। ३८.२१३ ।।

मानुषाक्षिनिमेषास्तु काष्ठा पञ्चदश स्मृता।
लवः क्षणास्तु पञ्चैव विंशत्काष्ठा तु ते त्रयः ।। ३८.२१४ ।।

प्रस्थः सप्तोदकाश्चैव साधिकास्तु लवः स्मृतः।
लवास्त्रिंशत्कला ज्ञेयै मुहूर्तस्त्रिंशतः कलाः ।। ३८.२१५ ।।

मुहूर्त्तास्तु पुनस्त्रिंशदहोरात्रमिति स्थितिः।
अहोरात्रं कलानान्तु व्यधिकानि शतानि षट् ।। ३८.२१६ ।।

ताश्चैव संख्याया ज्ञेयं चन्द्रादित्यगतिर्यथा।
निमेषा दश पञ्चैव काष्ठास्तास्त्रिंशतः कला ।। ३८.२१७ ।।

त्रिंशत्कला मुहूर्त्तस्तु दशभागः कला स्मृता।

चत्वारिंशत्कलानान्तु मुहूर्त्त इति संज्ञतः ।। ३८.२१८ ।।

मुहूर्त्ताश्च लवाश्चापि प्रमाणज्ञैः प्रकल्पिताः।
तत्स्थाने नाम्भसाश्चापि पलान्यथ त्रयोदश ।। ३८.२१९ ।।

मागधेनैव मानेन जलप्रस्थो विधीयते।
एते चाप्युदकप्रस्थाश्चत्वारो नालिको धटः ।। ३८.२२० ।।

हेममाषैः कृतच्छिद्रै श्चतुर्भिश्चतुरङ्गुलैः.
समाहनि च रात्रौ च मुहूर्त्तो वै द्विनालिकौ ।। ३८.२२१ ।।

रवेर्गतिविशेषेण सर्वेषु नृषु नित्यशः।
अधिकं षट् शतं पञ्चैव काष्ठास्तास्त्रिंशतः कला ।। ३८.२२२ ।।

तदहर्मानुषं ज्ञेयं नाक्षत्रन्तु दशाधिकम्।
सावनेन तु मासेन ह्यब्दोऽयं मानुषः स्मृतः ।। ३८.२२३ ।।

एतद्दिव्यमहोरात्रमिति शास्त्रविनिश्चयः।
अह्नाऽनेन तु या संख्या मासर्त्वयनवार्षिकी ।। ३८.२२४ ।।

तदा बद्धमिदं ज्ञानं संज्ञा या ह्युपलक्ष्यताम्।
कलानां सुपरीमाणात्काल इत्यभिधीयते ।। ३८.२२५ ।।

यदहर्ब्रह्मणः प्रोक्तं दिव्या कोटी तु तत् स्मृत।
शतानाञ्च सहस्राणि दशद्विगुणतानि च।
नवतिञ्च सहस्राणि तथैवान्यानि यानि तु ।। ३८.२२६ ।।

एतच्छ्रुत्वा तु ऋषयो विस्मयं परमाद्भुतम्।
संस्थासम्भजनं ज्ञानमपृच्छन्ननन्तरन्तदा ।। ३८.२२७ ।।

।।ऋषय ऊचुः ।।

संप्लावनस्य कालन्तु मानुषेणैव सम्मतम्।
मानेन श्रोतुमिच्छामः संक्षेपार्थपदाक्षरम् ।। ३८.२२८ ।।

तेषां श्रुत्वा स देवस्तु वायुर्लोकहिते रतः।
संक्षेपाद्दिव्यचक्षुष्मान् प्रोवाच भगवान् प्रभुः ।। ३८.२२९ ।।

एते रात्र्यहनी पूर्वं कीर्त्तिते त्विह तौकिके।
तासां सङ्ख्याय वर्षाग्रं ब्राह्यं वक्ष्याम्यहःक्षये ।। ३८.२३० ।।

कोटिशतानि चत्वारि वर्षाणि मानुषाणि तु।

द्वात्रिंशच्च तथा कोट्यः सङ्ख्याताः सङ्ख्यया द्विजैः ।। ३८.२३१ ।।

तथा शतसहस्राणि एकोननवतिः पुनः।
आशीतिश्च सहस्राणि एष कालः प्लवस्य तु ।। ३८.२३२ ।।

मानुषाख्येण सङ्ख्यातः कालो ह्याभूतसंप्लवः।
सप्त सूर्य्यास्तदाऽग्रेषु तदा लोकेषु तेषु वै ।। ३८.२३३ ।।

महाभूतेषु लीयन्ते प्रजाः सर्व्वाश्चतुर्विधाः ।
सलिलेनाप्लुते लोके नष्टे स्थावरजङ्गमे ।। ३८.२३४ ।।

विनिवृत्ते च संहारे उपशान्ते प्रजापतौ।
निरालोके प्रदग्धे तु नैशेन तु समावृते ।
ईश्वराधिष्ठिते ह्यस्मिंस्तदा ह्येकार्णवे तदा ।। ३८.२३५
तावदेकार्णवो ज्ञेयो यावदासीदहः प्रभोः ।
रात्रिस्तु सलिलावस्था निवृत्तौ चाप्यहः समृतम् ।। ३८.२३६ ।।

अहोरात्रस्तथैवास्य क्रमेण परिवर्त्तते।
आभूतसंप्लवो ह्येष अहोरात्रः स्मृतः प्रभोः ।। ३८.२३७ ।।

त्रैलोक्ये यानि सत्वानि गतिमन्ति ध्रुवाणि च।
आभूतेभ्यः प्रलीयन्ते तस्मादाभूतसंप्लवः ।। ३८.२३८ ।।

अग्रे भूतः प्रजानान्तु तस्माद्भूतः प्रजापतिः।
आभूतः प्लवते चैव तस्मादाभूतसंप्लवः ।। ३८.२३९ ।।

शाश्वते चामृतत्वे च शब्दे चाभूतसंप्लवः।
अतीता वर्त्तमानाश्च तथैवानागताः प्रजाः।
दिव्यसङ्ख्या प्रसङ्ख्याता ह्यपरार्धगुणीकृता ।। ३८.२४० ।।

परार्धद्विगुणञ्चापि परमायुः प्रकीर्त्तितम्।
एतावान् स्थितिकालस्तु ह्यजस्येह प्रजामतेः।
स्थित्यन्ते प्रतिसर्गस्य ब्रह्मणः परमेष्ठिनः ।। ३८.२४१ ।।

यथा वायुप्रवेगेन दीपार्चिरुपशाम्यति।
तथैवं प्रतिसर्गेण ब्रह्मा समुपशाम्यति ।। ३८.२४२ ।।

तथा ह्यप्रतिसंसृष्टे महदादौ महेश्वरे ।।

महत्प्रलीयतेऽव्यक्ते गुणसाम्यं ततो भवेत् ।। ३८.२४३ ।।

इत्येष च समाख्यातो मया ह्याभूतसंप्लवः।

ब्रह्मनैमित्तिको ह्येष संप्रक्षालनसंयमः ।। ३८.२४४ ।।

समासेन समाख्यातो भूयः किं वर्त्तयामि वः।
य इदं धारयेन्नित्यं श्रृणुयाद्वाप्यभीक्ष्णशः ।
कीर्त्तनाच्छ्रवणाच्चापि महतीं सिद्धिमाप्नुयात् ।। ३८.२४५ ।।

इति श्रीमहापुराणे वायुप्रोक्ते मन्वन्तरकथनं नाम अष्टत्रिंशोऽध्यायः ।। ३८ ।। *

वायुरुवाच।।
असाधारणवृत्तैस्तु हुतशेषादिभिर्द्विजैः।
धर्म्मवैशेषिकैश्चैव ह्याचूर्णसूक्ष्मदर्शिभिः ।। ३९.१ ।।

ते देवैः सह तिष्ठन्ति महर्लोकनिवासिनः।
चतुर्द्दशैते मनवः कीर्त्तिताः कीर्त्तिवर्धनाः ।। ३९.२ ।।

अतीता वर्त्तमानाश्च तथैवानागताश्च ये।
ऋषिभि र्दैवतैश्चैव सह गन्धर्वराक्षसैः ।। ३९.३ ।।

सर्व्वे ह्यपि क्रमातीता महर्लोकं समाश्रिताः।
ब्राह्मणैः क्षत्रियैर्वैश्यैर्धार्मिकैः सहितैः सुराः ।। ३९.४ ।।

सर्व्वे ह्यपि क्रमातीता महर्लोकं समाश्रिताः।
ब्राह्मणैः क्षत्रियैर्वैश्यैर्धार्मिकैः सहितैः सुराः ।। ३९.५ ।।

तैस्तथ्यकारिभिर्युक्तैः श्रद्धावद्भिरदर्पितैः।
वर्णाश्रमाणां धर्म्मेषु श्रौतस्मार्त्तेषु संस्थितैः।
विनिवृत्ताधिकारास्ते यावन्मन्वन्तरक्षयः ।। ३९.६ ।।

।.ऋषय ऊचुः।।
महर्लोकेति यत्प्रोक्तं मातरिश्वंस्त्वया विभो।
प्रतिलोके च कर्त्तव्यमनेकैः समधिष्ठिताः ।। ३९.७ ।।

यावन्तश्चैव ते लोका दह्यन्ते ये न तेप्रभो।
एतन्नः कथय प्रीत्या त्वं हि वेत्थ यथा तथम् ।। ३९.८ ।।

एवमुक्तस्ततो वायुर्मुनिभिर्विनयात्मभिः।
प्रोवाच मधुरं वाक्यं यथातत्त्वेन तत्त्ववित् ।। ३९.९ ।।

वायुरुवाच।।
चतुर्द्दशैव स्थानानि वर्णितानि महर्षिभिः।
लोकाख्यानि तु यानि स्युर्येषु तिष्ठन्ति मानवाः ।। ३९.१० ।।

सप्त तेषु कृतान्याहुरकृतानि तु सप्त वै।
भूरादयस्तु सङ्ख्याताः सप्त लोकाः कृतास्त्विह ।। ३९.११ ।।

अकृतानि तु सप्तैव प्राकृतानि तु यानि वै।
स्थानानि स्थानिभिः सार्द्धं कृतानि तु निबन्धनम् ।। ३९.१२ ।।

पृथिवीं चान्तरिक्षं च दिव्यं यच्च महः स्मृतम्।
स्थानान्येतानि चत्वारि स्मृतान्यार्णवकानि च ।। ३९.१३ ।।

क्षयातिशययुक्तानि तथा युक्तानि वक्ष्यते।
यानि नैमित्तिकानि स्युस्तिष्ठन्त्याभूतसंप्लवम् ।। ३९.१४ ।।

जनस्तपश्च सत्यञ्च स्थानान्येतानि त्रीणि तु।
ऐकान्तिकानि सत्त्वानि तिष्ठन्तीहाप्रसंयमात् ।। ३९.१५ ।।

व्यक्तानि तु प्रवक्ष्यामि स्थानान्येतानि सप्त वै।
भूर्लोकः प्रथमस्तेषां द्वितीयस्तु भुवः स्मृतः ।। ३९.१६ ।।

स्वस्तृतीयस्तु विज्ञेयश्चतुर्थो वै महः स्मृतः।
जनस्तु पञ्चमो लोकस्तपः षष्ठो विभाव्यते ।। ३९.१७ ।।

सत्यन्तु सप्तमो लोको निरालोकस्ततः परम्।
भूरिति व्याहृते पूर्वं भूर्लोकश्च ततोऽभवत् ।। ३९.१८ ।।

द्वितीयं भुव इत्युक्त अन्तरिक्षं ततोऽभवत्।
तृतीयं स्वरितीत्युक्ते दिवं प्रादुर्बभूव ह ।। ३९.१९ ।।

व्याहारैस्त्रिभिरेतैस्तु ब्रह्मलोकमकल्पयत्।
ततो भूः पार्थिवो लोक अन्तरिक्षं ततोऽभवत्।
तृतीयं स्वरितीत्युक्ते दिवं प्रादुर्बभूव ह ।। ३९.२० ।।

स्वर्लोको वै दिवं ह्येतत्पुराणे निश्चयं गतम्।
भूतस्याधिपतिश्चाग्निस्ततो भूतपतिः स्मृतः ।। ३९.२१ ।।

वायुर्भुवस्याधिपतिस्तेन वायुर्भुवपतिः।
भव्यस्य सूर्योऽधिपतिस्तेन सूर्यो दिवस्पतिः ।। ३९.२२ ।।

महेति व्याहृतेनैवं महर्लोकस्ततोऽभवत्।
विनिवृत्ताधिकाराणां देवानां तत्र वै क्षयः ।। ३९.२३ ।।

जनस्तु पञ्चमो लोकस्तस्माज्जायन्ति वै जनाः ।

तासां स्वायंभुवाद्यानां प्रजानां जननाज्जनः ।। ३९.२४ ।।

यास्ताः स्वायम्भुवाद्या हि पुरस्तात्परिकीर्त्तिताः।
कल्पदग्धे तदा लोके प्रतिष्ठन्ति तदा तपः ।। ३९.२५ ।।

ऋभुः सनत्कुमाराद्या यत्र सन्त्यूर्द्ध्वरेतसः ।
तपसा भावितात्मानस्तत्र सन्तीति वा तपः ।। ३९.२६ ।।

सत्येति ब्रह्मणः शब्दः सत्तामात्रस्तु सः स्मृतः।
ब्रह्मलोकस्ततः सत्यं सप्तमः स तु भास्करः ।। ३९.२७ ।।

गन्धर्वाप्सरसो यक्षा गुह्यकास्तु सराक्षसाः।
सर्वभूतपिशाचाश्च नागाश्च सह मानुषैः।
स्वर्लोकवासिनः सर्वे देवा भुविनिवासिनः ।। ३९.२८ ।।

मरुतो मातरिश्वानो रुद्रा देवास्तथाश्विनौ।
अनिकेतान्तरिक्षास्ते भुवर्लौक्या दिवौकसः ।। ३९.२९ ।।

आदित्या ऋभवो विश्वे साध्याश्च पितरस्तथा।
ऋषयोऽङ्गिरसश्चैव भुवर्ल्लोकं समाश्रिताः ।। ३९.३० ।।

एते वैमानिका देवास्ताराग्रहनिवासिनः।
इत्येते क्रमशः प्रोक्ता ब्रह्मव्याहारसम्भवाः ।। ३९.३१ ।।

भूर्लोकप्रथमा लोका महदन्ताश्च ते स्मृताः।
आरभ्यन्ते तु तन्मात्रैः शुद्धास्तेषां परस्परम् ।। ३९.३२ ।।

शुक्राद्याश्चाक्षुषान्ताश्च ये व्यतीता भुवं श्रिताः।
महर्लोकश्चतुर्थस्तु तस्मिंस्ते कल्पवासिनः ।। ३९.३३ ।।

भूर्लोकप्रथमा लोका महदन्ताश्च ये स्मृताः।
तान् सर्वान् सप्त सूर्यास्ते अर्च्चिर्भिर्निदहन्ति वै ।। ३९.३४ ।।

मरीचिः कश्यपो दक्षस्तथा स्वायम्भुवोऽङ्गिराः ।
भृगुः पुलस्त्यः पुलहः क्रतुरित्येवमादयः ।। ३९.३५ ।।

प्रजानां पतयः सर्वे वर्त्तन्ते तत्र तैः सह।
निःसत्त्वा निर्ममाश्चैव तत्र ते ह्यूर्द्ध्वरेतसः ।। ३९.३६ ।।

ऋभुः सनत्कुमाराद्या वैराज्यास्ते तपोधनाः।
मन्वन्तराणां सर्वेषां सावर्णानां ततः स्मृताः ।
चतुर्द्दशानां सर्वेषां पुनरावृत्तिहेतवः ।। ३९.३७ ।।

योगं तपश्च सत्यञ्च समाधाय तदात्मनि।
षष्ठे काले निवर्त्तन्ते तत्तदाहर्विपर्यये ।। ३९.३८ ।।

सत्यन्तु सप्तमो लोको ह्यपुनर्मार्गगामिनाम्।
ब्रह्मलोकः समाख्यातो ह्यप्रतीघातलक्षणः ।। ३९.३९ ।।

पर्यासपारिमाण्येन भूर्लोकः समितिः स्मृतः ।
भूम्यन्तरं यदादित्यादन्तरिक्षं भुवः स्मृतम् ।। ३९.४० ।।

सूर्यध्रुवान्तरं यच्च स्वर्गलोको दिवः स्मृतः।
ध्रुवाज्जनान्तरं यच्च महर्लोकस्तदुच्यते ।। ३९.४१ ।।

विख्याताः सप्तलोकास्तु तेषां वक्ष्यामि सिद्धयः।
भूर्लोकवासिनः सर्वे ह्यन्नादास्तु रमात्मकाः ।। ३९.४२ ।।

भुवे स्वर्गे च ये सर्वे सोमपा आज्यपाश्च ते।
चतुर्थे येऽपि वर्त्तन्ते मह लोंकं समाश्रिताः ।। ३९.४३ ।।

विज्ञेया मानसी तेषां सिद्धिर्वै पञ्चलक्षणा।
सद्यश्चोत्पद्यते तेषां मनसा सर्व्वमीप्सितम् ।। ३९.४४ ।।

एते देवा यजन्ते वै यज्ञैः सर्वैः परस्परम्।
अतीतान् वर्तमानांश्च वर्त्तमानाननागतान् ।। ३९.४५ ।।

प्रथमानन्तरैरिष्ट्वा ह्यन्तराः साम्प्रतैः पुनः।
निवर्त्ततीत्यासम्बन्धोऽतीते देवगणे ततः ।। ३९.४६ ।।

विनिवृत्ताधिकाराणां सिद्धिस्तेषान्तु मानसी।
तेषान्तु मानसी ज्ञेया शुद्धा सिद्धिपरम्परा ।। ३९.४७ ।।

उक्ता लोकाश्च चत्वारो जनस्यानुविधिस्तथा।
समासेन मया विप्रा भूयस्तं वर्त्तयामि वः ।। ३९.४८ ।।

वायुरुवाच।।

मरीचिः कश्यपो दक्षो वसिष्ठश्चाङ्गिरा भृगुः।
पुलस्त्यः पुलहश्चैव क्रतुरित्येवमादयः ।। ३९.४९ ।।

पूर्वं ते संप्रसूयन्ते ब्रह्मणो मनसा इह।
ततः प्रजाः प्रतिष्ठाप्य जनमेवाश्रयन्ति ते ।। ३९.५० ।।

कल्पदाहप्रदीप्तेषु तदा कालेषु तेषु वै।
भूरा दिषु महान्तेषु भृशं व्याप्तेष्वथाग्निना ।। ३९.५१ ।।

शिखा संवर्त्तका ज्ञेया प्राप्नुवन्ति सदा जनाः।
यामादयो गणाः सर्वे महर्लोकनिवासिनः ।। ३९.५२ ।।

महर्लोकेषु दीप्तेषु जनमेवाश्रयन्ति ते।
सर्वे सूक्ष्मशरीरास्ते तत्रस्थास्तु भवन्ति ते ।। ३९.५३ ।।

तेषां ते तुल्यसामर्थ्यास्तुल्यमूर्त्तिधरास्तथा ।
जन लोके विवर्त्तन्ते यावत्संप्लवते जगत् ।। ३९.५४ ।।

व्युष्टायान्तु रजन्यां वै ब्रह्मणोऽव्यक्तयोनिनः।
अहरादौ प्रसूयन्ते पूर्ववत्क्रमशास्त्विह ।। ३९.५५ ।।

स्वायम्भुवादयः सर्वे मरीच्यन्तास्तु साधकाः।
देवास्ते वै पुनस्तेषां जायन्ते निधनेष्विह ।। ३९.५६ ।।

यामादयः क्रमेणैव कनिष्ठाद्याः प्रजापतेः।
पूर्वं पूर्वं प्रसूयन्ते पश्चिमे पश्चचिमास्तथा।
देवान्वये देवता हि सप्त सम्भूतयः स्मृताः।
व्यतीताः कल्यजास्तेषां तिस्रः शिष्टास्तथा परे ।। ३९.५८ ।।

आवर्त्तमाना देवास्ते क्रमेणैते न सर्व्वशः।
गत्वा जवन्तवीभावन्दशकृत्वः पुनः पुनः ।। ३९.५९ ।।

ततस्ते वै गणाः सर्व्वे दृष्ट्वा भावेष्वनित्यताम्।
भाविनोऽर्थस्य च बलात् पुण्याख्यातिबलेन च ।। ३९.६० ।।

निवृत्तवृत्तयः सर्वे स्वस्थाः सुमनसस्तथा।
वैराजे तूपपद्यन्ते लोकमुत्सृज्य तज्जनम् ।। ३९.६१ ।।

ततोऽन्येनैव कालेन नित्ययुक्तास्तपस्विनः।
कथनाच्चैव धर्मस्य तेषां ते जज्ञिरेऽन्वये ।। ३९.६२ ।।

ईहोत्पन्नास्ततस्ते वै स्थाना आपूरयन्त्युत।
देवत्वे च ऋषित्वे च मनुष्यन्वे च सर्वशः ।। ३९.६३ ।।

एवं देवगणाः सर्वे दशकृत्वो निवर्त्त्य वै।
वैराजेषूपपन्नास्ते दश तिष्ठन्त्युपप्लवान् ।। ३९.६४ ।।

पूर्णे पूर्णे ततः कल्पे स्थित्वा वैराजके पुनः।
ब्रह्मलोके विवर्त्तंते पूर्व्वपूर्व्वक्रमेण तु ।। ३९.६५ ।।

एतस्मिन् ब्रह्मलोके तु कल्पे वैराजके गते।
वैराजं पुनरप्येके कल्पस्थानमकल्पयन् ।। ३९.६६ ।।

एवं पूर्व्वानुपूर्व्येण ब्रह्मलोकगतेन वै।
एवं तेषु व्यतीतेषु तपसा परिकल्पिते।
वैराजे तूपपद्यन्ते दशकृत्वो निवर्त्तते ।। ३९.६७ ।।

एवं देवयुगानीह व्यतीतानि सहस्रशः।
निधनं ब्रह्मलोके तु गतानामृषिभिः सह ।। ३९.६८ ।।

।।सूत उवाच।.
न शक्यमानुपूर्वेण तेषां वक्तुं प्रविस्तरम्।
अनादित्वाच्च कालस्य ह्यसं ख्यानाच्च सर्वशः।
एवमेव न सन्देहो यथावत्कथितं मया ।। ३९.६९ ।।

तदुपश्रुत्य वाक्यार्थमृषयः संशयान्विताः।
सूतमाहुः पुराणज्ञं व्यासशिष्यं महा मतिम् ।। ३९.७० ।।

ऋषय ऊचुः।।
वैराजास्ते यदाहारा यत्सत्त्वाश्च यदाश्रयाः।
तिष्ठन्ति चैव यत्कालं तन्नो ब्रूहि यथातथम् ।। ३९.७१ ।।

तदुक्तमृषिभिर्वाक्यं श्रुत्वा लोकार्थतत्त्ववित्।
सूतः पौराणिको वाक्यं विनयेनेदमब्रवीत् ।। ३९.७२ ।।

ततः प्राप्यन्त ते सर्व्वे शुद्धिशुद्धतमाश्च ये।
आभूत संप्लवास्तत्र दश तिष्ठन्ति तेजनाः ।। ३९.७३ ।।

सर्वे सूक्ष्मशरीरास्ते विद्वांसो घनमूर्त्तयः।
स्थितलोकास्थितत्वाच्च तेषां भूतं न विद्यते ।। ३९.७४ ।।

ऊचुः सनत्कुमाराद्याः सिद्धास्ते थोगधर्मिणः।
ख्यातिं नैमित्तिकीं तेषां पर्य्यायेे समुपस्थिते ।। ३९.७५ ।।

स्थानत्यागे मनश्चापि युगपत्संप्रवर्त्तते।
ऊचुः सर्व्वे तदान्योऽन्यं वैराजाञ्छुद्धबुद्धयः ।। ३९.७६ ।।

एवमेव महाभागाः प्रणवं सम्प्रविश्य ह।
ब्रह्मलोके प्रवर्त्तानस्तन्नः श्रेयो भविष्यति ।। ३९.७७ ।।

एवमुक्त्वा तदा सर्वे ब्रह्मान्ते व्यवसायिनः।
योजयित्वा तदा सर्व्वे वर्त्तन्ते योगधर्म्मिणः ।। ३९.७८ ।।

तत्रैव सम्प्रलीयन्ते शान्ता दीपार्चिषो यथा।
ब्रह्मकायमवर्त्तन्त पुनरावृत्तिदुर्ल्लभम् ।।. ३९.७९ ।।

लोकं तं समनुप्राप्य सर्व्वे ते भावनामयम्।
आनन्दं ब्रह्मणः प्राप्य ह्यमृतत्वाय ते गताः ।। ३९.८० ।।

वैराजेभ्यस्तथैवोर्द्ध्वमन्तरे षड्गुणे ततः।
ब्रह्मलोकः समाख्यातो यत्र ब्रह्मा पुरोहितः ।। ३९.८१ ।।

ते सर्वे प्रणवात्मानो बुद्धशुद्धतपास्तथा।
आनन्दं ब्रह्मणः प्राप्यामृतत्वञ्च भजन्त्युत ।। ३९.८२ ।।

द्वन्द्वैस्ते नाभिभूयन्ते भावत्रयविवर्ज्जिताः।
आधिपत्यं विना तुल्या ब्रह्मणस्ते महौजसः ।। ३९.८३ ।।

प्रभावविजयैश्वर्य्यस्थितिवैराग्यदर्शनैः।
तेब्रह्मलौकिकाः सर्वे गतिं प्राप्य विवर्त्तनीम् ।। ३९.८४ ।।

ब्रह्मणा सह देवैश्च सम्प्राप्ते प्रतिसञ्चरे।
तपसोऽन्ते क्रियात्मानो बुद्धावस्था मनीषिणः।

अव्यक्ते संप्रलीयन्ते सर्वे ते क्षणदर्शिनः ।। ३९.८५ ।।

इत्येतदमृतं शुक्रं नित्यमक्षयमव्ययम्।
देवर्षयो ब्रह्मसत्रं सनातनमुपासते ।। ३९.८६ ।।

अपुनर्मार्गगादीनां तेषां चैवोर्द्ध्वरेतसाम् ।
कर्माभ्यासकृता शुद्धिर्वेदान्तेषूपलक्ष्यते ।। ३९.८७ ।।

तत्र तेऽभ्यासिनो युक्ताः परां काष्ठामुपासते।
हित्वा शरीरं पाप्मानममृतत्वाय ते गताः ।। ३९.८८ ।।

वीतरागा जितक्रोधाः निर्मोहाः सत्यवादिनः।
शान्ताः प्रणिहितात्मानो दयावन्तो जितेन्द्रियाः ।। ३९.८९ ।।

निःसङ्गाः शुचयश्चैव ब्रह्मसायुज्यगाः स्मृताः ।
अकामयुक्तैर्ये वीरास्तपोभिर्द्दग्धकिल्बिषाः।
तेषामभ्रंशिनो लोका अप्रमेयसुखाः स्मृताः ।। ३९.९० ।।

एतद्ब्रह्मपदं दिव्यं परमं व्योम्नि भास्वरम्।
गत्वा न यत्र शोचन्ति ह्यमरा ब्रह्मणा सह ।। ३९.९१ ।।

ऋषय ऊचुः।।
कस्मादेष परार्द्धश्च कश्चैष पर उच्यते।
एतद्वेदितुमिच्छामस्तन्नो निगद सत्तम ।। ३९.९२ ।।

सूत उवाच।।
श्रृणुध्वं मे परार्द्धञ्च परिसंख्यां परस्य च।
एवं दश शतञ्चैव सहस्रञ्चैव सङ्ख्यया ।। ३९.९३ ।।

विज्ञेयमासहस्रन्तु सहस्राणि दशायुतम्।
एकं शतसहस्रन्तु नियुतं प्रोच्यते बुधैः ।। ३९.९४ ।।

तथा शतसहस्राणामर्बुदं कोटिरुच्यते।
अर्बुदं दशकोट्यस्तु ह्यब्जं कोटिशतं विदुः ।। ३९.९५ ।।

सहस्रमपि कोटीनां खर्वमाहुर्मनीषिणः।
दशकोटिसहस्राणि निखर्वमिति तं विदुः ।। ३९.९६ ।।

शतं कोटिसहस्राणां सङ्कुरित्यभिधीयते।
कोटि सहस्र स्राणां कोटीनां दशधा पुनः।
गुणितानि समुद्रं वै प्राहुः संख्याविदो जनाः ।। ३९.९७ ।।

कोटीनां सहस्रमयुतमित्ययं मध्य उच्यते।
कोटि सहस्र नियुता स चान्त इति संज्ञितः ।। ३९.९८ ।।

कोटिकोटिसहस्राणिं परार्द्ध इति कीर्त्यते ।
परार्द्धद्विगुणञ्चापि परमाहुर्मनीषिणः ।। ३९.९९ ।।

शतमाहुः परिद्दढं सहस्रं परिपद्मकम्।
विज्ञेयमयुतं तस्मान्नियुतं प्रयुतं ततः ।। ३९.१०० ।।

अर्बुदं निर्बुदञ्चैव खर्बुदञ्च ततः स्मृतम्।
खर्वञ्चैव निखर्वञ्च शङ्कुः पद्मं तथैव च ।। ३९.१०१ ।।

समुद्रं मध्यमञ्चैव परार्द्धमपरं ततः।
एवमष्टादशैतानि स्थानानि गणनाविधौ ।। ३९.१०२ ।।

शतानीति विजानीयात् संज्ञितानि महर्षिभिः।
कल्पसंख्या प्रवृत्तस्य परार्द्धं ब्रह्मणः स्मृतम् ।। ३९.१०३ ।।

तावच्छेषोऽपि कालोऽस्य तस्यान्ते प्रतिसृज्यते।
पर एष परार्द्धञ्च संख्यातः संख्यया मया ।। ३९.१०४ ।।

यस्मादस्य परं वीर्यं परमायुः परन्तपः।
परा शक्तिः परो धर्म्मः परा विद्या परा धृतिः ।। ३९.१०५ ।।

परं ब्रह्म परं ज्ञानं परमैश्वर्यमेव च।
तस्मात्परतरं भूतं ब्रह्मणोऽन्यन्न विद्यते ।। ३९.१०६ ।।

परे स्थितो ह्येष परः सर्वार्थेषु ततः परः।
संख्यातस्तु परो ब्रह्मा तस्यार्द्धं तु परार्द्धता ।। ३९.१०७ ।।

संख्येयं चाप्यसंख्येयं सततं चापि तं त्रिकम्।
संख्येयं संख्यया दृष्टमपारार्द्धाद्विभाष्यते ।। ३९.१०८ ।।

राशौ दृष्टे न संख्यास्ति तदसंख्यस्य लक्षणम्।

आनन्त्यं सिकताख्येषु दृष्टवान् पञ्चलक्षणम् ।। ३९.१०९ ।।

ईश्वरैस्तत्प्रसंख्यातं शुद्धत्वाद्दिव्यदृष्टिभिः।
एवं ज्ञानप्रतिष्ठत्वात् सर्व्वं ब्रह्मानुपश्यति ।। ३९.११० ।।

एतच्छ्रुत्वा तु ते सर्वे नैमिषेयास्तपस्विनः।
बाष्पपर्य्याकुलाक्षास्तु प्रहर्षाद्घद्घदस्वराः ।। ३९.१११ ।।

पप्रच्छुर्मातरिश्वानं सर्व्वे ते ब्रह्मवादिनः।
ब्रह्मलोकस्तु भगवन् यावन्मात्रान्तरः प्रभो ।। ३९.११२ ।।

योजनाग्रेण संख्यातः साधनं योजनस्य तु।
क्रोशस्य च परीमाणं श्रोतुमिच्छामि तत्त्वतः ।। ३९.११३ ।।

तेषां तद्वचनं श्रुत्वा मातरिश्वा विनीतवाक्।
उवाच मधुरं वाक्यं यथादृष्टं यथाक्रमम् ।। ३९.११४ ।।

वायुरुवाच।।

एतद्वोऽहं प्रवक्ष्यामि श्रृणुध्वं मे विवक्षितम्।
अव्यक्ताद्व्यक्तभागो वै महास्थूलो विभाष्यते ।। ३९.११५ ।।

दशैव महतां भागा भूतादिः स्थूल उच्यते।
दशभागाधिकं चापि भूतादिः परमाणुकः ।। ३९.११६ ।।

परमाणुः सुसूक्ष्मस्तु बावग्राह्यो न चक्षुषा।
यदभेद्यतमं लोके विज्ञेयं परमाणु तत् ।। ३९.११७ ।।

जालान्तरगतं भानोर्यत्सूक्ष्मं दृश्यते रजः।
प्रथमं तत्प्रमाणानां परमाणुं प्रचक्षते ।। ३९.११८ ।।

अष्टानां परमाणूनां समवायो यदा भवेत् ।
त्रसरेणुः समाख्यातस्तत्पद्मरज उच्यते ।। ३९.११९ ।।

त्रसरेणवश्च येऽप्यष्टौ रथरेणुस्तु स स्मृतः ।
तेऽप्यष्टौ समवायस्था बालाग्रं तत्स्मृतं बुधैः ।। ३९.१२० ।।

बालाग्राण्यष्ट लिक्षा स्याद्यूका तच्चाष्टकं भवेत्।
यूकाष्टकं यवं प्राहुरङ्गुलन्तु यवाष्टकम् ।। ३९.१२१ ।।

द्वादशाङ्गुलपर्व्वाणि वितस्तिस्थानमुच्यते।
रत्निश्चाङ्गुलपर्वाणि विज्ञेयो ह्येकविंशतिः ।। ३९.१२२ ।।

चत्वारि विंशतिश्चैव हस्तः स्यादङ्गुलानि तु।
किष्कुर्द्विरत्निर्विज्ञेयो द्विचत्वारिंशदङ्गुलः ।। ३९.१२३ ।।

षण्णवत्यङ्गुलञ्चैव धनुराहुर्मनीषिणः।
एतद्गव्यूतिसंख्यायां पादानां धनुषः स्मृतः ।। ३९.१२४ ।।

धनुर्दण्डो युगं नाली तुल्यान्येतान्यथाङ्गुलैः।
धनुषस्त्रिशतं नल्वमाहुः संख्याविदो जनाः ।। ३९.१२५ ।।

धनुःसहस्रे द्वे चापि गव्यूतिरुपदिश्यते।
अष्टौ धनुःसहस्राणि योजनन्तु विधीयते ।। ३९.१२६ ।।

एतेन धनुषा चैव योजनं तु समाप्यते।
एतत्सहस्रं विज्ञेयं शक्रक्रोशान्तरन्तथा ।। ३९.१२७ ।।

योजनानान्तु संख्यातं संख्याज्ञानविशारदैः।
एतेन योजनाग्रेण श्रृणुध्वं ब्रह्मणोऽन्तरम् ।। ३९.१२८ ।।

महीतलात्सहस्राणां शतादूर्द्ध्वं दिवाकरः।
दिवाकरात्सहस्रेण तावदूर्द्ध्वं निशाकरः ।। ३९.१२९ ।।

पूर्णं शतसहस्रन्तु योजनानां निशाकरात्।
नक्षत्रमण्डलं कृत्स्नमुपरिष्टात्प्रकाशते ।। ३९.१३० ।।

शतं सहस्रं संख्यातो मेरुर्द्विगुणितं पुनः।
ग्रहान्तरमथैकैकमूर्द्ध्वं नक्षत्रमण्डलात् ।। ३९.१३१ ।।

ताराग्रहाणां सर्व्वेषामधस्ताच्चरते बुधः।
तस्योर्द्ध्वञ्चरते शुक्रस्तस्मादूर्द्ध्वं च लोहितः ।। ३९.१३२ ।।

ततो बृहस्पतिश्चोर्द्ध्वं तस्मादूर्द्ध्वं शनैश्चरः।
ऊर्द्ध्वं शतसहस्रन्तु योजनानां शनैश्चरात् ।। ३९.१३३ ।।

सप्तर्षिमण्डलं कृत्स्नमुपरिष्टात्प्रकाशते।

ऋषिभिस्तु सहस्राणां शतादूर्द्ध्वं विभाव्यते ।। ३९.१३४ ।।

योऽसौ तारामये दिव्ये विमाने ह्रस्वरूपके।
उत्तानपादपुत्रोऽसौ मेढिभूतो ध्रुवो दिवि ।। ३९.१३५ ।।

त्रैलोक्यस्यैष उत्सेधो व्याख्यातो योजनैर्मया।
मन्वन्तरेषु देवानामिज्या यत्रैव लौकिकी ।। ३९.१३६ ।।

वर्णाश्रमेभ्य इज्या तु लोकेऽस्मिन्या प्रवर्त्तते।
सर्वेषां देवयोनीनां स्थितिहेतुः सवै स्मृतः ।। ३९.१३७ ।।

त्रैलोक्यमेतद्वयाख्यातमत ऊर्द्ध्वं निबोधत।
ध्रुवा दूर्द्ध्वं महर्लोको यस्मिस्ते कल्पवासिनः।
एकयोजनकोटी सा इत्येवं निश्चयं गतम् ।। ३९.१३८ ।।

द्वे कोट्यौ तु महर्लोकाद्यस्मिंस्ते कल्पवासिनः।
यत्र ते ब्रह्मणः पुत्रा दक्षाद्याः साधकाः स्मृताः ।। ३९.१३९ ।।

चतुर्गुणोत्तरादूर्द्ध्वं जनलोकात्तपः स्मृतम्।
वैराजा यत्र ते देवा भूतदाहविवर्जिताः ।। ३९.१४० ।।

षड्गुणन्तु तपोलोकात्सत्यलोकान्तरं स्मृतम्।
अपुनर्मारकामानां ब्रह्मलोकः स उच्यते ।। ३९.१४१ ।।

यस्मान्न च्यवते भूयो ब्रह्माणं स उपासते ।
एककोटिर्योजनानां पञ्चाशन्नियुतानि तु ।। ३९.१४२ ।।

ऊर्द्ध्वं भागस्ततोऽण्डस्य ब्रह्मलोकात्परः स्मृतः।
चतुरश्चैव कोट्यस्तु नियुताः पञ्चषष्टि च ।। ३९.१४३ ।।

एषोऽर्द्धशप्रचारोऽस्य गत्यन्तश्चापरः स्मृतः।
ध्रवाग्रमेतद्वयाख्यातं योजनाग्राद्यथाश्रुतम् ।। ३९.१४४ ।।

अधोगतीनां वक्ष्यामि भूतानां स्थानकल्पनाम्।
गच्छन्ति घोरकर्म्माणः प्राणिनो यत्र कर्म्मभिः ।। ३९.१४५ ।।

नरको रौरवो रोधः सूकरस्ताल एव च।
तप्तकुम्भो महाज्वालः शबलोऽथ विमोचनः ।। ३९.१४६ ।।

कृमी च कृमिभक्षश्च लालाभक्षो विशंसनः ।
अधःशिराः पूयवहो रुधिरान्धस्तथैव च ।। ३९.१४७ ।।

तथा वैतरणं कृष्णमसिपत्रवनं तथा।
अग्निज्वालो महाघोरः संदंशोऽथ श्वभोजनः ।।३९.१४८ ।।

तमश्च कृष्णसूत्रश्च लोहश्चाप्यसिजस्तथा।
अप्रतिष्ठोऽथ वीच्यश्वनरका ह्येवमादयः ।। ३९.१४९ ।।

तामसा नरकाः सर्वे यमस्य विषये स्थिताः।
येषु दुष्कृतकर्माणः पतन्तीह पृथक्पृथक् ।। ३९.१५०
भूमेरधस्तात्ते सर्वे रौरवाद्याः प्रकीर्त्तिताः।
रौरवे कूटसाक्षी तु मिथ्या यश्चाभिशंसति।
क्रूरग्रहे पक्षवादी ह्यसत्यः पतते नरः ।। ३९.१५१ ।।

रोधे गोघ्नो ब्रूणहा च ह्यग्निदाता पुरस्य च।
सूकरे ब्रह्महा मज्जेत्सुरापः स्वर्णतस्करः ।। ३९.१५२ ।।

ताले पतेत्क्षत्रियहा हत्वा वैश्यञ्च दुर्गतिम्।
ब्रह्महत्याञ्च यः कुर्याद्यश्च स्याद्गुरुतल्पगः ।। ३९.१५३ ।।

तप्तकुम्भी स्वसागामी तथा राजभटश्च यः।
तप्तलोहे चाश्ववणिक्तथा बन्धनरक्षिता ।। ३९.१५४ ।।

साध्वीविक्रयकर्त्ता च यस्तु भक्तं परित्यजेत्।
महाज्वाले दुहितरं स्नुषां गच्छति यस्तु वै ।। ३९.१५५ ।।

वेदो विक्रीयते येन वेदं दूषयते च यः।
गुरूंश्चैवावमन्यन्ते वाक्क्रोशैस्ताडयन्ति च ।। ३९.१५६ ।।

अगम्यगामीच नरो नरकं शबलं व्रजेत्।
विमोहे पतिते चौरे मर्यादां यो भिनत्ति वै ।। ३९.१५७ ।।

दुरध्वं कुरुते यस्तु कीटलोहं प्रपद्यते।
देवब्राह्मणविद्वेष्टा गुरूणाञ्चाप्यपूजकः।
रत्नं दूषयते यस्तु कृमिभक्ष्यं प्रपद्यते ।। ३९.१५८ ।।

पर्य्यश्नाति य एकोऽन्यो ब्राह्मणीं सुहृदः सुताम्।
लालाभक्षे स पतति दुर्गन्धे नरके गतः ।। ३९.१५९ ।।

काण्डकर्त्ता कुलालश्च निष्कहर्त्ता चिकित्सकः।
आरा मेष्वग्निदाता यः पतते स विशंसने ।। ३९.१६० ।।

असत्प्रतिग्रही यश्च तथैवायाज्ययाजकः।
नक्षत्रैर्जीवितो यश्च नरो गच्छत्यधोमुखम् ।। ३९.१६१ ।।

क्षीरं सुरां च मांसं च लाक्षां गन्धं रसन्तिलान्।
एवमादीनि विक्रीणन्घोरो पूयवहे पतेत् ।। ३९.१६२ ।।

यः कुक्कुटानि बध्नाति मार्जारान्सूकरांश्च तान्।
पक्षिणश्च मृगाञ्छागान्सोऽप्येनं नरकं व्रजेत् ।। ३९.१६३ ।।

आजीविको माहिषकस्तथा चक्रध्वजी च यः।
रङ्गोपजीविको विप्रः शाकुनिग्राम याजकः ।। ३९.१६४ ।।

अगारदाही गरदः कुण्डाशी सोमविक्रयी।
सुरापो मांसभक्षश्च तथा च पशुघातकः ।। ३९.१६५ ।।

विश(श्व)स्ता महिषादीनां मृग हन्ता तथैव च।
पर्वकारश्च सूची च यश्च स्यान्मित्रघातकः।
रुधिरान्धे पतन्त्येते एवमाहुर्मनीषिणः ।। ३९.१६६ ।।

उपविष्टमेकपङ्क्त्यां विषमं भोजयन्ति ये।
पतन्ति नरके घोरे विड्भुजे नात्र संशयः ।। ३९.१६७ ।।

मृषावादी नरो यश्च तथा प्राक्रोशकोऽशुभः।
पतेत्तु नरके घोरो मूत्राकीर्णे स पापकृत् ।। ३९.१६८ ।।

मधुग्राहाबिहन्तारो यन्ति वैतरणीं नराः।
उन्मत्ताश्चित्तभग्नाश्च शौचाचारविवर्ज्जिताः ।। ३९.१६९ ।।

क्रोधना दुःखदाश्चैव कुहकाः कृष्टगामिनः।
असि पत्रवने छेदी तथा ह्यौरभ्रिकाश्च ये।
कर्त्तनैश्च निकृष्यन्ते मृगव्याधाः सुदारुणैः ।। ३९.१७० ।।

आश्रमप्रत्यवसिता अग्निज्वाले पतन्ति वै।
भौज्यन्ते श्याम शबलैरयस्तुण्डैश्च वायसैः ।। ३९.१७१ ।।

इज्यायां व्रतमालोपात्सन्दंशे नरके पतेत्।
स्कन्दन्ते यदि वा स्वप्ने व्रतिनो ब्रह्मचारिणः ।। ३९.१७२ ।।

पुत्रैरध्यापिता ये च पुत्रैराज्ञापिताश्च ये।
तेसर्वे नरकं यान्ति नियतन्तु श्वभोजने ।। ३९.१७३ ।।

वर्णाश्रमविरूद्धानि क्रोधहर्षसमन्विताः।
कर्माणि ये तु कुर्वन्ति सर्वे निरयगामिनः ।। ३९.१७४ ।।

उपरिष्टात्सितो घोर उष्णात्मा रौरवो महान्।
सुदारुणस्तु शीतात्मा तस्याधस्तात्तपः स्मृतः ।। ३९.१७५ ।।

एवमादि क्रमेणैव वर्ण्यमानान्निबोधत।
भूमेरधस्तात्सप्तैव नरकाः परिकीर्तिताः ।। ३९.१७६ ।।

अधर्मसूनवस्ते स्युरन्धतामिस्रकादयः।
रौरवः प्रथमस्तेषां महा रौरव एव च ।। ३९.१७७ ।।

अस्याधः पुनरप्यन्यः शीतस्तप इति स्मृतः।
तृतीयः कालसूत्रः स्यान्महाहविविधिः स्मृतः ।। ३९.१७८ ।।

अप्रतिष्ठ श्चतुर्थः स्यादवीची पञ्चमः स्मृतः।
लोहपृष्ठस्तमस्तेषामविधेयस्तु सप्तमः ।। ३९.१७९ ।।

घोरत्वाद्रौरवः प्रोक्तः साम्भको दहनः स्मृतः।
सुदारुणस्तु शीतात्मा तस्याधस्तात्तपोऽधमः ।। ३९.१८० ।।

सर्पो निकृन्तनः प्रोक्तः कालसूत्रेति दारुणः।
अप्रतिष्ठे स्थितिर्नास्ति भ्रमस्तस्मिन्सुदारुणः ।। ३९.१८१ ।।

अवीचिर्दारुणः प्रोक्तो यन्त्रसंपीडनाच्च सः।
तस्मात्सुदारुणो लोहः कर्म्मणां क्षयणाच्च सः ।। ३९.१८२ ।।

तथाभूतो शरीरत्वादविधिभ्यस्तु स स्मृतः।
पीडबन्धवधासङ्गादप्रतीकारलक्षणः ।। ३९.१८३ ।।

ऊर्द्ध्वं सैलमितास्ते तु निरालोकाश्च ते स्मृताः।
दुःखोत्कर्षस्तु सर्वेषु ह्यधर्मस्य निमित्ततः ।। ३९.१८४ ।।

ऊर्द्ध्वं लोकैः समावेतौ निरालोकौ च तावुभौ।
कूटाङ्गारप्रमाणैश्च शरीरी मूत्रनायकः ।। ३९.१८५ ।।

उपभोगसमर्थैस्तु सद्यो जायन्ति कर्मभिः।
दुःख प्रकर्षश्चोग्रत्वं तेषु सर्वेषु वै स्मृतः ।। ३९.१८६ ।।

यातनाश्चाप्यसंख्येया नारकाणां तथा स्मृताः।
दुःखोत्कर्षस्तु सर्वेषु ह्यधर्मस्य निमित्ततः ।। ३९.१८७ ।।

तिर्यग्योनौ प्रसूयन्ते कर्मशेषे गते ततः।
देवाश्च नारकाश्चैव ह्यूर्द्ध्वं चाधश्च संस्थिताः ।। ३९.१८८ ।।

धर्माधर्मनिमित्तेन सद्यो जायन्ति मूर्त्तयः।
उपभोगार्थमुत्पत्तिरौपपत्तिककर्मतः ।। ३९.१८९ ।।

पश्यन्ति नारकान्देवा ह्यधोवक्रान् ह्यधोगतान्।
नारकाश्च तथा देवान् सर्वान्पश्यन्त्यधो मुखान् ।। ३९.१९० ।।

अनग्रमूलता यस्माद्धारणाश्च स्वभावतः।
तस्मादूर्द्ध्वमधोभावो लोकालोके न विद्यते ।। ३९.१९१ ।।

एषा स्वाभाविकी संज्ञा लोकालोके प्रवर्त्तते।
अथाब्रुवन्पुनर्वायुं ब्राह्मणाः सत्रिणस्तदा ।। ३९.१९२ ।।

ऋषय ऊचुः।।
सर्वेषामेव भूतानां लोकालोकनिवासिनाम्।
संसारे संसरन्तीह यावन्तः प्राणिनश्च तान् ।। ३९.१९३ ।।

सह्ख्यया परिसङ्ख्याय ततः प्रब्रूहि कृत्स्नशः।
ऋषीणां तद्वचः श्रुत्वा मारुतो वाक्यमब्रवीत् ।। ३९.१९४ ।।

वायुरुवाच।।
न शक्या जन्तवः कृत्स्नाः प्रसंख्यातुं कथञ्चन।
अनाद्यन्ताश्च संकीर्णा ह्यप्यूहेन व्यवस्थिताः।

गणना विनिवृत्तैषामानन्त्येन प्रकीर्त्तिताः ।। ३९.१९५ ।।

न दिव्यचक्षुषा ज्ञातुं शक्या ज्ञानेन वा पुनः।
चक्षुषा वै प्रसंख्यातुमतो ह्यन्ते नराधिपः ।। ३९.१९६ ।।

अनाध्यानादवेद्यत्वान्नैव प्रश्नो विधीयते।
ब्रह्मणा संज्ञितं यत्तु संख्यया तन्निबोधत ।। ३९.१९७ ।।

यः सहस्रतमो भागः स्थावराणां भवेदिह।
पार्थिवाः कृमयस्तावत्संसेकाद्येषु सम्भवाः ।। ३९.१९८ ।।

संसेकजानाम्भागेन सहस्रेणैव सम्मिताः।
औदका जन्तवः सर्वे निश्चयात्तद्विचारितम् ।। ३९.१९९ ।।

सहस्रेणैव भागेन सत्वानां सलिलौकसाम् ।
विहङ्गमास्तु विज्ञेया लौकिकास्ते च सर्वशः ।। ३९.२०० ।।

यः सहस्रतमो भागस्तेषां वै पक्षिणां भवेत्।
पशवस्तत्समा ज्ञेया लौकिकास्तु चतुष्पदाः ।। ३९.२०१ ।।

चतुष्पदानां सर्वेषां सहस्रेणैव संमताः ।
भागेन द्विपदा ज्ञेया लौकिकेऽस्मिंस्तु सर्व्वशः ।। ३९.२०२ ।।

यः सहस्रतमो भागो भागे तु द्विपदां पुनः।
धार्म्मिकास्तेन भागेन विज्ञेयाः सम्मिताः पुनः ।। ३९.२०३ ।।

सहस्रेणैव भागेन धार्म्मिकेभ्यो दिवङ्गताः।
यः सहस्रतमो भागो धार्म्मिकाणां भवेद्दिवि।
संमितास्तेन भागेन मोक्षिणस्तावदेव हि ।। ३९.२०४ ।।

स्वर्गोपपादकैस्तुल्या यातना स्थानवासिनः।
पतिता श्चूर्णमुद्देशाद्दुरात्मानो म्रियन्ति ये।
रौरवे तामसे ह्येते शीतोष्णं प्राप्नुवन्ति ते ।। ३९.२०५ ।।

वेदनाकटुकास्तब्धा यातना स्थानमागताः।
उष्णस्तु रौरवो ज्ञेयस्तेजो घोररसात्मकः ।। ३९.२०६ ।।

ततो घनात्मिकश्चापि शीतात्मा सततं तपः।

एवं सुदुर्लभाः सन्तः स्वर्गे च धार्म्मिका नराः ।। ३९.२०७ ।।

एषा संख्या कृता संख्या ईश्वरेण स्वयम्भुवा।
गणना विनिवृत्तैषा सङ्ख्या ब्राह्मी च मानुषी ।। ३९.२०८ ।।

ऋषय ऊचुः।
महो जनस्तपः सत्यं भूतो भाव्यो भवस्तथा।
उक्ता ह्येते त्वया लोका लोकानामन्तरेण च।
लोकान्तरञ्च यादृग्वै तन्नो ब्रूहि यथातथम् ।। ३९.२०९ ।।

तेषां तद्वचनं श्रुत्वा ऋषीणामूर्द्ध्वरेतसाम्।
स वायुर्दृष्टतत्त्वार्थ इदन्तत्त्वमुवाच ह ।। ३९.२१०
वायुरुवाच।।
व्यक्तं तर्केण पश्यन्ति योगात्प्रत्यक्षदर्शिनः।
प्रत्याहारेण ध्यानेन तपसा च क्रियात्मनः ।। ३९.२११ ।।

ऋभुः सनत्कुमाराद्याः सम्बुद्धाः शुद्धबुद्धयः।
व्यपेतशोका विरजाः सन्तो ब्रह्मेवसत्तमाः ।। ३९.२१२ ।।

अक्षयाः प्रीतिसंयुक्ता ब्रह्मे तिष्टन्ति योगिनः।
ऋषीणां वालखिल्यानां तैर्यथाद्दृतमीश्वरैः ।। ३९.२१३ ।।

यथा चैव मया दृष्टं सान्निध्यन्तत्र कुर्वता।
अनह्यसत्कृतार्थानामालयं चेश्वरस्य यत् ।। ३९.२१४ ।।

ईश्वरः परमाणुत्वाद्भावग्राह्यो मनीषिणाम् ।
ज्ञानं वैराग्यमैश्वर्यन्तपः सत्यं क्षमा धृतिः ।। ३९.२१५ ।।

द्रष्टृत्वमात्मसम्बन्धमधिष्ठानत्वमेव च।
अव्ययानि दशैतानि तस्मिंस्तिष्ठति शङ्करे ।। ३९.२१६ ।।

विबुत्वात्खलु योगाग्निर्ब्रह्मणोऽनुग्रहेरतः।
स लोकविग्रहो भूत्वा साहाय्यमुपतिष्ठते ।। ३९.२१७ ।।

अक्षरं ध्रुवमव्यग्रमष्टमन्त्वौपसर्गिकम्।
तस्येश्वरस्य यन्मात्रस्थानं मायामयं परम् ।। ३९.२१८ ।।

मायया कृतमाचष्टे मायी देवो महेश्वरः।

देवानामुपसंहारस्तत्प्रमाणं हि कीर्त्त्यते ।। ३९.२१९ ।।

विस्तरेणानुपूर्व्या च ब्रुवतो मे निबोधत।
त्रयोदशैव कोट्यस्तु नियुता दश पञ्च च।
भूर्लोकाद्ब्रह्मलोको वैयोजनैः सम्प्रकीर्त्त्यते ।। ३९.२२० ।।

एकयोजनकोटी तु पञ्चाशन्नियुतानि च।
ऊर्द्ध्वं भागवताण्डन्तु ब्रह्मलोकात्परं स्मृतम् ।। ३९.२२१ ।।

एषोर्द्ध्वगप्रचारस्तु गत्यन्तञ्च ततः स्मृतम् ।
नित्या ह्यपरिसंख्येयाः परस्परगुणाश्रयाः ।। ३९.२२२ ।।

सूक्ष्माः प्रसवधर्मिण्यस्ततः प्रकृतयः स्मृताः।
येभ्योऽधिकर्त्ता संजज्ञो क्षेत्रज्ञो ब्रह्मसंज्ञितः ।। ३९.२२३ ।।

तासु प्रकृतिमत्सूक्ष्ममधिष्ठातृत्वमव्ययम्।
अनुत्पाद्यं परन्धाम परमाणु परेशयम् ।। ३९.२२४ ।।

अक्षयश्चाप्यनुह्यश्च अमूर्त्तिर्मूर्त्तिमानसौ।
प्रादुर्भावस्तिरोभावः स्थितिश्चैवाप्यनुग्रहः ।। ३९.२२५ ।।

विधिरन्यैरनौपम्यः परमाणुर्महेश्वरः।
सतेजा एष तमसो यः परस्तात्प्रकाशकः ।। ३९.२२६ ।।

यदण्डमासीत्सौवर्णं प्रथमन्त्वौपसर्गिकम्।
बृहतं सर्वतोवृत्तमीश्वराद्व्यवजायत ।। ३९.२२७ ।।

ईश्वराद्बीजनिर्भेदः क्षेत्रज्ञो बीज ईष्यते।
योनिं प्रकृतिमाचष्टे सा च नारायणात्मिका ।। ३९.२२८ ।।

विबुर्लोकस्य सृष्ट्यर्थं लोकसंस्थानमेव च।
सन्निसर्गः स तन्वा च लोकधातुर्महात्मनः ।। ३९.२२९ ।।

पुरस्ताद्ब्रह्मलोकस्य ह्यण्डादर्वाक्च ब्रह्मणः।
तयोर्मध्ये पुरं दिव्यं स्थानं यस्य मनोमयम् ।। ३९.२३० ।।

तद्विग्रहवतः स्थानमीश्वरस्यामितौजसः।
शिवं नाम पुरं तत्र शरणं जन्मभीरुणाम् ।। ३९.२३१ ।।

सहस्राणां शतं पूर्णं योजनानां द्विजोत्तमाः।
अभ्यन्तरे तु विस्तीर्णं महीमण्डलसंस्थितम् ।। ३९.२३२ ।।

मध्याह्नार्कप्रकाशेन परतेजोऽभिमर्दिना।
शातकौम्भेन महता प्राकारेणार्कवर्चसा ।। ३९.२३३ ।।

द्वारैश्चतुर्भिः सौवर्णैर्मुक्तादामविभूषितैः।
तपनीयनिभैः शुभ्रैर्गाढं सुकृतवेष्टनम् ।। ३९.२३४ ।।

तच्चाकाशे पुरं रम्यं दिव्यं घण्टादिनादितम्।
न तत्र क्रमते मृत्युर्न तपो न जरा श्रमाः ।। ३९.२३५ ।।

न हि तस्य पुरस्यान्यैरुपमां कर्तुमर्हति।
सहस्राणां शतं पूर्णं योजनानां दिशो दश ।। ३९.२३६ ।।

तत्पुरं गोवृषाङ्कस्य तेजसा व्याप्य तिष्ठति।
भावेन मनसो भूमिर्विन्यस्ता कनकामयी ।। ३९.२३७ ।।

रत्नवालुकया तत्र विन्यस्ता शुशुभेऽधिकम्।
शारदेन्दुर्पकाशानि बालसूर्य्यनिबानि च ।। ३९.२३८ ।।

अर्द्ध श्वेतार्द्धरक्तानि सौवर्णानि तथैव च।
रथचक्रप्रमाणानि नालैर्मरकतप्रभैः ।। ३९.२३९ ।।

सौकुमारेण रूपेण गन्धिनाप्रतिमेन च।
तत्र दिव्यानि पद्मानि वनेषूपवनेषु च ।। ३९.२४० ।।

भृङ्गपत्रनिकाशानि तपनीयानि यानि च।
अर्द्धकृष्णार्द्धरक्तानि सुकुमारान्तराणि च ।। ३९.२४१ ।।

आतपत्र प्रमाणानि पङ्कजैः संवृतानि च।
भूयः सप्त महानद्यस्तासान्नामानि बोधत ।। ३९.२४२ ।।

वरा वरेण्या वरदा वरार्हा वरवर्णिनी।
वरमा वरभद्रा च रम्यास्तस्मिन्पुरोत्तमे ।। ३९.२४३ ।।

पद्मोत्पलदलोन्मिश्रं फेनाद्यावर्त्तविग्रहम्।

जलं मणिदलप्रख्यमावहन्ति सरिद्वराः ।। ३९.२४४ ।।

न तु ब्रह्मर्षयो देवा नासुराः पितरस्तथा।
न खल्वन्येऽप्रमेयस्य विदुरीशस्य तत्पुरम् ।। ३९.२४५ ।।

तत्र ये ध्यानमव्यग्राः सुयुक्ता विजितेन्द्रियाः।
पश्यन्तीह महात्मानः पुरन्तद्गोवृषात्मनः ।। ३९.२४६ ।।

मध्ये पुरवरेन्द्रस्य तस्याप्रतिमतेजसः।
सुमहान्मेरुसङ्गाशो दिव्यो भद्रश्रिया वृतः ।। ३९.२४७ ।।

सहस्र पादः प्रासादस्तपनीयमयः शुभः।
अनुपमेयै रत्नैश्च सर्वतः स विभूषितः ।। ३९.२४८ ।।

स्फटिकैश्चन्द्रसङ्काशैर्वैढूर्यैः सोमसंप्रभैः।
बालसूर्य्यप्रभैश्चैव सौवर्णैश्चाग्निसंप्रभैः ।। ३९.२४९ ।।

राजतैश्चापि शुशुभे इन्द्रनीलमयैः शुभैः।
दृढैर्वज्रमयैश्चैव इत्येवं सुमहाहितैः ।। ३९.२५० ।।

जलैश्च विविधाकारैर्दीप्यद्भिरधिवासितम्।
चन्द्ररश्मिप्रकाशाभिः पताकाभिरलंकृतम् ।। ३९.२५१ ।।

रुक्मघण्टानिनादैश्च नित्यप्रमुदितोत्सवः।
किन्नराणामधीवासैः सन्ध्याभ्राकारराजितैः ।। ३९.२५२ ।।

परिवारसमन्तात्तु हेमपुष्पोदकप्रभैः।
यथा हि मेरुशैलेन्द्रो हेमश्रृङ्गैर्विराजते ।। ३९.२५३ ।।

चामीकरमयीभिस्तु पताकाभिस्तथा पुरम् ।
एवं प्रासादराजोऽसौ भूमिकाभिर्विराजते ।। ३९.२५४ ।।

वसन्तप्रतिमा यत्र त्र्यम्बकस्य निवेशने।
लक्ष्मीः श्रीश्च वपुर्म्माया कीर्त्तिः शोभा सरस्वती ।। ३९.२५५ ।।

देव्या वै सहिता ह्येता रूपगन्धसमन्विताः।
नित्या ह्यपरिसङ्ख्याताः परस्परगुणाश्रयाः ।
भूषणं सर्वरत्नानां योन्यः कान्तिविलासयोः ।। ३९.२५६ ।।

कोटिशतं महाभागा विभज्यात्मानमात्मना।
भगवन्तं महात्मानं प्रतिमोदन्त्यतन्द्रिताः। ।। ३९.२५७ ।।

तासां सहस्रशश्चान्याः पृष्ठतः परिचारिकाः।
रूपिण्यश्च श्रिया युक्ताः सर्वाः कमललोचनाः ।। ३९.२५८ ।।

लीलाविलाससंयुक्तैर्भावैरतिमनोहरैः।
गणैस्ताः सह मोदन्ते शैलाभैः पावकोपमैः ।। ३९.२५९ ।।

कुब्जा कामनिकामैश्च वरगात्रा हयाननाः ।
पुण्ड्राश्च विकटाश्चैव करलाश्चिपिटाननाः ।। ३९.२६० ।।

लम्बोदरा ह्रस्वभुजा विनेत्रा ह्रस्वपादिकाः।
मृगेन्द्रवदनाश्चान्या गजवक्रोदरास्तथा ।। ३९.२६१ ।।

गजाननास्तथैवान्याः सिंह व्याघ्राननास्तथा।
लोहिताक्षा महास्तन्यः सुभगाश्चारुलोचनाः ।। ३९.२६२ ।।

ह्रस्वकुञ्चितकेशाश्च सुन्दर्य्यश्चारुलोचनाः।
अन्याश्च कामरूपिण्यो नानावेषधराः स्त्रियः ।। ३९.२६३ ।।

अभ्यन्तरपरिस्कन्धा देवावासगृहोचिताः।
रराम भगवांस्तत्र दशबाहुर्महेश्वरः ।। ३९.२६४ ।।

नन्दिना च गणैः सार्द्धं विश्वरूपैर्महात्मभिः।
तथा रुद्रगणैश्चापि तुल्यौदार्य्यपराक्रमैः ।। ३९.२६५ ।।

पावकात्मजसङ्काशैर्यूपदंष्ट्रोत्कटाननैः।
वन्द्यमानो विमानश्च पूज्यमानश्च तत्परैः ।। ३९.२६६ ।।

सर्वर्तुकुसुमां मालां जिघ्रमाणोरसि स्थितान् ।
नीलोत्पलदलश्यामं पृथुताम्रायतेक्षणम् ।। ३९.२६७ ।।

ईषत्करालम्बोष्ठं तीक्ष्णदंष्ट्रा गणाञ्चितम्।
षड्रूर्द्ध्वनेत्रं दुष्प्रेक्ष्यं रुचिरञ्चीरवाससम् ।। ३९.२६८ ।।

आहवेष्वपरिक्लिष्टं देवानामरिनाशनम्।

बाहुना बाहुमावेश्य पार्श्वे सव्येऽन्तरे स्थितम् ।। ३९.२६९ ।।

रराजापदिशन्तस्य वामाग्रकरगोचरम्।
महाभैरवनिर्घोषं बलेनाप्रतिमौजसम्।
दशवर्णधनुश्चैव विचित्रं शोभतेऽधिकम् ।। ३९.२७० ।।

त्रिशूलं विद्युताभासममोघं शत्रुनाशनम्।
जाज्वल्यमानं वपुषा परमं तत्त्विषा युतम् ।। ३९.२७१ ।।

असिश्चैवौजसां श्रेष्ठः शीतरश्मिः शशी तथा।
तेजसा वपुषा कान्त्या देवेशस्य महात्मनः।
शुशुभेऽभ्यधिकं तत्र वेद्यामग्निशिखा इव ।। ३९.२७२ ।।

स्थितः पुरस्ताद्देवस्य शातकौम्भमयो महान्।
शुशुभे रुचिरः श्रीमान्सोदकः सकमण्डलुः ।। ३९.२७३ ।।

असिमावेश्य चाङ्गेषु पाण्डुराम्बर धारिणी।
उरश्छदेन महता मौक्तिकेन विराजिता।
चतुर्भुजा महाभागा विजया लोकसम्मता ।। ३९.२७४ ।।

देव्या आद्यः प्रतीहारी श्रीरिवाप्रतिमा परा।
विभ्राजती स्थिता चैव कृत्वा देवस्य चाञ्जलिम् ।। ३९.२७५ ।।

तस्याः पृष्ठानुगाश्चान्याः स्त्रियोऽप्सरोगणान्विताः।
ताः खल्वभिनवैः कान्तैरुपतिष्ठन्ति शङ्करम् ।। ३९.२७६ ।।

सर्वलक्षणसम्पन्ना वादित्रै रुपबृंहिताः।
उपगायन्ति देवेशं गणा गन्धर्वयोनयः ।। ३९.२७७ ।।

अभ्युन्नतो महोरस्कः शरन्मेघसमद्युतिः।
शोभते नन्दमानश्च गोपतिस्तस्य वेश्मनि ।। ३९.२७८ ।।

स्कन्दश्च सपरीवारः पुत्रोऽस्यामितवीर्य्यवान्।
रक्ताम्बरधरः श्रीमान्वराम्बुजदलेक्षणः ।। ३९.२७९ ।।

तस्य शाखो विशाखश्च नैगमेयश्च चाष्टवान्।
व्यपेतव्यसनाक्रूराः प्रजानां पालने रताः ।। ३९.२८० ।।

तैः सार्द्धं स महावीर्य्यः शोभते शिखिवाहनः ।
व्यालक्रीडनकैस्तत्र क्रीडते विश्वतोमुखः ।। ३९.२८१ ।।

ये नृपा विभुधेन्द्राणां काञ्चनस्य प्रदायिनः।
ये च स्वायतना विप्रा गृहस्था ब्रह्मवादिनः ।। ३९.२८२ ।।

गूढस्वाध्याय तपसस्तथा चैवोञ्छवृत्तयः।
एते सभासदस्तस्य देवेशस्य च सम्मताः ।। ३९.२८३ ।।

मन्वन्तराण्यनेकानि व्यवर्त्तन्त पुनः पुनः।
श्रूयतां देवदेवस्य भविष्याश्चर्यमुत्तमम् ।। ३९.२८४ ।।

व्याघ्राश्चैवानुगास्तत्र काञ्चनाभास्तरस्विनः।
स्वच्छन्दचारिणः सर्वे स्वयं देवेन निर्म्मिताः।। ३९.२८५ ।।

मृत्योर्मृत्युसमास्ते तु यमदर्पापहारिणः ।
विभूतिमप्यसंख्येयां को न खल्वभिधास्यते ।। ३९.२८६ ।।

अतःपरमिदं भूयो भवेनाद्भुतमुत्तमम्।
भूतानामनुकंपार्थं यत्कृतं तन्निबोधत ।। ३९.२८७ ।।

मन्दरादिप्रकाशानां बलेनाप्रतिमौजसाम्।
हारकुन्देन्दुवर्णानां विद्युद्वननिनादिनाम् ।। ३९.२८८ ।।

चूडामणिधराणां वै मेघसन्निभवाससाम्।
श्रीवत्साङ्कितवज्राणामङ्गुलीशूलपाणिनाम् ।। ३९.२८९ ।।

एवं दिशानां देवानां रूपेणोत्तमशालिनाम्।
तस्य प्रासादमुख्यस्य स्तम्भेषूत्तमशोभिषु ।। ३९.२९० ।।

संयताग्निमयीभिस्तु श्रृङ्खलाभिः पृथक्पृथक्।
मायासहस्रं सिंहानां सुखं तत्र निवासिनाम् ।। ३९.२९१ ।।

स्तम्भेऽप्यपासृताषष्टं(?) त्र्यम्बकस्य निवेशने।
अथ तत्प्रतिसंपूज्य वायोर्वाक्यं सुविस्मिताः।
ऋषयः प्रत्यभाषन्त नैमिषेयास्तपस्विनः ।। ३९.२९२ ।।

भगवन्सर्वभूतानां प्राण सर्वत्रग प्रभो।

के ते सिंहमहाभूताः क्व ते जाताः किमात्मकाः ।। ३९.२९३ ।।

सिंहाः केनापराधेन भूतानां प्रभविष्णुना।
वैश्वानरमयैः पाशैः संरुद्धास्तु पृथक्पृथक् ।। ३९.२९४ ।।

तेषां तद्वचनं श्रुत्वा वायुर्वाक्यं जगाद ह ।
यद्वै सहस्रं सिंहानामीश्वरेण महात्मना।
व्यपनीय स्वकाद्देहात्क्रोधास्ते सिंहविग्रहाः ।। ३९.२९५ ।।

भूतानामभयं दत्त्वा पुराबद्धाग्निबन्धने।
यज्ञभागनिमित्तं च ईश्वरस्याज्ञया तदा ।। ३९.२९६ ।।

तेषां विधानमुक्तेन सिंहेनैकेन लीलया।
देव्या मन्युं कृतं ज्ञात्वा हतो दक्षस्य स क्रतुः ।। ३९.२९७ ।।

निःसृता च महादेव्या महाकाली महेश्वरी।
आत्मनः कर्म्मसाक्षिण्या भूतैः सार्द्धं तदानुगैः ।। ३९.२९८ ।।

स एष भगवान्क्रोधो रुद्रावासकृतालयः।
वीरभद्रोऽप्रमेयात्मा देव्या मन्युप्रमार्ज्जनः ।। ३९.२९९ ।।

तस्य वेश्म सुरेन्द्रस्य सर्वगुह्यतमस्य वै।
सन्निवेशस्त्वनौपम्यो मया वः परिकीर्त्तितः ।। ३९.३०० ।।

अतः परं प्रवक्ष्यामि ये तत्र प्रति वासिनः।
रम्ये पुरवरश्रेष्ठे तस्मिन्वैहायभूमिषु ।। ३९.३०१ ।।

नानारत्नविचित्रेषु पताकाबहुलेषु च।
सर्वकामसमृद्धेषु वनोपवनशोभिषु ।। ३९.३०२ ।।

राजतेषु महान्तेषु शातकौम्भमयेषु च।
सन्ध्याभ्रसन्निकाशेषु कैलासप्रतिमेषु च ।। ३९.३०३ ।।

इष्टैः शब्दादिभिर्भागैर्ये भवस्यानुसारिणः ।
प्रासादवर पुष्पेषु तेषु मोदन्ति सुव्रताः ।। ३९.३०४ ।।

ब्रह्मघोषैरविरताः कथाश्च विविधाः शुभाः ।
गीतवादित्रघोषाश्च संस्तवाश्च समन्ततः ।। ३९.३०५ ।।

संहताश्चैवमतुला नानाश्रयकृतास्तथा।
एवमादीनि वर्त्तन्ते तेषां प्रासादमूर्द्धनि ।। ३९.३०६ ।।

सहस्रपादः प्रासादस्तपनीयमयः शुभः।
अनौपम्यैर्वरै रत्नैः सर्वतः परिभूषितः ।। ३९.३०७ ।।

स्फटिकैश्चन्द्रसङ्काशैर्वैढूर्यमणिसम्प्रभैः।
बालसूर्यमयैश्चापि सौवर्णैश्चाग्निसम्प्रभैः ।। ३९.३०८ ।।

चुक्रुशुऋषयः श्रुत्वा नैमिषेयास्तपस्विनः।
आपन्नसंशयाश्चेमं वाक्यमूचुः समीरणम् ।। ३९.३०९ ।।

ऋषय ऊचुः।।
के तु तत्र महात्मानो ये भवस्यानुसारिणः।
अनुग्राह्यतमाः सम्यक् प्रमोदन्ते पुरोत्तमे।
ऋषीणां वचनं श्रुत्वा वायुर्वाक्यमथाब्रवीत् ।। ३९.३१० ।।

वायुरुवाच।।
श्रूयतां देवदेवस्य भक्तिर्यैरनुकल्पिता।
ह्रीमन्तः सूर्जिता दान्ताः शौर्ययुक्ता ह्यलोलुपाः ।। ३९.३११ ।।

मध्याहाराश्च मात्राश्च ह्यात्मारामा जितेन्द्रियाः।
जितद्वन्द्वा महोत्साहाः सौम्या विगतमत्सराः ।। ३९.३१२ ।।

भावस्थाः सर्व्वभूतानामव्यापारा अनाकुलाः।
कर्मणा मनसा वाचा विशुद्धेनान्तरात्मना।
अनन्यमनसो भूत्वा प्रपन्ना ये महेश्वरम् ।। ३९.३१३ ।।

तैर्लब्धं रुद्रसालोक्यं शाश्वतं पदमव्ययम्।
भवस्य रूपसादृश्यं नीताश्चैव ह्यनुत्तमम् ।। ३९.३१४ ।।

वैश्वानरमुखाः सर्वे विश्वरूपाः कपर्द्दिनः ।
नीलकण्ठाः सितग्रीवास्तीक्ष्णदंष्ट्रास्त्रिलोचनाः ।। ३९.३१५ ।।

अर्द्धचन्द्रकृतोऽणीषा जटामुकुटधारिणः ।
सर्वे दशभुजा वीराः पद्मान्तर सुगन्धिनः ।। ३९.३१६ ।।

तरुणादित्यसङ्काशाः सर्वे ते पीतवाससः ।
पिनाकपाणयः सर्व्वे श्वेतगोवृषवाहनाः ।। ३९.३१७ ।।

श्रियान्विताः कुण्डलिनो मुक्ताहारविभूषिताः।
तेजसोऽभ्यधिका देवैः सर्वज्ञाः सर्वदर्शिनः ।। ३९.३१८ ।।

विभज्य बहुधात्मानं जरामृत्युविवर्जिताः।
क्रीडन्ते विविधैर्भावैर्भोगान् प्राप्य सुदुर्लभान् ।। ३९.३१९ ।।

स्वच्छन्दगतयः सिद्धाः सिद्धैश्चान्यौर्विबोधिताः।
एकादशानां रुद्राणां कोट्योऽनेकमहात्मनाम् ।। ३९.३२० ।।

एभिः सह महात्मा हि देवदेवो महेश्वरः।
भक्तानुकम्पी भगवान्मोदते पार्वतीप्रियः ।। ३९.३२१ ।।

नाहन्तेषान्तु रुद्राणां भवस्य च महात्मनः।
नानात्वमनुपश्यामि सत्यमेतद्ब्रवीमि वः ।। ३९.३२२ ।।

मातरिश्वाऽब्रवीत्पुण्यामित्येतामीश्वरोऽप्युत।
अथ ते ऋषयः सर्वे दिवाकरसमप्रभाः।
श्रुत्वेमां परमां पुण्यां कथां त्रैयम्बकीं ततः ।। ३९.३२३ ।।

भृशञ्चानुग्रहं प्राप्य हर्षं चैवाप्यनुत्तमम्।
सम्भावयित्वा चाप्येनां वायुमूचुर्महाबलम् ।। ३९.३२४ ।।

ऋषय ऊचुः।।
समीरण महाभाग ह्यस्माकं च त्वया विभो।
ईश्वरस्योत्तमं पुण्यमष्टमन्त्वौपसर्गिकम् ।। ३९.३२५ ।।

तस्य स्थानं प्रमाणञ्च यथावत्परिकीर्त्तितम्।
यो गन्धेन समृद्धं वै परमं परमात्मनः ।। ३९.३२६ ।।

महादेवस्य माहात्म्यं दुर्विज्ञेयं सुरैरपि ।
स्वेन माहात्म्ययोगेन सहस्रस्यामितौजसः ।। ३९.३२७ ।।

यस्य भक्तेष्वसंमोहो ह्यनुकम्पार्थमेव च।
ब्राह्मलक्ष्म्या स्वयं जुष्ठा या साप्रतिमशालिनी ।। ३९.३२८ ।।

ज्योत्स्नया व्याप्य खं चन्द्रं विन्यस्ता विश्वरूपधृक् ।
विभूतिर्भ्राजतेऽत्यर्थं देवदेवस्य वेश्मनि ।। ३९.३२९ ।।

महादेवस्य तुल्यानां रुद्राणान्तु महात्मनाम्।
तत्सर्वं निखिलेनेदं वक्त्रादमृतनिस्रवम् ।। ३९.३३० ।।

अपीत्वा खलु सर्वस्य भक्त्यास्माभिस्तु सुव्रताः।
नास्ति किञ्चिदविज्ञेयमन्यच्चैवानुगामिनः।
प्रश्नं देववर प्राण यथावद्वक्तुमर्हसि ।। ३९.३३१ ।।

सूत उवाच।।
स खलूवाच भगवान्किं भूयो वर्त्तयाम्यहम्।
किं मया चैव वक्तव्यं तद्वदिष्यामि सुव्रताः ।। ३९.३३२ ।।

ऋषय ऊचुः।।
आदित्याः पारिपार्श्वेयाः सिंहा वै क्रोधविक्रमाः।
वैश्वानरा भूतगणा व्याघ्राश्चैवानुगामिनः ।। ३९.३३३ ।।

आभूतसंप्लवे घोरे सर्वप्राणभृतां क्षये।
किमवस्था भवन्त्येते तन्नो ब्रूहि यथार्थवत् ।। ३९.३३४ ।।

एते ये वै त्वया प्रोक्ताः सिंहव्याघ्रगणैः सह।
ये चान्ये सिद्धिसम्प्राप्ता मातरिश्वा जगाद ह ।। ३९.३३५ ।।

इदञ्च परमं तत्त्वं समाख्यास्यामि श्रृण्वताम्।
विज्ञातेश्वरसद्भावमव्यक्तं प्रभवं तथा ।। ३९.३३६ ।।

तत्र पूर्वगतास्तेषु कुमारा ब्रह्मणः सुताः।
सनकश्च सनन्दश्च तृतीयश्च सनातनः ।। ३९.३३७ ।।

वोढुश्च कपिलस्तेषामासुरिश्च महायशाः।
मुनिः पञ्चशिखश्चैव ये चान्येऽप्येवमादयः ।। ३९.३३८ ।।

ततः काले व्यतिक्रान्ते कल्पानां पर्यये गते।
महाभूतविनाशान्ते प्रलये प्रत्युपस्थिते ।। ३९.३३९ ।।

अनेकरुद्रकोट्यस्तु याः प्रसन्ना महेश्वरी ।
शब्दादीन्विषयान्भोगान्सत्यस्याष्टविधश्रयात् ।। ३९.३४० ।।

प्रविश्य सर्वभूतानि ज्ञानयुक्तेन तेजसा।
वैहायपदमव्यग्रं भूतानामनुकम्पया ।। ३९.३४१ ।।

तत्र यान्ति महात्मानः परमाणुं महेश्वरम्।
तरन्ति सुमहावर्त्तां जन्ममृत्यूदकां नदीम् ।। ३९.३४२ ।।

ततः पश्यन्ति शर्वाणं परं ब्रह्माणमेव च।
देव्या वै सहिताः सप्त या देव्यः परिकीर्त्तिताः ।। ३९.३४३ ।।

यत्तत्सहस्रं सिंहानामादित्यानां तथैव च।
वैश्वानरभूतभव्यव्याघ्राश्चैवानुगामिनः ।। ३९.३४४ ।।

आवेश्यात्मनि तान्सर्वान्संख्यायोपद्रवांस्तथा।
लोकान् सप्त इमान्सर्व्वान्महाभूतानि पञ्च च ।। ३९.३४५ ।।

विष्णुना सह संयुक्तं करोति विकरोति च।
स रुद्रो यः साममयस्तथैव च यजुर्मयः ।। ३९.३४६ ।।

स एष ओतः प्रोतश्च बहिरन्तश्च निश्चयात्।
एको हि भगवान्नाथो ह्यनादिश्चान्तकृद्द्विजाः ।। ३९.३४७ ।।

ततस्ते ऋषयः सर्वे दिवाकरसमप्रभाः।
स्वंस्वमाश्रमसंवासमारोप्याग्निं तथात्मनि ।। ३९.३४८ ।।

कर्मणा मनसा वाचा विशुद्धेनान्तरात्मना ।
अनन्यमनसो भूत्वा प्रपद्यन्ते महेश्वरम् ।। ३९.३४९ ।।

व्रतोपवासनिरताः सर्वभूतदयापराः।
योगं ह्यनुपमन्दिव्यं प्राप्तं तैश्छिन्नसंशयैः ।। ३९.३५० ।।

प्रपद्य परया भक्त्या ज्ञानयुक्तेन चेतसा।
तैर्लब्धं रुद्रसालोक्यं शाश्वतं पदमव्ययम् ।। ३९.३५१ ।।

यः पठेत्तपसा युक्तो वायुप्रोक्तामिमां स्तुतिम्।
ब्राह्मणः क्षत्रियो वापि वैश्यो वा स्वक्रियापरः ।। ३९.३५२ ।।

लभते रुद्रसालोक्यं भक्तिमान्विगतज्वरः।

अमद्यपश्च यः शूद्रो भवभक्तो जितेन्द्रियः ।। ३९.३५३ ।।

आभूत संप्लवस्थायी ह्यप्रतीघातलक्षणः।
गाणपत्यं स लभते स्थानं वा सर्वकामिकम् ।। ३९.३५४ ।।

मद्यपो मद्यपैः सार्द्धं भूतसङ्घैश्च मोदते।
सोऽर्च्यमानो महीपृष्ठो मर्त्यानां वरदो भवेत्।
इति होवाच भगवान्वायुर्वाक्यमिदं वरः ।। ३९.३५५ ।।

इति श्रीमहापुराणे वायुप्रोक्ते शिवपुरवर्णनं नामैकोन चत्वारिंशोऽध्यायः ।। ३९ ।।

।।सूत ऊवाच।।

प्रत्याहारं प्रवक्ष्यामि परस्यान्ते स्वयम्भुवः।
ब्रह्मणः स्थितिकाले तु क्षीणे तस्मिंस्तदा प्रभोः ।। ४०.१ ।।

यथेदं कुरुतेऽध्यात्मं सुसूक्ष्मं विश्वमीश्वरः ।
अव्यक्तान्ग्रसते व्यक्तं प्रत्याहारे च कृत्स्नशः ।। ४०.२ ।।

परं तदनुकल्पानामपूर्णे कल्पसङ्क्षये।
उपस्थिते महाघोरे ह्यप्रत्यक्षे तु कस्यचित् ।। ४०.३ ।।

अन्ते द्रुमस्य यम्प्राप्ते पश्चिमस्य मनोस्तदा ।
अन्ते कलियुगे तस्मिन्क्षीणे संहार उच्यते ।। ४०.४ ।।

सम्प्रक्षाले तदा वृत्ते प्रत्याहारे ह्युपस्थिते।
प्रत्याहारे तदा तस्मिन् भूततन्मात्रसंक्षये ।। ४०.५ ।।

महदादेर्विकारस्य विशेषान्तस्य संक्षये।
स्वभावकारिते तस्मिन्प्रवृत्ते प्रतिसञ्चरे ।। ४०.६ ।।

आपो ग्रसन्ति वै पूर्व्वं भूमेर्गन्धात्मकं गुणम्।
आत्तगन्धा ततो भूमिः प्रलयत्वाय कल्पते ।
प्रविष्टे गन्धतन्मात्रे तोयावस्था धरा भवेत् ।। ४०.७ ।।

आपस्तदा प्रनष्टा वै वेगवत्यो महास्वनाः।
सर्वमापूरयित्वेदं तिष्ठन्ति विचरन्ति च ।। ४०.८ ।।

अपामस्ति गुणो यस्तु ज्योतिषे लीयते रसः।
नश्यन्त्यापस्तदान्ते च रसतन्मात्रसङ्क्षयात् ।। ४०.९ ।।

तेजसा संहृतरसा ज्योतिष्ट्वं प्राप्नुवन्त्युत ।
ग्रस्ते च सलिले तेजः सर्व्वतोमुखमीक्ष्यते ।। ४०.१० ।।

अथाग्निः सर्वतो व्याप्त आदत्ते तज्जलन्तदा।
सर्वमापूर्य्यतेऽर्चिर्भिस्तदा जगदिदं शनैः ।। ४०.११ ।।

अर्चिर्भिः सन्तते तस्मिंस्तिर्यगूर्द्ध्वमधस्ततः ।
ज्योतिषोऽपि गुणं रूपं वायुरन्ति प्रकाशकम्।

प्रलीयते तदा तस्मिन्दीपार्चिरिव मारुते ।। ४०.१२ ।।

प्रनष्टे रूपतन्मात्रे हृतरूपो विभावसुः।
उपशाम्यति तेजो हि वायुना धूयते महत् ।। ४०.१३ ।।

निरालोके तदा लोके वायुभूते च तेजसि।
ततस्तु मूलमासाद्य वायुः सम्भवमात्मनः ।। ४०.१४ ।।

ऊर्द्ध्वं चाधश्च तिर्यक्च दोधवीति दिशो दश ।
वायोरपि गुणं स्पर्शमाकाशं ग्रसते च तत् ।। ४०.१५ ।।

प्रशाम्यति तदा वायुः खन्तु तिष्ठत्यनावृतम्।
अरूपमरसस्पर्धमगन्धं न च मूर्तिमत् ।। ४०.१६ ।।

सर्वमापूरयन्नादैः सुमहत्तत्प्रकाशते।
परिमण्डलन्तत्सुषिरमाकाशं शब्दलक्षणम् ।। ४०.१७ ।।

शब्दमात्रं तदाकाशं सर्वमावृत्य तिष्ठति।
तन्तु शब्दगुणन्तस्य भूतादिं ग्रसते पुनः ।। ४०.१८ ।।

भूतेन्द्रियेषु युघपद्भूतादौ संस्थितेषु वै।
अभिमानात्मको ह्येष भूतादिस्तामसः स्मृतः ।। ४०.१९ ।।

भूतादिं ग्रसते चापि महान्वै बुद्धिलक्षणः।
महानात्मा तु विज्ञेयः संकल्पो व्यवसायकः ।। ४०.२० ।।

बुद्धिर्मनश्च लिङ्गश्च महानक्षर एव च।
पर्यायवाचकैः शब्दैस्तमाहुस्तत्त्वचिन्तकाः ।। ४०.२१ ।।

सम्प्रलीनेषु भूतेषु गुणसाम्ये तमोमये।
स्वात्मन्येव स्थिते चैव कारणे लोककारणे ।। ४०.२२ ।।

विनिवृत्ते तदा सर्गे प्रकृत्यावस्थितेन वै ।
तदाद्यन्तपरोक्षत्वा दद्दष्टत्वाच्च कस्यचित् ।। ४०.२३ ।।

अनाख्यानादबोधत्वादज्ञानाज्ज्ञानिनामपि।
आगतागतिकत्वाच्च ग्रहणं तन्न विद्यते ।। ४०.२४ ।।

भावग्राह्यानुमानाच्च चिन्तयित्वेदमुच्यते।
स्थिते तु कारणे तस्मिन्नित्ये सदसदात्मिके ।। ४०.२५ ।।

अनिर्द्देश्या प्रवृत्तिर्वै स्वात्मिका कारणे न तु।
एवं सप्तादयोऽभ्यस्तात्क्रमात्प्रकृतयस्तु वै ।। ४०.२६ ।।

प्रत्याहारे तदा सर्गे प्रविश्यन्ति परस्परम्।
येनेदमावृतं सर्वं मण्डलन्तु प्रलीयते ।। ४०.२७ ।।

सप्तद्वीपसमुद्रान्तं सप्तलोकं सपर्वतम्।
उदकावरणं यच्च ज्योतिषां लीयते तु तत् ।। ४०.२८ ।।

यत्तैजसं चावरणमाकाशं ग्रसते तु तत्।
यद्वायव्यं चावरणमाकाशं ग्रसते तु तत् ।। ४०.२९ ।।

आकाशावरणं यच्च भूतादिर्ग्रसते तु तत्।
भूतादिं ग्रसते चापि महान्वै बुद्धि लक्षणः ।। ४०.३० ।।

महान्तं ग्रसतेऽव्यक्तं गुणसाम्यं ततः परम्।
एतौ संहारविस्तारौ ब्रह्माव्यक्तौ ततः पुनः ।। ४०.३१ ।।

सृजते ग्रसते चैव विकारान्सर्गसंयमे।
संहारकार्यकरणाः संसिद्धा ज्ञानिनस्तु ये ।। ४०.३२ ।।

गत्वा जवञ्जवीभावे स्थानेष्वेषु प्रसंयमान्।
प्रत्याहारे वियुज्यन्ते क्षेत्रज्ञाः करणैः पुनः ।। ४०.३३ ।।

अव्यक्तं क्षेत्रमित्याहुर्ब्रह्म क्षेत्रज्ञ उच्यते।
साधर्म्यवैधर्म्मकृतसंयोगोऽनादिमांस्तयोः ।। ४०.३४ ।।

एवं सर्गेषु विज्ञेयं क्षेत्रज्ञेष्विह ब्राह्मणाः ।
ब्रह्मविच्चैव विज्ञेयः क्षेत्रज्ञानात्पृथक्पृथक् ।। ४०.३५ ।।

विषयाविषयत्वञ्च क्षेत्रक्षेत्रज्ञयोः स्मृतम्।
ब्रह्मा तु विषयो ज्ञेयोऽविषयः क्षेत्रमुच्यते ।। ४०.३६ ।।

क्षेत्रज्ञाधिष्ठितं क्षेत्रं क्षेत्रज्ञार्थं प्रचक्षते।
बहुत्वाच्च शरीराणां शरीरी बहुधा स्मृतः ।। ४०.३७ ।।

अव्यूहा शङ्कराच्चैव ज्योतिर्वच्च व्यवस्थितः।
यस्मात्प्रतिशरीरं हि सुखदुःखोपलब्धिता।
तस्मात्पुरुषनानात्वं विज्ञेयं तु विजानता ।। ४०.३८ ।।

यदा प्रवर्त्तते चैषां भेदानां चैव संयमाः।
स्वभावकारिताः सर्वे कालेन महता तदा ।। ४०.३९ ।।

निवर्त्तते तदा तस्य स्थितिरागः स्वयम्भुवः।
सहसा योज्यकैः सर्वैर्ब्रह्मलोक निवासिभिः ।। ४०.४० ।।

विनिवृत्ते तदा रागे स्थितावात्मनिवासिनाम्।
तत्कालवासिनां तेषां तदा तद्दोषदर्शिनाम् ।। ४०.४१ ।।

उत्पद्यतेऽथ वैराग्यमात्मवाद प्रणाशनम्।
भोज्यभोक्तृत्वनानात्वे तेषां तद्भवदर्शिनाम् ।। ४०.४२ ।।

पृथग्ज्ञानेन क्षेत्रज्ञास्ततस्ते ब्रह्मलौकिकाः।
प्रकृतौ करणा नीताः सर्वे नानाप्रदर्शिनः ।। ४०.४३ ।।

स्वात्मन्येवावतिष्ठन्ते प्रशान्ता दर्शनात्मकाः।
शुद्धा निरञ्जनाः सर्वे चेतनाचेतनास्तथा ।। ४०.४४ ।।

तत्रैव परिनिर्वाणाः स्मृता नागामिनस्तु ते।
निर्गुणत्वानिरात्मानः प्रकृत्यन्ते व्यतिक्रमात् ।। ४०.४५ ।।

इत्येवं प्राकृतः प्रोक्तः प्रतिसर्गः स्वयम्भुवः।
भिद्यन्ते सर्वभूतानां करणानि प्रसंयमे ।। ४०.४६ ।।

इत्येष संयमश्चैव तत्त्वानां करणैः सह।
तत्त्वप्रसंयमो ह्येष स्मृतो ह्यावर्त्तको द्विजाः ।। ४०.४७ ।।

सूत उवाच।।

धर्माधर्मौ तपो ज्ञानं शुभे सत्यानृते तथा।
ऊर्द्ध्व भावो ह्यधोभावो सुखदुःखे प्रियाप्रिये ।। ४०.४८ ।।

सर्वमेतत्प्रयातस्य गुणमात्रात्मकं स्मृतम्।
निरिन्द्रियाणां च तदा ज्ञानिनां यच्छुभाशुभम् ।। ४०.४९ ।।

प्रकृत्यां चैव तत्सर्वं पुण्यं पापं प्रतिष्ठति।
योन्यवस्था स्वभावे च देहिनां तु निषिच्यते ।। ४०.५० ।।

जन्तूनां पापपुण्यन्तु प्रकृतौ यत्प्रतिष्ठितम् ।
अव्यक्त स्थानि तान्येव पुण्यपापानि जन्तवः।
ये जयन्ति पुनर्देहे देहान्यत्वे तथैव च ।। ४०.५१ ।।

धर्माधर्मौ तु जन्तूनां गुणमात्रात्मकावुभौ ।
करणैः स्वैः प्रचीयेते कायत्वेनेह जन्तुभिः ।। ४०.५२ ।।

सुचेतनाः प्रलीयन्ते क्षेत्रज्ञाधिष्ठिता गुणाः।
सर्गे च प्रतिसर्गे च संसारे चैव जन्तवः।
संयुज्यन्ते वियुज्यन्ते करणैः सञ्चरन्ति च ।। ४०.५३ ।।

राजसी तामसी चैव सात्विकी चैव वृत्तयः।
गुणमात्राः प्रवर्त्तन्ते पुरुषाधिष्ठितास्त्रिधा ।। ४०.५४ ।।

ऊर्द्ध्वं देवात्मकं सत्त्वमधोभागात्मकं तमः।
तयोः प्रवर्त्तकं मद्ये इहैवावर्त्तकं रजः ।। ४०.५५ ।।

इत्येवं परिवर्त्तन्ते त्रयः स्रोतोगुणात्मकाः।
लोकेषु सर्वभूतानां तन्न कार्यं विजानता ।। ४०.५६ ।।

अविद्याप्रत्ययारम्भा आरभ्यन्ते हि मानवैः ।
एतास्तु गतयस्तिस्रः शुभाः पापात्मिकाः स्मृताः ।। ४०.५७ ।।

तम साभिभवाज्जन्तुर्याथातथ्यं न विन्दति।
अतत्त्वदर्शनात्सोऽथ त्रिविधं बध्यते ततः ।। ४०.५८ ।।

प्राकृतेन च बन्धेन तथा वैकारिकेन च।
दक्षिणाभिस्तृतीयेन बद्धोऽत्यन्तं विवर्त्तते ।। ४०.५९ ।।

इत्येते वै त्रयः प्रोक्ता बन्धा ह्यज्ञानहेतुकाः।
अनित्ये नित्यसंज्ञा च दुःखे च सुखदर्शनम् ।। ४०.६० ।।

अस्वे स्वमिति च ज्ञानमशुचौ शुचिनिश्चयः।
येषामेते मनोदोषा ज्ञानदोषा विपर्य्ययात् ।। ४०.६१ ।।

रागद्वेषनिवृत्तिश्च तज्ज्ञानं समुदाहृतम्।
अज्ञानं तमसो मूलं कर्म्मद्वयफलं रजः।
कर्म्मजस्तु पुनर्देहो महादुःखं प्रवर्त्तते ।। ४०.६२ ।।

श्रोत्रजा नेत्रजा चैव त्वग्जिह्वाघ्राणतस्तथा।
पुनर्भवकरी दुःखा कर्म्मणां जायते तु सा ।। ४०.६३ ।।

सतृष्णोऽभिहितो बालः स्वकृतैः कर्म्मणः फलैः।
तैलपालीकवज्जीवस्तत्रैव परि वर्त्तते ।। ४०.६४ ।।

तस्मात्स्थूलमनर्थानामज्ञानमुपदिश्यते ।
तं शक्तमवधार्य्यैकं ज्ञाने यत्नं समाचरेत् ।। ४०.६५ ।।

ज्ञानाद्विजयते सर्वं त्यागादबुद्धिर्विरज्यते।
वैराग्याच्छुद्ध्यते चापि शुद्धः सत्त्वेन मुच्यते ।। ४०.६६ ।।

अत ऊर्द्ध्वं प्रवक्ष्यामि रागं भूतापहारिणम्।
अभिषङ्गाय यो यस्माद्विषयोऽप्यवशात्मनः ।। ४०.६७ ।।

अनिष्टमभिषङ्गं हि प्रीतितापविषादनम्।
दुःखलाभे न तापञ्च सुखानुस्मरणं तथा ।। ४०.६८ ।।

इत्येष वैषयो रागः सम्भूत्याः कारणं स्मृतम्।
ब्रह्मादौ स्थावरान्ते वै संसारे ह्याधिभौतिके।
अज्ञानपूर्वकं तस्मादज्ञानन्तु विवर्जयेत् ।। ४०.६९ ।।

यस्य चार्षं न प्रमाणं शिष्टाचारं तथैव च।
वर्णाश्रमविरोधी यः शिष्टशास्त्रविरोधकः ।। ४०.७० ।।

एष मार्गो हि निरधितिर्यग्योनौ च कारणम्।
तिर्यग्योनिगतञ्चैव कारणं स निरुच्यते ।। ४०.७१ ।।

विविधा यातना स्थाने तिर्यग्योनौ च षड्विधे।
कारणे विषये चैव प्रतिघातस्तु सर्वशः ।। ४०.७२ ।।

अनैश्वर्य्यन्तु तत्सर्वं प्रतिघातात्मकं स्मृतम् ।
इत्येषा तामसी वृत्तिर्भूतादीनां चतुर्विधा ।। ४०.७३ ।।

सत्त्वस्थमात्रकं चित्तं यथा सत्त्वप्रदर्शनात्।
तत्त्वानाञ्च तथा तत्त्वं दृष्ट्वा वै तत्त्वदर्शनात् ।। ४०.७४ ।।

सत्त्वक्षेत्रज्ञनानात्वमेतज्ज्ञानार्थदर्शनम्।
नानात्वदर्शनं ज्ञानं ज्ञानाद्वै योगमुच्यते ।। ४०.७५ ।।

तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च ।
संसारे विनिवृत्ते तु मुक्तो लिङ्गेन मुच्यते ।। ४०.७६ ।।

निःसम्बन्धो ह्यचैतन्यः स्वात्मन्येवावतिष्ठते।
स्वात्मव्यवस्थितश्चापि विरूपाख्येन लिख्यते ।। ४०.७७ ।।

इत्येतल्लक्षणं प्रोक्तं समासाज्ज्ञानमोक्षयो।
स चापि त्रिविधः प्रोक्तो मोक्षो वै तत्त्वदर्शिभिः ।। ४०.७८ ।।

पूर्वं वियोगो ज्ञानेन द्वितीयो रागसंक्षयात्।
लिङ्गाभावात्तु कैवल्यं कैवत्यात्तु निरञ्जनम् ।। ४०.७९ ।।

निरञ्जनत्वाच्छुद्धस्तु ततो नेता न विद्यते।
तृष्णाक्षयात्तृतीयस्तु व्याख्यातं मोक्षकारणम् ।। ४०.८० ।।

निमित्तमप्रतीघाते इष्टशब्दादिलक्षणे।
अष्टावेतानि रूपाणि प्राकृतानि यथाक्रमम् ।। ४०.८१ ।।

क्षेत्रज्ञेष्ववसज्यन्ते गुणमात्रात्मकानि तु।
अत उर्द्ध्वं प्रवक्ष्यामि वैराग्यं दोषदर्शनात् ।। ४०.८२ ।।

दिव्ये च मानुषे चैव विषये पञ्चलक्षणे।
अप्रद्वेषोऽनभिष्वङ्गः कर्त्तव्यो दोषदर्शनात् ।। ४०.८३ ।।

तापप्रीतिविषादानां कार्य्यन्तु परिवर्जनम्।
एवं वैराग्यमास्थाय शरीरी निर्ममो भवेत् ।। ४०.८४ ।।

अनित्यमशिवं दुःखमिति बुद्ध्यानुचिन्त्य च।
विशुद्धं कार्य्यकरणं सत्वाभ्येति तरान्तु यः ।। ४०.८५ ।।

परिपक्वकषायो हि कृत्स्नान्दोषान्प्रपश्यति।

ततः प्रयाणकाले हि दोषैर्नैमित्तिकैस्तथा ।। ४०.८६ ।।

ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः।
स शरीरमुपाश्रित्य कृत्स्नान्दोषान्रुणद्धि वै ।। ४०.८७ ।।

प्राणस्थानानि भिन्दन्हि छिन्दन्मर्माण्यतीत्य च।
शैत्यात्प्रकुपितो वायुरूर्द्ध्वन्तु क्रमते ततः ।। ४०.८८ ।।

स चायं सर्वभूतानां प्राणस्थानेष्ववस्थितः।
समासात्संवृते ज्ञाने संवृतेषु च कर्म्मसु ।। ४०.८९ ।।

स जीवोऽनभ्यधिष्टानः कर्म्मभिः स्वैः पुराकृतैः।
अष्टाङ्गप्राणवृत्तीर्वै स विच्यावयते पुनः ।। ४०.९० ।।

शरीरं प्रजहंसो वै निरुच्छ्वासस्ततो भवेत्।
एवं प्राणैः परित्यक्तो मृत इत्यभिधीयते ।। ४०.९१ ।।

यथेह लोके खद्योतं नीयमानमितस्ततः ।
रञ्जनं तद्वधे यत्तु नेता नेता न विद्यते ।। ४०.९२ ।।

तृष्णाक्षयस्तृतीयस्तु व्याख्यातं मोक्षलक्षणम्।
शब्दाद्ये विषये दोषविषये पञ्चलक्षणे ।। ४०.९३ ।।

अप्रद्वेषोऽनभिष्वङ्गः प्रीतितापविवर्जनम् ।
वैराग्यकारणं ह्येते प्रकृतीनां लयस्य च ।। ४०.९४ ।।

अष्टौ प्रकृतयो ज्ञेयाः पूर्वोक्ता वै यथाक्रमम्।
अव्यक्ताद्यस्तु विज्ञेया भूतान्ताः प्रकृतेर्लयाः ।। ४०.९५ ।।

वर्णाश्रमाचारयुक्ताः शिष्टाः शास्त्राविरोधिनः।
वर्णाश्रमाणां धर्म्मोऽयं देवस्थानेषु कारणम् ।। ४०.९६ ।।

ब्रह्मादीनि पिशाचान्तान्यष्टौ स्थानानि देवता।
ऐश्वर्य्यमणिमाद्यं हि कारणं ह्यष्टलक्षणम् ।। ४०.९७ ।।

निमित्तमप्रतीघात इष्टे शब्दादिलक्षणे।
अष्टावेतानि रूपाणि प्राकृतानि यथाक्रमम् ।। ४०.९८ ।।

क्षेत्रज्ञेष्वनुसज्यन्ते गणमात्रात्मकानि तु।
प्रावृट्काले पृथक्त्वेन पश्यन्तीह न चक्षुषा ।। ४०.९९ ।।

पश्यन्त्येवंविधं सिद्धा जीवं दिव्येन चक्षुषा।
श्वाविति श्वानपानश्च योनीः प्रविशतस्तथा ।। ४०.१०० ।।

तिर्य्यगूर्द्ध्वमधस्ताच्च धावतोऽपि यथाक्रमम्।
जीवप्राणास्तथा लिङ्गं कारणञ्च चतुष्टयम् ।।. ४०.१०१ ।।

पर्य्यायवाचकैः शब्दैरेकार्थैः सोऽभिलिख्यते।
व्यक्ताव्यक्ते प्रमाणोऽयं स वै रूपं तु कृत्स्नशः ।। ४०.१०२ ।।

अव्यक्तान्त गृहीतं च क्षेत्रज्ञाधिष्ठितञ्च यत् ।
एवं ज्ञात्वा शुचिर्भूत्त्वा ज्ञानाद्वै विप्रमुच्यते ।। ४०.१०३ ।।

नष्टञ्चैव यथा तत्त्वं तत्त्वानां तत्त्वदर्शनम्।
यथेष्टं परिनिर्य्याति भिन्ने देहे सुनिर्वृते ।। ४०.१०४ ।।

भिद्यते करणञ्चापि ह्यव्यक्ताज्ञानिनस्ततः।
मुक्तो गुणशरीरेण प्राणाद्येन तु सर्वशः ।। ४०.१०५ ।।

नान्यच्छरीरमादत्ते दग्धे बीजे यथाङ्कुरः।
जीविकः सर्वसंसाराद्बीजशारीरमानसः ।। ४०.१०६ ।।

ज्ञानाच्चतुर्द्दशाच्छुद्धः प्रकृतिं सोऽनुवर्त्तते।
प्रकृतिं सत्यमित्याहु र्विकारोऽनृतमुच्यते ।। ४०.१०७ ।।

तत्सद्भावोऽनृतं ज्ञेयं सद्भावः सत्यमुच्यते।
अनामरूपक्षेत्रज्ञनामरूपं प्रचक्षते ।। ४०.१०८ ।।

यस्मात्क्षेत्रं विजानाति तस्मात्क्षेत्रज्ञ उच्यते।
क्षेत्रप्रत्ययतो यस्मात्क्षेत्रज्ञः शुभ उच्यते ।। ४०.१०९ ।।

क्षेत्रज्ञः स्मर्य्यते तस्मात्क्षेत्रं तज्ज्ञैर्विभाष्यते।
क्षेत्रत्वप्रत्ययं दृष्टं क्षेत्रज्ञः प्रत्ययी सदा ।। ४०.११० ।।

क्षयणात् करणाच्चैव क्षतत्राणात्तथैव च।
भोज्यत्वाद्विषयत्वाच्च क्षेत्रं क्षेत्रविदो विदुः ।। ४०.१११ ।।

महदाद्यं विशेषान्तं सवैरूप्यं विलक्षणम्।
विकारलक्षणं तद्वै साक्षरक्षरमेव च ।। ४०.११२ ।।

तमेव च विकारन्तु यस्माद्वै क्षरते पुनः।
तस्माच्च कारणाच्चैव क्षरमित्यभिधीयते ।। ४०.११३ ।।

सुखदुःखमोहभावा भोज्यमित्यभिधीयते।
अचेतत्वाद्धि विषयस्तद्धि धर्म्मविभुः स्मृतः ।। ४०.११४ ।।

न क्षीयते न क्षरति विकारप्रसृतन्तु तत्।
अक्षरं तेन चाप्युक्तमक्षीणत्वात्तथैव च ।। ४०.११५ ।।

यस्मात्पुर्य्यनुशेते च तस्मात्पुरुष उच्यते।
पुरप्रत्ययिको यस्मात्पूरुषेत्यभिधीयते ।। ४०.११६ ।।

पुरुषं कथयस्वाथ कथन्तज्ज्ञैर्विभाष्यते।
शुद्धो निरञ्जनाभासो ज्ञानाज्ञानविवर्जितः ।। ४०.११७ ।।

अस्ति नास्तीति सोऽन्यो वा बद्धो मुक्तो गतः स्थितः।
नैर्हेतिकान्तनिर्द्देश्यसूक्तस्तस्मिन्न विद्यते ।। ४०.११८ ।।

शुद्धत्वान्न तु देश्यो वै दृष्टत्वात्समदर्शनः।
आत्मप्रत्ययकारी सारनूनञ्चापि हेतुकम्।
भावग्राह्यमनुमान्यं चिन्तयन्न प्रमुह्यते ।। ४०.११९ ।।

यदा पश्यति ज्ञातारं शान्तार्थं दर्शनात्मकम्।
दृश्यादृश्येषु निर्द्देश्यं तदा तदुद्धरं वरम् ।। ४०.१२० ।।

एवं ज्ञात्वा स विज्ञाता ततः शान्तिं नियच्छति।
कार्य्ये च कारणे चैव बुद्ध्यादौ भौतिके तदा ।। ४०.१२१ ।।

संप्रयुक्तो वियुक्तो वा जीवतो वा मृतस्य च।
विज्ञाता न च दृश्येत पृथक्त्वेनेह सर्व्वशः ।। ४०.१२२ ।।

स्वेनात्मानं तमात्मानं कारणात्मा नियच्छति।
प्रकृतौ कारणे चैव स्वात्मन्येवोपतिष्ठति ।। ४०.१२३ ।।

अस्ति नास्तीति सोऽन्यो वा इहामुत्रेति वा पुनः।
एकत्वं वा पृथक्त्वं वा क्षेत्रज्ञपुरुषेति वा ।। ४०.१२४ ।।

आत्मवान् स निरात्मा वा चेतनोऽचेतनोऽपि वा।
कर्त्ता वा सोऽप्यकर्त्ता वा भोक्ता वा भोज्यमेव वा ।। ४०.१२५ ।।

यज्ज्ञात्वा न निवर्त्तन्ते क्षेत्रज्ञे तु निरञ्जने।
अवाच्यं तदनाख्यानादग्राह्यत्वादहेतुनि ।। ४०.१२६ ।।

अप्रतर्क्यमचिन्त्यत्वादवाप्यत्वाच्च सर्वशः।
नाभिलिम्पति तत्तत्त्वं सम्प्राप्य मनसा सह ।। ४०.१२७ ।।

क्षेत्रेज्ञे निर्गुणे शुद्धे शान्ते क्षीणे निरञ्जने।
व्यपे(ये)तसुखदुःखे च निरुद्धे शान्तिमागते ।। ४०.१२८ ।।

निरात्मके पुनस्तस्मिन्वाच्यावाच्यो न विद्यते।
एतौ संहारविस्तारौ व्यक्ताव्यक्तौ ततः पुनः ।। ४०.१२९ ।।

सृजते ग्रसते चैव ग्रस्तः पर्यवतिष्ठते।
क्षेत्रज्ञाधिष्ठितं सर्वं पुनः सर्वं प्रवर्त्तते ।। ४०.१३० ।।

अधिष्ठानप्रवृत्तेन तस्य ते बुद्धिपूर्वकम्।
साधर्म्यवैधर्म्यकृतसंयोगो विधितस्तयोः।
अनादिमान् स संयोगो महापुरुषजः स्मृतः ।। ४०.१३१ ।।

यावच्च सर्गप्रतिसर्गकालस्तावच्च तिष्ठति सुसन्निरुध्य।
पूर्वं हितव्ये तदबुद्धिपूर्वं प्रवर्त्तते तत्पुरुषार्थमेव ।। ४०.१३२ ।।

एषा निसर्गप्रतिसर्गपूर्वं प्रधानिकी चेश्वरकारिता च।
अनाद्यनन्ता ह्यभिमानपूर्वकं वित्रासयन्ती जगदभ्युपैति ।। ४०.१३३ ।।

इत्येष प्राकृतः सर्गस्तृतीयो हेतुलक्षणः।
उक्तो ह्यस्मिंस्तदात्यन्तं कविभिस्तत्प्रमुच्यते ।। ४०.१३४ ।।

इत्येष प्रतिसर्गोवस्त्रिविधः कीर्त्तितो मया।।
विस्तरेणानुपूर्व्या च भूयः किं वर्त्तयाम्यहम् ।। ४०.१३५ ।।

इति श्रीमहापुराणे वायुप्रोक्ते चत्वारिंशोऽध्यायः ।। ४० ।। *

।।ऋषय ऊचुः।।
सूत सुमहदाख्यानं भवता परिकीर्तितम्।
प्रजानां मनुभिः सार्द्धं देवानामृषिभिः सह ।। ४१.१ ।।

पितृगन्धर्वभूतानां पिशाचोरगरक्षसाम्।
दैत्यानां दानवानां च यक्षाणामेव पक्षिणाम् ।। ४१.२ ।।

अत्यद्भुतानि कर्म्माणि विधिमान्धर्म्मनिश्चयः।
विचित्राश्च कथायोगा जन्म चाग्र्यमनुत्तमम् ।। ४१.३ ।।

तत्कथ्यमानमस्माकं भवता श्लक्ष्णया गिरा।
मनःकर्मसुखं सौते प्रीणात्याभूतसम्भवम् ।। ४१.४ ।।

एवमाराध्य ते सूतं सत्कृत्य च महर्षयः ।
पप्रच्छुः सत्रिणः सर्वे पुनः सर्गप्रवर्त्तनम् ।। ४१.५ ।।

कथं सूत महाप्राज्ञ पुनं सर्गः प्रपत्स्यते।
बन्धेषु सम्प्रलीनेषु गुणसाम्ये तमोमये ।। ४१.६ ।।

विकारेष्वविसृष्टोषु ह्यव्यक्ते चात्मनि स्थिते।
अप्रवृत्तौ ब्रह्मणस्तु महासायुज्यगैस्तदा ।
कथं प्रपत्स्यते सर्गस्तन्नः प्रब्रूहि पृच्छताम् ।। ४१.७ ।।

एवमुक्तस्ततः सूतस्तदासौ लोमहर्षणः ।
व्याख्यातुमुपचक्राम पुनः सर्गप्रवर्त्तनम् ।। ४१.८ ।।

अहं वौ वर्त्तयिष्यामि यथा सर्गः प्रपत्स्यते।
पूर्ववत्स तु विज्ञेयः समासात्तं निबोधत ।। ४१.९ ।।

दृष्टं चैवानुमेयञ्च तर्कं वक्ष्यामि युक्तितः।
तस्माद्वाचो निवर्त्तन्ते ह्यप्राप्य मनसा सह ।। ४१.१० ।।

अव्यक्तवत् परोक्षत्वाद्ग्रहणं तद्दुरासदम्।
विकारैः प्रतिसंदृष्टे गुणसाम्ये निवर्त्तते ।। ४१.११ ।।

प्रधानं पुरुषाणाञ्च साधर्म्म्येणैव तिष्ठति।
धर्म्माधर्म्मौ प्रलीयेते अव्यक्तौ प्राणिनां सदा ।। ४१.१२ ।।

सत्त्वमात्रात्मको धर्म्मो गुणसत्त्वे प्रतिष्ठितः।
तमोमात्रात्मकोऽधर्म्मो गुणे तमसि तिष्ठति ।। ४१.१३ ।।

अविभागवतावेतौ गुणसाम्यस्थितावुभौ।

सर्वकार्य्ये बुद्धिपूर्वं प्रधानस्य प्रपत्स्यते ।। ४१.१४ ।।

अबुद्धिपूर्वं क्षेत्रज्ञ अधिष्ठास्यति तान् गुणान्।
एवं तानभिमानेन प्रपत्स्येत पुरस्तदा ।। ४१.१५ ।।

यदा प्रवर्त्तितव्यन्तु क्षेत्रक्षेत्रज्ञयोर्द्वयोः।
भोज्यभोक्तृत्वसम्बन्धं प्रपत्स्येते युतावुभौ ।। ४१.१६ ।।

तस्माच्छरणमव्यक्तं साम्ये स्थित्वा गुणात्मकान्।
क्षेत्रज्ञाधिष्ठितं तच्च वैषम्यं भजते तु तत् ।। ४१.१७ ।।

ततः प्रपत्स्यते व्यक्तं क्षेत्रक्षेत्रज्ञयोर्द्वयोः।
क्षेत्रज्ञाधिष्ठितं सत्त्वं विकारं जनयिष्यति ।। ४१.१८ ।।

महदाद्यं विशेषान्तं चतुर्विंशगुणात्मकम्।
क्षेत्रज्ञस्य प्रधानस्य पुरुषस्य प्रपत्स्यते ।। ४१.१९ ।।

ब्रह्माण्डे प्रथमः सोऽथ भविता चेश्वरः पुनः।
ततो ज्ञेयस्य कृत्स्नस्य सर्वभूतपतिः शिवः ।। ४१.२० ।।

ईश्वरः सर्व्वमुक्तानां ब्रह्मा ब्रह्ममयो महान्।
आदि देवः प्रधानस्यानुग्रहाय प्रवक्ष्यते ।। ४१.२१ ।।

अनाद्यौ स्वयमुत्पन्नावुभौ सूक्ष्मौ तु तौ स्मृतौ ।
अनादिसंयोगयुतौ सर्वक्षेत्रज्ञमेव च ।। ४१.२२ ।।

अबुद्धि पूर्वकं युक्तौ मशकौ तु वरौ तदा।
अप्रत्ययमनाद्यं च स्थितावुदकमप्स्यशः ।। ४१.२३ ।।

प्रवृत्ते पूर्वतः पूर्वं पुनः सर्गे प्रपत्स्यते।
अज्ञागुणैः प्रवर्त्तन्ते रजःसत्त्वतमात्मकम् ।। ४१.२४ ।।

प्रवृत्तिकाले रजसाभिपन्नमहत्त्वभूतादिविशेष्यताञ्च।
विशेषतां चेन्द्रियताञ्च यान्ति गुणावसाने पतिभिर्मनुष्याः ।। ४१.२५ ।।

सत्याभिध्यायिनस्तस्य ध्यायिनः सन्निमित्तकम्।
रजःसत्त्वतमा व्यक्ता विधर्म्माणः परस्परम् ।। ४१.२६ ।।

आद्यन्ते संप्रपत्स्यन्ते क्षेत्रतज्ज्ञास्तु सर्वशः।
संसिद्धकार्य्यकरणा उत्पद्यन्तेऽभिमानिनः ।। ४१.२७ ।।

सर्वे सत्वाः प्रपद्यन्ते ह्यव्यक्तात्पूर्वमेव च।

प्रसूते या च सुवहाः साधिकाश्चाप्यसाधिका ।। ४१.२८ ।।

संसरन्तस्तु ते सर्वे स्तानप्रकरणैः सह।
कार्य्याणि प्रतिपत्स्यन्ते उत्पद्यन्ते पुनः पुनः ।। ४१.२९ ।।

गुणमात्रात्मकाश्चैव धर्म्माधर्म्मौ परस्परम्।
आरप्सन्तीह चान्योन्यं वरेणानुग्रहेण च ।। ४१.३० ।।

सर्वे तुल्याः प्रसृष्टार्थं सर्ग्गदौ यान्ति विक्रियाम्।
गुणास्ततप्रतिधावन्ते तस्मात्तत्तस्य रोचते ।। ४१.३१ ।।

गुणास्ते यानि सर्वाणि प्राक् दृष्टेः प्रतिपेदिरे।
तान्येव प्रतिपद्यन्ते सृष्टमानाः पुनः पुनः ।। ४१.३२ ।।

हिंस्राहिंस्रे मृदुक्रूरे धर्म्माधर्म्मावृतानृते।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ।। ४१.३३ ।।

महाभूतेषु नानात्वमिन्द्रियार्थेषु मूर्त्तिषु।
विप्रयोगाश्च भूतानां युणोभ्यः संप्रवर्त्तते ।। ४१.३४ ।।

इत्येष वो मया ख्यातः पुनः सर्गः समासतः।
समासादेव वक्ष्यामि ब्रह्मणोऽथ समुद्भवम् ।। ४१.३५ ।।

अव्यक्तात्कारणात्तस्मान्नित्यात्सदसदात्मकात्।
प्रधान पुरुषाभ्यान्तु जायते च महेश्वरः ।। ४१.३६ ।।

स पुनः सम्भावयिता जायते ब्रह्मसंज्ञितः।
सृजते स पुनर्लोकानभिमानगुणात्मकान् ।। ४१.३७ ।।

अहङ्कारस्तु महतस्तस्माद्भूतानि चात्मनः।
युगपत् सम्प्रवर्त्तन्ते भूतान्येवेन्द्रियाणि च।
भूतभेदाश्च भूतेभ्य इति सर्गः प्रवर्त्तते ।। ४१.३८ ।।

विस्तरावयवस्तेषां यथाप्रज्ञं यथाश्रुतम्।
कीर्त्तितं वो यथा पूर्वं तथैवाभ्युपधार्य्यताम् ।। ४१.३९ ।।

एतच्छ्रुत्वा नैमिषेयास्तदानीं लोकोत्पत्तिं संस्थितिं च व्ययञ्च।
तस्मिन् सत्रेऽवभृथं प्राप्य शुद्धाः पुण्यं लोकमृषयः प्राप्नुवन्ति ।। ४१.४० ।।

यथा यूयं विधिवद्देवतादीनिष्ट्वा चैवावभृथं प्राप्य शुद्धाः।
त्यक्त्वा देहानायुषोऽन्ते कृतार्थान्पुण्याँल्लोकान्प्राप्य यथेष्टं चरिष्यथ ।। ४१.४१ ।।

एते ते नैमिषेया वै इष्ट्वा सृष्ट्वा च वै तदा।
जग्मुश्चावभृधस्नाताः स्वर्गं सर्वे तु सत्रिणः ।। ४१.४२ ।।

विप्रास्तथा यूयमपि चेष्ट्वा बहुविधैर्मखैः ।
आयुषोऽन्ते ततः स्वर्गं गन्तारः स्थ द्विजोत्तमाः ।। ४१.४३ ।।

प्रक्रिया प्रथमे पादे कथावस्तुपरिग्रहः।
अनुषङ्ग उपोद्वात उपसंहार एव च ।। ४१.४४ ।।

एवमेतच्चतुष्पादं पुराणं लोकसम्मतम्।
उवाच भगवान् साक्षाद्वायुर्लोकहिते रतः ।। ४१.४५ ।।

नैमिषे सत्रमासाद्य मुनिभ्यो मुनिसत्तमाः ।
तत्प्रसादादसंदिग्धं भूतोत्पत्तिलयानि च ।। ४१.४६ ।।

प्राधानिकीमिमां सृष्टिं तथैवेश्वरकारिताम्।
सम्यग्विदित्वा मेधावी न मोहमधिगच्छति ।। ४१.४७ ।।

इदं यो ब्राह्मणो विद्वानितिहासं पुरातनम्।
श्रृणुयाच्छ्रावयेद्वापि तथाध्यापयतेऽपि च ।। ४१.४८ ।।

स्थानेषु स महेन्द्रस्य मोदते शाश्वतीः समाः।
ब्रह्मसायुज्यगो भूत्वा ब्रह्मणा सह मोक्ष्यते ।। ४१.४९ ।।

तेषां कीर्त्तिमतां कीर्त्तिं प्रजेशानां महात्मनाम्।
प्रथयन्पृथिवीशानां ब्रह्मभूयाय गच्छति ।। ४१.५० ।।

धन्यं यशस्यमायुष्यं पुण्यं वेदैश्च सम्मतम्।
कृष्णद्वैपायनेनोक्तं पुराणं ब्रह्मवादिना ।। ४१.५१ ।।

मन्वन्तरेश्वराणां च यः कीर्तिं प्रथयेदिमाम्।
देवतानामृषीणाञ्च भूरिद्रविणतेजसाम्।
स सर्वैर्मुच्यते पापैः पुण्यञ्च महदाप्नुयात् ।। ४१.५२ ।।

यश्चेदं श्रावयेद्विद्वान्सदा पर्वणि पर्वणि।
धूतपाप्मा जितस्वर्गो ब्रह्मभूयाय कल्पते ।। ४१.५३ ।।

यश्चेदं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः।
अक्षयं सार्वकामीयं पितॄंस्तच्चोपतिष्ठति ।। ४१.५४ ।।

यस्मात्पुरा ह्यनन्तीदं पुराणं तेन चोच्यते।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ।। ४१.५५ ।।

तथैव त्रिषु वर्णेषु ये मनुष्याः प्रधानतः।
इतिहासमिमं श्रुत्वा धर्माय विदधे मतिम् ।। ४१.५६ ।।

यावन्त्यस्य शरीरेषु रोमकूपाणि सर्वशः।
तावत्कोटि सहस्राणि वर्षाणां दिवि मोदते।
ब्रह्मसायुज्यगो भूत्वा दैवतैः सह मोदते ।। ४१.५७ ।।

सर्व्वपापहरं पुण्यं पवित्रञ्च यशस्वि च।
ब्रह्मा ददौ शास्त्रमिदं पुराणं मातरिश्वने ।। ४१.५८ ।।

तस्माच्चोशनसा प्राप्तं तस्माच्चापि बृहस्पतिः।
बृहस्पतिस्तु प्रेवाच सवित्रे तदनन्तरम् ।। ४१.५९ ।।

सविता मृत्यवे प्राह मृत्युश्चेन्द्राय वै पुनः।
इन्द्रश्चापि वसिष्ठाय सोऽपि सारस्वताय च ।। ४१.६० ।।

सारस्वतस्त्रिधाम्ने च त्रिधामा च शरद्वते।
शरद्वतस्त्रिविष्टाय सोऽन्तरिक्षाय दत्तवान् ।। ४१.६१ ।।

वर्षिणे चान्तरिक्षो वै सोऽपि त्रय्यारुणाय च।
त्रय्यारुणो धनञ्जये स च प्रादात्कृतञ्जये ।। ४१.६२ ।।

कृत ञ्जयात्तृणञ्जयो भरद्वाजाय सोऽप्यथ।
गौतमाय भरद्वाजः सोऽपि निर्य्यन्तरे पुनः ।। ४१.६३ ।।

निर्यन्तरस्तु प्रोवाच तथा वाजश्रवाय च।
स ददौ सोमशूष्माय स ददौ तृणबिन्दवे ।। ४१.६४ ।।

तृणबिन्दुस्तु दक्षाय दक्षः प्रोवाच शक्तये।
शक्तेः पराशरश्चापि गर्भस्थः श्रुतवानिदम् ।। ४१.६५ ।।

पराशराज्जातुकर्णस्तस्माद्द्वैपायनः प्रभुः।
द्वैपायनात्पुनश्चापि मया प्राप्तं द्विजोत्तमाः ।। ४१.६६ ।।

शांशपायन उवाच ।।

मया वै तत्पुनः प्रोक्तं पुत्रायामितबुद्धये।
इत्येव वाचा ब्रह्मादिगुरुणा समुदाहृता ।। ४१.६७ ।।

नमस्कार्य्यश्च गुरवः प्रयत्नेन मनीषिभिः।
धन्यं यशस्यमायुष्यं पुण्यं सर्वार्थसाधकम् ।। ४१.६८ ।।

पापघ्नं नियमेनेदं श्रोतव्यं ब्राह्मणैः सदा।
नाशुचौ नापि पापाय नाप्यसंवत्सरोषिते ।। ४१.६९ ।।

नाश्रद्दधानाविदुषे नापुत्राय कथञ्चन।
नाहिताय प्रदातव्यं पवित्रमिदमुत्तमम् ।। ४१.७० ।।

अव्यक्तं वै यस्य योनिं वदन्ति व्यक्तं देहं कालमन्तर्गतञ्च ।
वह्निं वक्रं चन्द्र सूर्य्यौ च नेत्रे दिशः श्रोत्रे घ्राणमाहुश्च वायुम् ।। ४१.७१ ।।

वायो वेदांश्चान्तरिक्षं शरीरं क्षितिं पादौ तारका रोमकूपान् ।
सर्वाणि चाङ्गानि तथैव तानि विद्यास्सर्वा यस्य पुच्छं वदन्ति ।। ४१.७२ ।।

तं देवदेवं जननं जनानां सर्व्वेषु लोकेषु प्रतिष्ठितञ्च।
वरं वराणां वरदं महेश्वरं ब्रह्माणमादिं प्रयतो नमस्ये ।। ४१.७३ ।।

इति श्रीमहापुराणे वायुप्रोक्ते सृष्टिवर्णनं नाम एकचत्वारिंशोऽध्यायः ।। ४१ ।। *

।।शौनकादिऋषय ऊचुः।।

सूत सूत महाभाग त्वया भगवता सता।
व्यासप्रसादाधिगतशास्त्रसम्बोधनेन च ।। ४२.१ ।।
अष्टादशपुराणानि सेतिहासानि चानघ।
उपक्रमोपसंहार विधिनोक्तानि कृत्स्नशः ।। ४२.२ ।।
चतुर्दशसहस्रं च मात्स्यं प्रोक्तमतिस्फुटम्।
तत्संख्यकं भविष्यञ्च प्रोक्तं पञ्चशताधिकम् ।। ४२.३ ।।
मार्कण्डेयं महारम्यं प्रोक्तं नवसहस्रकम्।
कथितं ब्रह्मवैवर्त्तमष्टादशसहस्रकम् ।। ४२.४ ।।
शतोत्तरञ्च ब्रह्माण्डं सूर्यसंख्यासहस्रकम् ।
अथ भागवतं दिव्यमष्टादशसहस्रकम् ।। ४२.५ ।।
सहस्राणि दशैवोक्तं पुराणं ब्रह्मनामकम्।
अयुतश्लोकघटितं पुराणं वामनाभिधम् ।। ४२.६ ।।
तथैवायुत संख्यातं षट्शताधिकमादिकम्।
त्रयोविंशतिसाहस्रमनिलं तद्गतं शुभम् ।। ४२.७ ।।
त्रयोविंशतिसाहस्रं नारदीयमुदाहृतम् ।
एकोनविंशसाहस्रं वैनतेयमुदाहृतम् ।। ४२.८ ।।
सहस्रपञ्चपञ्चाशत्प्रोक्तं पाद्मं सुविस्तरम्।
सप्तदशसहस्रन्तु कूर्मं प्रोक्तं मनोहरम् ।। ४२.९ ।।
चतुर्विंशति साहस्रं सौकरं परमाद्भुतम्।
एकाशीतिसहस्राणि स्कान्दमुक्तं सुविस्तृतम् ।। ४२.१० ।।
एवमष्टादशोक्तानि पुराणानि बृहन्ति च।
पुराणेष्वेषु बहवो धर्मास्ते विनिरूपिताः ।। ४२.११ ।।
रागिणाञ्च विरागाणां यतीनां ब्रह्मचारिणाम्
गृहस्थानां वनस्थानां स्त्रीशूद्राणां विशेषतः ।। ४२.१२ ।।
ब्राह्मणक्षत्रियविशां ये च सङ्करजातयः।
गङ्गाद्या या महानद्यो यज्ञव्रततपांसि च ।। ४२.१३ ।।
अनेकविधदानानि यमाश्च नियमैः सह।
योगधर्मा बहुविधाः सांख्या भागवतास्तथा ।। ४२.१४ ।।
भक्तिमार्गा ज्ञानमार्गा वैराग्यानिलनीरजाः।
उपासनविधिश्चोक्तः कर्मसंशुद्धिचेतसाम् ।। ४२.१५ ।।
ब्राह्मं शैवं वैष्णवं च सौरं शाक्तं तथार्हतम्।
षड्दर्शनानि चोक्तानि स्वभावनियतानि च ।। ४२.१६ ।।

एतदन्यच्च विविधं पुराणेषु निरुपितम्।
अतः परं किमप्यस्ति न वा बोद्धव्यमुत्तमम् ।। ४२.१७ ।।
न ज्ञायेत यदि व्यासो गोपयेदथ वा भवान् ।
अत्र नः संशयं छिन्धि पूर्णः पौराणिको यतः ।। ४२.१८ ।।
सूत उवाच।।
श्रृणु शौनक वक्ष्यामि प्रश्नमेनं सुदुर्लभम्।
अतिगोप्यतरं दिव्यमनाख्येयं प्रचक्षते ।। ४२.१९ ।।
पराशरसुतो व्यासः कृत्वा पौराणिकीं कथाम्।
सर्ववेदार्थघटितां चिन्तयामास चेतसि ।। ४२.२० ।।
वर्णाश्रमवतां धर्मो मया सम्यगुदाहृतः।
मुक्तिमार्गा बहुविधा उक्ता वेदाविरोधतः ।। ४२.२१ ।।
जीवेश्वरब्रह्मभेदो निरस्तः सूत्रनिर्णये।
निरूपितं परं ब्रह्म श्रुतियुक्तविचारतः ।। ४२.२२ ।।
अक्षरं परमं ब्रह्म परमात्मा परं पदम्।
यदर्थं ब्रह्मचर्यादिवानप्रस्थयतिव्रतम् ।। ४२.२३ ।।
आचरन्ति महाप्राज्ञा धारणाञ्च पृथग्विधाम्।
आसनं प्राणरोधश्च प्रत्याहारश्च धारणा ।। ४२.२४ ।।
ध्यानं समाधिरेतानि यमैश्च नियमैः सह।
अष्टाङ्गानि यदर्थञ्च चरन्ति मुनिपुङ्गवाः ।। ४२.२५ ।।
यदर्थं कर्म कुर्वन्ति वेदाज्ञामात्रतत्पराः।
परार्पणधिया सम्यग् निष्कामाः कलिलोज्झिताः ।। ४२.२६ ।।
यज्ज्ञप्तये निराकर्त्तुं पापाचरणमात्मनः।
गङ्गादितीर्थचर्याणि निषेवन्ते शुचिव्रताः ।। ४२.२७ ।।
तद्ब्रह्म परमं शुद्धमनाद्यन्तमनामयम्।
नित्यं सर्वगतं स्थाणु कूटस्थं कूटविर्जितम् ।। ४२.२८ ।।
सर्वेन्द्रियचराभासं प्राकृतेन्द्रियवर्जितम्।
दिक्कालाद्यनवच्छिन्नं नित्यं चिन्मात्रमव्ययम् ।। ४२.२९ ।।
अध्यास्तं सर्पवद्यत्र विश्वमेतत्प्रकाशते।
विश्वस्मिन्नपि चान्वेति निर्विकारश्च रज्जुवत् ।। ४२.३० ।।
सम्यग्विचारितं यद्वत्फेनोर्मिबुद्बुदोदकम्।
तथा विचारितं ब्रह्म विश्वस्मान्न पृथग्भवेत् ।। ४२.३१ ।।
सर्वं ब्रह्मैव नानात्वं नास्तीति निगमा जगुः।
यस्माद्भवन्ति ब्रह्माण्ड कोटयो न भवन्ति च ।। ४२.३२ ।।

यदुन्मेषनिमेषाभ्यां जगतां प्रलयोदयौ।
भवेतां या परा शक्तिर्यदाधारतया स्थिता ।। ४२.३३ ।।
यस्मिन्निदं यतश्चेदं येनेदं यदिदं स्मृतम्।
यदज्ञानाज्जगद्भाति यस्मिन् ज्ञाते जगन्न हि ।। ४२.३४ ।।
असत्यं यज्जडं दुःखमवस्त्विवति निरूपितम्।
विपरीतमतो यद्वै सच्चिदानन्दमूर्त्तिकम् ।। ४२.३५ ।।
जीवे जाग्रति विश्वाख्यं स्वप्ने यत्तैजसं स्मृतम् ।
सुषुप्तौ प्राज्ञसंज्ञं तत्सर्वावस्थासु संस्मृतम् ।। ४२.३६ ।।
यच्चक्षुषां चक्षुरथ श्रोत्राणां श्रोत्रमस्ति च।
त्वक् त्वचां रसनं तस्य प्राणं प्राणस्य यद्विदुः ।। ४२.३७ ।।
बुद्धिर्ज्ञानेन च प्राणाः क्रियाशक्त्या निरन्तरम्।
यन्नेशिरि समभ्येतुं ज्ञातुं च परमार्थतः ।। ४२.३८ ।।
रज्जावहिर्मरौ वारि नीलिमा गगने यथा।
असद्विश्वमिदं भाति यस्मिन्नज्ञानकल्पितम् ।। ४२.३९ ।।
घटावच्छिन्न एवायं महाकाशो विभिद्यते।
कार्योपाधिपरिच्छिन्नं तद्वद्यज्जीवसंज्ञिकम् ।। ४२.४० ।।
मायया चित्रकारिण्या विचित्रगुणशीलया ।
ब्रह्माण्डं चित्रमतुलं यस्मिन् भित्ताविवार्पितम् ।। ४२.४१ ।।
धावतोऽन्यानतिक्रान्तं वदतो वागगोचरम् ।
वेदवेदान्तसिद्धान्तैर्विनिर्णीतं तदक्षरम् ।। ४२.४२ ।।
अक्षरान्न परं किञ्चित्सा काष्ठा सा परा गतिः ।
इत्येवं श्रूयते वेदे बहुधापि विचारिते ।। ४२.४३ ।।
अक्षरस्यात्मनश्चापि स्वात्मरूपतया स्थितम्।
परमानन्दसन्दोहरूपमानन्द विग्रहम् ।। ४२.४४ ।।
लीलाविलासरसिकं बल्लवीयूथमध्यगम्।
शिखिपिच्छकिरीटेन बास्वद्रत्नचितेन च ।। ४२.४५ ।।
उल्लसद्विद्युदाटोपकुण्डलाभ्यां विराजितम्।
कर्णोपान्तचरन्नेत्रखञ्जरीटमनोहरम् ।। ४२.४६ ।।
कुञ्जकुञ्जप्रियावृन्दविलासरतिलम्पटम्।
पीताम्बरधरं दिव्यं चन्दनालेपमण्डितम् ।। ४२.४७ ।।
अधरामृत संसिक्तवेणुनादेन वल्लवीः।
मोहयन्तञ्चिदानन्दमनङ्गमदभञ्जनम् ।। ४२.४८ ।।
कोटिकामकलापूर्णं कोटिचन्द्रांशुनिर्मलम्।

त्रिरेखकम्ठविलसद्रत्नगुञ्जामृगा कुलम् ।। ४२.४९ ।।
यमुनापुलिने तुङ्गे तमालवनकानने।
कदम्बचम्पकाशोकपारिजातमनोहरे ।। ४२.५० ।।
शिखिपारावतशुकपिककोलाहलाकुले।
निरोधार्थं गवामेव धावमानमितस्ततः ।। ४२.५१ ।।
राधाविलासरसिकं कृष्णाख्यं पुरुषं परम्।
श्रुतवानस्मि वेदेभ्यो यतस्तद्गोचरोऽभवत् ।। ४२.५२ ।।
एवं ब्रह्मणि चिन्मात्रे निर्गुणे भेदवर्जिते।
गोलोकसंज्ञिके कृष्णो दीव्यतीति श्रुतं मया ।। ४२.५३ ।।
नातः परतरं किञ्चिन्निगमागमयोरपि।
तथापि निगमो वक्ति ह्यक्षरात् परतः परः ।। ४२.५४ ।।
गोलोकवासी भगवानक्षरात्पर उच्यते।
तस्मादपि परः कोऽसौ गीयते श्रुतिभिः सदा ।। ४२.५५ ।।
उद्दिष्टो वेद वचनैर्विशेषो ज्ञायते कथम्।
श्रुतेर्वार्थोऽन्यथा बोध्यः परतस्त्वक्षरादिति ।। ४२.५६ ।।
श्रुत्यर्थे संशयापन्नो व्यासः सत्यवतीसुतः।
विचारयामास चिरं न प्रपेदे यथातथम् ।। ४२.५७ ।।
सूत उवाच।।
विचारयन्नपि मुनिर्नाप वेदार्थनिश्चयम्।
वेदो नारायणः साक्षाद्यत्र मुह्यन्ति सूरयः ।। ४२.५८ ।।
तथापि महतीमार्त्तिं सतां हृदयतापिनीम्।
पुनर्विचारयामास कं व्रजामि करोमि किम् ।। ४२.५९ ।।
पश्यामि न जगत्यस्मिन्सर्वज्ञं सर्वदर्शनम्।
अज्ञात्वाऽन्यतमं लोके सन्देहविनिवर्त्तकम् ।। ४२.६० ।।
मेरोः कुहरिणीं गत्वा चचार परमं तपः।
यत्र कार्त्तस्वरक्फूर्जज्ज्योत्स्नाजालैर्निरन्तरम् ।। ४२.६१ ।।
सदा प्रबाधते विष्वक्तमःस्तोमं दृशन्तुदम्।
चकास्ते यत्र परमं कान्तारमतिसुन्दरम् ।। ४२.६२ ।।
नानाद्रुमलत ---त्पक्षिनिनादितम्।
क्षुत्पिपासाभयक्रोधतापग्लानिविवर्जितम् ।। ४२.६३ ।।
जलाशयैर्बहुविधैः पद्मिनीखण्डमण्डितैः ।
जातरूपशिलानद्धतटसञ्चारपाक्ष ।। ४२.६४ ।।
युक्तमम्भोज पवनैः सेव्यमानं समन्ततः।

शिवैरध्यासितम्भावैर्हिंस्रैः सत्त्वैः समुज्झितम् ।। ४२.६५ ।।

निर्जनं दिव्यलतिकाप्रियखण्डवराजितम्।

शूकैः पारावतै र्हृद्यैरुन्मदन्मत्तकोकिलम् ।। ४२.६६ ।।

उत्पतत्पद्मरजसां पटलामोददिङ्मुखम्।

तत्रापि काञ्चिनी दिव्या गुहा परमशोभना ।। ४२.६७ ।।

तां प्रविश्य जिता हारो जितचित्तो जितासनः।

सस्मार वेदांश्चतुरस्तदेकाग्रमना मुनिः ।। ४२.६८ ।।

त्रयी जगाम शरदां शतस्य स्मरतोऽस्य हि ।

प्रादुरासंस्ततो वेदाश्चत्वारश्चारुदर्शनाः ।। ४२.६९ ।।

स्फुरत्पद्मपलाशाक्षा जटामुकुटधारिणः।

कुशमुष्टिकराम्भोजा मृगत्वङ्मण्डितांसकाः ।। ४२.७० ।।

स्वरैः षोडशभिः क्लृप्त वदनाः प्रणवान्तराः।

कचवर्गोद्भवैर्वर्णैः पञ्चावयवपाणयः ।। ४२.७१ ।।

पवर्गदक्षचरणा वामपादास्तवर्गतः।

आतरन्त्यन्तवर्णाश्च येषां कुक्षिद्वयात्मकौ ।। ४२.७२ ।।

नाभिनिद्राः कान्तपृष्ठा मोदरा यरलवोत्कचाः।

अग्निदक्षांशरुचिरा धराग्रीवा भृतासकाः ।। ४२.७३ ।।

अन्तस्थसन्धिसंस्थाना वैखरीवाग्विजृम्भिताः।

अपश्यन्मथुरामेषां हृदयाम्भोजकल्पिताम् ।। ४२.७४ ।।

हरेर्भगवतः साक्षादाविर्भावस्थली हि सा।

काशीमपश्यद्भ्रूमध्ये मायामाधारसंस्थिताम् ।। ४२.७५ ।।

लिङ्गदेशे ततः काञ्चीमवन्तीं नाभिमण्डले ।

कण्ठस्थां द्वारकामेषां प्रयागं प्राणगं तथा ।। ४२.७६ ।।

सव्यापसव्ययोस्तेषां गङ्गाऽपि यमुना नदी ।

मध्ये सरस्वती साक्षाद्गयाक्षेत्रं तथानने ।। ४२.७७ ।।

हनुग्रीवामध्यगतं प्रभासक्षेत्रमुत्तमम्।

बदर्य्याश्रममेतेषां ब्रह्मरन्ध्रे ददर्श ह ।। ४२.७८ ।।

पौण्ड्रवर्धननेपालपीठं नयनयोर्युगे।

पीठं पूर्णगिरिंनाम ललाटे समदृश्यत ।। ४२.७९ ।।

कण्ठे च मथुरापीठं काञ्चीपीठं कटिस्थितम्।

जालन्धरं तथा पीठं स्तनदेशेष्वदृश्यत ।। ४२.८० ।।

भृगुपीठं कर्णदेशे ह्ययोध्यां नासिकापुटे।

ब्रह्मरन्ध्रे स्थितं ब्राह्यं शैवं सीमन्तसीमनि ।। ४२.८१ ।।

शाक्तं जिह्वाग्र धिषणं वैष्णवं हृदयाम्बुजे।
सौरं चक्षुःप्रदेशस्थं बौद्धञ्छायासु सङ्गतम् ।। ४२.८२ ।।
सौत्रामणिं कण्ठदेशे पशुबन्धमथोरसि।
वाजपेयं कटितटे ह्यग्निहोत्रं तथानने ।। ४२.८३ ।।
अश्वमेधं कटितटे नरमेधमथोदरे।
राजसूयं शिरोदेशे आवसथ्यं तथाऽधरे ।। ४२.८४ ।।
ऊर्द्ध्वोष्ठे दक्षिणाग्निञ्च गार्हपत्यं मुखान्तरे।
हव्यं श्रुतौ मन्त्रभेदांस्तथा रोमस्ववस्थितान्।
भृत्यैरिव महाराजं पुराणैर्न्यायमिश्रितैः ।। ४२.८५ ।।
संहिताभिश्च तन्त्रैश्च पृथक्पृथगुपासितान्।
कर्म ज्ञानोपासनाभिर्जनानुग्रहकारकान् ।। ४२.८६ ।।
दृष्ट्वा सुविस्मितमना मुनिः कृष्णो बभूव तान् ।
ब्रह्मतेजोमयान्दिव्यांस्तपतोऽर्कानिवच्युतान्।
ज्लतोऽग्नी निवोदर्कान्कोटीन्दुसमदर्शनान् ।। ४२.८७ ।।
ववन्दे सहसोत्थाय दण्डवत्पतितो मुनिः।
कृतार्थोऽहं कृतार्थोऽहं कृतार्थोऽहमितीरयन् ।। ४२.८८ ।।
अद्य मे सफलं जन्म अद्य मे सफलं मनः।
अद्य मे सफलञ्चायुर्यद्भवन्तोऽक्षिगोचराः ।। ४२.८९ ।।
अलौकिकंलौकिकञ्च यत् किञ्चिदपि विद्यते।
न तद्वोऽविदितं वेद्यं भूत भव्यं भवच्च यत् ।। ४२.९० ।।
न प्रवृत्तिफला यूयं दर्शयन्तोऽपि तान्सदा।
यदृच्छाकरसङ्कोचविधानायेह रागिणाम् ।। ४२.९१ ।।
प्रपञ्चस्यापि मिथ्यात्वे ब्रह्मत्वे वा निधीतरौ।
न मृषारागविषयौ तत्सङ्कोचविधिक्षयौ ।। ४२.९२ ।।
अतो लोकहितैर्नूनं परमार्थनिरूपणे।
स्वोक्ताः स्वर्गादिविषयाः नश्वरा इति निन्दिताः ।। ४२.९३ ।।
अधिकारिविभेदेन कर्मज्ञानोपदेशतः।
त्रातं सर्वं जगन्नूनं शब्दब्रह्मात्ममूर्त्तिभिः ।। ४२.९४ ।।
अतोऽहं प्रष्टुमिच्छमि भवन्तश्चेत्कृपालवः ।
कर्मणां फलमादिष्टं सर्गः कामैकचेतसाम् ।। ४२.९५ ।।
ईशार्पितधियां पुंसां कृतस्यापि च कर्मणः।
चित्तशुद्धिस्ततो ज्ञानं मोक्षश्च तदनन्तरम् ।। ४२.९६ ।।
मोक्षो ब्रह्मैक्यमित्येवं सच्चिदानन्दमेव यत्।

सर्वं समाप्यते तस्मिञ्ज्ञाते यद्धि कृताकृतम् ।। ४२.९७ ।।
यन्निःसङ्गं चिदाकाशं ज्ञानरूपमसंवृतम्।
निरीहमचलं शुद्धमगुणं व्यापकं स्मृतम् ।। ४२.९८ ।।
विकारेषु विनश्यत्सु निर्विकारं न नश्यति।
यथान्धतमसा व्याप्तलोकस्य रविरोजसा ।। ४२.९९ ।।
लोहस्येव मणिस्तद्वदरणिश्चानले यथा।
यदाभासेन सा सत्तां प्रतिपद्य विजृम्भते ।। ४२.१०० ।।
जीवेश्वरादिरूपेण विश्वाकारेण चाप्यहो।
तस्यामपि प्रलीनायां कूटस्थञ्च यदेकलम् ।। ४२.१०१ ।।
भवद्भिरेवं निर्णीतं तत्तथैव न संशयः।
तथापि मम जिज्ञासा वर्त्तते केवलं हृदि ।। ४२.१०२ ।।
अतोऽपि परमं किञ्चिद्वर्त्तते किल वा न वा।
तद्वदन्तु महाभागा भवन्तस्तत्त्वदर्शनाः ।। ४२.१०३ ।।
यच्छ्रवः फलमेवेह जनुषो मे कृतार्थता।
एवं ब्रुवन्तमनघं व्यासं सत्यवतीसुतम्।
साधु साध्विति सङ्कीर्त्य प्रत्यूचु र्निगमा वचः ।। ४२.१०४ ।।
वेदा ऊचुः ।।
साधु साधु महाप्राज्ञा विष्णुरात्मा शरीरिणाम्।
अजोऽपि जन्म सम्पद्य लोकानुग्रहमीहसे ।। ४२.१०५ ।।
अन्यथा ते न घटते संसारकर्म्मबन्दनम्।
अस्पृष्टो मायया देव्या कदाचिज्ज्ञानगूहया ।। ४२.१०६ ।।
बिभर्षि स्वेच्छया रूपं स्वेच्छयैव निगूहसे।
अस्मत्सम्मत एवार्थो भवता सम्प्रदर्शितः ।। ४२.१०७ ।।
पुराणेष्वितिहासेषु सूत्रेष्वपि च नैकधा।
अक्षरं ब्रह्म परमं सर्वकारणकारणम् ।। ४२.१०८ ।।
तस्यात्मनोऽप्यात्म भावतया पुष्पस्य गन्धवत्।
रसवद्वा स्थितं रूपमवेहि परमं हि तत् ।। ४२.१०९ ।।
अनुभूतं तदस्माभिर्जाते प्राकृतिके लये।
अक्षरात्परतस्तस्माद्यत्परं केवलो रसः ।
न च तत्र वयं शक्ताः शब्दातीते तदात्मकाः ।। ४२.११० ।।
इति श्रीमहापुराणे वायुप्रोक्ते व्याससंशयापनोदनं नाम द्विचत्वारिंशोऽध्यायः ।। ४२ ।।

।।वायुरुवाच।।
अत ऊर्द्ध्वं प्रवक्ष्यामि गयामाहात्म्यमुत्तमम्।
यच्छ्रुत्वा सर्व्वपापेभ्यो मुच्यते नात्रसंशयः ।। ४३.१ ।।

।।सूत उवाच।।
सनकाद्यैर्म्महाभागैर्देवर्षिः स च नारदः।
सनत्कुमारं पप्रच्छ प्रणम्य विधिपूर्व्वकम् ।। ४३.२ ।।

नारद उवाच।।
सनत्कुमार मे ब्रूहि तीर्थं तीर्थोत्तमोत्तमम्।
तारकं सर्वभूतानां पठतां श्रृण्वतां तथा ।। ४३.३ ।।

सनत्कुमार उवाच।।
वक्ष्ये तीर्थवरं पुण्यं श्राद्धादौ सर्वतारकम्।
गयातीर्थं सर्वदेशे तीर्थेभ्योऽप्यधिकं श्रृणु ।। ४३.४ ।।

गयासुरस्तपस्तेपे ब्रह्मणा क्रतवेऽर्थितः।
प्राप्तस्य तस्य शिरसि शिलां धर्मो ह्यधारयत् ।। ४३.५ ।।

तत्र ब्रह्माऽकरोद्यागं स्थितश्चापि गदाधरः।
फल्गुतीर्थादिरूपेण निश्चलार्थमहर्निशम्।
गयासुरस्य विप्रेन्द्रब्रह्माद्यैर्दैवतैः सह ।। ४३.६ ।।

कृतयज्ञो ददौ ब्रह्मा ब्राह्मणेभ्यो गृहादिकम्।
स्वेतकल्पे तु वाराहे गयायागमकारयत् ।। ४३.७ ।।

गयानाम्ना गया ख्याता क्षेत्रं ब्रह्नमभिकांक्षितम्।
कांक्षन्ति पितरः पुत्रान्नरकाद्भयभीरवः ।। ४३.८ ।।

गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति।
गयाप्राप्तं सुतं दृष्ट्वा पितृणामुत्सवो भवेत्।
पद्भ्यामपि जलं स्पृष्ट्वा सोऽस्मभ्यं किं न दास्यति ।। ४३.९ ।।

गयां गत्वान्नदाता यः पितरस्तेन पुत्रिणः ।
पक्षत्रयनिवासी च पुनात्यासप्तमं कुलम्।
नो चेत्पञ्चदशाहं वा सप्तरात्रिं त्रिरात्रिकम् ।। ४३.१० ।।

महाकल्पकृतं पापं गयां प्राप्य विनश्यति।
पिण्डं दद्याच्च पित्रादेरात्मनोऽपि तिलैर्विना ।। ४३.११ ।।

ब्रह्महत्या सुरापानं स्तेयं गुर्व्वङ्गनागमः।

पापंतत्सङ्गजं सर्व्वं गयाश्राद्धाद्विनश्यति ।। ४३.१२ ।।

आत्मजोऽप्यन्यजो वापि गयाभूमौ यदा तदा।
यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम् ।। ४३.१३ ।।

ब्रह्मज्ञानं गयाश्राद्धं गोगृहे मरणं तथा।
वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्व्विधा ।। ४३.१४ ।।

ब्रह्मज्ञानेन किं कार्य्यं गोगृहे मरणेन किम्।
वासेन किं कुरुक्षेत्रे यदि पुत्रो गयां व्रजेत् ।। ४३.१५ ।।

गयायां सर्व्वकालेषु पिण्डं दद्याद्विचक्षणः।
अधिमासे जन्मदिने चास्तेऽपि गुरुशुक्रयोः ।। ४३.१६ ।।

न त्यक्तव्यं गयाश्राद्धं सिंहस्थेऽपि बृहस्पतौ।
तथा दैवप्रमादेन प्रहतेषु व्रणेषु च।
पुनः कर्म्माधिकारी च श्राद्धकृद्ब्रह्मलोकभाक् ।। ४३.१७ ।।

सकृद्गयाभिगमनं सकृत्पिण्डस्य पातनम्।
दुर्लभं किं पुनर्न्नित्यमस्मिन्नेव व्यवस्थितिः ।। ४३.१८ ।।

प्रमादान्म्रियते क्षेत्रे ब्रह्मादेर्मुक्तिदायके।
ब्रह्मज्ञानाद्यथा मुक्तिर्लभ्यते नात्र संशयः ।। ४३.१९ ।।

कीटकादिमृतानाञ्च पितृणां तारणाय च।
तस्मात्सर्व्वप्रयत्नेन कर्त्तव्यं सुविचक्षणैः ।। ४३.२० ।।

ब्रह्मप्रकल्पितान्विप्रान्हव्यकव्यादिनाऽर्च्चयेत्।
तैस्तुष्टैस्तोषिताः सर्व्वाः पितृभिः सह देवताः ।। ४३.२१ ।।

मुण्डनं चोपवासश्च सर्व्वतीर्थेष्वयं विधिः।
वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ।। ४३.२२ ।।

दण्डंप्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः।
दण्डं न्यस्ता विष्णुपदे पितृभिः सह मुच्यते ।। ४३.२३ ।।

न दण्डी किल्बिषं धत्ते पुण्यं वा परमार्थतः।
अतः सर्व्वां क्रियां त्यक्त्वा विष्णुं ध्यायति भावुकः ।। ४३.२४ ।।

संन्यसेत्सर्व्वकर्म्माणि वेदमेकं न संन्यसेत्।
मुण्डं कुर्य्याच्च पूर्व्वेऽस्मिन्पश्चिमे दक्षिणोत्तरे ।। ४३.२५ ।।

सार्द्धं क्रोशद्वयं मानं गयेति ब्रह्मणेरितम्।
पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ।। ४३.२६ ।।

तन्मध्ये सर्व्वतीर्थानि त्रैलोक्ये यानि सन्ति वै।
श्राद्धकृद्यो गयाक्षेत्रे पितृणामनृणो हि सः ।। ४३.२७ ।।

शिरसि श्राद्धकृद्यस्तु कुलानां शतमुद्धरेत्।
गृहाच्चलितमात्रेण गयायां गमनं प्रति।
स्वर्गा रोहणसोपानं पितृणाञ्च पदे पदे ।। ४३.२८ ।।

पदे पदेऽश्वमेधस्य यत्फलं गच्छतो गयाम्।
तत्फलञ्च भवेन्नूनं समग्रं नात्र संशयः ।। ४३.२९ ।।

पायसेनापि चरुणा सक्तुना पिष्टकेन वा।
तण्डुलैः फलमूलाद्यैर्गयायां पिण्डपातनम् ।। ४३.३० ।।

तिलकल्केन खण्डेन गुडेन सघृतेन वा।
केवलेनैव दध्ना वा ऊर्जेन मधुनाऽथ वा ।। ४३.३१ ।।

पिण्याकं सघृतं खण्डं पितृभ्योऽक्षयमित्युत।
इज्यते वार्त्तवं भोज्यं हविष्यान्नं मुनीरितम् ।। ४३.३२ ।।

एकतः सर्व्ववस्तूनि रसवन्ति मधूनि हि।
स्मृत्वा गदाधराङ्घ्र्यब्जं फल्गुतीर्थाम्बु चैकतः ।। ४३.३३ ।।

पिण्डासनं पिण्डदानं पुनः प्रत्यवनेजनम्।
दक्षिणा चान्न सङ्कल्पस्तीर्थश्राद्धेष्वयं विधिः ।। ४३.३४ ।।

नावाहनं न दिग्बन्धो न दोषो दृष्टिसम्भवः।
सकारुण्येन कर्त्तव्यं तीर्थश्राद्धं विचक्षणैः ।। ४३.३५ ।।

अन्यत्रावाहिताः काले पितरो यान्त्यमुं प्रति।
तीर्थे सदा वसन्त्येते तस्मादावाहनं न हि ।। ४३.३६ ।।

तीर्थश्राद्धं प्रयच्छद्भिः पुरुषैः फलकाङ्क्षिभिः।
कामं क्रोधं तथा लोभं त्यक्त्वा कार्य्या क्रियाऽनिशम् ।। ४३.३७ ।।

ब्रह्मचार्य्यकभोजी च भूशायी सत्यवाक्छुचिः।
सर्व्वभूतहिते रक्तः स तीर्थफलमश्नुते ।। ४३.३८ ।।

तीर्थान्यनुसरन्धीरः पाषण्डं पूर्व्वतस्त्यजेत्।
पाषण्ढः स च विज्ञेयो यो भवेत्कामकारतः ।। ४३.३९ ।।

तीर्थेषु ये नरा धीराः कर्म्म कुर्व्वन्ति तद्घताः।
यथा ब्रह्मविदो वेद्यं वस्तु चानन्यचेतसः।
प्रविशन्ति परेशाख्यं ब्रह्म ब्रह्मपरायणाः ।। ४३.४० ।।

यास्ते वैतरणी नाम नदी त्रैलोक्यविश्रुता।
साऽवतीर्णा गयाक्षेत्रे पितॄणां तारणाय वै।
स्नातो गोदो वैतरण्यां त्रिःसप्तकुलमुद्धरेत् ।। ४३.४१ ।।

तथाऽक्षयवटं गत्वा विप्रान्सन्तोषयिष्यति।
ब्रह्मप्रकल्पितान्विप्रान्हव्यकव्यादिनाऽर्च्चयेत्।
तैस्तुष्टैस्तोषिताः सर्व्वाः पितृभिः सह देवताः ।। ४३.४२ ।।

गयायां न हि तत्स्थानं यत्र तीर्थं न विद्यते।
सान्निध्यं सर्व्वतीर्थानां गयातीर्थं ततो वरम् ।। ४३.४३ ।।

मीने मेषे स्थिते सूर्य्ये कन्यायां कार्मुके घटे।
दुर्ल्लभं त्रिषु लोकेषु गयायां पिण्डपातनम् ।। ४३.४४ ।।

मकरे वर्त्तमाने च ग्रहणे चन्द्रसूर्य्ययोः ।
दुर्ल्लभं त्रिषु लोकेषु गयाश्राद्धं सुदुर्ल्लभम् ।। ४३.४५ ।।

गयायां पिण्डदानेन यत्फलं लभते नरः।
न तच्छक्यं मया वक्तुं कल्पकोटिशतैरपि ।। ४३.४६ ।।

इति श्रीमहापुराणे वायुप्रोक्ते गयामाहात्म्यं नाम त्रिचत्वारिंशोऽद्यायः ।। ४३ ।।*

नारद उवाच।।

गयासुरः कथं जातः किंप्रभावः किमात्मकः ।
तपस्तप्तं कथं तेन कथं देहपवित्रता ।। ४४.१ ।।

सनत्कुमार उवाच।।

विष्णोर्नाभ्यम्बुजाज्जातो ब्रह्मा लोकपितामहः।
प्रजाः ससर्ज संप्रोक्तः पूर्व्वं देवेन विष्णुना ।। ४४.२ ।।

आसुरेणैव भावेन ह्यसुरानसृजत्पुरा।
सौमनस्येन भावेन देवान्सुमनसोऽसृजत् ।। ४४.३ ।।

गयासुरोऽसुराणाञ्च महाबलपराक्रमः।
योजनानां सपादञ्च शतं तस्योच्छ्रयः स्मृतः ।। ४४.४ ।।

स्थूलः षष्टिर्योजनानां श्रेष्ठोऽसौ वैष्णवः स्मृतः।
कोलाहलगिरिवरे तपस्तेपे सुदारुणम् ।। ४४.५ ।।

बहुवर्षसहस्राणि निरुच्छ्वासं स्थिरोऽभवत्।
तत्तपस्तापिता देवाः संक्षोभं परमं गताः ।। ४४.६ ।।

ब्रह्मलोकं गता देवाः प्रोचुस्तेऽथ पितामहम्।
गयासुराद्रक्ष देव ब्रह्मा देवांस्ततोऽब्रवीत् ।। ४४.७ ।।

व्रजामः शङ्करं देवा ब्रह्माद्याश्च गताः शिवम्।
कैलासे चाब्रुवन्नत्वा रक्ष देव महासुरात् ।। ४४.८ ।।

ब्रह्माद्यानब्रवीच्छम्भुर्व्रजामः शरणं हरिम्।
क्षीराब्धौ देवदेवेशः स नः श्रेयो विधास्यति।
ब्रह्मा महेश्वरो देवा विष्णुं नत्वा प्रतुष्टुवुः ।। ४४.९ ।।

देवा ऊचुः ।।

ॐ नमो विष्णवो भर्त्रे सर्व्वेषां प्रभविष्णवे।
रोचिष्णवे जिष्णवे च राक्षसादिग्रसिष्णवे ।। ४४.१० ।।

धरिष्णवेऽखिलस्यास्य योगिनां पारयिष्णवे ।
वर्द्धिष्णवे ह्यनन्ताय नमो भ्राजिष्णवे नमः ।। ४४.११ ।।

सनत्कुमार उवाच।।
एवं स्तुतो वासुदेवः सुराणां दर्शनं ददौ।
किमर्थमागता देवा विष्णुनोक्तास्तमब्रुवन् ।। ४४.१२ ।।

गयासुरभयाद्देव रक्षास्मानब्रवीद्धरिम्।
ब्रह्माद्या यान्तु तं दैत्यमागमिष्याम्यहं ततः ।। ४४.१३ ।।

केशवे गरुडारूढो वरं दातुं गयासुरे।
सर्व्वे स्वं स्वं समास्थाय ययुर्वाहनमुत्तमम् ।। ४४.१४ ।।

ऊचुस्तं वासुदेवाद्याः किमर्थं तप्यते त्वया।
सन्तुष्टाः स्वागताः सर्वे वरं ब्रूहि गयासुर ।। ४४.१५ ।।

गयासुर उवाच।।
यदितुष्टाः स्थ मे देवा ब्रह्मविष्णुमहेश्वराः।
सर्व्वदेवद्विजातिभ्यो यज्ञतीर्थशिलोच्चयात् ।। ४४.१६ ।।

देवेभ्योऽतिपवित्रोऽहमृषिभ्योऽपि शिवाव्ययात्।
मन्त्रेभ्यो देवदेवेभ्यो योगिभ्यश्चापि सर्व्वशः ।। ४४.१७ ।।

न्यासिभ्यश्चापि कर्म्मिभ्यो धर्म्मिभ्यश्च तथा पुनः।
ज्ञातिभ्योऽतिपवित्रेभ्यः पवित्रः स्यां सदा सुराः ।। ४४.१८ ।।

पवित्रमस्तु तं देवा दैत्यमुक्त्वा ययुर्दिवम्।
दैत्यं दृष्ट्वा च स्पृष्ट्वा च सर्व्वे हरिपुरं ययुः ।। ४४.१९ ।।

शून्यं लोकत्रयं जातं शून्या यमपुरी ह्यभूत्।
यम इन्द्रादिभिः सार्द्धं ब्रह्मलोकं ततोऽगमत् ।। ४४.२० ।।

ब्रह्माणमूचिरे देवा गयासुरविलोपिताः।
त्वया दत्तोऽधिकारो वै गृहाण त्वं पितामह ।। ४४.२१ ।।

ब्रह्माब्रवीत्ततो देवान्व्रजामो विष्णुमव्ययम्।
ब्रह्मादयोऽब्रुवन्विष्णुं त्वया दत्तवरेऽसुरे ।। ४४.२२ ।।

तद्दर्शनाद्ययुः स्वर्गं शून्यं लोक त्रयं ह्यभूत्।

देवैरुक्तो वासुदेवो ब्रह्माणं स वचोऽब्रवीत् ।। ४४.२३ ।।

गत्वासुरं प्रार्थयस्व यज्ञार्थं देहि देहकम्।
विष्णूक्तः ससुरो ब्रह्मा गत्वाऽपश्यन्महासुरम् ।। ४४.२४ ।।

गयासुरोऽब्रवीद्दृष्ट्वा ब्रह्माणं त्रिदशैः सहः।
संपूज्योत्थाय विधिवत्प्रण्तः श्रद्धयान्वितः ।। ४४.२५ ।।

।।गयासुर उवाच।।
अद्य मे सफलं जन्म अद्य मे सफलं तपः।
यदागतोऽतिथिर्ब्रह्मा सर्व्वं प्राप्तं मयाद्य वै ।। ४४.२६ ।।

योगिन्योगाङ्गवित्सर्व्वलोकस्वामिन्पितर्गुरो।
यदर्थमा गतो ब्रह्मन्स्तत्कार्य्यं करवाण्यहम् ।। ४४.२७ ।।

।।ब्रह्मोवाच।।
पृथिव्यां यानि तीर्थानि दृष्टानि भ्रमता मया।
यज्ञार्थं न तु ते तानि पवित्राणि शरीरतः ।। ४४.२८ ।।

त्वया देहे पवित्रत्वं प्राप्तं विष्णुप्रसादतः।
अतः पवित्रं देहं त्वं यज्ञार्थं देहिमेऽसुर ।। ४४.२९ ।।

।।गयासुर उवाच।।
धन्योऽहं देव देवेश यद्देहं प्रार्थ्यते त्वया।
पितृवंशः कृतार्थो मे देहे यागं करोषि चेत् ।। ४४.३० ।।

त्वयैवोत्पादितो देहः पवित्रस्तु त्वया कृतः।
सर्व्वेषामुपकाराय यागोऽवश्यं भवत्विति ।। ४४.३१ ।।

इत्युक्त्वा सोऽपतद्भूमौ श्वेतकल्पे गयासुरः।
नैरृतीं दिशमाश्रित्य तदा कोलाहले गिरौ ।। ४४.३२ ।।

शिरः कृत्वोत्तरे दैत्यः पादौ कृत्वा तु दक्षिणे।
ब्रह्मा सम्भृतसम्भारो मानसानृत्विजोऽसृजत् ।। ४४.३३ ।।

अग्निशर्माणम्मृतं शौनकं याञ्जलिं मृदुम्।
कुमुथिं वेद कौण्डिल्यं हारीतं काश्यपं कृपम् ।। ४४.३४ ।।

गर्गं कौशिकवासिष्ठौ मुनिं भार्गवमव्ययम्।
वृद्धं पाराशरं कण्वं माण्डव्यं श्रुतिकेवलम् ।। ४४.३५ ।।

श्वेतं सुतालं दमनं सुहोत्रं कङ्कमेव च।
लौकाक्षिञ्च महाबाहुं जैगीषव्यं तथैव च ।। ४४.३६ ।।

दधिपञ्चमुखं विप्रमृषभं कर्कमेव च।
कात्यायनं गोभिलञ्च मुनिमुग्रमगाव्रतम् ।। ४४.३७ ।।

सुपालकं गौतमञ्च तथा वेदशिरोव्रतम्।
जटामालिनमव्यग्रं चाटुहासञ्च दारुणम् ।। ४४.३८ ।।

आत्रेयं चाप्यङ्गिरसमौपमन्युं महा व्रतम्।
गोकर्णञ्च गुहावासं शिखण्डिनमुमाव्रतम् ।। ४४.३९ ।।

एतानन्यांश्च विप्रेन्द्रान्वेधा लोकपितामहः ।
परिकल्प्याकरोद्यागं गयासुरशरीरके ।। ४४.४० ।।

अग्निशर्मापि पञ्चाग्नीन्मुखादेतानथासृजत्।
दक्षिणाग्निं गार्हपत्याहवनीयौ तपोऽव्ययः ।। ४४.४१ ।।

सत्यावसथ्यौ देवर्षे येषु यज्ञाः प्रतिष्ठिताः।
यज्ञस्य च प्रतिष्ठार्थं विप्रेभ्यो दक्षिणां ददौ ।। ४४.४२ ।।

हुत्वा पूर्णाहुतिं ब्रह्ना स्नात्वा चावभृथेन तु।
यज्ञयूपं सुरैः सार्द्धं समानीय व्यरोपयत् ।। ४४.४३ ।।

ब्रह्मणः सहसा श्रेष्ठे सरस्येवाश्रितं शुभम्।
चलितश्चकितो ब्रह्मा धर्म्मराजमभाषत ।। ४४.४४ ।।

जाता गृहे तव शिला समानीयाविचारयन्।
दैत्यस्य शीघ्रं शिरसि तां धारय ममाज्ञया ।। ४४.४५ ।।

निश्चलार्थं यमः श्रुत्वा धारयन्मस्तके शिलाम्।
शिलायां धारितायान्तु सशिलश्चासुरोऽचलत् ।। ४४.४६ ।।

देवानूचेऽथ रुद्रादीञ्छिलायां निश्चलाः किल।
तिष्ठन्तु देवाः सकलास्तथेत्युक्त्वा च ते स्थिताः ।। ४४.४७ ।।

देवाः पादैर्लक्षयित्वा तथापि चलितोऽसुरः।
ब्रह्माथ व्याकुलो विष्णुं गतः क्षीराब्धिशायिनम्।
तुष्टाव प्रणतो भूत्वा नत्वा चादृत्य तं प्रभुम् ।। ४४.४८ ।।

।.ब्रह्मोवाच।।
ब्रह्माण्डस्य पते नाथ नमामि जगतां पतिम्।
कतिं कीर्त्तिमतां नृणां बुक्तिमुक्तिप्रदायकम् ।। ४४.४९ ।।

विष्वक्सेनोऽब्रवीद्विष्णुं देव त्वां स्तौति पद्मजः।
हरिराहानय त्वं तं विष्णूक्तः स तमानयत्।
अजमूचे हरिः कस्मादागतोऽसि वदस्व तत् ।। ४४.५० ।।

।।ब्रह्मोवाच।।
देवदेव कृते योगे प्रचचाल गयासुरः।
शिलायां देवरूपिण्यां न्यस्तायां तस्य मस्तके ।। ४४.५१ ।।

रुद्रादिषु च देवेषु संस्थितेष्वसुरोऽचलत्।
इदानीं निश्चलार्थं हि प्रसादं कुरु माधव ।। ४४.५२ ।।

ब्रह्मणो वचनं श्रुत्वा ह्याकृष्य स्वशरीरतः ।
मूर्त्तिं ददौ निश्चलार्थं ब्रह्मणे भगवान्हरिः ।। ४४.५३ ।।

आनीय मूर्त्तिं ब्रह्मापि शिलायां समधारयत्।
तथापि चलितं वीक्ष्य पुनर्देवमथाह्वयत् ।। ४४.५४ ।।

आगत्य विष्णुः क्षीराब्धेः शिलायां संस्थितोऽभवत्।
जनार्द्दनाभिधानेन पुण्डरीकेति नामतः।
शिलायांनिश्चलार्थं हि स्वयमादिगदाधरः ।। ४४.५५ ।।

निश्चलार्थं पञ्चधासीच्छिलायां प्रपितापहः।
पितामहोऽथ फल्ग्वीशः केदारः कनकेश्वरः ।। ४४.५६ ।।

ब्रह्मा स्थितः स्वयं तत्र गजरूपी विनायकः।

गयादित्यश्चोत्तरार्को दक्षिणार्कस्त्रिधा रविः ।। ४४.५७ ।।

लक्ष्मीः सीताभिधानेन गौरी च मङ्गलाह्वया।
गायत्री चैव सावित्री त्रिसन्ध्या च सरस्वती ।। ४४.५८ ।।

इन्द्रो बृहस्पतिः पूषा वसवोऽष्टौ महाबलाः।
विश्वेदेवाश्चाश्विनेयौ मारुतो विश्वनायकः।
सयक्षोरगगन्धर्व्वास्तस्थुर्देवाः स्वशाक्तिभिः ।। ४४.५९ ।।

आद्यया गदया चासौ यस्माद्दैत्यः स्थिरीकृतः।
स्थित इत्येव हरिणा तस्मादादिगदाधरः ।। ४४.६० ।।

ऊचे गयासुरो देवान्किमर्थं वञ्चितो ह्यहम्।
यज्ञार्थं ब्रह्मणे दत्तं शरीरममलं मया।
विष्णोर्वचनमात्रेण किं न स्यां निश्चलो ह्यहम् ।। ४४.६१ ।।

यत्सुरैः पीडितोऽत्यर्थं गदया हरिणा तथा।
पीडितो यद्यहं देवाः प्रसन्नाः सन्तु सर्वदा ।। ४४.६२ ।।

गदाधरादयस्तुष्टाः प्रोचुः सार्द्धं गयासुरम्।
वरं ब्रूहि प्रसन्नाः स्मो देवानूचे गयासुरः ।। ४४.६३ ।।

यावत्पृथ्वी पर्वताश्च यावच्चन्द्रार्कतारकाः।
तावच्छिलायां तिष्ठन्तु ब्रह्मविष्णुमहेश्वराः।
अन्ये च सकला देवा मन्नाम्ना क्षेत्रमस्तु वै ।। ४४.६४ ।।

पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ।
तन्मध्ये सर्वतीर्थानि प्रयच्छन्तु हितं नृणाम् ।। ४४.६५ ।।

स्नानादितर्पणं कृत्वा पिण्डदानात्फलाधिकम्।
महात्मा वै सहस्रञ्च कुलानां चोद्धरेन्नरः ।। ४४.६६ ।।

व्यक्ताव्यक्तस्वरूपेण यूयं तिष्ठत सर्वदा।
गदाधरः स्वयं लोकाद्भूयात्सर्वाघनाशनात् ।। ४४.६७ ।।

श्राद्धं सपिण्डकं येषां ब्रह्मलोकं प्रयान्तु ते।
ब्रह्महत्यादिकं पापं विनश्यतु च सेविनाम् ।। ४४.६८ ।।

नैमिषं पुष्करं गङ्गा प्रयागश्चाविमुक्तिकम्।
एतान्यन्यानि तीर्थानि दिवि भुव्यन्तरिक्षतः।
समायान्तु सदा नृणां प्रयच्छन्तु हितं सुराः ।। ४४.६९ ।।

किं बहूक्त्या सुरगणा युष्मास्वेकापि देवता।
चेन्न तिष्ठेदहं चापि समयः प्रतिपाल्यताम् ।। ४४.७० ।।

गयासुरवचः श्रुत्वा प्रोचुर्विष्ण्वादयःसुराः।
त्वया यत्प्रार्थितं सर्व्वं तद्भविष्यत्यसंशयम् ।। ४४.७१ ।।

अस्मत्पादानर्च्चयित्वा यास्यन्ति परमां गतिम्।
देवैर्दत्तवरो दैत्यो हर्षितो निश्चलोऽभवत् ।। ४४.७२ ।।

स्थितेषु चैव देवेषु ब्राह्मणेभ्यो ददावजः।
ग्रामांश्च पञ्चपञ्चाशत्पञ्चक्रोशीं गयां तथा।
गृहान्कृत्वा ददौ दिव्यान्सर्व्वोपस्करसंयुतान् ।। ४४.७३ ।।

कामधेनुं कल्पवृक्षं पारिजातादिकांस्तरून्।
महानदीं क्षीरवहां घृतकुल्यास्तथैव च ।। ४४.७४ ।।

मधुश्रवां मधुकुल्यां दध्याद्याढ्यसरांसि च।
सुवर्णदीर्घिकां चैव बहूनन्नादिपर्व्वतान् ।। ४४.७५ ।।

भक्ष्यभोज्यफलादींश्च सर्व्वं ब्रह्मा सृजन्ददौ।
न याचयध्वं विप्रेन्द्रा अन्यानुक्त्वा ददावजः ।। ४४.७६ ।।

दत्त्वा ययौ ब्रह्मलोकं नत्वा ह्यादिगदाधरम् ।
धर्म्मारण्ये तत्र धर्म्मं याजयित्वा ययाचिरे ।। ४४.७७ ।।

धर्म्मयागे च लोभाद्वै प्रतिगृह्य धनादिकम्।
ततो ब्रह्मा समागत्य ब्राह्मणांस्ताञ्छशाप ह ।। ४४.७८ ।।

कृतवन्तो यतो लोभं मद्दत्तेष्वखिलेष्वपि।
तस्माद्दृणाधिका यूयं भविष्यन्ति सदा द्विजः ।। ४४.७९ ।।

युष्माकं स्याद्वारिवहा नदी पाषाणपर्व्वताः।

नद्यादयो वारिवहा मृन्मयाश्च यथा गृहाः ।। ४४.८० ।।

कामधेनुः कल्पवृक्षो मल्लोकमुपतिष्ठताम्।
एवं शप्ता ब्रह्मणा ते प्रार्थयन्तोऽब्रुवन्नजम् ।। ४४.८१ ।।

त्वया यद्दत्तमखिलं तत्सर्वं शापतो गतम्।
जीवनार्थं प्रसादं नो भगवान्कर्त्तुमर्हसि ।। ४४.८२ ।।

तच्छ्रुत्वा ब्राह्मणान्ब्रह्मा प्रोवाचेदं दयान्वितः।
तीर्थोपजीविका यूयमाचन्द्रार्कं भविष्यथ ।। ४४.८३ ।।

लोकाः पुण्या गयायां ये श्राद्धिनो ब्रह्मलोकगाः।
युष्मान्ये पूजयिष्यन्ति तैरहं पूजितः सदा ।। ४४.८४ ।।

आक्रान्तं दैत्यजठरं धर्म्मेण विरजाद्रिणा।
नाभिकूपसमीपे तु देवी या विरजा स्थिता।
तत्र पिण्डादिकं कृत्वा त्रिःसप्तकुलमुद्धरेत् ।। ४४.८५ ।।

महेन्द्रगिरिणा तस्य कृतौ पादौ सुनिश्चलौ।
iतत्र पिण्डादिकृत्सप्त कुलान्युद्धरते नरः ।। ४४.८६ ।।

इति श्रीमहापुराणे वायुप्रोक्ते गयामाहात्म्यं नाम चतुश्चत्वारिंशोऽध्यायः ।। ४४ ।। * ।। *

।।नारद उवाच।।

कथं शिला समुत्पन्ना ययाक्रान्तो गयासुरः ।
किं रूपं किं च माहात्म्यं तस्याः किं वद नाम च ।। ४५.१ ।।

।.सनत्कुमार उवाच।।

आसीद्धर्म्मो महातेजाः सर्व्वविज्ञानपारगः।
विश्वरुपा च तत्पत्नी भर्त्तृव्रतपरायणा ।। ४५.२ ।।

तस्यां धर्म्मव्रतायास्तु कन्या धर्म्मव्रता सती।
सर्व्व लक्षणसम्पन्ना लक्ष्मीरिव गुणाधिका ।। ४५.३ ।।

तस्यां ये तु गुणा ह्यासंस्ते तिष्ठन्ति जगत्त्रये।
धर्म्मो धर्म्मव्रतायास्तु त्रिषु लोकेषु मार्गयन् ।। ४५.४ ।।

नानु रूपं वरं लेभे धर्म्मोऽथ वरसिद्धये।
तपः कुरु वरार्थं त्वं तथेत्युक्त्वा वनं ययौ ।। ४५.५ ।।

कन्या सा च तपस्तेपे सर्व्वेषां दुष्करञ्च यत्।
वायुभक्षा श्वेतकल्पे युगानामयुतं पुरा ।। ४५.६ ।।

ब्रह्मणो मानसः पुत्रो मरीचिर्नाम विश्रुतः ।
पर्य्यटन्पृथिवीं सर्व्वां कन्यारत्नं ददर्श सः ।। ४५.७ ।।

रूपयौवनसम्पन्नां परमे तपसि स्थिताम्।
पप्रच्छाथ मरीचिस्तां का त्वं कस्यापि तद्वद ।। ४५.८ ।।

रूपेणानेन मां भीरु विमोहयसि सुव्रते ।
ब्रह्मात्मजोऽहं विख्यातो मरीचिर्व्वेदपारगः ।। ४५.९ ।।

मरीचेर्व्वचनं श्रुत्वा कन्या प्रोवाच तं मुनिम्।
अहं धर्म्मव्रता नाम धर्म्मपुत्री तपोऽन्विता ।। ४५.१० ।।

पतिव्रतार्थं विप्रेन्द्र चरामि परमं तपः।
धर्म्मव्रतां मरीचिस्तामुवाच प्रीतिपूर्व्वकम् ।। ४५.११ ।।

पतिव्रता दर्शनान्मे भविष्यसि शुभव्रते।
पतिव्रतेच्छया पृथ्वीं विचरामि ह्यहर्निशम् ।। ४५.१२ ।।

त्वञ्चेत्पतिव्रता जाता भजे त्वां भज मां वरम्।
लोके न त्वादृशी कन्या मम तुल्यो न ते वरः ।। ४५.१३ ।।

धर्म्मव्रते धर्म्मपत्नी तस्मात्त्वं भव मेऽधुना।

धर्म्मव्रता मुनिं प्राह धर्म्मं याचय सुव्रत ।। ४५.१४ ।।

तच्छ्रुत्वा धर्म्ममगमन्मुनिं धर्मो ददर्श ह।
तेजःपुञ्जं वरं नत्वा आसनार्घ्यादिनार्च्चयत् ।। ४५.१५ ।।

किमर्तमागतः पृष्टो मरीचिर्धर्म्ममब्रवीत्।
कन्यार्थं भ्रमता पृथ्वी दृष्टा ते कन्यका वरा ।
मह्यं कन्याञ्च तां देहि श्रेयस्तव भविष्यति ।। ४५.१६ ।।

अर्घ्यादिना समभ्यर्च्य धर्म्मं प्रोचे तथेति तम्।
धर्म्मव्रतां समानीय दत्तवांस्तां मरीचये ।। ४५.१७ ।।

वरं च दत्तवांस्तस्मै तद्वाक्यं यत्तथा कृतम्।
अग्निहोत्रेण सहितां स्वाश्रमं तां द्विजोऽनयत् ।। ४५.१८ ।।

रेमे मुनिस्तया सार्द्धं यथा विष्णुः श्रिया सह।
पार्व्वत्या च यथा शम्भुः सरस्वत्या यथा ह्यजः ।। ४५.१९ ।।

जज्ञे पुत्रशतं तस्यां मरीचेर्विष्णुनोपमम्।
मरीचिः फलपुष्पार्थं वनं गत्वा समागतः ।। ४५.२० ।।

श्रान्तः कदाचित्तां पत्नीमुवाचेति पतिव्रताम्।
भुक्त्वा तु शयनस्थस्य पादसंवाहनं कुरु ।। ४५.२१ ।।

धर्म्मव्रता तथेत्युक्त्वा शयनस्थस्य सा मुनेः।
पादसंवाहनं चक्रे घृते नाभ्यज्य तत्परा ।। ४५.२२ ।।

निद्रायमाणेऽथ मुनौ ब्रह्मा तं देशमागतः।
इत्येष दृष्ट्वा ब्रह्माणं मनसार्च्चयितुं प्रभुम् ।। ४५.२३ ।।

पादसंवाहनं कुर्य्यां किं पूज्योऽयं जगद्गुरुः।
इत्याकुला समुत्तस्थौ मत्वा सा तं गुरोर्गुरुम् ।। ४५.२४ ।।

अर्घ्यपाद्यादिकं दत्त्वा ब्रह्माणं समपूजयत्।
सत्कृतायान्तु शय्यायां विश्राममकरोदजः ।। ४५.२५ ।।

एतस्मिन्नन्तरे भर्त्ता समुत्तस्थौ च तल्पतः।
धर्म्मव्रतामपश्यन्स विप्रः क्रुद्धः शशाप ताम् ।। ४५.२६ ।।

पादसंवाहनं त्यक्त्वायस्मादाज्ञां विहाय मे ।
गतान्यत्र ततः पापाच्छापदग्धा शिला भव ।। ४५.२७ ।।

भर्त्रा धर्म्मव्रता शप्ता मरीचिं प्राह सा रुषा।
शयाने त्वयि संप्राप्ते ब्रह्मा त्वज्जनको गुरुः ।। ४५.२८ ।।

त्वयोत्थाय हि कर्त्तव्यं स्वगुरोः पूजनं सदा।
मया तु धर्म्मचारिण्या तव कार्य्ये कृते मुने ।। ४५.२९ ।।

अदोषाहं यतः शप्ता तस्माच्छापं ददामि ते।
त्वञ्च शापं महादेवाद्भर्त्तः प्राप्स्यस्यसंशयम् ।। ४५.३० ।।

व्याकुलं तं पतिं दृष्ट्वा व्याकुलागात्प्रजापतिम्।
नत्वा शयानं ब्रह्माणमग्निं प्रज्वाल्य चेन्धनैः ।। ४५.३१ ।।

गार्हपत्ये स्थिता चक्रे तपः परमदुष्करम्।
तथा शप्तो मरीचिश्च तपस्तेपे सुदारुणम् ।। ४५.३२ ।।

पतिव्रतायास्तपसा मरीचेस्तपसा यथा।
इन्द्रादयश्च सन्तप्ता गतास्ते शरणं हरिम् ।। ४५.३३ ।।

ऊचुः क्षीराम्बूदौ सुप्तं सन्तप्तास्तपसा हरे।
पतिव्रतायाश्च मुनेस्त्रैलोक्यं रक्ष केशव ।। ४५.३४ ।।

इन्द्रादीनां वचः श्रुत्वा विष्णुर्धर्म्मव्रतां ययौ।
एतस्मिन्नेव काले तु प्रबुद्धो भगवानजः।
ऊचुर्धर्म्मर्वतां देवा अग्निस्थां तां सकेशवाः ।। ४५.३५ ।।

अग्निमध्ये तपः कर्त्तुं कस्य शक्तिः पतिव्रते।
त्वया कृतं तत्परमं सर्व्वलोकभयङ्करम् ।। ४५.३६ ।।

वरं वरय धर्म्मज्ञे अस्मत्तो यदभीप्सितम्।
विष्ण्वादीनां वचः श्रुत्वा देवान्धर्म्मव्रताब्रवीत् ।। ४५.३७
भर्तृशापमशक्ताहं निवर्त्तयितुमोजसा।
दत्तो मरीचिना शापो मह्यं स ह्यपगच्छतु ।। ४५.३८ ।।

धर्म्मव्रतावचः श्रुत्वा प्रोचुरेतां सुराः पुनः ।
धर्म्मव्रते धर्म्मपुत्रि शापोऽयं परमर्षिणा ।। ४५.३९ ।।

दत्तस्ते न निराकर्त्तुं शक्यो देवद्विजातिभिः।
तस्मादन्यं वरं ब्रूहि यतो धर्म्मस्य संस्थितिः ।। ४५.४० ।।

भवेद्वै त्रिषु लोकेषु वेदोक्तस्य शुभव्रते।
देवानां वचनं श्रुत्वा देवान्धर्म्मव्रताब्रवीत् ।। ४५.४१ ।।

भर्त्तुः शापान्मोचयितुं न शक्ताश्च यदामराः।
मह्यं वरं प्रयच्छध्वमेवंविधमनुत्तमम् ।। ४५.४२ ।।

शिलाहं हि भविष्यामि ब्रह्माण्डे पावनी शुभा।
नदीनदसरस्तीर्थदेवादिभ्योऽतिपावनी ।। ४५.४३ ।।

ऋष्यादिभ्यो मुनुभ्यश्च मुख्यदेवेभ्य एव च।
त्रैलोक्ये यानि लिङ्गानि व्यक्ताव्यक्तात्मकान्यपि।
तानि तिष्ठन्तु मद्देहे तीर्थरूपेण सर्व्वदा ।। ४५.४४ ।।

तीर्थान्यपि च सर्व्वाणि नक्षत्रप्रमुखास्तथा।
तिष्ठन्तु देवाः सकला देव्यश्च मुनयस्तथा ।। ४५.४५ ।।

ब्रह्मा विष्णुश्च रुद्रश्च लक्षयित्वा पदं मयि।
पञ्चाग्नयः कुमाराद्या बहुरुपेण संस्थिताः ।। ४५.४६ ।।

मूर्त्तामूर्त्तस्वरूपेण पदरूपेण देवताः।
शिलायां क्रोशमात्रेण मूर्त्तिरूपाः स्थिता भुवि ।। ४५.४७ ।।

तां दृष्ट्वा सर्व्वलोकश्च महापातकनाशिनीम्।
पूतो धर्म्माधिकारी च श्राद्धकृद्ब्रह्मलोकभाक् ।। ४५.४८ ।।

शिलास्थितेषु तीर्थषु स्नात्वा कृत्वाथ तर्पणम्।
श्राद्धं सपिण्डकं येषां ब्रह्मलोकं प्रयान्तु ते ।। ४५.४९ ।।

गदाधरो दृश्यतीर्थं सर्व्वतीर्थोत्तमोत्तमम्।
स्थास्यन्ति च मरिष्यन्ति यान्तु ब्रह्मपुरीं नराः।
वाराणसी प्रयागश्च पुरुषोत्तमसंज्ञकम् ।। ४५.५० ।।

गङ्गासागरसंज्ञञ्च नित्यं तिष्ठतु फल्गुनि।
गदाधराधिष्ठितं तत्सर्व्वतीर्थोत्तमोत्तमम्।
मुक्तिर्भवेत् पितृणां च मृतानां श्राद्धतः सदा ।। ४५.५१ ।।

जरायुजाण्डजा वापि स्वेदजा वापि चोद्भिदः।
त्यक्त्वा देहं शिलायान्ते यान्तु विष्णुस्वरूपताम् ।। ४५.५२ ।।

यथाच्चिंते हरौ सर्व्वे यज्ञाः पूर्णा भवन्ति हि।
तथा श्राद्धं तर्पणञ्च स्नानं चाक्षयमस्त्विह ।। ४५.५३ ।।

मम देहे सुरेशानां ये जपन्ति श्रुतादिकम्।
अचिरेणापि ते सिद्धाः सिद्धिभाजो भवन्तु वै ।। ४५.५४ ।।

पितॄणां कुलसाहस्रमात्मना सहितं नरः।
श्राद्धादिना समुद्धृत्य विष्णुलोकं नयेद्ध्रुवम् ।। ४५.५५ ।।

यावत्यो हि सरिच्छ्रेष्ठा गङ्गाद्याश्च ह्रदाः शुभाः।
समुद्राद्याः सरोमुख्या मानसाद्याः सुरेश्वराः।
नृणां श्राद्धं विदधतो मुक्तये निवसन्तु मे ।। ४५.५६ ।।

शरीरेण समायान्तु क्वचिन्नो यान्तु देवताः।
एको विष्णुस्त्रिधामूर्त्तिर्यावत्सङ्कीर्त्यते बुधैः ।। ४५.५७ ।।

तावच्छिलायां सर्व्वाणि तीर्थानि सह दैवतैः।
सदा तिष्ठन्तु मुनयो गन्धर्व्वाणां गणाश्च ये ।। ४५.५८ ।।

सर्व्वदेवस्वरूपा च नामेयं देवरूपिणी।
यावत्तिष्ठति ब्रह्माण्डं तावत्तिष्ठतु वै शिला।
मम देहेऽश्मरूपे च ये जपन्ति तपन्ति च ।। ४५.५९ ।।

जुहोत्यग्नौ च तेषां वै तदक्षय्योपतिष्ठताम् ।
अक्षयन्तु भवेच्छ्राद्धं जपहोमतपांसि च।
शिलापर्व्वतरूपेण मयि तिष्ठतु सर्व्वदा ।। ४५.६० ।।

पतिव्रतावचः श्रुत्वा देवाः प्रोचुः पतिव्रताम्।
त्वया यत्प्रार्थितं सर्व्वं तद्भविष्यत्यसंशयम् ।। ४५.६१ ।।

गयासुरस्य शिरसि भविष्यसि यदा स्थिरा।
तदा पादादिरूपेण स्थास्यामस्त्वयि सुस्थिराः।
वरं शिलायै दत्त्वैवं तत्रैवान्तर्द्दधुः सुराः ।। ४५.६२ ।।

इति श्रीमहापुराणे वायुप्रोक्ते गयामाहात्म्यं नाम पञ्चचत्वारिंशोऽध्यायः ।। ४५ ।। *

।।सनत्कुमार उवाच।।
वक्ष्ये शिलाया माहात्म्यं श्रृणु नारद मुक्तिदम्।
यस्या गायन्ति देवाश्च माहात्म्यं मुनिपुङ्गवाः ।। ४६.१ ।।

शिला स्थिता पृथिव्यां सा देवरूपातिपावनी।
विचित्राख्यं शिलातीर्थं त्रिषु लोकेषु विश्रुतम् ।। ४६.२ ।।

तस्याः संस्पर्शनाल्लोकाः सर्वे हरिपुरं ययुः।
शून्ये लोकत्रये जाते शून्या यमपुरी ह्यभूत् ।। ४६.३ ।।

यम इन्द्रादिभिर्गत्वा ऊचे ब्रह्माणमद्भुतम्।
अधिकारं गृहाणाथ यमदण्डं पितामह ।। ४६.४ ।।

यममूचे ततो ब्रह्मा स्वगृहे धारयस्व ताम्।
ब्रह्मोक्तो धर्मराजस्तु गृहे तां समधारयत् ।। ४६.५ ।।

यमोऽधिकारं स्वं चक्रे पापिनां शासनादिकम्।
एवंविधा गुरुतरा शिला जगति विश्रुता ।। ४६.६ ।।

यथा ब्रह्ना यथा विष्णुर्यथा देवो महेश्वरः।
ब्रह्माण्डे च यथा मेरु स्तथेयं देवरूपिणी ।। ४६.७ ।।

गयासुरस्य शिरसि गुरुत्वाद्धारिता यतः ।
अतः पवित्रयोर्योगः पितृणां मोक्षदायकः ।। ४६.८ ।।

पवित्रयोर्द्वयोर्योगे हयमेध मजोऽकरोत्।
भागार्थमागतान्दृष्ट्वा विष्ण्वादीनब्रवीच्छिला ।। ४६.९ ।।

शिलास्थितिप्रतिज्ञां तु कुर्वन्तु पितृमुक्तये।
तथेत्युक्त्वा शिलायान्ते देवा विष्ण्वादयः स्थिताः ।। ४६.१० ।।

शिलारूपेण मूर्त्या च पदरूपेण देवताः।
मूर्त्तामूर्तस्वरूपेण स्थिताः पूर्वप्रतिज्ञया ।। ४६.११ ।।

दैत्यस्य मुण्ड पृष्ठे तु यस्मात्सा संस्थिता शिला।
तस्मात्स मुण्डपृष्ठाद्रिः पितृणां ब्रह्मलोकदः ।। ४६.१२ ।।

आच्छादितः शिलापादः प्रभासेनाद्रिणा यतः।
भासितो भास्करेणेति प्रभासः परिकल्पितः ।। ४६.१३ ।।

प्रभासं हि विनिर्भिद्य शिलाङ्गुष्ठो विनिर्गतः।
अङ्गुष्ठोत्थित ईशोऽपि प्रभासेशः प्रकीर्त्तितः ।। ४६.१४ ।।

शिलाङ्गुष्ठैकतेशो यः सा च प्रेतशिला स्मृता।
पिण्डदानाद्यतस्तस्यां प्रेतत्वान्मुच्यते नरः ।। ४६.१५ ।।

महानदीप्रबासाद्योः सङ्गमे स्नानकृन्नरः।
रामो देव्या सह स्नातो रामतीर्थं ततः स्मृतम् ।। ४६.१६ ।।

प्रार्थितोऽत्र महानद्या राम स्नातो भवेति च।
रामतीर्थं ततो भूत्वा त्रिषु लोकेषु विश्रुतम् ।। ४६.१७ ।।

जन्मान्तरशतं साग्रं यत्कृतं दुष्कृतं मया।
तत्सर्वं विलयं यातु रामतीर्थाभिषेचनात् ।। ४६.१८ ।।

मन्त्रेणानेन यः स्नात्वा श्राद्धं कुर्वीत मानवः।
रामतीर्थे पिण्डदस्तु विष्णुलोकं प्रयात्यसौ।
तथेत्युक्त्वा स्थितो रामः सीतया भरताग्रजः ।। ४६.१९ ।।

राम राम महाबाहो देवानामभयङ्कर।
त्वां नमस्येऽत्र देवेशं मम नश्यतु पातकम् ।। ४६.२० ।।

मन्त्रेणानेन यः स्नात्वा श्राद्धं कुर्यात्सपिण्डकम् ।
प्रेतत्वात्तस्य पितरो विमुक्ताः पितृतां ययुः ।। ४६.२१ ।।

आपस्त्वमसि देवेश ज्योतिषां पतिरेव च।
पाप नाशय मे देव मनोवाक्कायकर्मजम् ।। ४६.२२ ।।

नमस्कृत्य प्रभासेशं भासमानं शिवं व्रजेत्।
तञ्च शम्भुं नमस्कृत्य कुर्याद्यमबलिं ततः ।। ४६.२३ ।।

रामे वनं गते शैलमागत्य भरतः स्थितः ।
पितृपिण्डादिकं कृत्वा रामं संस्थाप्य तत्र च ।। ४६.२४ ।।

रामं सीतां लक्ष्मणञ्च मुनीन्स्थापितवान्प्रभुः।
भरतस्याश्रमे पुण्ये नित्यं पुण्यतमैर्वृतम्।
मतङ्गस्य पदं तत्र दृश्यते सर्वमानुषैः ।। ४६.२५ ।।

स्थापितं धर्मसर्वस्वं लोकस्यास्य निदर्शनात्।
मतङ्गस्य पदे श्राद्धी सर्वांस्तारयते पितृन् ।। ४६.२६ ।।

रामतीर्थे नरः स्नात्वा रामं सीतां समर्च्य च।
रामेश्वरं प्रणम्याथ न देही जायते पुनः ।। ४६.२७ ।।

शिलाया जघनं भूयः समाक्रान्तं नगेन तु।
धर्मराजेन संप्रोक्तो न गच्छेति नगः स्मृतः ।। ४६.२८ ।।

यमराजधर्मराजौ निश्चलार्थं व्यवस्थितौ।
ताभ्यां बलिं प्रयच्छामि पितॄणां मुक्ति हेतवे ।। ४६.२९ ।।

द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ।
ताभ्यां बलिं प्रयच्छामि स्यातामेतावहिंसकौ ।। ४६.३० ।।

ऐन्द्रवारुण वायन्ययाम्यनैरृत्यसंस्थिताः।
वायसाः प्रतिगृह्णन्तु भूयो पिण्डं मया स्थितम् ।। ४६.३१ ।।

यमोऽसि यमदूतोऽसि वायसोऽसि महाबल।
सप्तजन्मकृतं पापं बलिं भुक्त्वा विनाशय ।। ४६.३२ ।।

रामे वनं गते शैलमागत्य भरतेन हि।
पितुः पिण्डादिकं कृत्वा रामेशः स्थापितोऽत्र वै ।। ४६.३३ ।।

स्नात्वा नत्वा च रामेशं रामसीता समन्वितम्।
तत्र श्राद्धं सपिण्डञ्च कृत्वा विष्णुपुरं व्रजेत्।
पितृभिः सह धर्मात्मा कुलानाञ्च शतैःसह ।। ४६.३४ ।।

रामं सीतां लक्ष्मणञ्च मुनीन्स्थापितवान्प्रभुः।
भरतस्याश्रमे पुण्ये नित्यं पुण्यतमैर्वृतम्।
मतङ्गस्य पदं तत्र दृश्यते सर्वमानुषैः ।। ४६.३५ ।।

वह्निर्द्वौ वरुणौ रुद्राश्चत्वारः पितृमोक्षदाः।
भरताश्रममासाद्य तान्नमेत्पूजयेन्नरः ।। ४६.३६ ।।

पापेभ्यश्चोपपापेभ्यो मुच्यते पितृभिः सह।
यत्र कुत्रापि देवर्षे भरतस्याश्रमे नरः ।
स्नातः श्राद्धादिकं कुर्यात्तत्कल्पेऽपि न हीयते ।। ४६.३७ ।।

गयायां चाक्षयं श्राद्धं जपहोमतपांसि च।
सर्वमानन्त्यमाहुर्वै यद्दत्तं भरताश्रमे ।। ४६.३८ ।।

चतुर्युगस्वरूपेण चतस्रो रविमूर्त्तयः ।
दृष्टाः स्पृष्टाः पूजितास्ताः पितॄणां मुक्तिदायकाः ।। ४६.३९ ।।

मुक्तिर्वामन इत्येव तारकाख्यो विधिः परः।
संसारार्णवतप्तानां नावावेतौ सुरेश्वरौ।
तारकं ब्रह्म विश्वेषां मृतानां जीवतामिदम् ।। ४६.४० ।।

त्रिविक्रमञ्च ब्रह्माणं यः पश्येत्पुरुषोत्तमम्।
पितृभिः सह धर्मात्मा स याति परमां गतिम् ।। ४६.४१ ।।

शिलाया वामपादेऽपि तथाभ्युद्यन्तको गिरिः ।
स्थापितः पिण्डदस्तत्र पितॄन्ब्रह्मपुरं नयेत् ।। ४६.४२ ।।

नैमिषारण्यपार्श्वे तु ईचे ब्रह्मा सुरैः सह।
मुख्यसंज्ञं हि तत्तीर्थं देवास्तत्र पदे स्थिताः ।। ४६.४३ ।।

त्रिषु तेषु पदेष्वेव तीर्थेषु मुनिसत्तम।
यत्किञ्चिदशुभं कर्म तत्प्रणश्यति नारद ।। ४६.४४ ।।

तन्नैमिषवनं पुण्यं सेवितं पुण्यपूरुषैः।
तत्र व्यासः शुकः पैलः कण्वो वेधाः शिवो हरिः ।। ४६.४५ ।।

तेषां दर्शनमात्रेण मुच्यते पातकैर्नरः।
वामहस्ते शिलायास्तु तथा चोद्यन्तको गिरिः ।। ४६.४६ ।।

स पर्वतः समानीतो ह्यगस्त्येन महात्मना।
तत्र ब्रह्मा हरश्चैव तपश्चोग्रञ्च चक्रतुः ।। ४६.४७ ।।

तत्रागस्त्यस्य हि वरं कुण्डं त्रैलोक्यदुर्लभम्।
यत्र मुन्यष्टकं सिद्धं तपस्तप्त्वा शिवं गतम्।
कुण्डे मुन्यष्टकं नत्वा पितॄन्ब्रह्मपुरं नयेत् ।। ४६.४८ ।।

अगस्त्येनाथ देवर्षे ह्युदयाद्रेर्महात्मना।
शिलाया वामहस्तेऽपि स्थापितो गिरिराट् शुभः।
वादित्राद्यैर्दिव्यगीतैराढ्यो वादित्रको गिरिः ।। ४६.४९ ।।

तत्र विद्याधरो नाम गन्धर्वाप्सरसाङ्गणैः।
समेतोऽद्यापि कीतानि दिव्यानि सह गीयते ।। ४६.५० ।।

मोहनश्च सुनीथश्च शैलूजो मोहनोत्तमः।
पर्वतो नारदध्यानी सङ्गीती पुष्पदन्तकः।
हाहा हूहूप्रभृतयो गीतदानं प्रजक्रिरे ।। ४६.५१ ।।

तथा चित्ररथो नाम सर्वगन्धर्वसंवृतः।
गायति मधुराण्येव गीतान्यद्रौ महोत्सवम् ।। ४६.५२ ।।

अतः स पर्वतो देवैः सेव्यतेऽद्यापि नित्यशः।
धर्मजास्तत्र देवेशो हरो भस्माङ्गरागवान् ।। ४६.५३ ।।

पार्वत्या सहितो रुद्रः पर्वते गीतनादिते।
मोदते पूजितोद्येयः पितॄणां परमां गतिम् ।। ४६.५४ ।।

गयायां परमात्मा हि गोपतिर्वा गदाधरः।
हीयते वैष्णवी माया तथा रुद्रार्च्चया मुने ।। ४६.५५ ।।

शिलाया दक्षिणे हस्ते भस्मकूटो गिरिर्धृतः।
धर्म्मराजेन तत्रास्ते ह्यगस्त्यः सह भार्य्यया ।। ४६.५६ ।।

अगस्त्यस्य पदे स्नातः पिण्डदो ब्रह्मलोकगः।
ब्रह्मणस्तु वरं लेभे माहात्म्यं भुवि दुर्लभम् ।। ४६.५७ ।।

लोपामुद्रां तथा भार्य्यां पितॄणां परमां गतिम्।
तत्रागस्त्येश्वरं दृष्ट्वा मुच्यते ब्रह्महत्यया ।। ४६.५८ ।।

अगस्त्यञ्च सभार्य्यञ्च पितॄन्ब्रह्मपुरं नयेत्।
दण्डिनाथ तपस्तेपे सीताद्रेर्दक्षिणे गिरौ ।। ४६.५९ ।।

वटो वटेश्वरस्तत्र स्थितश्च प्रपितामहः।
तदग्रे रुक्मिणीकुण्डं पश्चिमे कपिला नदी।
कपिलेशो नदीतीरे ह्यमासोमसमागमे ।। ४६.६० ।।

कपिलायां नरः स्नात्वा कपिलेशं समर्च्य च।
कृते श्राद्धे पिण्डदाने पितरो मोक्षमाप्नुयुः ।। ४६.६१ ।।

तत्राग्निधारा गिरिवरादागतोद्यन्तकादनु।
तत्र सारस्वतं कुण्डं सरस्वत्या प्रकल्पितम् ।। ४६.६२ ।।

शुक्रस्तत्र सुतैः सार्द्धं षण्डामर्क्कादिभिः प्रभुः।
तत्र तत्र मुनीन्द्राणां पदेषु मुनिसत्तम।
श्राद्धपिण्डादिकृत्स्नातः पितॄंस्तारयते नरः ।। ४६.६३ ।।

शिलाया वामहस्तेऽपि गृद्रकूटो गिरिर्धृतः।
गृध्ररूपेण संसिद्धास्तपस्तप्त्वा महर्षयः ।। ४६.६४ ।।

अतो गिरिर्गृध्रकूटस्तत्र गृध्रेश्वरः स्थितः।
दृष्ट्वा गृध्रेश्वरं नत्वा यायाच्छम्भोः पदं नरः ।। ४६.६५ ।।

तत्र गृध्रे गुहायाञ्च पिण्डदः शिवलोकभाक् ।
तत्र गृध्रे वटं नत्वा प्राप्तकामो दिवं व्रजेत् ।। ४६.६६ ।।

ऋणमोक्षं पापमोक्षं शिवं दृष्ट्वा शिवं व्रजेत्।
शूरक्षेत्रञ्च तत्रास्ते पिण्डदः स्वर्नयेत्पितॄन् ।। ४६.६७ ।।

आदिपालेन गिरिणा समाक्रान्तं शिलोदरम्।
तत्रास्ते गजरूपेण विघ्नेशो विघ्ननाशनः।
तं दृष्ट्वा मुच्यते विघ्नैः पितॄन् ब्रह्मपुरं नयेत् ।। ४६.६८ ।।

नितम्बे मुण्डपृष्ठस्य देवदारुवनं त्वभूत्।
मुण्डपृष्ठारविन्द्राद्री दृष्ट्वा पापं विनाशयेत्।
गयानाभौ सुषुम्नायां पिण्डदः स्वर्नयेत्पितॄन् ।। ४६.६९ ।।

शिलाया वामपादे तु स्थापितः प्रेतपर्वतः।
धर्मराजेन पापेभ्यो गिरिः प्रेतशिलाह्वयः ।। ४६.७० ।।

पादेन दूरे निक्षिप्तः शिलायाः पादभारतः।
गतः शिलायाः संसर्गात्प्रेतकूटः पवित्रताम् ।। ४६.७१ ।।

प्रेतकुण्डञ्च तत्रास्ते देवास्तत्र पदे स्थिताः।
तत्र कुण्डादिकं कृत्वा प्रेतत्वान्मोचयेत्पितॄन् ।। ४६.७२ ।।

पृथक्स्थिताश्च बहवो विघ्नकारिण एव ते।
श्राद्धादिकारिणां नृणां तीर्थे पितृविमुक्तये।
प्रेता धानुष्करूपेण करग्रहणकारकाः ।। ४६.७३ ।।

पादाङ्किता मुण्डपृष्ठां महादेवनिवासिनीम्।
तां दृष्ट्वा सर्वलोकश्च मुक्तः पापोपपातकैः ।। ४६.७४ ।।

गयाशिरसि पुण्ये च सर्वपापैर्विवर्जिते।
ग्रेतादिवर्जितं यस्मात्ततोऽतिपावनं वरम् ।। ४६.७५ ।।

कीकटेषु गया पुण्या पुण्यं राजगृहं वनम्।
च्यवनस्याश्रमं पुण्यं नदी पुण्या पुनःपुना ।। ४६.७६ ।।

वैकुण्ठो लोहदण्डश्च गृध्रकूटश्च शोणकः।
अत्र श्राद्धादिना सर्वान्पितॄन्ब्रह्मपुरं नयेत् ।। ४६.७७ ।।

क्रौञ्चरूपेण हि मुनिर्मुण्डपृष्ठे तपोऽकरोत्।
तस्य पादाङ्कितो यस्मात्क्रौञ्चपादस्ततः स्मृतः ।। ४६.७८ ।।

स्नातो जलाशये तत्र नयेत्स्वर्गं स्वकं कुलम्।
बलिः काकशिलायाञ्च काकेभ्य ऋणमोक्षदः ।। ४६.७९ ।।

मुण्डपृष्ठस्य सानौ हि लोमशो लोमहर्षणः।
द्वावेतौ परमं तप्त्वा तपःसिद्धिं परां गतौ ।। ४६.८० ।।

आहूतास्तु सरिच्छ्रेष्ठा लोमशेन महानदी।
शरावती वेत्रवती चन्द्रभागा सरस्वती ।। ४६.८१ ।।

कावेरी सिन्धुरीरा च चन्दना च सरिद्वरा।
वासिष्ठी सरयूर्गङ्गा यमुना गण्डकीन्दिरा ।। ४६.८२ ।।

महावैतरणी नाम्ना निक्षरा च दिवौकसः ।
सावव्यलकनन्दा च ह्युदीची कन्काह्वया ।। ४६.८३ ।।

कौशिकी ब्रह्मदा ज्येष्ठा सर्वस्याघविमोचिनी।
कृष्णवल्वा चर्म्मवती द्वे नद्यौ मुक्तिदायिके ।। ४६.८४ ।।

आहूते सरितां श्रेष्ठे लोमहर्षेण साहसात् ।
तपसस्तु प्रभावेण नर्म्मदा मुनिपुङ्गव।
तासु सर्वासु यः स्नात्वा पिण्डदः स्वर्नयेत्पितॄन् ।। ४६.८५ ।।

ब्रह्मयोनिं प्रविश्याथ निर्गच्छेद्यस्तु मानवः।
परं ब्रह्म स यातीह विमुक्तो योनिसङ्कटात् ।। ४६.८६ ।।

निक्षरायां पुष्करिण्यां स्नातः श्राद्धादिकं नरः।
कुर्य्यात्क्रौञ्चपदे दिव्ये नियमाद्वासरत्रयम्।
सर्वान्पितॄन्नयेत्स्वर्गं पञ्चपापिन एव च ।। ४६.८७ ।।

जनार्दनो भस्मकूटे तस्य हस्ते तु पिण्डदः।
आत्मनोऽप्यथवान्येषां सव्येनापि तिलैर्विना।
जीवतां दधिसंमिश्रं सर्वे ते विष्णुलोकगाः ।। ४६.८८ ।।

यस्तु पिण्डो मया दत्तस्तव हस्ते जनार्दन।
यदुद्दिश्य त्वया देयस्तस्मिन्पिण्डो मृते प्रभो ।। ४६.८९ ।।

एष पिण्डो मया दत्तस्तव हस्ते जनार्दन।
अन्तकाले गते मह्यं त्वया देयो गयाशिरे ।। ४६.९० ।।

जनार्दन नमस्तुभ्यं नमस्ते पितृमोक्षद।
पितृपते नमस्तेऽस्तु नमस्ते पितृरूपिणे ।। ४६.९१ ।।

गयायां पितृरूपेण स्वयमेव जनार्दनः।
तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात् ।। ४६.९२ ।।

नमस्ते पुण्डरीकाक्ष ऋणत्रयविमोचक।
लक्ष्मीकान्त नमस्तेऽस्तु पितॄणां मोक्षदो भव ।। ४६.९३ ।।

वामजानु सुसंपात्य नत्वा भीमो जनार्दनम्।
श्राद्धं सपिण्डकं कृत्वा भ्रातृभिर्ब्रह्मलोकभाक्।
पितृभिः सह धर्मात्मा कुलानाञ्च शतेन च ।। ४६.९४ ।।

शिलायां व्यक्तरूपेण व्यक्ताव्यक्तात्मना स्थितः।
लक्ष्मीशो विभुधैः सार्द्धं तस्माद्देवमयी शिला ।। ४६.९५ ।।

इति श्रीमहापुराणे वायुप्रोक्ते गयामाहात्म्यं नाम षट्चत्वारिंशोऽध्याय- ।। ४६ ।।*

।.नारद उवाच।।
कथं व्यक्तस्वरूपेण स्थितश्चादिगदाधरः।
कथं व्यक्तस्वरूपेण व्यक्ताव्यक्तात्मना स्थितः ।। ४७.१ ।।

कथं गदा समुत्पन्ना यथा ह्यादिगदाधरः।
गदालोलं कथं चासीत् सर्व्वपापक्षयङ्करम् ।। ४७.२ ।।

सनत्कुमार उवाच।।
गदो नामासुरो ह्यासीद्वज्राद्वज्रतरो दृढः।
तपसा दारुणेनासौ ब्रह्मलब्धवरः पुरा।
प्रार्थितो ब्रह्मणे प्रादात्स्वशरीरास्थि दुस्त्यजम् ।। ४७.३ ।।

ब्रह्मोक्तो विश्वकर्म्मापि गदां चक्रेऽद्बुतां तदा।
तदस्थि वज्रनिष्पेषैः कुन्दैः स्वर्गे ह्यधारयत् ।। ४७.४ ।।

अथ कालेन महाता मनौ स्वायम्भुवे क्वचित।
हेती रक्षो ब्रह्मपुत्रः तपस्तेपे सुदारुणम् ।। ४७.५ ।।

दिव्यवर्षसहस्राणां शतं वायुमभक्षयत्।
उन्मुखश्चोर्द्ध्वबाहुश्च पादाङ्गुष्ठभरेण ह ।। ४७.६ ।।

एकेनातिष्टदव्यग्रः शीर्णपर्णानिलाशनः।
ब्रह्मादींस्तपसा तुष्टान्वरं वव्रे वरप्रदान् ।। ४७.७ ।।

देवैर्दैत्यैश्च शस्त्रैर्विविधैर्मनुजादिभिः।
कृष्णेशानादिचक्राद्यैरवध्यः स्यां महाबलः ।। ४७.८ ।।

तथेत्युक्त्वान्तर्हितास्ते हेतिर्देवानथाजयत्।
इन्द्रत्वमकरोद्धेतिर्भीता ब्रह्महरादयः ।। ४७.९ ।।

हरिं ते शरणं जग्मुरूचुर्हेतिं जहीति तान् ।
ऊचे हरिरवध्योऽयं हेतिर्देवासुरैः सुराः ।। ४७.१० ।।

महास्त्रं मे प्रयच्छध्वं हेतिं हन्मि हि येन तम्।
इत्युक्तास्ते ततो देवा गदां तां हरये ददुः ।। ४७.११ ।।

दधार तां गदामादौ देवैरुक्तो गदाधरः ।
गदया हेतिमाहत्य देवैः स त्रिदिवं ययौ ।। ४७.१२ ।।

गदामादाववष्टभ्य गयासुरशिरःशिलाम्।
निश्चलार्थं स्थितो यस्मात्तस्मादादिगदाधरः ।। ४७.१३ ।।

शिलापर्वतरूपेण व्यक्त आदिगदाधरः ।
शिलासौ मुण्डपृष्ठाद्रिः प्रभासो नामपर्व्वतः ।। ४७.१४ ।।

उद्यन्तो गीतनादश्च भस्मकूटो गिरिर्म्महान्।
गृध्र कूटः प्रेतकूटश्चादिपालोऽरविन्दकः ।। ४७.१५ ।।

पञ्चलोकः सप्तलोको वैकुण्ठो लोहदण्डकः ।
क्रौञ्चपादोऽक्षयवटः फल्गुतीर्थं मधुश्रवाः ।। ४७.१६ ।।

दधिकुल्या मधुकुल्या देविका च महानदी।
वैतरण्यादिरूपेण व्यक्त आदिगदाधरः ।। ४७.१७ ।।

विष्णोः पदं रुद्रपदं ब्रह्मणः पदमुत्तमम्।
काश्यपस्य पदं दिव्यं द्वौ हस्तौ यत्र निर्गतौ ।। ४७.१८ ।।

पञ्चाग्नीनां पदान्यत्र इन्द्रागस्त्यपदे परे।
रवेश्च कार्त्तिकेयस्य क्रौञ्चमातङ्गयोरपि ।। ४७.१९ ।।

मुख्यलिङ्गानि सर्व्वाणि व्यक्ताव्यक्तात्मना स्थितः।
आद्यो गदाधरश्चैव व्यक्तः श्रीमान् गदाधरः ।। ४७.२० ।।

गायत्री चैव सावित्री सन्ध्या चैव सरस्वती ।
गयादित्यश्चोत्तरार्को दक्षिणार्कोऽपि नैमिषः ।। ४७.२१ ।।

श्वेतार्को गणनाथश्च वसवोऽष्टौ मुनीश्वराः।
रुद्राश्चैकादशैवाथ तथा सप्तर्षयोऽपरे ।। ४७.२२ ।।

सोमनाथश्च सिद्धेशः कपर्द्दीशो विनायकः।
नारायणो महालक्ष्मीर्ब्रह्मा श्रीपुरुषोत्तमः ।। ४७.२३ ।।

मार्कण्डेयेशः कौटीशो ह्यङ्गिरेशः पितामहः।
जनार्दनो मङ्गला च पुण्डरीकाक्ष उत्तमः ।। ४७.२४ ।।

इत्यादिव्यक्तरूपेण स्थितश्चादिगदाधरः।
हेतिर्यो राक्षसस्तस्मिन्हते विष्णुः पुरं गतः ।। ४७.२५ ।।

ब्रह्मणा सह रुद्राद्यैः कारिते निश्चलेऽसुरे ।
तुष्टावाद्यगदापाणिं वेधा हर्षेण निर्वृतः ।। ४७.२६ ।।

ब्रह्मोवाच।।
गदाधरं व्यपगतकालकल्मषं गयागतं विदितगुणं गुणातिगम्।
गुहागतं गिरिवरगौरगेहगं गणार्च्चितं वरदमहं नमामि ।। ४७.२७ ।।

अहःश्रियं त्रिदशगणादिसुश्रियं भवश्रियं दितिभवदारणश्रियम्।
कलिश्रियं कलिमलमर्दनश्रियं गदाधरं नौमि तमाश्रितश्रियम् । ४७.२८ ।।

दृढादृढं परिवृढगाढसंस्तुतं कामाद्भुतं सुदृढमरूढिरूढिगम्।
तमाढ्यगं दृढदुरिताद्यढौकितं स्वढौकृतं दृढतरगोत्रसूक्तिभम् ।। ४७.२९ ।।

विदेहकं करणकलाविवर्जितं विजन्मकं दिवकरवेदिभूषितम्।
गदाधरं ध्वनिमुखवर्जितं परं नमाम्यहं सततं मनादिमीश्वरं हरिम् ।। ४७.३० ।।

मनोऽतिगं मतिगतिवर्जितं परं सदाद्वयं स्तुतिशिरसि संस्तुतं बुधैः।
चिदात्मकं कलिगतकारणातिगं गदाधरं हृदयगतं नमामि तम् ।। ४७.३१ ।।

सनत्कुमार उवाच।।
देवैः सार्द्धं ब्रह्मणैवं स्तुतश्चादिगदाधरः ।
ऊचे वरं वृणीष्व त्वं वरं ब्रह्मा तमब्रवीत् ।। ४७.३२ ।।

शिलायां देवरूपिण्यां न तिष्ठामस्त्वया विना।
स्थास्यामोऽत्र त्वया सार्द्धं नित्यं व्यक्तादिरूपिणा ।। ४७.३३ ।।

एवमस्तु श्रिया सार्द्धं स्थितश्चादिगदाधरः।
लोकानां रक्षणार्थाय जगतां मुक्तिहेतवे।
सुव्यक्तः पुण्डरीकाक्षो जनार्दन इति श्रुतः ।। ४७.३४ ।।

वेदैरगम्या या मूर्त्तिरादिभूता सनातनी।
सुव्यक्ता श्वेतकल्पे सा भविष्यति तथा पुनः।
वाराहकल्पे ह्यव्यक्ता व्यक्तिमप्यगमत्पुरा ।। ४७.३५ ।।

सन्तारणाय लोकानां देवानां रक्षणाय च।
गयाशिरसि सुव्यक्तो भविष्यति न संशयः ।। ४७.३६ ।।

ये द्रक्ष्यन्ति सदा भक्त्या देवमादिगदाधरम्।
कुष्ठरोगादिनिर्म्मुक्ता यास्यन्ति हरिमन्दिरम् ।। ४७.३७ ।।

ये द्रक्ष्यन्ति सदा भक्त्या देवमादिगदाधरम्।
ते प्राप्स्यन्ति धनं धान्यमायुरारोग्यमेव च ।। ४७.३८ ।।

कलत्रपुत्रपौत्रादिगुणकीर्त्तिसुखानि च।
श्रद्धया ये नमस्यन्ति राज्यं ब्रह्मपुरं तथा।
भुक्त्वा व्रजेयुः सततं पुण्यपुञ्जफलं नराः ।। ४७.३९ ।।

गन्धदानेन गन्धाढ्यः सौभाग्यं पुष्पदानतः।

धूपदानेन राज्याप्तिर्दीपाद्दीप्तिर्भविष्यति ।। ४७.४० ।।

ध्वजदानात्पापहानिर्यात्राकृद्ब्रह्मलोकभाक्।
श्राद्धपिण्डप्रदो यस्तु विष्णुं नेष्यति वै पितॄन् ।। ४७.४१ ।।

श्रद्धया ये नमस्यन्ति सतोत्रेणादिगदाधरम्।
स्तोष्यन्ति च समभ्यर्च्य पितॄन्नेष्यन्ति माधवम्।
शिवोऽपि परया प्रीत्या तुष्टावादिगदाधरम् ।। ४७.४२ ।।

।।शिव उवाच।।
अव्यक्तरूपो यो देवो मुण्डपृष्ठादिरूपतः ।
फल्गुतीर्थादिरूपेण नमाम्यादिगदाधरम् ।। ४७.४३ ।।

व्यक्ताव्यक्तस्वरूपेण पदरूपेण संस्थितः।
मुखलिङ्गादिरूपेण नमाम्यादिगदाधरम् ।। ४७.४४ ।।

अव्यक्तरूपो यो देवो जनार्दनस्वरूपतः।
मुण्डपृष्ठे स्वयं जातो नामाम्यादिगदा धरम् ।। ४७.४५ ।।

शिलायां देवरूपिण्यां स्थितं ब्रह्मादिभिः सुरैः।
पूजितं सत्कृतं देवैस्तं नमामि गदाधरम् ।। ४७.४६ ।।

यं च दृष्ट्वा ततः स्पृष्ट्वा पूजयित्वा प्रणम्य च ।
श्राद्धादौ ब्रह्मलोकाप्तिर्नमाम्यादिगदाधरम् ।। ४७.४७ ।।

महदादेश्च जगतो व्यक्तस्यैकं हि कारणम्।
अव्यक्तज्ञानरूपं तं नमाम्यादिगदाधरम् ।। ४७.४८ ।।

देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितम्।
जाग्रत्स्वप्नविनिर्मुक्तं नमाम्यादिगदाधरम् ।। ४७.४९ ।।

नित्यानित्यविनिर्मुक्तं सत्यमानन्दमव्ययम्।
तुरीयं ज्योतिरात्मानं नमाम्यादिगदाधरम् ।। ४७.५० ।।

।।सनत्कुमार उवाच।।
एवं स्तुतो महेशेन प्रीतो ह्यादिगदाधरः।
स्थितो देवः शिलायां स ब्रह्माद्यैर्दैवतैः सह ।। ४७.५१ ।।

संस्थितं मुण्डपृष्ठाद्रौ देवमादिगदाधरम्।
स्तुवन्ति पूजयन्तीह ब्रह्मलोकं प्रयान्तु ते ।। ४७.५२ ।।

धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।

कामानवाप्नुयात्कामी मोक्षार्थी मोक्षमाप्नुयात् ।। ४७.५३ ।।

वन्ध्या च लभते पुत्रं वेदवेदाङ्गपारगम्।
राजा विजयमाप्नोति शूद्रश्च सुखमाप्नुयात् ।। ४७.५४ ।।

पुत्रार्थी लभते पुत्रानभ्यर्च्यादिगदाधरम्।
मनसा प्रार्थितं सर्वं पूजाद्यैः प्राप्नुयाद्धरेः ।। ४७.५५ ।।

इति श्रीवायुपुराणे वायुप्रोक्ते गयामाहात्म्यं नाम सप्तचत्वारिंशोऽध्यायः ।। ४७ ।।*

।।सनत्कुमार उवाच।।
गयायात्रां प्रवक्ष्यामि श्रृणु नारद मुक्तिदाम्।
निष्कृतिः श्राद्धकर्तृणां ब्रह्मणा गीयते पुरा ।। ४८.१ ।।

उद्यतश्चेद्गयां गन्तुं श्राद्धं कृत्वा विधानतः।
विधाय कार्पटीवेशं कृत्वा ग्रामं प्रदक्षिणम् ।। ४८.२ ।।

ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम्।
ततः प्रतिदिनं गच्छेत्प्रतिग्रहविवर्जितः ।। ४८.३ ।।

प्रतिग्रहादुपावृत्तः सन्तुष्टो नियतः शुचिः।
अहङ्कारविमुक्तो यः स तीर्थफलमश्नुते ।। ४८.४ ।।

यस्य हस्तौ च पादौ च मनश्चापि सुसंयतम्।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ।। ४८.५ ।।

ततो गयाप्रवेशे च पूर्वतोऽस्ति महानदी ।
तत्र तोयं समुत्पाट्य स्नातव्यं निर्मले जले ।। ४८.६ ।।

देवादींस्तर्पयित्वाथ श्राद्धं कृत्वा यथाविधिः ।
स्ववेदशाखागदितमर्घ्यावाहनवर्जितम् ।। ४८.७ ।।

अपरेऽह्नि शुचिर्भूत्वा गच्छेद्वै प्रेतपर्वते ।
ब्रह्मकुण्डे ततः स्नात्वा देवादींस्तर्पयेत्सुधीः ।। ४८.८ ।।

कुर्य्याच्छ्राद्धं सपिण्डानां प्रयतः प्रेतपर्वते।
प्राचीनावीतिना भाव्यं दक्षिणाभिमुखः सुधीः ।। ४८.९ ।।

कव्यबालोऽनलः सोमो यमश्चैवार्य्यमा तथा।
अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः ।। ४८.१० ।।

आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह।
मदीयाः पितरो ये च कुले जाताः सनाभयः ।। ४८.११ ।।

तेषां पिण्डप्रदानार्थमागतोऽस्मि गयामिमाम्।
ते सर्वे तृप्तिमायान्तु श्राद्धेनानेन शाश्वतीम् ।। ४८.१२ ।।

आचम्योक्ताव च पञ्चाङ्गं प्राणायामं प्रयत्नतः।
पुनरावृत्तिरहितब्रह्मलोकाप्तिहेतवे ।। ४८.१३ ।।

एवञ्च विधिवच्छ्राद्धं कृत्वा पूर्वं यताक्रमम्।
पितृनावाहय चाभ्यर्च्य मन्त्रैः पिण्डप्रदो भवेत् ।। ४८.१४ ।।

तीर्थे प्रेतशिलादौ च चरुणा सघृतेन वा ।
प्रक्षाल्य पूर्वं तत्स्थानं पञ्चगव्यैः पृथक्पृथक्।
तैर्मन्त्रैरथ संपूज्य पञ्चगव्यैश्च देवताम् ।। ४८.१५ ।।

यावत्तिला मनुष्यैश्च गृहीता पितृकर्मसु।
गच्छन्ति तावदसुराः सिंहत्रस्ता यथा मृगाः ।। ४८.१६ ।।

अष्टकासु च वृद्धौ च गयायां च मृतेऽहनि ।
मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह ।। ४८.१७ ।।

वृद्धिश्राद्धे तु मात्रादि गयायां पितृपूर्वकम्।
पाद्यपूर्वं समारभ्य दक्षिणाग्रकुशैः क्रमात्।
पित्रादीनां समास्तीर्य शेषं गृह्योक्तमाचरेत् ।। ४८.१८ ।।

दद्युः श्राद्धं सपिण्डानां तेषां दक्षिणभागतः।
कुशानास्तीर्य विधिना सकृद्दत्वा तिलोदकम् ।। ४८.१९ ।।

गृहीत्वाञ्जलिना तेभ्यः पितृतीर्थेन यत्नतः।
सक्तुना मुष्टिमात्रेण दद्यादक्षय्यपिण्डकम्।
सम्बन्धिनस्तिलाद्भिश्च कुशेष्वावाहयेत्ततः ।। ४८.२० ।।

आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ।। ४८.२१ ।।

अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम्।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ।। ४८.२२ ।।

पिता पितामह श्चैव तथैव प्रपितामहः।
माता पितामही चैव तथैव प्रपितामही ।। ४८.२३ ।।

मातामहस्तत्पिता च प्रमातामहकादयः।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ।। ४८.२४ ।।

मुष्टिमात्रप्रमाणञ्च ह्यार्द्रामलकमात्रकम्।
शमीफत्रप्रमाणं वा पिण्डं दद्याद्गयाशिरे।
उद्धरेत्सप्तगोत्राणि कुलानि शतमुद्धरेत् ।। ४८.२५ ।।

पितुर्मातुः स्वभार्याया भगिन्या दुहितुस्तथा।
पितृष्वसुर्मातृष्वसुः सप्त गोत्राः प्रकीर्त्तिताः ।। ४८.२६ ।।

चतुर्विंशतिविंशश्च षोडश द्वादशैव हि।

रुद्रादिवसवश्चैव कुलान्येकोत्तरं शतम् ।। ४८.२७ ।।

नावाहनं न दिग्बन्धो न दोषो दृष्टिसम्भवः।
न कारुण्येन कर्त्तव्यं तीर्थश्राद्धं विचक्षणैः ।। ४८.२८ ।।

पिण्डासनं पिण्डदानं पुनः प्रत्यवनेजनम्।
दक्षिणा चान्नसङ्कल्पं तीर्थश्राद्धेष्वयंविधिः ।। ४८.२९ ।।

अस्मत्कुले मृता ये च गतिर्येषां न विद्यते।
आवाहयिष्ये तान्सर्वान्दर्भपृष्ठे तिलोदकैः ।। ४८.३० ।।

बन्धुवर्गकुले ये च गतिर्येषां न विद्यते।
आवाहयिष्ये तान्त्सर्वान् दर्भपृष्ठे तिलोदकैः ।। ४८.३१ ।।

इत्येतैर्मन्त्रैः सजलैस्तिलैर्दर्भेषु ध्यानवान्।
आवाह्याभ्यर्च्य तेभ्यश्च पिण्डान्दद्याद्यथाक्रमम् ।। ४८.३२ ।।

अस्मत्कुले मृता ये च गतिर्येषां न विद्यते।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ।। ४८.३३ ।।

मातामहकुले ये च गतिर्येषां न विद्यते।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ।। ४८.३४ ।।

बन्धुवर्गकुले ये च गतिर्येषां न विद्यते।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ।। ४८.३५ ।।

अजातदन्ता ये केचिद्ये च गर्भे प्रपीडिताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ।। ४८.३६ ।।

अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथा परे।
विद्युच्चोरहता ये च तेभ्यः पिण्डं ददाम्यहम् ।। ४८.३७ ।।

दावदाहे मृता ये च सिंहव्याग्रहताश्च ये।
दंष्ट्रिभिः श्रृङ्गिभिर्वापि तेभ्यः पिण्डं ददाम्यहम् ।। ४८.३८ ।।

उद्बन्धनमृता ये च विषशस्त्रहताश्च ये।
आत्मापघातिनो ये च तेभ्यः पिण्डं ददाम्यहम् ।। ४८.३९ ।।

अरण्ये वर्त्मनि वने क्षुधया तृषया हताः।
भूतप्रेतपिशाचाद्यैस्तेभ्यः पिण्डं ददाम्यहम् ।। ४८.४० ।।

रौरवे चान्धतामिस्रे कालसूत्रे च ये गताः।

तेषामुद्धरणार्तीय इमं पिण्डं ददाम्यहम् ।। ४८.४१ ।।

असिपत्रवने घोरे कुम्भीपाकेषु ये गताः।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ।। ४८.४२ ।।

अनेकयातनासंस्थाः प्रेतलोकञ्च ये गताः।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ।। ४८.४३ ।।

अनेकयातनासंस्था ये नीता यमकिङ्करैः।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ।। ४८.४४ ।।

नरकेषु समस्तेषु यातनासु च ये स्थिताः ।
तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ।। ४८.४५ ।।

पशुयोनि गता येच पक्षिकीटसरीसृपाः।
अथवा वृक्षयोनिस्थास्तेभ्यः पिण्डं ददाम्यहम् ।। ४८.४६ ।।

जात्यन्तरसहस्रेषु भ्रमन्तः स्वेन कर्म्मणा।
मानुष्यं दुर्ल्लभं येषां तेभ्यः पिण्डं ददाम्यहम् ।। ४८.४७ ।।

दिव्यन्तरिक्षभूमिष्ठाः पितरो बान्धवादयः।
मृता असंस्कृता ये च तेब्यः पिण्डं ददाम्यहम् ।। ४८.४८ ।।

ये केचित्प्रेतरूपेण वर्त्तन्ते पितरो मम।
ते सर्व्वे तृप्तिमायान्तु पिण्डेनानेन सर्व्वदा ।। ४८.४९ ।।

येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ।। ४८.५० ।।

पितृवंशे मृता ये च मातृवंशे च ये मृताः।
गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ।। ४८.५१ ।।

ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः।
क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा ।। ४८.५२ ।।

विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम।
तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ।। ४८.५३ ।।

आ ब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः।
कुलद्वये ये मम दासभूता भृत्या स्तथैवाश्रितसेवकाश्च ।। ४८.५४ ।।

मित्राणि शिष्याः पशवश्च वृक्षा दृष्टा ह्यदृष्टाश्च कृतोपकाराः।

जन्मान्तरे ये मम सङ्गताश्च तेभ्यः स्वधा पिण्डमहं ददामि ।। ४८.५५ ।।

एतैश्च सर्व्वमन्त्रैस्तु स्त्रीलिङ्गान्तं समूह्य च।
पिण्डान्दद्याद्यथापूर्व्वं स्त्रीणां मात्रादिकक्रमात् ।। ४८.५६ ।।

स्वगोत्रे परगोत्रे वा दम्पत्योः पिण्डपातनम्।
अपृथङ् निष्फलं श्राद्धं पिण्डञ्चोदकतर्पणम् ।। ४८.५७ ।।

पिण्डपात्रे तिलान्क्षिप्त्वा पूरयित्वा शुभोदकैः।
परिषिच्य त्रिधा सर्वान् प्रणिपत्य समापयेत् ।। ४८.५८ ।।

पितॄन्विसृज्य चाचम्य साक्षिणः श्रावयेत्सुरान् ।
साक्षिणः सन्तु मे देवा ब्रह्मेशानादयस्तथा।
मया गयां समासाद्य पितॄणां निष्कृतिः कृता ।। ४८.५९ ।।

आगतोऽस्मि गयां देव पितृकार्य्ये गदाधर।
त्वमेव साक्षी भगवन्ननृणोऽहमृणत्रयात् ।। ४८.६० ।।

सर्व्वस्थानेषु चैवं स्यात् पिण्डदानन्तु नारद।
प्रेतपर्व्वतमारभ्य कुर्य्यात्तीर्थेषु च क्रमात् ।। ४८.६१ ।।

तिलमिश्रांस्ततः सक्तून्निःक्षिपेत्प्रेतपर्व्वते।
अपसव्येन देवर्षे दक्षिणाभिमुखेन च ।। ४८.६२ ।।

ये केचित्प्रेतरूपेण वर्त्तन्ते पितरो मम।
ते सर्व्वे तृप्तिमायान्तु सक्तुभिस्तिलमिश्रितैः ।। ४८.६३ ।।

आब्रह्मस्तम्बपर्य्यन्तं यत्किञ्चित्सचराचरम्।
मया दत्तेन तोयेन तृप्तिमायान्तु सर्व्वशः ।। ४८.६४ ।।

प्रेतत्वाच्च विमुक्ताः स्युः पितरस्तस्य नारद।
प्रेतत्वं तस्य माहात्म्यात्कुले चापि न जायते ।। ४८.६५ ।।

नाम्ना प्रेतशिला ख्याता गयाशिरसि मुक्तये।
तीर्थमन्त्रादिरूपेण स्थित श्चादिगदाधरः ।। ४८.६६ ।।

इति श्रीवायुपुराणे वायुप्रोक्ते गयामाहात्म्यं नामाष्टचत्वारिंशोऽध्यायः ।। ४८ ।। *

।।सनत्कुमार उवाच।।

आदौ तु पञ्चतीर्थेषु चोत्तरे मानसे विधिः।
आचम्य कुशहस्तेन शिरश्चाभ्युक्ष्य वारिणा ।। ४९.१ ।।
उत्तरं मानसं गच्छेन्मन्त्रेण स्नानमाचरेत्।
उत्तरे मानसे स्नानं करोम्यात्मविशुद्धये ।। ४९.२ ।।
सूर्य्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये।
देवादींस्तर्पयित्वाथ श्राद्धं कुर्यात् सपिण्डकम् ।। ४९.३ ।।
मानसं हि सरो ह्यत्र तस्मादुत्तरमानसम्।
सूर्य्यं नत्वार्च्चयित्वाथ सूर्य्यलोकं नयेत्पितॄन् ।। ४९.४ ।।
नमो भगवते भर्त्रे सोमभौमज्ञरूपिणे।
जीवभार्गवसौरेयराहुकेतुस्वरूपिणे ।। ४९.५ ।।
उत्तरान्मानसान्मौनी व्रजेद्दक्षिणमानसम्।
उदीचीतीर्थमित्युक्तं तत्रौदीच्यं विमुक्तिदम् ।
अत्र स्नातो दिवं याति स्वशरीरेण मानवः ।। ४९.६ ।।
मध्ये कनखलं तीर्थं त्रिषुलोकेषु विश्रुतम्।
स्नातः कनकवद्भाति नरो याति पवित्रताम् ।। ४९.७ ।।
तस्य दक्षिणभागे च तीर्थं दक्षिणमानसम्।
अतः कनखलं लोके ख्यातं तीर्थमनुत्तमम् ।। ४९.८ ।।
दक्षिणे मानसे चैव तीर्थत्रयमुदाहृतम्।
स्नात्वा तेषु विधानेन कुय्याच्छ्राद्धं पृथक्पृथक् ।। ४९.९ ।।
दक्षिणे मानसे स्नानं करोम्यात्मविशुद्धये।
सूर्य्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये ।। ४९.१० ।।
ब्रह्महत्यादिपापौघ यातनाया विमुक्तये।
दिवाकर करोमीह स्नानं दक्षिणमानसे ।। ४९.११ ।।
नमामि सूर्य्यं तृप्त्यर्थं पितृणां तारणाय च।
पुत्रपौत्रधनैश्वर्य्यायायुरारोग्य वृद्धये ।। ४९.१२ ।।
अनेन स्नानपूजादि कृत्वा श्राद्धं सपिण्डकम्।
कृत्वा नत्वा च मौन्यर्कमिमं मन्त्रमुदीरयेत् ।। ४९.१३ ।।
फल्गुतीर्थं व्रजेत्तस्मात् सर्व्वतीर्थोत्तमोत्तमम्।
मुक्तिर्भवति कर्त्तॄणां पितृणां श्राद्धतः सदा ।। ४९.१४ ।।
ब्रह्मणा प्रार्थितो विष्णुः फल्गुको ह्यभवत्पुरा।
दक्षिणाग्नौ हुतं तत्र तद्रजः फल्गुतीर्थकम् ।। ४९.१५ ।।
तस्मिन्फलति फल्ग्वा गौः कामधेनुर्जलं मही।

दृष्टेरन्तर्गतं यस्मात्फल्गुतीर्थं न निष्फलम् ।। ४९.१६ ।।
तीर्थानि यानि सर्व्वाणि भुवनेष्वखिलेष्वपि।
तानि स्नातुं समायान्ति फल्गुतीर्थं सुरैः सह ।। ४९.१७ ।।
गङ्गा पादोदकं विष्णोः फल्गुर्ह्यादिगदाधरः।
स्वयं हि द्रवरूपेण तस्माद्गङ्गाधिकं विदुः ।। ४९.१८ ।।
अश्वमेधसहस्राणां सहस्रं यः समाचरेत्।
नासौ तत्फलमाप्नोति फल्गुतीर्थे यदाप्नुयात् ।। ४९.१९ ।।
फल्गुतीर्थे विष्णुजले करोमि स्नानमादृतः।
पितॄणां विष्णुलोकाय भुक्तिमुक्तिप्रसिद्धये ।। ४९.२० ।।
फल्गुतीर्थे नरः स्नात्वा तर्पणं श्राद्धमाचरेत्।
सपिण्डकं स्वसूत्रोक्तं नमेदथ पितामहम् ।। ४९.२१ ।।
नमः शिवाय देवाय ईशाय पुरुषाय वै।
अघोरवामदेवाय सद्योजाताय शम्भवे ।। ४९.२२ ।।
फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम्।
आत्मानं तारयेत्सद्यो दश पूर्वान्दशापरान् ।। ४९.२३ ।।
नत्वा गदाधरं देवं मन्त्रेणानेन पूजयेत् ।
ओं नमो वासुदेवाय नमः सङ्कर्षणाय च ।। ४९.२४ ।।
प्रद्युम्नायानिरुद्धाय श्रीधराय च विष्णवे ।
पञ्चतीर्थे नरः स्नात्वा ब्रह्मलोकं नयेत्पितॄन् ।। ४९.२५ ।।
अमृतैः पञ्चभिः स्नानं पुष्पवस्त्राद्यलंकृतम्।
न कुर्य्याद्यो गदापाणेस्तस्य श्राद्धमसार्थकम् ।। ४९.२६ ।।
नागकूटाद्गृध्रकूटाद्युपादुत्तरमानसात्।
एतद्गयाशिरः प्रोक्तं फल्गुतीर्थन्तदुच्यते ।। ४९.२७ ।।
मुण्डपृष्ठनगाधस्तात्फल्गुतीर्थमनुत्तमम्।
अत्र श्राद्धादिना सर्व्वे पितरो मोक्षमाप्नुयुः ।। ४९.२८ ।।
प्रथमेऽह्नि विधिः प्रोक्तो द्वितीये दिवसे व्रजेत्।
धर्म्मारण्यं तत्र धर्म्मो यस्माद्यज्ञमकारयत् ।। ४९.२९ ।।
गमनाद्ब्रह्मलोकाप्तिर्भवत्येव हि नारद।
मतङ्ग वाप्यां यः स्नात्वा तर्पणं श्राद्धमाचरेत् ।। ४९.३० ।।
गत्वा नत्वा मतङ्गेशमिमं मन्त्रमुदीरयेत्।
प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः ।। ४९.३१ ।।
मयागत्यमतङ्गेऽस्मिन्पितॄणां निष्कृतिः कृता।
पूर्व्वं हि ब्रह्मतीर्थं च कूपे श्राद्धादि कारयेत् ।। ४९.३२ ।।

तत्कूपयूपयोर्म्मध्ये सर्व्वांस्तारयते पितॄन्।
धर्म्मं धर्म्मेश्वरं नत्वा महाबोधितरुं नमेत् ।। ४९.३३ ।।
नमस्तेऽश्वत्थराजाय ब्रह्मविष्णुशिवात्मने।
बोधिद्रमाय कर्तॄणां पितॄणां तारणाय च ।। ४९.३४ ।।
येऽस्मत्कुले मातृवंशे बान्धवा दुर्गतिं गताः।
त्वद्दर्शनात्स्पर्शनाच्च स्वर्गतिं यान्तु शाश्वतीम् ।। ४९.३५ ।।
ऋणत्रयं मया दत्तं गयामागत्य वृक्षराट्।
त्वत्प्रसादान्महापापाद्विमुक्तोऽहं भवार्णवात् ।। ४९.३६ ।।
तृतीये ब्रह्मसरसि स्नात्वा श्राद्धं सपिण्डकम्।
कृत्वा सर्व्वप्रमाणेन मन्त्रेण विधिवत्सुतः ।। ४९.३७ ।।
स्नानं करोमि तीर्थेऽस्मिन् ऋणत्रयविमुक्तये।
तत्कूपयूपयोर्मध्ये ब्रह्मलोकं नयेत्पितॄन् ।। ४९.३८ ।।
यागं कृत्वोत्थियो यूपो ब्रह्मणा यूप इत्यसौ।
कृत्वा ब्रह्मसरःश्राद्धं सर्व्वांस्तारयते पितॄन् ।। ४९.३९ ।।
यूपं प्रदक्षिणीकृत्य वाजपेयफलं लभेत्।
ब्रह्माणं च नमस्कृत्य ब्रह्मलोकं नयेत्पितॄन् ।। ४९.४० ।।
नमोऽस्तु ब्रह्मणेऽजाय जगज्जन्मादिरूपिणे ।
भक्तानाञ्च पितॄणाञ्च तारकाय नमो नमः ।। ४९.४१ ।।
गोप्रचारसमीपस्था आम्रा ब्रह्मप्रकल्पिताः।
तेषां सेचनमात्रेण पितरो मोक्षगामिनः ।। ४९.४२ ।।
आम्रं ब्रह्मसरोद्भूतं ब्रह्मदेवमयं तरुम्।
विष्णुरूपं प्रसिञ्चामि पितॄणां मुक्तिहेतवे ।। ४९.४३ ।।
एको मुनिः कुम्भकुशाग्रहस्त आम्रस्य मूले सलिलं ददामि।
आम्रश्च तृप्ता एका क्रियाद्व्यर्थकरी प्रसिद्धा ।। ४९.४४ ।।
ततो यम बलिं दद्यान्मन्त्रेणानेन संयतः।
यमराजधर्म्मराजौ निश्चलार्थं व्यवस्थितौ ।। ४९.४५ ।।
ताभ्यां बलिं प्रयच्छामि पुतॄणां मुक्तिहेतवे।
ततः श्वानबलिं दद्यान्मन्त्रेणानेन नारद ।। ४९.४६ ।।
द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ।
ताभ्यां बलिं प्रयच्छामि रक्षेतां पथि सर्व्वादा ।। ४९.४७ ।।
ततः काकबलिं दद्यान्मन्त्रेणानेन नारद।
ऐन्द्रवारुणवायव्ययाम्या वै नैऋतास्तथा ।। ४९.४८ ।।
वायसाः प्रतिगृहणन्तु भूमौ पिण्डं समर्पितम्।

फल्गुतीर्थे चतुर्थेऽह्नि स्नानादिकमथाचरेत् ।। ४९.४९ ।।
गयाशिरस्यथ श्राद्धं पादे कुर्य्यात्सपिण्डकम्।
साक्षाद्गयाशिरस्तत्र फल्गुतीर्थाश्रितं कृतम् ।। ४९.५० ।।
नागाज्जनार्द्दनाद्ब्रह्मयूपाच्चोत्तरमानसात्।
एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते ।। ४९.५१ ।।
पितामहं समासाद्य यावदुत्तरमानसम्।
फल्गुतीर्थन्तु विज्ञेयं देवानामपि दुर्लभम् ।। ४९.५२ ।।
क्रौञ्चपादात्फल्गुतीर्थं यावत्साक्षाद्गयाशिरः।
मुखं गयासुरस्यैतत्तस्माच्छ्राद्धमिहाक्षयम् ।। ४९.५३ ।।
मुण्डपृष्ठान्नगाधस्तात्साक्षात्तत्फल्गुतीर्थ कम्।
आद्यो गदाधरो देवो व्यक्ताव्यक्तात्मना स्थितः ।। ४९.५४ ।।
विष्ण्वादिपदरूपेण पितृणां मुक्तिहेतवे।
एतद्विष्णुपदं दिव्यं दर्शनात्पापनाशनम् ।। ४९.५५ ।।
स्पर्शनात्पूजनाद्वापि पितृणां दत्तमक्षयम्।
श्राद्धं सपिण्डकं कृत्वा कुलसाहस्रमात्मना ।। ४९.५६ ।।
नयेद्विष्णुपदं दिव्यमनन्तं शिवमव्ययम्।
श्राद्धं कृत्वा रुद्रपदे नयेत्कुलशतं नरः ।। ४९.५७ ।।
सहात्मना शिवपुरं तथा ब्रह्मपदे नरः।
ब्रह्मलोकं कुलशतं समुद्धृत्य नयेत्पितॄन् ।। ४९.५८ ।।
कश्यपस्य पदे श्राद्धी ब्रह्मलोकं नयेत्पितॄन्।
दक्षिणाग्निपदे श्राद्धी पितॄन्ब्रह्मपुरं नयेत् ।। ४९.५९ ।।
गार्हपत्यपदे श्राद्धी वाजपेयफलं लभेत्।
श्राद्धं कृत्वाहवनीये अश्वमेधफलं लभेत् ।। ४९.६० ।।
श्राद्धं कृत्वा सभ्यपदे ज्योतिष्टोमफलं लभेत् ।
आवसथ्यपदे श्राद्धी पितॄन्ब्रह्मपुरं नयेत् ।। ४९.६१ ।।
श्राद्धं कृत्वा शक्रपदे इन्द्रलोकं नयेत्पितॄन्।
अगस्त्यस्य पदे श्राद्धी पितॄन्ब्रह्मपुरं नयेत् ।। ४९.६२ ।।
क्रौञ्चमातङ्गयोः श्राद्धी ब्रह्मलोकं नयेत्पितॄन्।
श्राद्धी सूर्य्यपदे पञ्च पापिनोऽर्क्कपुरं नयेत् ।। ४९.६३ ।।
कार्त्तिकेयपदे श्राद्धी शिवलोकं नयेत्पितॄन्।
गणेशस्य पदे श्राद्धी रुद्रलोकं नयेत्पितॄन् ।। ४९.६४ ।।
गजकर्णतर्पणकृन्निर्मलं स्वर्नयेत्पितॄन्।
अन्येषाञ्च पदे श्राद्धी पितॄन्ब्रह्मपुरं नयेत् ।। ४९.६५ ।।

सर्व्वेषां काश्यपं श्रेष्ठं विष्णो रुद्रस्य वै पदम्।
ब्रह्मणश्च पदं चापि श्रेष्ठं तत्र प्रकीर्त्तितम् ।। ४९.६६ ।।
प्रारम्भे च समाप्तौ च तेषामन्यतमं स्मृतम्।
श्रेयस्करं भवेत्तत्र श्राद्धकर्त्तुश्च नारद ।। ४९.६७ ।।
कश्यपस्य पदे दिव्ये भारद्वाजो मुनिः पुरा।
श्राद्धं कृत्वोद्यतो दातुं पित्रादिभ्यश्च पिण्डकम् ।। ४९.६८ ।।
शुक्लकृष्णौ ततो हस्तौ पदमुद्भिद्य निर्गतौ।
दृष्ट्वा हस्तद्वयं तत्र मुनिः संशयमागतः ।। ४९.६९ ।।
ततः स्वमातरं शान्तां पप्रच्छ स महामुनिः।
कश्यपस्य पदे दिव्ये शुक्ले कृष्णेऽथ वा करे ।। ४९.७० ।।
पिण्डो देयो मया मातर्जानासि पितरं वद।।
।।शान्तोवाच।।
भारद्वाज महाप्राज्ञ देहि कृष्णाय पिण्डकम् ।। ४९.७१ ।।
भारद्वाजस्ततः पिण्डं दातुं कृष्णाय चोद्यतः।
श्वेतोऽदृश्योऽब्रवीत्तत्र पुत्रस्त्वं हि ममौरसः ।। ४९.७२ ।।
कृष्णोऽब्रवीन्मम क्षेत्रं ततो मे देहि पिण्डकम्।
स्वैरिण्यथाब्रवीद्दातुं क्षेत्रिणे बीजिने ततः ।। ४९.७३ ।।
भारद्वाजस्ततः पिण्डं कश्यपस्य पदे ददौ ।
हंसयुक्तविमानेन ब्रह्मलोकमुभौ गतौ ।। ४९.७४ ।।
रामो रुद्रपदे श्राद्धे पिण्डदानाय चोद्यतः।
पिता दशरथः स्वर्गात्प्रसार्य्य करमागतः ।। ४९.७५ ।।
नादात्पिण्डं करे रामो ददौ रुद्रपदे ततः।
शास्त्रार्थातिक्रमाद्भीतं रामं दशरथोऽब्रवीत् ।। ४९.७६ ।।
तारितोऽहं त्वया पुत्र रुद्रलोकमवाप्नुयाम्।
हस्ते पिण्डप्रदानेन स्वर्गतिर्न हि मे भवेत् ।। ४९.७७ ।।
त्वञ्च राज्यं चिरं कृत्वा पालयित्वा द्विजान्प्रजाः।
यज्ञान्सदक्षिणान्कृत्वा विष्णुलोकं व्रजिष्यसि ।। ४९.७८ ।।
पुर्य्ययोध्याजनैः सार्द्धं कृमिकीटादिभिः सह।
इत्युक्त्वासौ दशरथो रुद्रलोकं परं ययौ ।। ४९.७९ ।।
भीष्मो विष्णुपदे श्रेष्ठे आहूय पितरं स्वकम्।
श्राद्धं कृत्वोद्यतो दातुं पित्रादिभ्यश्च पिण्डकम् ।। ४९.८० ।।
पितुर्विनिर्गतौ हस्तौ गयाशिरसि शन्तनोः।
नादात्पिण्डं करो भीष्मो ददौ विष्णुपदे ततः ।। ४९.८१ ।।

शन्तनुः प्राह सन्तुष्टः शास्त्रार्थे निश्चलो भवान्।
त्रिकालदृष्टिर्भवत् चान्ते विष्णुश्च ते गतिः ।। ४९.८२ ।।
स्वेच्छया मरणं चास्तु इत्युक्त्वा मुक्तिमागतः।
कनकेशञ्च केदारं नारसिंहं च वामनम् ।। ४९.८३ ।।
उदङ्मार्गे समभ्यच्चर्य पितॄन्सर्व्वांश्च तारयेत्।
गयाशिरसि यः पिण्डान्येषां नाम्ना तु निर्वपेत् ।। ४९.८४ ।।
नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः।
गयाशिरसि यः पिण्डं शमीपत्रप्रमाणतः ।। ४९.८५ ।।
कन्दमूलफलाद्यैर्वा दद्यात्स्वर्गं नयेत्पितॄन्।
पदानि यत्र दृश्यन्ते विष्ण्वादीनां तदग्रतः ।। ४९.८६ ।।
श्राद्धं कृत्वा सपिण्डञ्च तेषां लोकान्नयेत्पितॄन्।
सर्व्वत्र मुण्डपृष्ठाद्रिः पदैरेभिः सुलक्षितः ।। ४९.८७ ।।
प्रयान्ति पितरः सर्व्वे ब्रह्मलोकमनामयम्।
हेत्यसुरस्य यच्छीर्षं गदया तद्द्विधाकृतम् ।। ४९.८८ ।।
ततः प्रक्षालिता यस्मात्तीर्थं तच्च विमुक्तये।
गदालोलमिति ख्यातं सर्व्वेषामुत्तमोत्तमम् ।। ४९.८९ ।।
गदालोले महातीर्थे गदाप्रक्षालनाद्धरेः।
स्नानं करोमि सिद्ध्यर्थमक्षयं पदमाप्नुयाम् ।। ४९.९० ।।
पञ्चमेऽह्नि गदालोले स्नात्वा कुर्य्यात्सपिण्डकम्।
श्राद्धं पितॄन्ब्रह्मलोकं नयेदात्मानमेव च ।। ४९.९१ ।।
ब्रह्मप्रकल्पितान्विप्रान् हव्यकव्यादिनार्च्चयेत्।
तैस्तुष्टैस्तोषिताः सर्व्वाः पितृभिः सह देवताः ।। ४९.९२ ।।
कृते श्राद्धेऽक्षयवटे अन्नेनैव प्रयत्नतः।
पितॄन्नयेद्ब्रह्मलोकमक्षयन्तु सनातनम् ।। ४९.९३ ।।
वटवृक्षसमीपे तु शाकेनाप्युदकेन वा।
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ।। ४९.९४ ।।
देयं दानं षोडशकं गयातीर्थपुरोधसे।
वस्त्रं गन्धादिभिः पुत्रैः सम्यक्संपूज्य यत्नतः ।। ४९.९५ ।।
गयातीर्थवटे चैव पितॄणां दत्तमक्षयम् ।
दृष्ट्वा नत्वा च संपूज्य वटेशं सुसमाहितः ।। ४९.९६ ।।
पितॄन्नयेद्ब्रह्मलोकमक्षयन्तु सनातनम्।
गयायां धर्म्मपृष्ठे च सरसि ब्रह्मणस्त था ।। ४९.९७ ।।
गयाशीर्षे वटे चैव पितॄणां दत्तमक्षयम्।

एकार्णवे वटस्याग्रे यः शेते योगनिद्रया ।। ४९.९८ ।।

बालरूपधरस्तस्मै नमस्ते योगशायिने।

संसारवृक्षशस्त्रायाशेषपापहराय च ।। ४९.९९ ।।

अक्षयब्रह्मदात्रे च नमोऽक्षयवटाय वै।

कलौ माहेश्वरा लोका येन तस्माद्गदाधरः।

लिङ्गरूपोऽभवत्तञ्च वन्दे श्रीप्रपितामहम् ।। ४९.१०० ।।

इति श्रीवायुपुराणे वायुप्रोक्ते गयामाहात्म्यं नामोनपञ्चाशत्तमोऽध्यायः ।। ४९ ।।

।।सनत्कुमार उवाच।।
यज्ञञ्चक्रे गयो राजा बह्वन्नं बहुदक्षिणम्।
यत्र द्रव्यसमूहानां संख्या कर्त्तुं न शक्यते ।। ५०.१ ।।

स्थिता गयायामन्नादिपर्व्वताः पञ्चविंशतिः।
प्रशंसन्ति द्विजास्तत्र देशे देशे सुपूजिताः ।। ५०.२ ।।

नैव पूर्व्वं केप्यकुर्व्वन्न करिष्यन्ति चापरे।
सिकता वा यथा लोके यथा च दिवि तारकाः ।। ५०.३ ।।

तथा बहुसुवर्णाद्यैरसङ्ख्यातास्तु दक्षिणाः ।
नैवेह पूर्वे ये केचिन्न करिष्यन्ति चापरे ।। ५०.४ ।।

प्रशंसन्ति द्विजास्तृप्ता देशे देशे सुपूजिताः।
गयं विष्णवादयस्तुष्टा वरं ब्रूहीति चाब्रुवन् ।। ५०.५ ।।

गयस्तान्प्रार्थयामास ह्यभिशप्ताश्च चे पुरा।
ब्रह्मणा ते द्विजाः पूता भवन्तु क्रतुपूजिताः ।। ५०.६ ।।

गयाश्राद्धविधानाय द्विजा मूर्त्ताश्चदुर्द्दश।
तेषां वाक्यं प्रकुर्व्वीत यदि ब्रह्मा स्वयं भवेत् ।। ५०.७ ।।

गौतमं काश्यपं कौत्सं कौशिकं कण्वमेव च।
भारद्वाजं ह्यौशनसं वात्स्यं पाराशरं तथा ।। ५०.८ ।।

हरित्कुमारमाण्डव्यं लोकाक्षिं लोकसंमहत्।
वासिष्ठञ्च तथात्रेयं गोत्राण्येषां चतुर्द्दश ।। ५०.९ ।।

गयापुरीति मन्नाम्ना ख्याता ब्रह्म पुरी यथा।
एवमस्तु वरं दत्त्वा तथा चान्तर्दधुः सुराः ।। ५०.१० ।।

गयश्च भोगान्सम्भुज्य विष्णुलोकं परं ययौ।
विशालायां विशालोऽभूद्राजाऽपुत्रो ऽब्रवीद्द्विजान् ।। ५०.११ ।।

कथं पुत्रादयो मे स्युर्विशालं चाब्रुवन्द्विजाः।
गयायां पिण्डदानेन तव सर्व्वं भविष्यति ।। ५०.१२ ।।

विशालोऽपि गयाशीर्ष पिण्डदः पुत्रवानभूत्।
दृष्ट्वाकाशे सितं रक्तं कृष्णं पुरुषमब्रवीत् ।। ५०.१३ ।।

के यूयं तेषु चैवैकः सितः प्रोचे विशालकम्।
अहं सितस्ते जनक इन्द्रलोकादिहागतः ।। ५०.१४ ।।

मम पुत्र पिता रक्तो ब्रह्महा पापकृत्तमः ।
अयं पितामहः कृष्ण ऋषयो येन घातिताः ।। ५०.१५ ।।

अवीचिनरकं प्राप्तौ मुक्तौ त्वत्पिण्डदानतः।
पितृन्पितामहांश्चैव तथैव प्रपितामहान् ।। ५०.१६ ।।

प्रीणयामीति यत्तोयं त्वया दत्तमरिन्दम।
तेनास्मद्युगपद्योगो जातो वाक्येन सत्तम ।। ५०.१७ ।।

मुक्तिः कृता त्वया पुत्र व्रजामः स्वर्गमुत्तमम्।
एवं पुत्रैः पितृणां च कर्तव्या मुक्तिरुत्तमा ।। ५०.१८ ।।

त्वञ्च राज्यं चिरं कृत्वा भुक्त्वा भोगांश्च दुर्ल्लभान्।
यज्ञान्सदक्षिणान्कृत्वा यायाद्विष्णुपुरं ततः ।। ५०.१९ ।।

एवं लब्धवरो राजा राज्यं कृत्वा दिवंगतः।
प्रेतराजः सह प्रेतैर्गयाश्राद्धाद्दिवं गतः ।। ५०.२० ।।

प्रेतः कश्चिद्विमुक्त्यर्थं वणिजं कञ्चिदब्रवीत्।
मम नाम्ना गयाशीर्षे पिण्डनिर्व्वापणं कुरु ।। ५०.२१ ।।

प्रेतभावविमुक्त्यर्थं त्वं गृहाण धनं मम।
तद्वनं सर्व्वमादाय गयाश्राद्धव्ययं कुरु ।। ५०.२२ ।।

षोडशपञ्चभागांश्च तुभ्यं वै दत्तवानहम्।
स्वनामानि यथान्यायं सम्यगाख्यातवानहम् ।। ५०.२३ ।।

गत्वा गयां गयाशीर्ष प्रेतराजाय पिण्डकम्।
समदाद्बन्धुभिः सार्द्धं स्वपितृभ्यस्ततो ददौ ।। ५०.२४ ।।

प्रेतः प्रेतत्वनिर्म्मुक्तो वणिक् स्वगृहमागतः ।
एवं गयस्य शम्भोश्च क्षेत्रं विष्णो रवेस्तथा ।। ५०.२५ ।।

उपोषितोऽथ गायत्रीतीर्थे महानदीस्थिते।
गायत्र्याः पुरतः स्नात्वा प्रातःसन्ध्यामुपासयेत् ।। ५०.२६ ।।

श्राद्धं सपिण्डकं कृत्वानयेद्ब्रह्मण्यतां कुलम्।
तीर्थे समुदिते स्नात्वा सावित्र्याः पुरतो नरः ।। ५०.२७ ।।

सन्ध्यामुपास्य मध्याह्ने नयेत्कुलशतन्दिवम्।
पिण्डदानं ततः कुर्य्यात्पितृणां मुक्तिकाम्यया ।। ५०.२८ ।।

प्राचीसरस्वतीतीर्थे स्नात्वा चापि यथाविधि।
सन्ध्यामुपास्य सायाह्ने विष्णुलोकं नयेत्पितॄन् ।। ५०.२९ ।।

बहुजन्मकृतात्सन्ध्यालोपान्मुक्तस्त्रिसन्ध्य कृत्।
विशालायां लेलिहाने तीर्थे च भरताश्रमे ।। ५०.३० ।।

पादाङ्किते मुण्डपृष्ठे गदाधरसमीपतः।
तीर्थे चाकाशगङ्गायां गिरिकर्णमुखेषु च ।। ५०.३१ ।।

स्नातोऽथ पिण्डदो ब्रह्मलोकं कुलशतं नयेत्।
देवनद्यां वैतरण्यां स्नातः स्वर्गं नयेत्पितॄन् ।। ५०.३२ ।।

स्नातो गोदो वैतरण्यां त्रिःसप्तकुलमुद्धरेत्।
सत्यं सत्यं पुनः सत्यं वैतरण्यां तु नारद ।। ५०.३३ ।।

एकविंशतिकुलान्याहुस्तारयेन्नात्र संशयः।
या सा वैतरणी नाम नदी त्रैलोक्यविश्रुता ।। ५०.३४ ।।

सावतीर्णा गयाक्षेत्रे पितॄणां तरणाय वै।
गोदावर्य्यां वैतरण्यां यमुनायां तथैव च ।। ५०.३५ ।।

देवनद्यां गोप्रचारे श्राद्धदः स्वर्नयेत्पितॄन्।
पुष्करिण्यां घृतकुल्यां मधुकुल्यां तथैव च ।। ५०.३६ ।।

कोटितीर्थे रुक्मिणीये पिण्डदः स्वर्नयेत्पितॄन्।
त्रिरात्रोपोषणेनैव तीर्थाभिगमनेन च ।। ५०.३७ ।।

अदत्त्वा काञ्चनङ्गाश्च दरिद्रो जायते नरः।
घृतकुल्या मधुकुल्या देविका च महानदी ।। ५०.३८ ।।

शिलायाः सङ्गमो यत्र मधुस्रवा प्रकीर्तिता।
अयुतं चाश्वमेधानां स्नानकृल्लभते नरः ।। ५०.३९ ।।

श्राद्धं सपिण्डकं कृत्वा पिण्डदानं तथैव च।
कुलानां शतमुद्धृत्य विष्णुलोकं नयेन्नरः ।। ५०.४० ।।

दशाश्च मेधिके हंसतीर्थे चामरकङ्कटे।
कोटितीर्थे रुक्मकुण्डे पिण्डदः स्वर्नयेत्पितॄन् ।। ५०.४१ ।।

वैतरण्यां घृतकुल्यां मधुकुल्यां तथैव च।
कोटितीर्थे नरः स्नात्वा दृष्ट्वा कोटीश्वरञ्च यः ।। ५०.४२ ।।

कोटिजन्म भवेद्विप्रो धनाढ्यो वेदपारगः ।
मार्कण्डेयेशकोचीशौ नत्वा स्यात्पितृतारकः ।। ५०.४३ ।।

रुक्म पारिजातवने पार्व्वत्या सह शङ्करः।
रहस्ये संस्थितो रेमे युगानामयुतं पुरा ।। ५०.४४ ।।

मरीचिः फलपुष्पार्थं पारिजातवनं गतः।
दृष्ट्वा शप्तो महेशेन यस्मात्सुखविघातकः ।। ५०.४५ ।।

दुःखी भवेति तद्भीतो मरिचिस्तुष्टुवे शिवम्।
तुष्टः प्रोवाच तं शम्भुर्वृणीष्व वरमुत्तमम् ।। ५०.४६ ।।

शापाद् भवतु मुक्तिर्म्मे मरीचिः प्राह शङ्करम्।
भवेद्गयायां मुक्तिस्ते शिवोक्तः प्रययौ गयाम् ।। ५०.४७ ।।

शिलास्थितस्तपस्तेपे सर्व्वेषां दुष्करञ्च यत्।
मरीचिरीश्वराच्छप्तः कृष्णत्वमगमत्पुरा ।। ५०.४८ ।।

तपसा दारुणेनेह स विप्रः शुक्लतां गतः ।
हरिरूचे मरीचिञ्च वरं वृणुहि पुत्रक ।। ५०.४९ ।।

किमलभ्यं त्वयि तुष्टे मरीचिः प्राह माधवम्।
हरशापाद्विमुक्तोऽहं शिला भवतु पावनी ।। ५०.५० ।।

पितृमुक्तिकरी च स्यात्तथेत्युक्त्वा दिवं गतः।
दिवौकसां पुष्करिणीं समासाद्य नरः शुचिः ।। ५०.५१ ।।

यत्र दत्तं पितृभ्यस्तु भवत्यक्षयमित्युत।
तत्र स्नातो दिवं याति स्वशरीरेण मानवः ।। ५०.५२ ।।

पाप्मानं प्रजहात्येष जीर्णत्वचमिवोरगः।
तत्पङ्गजवनं पुण्यं पुण्यकृद्भिर्निषेवितम् ।। ५०.५३ ।।

पाण्डुशिला वै तत्रास्ते श्राद्धं यत्राक्षयं भवेत्।
युधिष्ठिरस्तु तस्यां हि श्राद्धं कर्त्तुं ययौ मुने ।। ५०.५४ ।।

तत्र काले पाण्डुनोक्तं मद्धस्ते देहि पिण्डकम्।
हस्तं त्यक्त्वा शिलायाञ्च पिण्डदानञ्चकार सः ।। ५०.५५ ।।

शिलायां पिण्डदानेन प्रहृष्टो व्यासनन्दनः।
वरं ददौ स्वपुत्राय राज्यं कुरु महीतले ।। ५०.५६ ।।

अकण्टकन्तु सम्पूर्णं त्वं मे त्राता हि पुत्रक।
स्वर्गं व्रज शरीरेण भ्रातृभिः परिवारितः ।। ५०.५७ ।।

दृष्टिमात्रेण सम्पूतान्नरकस्थान्दिवं नय।
इत्युक्त्वा प्रययौ पाण्डुः शाश्वतं पदमव्ययम् ।। ५०.५८ ।।

उद्भिज्जाः स्वेदजा वापि ह्यण्डजा ये जरायुजाः।
मधुस्रवां समासाद्य मृताः स्वर्गपुरं ययुः ।। ५०.५९ ।।

दशाश्वमेधिके हंसतीर्थे श्राद्धाद्दिवं व्रजेत्।
दशाश्वमेधहंसौ च नत्वा शिवपुरं व्रजेत् ।। ५०.६० ।।

भरतस्याश्रमे श्राद्धान्नयेद्ब्रह्मालयं पितॄन्।
मतङ्गस्य पदे श्राद्धी ब्रह्मलोकं नयेत्पितॄन् ।। ५०.६१ ।।

निर्म्मथ्याग्निं शमीगर्भे विधिर्विष्ण्वादिभिः सह।
लेभे तीर्थन्तु यज्ञार्थं त्रिषु लोकेषु विश्रुतम् ।। ५०.६२ ।।

मखसंज्ञन्तु तत्तीर्थं पितॄणां मुक्ति दायकम्।
स्नात्वा च तर्पणं कृत्वा पिण्डदो मुक्तिमाप्नुयात् ।। ५०.६३ ।।

पितॄन्स्वर्गं नयेन्नत्वा सङ्गमेऽङ्गारकेश्वरौ।
गयाकूटे पिण्डदानादश्वमेधफलं लभेत् ।। ५०.६४ ।।

भस्मकूटे भस्मनाथं नत्वा च तारयेत्पितॄन् ।
त्यक्तपापो भवेन्मुक्तः सङ्गमे स्नानमाचरेत् ।। ५०.६५ ।।

इष्टिं चक्रेऽश्वमेधाख्यं वसिष्ठो मुनिसत्तमः।
इष्टितो निर्गतः शम्भुर्वरं वृणु वसिष्ठकम् ।। ५०.६६ ।।

प्राहेति तं वसिष्ठोऽपि शिव तुष्ठोऽसि मे यदि।
वस्तव्यं चात्र देवेश तथेत्युक्त्वा शिवः स्थितः ।। ५०.६७ ।।

पिण्डदो धेनुकारण्ये कामधेनुपदेषु च।
स्नात्वा नत्वाथ सम्पूज्य ब्रह्मलोकं नयेत्पितॄन् ।। ५०.६८ ।।

कर्द्दमाले गयानाभौ मुण्डपृष्ठसमीपतः।
स्नात्वा श्राद्धादिकं कृत्वा पितॄणामनृणो भवेत् ।। ५०.६९ ।।

फल्गुचण्डीश्मशानाक्षीमङ्गलाद्याः समर्च्चयेत्।
गयायाञ्च वृषोत्सर्गात्त्रिः सप्तकुलमुद्धरेत् ।। ५०.७० ।।

यत्र तत्र स्थिता देवा ऋषयोऽपि जितेन्द्रियाः ।
आद्यं गदाधरं ध्यायञ्छ्राद्धपिण्डादिदानतः ।। ५०.७१ ।।

कुलानां शतमुद्धृत्य ब्रह्मलोकं नयेत् पितॄन्।
गया गयो गया दित्यो गायत्री च गदाधरः ।। ५०.७२ ।।

गया गयासुरश्चैव षङ्गया मुक्तिदायकाः।
गयाख्यानमिदं पुण्यं यः पठेत्सततं नरः ।। ५०.७३ ।।

श्रृणुयाच्छ्रद्धया यस्तु स याति परमां गतिम्।
पाठयेद्वा गयाख्यानं विप्रेभ्यः पुण्यकृन्नरः ।। ५०.७४ ।।

गयाश्राद्धं कृतं तेन कृतं तेन सुनिश्चितम्।
गयाया महिमानञ्च ह्यभ्यसेद्यः समाहितः ।। ५०.७५ ।।

तेनेष्टं राजसूयेन अश्वमेधेन नारद।
लिखेद्वा लेखयेद्वापि पूजयेद्वापि पुस्तकम् ।। ५०.७६ ।।

तस्य गेहे स्थिरा लक्ष्मीः सुप्रसन्ना भविष्यति।
उपाख्यानमिदं पुण्यं गृहे तिष्ठति पुस्तकम् ।। ५०.७७ ।।

सर्पाग्निचौरजनितं भयं तत्र न विद्यते।
श्राद्धकाले पठेद्यस्तु गयामाहात्म्यमुत्तमम् ।। ५०.७८ ।।

विधिहीनन्तु तत्सर्वं पितॄणान्तु गयासमम्।
यानि तीर्थानि त्रैलोक्ये तानि दृष्टानि तत्र वै।
येन ज्ञातं गयाख्यानं श्रुतं वा पठितं मुने ।। ५०.७९ ।।

।।सूत उवाच।।
सनत्कुमारो मुनिपुङ्गवाय पुण्यां कथाञ्चाथ निवेद्य भक्त्या।
स्वमाश्रमं पुण्यवनैरुपेतं विसृज्य संगीतगुरुं जगाम ।। ५०.८० ।।

इति श्रीमहापुराणे वायुप्रोक्ते गयामहात्म्यं नाम पञ्चाशत्तमोऽध्यायः ।। ५० ।। समाप्तमिदं वायुपुराणम् ।। * ।।